प्राच्यभारतीग्रन्थमाला-१०

Prachyabharati Series—10

# श्लोकवार्त्तिकम्

सम्पादकः

स्वामी द्वारिकादासशास्त्री

*Prāchyabhārati Series-10*

# ŚLOKAVĀRTTIKA

OF

# ŚRĪ KUMĀRILA BHAṬṬA

**With**
**The Commentary**
**NYĀYARATNĀKARA**
**OF**
**ŚRĪ PĀRTHASĀRATHI MIŚRA**

*Edited & Revised by*
SVĀMĪ DVĀRIKĀDĀSA ŚĀSTRĪ
Ācārya (Vyākaraṇa, Pali & Bauddha Darśana)

TARA. PUBLICATIONS
VARANASI
1978

प्राच्यभारतीग्रन्थमाला—१०

श्रीमत्कुमारिलभट्टपादविरचितं

# श्लोकवार्त्तिकम्

श्रीमत्पार्थसारथिमिश्रविरचितया

न्यायरत्नाकरव्याख्यया सनाथम्

सम्पादकः परिष्कारकश्च

**स्वामी द्वारिकादासशास्त्री**

व्याकरणपालि-साहित्यबौद्धदर्शनाचार्यः

प्रकाशकः

तारा पब्लिकेशन्स

वाराणसी

१९७८तमः खिष्टाब्दः ] [ २०३४तमो वैक्रमाब्दः

# प्रकाशकीयम्

सुरैरपि स्पृहणीयस्यास्य भारतभूमिभागस्य प्राचीनेतिवृत्तमात्मन्यादधाना देववाणीयं जगतोऽखिलास्वपि भाषासु प्राचीनेति सुनिश्चितम्। एतद्देशप्रसूतैर्मुनिभिः, आचार्यैः, विद्वद्भिश्च समये समये यानि कानिचिदपि गभीराणि मनोहराणि च ग्रन्थरत्नानि ग्रथितानि, तानि सर्वाणि देववाण्यामेवेत्यपि सुविदितम्।

परमिदानीं त्वेतच्चेतःखेदकरमेव यदीदृश्या भाषाया भूयांसो ग्रन्थमणयो दैवदुर्विपाकेन लुप्तसत्ताका ग्रथिता अप्यग्रथिता इवाभवन्। अपि च, तेषु ग्रन्थेषु केचन यथाकथञ्चिद् गृहीतस्वसत्ताका अपि प्रकाशकैस्ते तथा विकृतिं नीता यदद्य तेषां पठनादपठनमेव श्रेयः। केषाञ्चिदङ्गं न मनोहारि, केषाञ्चिच्च ग्रन्थरत्नानां सन्दर्भोऽपि सर्वथा व्यत्ययमापादितस्तादृग्भिः पण्डितम्मन्यैः।

अतः बहोः कालादस्माकं मनस्ययं विचारः पदमादधदासीद् यत् कश्चिन्मनस्वी दोषानिमान्निरस्य आदर्शभूतान् दुर्लभान् सूपयोगिनश्च संस्कृतभाषानिबद्धान् ग्रन्थान् प्रकाशयेत्, येन सुरभारत्याश्चिरायोपकृतिर्भवेत्। एतद्धियैवास्माभिरिदं **प्राच्यभारतीप्रकाशनम्** समारब्धम्। अत्र वयं यथासमयं सुदुर्लभान् संस्कृतभाषामयान् महत्त्वशालिनो ग्रन्थान् मुद्रापयित्वा प्रकाशयामः।

१९६४तमे ईशाब्देऽस्य प्रथमं प्रकाशनम्—**माधवीया धातुवृत्तिः**, यत्र हि पाणिनीयधातुपाठमाश्रित्य **श्रीमत्सायणाचार्येण** धातूनामतिविस्तृतं साङ्गोपाङ्गं व्याख्यानं कृतम्। ग्रन्थोऽयं वैयाकरणानां कृते महानुपकारकः।

ततश्च १९६५-६७तमेष्वीशाब्देषु, चिराल्लुप्तप्रायोऽपरो ग्रन्थः पाणिनीयशब्दानुशासनसम्बद्धो विद्वद्वरश्री**वामन-जयादित्य**विरचितः **काशिकावृत्ति**नामा बोधिसत्त्वदेशीयाचार्यश्री**जिनेन्द्रबुद्धि**पादविरचितेन **न्यासेन**, श्री**हरदत्तमिश्र**कृत-**पदमञ्जरीव्याख्यया** च सनाथः षट्सु भागेषु विभज्य प्राकाश्यं नीतः।

१९७१तमे ईशाब्दे च पाणिनीयशब्दानुशासनेन सम्बद्धैव श्री**पुरुषोत्तमदेव**विरचिता बौद्धविद्वत्समाजे विशेषतो लब्धप्रतिष्ठा **भाषावृत्तिः** प्रकाशिता।

इदानीं मीमांसामूर्तिभिः श्रीशङ्कराचार्यसमकालिकैः श्रीकुमारिलभट्टपादैर्विरचितं श्री**पार्थसारथिमिश्र**कृतन्यायरत्नाकरव्याख्यासंवलितं **श्लोकवार्त्तिकं** प्रकाशयामः। गुणैकपक्षपातिनो विद्वद्वर्या मात्सर्यमुत्सार्य ग्रन्थेनानेन मीमांसासुधास्वादं भजन्तः करिष्यन्त्यास्माकीनं परिश्रमं सफलमिति विश्वसिमः।

आशास्महे च वयमनागतेऽपि काले एतादृशान्येवोपयोगीनि ग्रन्थरत्नानि समये समये विदुषां समक्षमुपस्थापयितुं क्षमा भवेम इति।

—प्रकाशकः

येषामादर एव नास्ति विदुषां शास्त्रे न तेषामयं
ग्रन्थः क्वाप्युपयुज्यते जडधियां तन्त्रान्तराभ्यासिनाम् ।
येषां धर्मविचारणे सुकृतिनां श्रद्धाऽस्ति तेषां कृते
ग्रन्थोऽयं सुधियां गभीरमनसां सम्पादितः स्वामिना ।।

# प्रास्ताविकम्

**मीमांसादैशिकान् नत्वा तदुक्तीः प्रसमीक्ष्य च ।**

**मीमांसाशास्त्रमालक्ष्य वक्ष्ये किञ्चिद् यथामति ॥**

सर्वथा जननमरणनिवृत्तावेव निरतिशयानन्दावाप्तिः सम्भवतीति प्रायः समेषां दार्शनिकानां मतम् । एतज्जननमरणनिवृत्तिरूपं मोक्षसुखं प्रेप्सुभिः वेदविहितं कर्म समाचरणीयम् । तादृशकर्मणो ज्ञानं च वेदवाक्यार्थज्ञानाधीनम् । वेदो हि मन्त्रब्राह्मणोभयात्मकः । स चैकोऽपि प्रतिपाद्यार्थभेदात् कर्म-उपासना-ज्ञानकाण्डत्वेन त्रिधा विभक्तो लोके । तत्र परस्परविरोध-विपरीतभावनादिना वेदवाक्यार्थविचिकित्सायां प्रसक्तायां तन्निराकरणेन वास्तविकमर्थं बोधयितुं मीमांसाशास्त्रप्रवृत्तिर्जाता ।

### मीमांसाशब्दव्युत्पत्तिः

तत्र मीमांसाशब्दः पाणिनीयव्याकरणानुरोधेन मान्धातोर्जिज्ञासार्थकात् सन्प्रत्यये तदन्तात् स्त्रियामप्रत्यये ततश्च टाप्प्रत्ययेन निष्पन्नो विचारमर्थं ब्रूते । तथा च विचारशास्त्रं मीमांसाशब्दार्थः फलति ।

सोऽयं मीमांसाशब्दः प्रथमं छान्दोग्याद्युपनिषत्सु विमर्शपूर्वकव्याख्यानार्थे प्रवृत्तो दृश्यते । इममेवार्थं स्वीकृत्य संहिता-ब्राह्मण-उपनिषदात्मकवेदराशिप्रतिपादितगूढार्थप्रकाशनपरेषु ग्रन्थेषु मीमांसाशब्दः प्रचलितोऽभूत् । तथा च विविधा ब्राह्मणारण्यकभागा उपनिषदश्च मीमांसाख्यामभजन्त ।

### कथं पूर्वमीमांसा ?

मन्त्रब्राह्मणात्मकस्य वेदस्य किं तात्पर्यम् ? को वा प्रधानः प्रतिपादनविषयः ?, स्तोत्रशस्त्रविधिनिषेधार्थवादादिरूपैर्भिन्नरूपता तेषाम् ? अथ वा स्तुत्यादीनां सर्वेषामेकार्थ्येन समन्वयः ?—इत्येतादृशे विचारे समुत्पन्ने मन्त्रभागेषु देवतामुद्दिश्य बहुशः प्रतिपादितानि सवनहोमयागादिरूपाणि कर्माण्येव वेदतात्पर्यभूतानि, तान्येव धर्मः, स एव च ब्राह्मणारण्यकग्रन्थैर्विवेचितः प्रपञ्चितश्च भवतीति निर्णयं समापेदिरे वेदशास्त्रविचारदक्षाः ।

तथा च, ते मीमांसाशब्दं वेदतत्त्वविमर्शनात्मके ब्राह्मणोपनिषद्रूपे भागद्वये प्रयोजयामासुः । ते ब्राह्मणग्रन्थान् **पूर्वमीमांसे**ति नाम्ना समाचख्युः, उपनिषद्भागं च **उत्तरमीमांसा**नाम्ना सम्बोधयामासुः ।

ततश्च गते बहुतिथे काले शाखाप्रशाखाभिः प्रचलितेषु ब्राह्मणपाठेषूक्तानां याग-सवन-हवनादीनां स्वरूपे कर्मणि च दृष्टाद् विरोधात् सम्प्रदायविच्छेदाच्च,

यज्ञादिकर्मसु गुणविधीनामङ्गाङ्गिभावपौर्वापर्यादिविषयेषु संशयाः समुदपद्यन्त । एतादृक्संशयनिराकरणार्थम्, यथास्थितानां वैदिकवाक्यानामविरोधेनार्थ-निर्णयार्थं च बहुभिः पूर्वाचार्यैरनेकानि कल्पसूत्राणि मीमांसासूत्राणि च रचितानि ।

यद्यपि एषु मीमांसासूत्रकारेषु भगवतो जैमिनेः के प्राचीनाः, के चार्वाचीनाः ?—इति न निश्चयेन कथयितुं शक्यते, तथापि एतत्तु सुनिश्चित-मेव यत् जैमिनेः प्रागप्यासन् केचन सूत्रकाराः, यैर्बहवो लौकिकन्यायाः संगृहीताः, शास्त्रीयन्यायाः उपनिबद्धाः, ग्रथितानि च संशयनिराकरणे उपयोगीनि सूत्राणि ।

भगवान् जैमिनिराचार्यस्तानि पूर्वाचार्यविरचितानि मीमांसासूत्राणि समीक्ष्य, तत्प्रतिपादितान् न्यायान् युक्तीश्च परिभाव्य सर्वांश्च मन्त्रब्राह्मणग्रन्थान् विमर्शपूर्वकमालोड्य श्रौतभागनिर्वचनोपयोगिनो न्यायानेकत्रोपनिबद्ध्य द्वादशा-ध्यायात्मकं पूर्वमीमांसासूत्रं प्रणीतवान् ।

## मीमांसाद्वैविध्यम्

इदं चावधेयम्—

"ब्रह्मा प्रजापतये मीमांसां प्रोवाच" इति प्रवचनपरम्पराबोधकवचने मीमांसाशब्दे एकवचनस्योल्लेखात् ब्रह्माणमारभ्य कृष्णद्वैपायन( बादरायण )-पर्यन्तमियं मीमांसा कर्मकाण्ड-ज्ञानकाण्डप्रतिपादकवेदवाक्यानां परस्पराविरोधेन तात्पर्यमभिदधती सती लोकं स्वात्मानमभेदेन बोधयति स्म । तादृशीमेव च बादरायणः स्वशिष्याय जैमिनये प्रोवाच । ततः जैमिनिरपि तां स्वसूत्रेषूपनि-बद्धवान् । परन्तु तत्र जैमिनिः "अथातो धर्मजिज्ञासा" ( जै० सू० १. १. १ ) इति प्रतिज्ञानुरोधात् "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" ( जै० सू० २. १. १ ) इति सूत्रेण कर्मकाण्डस्यैव प्राधान्यं प्रतिपादितवान्, न तु ज्ञान-काण्डस्य । ज्ञानकाण्डं तु कर्मकाण्डस्यैवाङ्गं सहायभूतमिति तात्पर्यमभिदधत् तां भिन्नामिव प्रादर्शयत् । अज्ञाश्च लोकास्तदेव सत्यत्वेन गृहीतवन्तः । तमिमं लोकेषु प्रचारितं भ्रमं निराकुर्वन् भगवान् बादरायणो जैमिनिप्रतिपादितपद्धत्यैव ज्ञानकाण्डस्य मुख्यत्वं स्थापयन् ब्रह्मसूत्रप्रणयने प्रवृत्तोऽभूत् । ततः प्रभृत्येव मीमांसाया द्वैविध्यं समभूत् । अतो व्याकरणन्यायादिदर्शनानामिव कर्तृभेदात्, विषयभेदाच्च उभयोरपि मीमांसयोर्नैकशास्त्रत्वम् ।

अत एव च धर्म-ब्रह्ममीमांसयोः क्रमशः पूर्वोत्तरशब्दविशेषणमपि अर्थतः इव कालतोऽपि स्वरसतयोपपन्नं भवति ।

## जैमिनेः प्रादुर्भावकालः, कृतिश्च

सोऽयं **जैमिनिर्**महर्षिः कदा, कं वा भुवमलञ्चकार ?—इत्यत्र न किञ्चित् स्पष्टं प्रमाणमुपलभ्यते, तथापि अनुमानबलाश्रयेणात्र किञ्चित् प्रस्तूयते ।

यथा हि अन्येषां साङ्ख्य-व्याकरण-वेदान्तादिदर्शनानां प्रवचनपरम्परा उपलभ्यते, एवमेव मीमांसादर्शनस्यापि प्रवचनपरम्परा दृश्यते । **पार्थसारथि**मिश्रेण स्वकीये श्लोकवार्त्तिकव्याख्यानरूप**न्यायरत्नाकरे** सा प्रवचनपरम्परा एवमुद्धृता—"ब्रह्मा प्रजापतये मीमांसां प्रोवाच, सोऽपीन्द्राय, सोऽप्यादित्याय, स च वसिष्ठाय, सोऽपि पराशराय, पराशरः कृष्णद्वैपायनाय, सोऽपि जैमिनये । स च स्वोपदेशानन्तरमिमं न्यायं ग्रन्थे निबद्धवान् ।" (श्लो० वा० पृ० ८)। अनेनोद्धरणेन ज्ञायते यत् जैमिनिः कृष्णद्वैपायनस्य शिष्य आसीत् । (व्यासापरपर्यायः) कृष्णद्वैपायनश्च श्रीकृष्णावतारसमकालिकसत्ताक आसीत् । श्रीकृष्णस्य च द्वापरयुगे प्रभवः भागवतादिपुराणैः सिद्ध एव । इति कलियुगारम्भात् प्राग् द्वापरयुगान्ते जैमिनिमहर्षिः ब्रह्मसूत्रप्रणेतुर्भगवतो बादरायणाद् इमां मीमांसापरम्परां प्राप्तवानिति निश्चप्रचम् । स एव च महर्षिरिमां मीमांसां सूत्रेषु निबद्धवान् । तानि च सूत्राणि इदानीं यावत् मीमांसासूत्रसंग्रहः, मीमांसासूत्राणि, जैमिनीयसूत्रसंग्रहः, जैमिनिसूत्राणीति वा नामभिर्लोके प्रथितानि ।

## मीमांसासूत्राणां भाष्यकारः शबरस्वामी

**आदित्यदेवा**परनामायं द्विजः सर्वशास्त्रनिष्णातः सन्नपि बौद्धानामाक्रमणभयाद् भीतः शबरवृत्त्यात्मानमाच्छादयित्वा स्वजीवनमतिवाहयति स्म, अतः स **शबरस्वामीति** नाम्ना लोके विख्यातोऽभूत् । अयम् ईशातः पूर्वं तृतीयशताब्द्यां भारतभूमिमलञ्चकार—इति ऐतिह्यविदः प्रमाणयन्ति ।

यद्यपि तत्र केचनैतिह्यविदः इमं मिथिलादेशोद्भवं मन्यन्ते, केचिच्च दक्षिणदेशोद्भवम् । यानि चात्र प्रमाणान्युपलभ्यन्ते, तानि नैकतरकोटिं स्पष्टं समर्थयन्ति—इति तान्याधृत्य न किमपि निश्चयेन वक्तुं शक्यते । तथापि ऐतिह्यविदां बहुलः समाज इमं विद्वद्धौरेयं दाक्षिणात्यमेवाभिमन्यते—इति वयमपि तथैव स्वीकुर्मः ।

जैमिनिकृतमीमांसासूत्राणां भाष्यमेवास्य विदुषो मौलिकी रचनोपलभ्यते । एतच्च भाष्यं **शाबरभाष्य**मित्याख्यया प्रसिद्धम् । एतद्भाष्यशैलीमनुसृत्यैव पश्चाद्भाविभिरन्यैः दार्शनिकैरपि तेषु तेष्वन्येषु दर्शनेषु स्वकीयानि भाष्याणि रचितानीत्यनेनैवास्य शाबरभाष्यस्य महत्त्वं प्रौढिमा वा स्पष्टमवगन्तुं शक्यते ।

## मीमांसामूर्तिः श्रीकुमारिलभट्टः

शबरस्वामिनामनन्तरं शाबरभाष्यविवेचनपराणां वार्त्तिक-टीकादिग्रन्थाना द्वे परम्परे प्रसृते भवत; ययोरेका भाट्टपरम्परा, द्वितीया च प्राभाकर-परम्परा। तत्र भाट्टपरम्परायाः प्रवर्त्तकाः मीमांसकशिरोमणय. **श्रीकुमारिलभट्ट-**पादाः सप्तमशताब्द्या शङ्कराचार्यसमकालिका. स्कन्दावतारत्वेन प्रसिद्धा अभूवन्। इमे प्रयागक्षेत्रे न्यवसन्निति प्रवादः। जैनबौद्धादिमतानुसारिणोऽनेके प्रतिवादिनोऽनेकधा एभिः सह वादे प्रवृत्ते पराभूताः—इति लोकप्रसिद्धिः।

अनेन महाभागेन **तन्त्रवार्त्तिक**नाम्ना शाबरभाष्यं व्याख्यातम्। वार्त्तिक-लक्षण च यथा—

"उक्तानुक्तदुरुक्ताना चिन्ता यत्र प्रवर्तते।
त ग्रन्थ वार्त्तिकं प्राहुर्वार्त्तिकज्ञा मनीषिणः॥" इति।

तच्च वार्त्तिकं प्रथमपादे ( तर्कपादे ) **श्लोकवार्त्तिकं** नाम, नतस्तृतीया-ध्यायतृतीयपादान्ते ( निवीतान्तभागे ) **तन्त्रवार्त्तिकम्,** तदग्रे च आद्वादशाध्यायं **'टुप्टीका'** इति नाम्ना प्रसिद्धमस्ति।

निवीतभागोत्तरवर्त्तिवार्त्तिकस्य अनुष्टुप्छन्दोवद् अतिसंक्षिप्ताक्षरतया तादृ-शार्थसूचकम् 'अनुष्टुप्टीका' इति नाम वदन्तो जना अनुष्टुप्टीकेति नाम्नोऽपि सक्षिप्ताक्षरता सम्पादयितुमिव **'टुप्टीका'** इति व्यवहर्तुं प्रारप्सत इति तच्छास्त्र-तत्त्वज्ञा वदन्ति। एषैव टुप्टीका **लघुवार्त्तिकम्** इति नाम्नापि सम्प्रदाये प्रसिद्धा।

अस्मिन् हि वार्त्तिकेऽनेकेषु स्थलेषु भाष्यस्पष्टीकरणाद् इतरदपि मतान्तर-खण्डनात्मक स्वमतमण्डनात्मक वैदिककर्मणामावश्यकत्वपरं कर्मठजनप्रवृत्त-विविधाचारसमर्थक स्मृत्यर्थपरिपोषक विचारजातमेतै. भट्टपादैः प्रदर्शितम्। कि बहुना, तेषु तेषु स्थलेषु प्रमातृ-प्रमेय-प्रमिति-प्रमाण-फलादीना जीवादिपदार्थानां भट्टपादैः तथा विस्तरेण विवेचन कृत यथा जैमिनिसूत्रोपज्ञं मीमासाशास्त्रं मीमासादर्शनपदवीम् अलभत इति चेदुच्येत तर्हि तत्र न कोऽप्यतिशयोक्ति-लेशः स्यात्।

आगामिनि काले कुमारिलभट्टानुयायिनो बहवो मीमांसका अभूवन्। तेषु श्रीपार्थसारथिमिश्राः, मण्डनमिश्राः, माधवमिश्रा प्राचीनाः, तथा खण्डदेव-गागाभट्ट-लौगाक्षिभास्कर-आपदेवप्रभृतयश्चार्वाचीना विद्वांसः प्रामुख्यमभजन्त।

## श्रीपार्थसारथिमिश्रः

अस्मिन् मीमांसाशास्त्रे सूत्राधिकरणप्रकरणभेदेन प्रकारत्रयोपलक्षिताः ग्रन्थाः भिन्नेषु त्रिषु कालविभागेषूपलभ्यन्ते। तत्र सूत्रग्रन्थाः सूत्रव्याख्यानपराः सूत्र-

रचनान्तरं प्रणीताः, येषु शाबरं भाष्यम्, कौमारिलं वार्त्तिकम्, तत्र च व्याख्या-रूपः पार्थसारथिमिश्रकृतः न्यायरत्नाकरः प्रामुख्यं भजन्ते।

कोऽयं पार्थसारथिमिश्रः ? इत्येतद्विषये श्रीरामशास्त्रिण एवमाहुः—

"न्यायरत्नाकरकारश्च मीमांसाशास्त्रपारावारपारदृश्वा सुगृहीतनामधेयो यज्ञात्मसूनुः[1] श्रीमान् पार्थसारथिमिश्रः कदा भूमण्डलं मण्डयामास ?—इति विचारे प्रवर्त्तिते १६३९तम ईशवीयवर्षे वर्तमाननिजस्थितिना श्रीमदप्पयदीक्षितेन प्रणीतेषु तत्तद्ग्रन्थेषु तत्र तत्रैतत्( पार्थसारथि )कृतग्रन्थसंवाददर्शनात् ततोऽयं पुरातनः इति ज्ञातम्। अग्रे च गवेषणे क्रियमाणे श्रीमन्माधवाचार्यप्रणीते जैमिनीयन्यायमालाविस्तरे शास्त्रदीपिकानामदर्शनात् माधवाचार्यस्य १३१३तमे शके ( १३९१ ए. डी. ) स्थित्यवगमात् ततः प्राचीनः, श्लोकवार्त्तिके चानेन व्याख्याकरणात् वार्त्तिककारसमयाद् उपरिनिर्दिष्टाद् अर्वाचीनोऽयमिति निर्विवाद निर्णेतुं शक्यम्।

यद्यपि वार्त्तिककारात् कियदनन्तरम्, माधवाचार्याच्च कियत्पूर्वमेतत्स्थितिः इति तु साम्प्रतं यथावन्निर्णेतुं न सुकरम्, तथापि जीवति ग्रन्थकारे तदुक्तीनां स्वग्रन्थेषु प्रामाण्यविधया निर्देशे तद्ग्रन्थानां व्याख्याने वा पर्याप्ता प्रसिद्धिरादरो वा न सुखोपजनः, विशेषतोऽनाकलितमुद्रणादिकलाकौशले तदात्वे, इति तत्पर्याप्तः कालः—न्यूनान्न्यूनोऽपि शतं वत्सराः—अवश्यं कल्पनीयः। तथा च भट्टपादसमयात् शतमर्वाचीना वत्सराः, माधवाचार्यसमयाच्च प्राचीनाः शतं वत्सराः—इत्येतत्कालमध्ये पार्थसारथिमिश्रकालः सिद्ध्यति। स एव च समयोऽर्थात् न्यायरत्नाकरव्याख्यानिर्माणसमयः स्थिरो भवति।" इति।

मीमांसाधुरन्धरेणानेन विद्वत्तल्लजेन चत्वारो ग्रन्था निबद्धाः—१. न्यायरत्नमाला, २. तन्त्ररत्नम्, ३. शास्त्रदीपिका, ४. श्लोकवार्त्तिकव्याख्यानरूपो न्यायरत्नाकरश्चेति। **न्यायरत्नमाला** अस्य प्रथमा कृतिः, यतो ह्यत्र अन्येषां त्रयाणामुत्तरग्रन्थानां क्वचिदपि नामोल्लेखो न दृश्यते। **तन्त्ररत्नं** च द्वितीयो ग्रन्थः कुमारिलभट्टकृतटुप्टीकाया व्याख्यानभूतः। **शास्त्रदीपिका** चास्य तृतीयो ग्रन्थः, यस्य हि माहात्म्येनायं जगति 'मीमांसादर्शनकेसरी' इति विख्यातोऽभूत्। श्लोकवार्त्तिकव्याख्यानं **न्यायरत्नाकरश्चास्य** चतुर्थो ग्रन्थः, यो हि संक्षिप्तोऽपि सर्वोत्तमः। अत एव चात्यन्तं लोकप्रियतां भजते। अत्रानेन महाभागेन शास्त्रीयाण्यशास्त्रीयाणि वा मतानि सूक्ष्मेक्षिकया परिभाव्य तदनन्तरं क्वचित् क्वचिद्

१. आचार्यमतमाश्रित्य श्रीमदयज्ञात्मसूनुना।
पार्थसारथिमिश्रेण प्रयुक्तितिलकः कृतः॥
—न्यायरत्नमालायाम्

यथाप्रसङ्गं स्वमतमप्युद्घोषितम् । अस्मिन् न्यायरत्नाकरे मिश्रमहोदयस्य वैदुष्य महत्त्वं शास्त्रगाम्भीर्यं च स्पष्टं प्रतीयते । किं बहुना, इदमेव कारणं प्रतीयते यत् सुचरितमिश्र-उम्बेकप्रभृतिभिः कृतानि तानि तानि महत्त्वपूर्णानि श्लोकवार्त्तिकव्याख्यानान्यपि प्रभावहीनानीव मीमासाध्येतृषु जातानि ।

## श्रीप्रभाकरमिश्रः ( गुरुः )

श्रीकुमारिलभट्टपादानामेव समकालिकः श्रीप्रभाकरमिश्रोऽप्यभून्मीमांसाशास्त्रतत्त्वज्ञः । यो हि लोके **गुरु**रित्यभिधयापि विख्यात आसीत् । अयं महाभागस्तत्र तत्र मतान्तरं प्रदर्श्य शाबरभाष्यं व्याख्यातवान् । व्याख्यानमिद **बृहट्टीकेति** आख्यामभजत । अनेन च महाभागेन सूत्र भाष्यव्याख्यानप्रसङ्गे जीवस्वरूपनिर्णय-अभिहितान्वयवाद-अभावस्वरूप-अर्थापत्तिस्वरूपादिनिरूपणस्थलेषु स्वमत तथा विभिन्नतयोपपादित यथा तन्मत **प्रभाकरमत**मिति ख्यातिमलभत । एतदेव च मतमागामिनि काले मीमासादर्शने भाट्टपरम्परेव **'प्रभाकरपरम्परा' 'गुरुपरम्परा'** वेति नाम्ना विश्रुतमभवत् ।

प्रभाकरमिश्रो वस्तुतः श्रीकुमारिलभट्टपादाना शिष्य एव । एकदा सूत्रव्याख्यानप्रसङ्गे यथारूप प्रदर्शितेन भाषारहस्यनिर्णयेन प्रसन्नतामुपगतैः तस्य गुरुपादैः श्रीकुमारिलभट्टैरेव गुरुपदवीमधिगतवान्–इति प्रामाणिकाः कथयन्ति, वर्णयन्ति च इमामाख्यायिका तत्प्रकरणसम्बद्धाम्—

"एवं हि श्रूयते—गुरुगृहे मीमासामधीयानस्य कस्यचिच्छात्रस्य पाठ्यत्वेन प्रचलिताया तदानीन्तन्या कस्याञ्चिज्जैमिनीयसूत्रव्याख्यायामासीत् पाठः— 'अत्रापिनोक्तं तत्रतुनोक्तमिति द्विरुक्तम्' इति । इम ग्रन्थं दृष्ट्वा गुरुर्व्यस्मेष्ट— 'किमिदम् ! अत्रापि नोक्त तत्र तु नोक्तमिति, कथ द्विरुच्येत ? नहि द्विवारमनुक्त्या द्विरुक्तिसम्भवः' इति । ततश्च स कियन्तमपि काल सुनिपुणं निभालयन्नपि न तस्य ग्रन्थस्य तात्पर्यमगवतवान् । सति चैवम्, कार्यान्तरानुरोधाद् गृहान्निरगाद् बहिः क्वापि गुरुः । छात्रेण च 'अत्र अपिना (अपिशब्देन) अयमर्थ उक्तः, तत्र तुना (तुशब्देन) उक्त इति द्विरुक्तम्' इति पदविभागं तदर्थयोजना च विलिख्य गुरुभार्यायै समर्प्य प्रायायि । गुरुस्तु पुनः सायं गृहमाययौ । पत्नी चागत पतिमालोच्य तूष्णीमेव तमर्पयाञ्चकार छात्रलिखितं पदविभागमर्थसमन्वयं च । तद्वीक्ष्य भृशं तुतोष गुरुः शिष्यस्य तादृशी शास्त्रव्युत्पत्तिं सरलचित्ततां चावधार्य । 'केनायं पदच्छेद कृतः ?' इति गुरुणा पृष्टे 'प्रभाकरेण' इतीतरे छात्रा ऊचुः । ततो गुरुः प्रभाकरम् 'त्वमेव गुरुः' इत्युक्त्वा ततः प्रभृति तं गुरुनाम्नाऽऽहूतवान् ।" इति ।

अस्या आख्यायिकाया वस्तुतत्त्वे तु ऐतिह्ये कृतमतय एव प्रमाणम् । वयं

तु मीमांसकेषु गुरुशिष्यपरम्परया श्रुतामिमामाख्यायिकां सत्यस्वरूपामेव सश्रद्धं स्वीकुर्मः ।

## श्लोकवार्त्तिके स्मृता अन्ये दार्शनिकाः

श्लोकवार्त्तिकग्रन्थस्य न्यायरत्नाकरव्याख्यया सह पाठेन ज्ञायते यत् कुमारिलभट्टैः स्वमतमण्डनार्थं परमतखण्डनार्थं च बह्वोऽन्येऽपि मीमांसक-नैयायिक-साङ्ख्य-बौद्धदर्शनविद्वांसः स्मृताः । तेषु केचिद् यथा—

( १ ) **भवदासः**—श्रीकुमारिलभट्ट इमं दार्शनिकं स्वीये श्लोकवार्त्तिके इमं मीमांसक बहुधा स्मरति, खण्डयति चैतस्य शाबरविरुद्धं मतम् । तद् यथा—

"वृत्त्यन्तरेषु केषाञ्चित् लौकिकार्थव्यतिक्रमः ।"

( श्लो० वा० प्रति० सू० ३३ )

अथ वा—

"केचिन्नानार्थवादिनः ।
समुदायादवच्छिद्य भवदासेन कल्पितात् ।"

( श्लो० वा० प्रति० सू० ६३ )

अथवा—

"वर्ण्यते सूत्रभेदेन येन प्रत्यक्षलक्षणम् ।" इति ।

( श्लो० वा० प्रत्य० सू० १ )

अयं मीमांसाशास्त्री शबरस्वामिवत् मीमांसासूत्राणां वृत्तिकारः, शबरस्वामितः पूर्वकालभावीति सुनिश्चितम् ।

( २ ) **भर्तृमित्रः**—अयं विचारशास्त्री शबरस्वामितोऽनन्तरभावी, परन्तु कुमारिलभट्टतः पूर्वं जातो मीमांसासूत्राणां प्रारम्भिकेषु व्याख्यातृषु गणनाप्रसङ्गे लब्धप्रतिष्ठ आसीत् । अनेन हि "नित्यनिषिद्धयोः कर्मणो फलं नास्ति" इति सिद्धान्तः स्थापितः । अनेन सिद्धान्तेन नित्यनिषिद्धकर्मबोधकवेदवाक्यानामानर्थ्यकमेव जातम्—इत्ययं दार्शनिकः भाट्टपरम्परया नास्तिकत्वेनोपालब्धः । तन्मतखण्डेन बद्धपरिकरेणैव कुमारिलभट्टेन तन्त्रवार्त्तिकं प्रारब्धम् । तथाहि तेनात्र प्रतिज्ञातम्—

"प्रायेणैव हि मीमांसा लोके लोकायतीकृता ।
तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ।।"

( श्लो० वा० प्रति० सू० १० ) इति ।

न केवल कुमारिलभट्टेन, पार्थसारथिमिश्रेण वायं दार्शनिकः स्मृतः, अपि तु **जयन्तभट्टेन** स्वकीयन्यायमञ्जरीग्रन्थे, सिद्धित्रयग्रन्थे **यामुनाचार्येण**, अभिधावृत्तिमातृकायां च **मुकुलभट्टेनापि** सादरमयमुद्धृतः ।

पर हन्त, एतादृग्विचक्षणस्य विद्वन्मान्यस्यास्य कोऽपि स्वतन्त्रः ग्रन्थो नेदानी यावदुपलब्धः !

( ३ ) **विन्ध्यवासी**—सर्वेऽपि न्याय-वैशेषिक-मीमांसा-बौद्धमतानुयायिनो दर्शनशास्त्रिण इमं साङ्ख्यशास्त्रनिष्णातं दार्शनिकप्रवर साङ्ख्यमतपरीक्षायां सादरं स्मरन्ति ।

श्रूयते हि अय मनीषी अयोध्याधिपतेः विक्रमादित्यस्य राजसभायां प्रसिद्धस्य बौद्धदार्शनिकशिरोमणेः वसुबन्धोः गुरुं श्री बुद्धमित्रं शास्त्रार्थविचारगोष्ठीषु पराजितवान् । ततश्चाय विन्ध्याचल गतस्तत्रैव स्वजीवनं यापयामास । इति विद्वत्समाजे 'विन्ध्यवासिन्' इत्यभिधयैव ख्यातिं प्राप्तवान् । वसुबन्धुश्चास्य समकालिक स्तृतीयशब्दायां प्रादुर्भूत इत्यैतिह्यविदः प्रमाणयन्ति ।

कुमारिलभट्टोऽपीम दार्शनिकं स्वकीये श्लोकवार्त्तिके आत्मवादप्रकरणे—

"अन्तराभवदेहस्तु निषिद्धो विन्ध्यवासिना ।
तदस्तित्वे प्रमाणं हि न किञ्चिदवगम्यते ॥"

( श्लो० वा० आ० ६२ )

इत्येव स्मरति ।

अनेन विदुषा साङ्ख्यशास्त्रं हिरण्यसप्ततिनामकेन ग्रन्थेन व्याख्यातमिति लोके प्रसिद्धि. ।

( ४ ) **भिक्षुः**—एवमेवात्र श्लोकवार्त्तिके ग्रन्थकर्त्रा व्याख्यात्रा च यथाप्रसङ्गं बौद्धदार्शनिका अपि स्मृताः । तत्र आचार्यनागार्जुनः, दिङ्नागः, आचार्यो धर्मकीर्तिश्च क्वचिन्नामग्राह क्वचिच्च भिक्षुशब्देनोद्धृताः । क्वचिच्चेम एव आचार्या बौद्धाः, शाक्याः, सौगताः, माध्यमिकाः, योगाचाराः, शून्यवादिनः, वैभाषिकाः, सौत्रान्तिकाः, काश्यपीयाः—इत्यादिविशेषणैरपि स्मृताः ।

इत्येवं ग्रन्थेऽस्मिन् बौद्धदार्शनिकानां प्रायः एकवचनेन नामग्रहणपूर्वकम्, अनादरबोधकशब्दैर्वा पौनःपुन्येन स्मरणं बोधयति यत् कुमारिलभट्टसमये मीमांसकानां प्रतिपक्षभूता दार्शनिका प्रामुख्येन बौद्धा एवासन्, येषां प्रबलतर्काणां दृढतरयुक्तीनां वा खण्डने आमूलचूड स्वेदस्विन्नैर्मीमांसकैर्बहु प्रयतितम् । सोऽयं शास्त्रकलह इहैव न समाप्तोऽपितु कुमारिलभट्टतोऽनन्तरं श्रीमता शान्तरक्षितेन स्वकीये तत्त्वसंग्रहग्रन्थे बहुषु प्रसङ्गेषु कुमारिलभट्टस्य श्लोकानादाय मीमांसकमतमक्षरशः खण्डितम् । एतादृशा. परःसार्धसहस्रं श्लोका ग्रन्थस्यास्य परिशिष्टभागेऽस्माभिर्विदुषां कौतूहलनिवृत्त्यै संगृहीता इति ते तत एवावधार्याः ।

( ५ ) एवमेवाचार्यपादैः यथाप्रसङ्गमन्येऽपि प्राचीना समकालिका दार्शनिकाः ग्रन्था वा स्मृताः । तद्यथा—अक्षपादः, पाणिनिः, पतञ्जलिः, भगवद्गीता,

महाभारतम्, मनुः, लौकायतिकः, विश्वावसुशास्त्रसंस्कृताः, साङ्ख्याः, वैयाकरणाः, वैशेषिकाः, वेदान्त्यादयः । तेषां सूची एतद्ग्रन्थान्ते दर्शनीया ।

## तर्कपादविषयवस्तुसंक्षेपः

मीमांसा नाम वेदार्थविचार. । स च वेदार्थनिर्णयार्थः । तस्य च प्रयोजनं यथावदेव साङ्गप्रधानस्य धर्मस्यानुष्ठानद्वारा स्वर्गादिप्राप्तिः । कर्मानुष्ठानार्थमपेक्षित वेदार्थज्ञानं मीमांसाशास्त्रं विना, व्याकरणेन निरुक्तादिना वा न सम्भवति । यद्यपि अधीतन्यायव्याकरणादितत्त्वस्य वेदवाक्यश्रवणसमनन्तरमेव कश्चिदर्थः प्रतिभाति, तथापि स किं बाधितः, अबाधितो वा ? किं स एव तत्र विवक्षितः, उत आन्यः ?—इत्यादिसशयनिरासो मीमासाशास्त्रं विना न भवितुमर्हति ।

तथा हि—"अक्ताः शर्करा उपदधाति" इति वैदिकं वाक्यमुपलभ्यते । तत्र 'शर्करा' पदस्य लोष्टखण्डका अर्थः, 'अक्ता.' इत्यनेन तेषामञ्जनं कर्तव्यम्, कृताञ्जनाना चोपधानं कर्तव्यमिति च गम्यते। उपधानं नाम राशिरूपेण घटनाविशेषः । तत्र च अञ्जन द्रवद्रव्येणैव भवति, न बालुकादिभिरिति सर्वविदितम् । तत्रैव सन्देहो भवति—केन द्रवद्रव्येण अञ्जनं कर्तव्यमिति, अनेकानि द्रवद्रव्याणि विद्यन्ते—तैलम्, जलम्, घृतादिकं चेति ? अय च सन्देहो न व्याकरणाद्यध्ययनमात्रेण निरस्तो भवितुमर्हति। मीमासाशास्त्राध्ययनानन्तरं त्वस्य सन्देहस्यावसर एव नास्ति ।

मीमांसाशास्त्रे हि प्रथमाध्यायस्यान्ते "सन्दिग्धेषु वाक्यशेषात्" ( जै० सू० १. ४. २९ ) इति सूत्रे "अक्ता. शर्करा उपदधाति" इत्यत्र तद्वाक्यानन्तरं श्रुतेन "तेजो वै घृतम्" इति वाक्यशेषेण घृतस्य स्तुति. क्रियते। स्तुतिर्हि तस्यैवापेक्षिता यस्यानुष्ठानार्थमपेक्षा । तथा च घृतस्य स्तुत्यावगम्यते—घृतेन किमपि कर्तव्यमिति, पूर्वं चाञ्जन कर्तव्यमिति बोधितम् । केन साधननेति ? साधनं किमपि द्रवद्रव्यमपेक्षते । एवं च नष्टाश्वदग्धरथन्यायेन उभयोरपि परस्परसम्बन्धात् 'घृतेनैवाञ्जनम्, न तैलादिना' इति निर्णयः सिद्धो भवतीति निरूपितम् । तथा च मीमांसाशास्त्राध्ययनमिदमत्यन्तमपेक्षितम् ।

मीमांसाशास्त्रं चेद गुरुकुले स्थित्वैवाध्येयम्, वेदाध्ययनवत्, न तु गुरुकुलात् समावृत्य विवाहादिकमपि कृत्वा गुरुसहायं विना, स्वयमपि वा। 'मीमांसा अवश्यं कर्तव्या' इति हि "स्वाध्यायोऽध्येतव्यः" इति वाक्येनावगम्यते । वेदाध्ययनमपि अवश्यं कर्तव्यमिति तदेव वाक्य गमयति । तथा च एकविधिमूलकत्वाद् वेदाध्ययन-वेदार्थविचारयोः, उभयमपि गुरुकुले स्थित्वैव सम्पादनीयमिति संक्षेपः ।

अमुमेवार्थं मनसि निधाय भगवान् जैमिनिः—"अथातो धर्मजिज्ञासा"

( जै० सू० १. १. १ ) इति सूत्रयामास। **अथ** वेदाध्ययनानन्तरम्, **अतः** अध्ययनस्य अर्थज्ञानफलकत्वेन अध्ययनवद् वेदार्थविचारस्यापि वैधत्वाद्, **धर्मजिज्ञासा** वेदार्थविचारः कर्तव्यः—इति अस्य सूत्रस्यार्थः। एवं च वेदार्थविचारोऽयम् इदानीन्तनरिसर्चशिक्षणतुल्य इति प्रतिभाति।

अस्य सूत्रस्य **जिज्ञासाधिकरण**मिति नाम। अधिकरणलक्षणं तु—

"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्"॥

इति वचनसिद्धं विषयादिपञ्चकम्। तत्र—

१. **विषयः**—सर्वेषामप्यधिकरणानां किमपि वेदवाक्यम्।

२. **विशयः**—'तद्वाक्यं कस्यार्थस्य बोधकम्' इति सन्देहः।

३. **पूर्वपक्षः**—तत्रैकतरनिरस्यकोटिः सयुक्तिका।

४. **सिद्धान्तः**—पूर्वपक्षकोटिनिरासपूर्वकस्वीकरणीयकोटिनिर्देशः।

५. **सङ्गतिः**—शास्त्रसङ्गतिः, अध्यायसङ्गतिः, पादसङ्गतिः, अधिकरणसङ्गतिश्चेति चतुर्विधा।

तथा हि—जिज्ञासाधिकरणे "स्वाध्यायोऽध्येतव्यः" इति वेदवाक्य **विषयः**।

तेन वाक्येन—स्वर्गार्थमध्ययनं विधीयते, उत अर्थज्ञानार्थमध्ययनं विधीयते वा? यदि स्वर्गार्थम्? तर्हि न विचारो वैधः। यदि अर्थज्ञानार्थम्? तर्हि विचारं विना अर्थज्ञानासम्भवात् स वैधः—इति **सन्देहः**।

'स्वर्गार्थमेवाध्ययनं नार्थज्ञानार्थम्, अर्थज्ञानार्थमध्ययनमिति भारताध्ययनादौ क्लृप्तत्वाद्, विधिवैयर्थ्यात्' इति **पूर्वपक्षः**।

यद्यपि 'अर्थज्ञानार्थमध्ययनम्' इति भारताध्ययनादौ क्लृप्तम्, तथापि 'लिखितपाठभाषान्तराध्ययनादिभिरपि भारताद्यर्थज्ञानमिव वेदार्थज्ञान मा भूत्' इत्येतदर्थं वेदाध्ययनेनैव अर्थज्ञानं सम्पादयितुं युक्तम्, न तु भाषान्तरदर्शनादिभिः—इत्येतदर्थं बोधयितुम् "स्वाध्यायोऽध्येतव्यः" इति विधिवाक्यमपेक्षितमेवेति दृष्टफले सम्भवति अदृष्टकल्पनाया अन्याय्यत्वान्न स्वर्गार्थमध्ययनम्। यथा हि वेदार्थज्ञानस्य क्रत्वनुष्ठानद्वारा स्वर्गादिफलोपयोगः, नैवं भारताद्यर्थज्ञानस्येति भाषान्तरादिभिर्भारतार्थज्ञानं न दोषाय भवतीति **सिद्धान्तः**।

**शास्त्रसम्बन्ध्येवार्थः** प्रत्यधिकरणं विचारणीय इति **शास्त्रसङ्गतिर्नाम**। इदं हि मीमांसाशास्त्रं धर्मशास्त्ररूपम्, अतः प्रत्यधिकरणं धर्मनिर्णयोपयोग्येवार्थो विचारणीयः।

मीमांसाशास्त्रं हीदं द्वादशाध्यायरूपम्। तत्र **प्रथमाध्याये** धर्मप्रमाणम्; **द्वितीये** धर्माणां परस्परं भेदः, **तृतीये** किं कर्म कस्य कर्मणोऽङ्गमित्याद्यङ्गाङ्गिभावः; **चतुर्थे** किं स्वतन्त्रफलसाधनम्? आहोस्वित् कर्मसमृद्ध्यर्थम्?—इत्यादि क्रत्वर्थं पुरुषार्थविचारः; **पञ्चमे** कस्य कर्मणोऽन्तरं किम्?—इत्यादि धर्मगतक्रमविशेषविचारः; **षष्ठे** कस्मिन् धर्मे कोऽधिकारी? कोऽनधिकारी?—इत्याद्यधिकारविचारः; **सप्तमे** धर्मस्य प्रकृतिगतस्य विकृतौ सामान्यातिदेशः, **अष्टमे** स एव विशेषातिदेशः; **नवमे** ऊहः; **दशमे** बाधः, **एकादशे** तन्त्रम्, **द्वादशे** प्रसङ्गः—इत्येवं सर्वेष्वध्यायेषु धर्मकथैव विद्यते। उपर्युक्तजिज्ञासाधिकरणेऽपि सा विद्यत एवेति शास्त्रसङ्गतिरविकला।

एवं धर्मप्रमाणविचारस्यात्र प्रतिज्ञानात् **अध्यायसङ्गतिः। पादसङ्गतिरपि** एवमेव। तथा च 'धर्मविचारः गुरुकुले एव स्थित्वा कर्तव्यः' इति युक्तमेव॥

स च धर्मः क इति चेत्? "चोदनालक्षणोऽर्थो धर्मः" (जै० सू० १. १. २) इति सूत्राद् यश्चोदनालक्षणो वेदबोधितोऽर्थः प्रयोजनवान् स धर्म इति सिद्ध्यति। तथा च "वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मः" इति धर्मलक्षण सिद्धं भवति।

'वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मः' इति लक्षणवाक्ये वेदशब्दस्य लिङादिघटित वेदवाक्यमर्थः। तदुत्तरतृतीयाविभक्तेर्ज्ञाप्यत्वमर्थः। तस्य च विधीयमानपदघटकविधावन्वयः। तस्य च ज्ञानजर्थे फलरूपकृतिविषयत्वेऽन्वयः। तथा च, वेदबोधितविधिविभाव्यप्रयोजनोद्देश्यककृतिविषयो धर्म इति फलितम्।

तत्र को नाम विधिः? स कस्यार्थः? का च कृतिः? सा कस्यार्थः? किं तस्याः प्रयोजनम्? किं च तद्विषयः?—इति जिज्ञासायां "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्यमादाय तत् सर्वमुपपादयामः—

'गामानय' इति वाक्यश्रवणानन्तरं गवानयनार्थं सेवकः प्रवर्तते। सा च तत्प्रवृत्तिरेतद्वाक्याधीना। तत्र गोपदश्रवणम्, अम्विभक्तिश्रवणम्, आनीश्रवणम्, केवलाख्यातश्रवणं वा न निमित्तम्। न हि 'गामानयति' इत्यादि वाक्यश्रवणानन्तरं कोऽपि गवानयने प्रवर्तते, किन्तुः लिङ्‌श्रवणमेव तत्र निमित्तम्। तथा च लिङर्थज्ञानमेव प्रवृत्तिं प्रति तत्र करणम्। लिङर्थश्च प्रवृत्त्यनुकूलप्रवर्तयितृपुरुषनिष्ठोऽभिप्रायविशेषः। तथा च स एव विधिः। या च प्रवृत्तिस्तेन भवति सैव कृतिः। एवं च लिङ्श्रवणानन्तरं प्रवृत्त्यनुकूलव्यापारः प्रतीयते।

तत्र प्रवृत्तिः, व्यापारः—इत्यर्थद्वयं यत् प्रतीयते तत्र कारणं न लिङ एवार्थद्वयेऽपि संकेताङ्गीकारः, 'अन्याय्यश्चानेकार्थत्वम्' इति न्यायविरोधात्। अतो लिङ एव सामान्य-विशेषधर्मपुरस्कारेण अर्थभेदस्तत्राङ्गीक्रियते। 'अन्याय्यश्चाने-

कार्थत्वम्' इति न्याय. शक्यतावच्छेदकभेदे शक्तिभेदमप्यावश्यकं गमयति, अतो न दोषः ।

यद्यपि वेदे अपौरुषेये पुरुषाभिप्रायविशेषरूपा प्रेरणा लिङर्थो न भवितुमर्हति, तथापि 'शब्दगत एव व्यापारविशेषो वेदे लिङर्थ.' इति कल्पनात् न दोषः । अस्यैव लिङर्थस्य शब्दनिष्ठत्वात् 'शाब्दी भावना' इति नामान्तरमपि । इयं तु प्रसिद्धिर्वैदिकानामेव ।

भावना नाम फलानुकूलव्यापारः । इदं भावनात्वं फलानुकूलेषु सर्वत्राविशिष्टम् । तथा च प्रवृत्त्यनुकूलव्यापार इव स्वर्गादिफलार्थायां प्रवृत्तावपि भावनेति व्यवहारः । इयाँस्तु विशेषः—सा शाब्दी भावना, प्रवृत्तिः आर्थी भावनेति ।

अर्थः प्रयोजनम्, तत्सम्बन्धिनी आर्थी भावनेत्यर्थ. । यत् सुखरूपं तदेव मुख्य प्रयोजनम्, न तत्साधनानि । तथा च—शाब्दीभावनाया अपि प्रवृत्तिरूपप्रयोजनसत्त्वेऽपि स्वर्गफलाया. प्रवृत्तेरेवार्थभावनाशब्देन व्यवहारः ।

तथा च अर्थभावना, कृतिः, प्रवृत्तिः—इत्यादीनि पर्यायपदानि ।

यद्यपि "चोदनालक्षणोऽर्थो धर्म" चोदनापदं "चोदनेति क्रियायाः प्रवर्तकं वचनम्" ( शा० भा० पृ० १४ ) इति भाष्याद् विधिपरकमेव, तथापि मन्त्रार्थवादादिसाधारण्यार्थमत्र वेदवाक्यसामान्यमेव विवक्ष्यते । सम्मतं चैतत् शबरस्वामिनाम् ।

यश्चात्र केषाञ्चन प्रश्नः—'वेदलक्षणोऽर्थो धर्म.' इति कथं न सूत्रयामास भगवान् जैमिनिः ? इति ।

तत्रेदमुत्तरम्—विधि-मन्त्र-अर्थवाद-नामधेयभेदात् वेदस्तावच्चतुर्विधः । तत्र विधिवाक्यघटकद्रव्यादिपदानामिव नामधेयानाम् अर्थवादानां च विध्येकवाक्यतयैव धर्मे प्रामाण्यम्, न स्वतन्त्रम् । मन्त्रस्तु यद्यपि विधिवाक्येन पदैकवाक्यतां वाक्यैकवाक्यतां वा न प्राप्नोति, तथापि भूम्ना 'छत्रिणो गच्छन्ति' इतिवत् मन्त्राणामपि चोदनापदेन ग्रहणमिति ।

अत्र च "चोदनालक्षणः" इत्यत्र 'सर्वं वाक्यं सावधारणम्' इति न्यायेन 'चोदनैव प्रमाणम्' 'चोदना प्रमाणमेव' इति नियमद्वयं विवक्षितम् । तत्र प्रथमनियमोपपादनार्थं धर्मस्य प्रत्यक्षादिप्रमाणान्तरगम्यत्वनिरासः प्रथमाध्यायप्रथमपाद( तर्कपाद )गतेन चतुर्थाधिकरणेन कृतः ।

द्वितीयनियमोपपत्तिश्चाप्रामाण्यकारणानां सर्वेषां वेदेऽप्रवृत्त्या निरूपणीया ।

तत्राप्रामाण्यकारणानि बहूनि विद्यन्ते । तानि यथा—१. प्रमाणान्तराधिगतार्थविषयत्वम् २. बाधितार्थविषयत्वम्, ३. अनाप्तप्रणीतत्वम्, ४. पौरुषेयत्वमित्यादीनि ।

१. तत्र प्रमाणान्तराधिगतार्थविषयत्वं वेदस्य न सम्भवति; इन्द्रियार्थसन्निकर्षजन्यस्य विद्यमानार्थविषयस्य चैव सत्प्रत्यक्षत्वात् । न च धर्मो विद्यमान इति न तस्य प्रत्यक्षप्रमाणाधिगतविषयत्वम् । अनुमानलौकिकवचनानामपि प्रत्यक्षपूर्वकत्वान्न तदधिगतविषयत्वमपि ।

२. एतेन बाधितार्थविषयत्वमपि निरस्त भवति। बाधितार्थविषयत्वं हि द्वेधा सम्भवति—( क ) योगाचारादिबौद्धमतेन अर्थस्यैवासद्रूपत्वात्, ( ख ) योऽर्थो वेदेन यथावगतस्तद्विरुद्धं प्रत्यक्षादिभिरवगतत्वाद्वा ।

( क ) तत्र योगाचारादिबौद्धमतस्यायुक्तत्वान्न प्रथमनिमित्ताधीनं बाधितार्थविषयत्वम् ।

"चित्रया यजेत पशुकामः" इति वाक्येन यागस्य पशु. फलमिति बोधितम् । न त्वव्यवहितोत्तरमेव फल भवतीति यागानुष्ठानानन्तरमेव फलादर्शनरूपप्रत्यक्षेण न तद्वाक्यं बाधितम् ।

"स एष यज्ञायुधी यजमानः स्वर्गलोक याति" इत्यत्र हि शरीरातिरिक्तमेव आत्मस्वरूपं स्थिर ज्ञानसुखाद्याश्रयो विवक्ष्यते, न शरीरमिति सशरीरस्वर्गगमनानुपलम्भप्रत्यक्षेण न तद्वाक्यमपि बाधितम् ।

अत्र आत्मनो ज्ञानाश्रयत्वमेव, न ज्ञानरूपत्वमिति हि यो निरासो भाष्यकृता कृतः स प्रकृताभिप्राय , न तु वस्तुगत्या । अत एव "एक आत्मनः शरीरे भावात्" (वे० सू० ३. ३ ५५) इत्यत्र शङ्करभगवत्पादैः—"यद्यपि आत्मस्वरूपं शबरस्वामिना निरूपित तथापि न तत्स्त्रारूढम्, इह तदारूढम्" इत्युक्तम् । तथाच शबरस्वामिनामद्वैतमत एवाग्रहः । क्षणिकविज्ञानात्मत्वमत्र यथा खण्डितं न तथा स्थिरविज्ञानरूपत्वमपि ।

( ख ) एवम् "आदित्यो यूपः" इत्यादीनामपि यूपादिस्तुतावेव तात्पर्यान्न प्रत्यक्षविरुद्धो वेदार्थः कोऽपि विद्यत इति न द्वितीयनिमित्ताधीनमपि बाधितार्थविषयत्वम् ।

३. अनाप्तप्रणीतपौरुषेयत्वे हि ( क ) शब्दानित्यत्वेन, (ख) अर्थानित्यत्वेन, ( ग ) शब्दार्थसम्बन्धानित्यत्वेन, ( घ ) वाक्यार्थसम्बन्धानित्यत्वेन, ( ङ ) पदसङ्घातात्मकवेदवाक्यपौरुषेयत्वेन चाप्रामाण्यं भवति ।

( क ) तत्र शब्दानामनित्यत्वं न युक्तम्; उच्चारणादीनामभिव्यर्थत्वात् । परस्यार्थं प्रत्याययितुं खलु शब्दानां प्रयोगः । न च शब्दानित्यत्वे तदुपपद्यते । यस्य पदस्य अर्थेन सम्बन्धो गृहीतः स चेच्छब्दः पूर्वमेव नष्टः, कथमिव प्रथमश्रुतात् पदान्तरात् पदार्थप्रत्ययोऽवकल्प्येत ! अत एव हि 'सोऽयं गकारः' इति प्रत्यभिज्ञोपपद्यते। ज्वालैक्यप्रत्यक्षवदियमपि सादृश्यनिबन्धनाभेदावगमेति कल्पनं

हि दृढतरेण प्रमाणेन तत्र ज्वालाभेदस्येवात्रापि गकारभेदस्य सिद्धत्वे युज्यते, न चैतदस्ति; अत एव हि 'अष्टकृत्वो गोशब्दमुच्चारयति' इति व्यवहारो लोके, न तु 'अष्ट गोशब्दान् उच्चारयति' इति। सर्वथा च शब्दस्य नित्यत्वात्, नदनित्यत्वेन नानाप्तप्रणीतत्वादिशङ्का।

अत्र **वैयाकरणानाम्**—नित्योऽपि शब्दो न वर्णात्मकः, किन्तु गोशब्दोच्चारणानन्तरम् अन्तर्मनसि प्रकाशमानमनवयव विभु च किमपि स्वरूपं स्फोटपदाभिधेयम्, तदेव शब्दः—इति मतम्। इदमपि मत वर्णात्मकवेदप्रामाण्यविरुद्धमेवेत्यत्र नास्ति विशयलेशोऽपि।

यद्यपि—

"उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते"॥

(वा० प० २ २३८)

इति हरिकारिकावचनात् स्फोटात्मकस्य निरवस्यापि शब्दस्य कल्पितानवयवानादायैव व्याकरणशास्त्रप्रवृत्त्या अद्वैतमत इव कल्पितस्यापि शब्दस्य व्यावहारिकं प्रामाण्यमुपपद्यते, तथापि वेदप्रामाण्यसाधनमेव मन्यमानानाम् "न कदाचिदनीदृशं जगत्" इति सिद्धान्ताभिमानिनां न मीमांसकाना **स्फोटवादो** नादरणीयः।

किञ्च, स्फोटवादे निरवयववाक्यस्फोटस्यैव परमार्थत्वात् पदस्फोटादीनां सावयवानामनित्यत्वात् शब्दार्थसम्बन्धनित्यादिकं नोपपद्यते; ध्वनिविशेषविशिष्टस्फोटस्यैव पदस्फोटत्वात्। एवमवान्तरवाक्यस्फोटस्याप्यनित्यत्वाद् यागादिधर्मपारमार्थिकतापि न सिद्धयेत्।

स्फोटपक्षे हि निरवयवं वाक्यं निरवयवस्य वाक्यार्थस्य वाचकम्, अवयवास्तु पदात्मका वर्णात्मकाश्च मृषाभूताः। ततश्च पद-तदवयवाश्रितोहादेः महावाक्यावान्तरवाक्यार्थप्रयाजाद्याश्रितप्रसङ्गतन्त्रादेः कार्यस्य मृषात्व स्यात्। अतः तत्सत्यतासिद्धयर्थं स्फोटनिराकरण न निष्फलम्। तदुक्तं **श्लोकवार्त्तिके**—

"कार्याणि वाक्यावयवाश्रितानि,
सत्यानि कर्तुं कृत एष यत्नः।" इति।

(श्लो० वा० स्फो० १३७)

अत एव, **अद्वैतिनामपि** देवताधिकरणादौ स्फोटवादनिरासः। नहि **ब्रह्म**व्यतिरिक्तं किमपि सत्यमिति तेषां मतम्। 'स्फोट एव ब्रह्म' इति तु न युक्तम्; तस्याचेतनस्य तत्त्वायुक्तत्वात्। तस्यैव चैतन्यादिरूपत्वे चाङ्गीक्रियमाणे न अद्वैतमताद् विशेषः। सर्वथा च पारमार्थिकं प्रामाण्यं वेदानां मीमांसकैर्यदभिमतं

तदिदं स्फोटवादाङ्गीकारे न सिद्धयतीति वर्णात्मक एव शब्दो यो नित्य इति सर्वमुपपन्नम् ।

( ख ) एवमर्थोऽपि नित्य एव । यदि नैयायिकमत इव व्यक्तिराकृतिविशिष्ट-व्यक्तिर्वा अर्थः स्यात्, तस्यानित्यत्वमापद्यते, न तु तदस्तीति **आकृत्यधिकरणेन** सिद्धमेव ।

तथा च—का सा आकृतिः ? तत्र किं प्रमाणम् ? न ह्याकृतौ प्रमाणं विद्यते । यद्यपि 'गौः' 'गौः' इत्येवमनुगताऽऽकृतिः प्रत्यक्षम्, तथापि तत् प्रत्यक्षं नाकृतिसाधक भवितुमर्हति । यथा हि अवयवातिरेकेण अवयवी समुदायो न विद्यते, एवमपि वनमिति समुदायप्रत्यक्षं विद्यते । नहि 'प्रत्यक्षं विद्यते' इत्येतावता समुदायोऽपि वस्तुसम्मतं मीमासकानाम्, एवं च अविद्यमानार्थविषयं प्रत्यक्षं बहुदृष्टम् । अतो यदि प्रत्यक्ष प्रमाणम्, वनमपि समुदायोऽङ्गीक्रियताम्; यदि तु न प्रमाणम्, व्यक्तिरपि नाङ्गीक्रियतामिति बौद्धमतप्रवेशापत्तिरिति सर्वथा आकृतौ प्रमाणाभावात्, नार्थो नित्यो भवितुमर्हतीति **वनवादेनाशङ्कापि** नात्र प्रसरति ।

न हि वयं प्रत्यक्षसिद्धं सर्वमपि वस्तुसद् ऊरीकुर्मः, किन्तु सत्प्रत्यक्षसिद्धम् । वनप्रत्यक्षं तु प्रमाणान्तरेण बाधितम्; दूराद् 'वनम्' इत्यनुभवेऽपि समीपगमने वृक्षाणामेव तत्र प्रतीतेः । न चैवमाकृतौ । यदा व्यक्तेरनुभवस्तदैवाकृतिमपि अनुभवामः । ततश्च आकृतेः प्रामाणिकत्वात् तस्याश्च नित्यत्वादर्थोऽपि नित्य एव—इत्यर्थानित्यत्वेनापि नानाप्तप्रणीतत्वादिकम् ।

( ग ) एतेन शब्दार्थसम्बन्धनित्यत्वमपि व्याख्यातं भवति । यद्यपि शब्दार्थयोर्न संयोग. तादात्म्यादिक वा सम्बन्धः, तथापि प्रत्यायकत्वाख्यस्तु सम्बन्धः सम्भवत्येव । तथा च, अर्थप्रत्ययानुकूलशक्तिरेव शब्दस्यार्थेन सम्बन्धः ।

स च केनापि पुरुषेण कल्पितः, न हि वयं तादृश कमपि पुरुषमुपलभामहे, न वा स्मरामः । यदि हि पुरुषः कोऽपि सम्बन्द्धा स्यात् अवश्यं स स्मर्तव्यः । न हि देवदत्तादिनामसम्बन्धिनः पुरुषस्य स्मरण विना 'अयं देवदत्तः' इति निश्चिनुमः । नहि "वृद्धिरादैच्" (पा० सू० १. १. १) इति सूत्रं तस्य कर्तारं च **पाणिनिमस्मरन्तः** "वृद्धिर्यस्याचामादिः" (पा० सू० १. १. ७३) इत्यादौ वृद्धिशब्दस्यार्थं जानन्ति ।

किञ्च, सम्बन्द्धा पुरुषो यदि च प्रमाणान्तराणि तत्साधकानि न सन्ति, तर्हि कथं स ऊरीकर्तुं योग्य. ।

दृश्यन्ते हि लोके वृद्धाः स्वार्थेन मध्यमवृद्धादिभिः सह शब्दैः सह संव्यवहरमाणाः । तद्व्यवहारं दृष्ट्वा 'अस्य पदस्यायमर्थः' इति गृह्णन्तीति सत्यामुपपत्तौ नार्थापत्त्यापि सम्बन्धः पौरुषेय इति भवति कल्पना ।

किञ्च, त्रयो लोकाः, त्रयो वेदाः, इतिहासपुराणादयश्च बहवः शब्दप्रयोगस्य विषया युगशतेनापि गोचरयितुमशक्या विद्यन्ते । तत्र सर्वत्रापि बहूनां कथं सङ्गमेनैकवाक्यतया सङ्केतकल्पनं सम्भवति ।

इति सङ्केतोऽपि केन च शब्देन खलु बहुभिः करणीयः । तच्चेद् अकृतसम्बन्धैः पदैः ? तर्हि कथं सम्बन्धकल्पने सम्भवति । यदि कृतसम्बन्धैः ? तर्हि तत्र सम्बन्धकरणं यद्यन्येन, तदा तस्य केन, तस्य केन—इत्यसमाधेयानवस्था समापतति । तदवश्यं केचन नित्यसम्बन्धाः शब्दा अङ्गीकरणीया इत्यलमर्धजरतीयाश्रयणेन । तथा च शब्दार्थसम्बन्धानित्यत्वेनापि न वेदस्यानाप्तप्रणीतत्वादिकम् ।

४. एतेन वेदपौरुषेयत्वमपि परास्तम्; कर्तुरस्मरणात् । यथा हि लोके प्रमाणान्तरेणार्थमुपलभ्य काव्यानि विरच्यन्ते, न तथा वेदो रचयितुं शक्यते । तदुक्तम् "धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्" ( जै० सू० १. ३. १ ) इति ।

**तन्त्रवार्त्तिकेऽप्युक्तम्—**

"प्रपाठकचतुष्षष्टिनियतस्वरकैः पदैः ।
लोकेष्वप्यश्रुतप्रायैः ऋग्वेदं कः करिष्यति ॥" इति ।

अत्र च वाक्यार्थस्य पदार्थेभ्य एव प्रतीतिर्न तु पदसङ्घातात्मकवाक्येनेति न वाक्यार्थानित्यत्वेनापि वेदस्याप्रामाण्यमिति सर्वथा प्रमाणान्तराविषयत्वाद्, अबाधितार्थविषयत्वात्, कारणदोषाभावाच्च न वेदस्याप्रामाण्यमिति 'वेदः प्रमाणमेव' इति द्वितीयनियमोऽप्युपपन्न एव ॥

## सूत्रानारूढविषयव्याख्यानम्

यदत्र भाष्यकारैः स्फोटवादनिरासादिकं बहु उपक्षिप्तम्, तत् सर्वं सूत्रारूढमेव 'सूचनात् सूत्रमुच्यते' इति कथञ्चित् सूत्रकारेण सूचितानां सर्वेषामपि विषयाणां भाष्यकारैर्लेखनीयत्वात् । यथा—"अथातो ब्रह्मजिज्ञासा" ( वे. सू. १. १. १ ) इति सूत्रेण ब्रह्मविचारे प्रतिज्ञातेऽपि आत्मान्तःकरणयोः परस्पराध्यासस्य ब्रह्मशब्दमहिम्ना सूचितस्य व्यवस्थापनेनाध्यासभाष्यं शङ्करभगवत्पादानाम् ।

एवं च या शङ्करभगवत्पादानाम् "शरीरात्मत्वनिरासः शबरस्वामिना न सूत्रारूढः" इत्युक्तिः, सा स्पष्टं तादृशसूत्राभावात् कथञ्चिदुपपद्यत एव । "एक आत्मनः शरीरेऽभावात्" ( वे. सू. ३. ३. ५५ ) इति सूत्रं तु शरीरातिरिक्तत्वादिना नित्यशुद्धबुद्धमुक्तासङ्गस्वरूपनिरूपणार्थमपेक्षितमेव ।

वस्तुतस्तु—क्षणिकविज्ञानादिरूपत्वनिरासेन शबरस्वामिनां स्थिरविज्ञानात्मत्वमुपपन्नमिति यत् सूचितं न तत्सूत्रारूढम्; देहातिरिक्तविज्ञानाश्रयात्मस्वरूपे-

णापि कर्मानुष्ठानादिसिद्धया, यज्ञायुधिवाक्यस्य प्रत्यक्षाबाधितत्वसिद्धया च तावत्पर्यन्त सूत्रतात्पर्यकल्पनस्यायोगात्। उपनिषदर्थवादत्वोक्तिरपि तादृशात्म-स्वरूपाभिप्रायेणैव। तादृशमेवात्मस्वरूपं **जैमिने**रभिमतमिति **उत्तरमीमांसा-** (वेदान्त) गतेन "शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः" (वे० सू० ३. ४. २) इति सूत्रेण सिद्धयति।

अत एवोक्त **श्लोकवार्त्तिके**—

"इत्याह नास्तिक्यनिराकरिष्णुः,
आत्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयः प्रबोधः
प्रयाति वेदान्तनिषेवणेन" ॥ इति।
(श्लो० वा० आत्म० १४८)

सर्वथा च मीमांसाशास्त्रमिदं वेदार्थविचाररूप देहातिरिक्तात्मस्वरूपवेद-प्रामाण्यादिकमेवोपर्जाव्य वरीवर्तीति आस्तिकदर्शनतामेवार्हति।

## प्रमाणस्य लक्षणम्, भेदाश्च

यद्यपि "प्रमाकरण प्रमाणम्" इति सर्वजनप्रसिद्ध प्रमाणलक्षणम्, तथापि "कारणदोषबाधकज्ञानरहितम् अगृहीतग्राहि ज्ञान प्रमाणम्" इत्येव मीमासक-सम्मत निर्दुष्ट प्रमाणलक्षणम्। तथा च, अनुवाद-स्मृति-भ्रम-सशयाना प्रमाणकोटौ प्रवेशाभावः।

तच्च प्रमाणं मीमासकमतेन षड्विधम्—१. प्रत्यक्षम्, २. अनुमानम्, ३. उपमानम्, ४ शब्द., ५. अर्थापत्ति, ६. अनुपलब्धि (अभाव) श्चेति। यद्यपि प्राभाकरा अभावपदार्थं नैव स्वीकुर्वन्तीति तन्मते तत्र प्रामाण्य नास्ति, तथापि श्रीमता कुमारिलेन तत्सम्प्रदायेन (भाट्टपरम्परया) चानुपलब्धिप्रमाणमपि प्रबलाभिर्वाचोयुक्तिभिः साधितम्। अतो मीमासकाना मते षडेव प्रमाणानि।

तैः सम्भवस्य अनुमानेऽन्तर्भाव., ऐतिह्यस्य च शब्देऽन्तर्भावः स्वीकृतः।

उत्तरमीमांसामतानुयायिभिः (वेदान्तिभिः) अपि एतान्येव प्रमाणानि स्वीकृतानि।

अन्ते च, मीमासकसम्मतप्रमाणप्रमेयविचाररूपत्वात् प्रथमपादस्य **तर्कपाद**-त्वेन व्यपदेशोऽपि यथार्थ एव। इत्यलमनेन विचारविस्तरेण॥

## सम्पादनशैली

अस्य ग्रन्थस्य सम्पादनेऽस्माभिरेषा सरणिरनुसृता—

१. प्रायः श्लोकपाठः, न्यायरत्नाकरपाठश्च वाराणसेय फ्रीमेन कम्पनीमुद्रण-(१८८९तम ई०) माधृत्य स्थापितः। सत्सु च प्रसङ्गेषु न्यायरत्नाकर-

प्रामाण्येन गुरुमुखाच्छ्रुतरूपेण शाब्दप्रामाण्येन च संशोधितः पाठ उपरि धृतः, मुद्रितसंस्करणपाठश्च मु० पा० सकेतेन टिप्पण्या स्थापितः।

२. वार्त्तिकश्लोकानां तावन्तोंऽशास्तथा तथा पृथक्कृत्य स्थापिताः, ये न्याय-रत्नाकरव्याख्यया यावन्तो यथा च व्याख्याताः। एतेन बोद्धृणा सुमहत् सौकर्यं स्यात्।

३. अनुसन्धित्सूनां समयव्ययो मा भूदिति ग्रन्थेऽस्मिन्नुद्धृतानामपरदार्शनिक-ग्रन्थानाम् ( इदानी यावदुपलभ्यमानानामेव ) स्थलसङ्केतोऽपि तत्र तत्रो-द्धरणतोऽनन्तरमेव कोष्ठके कृतः।

४. व्याख्याया समागतान्यन्यग्रन्थकर्तॄणा नामानि भिन्नाक्षरर्मुद्रापितानि। तेषामुद्धरणानि च एकक-द्विकचिह्नादिभिः ( ' ' " " ) सयोजितानि।

५. वार्त्तिकस्य, न्यायरत्नाकरस्य च भाषाजाटिल्यनिरासार्थं तत्र तत्र दुरवगमः सन्धिजालोऽप्यस्माभिर्निरस्त., येन आयासमन्तरैव अन्तेवासिनामप्यत्र सुखावगतिर्भवेत्, ग्रन्थस्यास्य च सौन्दर्यमक्षुण्णं स्यात्।

६. अत एवास्माभिरधुनातनविद्वद्भिरुपयुज्यमानानि विरामादिचिह्नानि अप्यत्र ग्रन्थे सर्वत्र सर्वथोपयोजितानि। येन वार्त्तिकस्य व्याख्यायाश्च हृदयं सपद्या-सादितं भवेत्।

७. ग्रन्थान्ते च वार्त्तिकोक्तश्लोकार्धसूची, प्रख्यातबौद्धग्रन्थे तत्त्वसंग्रहे समी-क्षिताना वार्त्तिकश्लोकाना सूची श्लोकवार्त्तिके व्याख्याया स्मृताना ग्रन्थाना ग्रन्थकाराणा सूची चापि विदुषा परितोषाय समावेशिताः।

इत्येवं गूढाशयस्यास्य श्लोकवार्त्तिकस्य, स्पष्टपदायाश्चापि गभीरार्थाया न्यायरत्नाकरव्याख्यायाः साधु सम्पादनं विधाय विदुषा समक्षमुपस्थापयामः। वार्त्तिकस्य न्यायरत्नाकरस्य च गाम्भीर्यमालोच्य परिश्रमं चास्माकमनुमाय अत्र साधुत्वासाधुत्वे विद्वांस एव प्रमाणम्।

अन्ते च,

**गुरुकृपालवेनैव मीमांसाश्लोकवार्त्तिकम्।**<br>
**स्वामी श्रीद्वारिकावासः पर्यस्कार्षीत् सतां मुदे॥**

वा० संस्कृतविश्वविद्यालयीयसाहित्य-मीमासाविभागाध्यक्षचराणां

**विद्यासागरपण्डितश्रीपट्टाभिरामशास्त्रिणां**

# शुभाशंसनम्

"मीमासाख्या तु विद्येय बहुविद्यान्तराश्रिता" ( श्लो० वा० प्र० सू० १३ )

इति मीमासानिकेतनस्य स्तम्भभूता भट्टपादा अभिदधिरे। अवितथेयमुक्ति कुमारिलभट्टानाम्। वेदवाक्यार्थनिर्णीतये प्रवृत्तापीय मीमासा तैस्तैर्दार्शनिकैरन्यैश्च शास्त्रकारैर्धर्मग्रन्थनिबन्धृभिः प्रौढालङ्कारिकै तन्त्रग्रन्थनिर्मातृभि· भट्टभास्कररायप्रभृतिभि, वैयाकरणैश्च स्वीयेषु ग्रन्थेषु सादर समाद्रियते द्वित्राणा मीमासान्यायाना प्रदर्शनेनेति न तिरोहित तत्तद्ग्रन्थपरिशीलनचेतसाम्। किमत्र कारण भवेदिति जिज्ञासाया निस्सङ्कोचमिदमभिदधातु शक्यते—यन्निखिलस्यापि सस्कृतवाङ्मयस्य मूलभूत वेदाभिधानमपौरुषेय वचो यथायथमनुसृत्य लोकिक पारलौकिकञ्च पन्थानमाविष्कुर्वन्ती तत्र विहरतीति। अत एवय चतुर्दशविद्यास्थानेषु धर्मस्थानेषु चाभियुक्तै पर्यगण्यत, शास्त्रकारैश्शास्त्रत्वेन, तान्त्रिकैश्च तन्त्रत्वेन व्यवाह्रियत। पूजितविचारात्मिकाया अस्या आदरे कस्य वा दरो भवेत्? विषमदृष्ट्या पदार्थेषु विविच्यमानेषु लोकानामादर क्वापि न भवेदिति सर्वसम्मतमिदम्। समा दृष्टिमवलम्ब्य च न्यायेन पथा गच्छन्तीय पदार्थान् विवेचयति।

'तस्य निमित्तपरीष्टि' ( जै० सू० १ १. ३ ) इति सूत्रयन् जैमिनिमुनिर्मीमासाया परीक्षाशास्त्रत्वमवधारयति। समा दृष्टिमाश्रित्य परित ईक्षण नाम भवति परीक्षा। एव परीक्षणेन विविच्य निर्णीत एव न्याय कथ्यते। कस्यचन पदार्थस्य याथातथ्येन स्वरूपावधारणे न्यायाधिपस्य समुत्व यथा साधकयुक्तय उपस्थाप्यन्ते तथा उच्चावचा बाधकयुक्तयोऽपि। ता इमा परिशील्य पर्यवेक्ष्य सुपरीक्ष्य च न्यायाधिपो न्याय निर्धारयति। न्यायाधिपनिर्णीतन्यायस्य पुरतो नतमस्तकैरेव भाव्यं सर्वैरपि। विरुद्धे पथि वर्तन वादिप्रतिवादिनोस्स्वभाव। उभये अपीमे स्वं स्व पन्थान समीचीनमित्येव मन्येरन्। कश्चन अस्तीति वदन्, अपरश्च नास्तीति। उभयोरप्यनयोः स्वस्वनिर्णये भूयानभिनिवेश कामं भवेत्, किन्तु विचारदृग्विवेचक एकमुपादत्ते, अपरञ्च जहाति। तत्रोपादानाय हानाय वा न्याय एवावलम्ब। विरुद्धाविमौ वादिप्रतिवादिनौ न्यायालयमधिकरणं स्वस्वमतनिर्णयाय गच्छन्तौ तत्र न्यायाधिपेन निर्णीत न्यायं निशम्य तदनुसारेण जय पराजय वा प्राप्नुत। न्यायाधिपस्याप्यत्र निर्णये न स्वीया बुद्धिरेवावलम्बः, किन्तु पूर्वजैर्निर्णीतो न्याय इत्येव स्वीकर्तव्यम्। एव पूर्वं पूर्वं गच्छन्त. केचन कस्मिश्चन पुरुषे बद्धश्रद्धा भवन्ति, अपरे च भ्रमप्रमादविप्रलिप्सादिदोषरहिते पवित्रतमे शब्दसन्दर्भेऽवतिष्ठन्ते, अन्ये च विशिष्टपुरुषरचिते शब्दसमूहे श्रद्दधते। अस्तु यथा तथा वा!

स्वस्वमतपरिपोषणाय किमपि प्रमाणमाश्रयणीयम्, तत्र प्रामाण्यं परतो वा भवेत्, स्वतो वा। कलहेन विवादोऽयं न शक्य प्रशमयितुम्। वस्तुतत्त्वपरीक्षाया विवादः स्यात्स्यत्येव। रत्नतत्त्व परीक्षितु प्रवृत्ताः कदाप्येकमत्यं न प्राप्नुयुः। यो यथा रत्नं

निश्चिनोति नान्यस्तथा निश्चिनुयात् । आ च भगवत प्रथमाया सृष्टे. आ चैतस्मिमेवात् क्वापि न शृणुमः—सर्व एव दार्शनिका. शास्त्रकारा वा ऐकमत्यकवाप्नुवन्निति । क्वचित्काचन न्यूनता स्यादेव । तथापि 'वय पञ्चोत्तरं शतम्' इति न्यायेन वैदिकानामैकमत्यम् अवैदिकमतनिराकरणे, अवैदिकानाञ्च वैदिकमतप्रध्वंसन ऐकमत्यमस्त्येव ।

तत्र भगवती मीमासा धर्मतत्त्वपरीक्षाया वैदिकमतसंस्थापने तदौपयिकपदार्थनिर्धारणे चाग्रे सरन्ती वर्तत इत्यत्र न कश्चन सशयलेश. । तत्र च मुख्य कारणं यदस्या वेदनामा शब्दराशिरवलम्बः । 'यच्छब्द आह तदस्माक प्रमाणम्' 'नास्ति वचनस्यातिभारः' इत्येवमसकृद् वदन्तो भाष्यकारा श्रीशबरस्वामिनस्तमिममाशय द्रढयन्ति । तामिमां पूज्यविचारात्मिका मीमासा महर्षीणा विचारगोष्ठीषु चिरं तिष्ठन्ती भगवान् जैमिनिः सूत्रारूढामकरोत् । अतिविस्तृतेयं मीमासा । अत्रेमास्तन्त्रवार्त्तिकपङ्क्त्यो ध्यानमर्हन्ति—**मीमांसा तु लोकादेव प्रत्यक्षानुमानादिभिरविच्छिन्नसम्प्रदायपण्डितव्यवहारैः प्रवृत्ता । न हि कश्चिदपि प्रथममेतावन्तं युक्तिकलापमुपसहर्तुं क्षमः ।'** (त० वा० पृ. १६७) इत्यादय ।

किञ्चेद शास्त्र विवादास्पदेषु विषयेषु समन्वयदृष्टिमादधत्सर्वत्र प्रवर्तते । समग्रस्य सस्कृतवाङ्मयस्य वेदमूलकत्वव्यवस्थापनावसरे सर्गप्रलयोपवर्णनमपि दैवपुरुषकारप्रभावप्रविभागदर्शनार्थम् सर्वत्र हि तद्बलेन प्रवर्तते, तदुपरमे चोपरमतीति । **विज्ञानमात्रक्षणभङ्ग-नैरात्म्यादिवादानामप्युपनिषदर्थवादप्रभवत्वं विषयेष्वात्यन्तिकं रागं निवर्तयितुमित्युपपन्नं सर्वेषां प्रामाण्यम्'** इति (त० वा० पृ० १६८ पूना स०) भट्टपादा अभिदधते । अद्धा ! कियदौदार्यं प्रतिपक्षिषु मीमासकानाम् ।

एवमिय जैमिनिना सूत्रात्मना सङ्ग्रथिता मीमासा शबरस्वामिपर्यन्तमेकया धारया प्रवहन्ती शबरस्वामिनोऽनन्तर त्रिपथगा सवृत्ता कुमारिल-प्रभाकर-मुरारिमिश्राणा प्रतिभाप्रकर्षसमुत्था । तत्र भट्टपादा शाबर भाष्य समग्र व्याचख्यु' । इय व्याख्या श्लोकवार्त्तिक-तन्त्रवार्त्तिक-टुप्टीकानामभिर्व्यवह्रियते । प्रथमाध्यायप्रथमपादस्य तर्कपादाभिधेयस्य श्लोकवार्त्तिकम्, तृतीयाध्यायान्तभागस्य तन्त्रवार्त्तिकम्, ततश्शेषस्य टुप्टीकेति ।

इमे त्रयो ग्रन्था व्याख्योपव्याख्याभिः पूर्वं प्रकाशिता अप्यनुपलम्भदोषदूषिता आसन् । मीमासाध्येतॄणा वैरल्य इदमपि प्रबल कारणम् यद् ग्रन्थानामनुपलम्भ । तमिमं दोषं दूरीकर्तुं यतमान' प्राध्यापकः **श्रीद्वारकादासस्वामिमहाभागः** श्रीपार्थसारथिमिश्रविरचितन्यायरत्नाकरटीकया सह श्लोकवार्त्तिक संस्कृत्य पूर्वसस्करणापेक्षया विलक्षणा काञ्चन मनोरमा रीतिमवलम्ब्य समपादयदिति नितरा प्रसीदामि । मूलस्य टीकायाञ्च यावानंशस्सम्बद्ध तावन्त पृथक्कृत्य प्रकाशनं छात्राणामध्यापकानाञ्च महदुपकारकमिति श्रीद्वारिकादासस्वामिन उद्यमं प्रशंसन्नाशासे यदस्य स्वामिमहोदयस्य भूयसी प्रवृत्तिरेतादृशेषु शोभनेषु कार्येषु भवत्विति ॥

१७. १२. ७७ पट्टाभिरामशास्त्री

वाराणसी विद्यासागरः

# संकेतसंक्षेपविवरणम्

व्याख्यायां चाथ टिप्पण्यां ये ये ग्रन्था इहोद्धृताः ।
तेषां संकेतसंक्षेपः स्फुटं विव्रियतेऽधुना ॥

| | |
|---|---|
| का० | काशीविद्यासुधानिधिपत्रे प्रकाशितं श्लोकवार्त्तिकम् |
| जै० सू० | जैमिनीयसूत्रम् |
| ३ पु० | काशीविद्यासुधानिधिपत्रे प्रकाशितं श्लोकवार्तिकम् |
| २ पु० | काशीस्थसरस्वतीभवने स्थितमर्वाचीनं पुस्तकम् |
| न्या० सू० | न्यायदर्शनसूत्राणि ( बौद्धभारतीग्रन्थमालायां प्रकाशितानि ) |
| पाठा० | पाठान्तरम् ( प्रायो गुरुमुखाच्छ्रुतम् ) |
| पा० सू० | पाणिनीयसूत्राणि ( काशीस्थप्राच्यभारतीग्रन्थमालाया मुद्रितकाशिकावृत्तितो गृहीतानि ) |
| प्र० वा० | प्रमाणवार्त्तिकम् ( बौद्धभारतीग्रन्थमालायां प्रकाशितम् ) |
| प्र० समु० | प्रमाणसमुच्चयः ( श्रीजैनआत्मानन्द सभा, भावनगरतः द्वादशारनयचक्रे प्रकाशितः ) |
| १ पु० | काशीस्थसरस्वतीभवने स्थितं प्राचीनं पुस्तकम् |
| बृ० उ० | बृहदारण्यकोपनिषत् |
| भ० गी० | भगवद्गीता ( गीताप्रेसमुद्रिता ) |
| म० शा० | मध्यमकशास्त्रम् ( दरभङ्गातः बौद्धसंस्कृतग्रन्थावली प्रकाशितम् ) |
| मु० पा० | काशीस्थ फ्रीमैन कम्पनी द्वारा मुद्रितपुस्तकस्य पाठः |
| मु० पु० | काशीस्थ फ्रीमैन कम्पनी द्वारा ( १८९८तम ई० ) मुद्रितं पुस्तकम् |
| वा० प० | वाक्यपदीयम् ( डेक्कन कॉलेज, पूनातः प्रकाशितम् ) |
| शा० भा० पृ० | आनन्दाश्रम( पूना )मुद्रिते शाबरभाष्ये पृष्ठम् |
| श्लो० वा० | श्लोकवार्त्तिकम् ( एतदेव संस्करणम् ) |
| सु० | सुबोधिनी ( जैमिनीयसूत्रवृत्तिः ) |

श्लोकवार्त्तिकस्य

# विषय-क्रमः

**पार्थसारथिमिश्रेण व्याख्यातं श्लोकवार्त्तिकम् ।**
**यथा, तथैतद्ग्रन्थस्य विषयक्रम उच्यते ॥**

न्यायरत्नाकरव्याख्यासवलितं

मीमांसा-

# श्लोकवार्त्तिकम्

[ प्रथमाध्याय-प्रथमपाद(तर्कपाद)व्याख्यानात्मकम् ]

* श्रीगणेशाय नमः *

# श्लोकवार्त्तिकम्

**मीमांसादर्शने**

**प्रथमाध्याये प्रथमः पादः**

( तर्कपादः )

**विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।**
**श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १ ॥**

## न्यायरत्नाकरः

श्लोकवार्त्तिकमारिप्सुस्तस्याविघ्नसमाप्तये ।
विश्वेश्वरं महादेवं स्तुतिपूर्वं नमस्यति ॥ १ ॥

विशुद्ध मीमासया संशोधितं ज्ञानमेव देहो यस्य। त्रिवेद्येव दिव्यं चक्षुः प्रकाशक यस्य। सोमस्य अर्धं स्थान ग्रहचमसादि तद्धारिणे इति यज्ञपक्षेऽपि सङ्गच्छते ॥ १ ॥

विद्यागुरूणां स्तुतिनमस्कारौ कुर्वन् वार्तिकारम्भ प्रतिजानीते—

**अभिवन्द्य गुरूनादौ शिष्यधीपद्मिनीरवीन् ।**
**तत्प्रसादात् करिष्येऽहं मीमांसाश्लोकवार्त्तिकम् ॥ २ ॥**

सम्प्रति लोकयात्रामाद्रियमाणो विदुषामनुनयं करोति—

**तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः[१] प्रसादिभिः ।**
**सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः ॥ ३ ॥**

परीक्षकाणामिदानी माध्यस्थ्यमर्थयते—

**न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।**
**दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ ४ ॥**

दोषैकदृष्टिपराणामसन्नपि दोषः प्रकाशते, अतो मध्यस्था भूत्वा[२] परीक्षध्वमिति ॥ ४ ॥

---

१. स्तोत्रै—का० ।

२. मध्यस्थीभूत्वा—२ पु० ।

दुर्जनानिदानीमुद्धतोक्त्या दमयति—

**कुतो वा गृह्णते दोषं सूरयो मद्विधोक्तिषु।**
**नेष्यते यः परस्थोऽपि स स्वयं गृह्यते कथम्॥ ५॥**

परस्थानपि दोषाननिच्छन्तस्तत्परिजिहीर्षया यतमाना मद्विधाः कविप्रवराः कथं स्वग्रन्थे दोषान् सगृह्णीयुः, अविद्यमानाश्च दोषान् कथं सूरयो गृह्णीयुः, मूर्खास्तु कामं गृह्णीयुरपीति॥ ५॥

सम्प्रति शिष्यजनमनुशास्ति—

**निर्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते।**
**सापवादा यतः केचिन्मोक्षस्वर्गावपि प्रति॥ ६॥**

यद्यपीमं ग्रन्थं दुर्जनाः कतिपये दूषयिष्यन्ति, तथापि न दोषवत्त्वं मन्तव्यम्। न हि क्वचिदपि सर्वस्य लोकस्य निर्दोषत्वसम्प्रतिपत्तिर्भवति। तथा हि—तिष्ठतु तावदन्यद्, यावत्यन्तनिर्दोषौ परमपुरुषार्थात्मकौ मोक्षस्वर्गौ, तत्रापि नास्तिकाः सापवादाः—'भीमः खल्वयमपवर्गः, बह्वत्र भद्रक लुप्यते, वर हि संसारः यत्र कियानपि तावत्सुखलेशोऽनुभूयते' इति मोक्षेऽपवाद.। तथा स्वर्गेऽपि—'किं स्वर्गेण चिरसाध्येन मरणव्यवहितेन, वरमत्रत्यमेव भोजनशय्यादिसुखम्' इति। अतो न कैश्चिद् दूषितमिति मत्वा सदोषत्व मन्तव्यमिति॥ ६॥

सम्प्रति उपेत्यापि सदोषत्वं संग्राह्य एवायं ग्रन्थ इत्याह—

**आगमप्रवणश्चाहं[1] नापवाद्यः स्खलन्नपि।**
**न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते॥ ७॥**

सन्मार्गो ह्ययं वेदानुसारः, सन्मार्गेण गामिनां च सत्यपि स्खलने नापवादो युक्तः। तेन वेदव्याख्यानात्मकस्य ग्रन्थस्य भूयिष्ठगुणस्याल्पो दोषः सन्नप्युपेक्षणीय इति॥ ७॥

किञ्च, अल्पसारा बहुदोषा यथा कथञ्चिदतिक्लेशेन समारब्धा वा वृत्तिस्त्रयीमार्गानुसारिणी चेच्छ्रद्दधानस्य शोभत एव, किं पुनरस्मादृशानामत्यन्तनिर्दोषा वाग्वृत्तिरित्याह—

**यथाकथञ्चिदारब्धा त्रयीमार्गानुसारिणी।**
**वाग्वृत्तिरल्पसारापि श्रद्दधानस्य शोभते॥ ८॥**

ननु वेदं व्याचिख्यासोस्ते किं मीमांसाव्याख्यया, वेद एवोपक्रमादारभ्य व्याख्यायताम्? अत आह—

---

१. ०श्चायम्—का०।

**मीमांसाशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते ।**
**वेदार्थज्ञानरत्ने मे तृष्णातीव विजृम्भते ॥ ९ ॥**

वेदवाक्यानि मीमासागतन्यायवशेन निरूपितानि मनोहराणि भवन्ति, नोपदेशरूपेण व्याख्यातानि, तेन मीमांसाव्याख्यायामेव तृष्णा वर्धत इति ॥ ९ ॥

ननु मीमासायाश्चिरन्तनानि भर्तृमित्रादिरचितानि व्याख्यानानि विद्यन्ते, किमनेन ? इत्यत आह—

**प्रायेणैव हि मीमांसा लोके लोकायतीकृता ।**
**तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥ १० ॥**

मीमांसा हि भर्तृमित्रादिभिरलोकायतैव सती लोकायतीकृता नित्यनिषिद्धयोरिष्टानिष्टं फलं नास्तीत्यादिबह्वपसिद्धान्तपरिग्रहेणेति तामास्तिकपथे कर्तुं वार्तिकारम्भयत्नः कृतो मयेति ॥ १० ॥

**अथातो धर्मजिज्ञासा[1] ( जै० सू० १. १. १. )**

एवं समर्थितारम्भं वार्तिकमारभमाण सूत्रतात्पर्यं तावद्दर्शयति—

**"अथातो धर्मजिज्ञासा" सूत्रमाद्यमिदं कृतम् ।**
**धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥ ११ ॥**

धर्माख्यो योऽस्य शास्त्रस्य विषय प्रतिपाद्यः तदेवास्य प्रयोजनमिति वक्तुं शास्त्रादौ इदं सूत्र कृतम् । धर्मजिज्ञासाया हि कर्तव्यतामुक्त्वा आरभ्यमाणं शास्त्रं नूनं तत्प्रतिपादनार्थमिति गम्यते, अतस्तदर्थमिदं सूत्रम् । आद्यमिति प्रयोजनाभिधानस्यावसर दर्शयति ॥ ११ ॥

किमर्थं पुनः प्रयोजनकथनमत आह—

**सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।**
**यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते ॥ १२ ॥**

सर्वस्याल्पायाससाध्यस्यापि शास्त्रस्य कर्मणो वा प्रवृत्तिसिद्धयेऽवश्य वक्तव्यमेव प्रयोजनम्, विशेषतो मीमांसाया बहुप्रयाससाध्यत्वादित्याह—

**मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता ।**
**न शुश्रूषयितुं शक्या प्रागनुक्त्वा प्रयोजनम् ॥ १३ ॥**

---

१. अथ=गुरुकुलस्थितिपूर्वकवेदाध्ययनानन्तरम् । अतः=यतोऽध्ययनस्य अर्थज्ञानं फलम् अतः । धर्मस्य=वक्ष्यमाणलक्षणस्य । जिज्ञासा=तत्साध्यो विचारः । कर्तव्य इति शेषः । इति सूत्रार्थः । (सु०) ।

मीमांसा हि व्याकरणादिशास्त्रान्तरवशेन व्युत्पन्नपदपदार्थस्य वाक्यार्थसन्देह-निवृत्त्यर्था बहूनि विद्यान्तराणि उपायभूतान्याश्रिता बह्वायाससाध्या, नास्या प्रयोजनमनुक्त्वा प्रवर्तयितु शक्यमिति ॥ १३ ॥

अपरमपि मीमांसायां विद्यान्तरेभ्यः प्रयोजनाभिधानोपयोगं दर्शयति—

**विद्यान्तरेषु नाप्येतद् यद्यभीष्टं प्रयोजनम् ।**
**अनर्थप्रापणं तावत्तेभ्यो नाशङ्क्यते क्वचित् ॥ १४ ॥**
**मीमांसायां त्विहाज्ञाते दुर्ज्ञाते वाऽविवेकतः ।**
**न्यायमार्गे महान् दोष इति यत्नोपचर्यता ॥ १५ ॥**

विद्यान्तरेष्वनुक्ते प्रयोजने यदि नाम न प्रवर्तेरन् तथाप्यल्प एव प्रत्यवायः, तेषामल्पविषयत्वात् ॥ १४ ॥

मीमांसा तु सर्ववाक्यगतन्यायनिरूपणात्मिका, तेनास्यां यो न्यायमार्गस्त-स्मिन्नज्ञाते दुर्ज्ञाते वा विवेकाभावान्न किञ्चिज्ज्ञायेत, अतो महान् दोष इति प्रयोजनदर्शनेन प्रयत्नेनोपचरितव्येति ॥ १५ ॥

उपसंहरति—

**तस्मात् प्रयोजनं पूर्वमुक्तं सूत्रकृता स्वयम् ।**

किमिति पुनः स्वयमुक्तम्, न भाष्यकारादिभिर्वक्ष्यमाण प्रतीक्षितम् ? अत आह—

**यत् स्वेनोक्तं वदेयुस्तद्[१] भाष्यकारादयः कथम् ॥ १६ ॥**

स्वयमनुक्ते प्रयोजने प्रयोजनान्तरमपि भाष्यकारादयो वदेयुरिति सम्भाव-यन् स्वोक्तमेव कथं ते वदेयुरित्येवमर्थं स्वयमुक्तवान् ॥ १६ ॥

अत्र चोदयति—

**सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।**
**शास्त्रादौ तेन वक्तव्यः[२] सम्बन्धः सप्रयोजनः ॥ १७ ॥**

ज्ञातप्रयोजनं ज्ञातसम्बन्धं च शास्त्रं श्रोतुं श्रोतारः प्रवर्तन्ते, तस्मात् प्रयोजन-वदेव सम्बन्धोऽपि शास्त्रावतारहेतुभूतः शास्त्रादावेव वक्तव्यः—अनेन सम्बन्धेनेदं शास्त्रमायातमिति । यथा शास्त्रान्तरेष्वथातो धर्मं व्याख्यास्याम इत्यादिषु शिष्य-प्रश्नानन्तर्यरूपसम्बन्धोऽभिधीयते, अन्यथा ह्यसङ्गताभिधायिता सूत्रकारस्या-शङ्क्य श्रोतारो नातीव तद्वचने श्रद्दधीरन्निति ॥ १७ ॥

---

१. तेनोक्तं गृह्णेयुस्तद्—पाठा० । २. कर्तव्यः—का० ।

परिहरति—

**शास्त्रं प्रयोजनं चैव सम्बन्धस्याश्रयावुभौ ।**
**तदुक्त्यन्तर्गतस्तस्माद् भिन्नो नोक्तः प्रयोजनात् ॥ १८ ॥**

नात्र जैमिनेः शास्त्रारम्भे शिष्यप्रश्नानन्तर्यादिरूप. सम्बन्धो हेतुः, किन्तु योऽयं पूर्वोक्तेन प्रयोजनेन सह शास्त्रस्य साध्यसाधनसम्बन्ध स एव शास्त्रारम्भ-हेतुरिति विनैव शिष्यप्रश्नादिना स्वयमेव भगवान् जैमिनिर्लोकहितार्थं धर्मज्ञान-साधनभूतं शास्त्रमारब्धवान् । स चाय सम्बन्धः सम्बन्धिनोरभिधानादेवार्था-ज्ज्ञात इति न कण्ठेनोक्तः ॥ १८ ॥

पुनश्चोदयति द्वयेन—

**सिद्धिः श्रोतृप्रवृत्तीनां सम्बन्धकथनाद् यतः ।**
**तस्मात् सर्वेषु शास्त्रेषु सम्बन्धः पूर्वमुच्यते ॥ १९ ॥**
**यावत् प्रयोजनेनास्य सम्बन्धो नाभिधीयते ।**
**असम्बद्धप्रलापित्वाद् भवेत् तावदसंगतिः ॥ २० ॥**

अर्थोक्तोऽयं सूत्रकारेण सम्बन्धो भवद्भिर्व्याख्यातृभिः कथनीय उपपादनीयः । अत एव हि शास्त्रान्तरेषु सम्बन्ध उपपाद्यते । यावद्धययं सम्बन्ध· प्रयोजनेन सह साध्यसाधनरूपो नोपपाद्यते तावदस्यानुपपत्ति मन्यमानाः श्रोतारोऽसम्बद्ध-प्रलापित्वं सूत्रकारस्य मन्यमानाः शास्त्रस्यासङ्गतिमेव मन्येरन्, अतोऽयं सम्बन्ध उपपादनीयः, सम्बन्धान्तरं वा वक्तव्यमिति ॥ १९-२० ॥

परिहरति—

**इह त्वाक्षिप्य सम्बन्धं भाष्य एवाभिधास्यते ।**
**धर्मप्रसिद्ध्यसिद्धिभ्यां, तस्मान्नान्योऽभिधीयते ॥ २१ ॥**

भाष्यकारैरेवाय सम्बन्धो धर्मप्रसिद्ध्यप्रसिद्धिभ्यामाक्षिप्य समाधास्यते, अतो नेदानीमस्माभिरुपपाद्यत, न च सम्बन्धान्तरमभिधीयते ॥ २१ ॥

केचित्तु सौत्रेणैवाथशब्देनाध्ययनक्रियानन्तर्यरूपः शास्त्रसम्बन्ध उक्त इति मन्यन्ते, तान्निराकरोति—

**न चाप्यत्राथशब्देन शास्त्रसम्बन्ध उच्यते ।**

किमिति नोच्यते ? अत आह—

**सम्बन्धं क्रिययोर्ह्येष ब्रूते शास्त्राच्च ते पृथक् ॥ २२ ॥**

अध्ययनजिज्ञासाक्रिययोर्हि सम्बन्धमथशब्दो ब्रूते, ते च क्रिये शास्त्रा-दत्यन्तभिन्ने । न हि जिज्ञासाशब्दो मीमांसापर्यायः येन शास्त्रसम्बन्ध उच्येत ।

सन्नन्तत्वसाम्यात्तु तयोरेकार्थत्वभ्रमो भवताम्। श्रोतृक्रिया हि ज्ञानेच्छा जिज्ञासा, वक्तृक्रिया तु विचारात्मिका मीमांसा, कुतस्तयोरैक्यम्। न चाध्ययनानन्तरं जैमिनिना शास्त्रं प्रणीतम्, अतो नानेन शास्त्रसम्बन्ध उच्यत इति। मा भूदानन्तर्यम्, शिष्यप्रश्नदेवताराधनरसायनादिक्रियानन्तर्यरूपो गुरुपर्वक्रमात्मको वा सम्बन्धः शास्त्रस्योच्यतामिति चेत्? तदपि तावज्जिज्ञासाशब्दस्य शास्त्रवचनत्वाभावादेवायुक्तम् ॥ २२ ॥

निष्प्रयोजनश्चायं पक्ष इत्याह—

**योऽप्ययं शास्त्रसम्बन्धो वर्ण्यते कैश्चिदादितः।**
**क्रियानन्तर्यरूपो वा गुरुपर्वक्रमोऽपि वा ॥ २३ ॥**
**सदसद्भावयोस्तस्य[1] विशेषो नोपलभ्यते।**
**श्रोतुर्विधौ निषेधे वा ज्ञाने वा शास्त्रगोचरे ॥ २४ ॥**

न ह्येवं सम्बन्धसद्भावासद्भावयोः श्रोतृणा शास्त्रश्रवणे प्रवृत्तौ निवृत्तौ वा शास्त्रगोचरे वा ज्ञाने कश्चिद्विशेषः। विधिनिषेधाभ्यां तत्कार्यभूते प्रवृत्तिनिवृत्ती लक्षयति। पर्व=अवच्छेदः, गुरुपर्वणा क्रमो गुरुपर्वक्रमः। तद्यथा—'ब्रह्मा प्रजापतये मीमांसां प्रोवाच, सोऽपीन्द्राय, सोऽप्यादित्याय, स च वसिष्ठाय, सोऽपि पराशराय, पराशरः कृष्णद्वैपायनाय, सोऽपि जैमिनये, स च स्वोपदेशानन्तरमिमं न्यायं ग्रन्थे निबद्धवान्' इति। सोऽयमेवंविधः सम्बन्धो निष्फलो निर्हेतुकश्च। न ह्यस्मिन् सम्बन्धे किञ्चित् प्रमाणमस्तीति ॥ २३-२४ ॥

उपसहरति—

**तस्माद् व्याख्याङ्गमिच्छद्भिः सहेतुः सप्रयोजनः।**
**शास्त्रावतारसम्बन्धो वाच्यो नान्यस्तु निष्फलः ॥ २५ ॥**

वेदव्याख्यात्मकस्य मीमासाशास्त्रस्याङ्गभूतं सम्बन्धमिच्छद्भिः सप्रमाणकः सप्रयोजनकश्च सम्बन्धो वाच्यः। स च पूर्वोक्त एव, अन्यस्तु निष्फलो न वाच्यः। शास्त्रमवतारयतीति शास्त्रावतारः ॥ २५ ॥

भाष्यमिदानीमनुसन्धत्ते—

**लोक इत्यादिभाष्यस्य[2] षडर्थान् सम्प्रचक्षते।**

---

१. तदतद्भाव०–मु० पा०। ( तथैव टीकायामपि )

२. लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति सम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम्, नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः, परिभाषितव्यो वा। एवं वेदवाक्यान्येव एभिर्व्याख्यायन्ते। ( शा. भा. पृ. १ )

ननु यत्रैव भाष्यं सगच्छते स एवार्थ. कथ षडर्थत्वम् ? अत आह—

**भाष्यकारानुसारेण,**

सर्वत्रैव भाष्यं सङ्गच्छत इति भाव.।

ननु सन्निधिविशेषादेतत्सूत्रगताथशब्ददूषणमेवार्थो नार्थान्तरमत आह—

**प्रयुक्तस्यादितः पृथक्**[1] ॥ २६ ॥

शास्त्रादौ प्रयुक्तमिदं भाष्यमतः सर्वव्याख्यादीनामेतदेव स्थानमिति न स्थानतो विशेषलाभः। तथापि सकृदुच्चरितस्य कथमनेकार्थत्वम् ? अत आह—**पृथगिति**। नैते समुच्चीयन्तेऽर्था., किन्तु पृथक्पृथगेतानर्थान् व्याख्यातारः प्रच-क्षते—केचिदन्यं केचिदन्यमिति। किञ्च—अनेकार्थत्वमपि पौरुषेयस्य सम्भवत्येव, श्वेतो धावतीत्यादिवत्। तदिद प्रयुक्तग्रहणेन सूचितं वेदितव्यमिति ॥ २६ ॥

तानेव षडर्थान् उपदर्शयति—

**सर्वव्याख्यांमुपालम्भं प्रत्याख्यानं तथा परे।**
**परिसंख्यास्तुती केचिथशब्दस्य दूषणम् ॥ २७ ॥**

सर्वव्याख्यां विवृणोति—

**साधारणी विशिष्टा च सूत्रव्याख्या द्विधा मता।**
**विशिष्टा प्रतिसूत्रं या सर्वार्था त्वियमुच्यते ॥ २८ ॥**

सर्वसूत्रसाधारणीयं व्याख्या "लोके' इत्यादिना क्रियते। अत्र भाष्ये 'सूत्रेषु पदानि प्रसिद्धार्थान्येवेत्यवगन्तव्यम्' इति प्रवृत्तिमुपदिश्य 'नाध्याहारादिभिरेषां कल्पनीययोऽर्थः' इति निवृत्तिरुपदिष्टा। तत्र 'एषाम्' इति सर्वनाम्ना पूर्वप्रकृत-प्रधानपरामर्शात् सूत्राणा च सप्तम्या पदविशेषणार्थत्वात् प्रधानभूताना पदानामेव परामर्शात् प्रवृतिवन्निवृत्तिरपि पदविषयेति प्रतिभाति, तथा न मन्तव्यमित्याह·—

**प्रवृत्तिस्तु पदेष्वेव निवृत्तिः सूत्रसंश्रया।**

"सति सम्भवे" इत्यस्याथमाह—

**वेदवाक्याविरुद्धेषु न तु सर्वेषु केषुचित् ॥ २९ ॥**

यदेतत्प्रसिद्धार्थग्रहणम् अध्याहारादिवर्जनञ्च तन्न सर्वेषु, किन्तु केषुचिदेव वेदवाक्याविरुद्धेष्वित्वन्वय. ॥ २९ ॥

किमिति पुनर्निवृत्तिः सूत्रसश्रयेत्यत आह—

---

१. प्रयुक्तः स्यादितः पृथक्—का०।

**अध्याहारस्य वाक्येषु व्यत्यासस्य च सम्भवात्[1]।**
**तेनैषामिति सूत्राणा [2]पारार्थ्ये सत्यपि ग्रहः ॥ ३० ॥**

प्राप्तिपूर्वको हि प्रतिषेध, न चाध्याहारव्यवहितकल्पनयोः पदे प्राप्तिः, न्यूनपदाप्रयोगात् नियतक्रमत्वाच्च प्रकृतिप्रत्यययोः। विपरिणामगुणकल्पने तु यद्यपि पदाधारे, तथापि पदानामेव सहतानां वाक्यत्वाद्वाक्याधारतापि सम्भवति। तेन निषेध्याना सर्वेषा प्राप्तिः सूत्रेष्वेव सम्भवतीति परार्थानामपि तेषामेव परामर्श इति ॥ ३० ॥

एवं साधारणव्याख्या कृत्वा किं पुनरस्याः प्रयोजनमित्याशङ्क्य भाष्यकारेणोक्तम्—"एवं वेदवाक्यान्येवैभिर्व्याख्यायन्ते" इति। अस्यायमर्थ.—एव साधारणव्याख्याया कृतायामनयैव ज्ञातार्थैः सूत्रैर्वेदवाक्यान्येव व्याख्येयान्नि भविष्यन्ति न पुनः सूत्राण्यपीति। तत्र विशेषव्याख्यानस्यापि करिष्यमाणत्वात् कथमेवशब्दः ? इत्याशङ्क्याह—

**एवशब्दोऽल्पवाच्यत्वाद्,**

अनयैव गतार्थप्रायेषु पश्चादल्पमेव वक्तव्यं भवतीति अल्पत्वादसत्त्वमुपचर्य एवशब्दः प्रयुक्त इति। इतरथेत्यादि प्रसज्येतेत्यन्तं भाष्यम्[3], तस्यार्थमाह—

**अस्यावृत्तौ तु गौरवम्।**

भाष्ये व्याख्येयानीत्यत्र प्रकृतं व्याख्यानं परामृशति—अस्येति। अस्य व्याख्यानस्य वेदे सूत्रे चावृतौ सत्या यत्नगौरव स्यादितीतरथेत्यादिना भाष्येणोक्तमिति।

अत्र चोदयति—

**प्रसिद्धत्वादवाच्यं चेत्,**

सति सम्भवे प्रसिद्धार्थग्रहणम् अध्याहारादिवर्जनञ्च प्रसिद्धमेवेति मन्दफले साधारणं व्याख्यानमिति ? परिहरति—

**न दोषः पुम्भिरायम् ॥ ३१ ॥**

प्रसिद्धवचनत्व पुंवाक्याना गुणो न दोष इति ॥ ३१ ॥

---

१. संभव.—का०।　　　　२. पदविशेषणार्थत्वे इत्यर्थः।

३. इतरथा वेदवाक्यानि व्याख्येयानि स्वपदार्थाश्च व्याख्येया इति प्रयत्नगौरवं प्रसज्येत। ( शा० भा० पृ० २ )

अथैतेनापरितोष', स्तत एवं वक्तव्यमित्याह—

**व्याख्याङ्गत्वाभिमानेन योऽध्याहाराद्यपेक्षते।**
**स्वसंज्ञां वापि तस्येदं शास्त्ररूपं निरूप्यते ॥ ३२ ॥**

शास्त्रान्तरेषु सूत्राणामध्याहारपरिभाषादिभिर्व्याख्यानं दृष्ट्वा व्याख्यानस्यै- वेदमङ्गमिति यो मन्यते तस्य, त प्रतीद शास्त्ररूपमनेन भाष्येण निरूप्यते, अध्याहारादिक नास्मिन्नपेक्ष्यत इति ॥ ३२ ॥

उपालम्भपक्ष परिगृह्णाति—

**वृत्त्यन्तरेषु केषाञ्चिल्लौकिकार्थव्यतिक्रमः।**
**शब्दानां दृश्यते तेषामुपालम्भोऽयमुच्यते ॥ ३३ ॥**

केषाञ्चिद् **भवदासादीनां** वृत्त्यन्तरेषु ॥ ३३ ॥

कीदृशः पुनरुपालम्भ इति तत्स्वय दर्शयति—

**अथात इत्ययं लोके नानन्तर्ये प्रयुज्यते।**
**तस्मात् तादर्थ्यमेतस्य परिभाषादिभिर्भवेत् ॥ ३४ ॥**

पदद्वयमर्थद्वयवाचि लोकप्रसिद्धमपि **भवदासे**नैकपदीकृत्यानन्तर्यमात्रार्थं व्याख्यातं तच्चायुक्तमित्युपालम्भ इति ॥ ३४ ॥

अत्रैव भाष्य योजयति द्वयेन—

**प्रसिद्धहानिः शब्दानामप्रसिद्धे च कल्पना।**
**न कार्या वृत्तिकारेण सति सिद्धार्थसम्भवे ॥ ३५ ॥**
**सूत्रार्थे क्लिश्यतश्चैवं[1] दूरे वेदार्थनिर्णयः।**
**तत्र यत्नस्य भारत्वं वक्तृश्रोत्रोः प्रसज्यते ॥ ३६ ॥**

प्रत्याख्यानपक्षं परिगृह्णाति—

**न व्याख्यास्यति सूत्राणि चोदनार्थपरत्वतः।**
**यत् तस्य परिहारोऽयं प्रत्याख्यानेन चोच्यते[2] ॥ ३७ ॥**

भाष्यकारो हि सूत्राणि पठित्वाऽनन्तर वेदवाक्यान्युदाहृत्य तदर्थनिर्णये यत्नं करिष्यति, न सूत्रव्याख्याने। तेनैवमाशङ्का भवति यदेतत्केवल चोदनार्थपरो भूत्वा सूत्राणि न व्याख्यास्यति तत्किमनर्थत्वादेषा, आहोस्विदर्थापरिज्ञानाद्, उताव्याख्येयत्वादिति, तत्परिहारोऽयं प्रत्याख्यानेनैवोच्यते न व्याख्येयानीति ॥ ३७ ॥

---

१. क्लिश्यते चैवं—का.। २. वोच्यते—का.।

प्रत्याख्याने कारणमाह—

**प्रयासो वेदवाक्येषु कार्यः सूत्रेष्वनेन किम् ।**

**फलवत्त्वाफलत्वाभ्याम्,**

फलवन्ति हि वेदवाक्यानि धर्मप्रमापणाद्, अतस्तेषु सफलो व्याख्याप्रयासः, सूत्रेष्वफलत्वात्किं प्रयासेनेति ।

अतस्तैरुपायभूतैश्चोदनार्थ उपेतव्यः व्याख्येय इत्याह—

**एभिः करणसम्मतैः ॥ ३८ ॥**

**चोदनार्थं उपेतव्यः,**

तदिदम् 'एव वेदवाक्यान्येव एभिर्व्याख्यायन्ते' इत्यादिना भाष्येणोक्तम् ।

अथ मा नाम केवलानि सूत्राणि व्याख्यायन्ताम्, उभयं तु किमिति नोपेयते ? इत्याह—

**नोभयं यत्नगौरवात् ।***

तदिदम् 'इतरथा' इत्यादिना भाष्येणोक्तम् ।

ननूपायभूतानि सूत्राण्यविज्ञाय कथं तैर्वेदवाक्यान्युपेतुं शक्यन्ते ? अत आह—

**पदार्थानां प्रसिद्धत्वात् व्याख्येयं नावशिष्यते ॥ ३९ ॥**

'सत्य ज्ञातव्यार्थानि सूत्राणि, न तु तान्यव्याख्यातदुर्ज्ञानानि । पदार्थास्तावल्लोकप्रसिद्धास्तत एव च वाक्यार्थोऽपि प्रसिद्ध इति न किञ्चिद्व्याख्येयमवशिष्यते तदिद 'लोके' इत्यादिनोक्तम् ॥ ३९ ॥

अस्मिश्च पक्षे सर्वथैव सूत्राणामव्याख्यानादेव यत्नगौरवशब्दौ समञ्जसावित्याह—

**एवंशब्दादिको ग्रन्थः पक्षे चास्मिन् समर्थ्यते ।**

प्रत्याख्यानपक्ष तावद् दूषयति—

**पदच्छेदाद्यभावेन प्रत्याख्यानमतिस्त्वियम् ॥ ४० ॥**

**ब्रवीत्येव हि सूत्रार्थम्,**

स्थूलदृशामेषा पदच्छेदाद्यकरणादव्याख्यानभ्रान्त्या प्रत्याख्यनमतिः । निपुणतस्तु निरूप्यमाणे ब्रवीत्येव सूत्राणां तात्पर्यतोऽर्थमिति न प्रत्याख्यानोपपत्तिः ।

किञ्च न्यूनातिरिक्तं सूत्रेष्वपेक्षते ? इत्याह—

**अतिरिक्तादि चेष्यते[1] ।**

अत्रैवोदाहरणान्याह—

**नन्वशक्त[2]मिदं सूत्रं सम्यक् सूत्रितमित्यपि ॥ ४१ ॥**
**सूत्रे चागमकत्वादि प्रत्याख्याने विरुध्यते ।**

चोदनासूत्रे 'नन्वशक्तमिदं सूत्रम्' इति न्यूनत्वं चोदयित्वा परिहरिष्यति । तथा च "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" (जै० सू० २. १. १४) इत्यत्र किमर्थमुभय सूत्रितमिति अतिरेकं चोदयित्वा, परिहृत्य, सम्यक् सूत्रितमिति वक्ष्यति । 'विशये प्रायदर्शनात्" ( जै० सू० २. ३. १६ ) इत्यत्रागमकं सूत्रमिति न्यूनता चोदयित्वा परिहारं[3] च वक्ष्यति, तदिदं सर्वं प्रत्याख्याने विरुध्येतेति ।

किञ्च, उपायभूतानि सूत्राण्यनभिज्ञाय कथ तैर्वेदवाक्यार्थो ज्ञायते, अतस्तान्यपि व्याख्येयानीत्ययुक्त प्रत्याख्यानमित्याह—

**न चोपायानभिज्ञेन[4] शक्योपेयावधारणा ॥ ४२ ॥**

मा नाम सूत्रैर्वेदार्थो ज्ञायताम्, अन्यतस्तु ज्ञास्यते ? इत्यत आह—

**नान्यतो वेदविद्भ्यश्च सूत्रवृत्तिक्रियेष्यते ।**

यत्तु ज्ञातव्य एव सत्यं सूत्रार्थः, न तु व्याख्येयः, प्रसिद्धत्वादिति, तदनुभाष्य परिहरति—

**प्रत्याख्यानस्य हेतुश्च पदार्थानां प्रसिद्धता ॥ ४३ ॥**
**योक्ता सा वेदवाक्यानां तुल्यार्थत्वान्निवारयेत् ।**

अत्राशङ्कते[5]—

**वाक्यार्थे तत्र सन्देहाद् व्याख्यानं चेत् प्रवर्तते ॥ ४४ ॥**

परिहरति—

**सूत्रेष्वपि समानत्वात् प्रत्याख्यानं न युज्यते ।**

भाष्यमपीदं नातीव प्रत्याख्याने समर्थमित्याह—

**न व्याख्यातव्यमित्येवं प्रत्याख्याने च सिध्यति ॥ ४५ ॥**
**दुष्टव्याख्या[6]निषेधेन तदपेता न वार्यते ।**

---

१. चेक्षते—का० ।  २. न त्वशक्त०—का० ।
३. न्यूनताबोध्यं परिहारं—१ पु० ।  ४. चोपेया०—मु० पा० ।
५. शङ्क्यते—२ पु० ।

प्रत्याचिख्यासुर्न व्याख्यातव्यमित्येवावक्ष्यत्, अध्याहारादिभिर्न कल्पनीयोऽर्थं इति दुष्टव्याख्याया एव निषेधाद्दोषापेता व्याख्या न वार्यत इति ।

तदेवमस्य प्रत्याख्यानपक्षस्य प्रत्यक्षदृष्टव्याख्याविरुद्धत्वात् पूर्वयोश्च सर्वव्याख्योपालम्भयोर्मन्दफलत्वेन फल्गुत्वान्मध्यमस्य चोपालम्भस्य दौर्जन्यापादकत्वाद् न्यायाभासप्राप्तवेदवाक्यान्यथाकरणनिवारणेन महाफला, अनुक्तदुर्ज्ञाता च परिसंख्यैवास्य भाष्यस्यार्थ इत्याह—

**अस्य दृष्टविरुद्धत्वात्[1] फल्गुत्वाच्चापि पर्वयोः ॥ ४६ ॥**
**मध्यमे चातिदौर्जन्यात् परिसंख्यैव युज्यते ।**

परिसख्याविषय स्वरूप चाह—

**वैदिकं जैमिनीयं च यत्र वाक्यं विरुध्यते ॥ ४७ ॥**
**यथाश्रुतगृहीतेऽर्थे तत्रेदमुपदिश्यते ।**
**अध्याहारादिभिः सूत्रं वैदिकं तु यथाश्रुतम् ॥ ४८ ॥**
**नेयम्,**

यत्र वेदसूत्रयोर्यथाश्रुतगृहीतार्थयोर्विरोधस्तत्र वेदं यथाश्रुतं व्याख्याय 'सूत्रमध्याहारादिभिर्नेयम्' इदमनेन भाष्येणोपदिश्यते इति ।

ननु सूत्रवशेन वेदान्यथाकरणमपि दृश्यते, 'वेदो वा प्रायदर्शनात्' ( जै० सू० ३. ३. २ । ) इति सूत्रे ऋगादिशब्दानां लक्षणया वेदपरत्वव्याख्यानादत आह—

**विरोधेऽन्योन्यस्य वैदिकानां भवन्तु ते ।**

नेदं सूत्रविरोधाद्वेदान्यथाकरणम्, किन्तु वैदिकेनैवोपक्रमेण विरोधात् तेन वैदिकानामेव मिथो विरोधे भवन्तु दुर्बलस्य लक्षणादयः, वेदसूत्रविरोधे तु सूत्रस्यैवान्यथाकरणमिति ।

ननु प्रधानभूतवेदविरोधे गुणभूतानां सूत्राणामन्यथाकरणं प्रसिद्धमिति मन्दफलैव परिसंख्या ? अत आह—

**यथा धर्मावबोधस्य प्रमाणं वैदिकं वचः ॥ ४९ ॥**
**तदर्थनिर्णये हेतुर्जैमिनीयं तथैव नः ।**

सत्यमेवं न्यायः, तथापि न्यायाभासात् सूत्रकारबहुमानाच्चैवं श्रोतारो भ्राम्येयुः—नास्माकं वेदसूत्रयोः कश्चिद्विशेषः; यथैव हि धर्मावबोधस्य वैदिकवाक्यं प्रमाणम् तथैव वेदार्थनिर्णये सूत्रमेवास्माकं प्रमाणमिति ।

---

१. दृष्टविरु०—मु० पा० । २. व्याख्येयं च—का. ।

न चान्योऽपि कश्चिद्वेदसूत्रयोर्विशेषः, येन सूत्राणामध्याहारादिकं युज्येत न वेदानाम्, अतः सर्वत्र वेदे सूत्रे चाध्याहारादिनिर्मुक्तैव व्याख्या युज्यते ? इत्याह—

**वाक्यसामर्थ्यतुल्यत्वात् तथा पदतदर्थयोः ॥ ५० ॥**
**अध्याहारादिभिर्मुक्ता व्याख्या सर्वत्र युज्यते ।**

ननु यत्रोभयोर्यथाश्रुतग्रहणासम्भवस्तत्र गुणत्वात् सूत्राणामेवान्यथाकरणमत आह—

**असम्भवादवश्यं या विरोधेऽन्यतरस्य तु ॥ ५१ ॥**
**अन्याय्यकल्पना[1] सापि विकल्पेन प्रसज्यते ।**

येयमुभयोर्यथाश्रुतार्थासम्भवेनान्यतरस्यान्याय्यकल्पना, साप्यगृह्यमाणविशेषत्वादुभयोर्विकल्पेनैव प्रसज्यत इति ।

अथ वा सूत्राणि वेदार्थज्ञानोपायत्वात् प्रथमोपनिपातीन्यसञ्जातविरोधित्वाद् यथाश्रुतानि गृहीत्वा तद्वशेन चोदनामेव न्याय्यामबाध्यां बाधेत, अतस्तन्निवृत्तयेऽर्थवत्येव परिसङ्ख्येत्याह—

**प्राथम्येनावरुद्धत्वादुपायवशतोऽथ[2] वा ॥ ५२ ॥**
**यथाश्रुतेन सूत्रेण न्याय्यां बाधेत चोदनाम् ।**

अत्रैव भाष्यं योजयति—

**तेन वेदाविरुद्धस्य[3] सति सम्भव इत्ययम् ॥ ५३ ॥**
**विधीयतेऽर्थः, शेषं तु यथाप्राप्तमनूद्यते ।**

यदेतत्प्रसिद्धार्थग्रहणमध्याहारपरिभाषादिवर्जनं च यत्नगौरवभयादाश्रयणीयं प्राप्तमित्यनूद्य, तत्सर्वं वेदाविरोधसम्भवे सति नासतीत्ययमर्थो भाष्येण विधीयते। वेदग्रहणं न्यायस्याप्युपलक्षणार्थम् । सति सम्भवे कर्तव्यमित्येवं विधिरूपस्य वाक्यस्य असति सम्भवे नेत्येवं निषेधपरत्वात् परिसंख्यात्वमिति ।

क्व पुनरसम्भवादध्याहाराद्याश्रितमिति तदुदाहरणानि दर्शयन् अध्याहारोदाहरणं तावदाह—

**शेषभाजां भवेल्लोप इत्यध्याहारकल्पना ॥ ५४ ॥**

दर्शपूर्णमासयोः प्रधानार्थस्यावदानस्य नाशदोषापहारेषु सत्सु शेषादवदानं

---

१. अन्यायकल्पना—का. ।
२. वशगो०—का. ।
३. वेदाविरोधस्य—का. ।

पूर्वपक्षीकृत्य हविरन्तरोत्पादने सिद्धान्तिते शेषकार्यार्थं गृहीतस्यावदानस्य नाशादौ सति किं कर्तव्यमित्यपेक्षायां सूत्रम्—'अपि वा शेषभाजां स्यात्' ( जै० सू० ६. ४. ३ ) इति। अत्र किं स्यादित्यस्यानिर्देशाद् अनन्तरोक्तं हविरन्तरोत्पादन सम्बध्यते। तच्चायुक्तम्। न हि प्रतिपत्तिर्द्रव्यं प्रयुङ्क्ते। अथ तद्व्यावृत्तिसमर्थादपिवाशब्दात् तत्रत्यपूर्वपक्षोक्तं शेषावदानं सम्बध्यते ? तदप्ययुक्तम्, शेषस्य प्रतिपत्त्यन्तरगृहीतस्य नष्टावयवपूर्वप्रतिपत्तिसम्बन्धाभावात्। तस्माल्लोप एवास्या दशायां युज्यते इति नोपपदाध्याहारः कल्पयिष्यते ॥ ५४ ॥

विपरिणाममुदाहरति—

**विप्रकर्षात् पशोश्चेति विभक्तिः परिणम्यते।**

ज्योतिष्टोमे सौत्येऽहनि सवनीयः पशु सवनीयाश्च पुरोडाशाः। तत्र पशुतन्त्रस्य पुरोडाशेषु प्रसङ्गार्थं पशुतन्त्रमध्ये पुरोडाशाना विधानं प्रतिपादयितुं सूत्रम्—'पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात्' ( जै० सू० १२. २. ३२ ) इति। अत्र तन्त्रमध्ये विधानं साध्यत्वात् प्रथमार्हं न पञ्चम्यर्हमिति पञ्चमी प्रथमया विपरिणम्यते। तथा विप्रकर्षोऽपि वपायाः प्रात सवन इत्यादिप्रत्यक्षवचनसिद्धत्वाद्धेतुत्वेन पञ्चमीमर्हति न प्रथमामिति पञ्चम्या विपरिणम्यते। तदयमर्थः— पशोश्च विप्रकर्षात् तन्त्रमध्ये पुरोडाशाना विधानमिति।

अथ वा व्यवहितकल्पनामुदाहरन् पदव्यवधि तावदुदाहरति—

**पदेन व्यवधानं तु लोके संनियमाविति ॥ ५५ ॥**

लौकिकवाक्यवद्वैदिकवाक्यमपि पौरुषेयमित्युक्ते वैषम्यप्रदर्शनार्थं सूत्रम्— 'लोके सन्नियमात् प्रयोगसन्निकर्षः स्यात्' ( जै० सू० १. १. २६ ) इति। अत्र लोक इत्यस्य पदस्य सन्नियमप्रयोगपदव्यवहितेन सन्निकर्षपदेन सम्बन्धः। लोके चक्षुरादिसन्निकर्षादर्थस्य तद्विषयः शब्दप्रयोगः सन्नियम उपपद्यते, न तु वेदे; अतीन्द्रियार्थत्वादर्थस्येति। तदिदं विपरिणामोदाहरणमपि सम्भवत्तस्योदाहृतत्वाद् व्यवहितकल्पनाया एवोदाहरणमिति ॥ ५५ ॥

सूत्रव्यवधिमुदाहरति—

**सूत्रेण व्यवधानं तु पानव्यापदि कल्पितम्।**

अश्वप्रतिग्रहेष्टिर्लौकिके अश्वप्रतिग्रहे वैदिके बेति संशये "दोषात्त्विष्टिर्लौकिके स्यात्" ( जै० सू० ३. ४. ३४ ) इति। पूर्वपक्षमुक्त्वा "अर्थवादो वानुपपातात् तस्माद्यज्ञे प्रतीयेत" ( जै० सू० ३. ४. ३५ ) इति सिद्धान्तितम्। ततः सौमेन्द्रं चरुं निर्वपेदिति सोमपानव्यापदि विहितश्चरुर्लौकिके वैदिके वेति संशये 'पान-

व्यापच्च तद्वत्' (जै० सू० ३. ४. ३८) इति सूत्रम् । तत्र सूत्रत्रयव्यवहितो लौकिकपक्षस्तद्वदिति प्रत्यवमृश्यते इति ।

सूत्रान्यथाकरणमुदाहरति—

**पशुसामान्यविध्यादौ सूत्रमेवान्यथा कृतम् ॥ ५६ ॥**

ज्योतिष्टोमे पशुधर्मविधिः किं त्रयाणामपि पशूना साधारणः, अथ वा सवनीयस्यैव, अथ वा अग्नीषोमीयसवनीययोः, उताग्नीषोमीयस्यैवेति संशये 'तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात्' (जै० सू० ३. ६. १८) इति सूत्रम् । तदिदं सर्वपशूना समानो विधिरित्यस्याद्यपक्षस्य प्रतिपादकमपि 'स तु स्थानाच्च पूर्वस्य' ( जै० सू० ३, ६, १९ ) इत्यादिसूत्रासङ्गतिप्रसङ्गात् तत्सङ्गतिसिद्धयर्थमाद्यपक्षमुत्सूत्र कृत्वा[1] सवनीयस्येत्यस्मिन् पक्षेऽन्यथा कृत्वा योजितम्—तुल्यः सर्वेषा पशुविधिः स्याद्, यदि प्रकरणविशेषो भवेत्, अस्ति तु प्रकरणविशेष इति ॥ ५६ ॥

वाक्यभेदमुदाहरति पादत्रयेण—

**अग्नयश्च • स्वकालत्वाद् देयधर्मापयातनम्[2] ।**
**व्याख्यानं वाक्यभेदेन,**

'ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात्' ( जै० सू० ३. ७. ३९ ) । इत्येतत्सूत्र वाक्यभेदमाश्रित्याधिकरणान्तरं व्याख्यातम् । तथा 'अभ्युदये दोहापनयः स्वधर्मा स्यात् प्रवृत्तत्वात्' 'शृतोपदेशाच्च' ( जै० सू० ९. ४. ४१-४२ ) इति सूत्रद्वयेनाभ्युदितेष्टौ दधिशृतयोर्देयस्वधर्माः कर्तव्या इत्युक्त्वा 'अपनयो वार्थान्तरे विधानात् चरुपयोवत्', 'लक्षणार्था शृतश्रुतिः' ( जै० सू० ९. ४. ४३-४४ ) इति सूत्रद्वयेन देयधर्माणामपयातनमुक्तम् । तदिद पूर्वयोः सूत्रयोरनयोश्च वाक्यैकभावनैकाधिकरण्यादभ्युदितेष्ट्यामेव देयधर्मापयातनमुच्यत इति प्रतिभासमानमपि ततो भित्त्वा अधिकरणान्तर पशुकामेष्टिविषयं व्याख्यातम् ।

गुणकल्पनायामुदाहरणानि दर्शयति सपादेन—

**गुणकल्पास्त्वमी कृताः ॥ ५७ ॥**

**औत्पत्तिकस्तु गव्यस्य तथोष्णिक्ककुभोरिति ।**
**दर्शनाच्च विशेषस्य तथाभ्युदय इत्यपि ॥ ५८ ॥**

औत्पत्तिकसूत्रे लक्षणयोत्पत्तिशब्देन स्वभावाभिधानम् । "गव्यस्य च तदादिषु" (जै० सू० ८. १. १८) इत्यत्र गव्यशब्देन गोविकारतदवयववाचिना 'गावो

१. ०मुत्सृज्य सूत्रं कृत्वा—२ पु० ।        २. ०धर्मावपातनम्—२ पु० ।

वा एतत् सत्रमासत' इत्यर्थवादोदितगोसम्बन्धमात्रेण गवामयनस्याभिधानम् । तदयमर्थः—गवामयनस्य विध्यन्त संवत्सरसत्रेष्वतिदिश्यत इति । तथा सामिधेनीविवृद्धावागम्यमानानाम् ऋचा सर्वासाम् "समिध्यमानवती समिद्धवती चान्तरा निवेश" (जै० सू० ५. ३. ४) इति पूर्वपक्षमुक्त्वा, 'या एव धाय्याशब्दितास्तासामेव तत्र निवेशो नान्यासामागन्तूनामन्ते निवेश' इति सिद्धान्तमुक्त्वा तल्लिङ्गमिदमुच्यते—'उष्णिक्ककुभोश्चान्ते दर्शनात्' (जै० सू० ५. ३. ६) इति । अत्रोष्णिक्ककुप्शब्देन 'त्रिष्टुभो वा एतद्वीर्यं यदुष्णिक्ककुभौ' इत्यर्थवादात् कारणे कार्यवदुपचारात् त्रिष्टुबुच्यते । तदेष सूत्रार्थः—त्रैधातव्यायामधाय्याशब्दिता 'अग्ने त्री ते वाजिना त्री षधस्था' इति त्रिष्टुबन्ते दृश्यते—त्रिष्टुभा परिदधातीति । तस्मादधाय्याशब्दितानामन्ते निवेश इति । तथा दर्शनाच्च विशेषस्य तथाभ्युदये इत्यत्र अभ्युदयशब्देनाभ्युदयसाधनभूतो द्वादशाहो लक्ष्यते । तदयमर्थः—द्वादशाहे अर्द्धिनः, पादिनः, तृतीयिन इति समाख्याविशेषदर्शनात् तदनुरूपः प्रकृते दक्षिणाविभागः सर्वर्त्विजा न समो न प्रयासानुरूप इति ॥ ५८ ॥

स्तुतिपक्षमिदानी परिगृह्णाति—

**सूत्रकारप्रशंसा वा लोक इत्यादिनोच्यते ।**

कीदृशी पुनः प्रशसेति ? तां दर्शयन् भाष्यं योजयति—

**प्रसिद्धैरभिधानाद्धि न शिष्याः क्लेशिता यतः ॥ ५९ ॥**

उपयोगमान्द्यात् स्तुतिपक्षमनादृत्य सम्प्रत्यथशब्ददूषणपक्षं परिगृह्णाति—

**भवितव्यं तु तेनेति प्रागस्मादेकवाक्यता ।**
**वेदाध्ययनवाक्याद्वा तेनाथेत्यस्य दूषणम् ॥ ६० ॥**

"भवितव्यं तु तेन" इत्यतः, 'तत्तु वेदाध्ययनम्' इत्यतो वा प्रागेकवाक्यभूतेन 'लोके' इत्यादिना भाष्येणाथशब्ददूषणमुच्यत इति ॥ ६० ॥

प्रथमावधिना भाष्यं योजयति—

**प्रसिद्धार्थपदैः शक्यः सूत्रैर्वेदार्थनिर्णयः ।**
**न च सोऽस्त्यथशब्दस्य विना ते पूर्वकर्मणा ॥ ६१ ॥**

परावधिना योजयति—

**प्रसिद्धार्थं पदं युक्तं तच्च नास्तीति दूषणम् ।**

"भवितव्यं तु तेन" इत्यस्यार्थकथनं **प्रसिद्धार्थं पदं युक्त**मिति। **तच्च नास्तीति** चाभिप्रायपूरणमिति ।

अत्र चोदयति—

**प्रसिद्धोऽप्यथशब्दादेः किंपदार्थोऽत्र वर्ण्यते ॥ ६२ ॥**

सर्वव्याख्यादिषु पञ्चस्वपि पक्षेषु प्रसिद्धार्थग्रहणस्योक्तत्वात् अथशब्दादीनां पदार्थकथन किमर्थमिति ॥ ६२ ॥

परिहरति—

[1]**प्रदर्शनार्थमित्येके,**

परिहारान्तरमाह—

**केचिन्नानार्थवाचिनः ।**

**समुदायादवच्छिद्य भवदासेन कल्पितात् ॥ ६३ ॥**

**शक्तितोऽवयवं चैव वर्णयन्त्यष्टमादिवत् ।**

नानार्थमपि पदद्वयमेकीकृत्यानन्तर्यमात्रार्थतया **भवदासेन** कल्पितं पृथक्कृत्यावयवस्यैवाथशब्दस्याष्टमाद्याथशब्दवदानन्तर्यार्थत्व स्वयुक्त्या वर्णयितुं पदार्थकथनमिति ।

परिहारान्तरमाह—

**न चात्र चोदनाव्याख्या गौरवं तत्र चोदितम् ॥ ६४ ॥**

उभयव्याख्यायां हि यत्नगौरवम् । न चात्र चोदना काचिदपि व्याख्यायते, सूत्रमपि चेन्न व्याख्यायेत निर्विषयमेव भाष्यं स्यादिति ॥ ६४ ॥

परिहारान्तरमाह—

**यद्वाऽऽक्षेपो यथोक्तस्य वृत्ताभावादसम्भवात् ।**

यत् प्रसिद्धार्थग्रहण तदेव "तत्र लोके[2]" इत्यादिना भाष्येणाथशब्दस्य वृत्ताभावेनानन्तर्यार्थत्वासम्भवेनाक्षिप्यते । कृते चाक्षेपे तत्समाधानाय युक्तमेव पदार्थकथनमिति ।

आक्षेपभाष्यं 'तत्र लोके' इत्यादिकं व्याचष्टे—

**यदि लोकप्रसिद्धार्थग्रहणं क्रियते पदे ॥ ६५ ॥**

**स नास्त्यथशब्दस्येत्यध्याहारादिकल्पनम् ।**

परिहारान्तरमाह—

**वेदाध्ययनवृत्तत्वं स्नानस्योत्कर्षकल्पना ॥ ६६ ॥**

**नाव्याख्यातेऽथशब्दार्थे ज्ञायते तेन वर्ण्यते ।**

---

१. दृष्टान्तार्थमित्यर्थः ।

२. तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः, न चेह किञ्चिद् वृत्तमुपलभ्यते, भवितव्यं तु तेन, यस्मिन् सति अनन्तरं धर्मजिज्ञासाऽवकल्पते । तथा हि यः प्रसिद्धपदार्थकः स कल्पितो भवति, तत्तु वेदाध्ययनम्, तस्मिन् हि सति सावकल्पते । ( शा० भा० पृ. २ )

नेदमथशब्दव्याख्यानं तत्स्वरूपपरम्, किन्तु अथशब्दव्याख्याने सति चोद्य-परिहारक्रमेण वेदाध्ययनवृत्तत्वं स्नानस्योत्कर्षकल्पना च वक्तव्या भवति, तदर्थमिदं व्याख्यानम् । अव्याख्याते ह्यथशब्दे विवक्षितमपि तदसङ्गतत्वान्न वक्तुं शक्येतेति । अत्र पञ्चसु पक्षेषु यत्नगौरवपर्यन्तं पृथग् वाक्यम् । 'तत्र लोके' इत्यादि तु वाक्यान्तरम् अथशब्ददूषणार्थम्, तस्य चावधिद्वयं पूर्ववद् द्रष्टव्यम् ।

तत्र 'भवितव्यम्' इत्यादेः पूर्वेण दूषणग्रन्थेनैकवाक्यभूतस्य योऽर्थः स व्याख्यातः । प्रथमावधिपक्षे तु 'भवितव्यम्' इत्यादिः परिहारग्रन्थः । तस्यार्थमाह—

**अनर्थकेऽथ वान्यार्थे प्रसिद्धिर्बाध्यते ध्रुवम् ॥ ६७ ॥**
**तस्माच्छ्रुतार्थसिद्ध्यर्थं वृत्तं किमपि गम्यते ।**

अथशब्दस्यानर्थक्ये, अर्थान्तरवाचित्वे वा प्रसिद्धिबाधादानन्तर्यार्थत्वे स्थिते तद्बलेनैव किमप्युपपादक कल्पनीयमिति सामान्योत्तरम्, तत्तु वेदाध्ययनमिति विशेषो दर्शितः । यदा तु भवितव्यमिति दूषणभाष्यम्, तदा तु वेदाध्ययनमित्येवोत्तरमिति ।

अपरमपि "अन्यस्यापि[1]" इति चोद्यभाष्यम्, तदयुक्तम्; धर्मजिज्ञासात्मकलिङ्गबलेनैव वेदाध्ययनस्यैव लिङ्गिनो वृत्तत्वनिर्णयादत आह—

**विशिष्टलिङ्गविज्ञानाद् विशिष्टे लिङ्गिनीक्षिते ॥ ६८ ॥**
**सूत्रेणासम्भवं मत्वा नैतदित्यब्रवीत् परः ।**

सत्यमेवम्; तथापि सूत्रेणास्यार्थस्यासम्भवं मत्वा चोदितवानिति ।

एतदेव विवदितुं पृच्छति—

**आनन्तर्योपदेशेन तद्दृष्टार्थतयापि च ॥ ६९ ॥**
**वेदाध्ययनमाक्षिप्तं किमसूत्रितचोदना ।**

सूत्रेणैवानन्तर्योपदेशात्तस्य च दृष्टार्थत्वाद् वेदाध्ययनमाक्षिप्तमेवेति असूत्रितत्वोपालम्भो न युक्त इति ।

यथा च दृष्टार्थतया वेदाध्ययनाक्षेपः, तथा दर्शयति—

**येन वृत्तेन जिज्ञासा विना नैवोपपद्यते ॥ ७० ॥**
**तदानन्तर्यमुक्तं हि दृष्टार्थमवकल्पते ।**

यथा चानन्तर्योपदेशेन तदाक्षेपः, तथा तमुपदर्शयति—

**क्रियमाणा च जिज्ञासा नियमाद् यस्य कस्यचित् ॥ ७१ ॥**
**क्रियेतानन्तरैवेति व्यर्थं तदुपदेशनम् ।**

---

१. नैतदेवम् । अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा युक्ता प्रागपि च वेदाध्ययनात् । ( शा० भा० पृ० ३ )

यत्किञ्चिदानन्तर्यं तावद्धर्मजिज्ञासायाः स्वभावत्वादनुपदेश्यम्, अतस्तदुपदेशे तावत् क्रियाविशेषानन्तर्यमेव विवक्षितमिति निश्चिते दृष्टार्थतया वेदाध्ययनान्तर्यं निश्चीयत इति ।

ननु सङ्कल्पोऽपि दृष्टोपकार्येव तदानन्तर्यमिदं कस्मान्न भवति ? अत आह—

**सङ्कल्पादिभिरप्येषा विना सत्यं न सिध्यति ॥ ७२ ॥**
**साधारण्यात्तु तेऽप्यत्र नोपदेश्याः कथञ्चन ।**

सर्वक्रियासाधारणत्वात्ते नोपदेश्या इति । उपसहरति—

**तस्माद् धर्मबुभुत्सायामसाधारणकारणम् ॥ ७३ ॥**
**निर्वृत्तं सूत्रकारेष्टं तच्च नाध्ययनादृते ।**

अपरमपि "प्रागपि च वेदाध्ययनात्" इति चोद्यभाष्यम्, तदाक्षिपति—

**अन्यस्यापीत्यनेनैव वेदपाठे प्रबाधिते ॥ ७४ ॥**
**प्रागपीति हि वक्तव्यं तत्राप्यन्यस्य सम्भवात् ।**

यदेव ह्यन्यस्यापीति वेदाध्ययनमतन्त्रीकृतम्, तदैवाविशेण प्रागपि प्रसक्तिरुक्तैवेति । **प्रागपीति** पुनरुक्तमिति । तथा 'न शिष्म' इत्यादि[1] परिहारभाष्यं च 'तत्तु वेदाध्ययनम्' इत्यनेन पुनरुक्तमित्याह—

**पूर्वेणैव हि लब्धार्थे तादृशीं त्वित्यनेन किम् ॥ ७५ ॥**

तत्रापि हि "तस्मिन् सति सावकल्पते" इति जिज्ञासानुपपत्त्यैव वेदाध्ययनाक्षेप उक्तः, अत्रापि वेदाध्ययनमन्तरेण न सम्भवतीति तावन्मात्रमेवोच्यते, अतः पुनरुक्तमिति । एवमाक्षेपे सति चोद्य तावत् समाधत्ते—

**वक्ष्यमाणमनालोच्य सम्भवेत् परिचोदना ।**

एतदेव विवृणोति द्वयेन—

**न तावत् साध्यतेऽद्यापि चोदना धर्मसाधनम् ॥ ७६ ॥**
**इह वा कानि वाक्यानि विवरिष्यति जैमिनिः ।**
**धर्ममात्राभिधानाद्धि बुद्धादिवचनान्यपि ॥ ७७ ॥**
**पठित्वा धर्मजिज्ञासेत्यन्यस्यापीति चोदना ।**

न हि यद्यपि वेदार्थ एव धर्म इति ज्ञातम्, नापि वेदवाक्यान्येव जैमिनिर्विचारयिष्यतीति एतदपि ज्ञायते, धर्ममात्र तु श्रुत्वा चैत्यवन्दनादीनामपि धर्मत्व भगवांश्चोदितवान्, अन्यस्यापि बुद्धवाक्याध्ययनादेरनन्तर धर्मजिज्ञासा युक्तेति नैकान्ततो वेदाध्ययनानन्तर्यं तस्या इति । अत्र च पक्षे "प्रागपि च वेदाध्ययनात्"

१. तदानीं त्वित्यादि—२ पु. ।

इति भाष्यं भिन्नक्रम योजनीयम्। अपि च प्राग्वेदाध्ययनात् धर्मजिज्ञासा कर्त्तव्या, अतो नाध्ययनानन्तर्यं तस्या इति। तथा हि—हानोपादानार्थं जिज्ञासा प्रागेव हानोपादानाभ्या कर्त्तव्या, अतो धर्मं जिज्ञासित्वा 'वेदार्थ एव धर्मः' इति ज्ञात्वा पश्चाद्धर्मावबोधाय वेदोऽध्येय इति वक्ष्यमाणालोचनेऽपि सम्भवत्येव चोद्यमित्याह चतुर्भिः—

**यद्वा भवतु नामेदृक् सूत्रं वेदमधीत्य तु ॥ ७८ ॥**
**जिज्ञासानन्तरं कार्येत्यत्रापि द्वयमीप्सितम्।**
**नानधीत्य न चाप्यन्यत् कृत्वेत्येतन्न लभ्यते ॥ ७९ ॥**
**वक्ष्यमाणवचोभङ्ग्योर्वाक्यभेदप्रसङ्गतः।**
**अधीत्यैवेति हि विधौ स्नानादेरप्यनन्तरा ॥ ८० ॥**
**भवेद् धर्मस्य जिज्ञासा नानन्तर्यविधिस्तदा।**
**आनन्तर्यविधाने तु या वेदाध्ययने कृते ॥ ८१ ॥**
**इत्येवमनुवादत्वात् प्रागप्येषा प्रसज्यते।**

वेदमधीत्य 'अथातो धर्मजिज्ञासा' इतीदृशम् इद सूत्रमङ्गीकृत्यैव चोद्यम्। अत्र हि द्वयमीप्सितम्—अधीत्यैव नानधीत्येति, तथा अनन्तरमेव नान्यत्कृत्वेति। तच्चैकस्मिन् वाक्ये न लभ्यते वेद नानधीत्येत्येकस्या विधीयतेऽनूद्यानन्तर्यम्, विपरीतमन्यस्यामिति वक्ष्यमाणभाष्योक्तवचोभङ्गिद्वयप्रसङ्गेन वाक्यभेदप्रसङ्गात्। अत एकस्मिन्नेव विधातव्ये यद्यधीत्यैवेति विधीयते तत्रेदं चोद्यम्। अन्यस्यापि स्नानादेरनन्तरं धर्मजिज्ञासा युक्ता। न हि तदानीमानन्तर्यस्य विधिरिति। अथ त्वनन्तरमेवेति विधिः, ततो या वेदमधीत्य जिज्ञासेत्येवमध्ययनपश्चाद्भाविनी जिज्ञासामनूद्य तस्या एवानन्तर्यं विधीयते। ततश्च प्राग्वेदाध्ययनाद् धर्मजिज्ञासा न केनचिद्वारितेति प्रागपि वेदाध्ययनात् स्यादिति चोद्यम्।

एवं चोद्याभिप्राय व्याख्याय "तादृशी तु[1]" इत्यादि परिहाराभिप्रायमाह—

**बुद्धवाक्यादिपाठस्य तादृशी त्वित्यपाक्रिया ॥ ८२ ॥**

यत्तावद् वक्ष्यमाणानालोचनेनान्यस्यापि बुद्धवाक्यादिपाठस्यानन्तरं धर्मजिज्ञासेति चोद्यम्, तस्य तादृशीमित्यनेन 'वेदवाक्यानामनेकविधो विचार इह वर्त्तितव्यः' इति वक्ष्यमाणप्रदर्शनेनोत्तरम्। यदपि हानोपादानार्थं जिज्ञासा प्रागेवाध्ययनात् कर्त्तव्येति चोद्यम्, तस्याप्येतदेवोत्तरम्। अनेकविधवेदवाक्यविचारार्था

---

१. तादृशी तु धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः, या वेदाध्ययनमन्तरेण न सम्भवति। कथम्? वेदवाक्यानामनेकविधो विचार इह वर्तिष्यते। (शा० भा० पृ० ४)

जिज्ञासा न प्रागध्ययनात् सम्भवतीति । नन्वनवगते वेदार्थस्य धर्मत्वे कथं तदर्थं वेदाध्ययने प्रवर्त्तन्ते ? हितकारिभि. पित्रादिभि. प्रवर्त्तिता. प्रवर्त्तन्त इत्यदोषः । यदपि वचोव्यक्तिद्वयासम्भवादन्यतरग्रहणे वेतरस्याविधानाच्चोद्यम्, तत्रानन्तर्य-विधान परिगृह्णीता तत्परिग्रहाच्चान्यस्यापीति चोद्य नावतरति ।

यत्तु तथा सत्यधीत्यैवेत्यविधानात् प्रागपि स्यादिति चोद्यम्, तस्यापि तादृशी-मित्येतदेवोत्तरमित्याह—

**प्रागपीति च चोद्यस्य,**

कथमित्याह—

**सामर्थ्याद् वेदलाभतः ।**

वेदवाक्यविचारो हि नानधीतवेदस्य सम्भवति, अत· सामर्थ्यसिद्धत्वा-दध्ययनस्याधीत्यैवेत्यविधावपि न प्राक् प्रसक्तिः ।

अत्रापरम् "अपि च[1]" इत्यादि भाष्यम्, तस्यार्थमाह—

**नैवैतयोर्वचोभङ्ग्योरेकोऽप्यर्थो विधीयते ॥ ८३ ॥**

**अपि चेत्यादिकेनोक्तम्,**

एते वचोव्यक्ती तयोरेकोऽपि श्रौतोऽर्थो न विधीयते । तदिदम् अपि चेत्या-दिना वक्ष्यतीत्यन्तेन भाष्येणोक्तमिति । किं तर्हि विधीयते ? तत्राह—

**किन्त्वित्येतद्विधीयते ।**

"किं त्वधीते वेदे[2]" इत्यादिना "एवमर्थ उपदेशः" इत्यन्तेनोक्तं गुरुकुल-वासावसानस्य स्मार्त्तस्य निवारणमस्मिन् सूत्रे विधीयत इति ।

अस्मिँश्च वाक्ये केचिदध्याहारन्तीत्याह—

**आनन्तर्यं परस्ताच्च नापि शिष्म इतीह तु ॥ ८४ ॥**

**केचिदध्याहरन्ति,**

---

१. अपि च नैव वयमिह वेदाध्ययनात् पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः, परस्ता-च्चानन्तर्यम् । न ह्येतदेकं वाक्यं पुरस्ताच्च वेदाध्ययनाद् धर्मजिज्ञासा प्रतिषेध-यिष्यति, परस्ताच्चानन्तर्यं प्रकरिष्यति, भिद्येत हि तथा वाक्यम् । अन्या हि वचनव्यक्तिरस्य पुरस्ताद् वेदाध्ययनाद्धर्मजिज्ञासा प्रतिषेधेत, अन्या च परस्ता-दानन्तर्यमुपदिशेत, वेदमधीत्येत्येकस्या विधीयते अनूद्यानन्तर्यं विपरीतमन्यस्याम् । अर्थैकत्वाच्चैकवाक्यता वक्ष्यति । ( शा० भा० पृ. ४ )

२. किं ( च ) तु अधीते वेदे द्वयमापतति—गुरुकुलाच्च समावर्तितव्य, वेदवाक्यानि च विचारयितव्यानि । तत्र गुरुकुलान्मा समावर्तिष्ट, कथं तु वेदवाक्यानि विचारये-दित्येवमर्थोऽयमुपदेशः । ( शा० भा० पृ. ६ )

"नैव वयमिह वेदाध्ययनात् पूर्वं धर्मजिज्ञासाया प्रतिषेध शिष्म" इत्यस्यानन्तरम् "नापि परस्तादानन्तर्यं शिष्म" इत्यध्याहरन्ति ।

अध्याहारे कारणमाह—

**अस्य सूत्रस्यान्यपरत्वतः ।**

गुरुकुलवासनिवृत्तिव्यावृत्तिपरत्वात् सूत्रस्य तत्परत्वमेव कुतः, कथं चेद सूत्रं गुरुकुलनिवासनिवृत्तिव्यावृत्ति दर्शयति, न हि तदनुरूपाणि सूत्रे पदानि ? इत्यत आह—

**न वार्यतेऽनधीतत्वं नानन्तर्यं विधीयते ॥ ८५ ॥**

**सामर्थ्यासिद्धयदृष्टार्थप्रसङ्गात् तेन लक्षणा ।**

न तावदधीत्यैवेत्येतद्विधातव्यं सामर्थ्यसिद्धत्वादित्युक्तम् आनन्तर्यस्वरूपमप्यदृष्टार्थत्वान्न विधेयम्, न हि न्यायशास्त्रे युक्तमदृष्टार्थविधानम् । अतोऽन्यपरत्वमेव, लक्षणया च तत्परत्वं सिद्धयतीति ।

तमिममध्याहारपक्ष दूषयति—

**आनन्तर्यवचोव्यक्तिराश्रितैवात्र लक्ष्यते ॥ ८६ ॥**

भाष्ये तावदानन्तर्यवचनव्यक्तिरत्राश्रितैव निषेधस्य श्रुतत्वाद् गम्यते ॥८६॥

न चैवमदृष्टार्थत्वमित्याह—

**श्रुतार्थं त्वपरित्यज्य[1] लक्षणार्थो विधीयते ।**

एतदुक्तं भवति—श्रुतार्थद्वारा हि लक्षणा अजहत्स्वार्था । तस्मादानन्तर्यवचनव्यक्तिमाश्रित्यैव श्रौततदर्थपरिग्रहे सत्यदृष्टार्थत्वापाताल्लक्षणागम्यो गुरुकुलवासनिवृत्तिव्यावृत्तिरूपोऽर्थो विधीयत इति ।

केन पुनः सम्बन्धेन तद्व्यावृत्तिर्लक्ष्यते ? अत आह—

**प्रतीता धर्मजिज्ञासा वेदाध्यायादनन्तरा ॥ ८७ ॥**

**तत्कालस्यावरुद्धत्वात् स्नानाभावं हि लक्षयेत् ।**

स्नानजिज्ञासे हि मिथो विरुद्धे । स्नानशब्देन ह्यत्र सकलब्रह्मचारिधर्मनिवृत्तिर्लक्ष्यते, अतो गुरुकुलवासस्यापि निवृत्तिः स्यात्, सा च विचारविरोधिनी । विचारस्याप्यध्ययनवद् गुर्वधीनत्वादविरोधिसत्ता च विरोध्यन्तराभावव्याप्ता, तेनाध्ययनानन्तरकाले जिज्ञासा प्रतीता सती तस्य कालस्य स्वेनावरुद्धत्वात् स्वविरुद्धस्य स्नानस्याभावं लक्षयतीति ।

ननु विरोधे सति लक्षयेन्न त्वत्रास्ति विरोधः, पर्यायेणोभयसम्भवात् ? अत आह—

---

१. तु परित्यज्य—का० ।

**विरोधो युगपत्प्राप्तेः,**

सत्यं पर्याये न विरोधः, युगपत्तु प्राप्तौ विरोधोऽस्ति। स्नानं हि वेदाध्ययनानन्तरमेव प्राप्तम्, धर्मजिज्ञासापि अथशब्देन तस्मिन्नेव काले प्रतीयमाना तेन विरुध्यते। ननु सत्यपि विरोधे वाचिकत्वेन स्नानस्य बलीयस्त्वान्न बाधो युक्तः, धर्मजिज्ञासैव तु न्यायप्राप्ता दुर्बलत्वात्तु बाधितव्या। तदिदं "यद्येवम्[1]" इत्यादिना "न चाम्नायो नामातिक्रमितव्यः" इत्यन्तेन भाष्येण चोदितम्।

तत्परिहारभाष्यम् "अतिक्रमिष्यामः"[2] इत्यादि, अर्थवादता वक्ष्यतीत्यन्तम्, तस्यार्थमाह—

**दौर्बल्यं वेदबाधनात्॥ ८८॥**

**स्नानस्य तेन बाधः स्याद्धर्मजिज्ञासया बलात्।**

स्नानस्यैवात्र दौर्बल्यम्, तदाश्रयणे समस्तस्यैव वेदस्यार्थावबोधार्थतयाध्ययनोपात्तस्य तदसाधनत्वेनानर्थक्यापत्तेः। तदिदमुक्तम् "वेदमर्थवन्तं प्रयोजनवन्तं सन्तमनर्थकमवकल्पयेम" इति। नन्वदृष्टार्थता भविष्यति, कथमानर्थक्यम्? इत्यत उक्तम्—"दृष्टो हि तस्यार्थः कर्मावबोधनं नाम" इति। किञ्च, एकस्यापि वेदवाक्यस्य बाधे स्मृतिरप्रमाण भवति, किं पुनः समस्तस्यैवानर्थक्यापत्तौ। तस्मात् स्नानस्यैव स्मार्त्तस्य धर्मजिज्ञासया बलवत्त्वाद्बाधः। स्वाध्यायविधिना ह्यर्थावबोधायाध्येतव्यो विहितो वेदो विचारमन्तरेण तादर्थ्यासम्भवाद्विचारमाक्षिप्य तद्विरुद्धं स्नानं बाधते इति। एवं स्मृतिविरोधाद्विचारो न कर्त्तव्य इति।

एतच्चोद्य 'विचार एव स्मृति बाधत' इत्येव परिहृतम्। इदानीं विरोधाभावादपि न स्मृतिर्विचारं बाधते इति दर्शयितु भाष्यम् "न चाधीतवेदस्य"[3] इत्यादि "नानन्तर्ये" इत्येतदन्तम्। तस्यार्थः—स्नानस्याध्ययनोत्तरकालमात्र स्मृतावुक्तम्, उत्कर्षकारणाभावे त्वनन्तरं स्याद्, वेदविरोधेन त्वानन्तर्ये बाधितेऽपि न

१. यद्येवम्, न तर्हि वेदाध्ययनं पूर्वं गम्यते, एवं हि समामनन्ति—वेदमधीत्य स्नायात् इति। इह च वेदमधीत्य स्नास्यन् धर्मं जिज्ञासमान. इममाम्नायमतिक्रामेत्। न चाऽऽम्नायो नामातिक्रमितव्यः। ( शा० भा० पृ. ६ )

२. तदुच्यते, अतिक्रमिष्याम इममाम्नायम्, अनतिक्रामन्तो वेदमर्थवन्त सन्तमनर्थकमवकल्पयेम, दृष्टो हि तस्यार्थः कर्मावबोधनं नाम। न च तस्याध्ययनमात्रात् तत्रभवन्तो याज्ञिकाः फल समामनन्ति। समामनन्ति च तत्रापि 'द्रव्यसस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्' ( जै० सू० ४. ३. १ ) इत्यर्थवादता वक्ष्यति। ( शा० भा० पृ. ६ )

३. न चाधीतवेदस्य स्नानानन्तर्यमेतद् विधीयते। न ह्यत्रानन्तर्यस्य वक्ता कश्चिच्छब्दोऽस्ति, पूर्वकालतायां क्त्वा स्मर्यते नानन्तर्ये। ( शा० भा० पृ. ७ )

स्मृतेर्विरोध इति। अपरमपि "दृष्टार्थता चाध्ययनस्यानन्तर्ये व्याहन्येत, लक्षणया त्वेषोऽर्थं स्यात्" (शा० भा० पृ ७) इति भाष्यद्वयम्। तत्र प्रथम दृष्टो हि तस्यार्थं इत्यनेन पुनरुक्तत्वाद् लक्षणयेति वा ज्ञातार्थत्वात् कैश्चिद् व्याख्यातृभि· परित्यक्तम्, तत्तावदुपन्यस्यति—

**दृष्टार्थत्वादिसंयुक्तं वाक्यं लक्षणया त्विति ॥ ८९ ॥**
**पुनरुक्तया गतार्थत्वात् त्यक्तं कैश्चित्,**

स्वयं तु समर्थयते—

**तदुच्यते ।**
**यद्यप्यस्य भवेद् वाच्यमानन्तर्यमसंशयम् ॥ ९० ॥**
**तथापि पूर्वतामात्रं लक्षयेदविरोधतः ।**

पूर्वभाष्ये आनन्तर्यं क्त्वाशब्दस्य न वाच्यमित्युक्तम्। इदानीं तु तस्यानन्तर्यं वाच्य यद्यपि, तथापि श्रौतार्थपरिग्रहेऽध्ययनस्य दृष्टार्थता व्याहन्येतेति तदविरोधाय पूर्वकालतामात्रमेवार्थो लक्षणया ग्रहीतव्य इत्युच्यत इति।

अपरमप्यविरोधकारणमाह—

**ग्रन्थग्रहणमात्रे च कृते स्नानं विरुध्यते ॥ ९१ ॥**
**अधीत्येत्यधिगम्येति व्याख्याने त्वविरोधिता ।**

'इण् गतौ' इत्यस्येद रूपमित्यर्थः। एतच्चैवमपि सम्भवतीत्येतावन्मात्रेणोक्तम्। परमार्थतस्त्वध्ययनप्रकरणात् समुदायप्रसिद्धेर्बलीयस्त्वाच्चाध्ययनमेवार्थो नाधिगतिः[1]।

"न चेद स्नानम्" इत्यादिभाष्यार्थमाह—

**यस्त्वेवमविरोधित्वं कुर्वन्नाप्लवनं वदेत् ॥ ९२ ॥**
**अदृष्टायाथ वाप्यन्य[2] संस्कार[3] तस्य चोत्तरम् ।**

एवं वक्ष्यमाणप्रकारेणाविरोधस्मृतेर्दुर्बलाप्लवनमात्रं ज्योतिष्टोमादिवत्फलार्थं दीक्षितस्नानवत् सस्काररूपं वा स्नान स्मृत्यर्थं यो मन्यते तस्योत्तरमिदं भाष्यमिति। तदेवोत्तर दर्शयति द्वयेन—

**इहास्नानादिनियमो यः कृतो ब्रह्मचारिणः ॥ ९३ ॥**
**अवधित्वमनाश्रित्य सोऽवसानमपेक्षते ।**
**ततोऽपेक्षावशात् स्नानमस्नानादिनिवर्तनम् ॥ ९४ ॥**
**विरोधसाहचर्याभ्यां दृष्टार्थत्वेन लक्षयेत् ।**

---

१. प्राप्तिः।

२. न चेदं स्नानमदृष्टार्थं विधीयते, किं तु लक्षणयाऽस्नानादिनियमस्य पर्यवसानं वेदाध्ययनसमकालमाहुः। (शा० भा० पृ. ८)

३. संस्कारस्तस्य—मू० पा०।

-' ब्रह्मचारिधर्मस्यास्नानादिनियमस्यानिर्दिष्टावधेरवधिमपेक्षमाणस्यावधिविधिरयमपेक्षितत्वात्, नाऽऽप्लवनमात्रविधानम्, अनपेक्षितत्वात्। अतः स्नानशब्देन स्वविरुद्धस्यास्नानस्य तत्सहचारिणा च धर्मेणा निवृत्तिर्लक्ष्यते—वेदमधीत्य स्नायात्, अस्नानादिक बर्जयेत्, अध्ययनसमाप्तिरेव तस्यावधिरिति। सर्वधर्माणा चाध्ययनाङ्गत्वात् तत्समाप्तौ निवृत्तिर्न्यायप्राप्तैव, न्यायमूलत्वाच्च स्मृतेर्लक्षणार्थत्वमदोष इति।

प्रकरणार्थमुपसहरति—

**तस्मादध्ययनस्नानजिज्ञासाक्रमवाचिनाम्     ॥ ९५ ॥**
**दृष्टार्थत्वाय[1] शब्दानामेवं व्याख्येयमाश्रिता।**

"स्वाध्यायोऽध्येतव्य." इत्यध्ययनवाचिनः शब्दस्यार्थावबोधनार्थत्वम्, यच्च स्नानशब्दस्यास्नानादिनिवृत्तिपरत्वम्, यच्च जिज्ञासाक्रमवाचिनोऽथशब्दस्य गुरुकुलनिवृत्तिव्यावृत्तिपरत्वम्, तत्र सर्वत्र दृष्टार्थत्व कारणमिति।

अत्र चोदयति—

**स्नात्वा जिज्ञासमानोऽपि ननु वेदं न बाधते ॥ ९६ ॥**
**तेनाविरोधिता तस्य,**

स्नात्वापि ह्यर्थे जिज्ञास्यमाने वेदस्यानर्थक्यं न भवति, अतः स्मृत्यविरोधार्थमेव क्रियताम् इति। परिहरति—

**इत्येवं वदत उत्तरम्।**
**यथैवाध्ययनात् स्नानं स्मर्यते समनन्तरम् ॥ ९७ ॥**
**तथा ततः परोऽप्यन्य पदार्थोऽन्यः परस्ततः।**
**ततश्चावश्यकर्तव्ये बाधे स्मार्तस्य कस्यचित् ॥ ९८ ॥**
**योग्यत्वादागते काले प्राथम्यात् स्नानबाधनम्।**

भवेदप्येवं यद्यविरोधो भवेत्, एवमप्यस्ति विरोध.—'स्नात्वा भार्याम् उपगच्छेद्' इति स्नानानन्तर गार्हस्थ्यविधानात्। ततः परमपि 'कृष्णकेशोऽग्नीनादधीत' इत्यादिश्रुतेराधानादि कर्त्तव्यम्, तदवश्यकर्त्तव्ये कस्यचिद्बाधेऽध्ययनानन्तरमुपनिपतितो विचारस्तत्कालवर्त्ति स्नानमेव बाधते। कि चाविदुषोऽधिकाराभावात् प्रागेव कर्मभ्यो विद्यार्ज्जयितव्या, न चान्तरेण विचार तदर्जनं सम्भवति, अतः स्नानात्प्रागेव विचार. कर्त्तव्य इति। एवं स्नानस्याध्ययनानन्तर्यबाधमुक्त्वात्रैवाधिकरणमुदाहरति—

**सोऽयं पाठक्रमस्यार्थाद् बाध इत्यवगम्यते ॥ ९९ ॥**

---

१. दृष्टार्थत्वेन—२ पृ.।

स्नानस्याध्ययनानन्तर्यं पाठप्राप्तम्, अर्थक्रमेणाध्ययनप्रयोजननिबन्धनेन जिज्ञासानन्तर्येण बाध्यते पाकहोमयोरिव, अर्थक्रमो हि पाठक्रमस्य बाधक इति पञ्चमे वक्ष्यते। ननु क्त्वाप्रत्ययात् श्रुतिक्रमोऽयम्, न पाठक्रम. ? सत्यम्; श्रुतिक्रमोऽपि भवन् स्मृतिगतत्वेन विप्रकृष्टार्थत्वात् पाठक्रमतुल्य इति पाठक्रम उच्यते। अथ वा—क्त्वाप्रत्ययस्य पूर्वकालवाचित्वात्तत्परश्रुत्यभावाभिप्रायेणोक्तमिति ॥९९॥

अधिकरणान्तरमुदाहरति—

**गुणप्रधानयोर्वापि विरोधाद् गुणबाधनम्।**

क्रमो हि पदार्थानामङ्गं तदिहाध्ययनस्नानयोरानन्तर्ये समाश्रीयमाणे प्रधानभूतमध्ययनमेव प्रयोजनाभावाद् बाधितं स्यात्, अतस्तदनुरोधेन क्रमस्यैव बाध इति। एवं स्मार्त्तस्य क्रमस्याविशेषेण बाधमभिधाय सम्प्रति क्रमं विशिनष्टि—

**स्नानोपलक्षिता चात्र निवृत्तिर्गुरुवेश्मनः॥ १००॥**
**विरोधित्वेन बाध्येत न तु मध्वादिभक्षणम्।**

स्नानलक्षिताया गुरुकुलनिवृत्तेरेवाध्ययनानन्तर्यं बाध्यते, तस्या एव विचारविरोधित्वान्न तु मध्वादिभक्षणस्य, अविरोधित्वादिति। ततश्चैवमनुष्ठातव्यमित्याह—

**तस्माद् गुरुकुले तिष्ठन्मधुमांसाद्यवर्जयन्॥ १०१॥**
**जिज्ञासेताविरुद्धत्वाद् धर्ममित्यवगम्यते।**

किमेवं सति दारसंग्रहोऽपि कर्त्तव्य:, नेत्याह—

**गुरुगेहनिवृत्त्यंशो यावच्च न समाप्यते॥ १०२॥**
**तावत् सकलवाचित्वान्न स्नानं पर्यवस्यति।**

गुरुगेहनिवृत्तिर्यावन्न भवति तावत्स्नानम् अस्नानादिनिवर्त्तनं स्मृत्युक्तं न पर्यवस्यति तदपर्यवसानेष्वस्नातको न भवति। एतदेव वृद्धप्रयोगे दर्शयति—

**गुरुगेहादनावृत्तः स्नातको हि न कथ्यते॥ १०३॥**

ततः किम् ? इत्यत आह—

**तत्परत्वविधानाच्च न॰ तावद् दारसङ्ग्रहः।**

स्नातकस्य हि भार्याधिगतिः स्मर्यते, न चासमाप्तब्रह्मचारिधर्मः स्नातको भवति, अतो न दारसंग्रह इति। अत्र भाष्यम्—"वेदमधीत्य स्नायाद् गुरुकुलान्मा समावर्त्तिष्टेत्यदृष्टार्थतापरिहारायैव" (शा० भा० पृ. ८) इति। तदसंगतार्थं मत्वा भित्त्वा व्याचष्टे—

**व्याख्याय कीर्तिता चात्र स्नायादिति पुनः स्मृतिः॥ १०४॥**

पूर्वमधीत्य 'स्नायात्' इति अस्नानादिनियमपर्यवसानार्थता स्मृतेर्व्याख्याय तामेवानुकीर्त्तितवान्। अयमेवार्थोऽस्याः स्मृतेरिति भाष्यार्थ इत्यर्थः। "गुरु-

कुलान्मा समावर्त्तिष्ट" इत्येतत्तु स्मृतिविपरीतार्थत्वात् ततोऽपनेतव्यमित्याह—

**समावर्तिष्ट मेत्यादि स्मृतेर्यद्यप्यनन्तरम् ।**
**विपरीतार्थमित्यस्मात् तद्वाक्यादपनीयते ॥ १०५ ॥**

अपनीतस्यार्थमाह—

**अथशब्देन यो बाधः पुरस्तादुपवर्णितः ।**

स्मृतेर्लक्षणार्थतामुक्त्वा तत्प्रसङ्गादथशब्दस्यानन्तर्यस्वरूपपरत्वं हित्वा "गुरुकुलान्मा समावर्त्तिष्ट" इत्येवंपरत्वं यदुक्तं तत्रापि दृष्टार्थत्वमेव कारणम् इत्येतदनेनोच्यते[1], न हि भाष्यकारेणेदमुक्तम्[2] इति । अथ वा न सर्वस्य स्मृत्यर्थस्य बाधः, किन्तु गुरुकुलनिवृत्तिव्यावृत्तिमात्रस्येत्यत्रेदं दृष्टार्थत्वं कारणम्, इत्याह—

**तन्मात्रस्यैव बाधोऽत्र दृष्टार्थत्वात् प्रदर्शितः ॥ १०६ ॥**

एतदेव विवृणोति—

**स्मृतिप्राप्तमिदानीं तु मधुमांसाद्यवर्जनम् ।**
**प्रतिषेधमदृष्टार्थं सूत्रकारो न शोभते ॥ १०७ ॥**

इदानीमधीते वेदे स्मृतिप्राप्तं मधुमासाद्यवर्ज्जनं धर्मजिज्ञासायामविरोधि प्रतिषेधन्नदृष्टार्थत्वेन प्रतिषेधेन्न चैतद्युक्तमिति ॥ १०७ ॥

ननु स्मृतिबलेन गुरुगेहान्निवृत्तिः, पुनः प्रवेशे धर्मजिज्ञासायाः को विरोधः ? अत आह—

**निवृत्त्य गुरुगेहाच्च जिज्ञासार्थः पुनर्भवेत् ।**
**प्रवेशः सोऽप्यदृष्टार्थ इति नैवेह सूत्रितः ॥ १०८ ॥**

इदं चोद्यं प्रागन्यथा परिहृतम्, इदानीं त्वदृष्टार्थतया परिह्रियत इत्यपौनरुक्त्यम् । गुरुगेहावस्थितस्यैव ह्यकृतार्थस्य यद् गुरुगेहान्निवर्त्तनं प्रवेशश्च तदुभयमदृष्टार्थं स्यात् ॥ १०८ ॥

ननु वेदमधीत्य स्नायादिति वाचनिकं निष्क्रमणमदृष्टार्थतयापि क्रियमाणं न दुष्यति ? इत्यत आह—

**निर्गमो हि कृतार्थस्य दृष्टार्थो गुरुवेश्मनः ।**
**स्मर्यते तस्य नार्थः स्यादकृतार्थस्य निर्गमे ॥ १०९ ॥**

सत्यं यद्यदृष्टार्थो निर्गमः स्यात्, अयं तु कृतार्थस्याश्रमान्तरनिवेशाय गुरुगेहान्निर्गमो दृष्टार्थः स्मर्यते, अतोऽकृतार्थस्य निर्गमोऽनर्थक इति ॥ १०९ ॥

अतःशब्दमिदानीं व्याचिख्यासुस्तावदाक्षिपति—

**अथशब्दप्रसिद्ध्यैव वेदग्रहणहेतुता ।**
**आनन्तर्योपदेशित्वादतः शब्देन किं पुनः ॥ ११० ॥**

---

१. अनेनेति । प्रमाणेनेत्यर्थः । २. उक्तमिति । कल्पितमित्यर्थः ।

दृष्टार्थं ह्यध्ययनानन्तर्यम्, यदि चाध्ययनं जिज्ञासाया हेतु. स्यात्ततस्तदानन्तर्यं दृष्टार्थं भवति नान्यथा। अतोऽथशब्देनैवाध्ययनहेतुता सिद्धेति किमत शब्देनेति ? परिहरति—

**योग्यत्वमथशब्देन यद्यपि प्रतिपादितम्।**
**तदेव हेतुरत्रेति नातःशब्दाद्विना भवेत्॥ १११॥**

अध्ययनेन धर्मजिज्ञासाया योग्यत्व भवतीत्येतादृशं हेतुत्व यद्यप्यथशब्देन सिद्धं तथापि तस्यैवानुष्ठानहेतुत्व वक्तुमत.शब्द इति॥ १११॥

एतदेव विवृणोति—

**लक्षणं पुरुषस्यैव तदा तद्धि प्रसज्यते।**
**जिज्ञासायाश्च हेतुत्वे फलार्थत्वादि सम्भवेत्॥ ११२॥**

एवविध: पुरुषो धर्मजिज्ञासाधिकारीत्येतावदथशब्देन सिद्धयति, जिज्ञासाहेतुश्च फलार्थित्वाद् यद्यपि सम्भवति। फलार्थित्वशब्देन कामश्रुतयोऽभिधीयन्ते। कामश्रुतयो हि विद्यार्थित्वात् तत्सिद्धयर्थं विचारमाक्षिपेयुरिति सम्भाव्यते, ताश्चेद्विद्या प्रयुञ्जीरँस्तत. शूद्रमधिकृत्य शूद्रस्यापि प्रयुञ्जीरन्, ततोऽध्ययनविधिरेव विचारस्य प्रयोजक इति वक्तुमत:शब्द इति। एतदुक्तं भवति—वेदाध्ययनानन्तरमत एवाधीतवेदत्वात्कारणात् तदर्थं धर्मजिज्ञासा कर्त्तव्येति। अध्ययनविधिर्हि अर्थज्ञानार्थतया अध्ययनं विदधद्विचारमन्तरेण तदसम्भवाद्विचारमाक्षिपतीति। अधीते वेदे तूष्णीमवस्थातुं न लभ्यते। अध्ययनविधिश्च त्रयाणामेव वर्णाना प्रकृतानामुपनयनसस्कृतानामध्ययन विचार च विधत्ते, तेषु च विद्वत्सु लब्धेषु कामश्रुतयो नाविद्वासमधिकृत्य तस्य विद्यां प्रयुञ्जते ततः शूद्राधिकारो निवर्त्तते। तत. प्रयोजनवानत.शब्द इति॥ ११२॥

परिहारान्तरमाह—

**अतःशब्दगृहीतं वा तत्राध्ययनमाश्रितम्।**

कथमित्याह—

**हेतावकथ्यमाने हि मङ्गलाद्यप्यसौ[१] वदेत्[१]। ११३॥**

वृत्तस्य हि हेतुत्वमतःशब्दो वदति, तेन यस्य वृत्तस्य हेतुत्वं तदतःशब्देनापेक्षितमिति प्रत्ययादध्ययनानन्तर्यसिद्धिः। अन्यथा मङ्गलार्थताऽप्यथशब्दस्याशङ्क्येत। यद्यपि माङ्गल्यमन्यार्थनीयमानोदकुम्भादिवत् अथशब्दस्यानन्तर्यवाचिनः प्रासङ्गिकं प्रयोजनं नाभिधेयं तथापि यत्किंचित् क्रियानन्तर्यमर्थप्राप्तमनुवदन्मङ्गलार्थतया प्रयुक्त इति सम्भाव्येतेति॥ ११३॥

---

१–१. मङ्गलाद्यर्थतां वदेत्—२ पु०।

परिहारान्तरमाह—

**स्नानबाधस्य वा हेतुरत इत्युच्यते पुनः।**

जिज्ञासाहेतुत्वेऽध्ययनस्याथशब्देन प्रतिपादितेऽपि तस्यैव स्नानबाधहेतुत्वमभिधातुमत.शब्द इति। स्नानबाधहेतुत्वमेव विवृणोति—

**योग्यस्याधीतवेदत्वान्नावस्थातुं हि लभ्यते[1]॥ ११४॥**

अधीतवेदतया विचारयोग्येन क्षिप्रमेव कर्माधिकाराय विद्वत्तायै यतितव्यं न स्थातव्यम्॥ ११४॥

अत्र भाष्यम्—"धर्मं जिज्ञासितुमिच्छेत्" (शा० भा० पृ. ९) इति। तत्र सनादीनामपौनरुक्त्यमाह सार्द्धद्वयेन—

**सन्वाच्येच्छान्तरं कर्म ज्ञानं व्याप्नोति तावता।**
**ज्ञानोपसर्जना सैव न तु विध्यादि गम्यते॥ ११५॥**
**इषेस्तु कर्म बाह्यः स्याद्धर्मः सा वाथ वा द्वयम्।**
**समानकर्तृकत्वं तु तुमुनोक्तं लिङा विधिः॥ ११६॥**
**एवं विषयनानात्वान्न काचित्[2] पुनरुक्तता।**

सन्वाच्या तावदिच्छा आन्तर समानपदोपात्तं ज्ञानाख्यं कर्म आप्नोति तत्कर्मिकेत्यर्थः। तेन तावता सन्प्रत्ययपर्यन्तेन भागेन सैव ज्ञानेच्छैव गम्यते, न तु विध्यादिकम्। इषेस्त्विषिधातुवाच्याया इच्छाया बाह्यः पदान्तरोपात्तो धर्मः कर्म)सैव ज्ञानेच्छैव वा द्वयं वा धर्मश्च ज्ञानेच्छा च, अतो भिन्नविषयेच्छावचनत्वात् सन्निच्छत्यारपौनरुक्त्यम्, लिङ्तुमुनोस्त्वर्थान्तरवाचित्वात्स्पष्टमेवापौनरुक्त्यमिति। नन्वेकैव ज्ञानेच्छा सूत्रिता, तत्कथमिच्छाद्वयोपादानं भाष्येऽत आह—

**सूत्रितेच्छाभिनिर्वृत्त्यै द्वितीयेच्छाऽत्र सूत्रिता॥ ११७॥**

सूत्रितामेवेच्छामभिनिर्वर्तयितुमिच्छान्तरमुक्तमिति न दोषः। न चेच्छाविषयमिच्छान्तर नेष्यतइति वाच्यम्। मन्दाग्नीना भोजनेच्छायामिच्छादर्शनात्।

"धर्माय जिज्ञासा धर्मजिज्ञासा" इति (शा० भा० १० पृ.)भाष्यं[1] तदाक्षिपति—

**प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्ता समस्यते।**
**तादर्थ्ये[3] यूपदार्वादौ तेनास्मिन्नसमासता॥ ११८॥**

यत्र हि तादर्थ्ये चतुर्थी समस्यते तत्र विकृतिरेव चतुर्थ्यन्ता प्रकृत्या समस्यते, यूपदार्वादौ दर्शनात्। तथा च वार्त्तिककारेणोक्तम् 'चतुर्थीतदर्थे प्रकृतिविकृतिग्रहणं कर्त्तव्यम्' इति। न च सामर्थ्यप्रदर्शनार्थं तदिति वाच्यम्, तथा सति 'समर्थः पदविधि.' (पा० सू० २. १. १) इत्यनेनैव सिद्धे तद्ग्रहणस्याकर्त्तव्यत्वात्। अतो वाचनिकमेवेदम्। न च धर्मो जिज्ञासाविकारः, तस्मादसमास इति। परिहरति—

---

१. शक्यते—का.। २. क्वचित्—२ पु०। ३. तादृशी—का०।

**सा हि तस्येत्यनेनोक्तो धर्मस्येत्येष विग्रहः ।**

"सा हि तस्य[१]" इत्यनेन भाष्येण दर्शितो धर्मजिज्ञासेत्ययमत्र विग्रहः, तेन षष्ठीसमासोऽयं न चतुर्थीसमास इति । कथं तर्हि धर्मायेति भाष्यमत आह—

**धर्मायेति तु तादर्थ्ये षष्ठी वृत्तेति कथ्यते ॥ ११९ ॥**

ननु तादर्थ्यविवक्षाया चतुर्थ्येव प्राप्नोति न षष्ठी, ततश्च समासानुपपत्तिः, सम्बन्धसामान्यविवक्षाया तु तादर्थ्ये षष्ठीत्ययुक्तमिति चोदयति—

**प्राप्नोत्यत्र चतुर्थ्येव विशेषश्चेद् विवक्षितः ।**
**सामान्यस्य विवक्षायां तादृशं कथ्यते कथम् ॥ १२० ॥**

परिहरति—

**सम्बन्धमात्र एवैषा षष्ठ्युत्पन्ना तथापि तु ।**
**विशेषनिष्ठता तस्या भाष्यकारेण वर्ण्यते ॥ १२१ ॥**

न षष्ठी तादर्थ्यमभिधत्ते इति ब्रूमः, किं तु सम्बन्धसामान्यमेव, तस्य तु निर्विशेषस्यानुपपत्तेः तादर्थ्यरूपविशेषनिष्ठता धर्मायेति भाष्येण दर्शितेति ॥१२१॥

अत्र समस्तस्य वक्ष्यमाणस्यार्थस्यास्या प्रतिज्ञायामन्तर्भाव कथयता भाष्यकारेणोक्तम् "स कथं जिज्ञासितव्य"[२] इत्यादि, तत्र साधनाभासपदं तावद्व्याचष्टे—

**साधनाभासता चात्र पूर्वपक्षार्थगोचरा ।**

कथमेतद् ? इत्याह—

**अन्यसाधनमन्यस्य साधनाभास उच्यते ॥ १२२ ॥**

एतदेवोदाहरणेन दर्शयति—

**क्रत्वर्थं पुरुषार्थस्य तदर्थं च क्रतोरिति ।**

क्रत्वर्थं पर्णमयीत्यादि पुरुषार्थस्य अपापश्लोक-श्रवणादेः फलस्य साधनाभासं पुरुषार्थं च गोदोहनादि क्रतोः साधनाभासमिति । एतासां प्रतिज्ञानां व्याख्याप्रदेशं दर्शयता भाष्यकारेण "को धर्मः कथंलक्षणः" इति द्वयं चोदनासूत्रेण व्याख्यातमित्युक्त्वा अवशिष्टं "शेषलक्षणेन व्याख्यातम्[३]" इत्युक्तम् । शेषलक्षणशब्दश्च तृतीये प्रसिद्धः । न च तत्र सर्वं व्याख्यायते, अतः कथमिदम् ? इत्याशङ्क्याह—

१. सा हि तस्य ज्ञातुमिच्छा । ( शा० भा० पृ. १० )

२. स कथं जिज्ञासितव्यः ? को धर्मः, कथंलक्षणः, कान्यस्य साधनानि, कानि साधनाभासानि, किंपरश्चेति । (शा० भा० पृ १० )

३. तत्र को धर्मः कथंलक्षण इति एकेनैव सूत्रेण व्याख्यातम्—चोदनालक्षणोऽर्थो धर्म इति । कान्यस्य साधनानि, कानि साधनाभासानि, किंपरश्चेति शेषलक्षणेन व्याख्यातम् । क्व पुरुषपरत्वम्, क्व वा पुरुषो गुणीभूतः, एतासां प्रतिज्ञानां पिण्डितस्य एतत् सूत्रम्—अथातो धर्मजिज्ञासेति । (शा० भा० पृ. १० )

**शेषलक्षणशब्दश्च कृत्स्नशास्त्रविवक्षया ॥ १२३ ॥**

शेषं च तल्लक्षण चेति ॥ १२३ ॥

अत्र भाष्यकारेण शास्त्रसम्बन्धमाक्षिपतोक्तम्—"धर्मः प्रसिद्धो वा स्यादप्रसिद्धो वा। स चेत्प्रसिद्धः न जिज्ञासितव्यः, अथाप्रसिद्धो नतराम्" ( शा० भा० पृ. ११ ) इति। तस्यार्थः—'धर्मोऽस्य शास्त्रस्य प्रतिपाद्यमानतया प्रयोजनम्' इति वदता सूत्रकारेण 'यस्तेन प्रयोजनेन सह प्रतिपाद्यप्रतिपादकभाव सम्बन्धः सोऽस्य शास्त्रस्यावतारहेतुः सम्बन्ध.' इति सूचितम्। तदुक्त 'शास्त्रं प्रयोजन चैव' इति वार्त्तिके। स चाय सम्बन्धो न शास्त्रावतारहेतु सम्भवति, धर्मस्याजिज्ञास्यत्वात्। न ह्यजिज्ञासितप्रतिपादकतया शास्त्रारम्भः सम्भवति, न तदर्थकं धर्मजिज्ञासाप्रकरणम्, धर्मजिज्ञासारम्भ. शास्त्रमित्यर्थ। अत्र च 'अथाप्रसिद्धो नतराम्' इत्यतिशयो दर्शित। त दर्शयति—

**प्रसिद्धः शक्यते ज्ञातुम् प्रसिद्धत्वात्तु[1] नेष्यते।**
**अप्रसिद्धस्त्वशक्यत्वान्नतरामित्यतोऽब्रवीत् ॥ १२४ ॥**

जिज्ञासाशब्देन प्रकृत्या ज्ञानम्, प्रत्ययेन चेच्छोच्यते। तत्र प्रसिद्धे ज्ञानमस्ति इच्छामात्रं तु तत्र नास्ति, अप्रसिद्धे तु ज्ञानमिच्छा चोभयमपि नास्तीति अतिशयोपपत्तिरिति ॥ १२४ ॥

"धर्म प्रति" इत्यादि परिहारभाष्यम्[2]। तत्र धर्मस्य जिज्ञास्यत्वे कारणद्वयमुक्तम्—विप्रतिपत्त्या सांशयिकत्वम्, 'स हि पुरुषम्' इत्यनेन प्रयोजनवत्त्वं च। तदुभयमपि दर्शयति—

**जिज्ञास्यः संशयाद्धर्मः श्रेयस्करतयापि च।**

एतदेव व्यतिरेकमुखेन विवृणोति—

**असन्दिग्धो ह्यजिज्ञास्यो यो वा स्यान्निष्प्रयोजनः॥ १२५ ॥**

सन्देहहेतुं विप्रतिपत्तिं विवृणोति—

**स्वरूपादिषु धर्मस्य द्विधा विप्रतिपद्यते।**
**पूर्वं प्रमाणरूपाभ्याम्,**

धर्मस्वरूपादीनां मध्ये पूर्वं तावद् द्विधा विप्रतिपत्तिः क्रियते—किंप्रमाणको धर्मः, किंस्वरूप इति च।

तदस्याद्यस्य विप्रतिपत्तिद्वयस्यानेन पादेन निर्णय. क्रियत इत्याह—

---

१. प्रसिद्धत्वाच्च—२ पु०।

२. धर्मं प्रति विप्रतिपन्ना बहुविदः, केचिदन्यं धर्ममाहुः, केचिदन्यम्। सोऽयमविचार्य्य प्रवर्तमानः कञ्चिदेवोपाददानो विहन्येत, अनर्थं च ऋच्छेत्, तस्माद्धर्मो जिज्ञासितव्य इति। स हि निःश्रेयसेन पुरुषं संयुनक्तीति प्रतिजानीमहे। तदभिधीयते चोदनालक्षणोऽर्थो धर्मः" इति। (शा० भा० पृ. ११ )

**पादेनाद्यस्य निर्णयः ॥ १२६ ॥**

अत्र हि प्रत्यक्षादिनिराकरणेन चोदनाप्रामाण्य साध्यते। तत्साधनादेव च 'तद्गम्योऽग्निहोत्रादिः धर्मो न चैत्यवन्दनादि' इति स्वरूपमपि सविशेषं कथित भवति। एतच्च निरपेक्षप्रामाण्याभिप्रायेणोक्तम्। चोदनैव हि निरपेक्षं प्रमाणम्, तत्प्रामाण्यं चेहैव पादे सिद्धम्। उपरितने तु पादत्रये तदेकवाक्यतया तन्मूलतया चार्थवादादीना प्रामाण्यं साध्यते। अत. समस्तोऽध्यायः प्रमाणलक्षणमेव, चोदनायास्त्विहैव सिद्धमित्यभिप्रायः। तथा भाष्यमप्येकेनैव सूत्रेण व्याख्यातमिति स्वतन्त्रप्रामाण्याभिप्रायमेवेति ॥ १२६ ॥

एवमाद्यविप्रतिपत्तिं निर्णयस्थान चोक्त्वा विप्रतिपत्त्यन्तर निर्णयस्थान च दर्शयति द्वयेन—

**स्थिते वेदप्रमाणत्वे पुनर्वाक्यार्थनिर्णये।**
**मतिर्बहुविदां पुंसां संशयान्नोपजायते ॥ १२७ ॥**
**केचिदाहुरसावर्थः, केचिन्नासावयं त्विति।**
**तन्निर्णयार्थमप्येतत् परं शास्त्रं प्रणीयते ॥ १२८ ॥**

इति प्रतिज्ञासूत्रं प्रथमं समाप्तम्

एकमार्गदर्शिनामज्ञाना च सशयानुत्पत्तेर्बहुविदामित्युक्तम् ॥ १२७-१२८ ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे प्रथमं प्रतिज्ञासूत्रम्

इदानी शास्त्रमारभते—

**चोदनालक्षणोऽर्थो धर्मः**[1] ( जै० सू० १. १. २ )

तद्व्याचष्टे—

**धर्मे सामान्यतः सिद्धे प्रमाणं चोदनोच्यते।**

योऽयं निष्प्रमाणकप्रत्यक्षादिप्रमाणकचोदनाप्रमाणकत्वादीनां विप्रतिपत्तिविशेषाणां विषयभूतः साधारणात्मा धर्मपदार्थः स चोदनाप्रमाणकः। चोदनैव तस्य प्रमाणं न प्रत्यक्षादि। चोदना च तत्र प्रमाणमेव नाप्रमाणम्, इत्येव धर्मानुवादेन प्रमाणविधिरिति।

कथं तर्हि तत्स्वरूपविशेषयोः सिद्धिः ? अत आह—

**स्वरूपादेस्ततः सिद्धिः,**

---

१. चोदनेति प्रवर्तकशब्दनाम। लक्ष्यते ज्ञायतेऽनेनेति लक्षणम्। इत्थं च चोदनैव लक्षणं, करणं यद्विषयकज्ञानस्य तत्त्वे सति अर्थत्वं धर्मस्य लक्षणम्। अर्थत्वं च सुखाधिकदुःखाजनकत्वम्। ( सु० )।

आदिशब्देन विशेषोपादान प्रमाणमेवेति प्रमाणविधेरेवार्थात्तद्गम्यस्याग्निहोत्रादेर्धर्मत्वमस्त्येव, न तु नास्तीति धर्मस्वरूपसिद्धिः। सैव प्रमाणमित्यवधारणा च तद्गम्यस्याग्निहोत्रादेर्धर्मत्वम् न चैत्यवन्दनादेरतद्गम्यत्वादिति धर्मविशेषसिद्धिरिति। विपरीता वा वचनव्यक्तिरित्याह—

**स्वरूपं चेह सूत्र्यते ॥ १ ॥**

'यश्चोदनालक्षणोऽग्निहोत्रादि स धर्म एव नाधर्मः, स एव च धर्मो न चैत्यवन्दनादि.' इत्येवं धर्मस्वरूपतद्विशेषसिद्धिरिति ॥ १ ॥

ननु को धर्म इति, कथंलक्षण'—इति द्वयमपि चोदनालक्षणसूत्रेण व्याख्यातमिति भाष्यकारेणोक्तम् ( शा० भा० पृ. १० ), तत् कथमैकस्यैव सूत्रस्यार्थद्वयमुच्यते ? अत आह—

**द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते।**

सत्य द्वयमुच्यते, किन्तु श्रुत्यर्थाभ्याम्, न श्रुत्यैव। न ह्येकस्यैव वाक्यस्य सति सम्भवे वचनव्यक्तिद्वयं युक्तमिति। तत्र यथा प्रमाणविधौ स्वरूपसिद्धिस्तथा दर्शितम्। स्वरूपविधावपि प्रमाणसिद्धिमर्थाद् दर्शयति—

**स्वरूपेऽपि हि तस्योक्ते प्रमाणं कथ्यतेऽर्थतः ॥ २ ॥**

यदा हि चोदनागम्यस्य धर्मत्वमितरस्य च धर्मत्वाभाव उक्तः, तदार्थाच्चोदनायाः प्रामाण्यं प्रत्यक्षादेश्चाप्रामाण्य सिद्ध्यतीति ॥ २ ॥

"चोदनेति क्रियाया. प्रवर्त्तक वचनमाहु" (शा० भा० पृ. १४) इति भाष्यम्, तत्र प्रवर्त्तक वचनमिति किं प्रत्ययमात्रं विध्यभिधायित्वादुच्यते[१], यद्वा तन्मात्रस्याप्रत्यायकत्वात् पदम्, अथ वा वाक्यमिति बुभुत्सायामाह—

**किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ।**
**तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिन् चोदनोच्यते ॥ ३ ॥**

किं केन कथमित्यपेक्षितै. साध्यसाधनेतिकर्त्तव्यतांशैः पूर्णः प्रत्ययो विधौ पुरुषप्रवर्त्तने समर्थो भवति तत्पूरणं च वाक्येन, अतो वाक्यमेव प्रवर्त्तकं चोदनोच्यते ॥ ३ ॥

"चोदना हि भूतं भवन्तं भविष्यन्तमर्थम्" इत्यादि भाष्यम् "नान्यत्किंचनेन्द्रियम्"[२] इति च चोदनायाः प्रामाण्ये तदन्येषां चाप्रामाण्ये युक्तिकथनार्थम्, तत्प्रतिज्ञासूत्रेऽसङ्गतमित्याशङ्क्याह—

**चोदनैव प्रमाणं चेत्येतद्धर्मेऽवधारितम्।**
**साकाङ्क्षमिति मन्वानो युक्तिलेशं द्वयेऽस्पृशत् ॥ ४ ॥**

---

१. विधायित्वात्तदुच्यते—३ पु०।

२. चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टम्—इत्येवञ्जातीयकमर्थं शक्नोत्यवगमयितुम्, नान्यत् किञ्चनेन्द्रियम्। ( शा० भा० पृ. १५ )

सम्भावितो हि प्रतिज्ञातोऽर्थो हेतुना साध्यते, शब्दस्य च नित्य प्रमाणान्तर-परतन्त्रस्य स्वातन्त्र्येण प्रामाण्य प्रत्यक्षादेश्च स्वतन्त्रस्याप्रामाण्यमित्यत्र प्रतिज्ञातं चोदनैव प्रमाणमेवेति ॥ ४ ॥

तदिदमवधारणद्वयमसम्भावितार्थं युक्तिसाकाङ्क्षमिति मन्वानः सम्भावना-पदलाभार्थं प्रतिज्ञाद्वयेऽपि युक्तिलेशमस्पृशदिति । युक्तिलेशमेव दर्शयति—

**सम्भाव्यते प्रमाणत्वं शब्दस्यैवविधेष्वपि ।**
**इन्द्रियादेरसामर्थ्यं वक्ष्यमाणमदीदिशत् ॥ ५ ॥**

एवंविधेषु भूतादिष्विन्द्रियादेरसामर्थ्यं प्रत्यक्षसूत्रे वक्ष्यमाणमेवात्र दर्शित-मिति कथं सम्भाव्यते ? अत आह—

**अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।**
**तेनोत्सर्गे स्थिते तस्य दोषाभावात् प्रमाणता ॥ ६ ॥**

ज्ञानोत्पादहेतुत्व प्रामाण्यहेतु सति तस्मिन् प्रामाण्यस्यौत्सर्गिकत्वात् शब्द-श्चात्यन्तासत्यपि शशविषाणादौ ज्ञानमुत्पादयति । तदिह चोदनाया धर्मज्ञान-जनकत्वादुत्सर्गत प्राप्तं [illegible] भवति ॥ ६ ॥

भाष्ये चोदनापद [illegible] लक्षणया शब्द-मात्रपरं व्याख्येयमित्याह—

**चोदनेत्यब्रवीच्चात्र शब्दमात्रविवक्षया ।**

तत्र कारणमाह—

**न हि भूतादिविषयः कश्चिदस्ति विधायकः ॥ ७ ॥**

इतश्चैवमित्याह—

**इन्द्रियादिव्युदासेन शब्दो यावन्न साध्यते ।**
**तावच्च तद्विशेषस्य कुतो वावसरो भवेत् ॥ ८ ॥**

प्रमाणविशेषस्य हि प्रत्यक्षादेः सामर्थ्ये व्युदस्ते तद्विशेषान्तरस्यैव शब्दस्य भूतादिषु सामर्थ्यं दर्शयितव्यम्, न शब्दविशेषस्य चोदनायाः। किञ्च शब्दसामान्य-प्रयुक्तमिदं यद् भूतानागतादिष सामर्थ्यम्, न चोदनात्वप्रयुक्तम्, अतः सामान्य-मुखेनैव तत्सामर्थ्यं वक्तव्यम् । तेनैवं भाष्यार्थः—चोदनायाः प्रामाण्य धर्मे । कुतः ? शब्दस्य हि सर्वस्यैव ज्ञानजनकत्वेन प्रामाण्यं सम्भवति शब्दश्चोदना, तेनास्याः सम्भवत्यतीन्द्रियेऽपि धर्मे प्रामाण्यमिति ॥ ८ ॥

लक्षणपदं व्याचष्टे—

**निमित्तमात्रं वोच्येत प्रमाणं चेह लक्षणम् ।**

निमित्तं प्रमितेः कारणमात्र प्रमाण तत्तद्विशेषः करणमिति । करणत्वं च साधकतमत्वमापेक्षिकं विवक्षाधीनमिति । विवक्षाभेदेन प्रमाणभेदानाह—

**प्रमाणं त्वपि शब्दो वा[1] तज्ज्ञानं[2] वा निरूप्यते ॥ ९ ॥**
**पदार्थस्तन्मतिर्वा स्याद्वाक्यार्थाधिगमोऽपि वा ।**

प्रमाणं चेत्यस्मिन् पक्ष इत्यर्थ. । प्रमाणप्रसङ्गात् फल दर्शयति—

**पूर्वेषां तु प्रमाणत्वे फलत्वं तस्य गम्यते ॥ १० ॥**

शब्दादीना प्रामाण्ये वाक्यार्थाधिगम फलम्, तत्प्रामाण्ये हानादिबुद्धिः फलमिति ॥ १० ॥

शब्दव्यतिरिक्तेषु तज्ज्ञानादिषु यदा लक्षणशब्दस्तदा शब्दवाचिना चोदनादिशब्देन कथं सामानाधिकरण्यम् ? अत आह—

**ज्ञाने लक्षणशब्दोऽयं यदि नाम प्रयुज्यते ।**
**चोदनोक्तिस्तदा कार्यं तत्कार्यं चापि लक्षयेत् ॥ ११ ॥**

ज्ञानादिष्वित्यर्थः ॥ ११ ॥

शब्दकार्ये तज्ज्ञाने तत्कार्येषु च पदार्थज्ञानादिषु लक्षणया वर्त्तत इति निमित्तमात्रलक्षणपक्षे शब्दप्रामाण्यपक्षे च मुख्यमेव सामानाधिकरण्यमित्याह—

**निमित्तमात्रे शब्दे च प्रमाणे मुख्यवृत्तयोः ।**
**सामानाधिकरण्यं स्याच्चोदनालक्षणत्वयोः ॥ १२ ॥**

एतच्च भाष्यानुसारेण 'वाक्यमेव चोदना' इत्यङ्गीकृत्योक्तम्, भवत्येव तु सर्वेषु पक्षेष मुख्यमेव सामानाधिकरण्यम्, चोदनापदस्यापि लक्षणपदस्येव चोद्यतेऽनयेति व्युत्पत्त्या ज्ञानादिषु मुख्यत्वसम्भवात् । तथा चोक्तम्—

प्रवर्त्तेऽहमिति ज्ञान येन शब्देन जन्यते ।
स चोदनोच्यते यद्वा प्रवर्त्तनफला मतिः ॥ इति ॥ १२ ॥

ननु "गोदोहनादि द्रव्य नीचैस्त्वादिगुणो यागादिक्रिया च फलसाधनत्वाद्धर्मः नापूर्वादि.' इति श्रयस्करे भाष्ये वक्ष्यते द्रव्यादिवत् प्रत्यक्षमिति कथ चोदनैवेत्यवधारितमत आह—

**द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।**
**तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥ १३ ॥**

नैन्द्रियकेण रूपेण धर्मतेति ॥ १३ ॥

किं पुनरेषा रूपान्तरं यच्चोदनागम्यं येन चैषा धर्मत्वमिति दर्शयति—

**श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते ।**
**ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ १४ ॥**

ननु नान्यत् किञ्चनेन्द्रियमितीन्द्रियमात्र प्रतिषिद्धम्, न च तावता चोदनैवेत्यवधारण सिद्ध्यति ? इत्यत आह—

**प्रदर्शनार्थमत्रोक्तमिन्द्रियं सूत्रकारवत् ।**

---

१. वापि शब्दो वा०—२ पु० ।   २. तज्ज्ञाने—मु० पा० ।

यथा प्रत्यक्षसूत्रे प्रत्यक्षग्रहण प्रदर्शनार्थमेवमिदमपीति ।

यद्वा एव व्याख्येयमित्याह—

**नान्यत्किञ्चेति वाच्छेदः सामान्यार्थः प्रयुज्यते ॥ १५ ॥**

नेन्द्रियमिति तु तस्यैव हेतुरित्याह—

**तदसामर्थ्यसिद्ध्यै च पुनरिन्द्रियकीर्तनम् ।**

अन्यत्सर्वमसमर्थम्, इन्द्रियस्यासमर्थत्वात्तत्पूर्वकत्वाच्चेतरस्येति ।

व्याख्यानान्तरमाह—

**किञ्चेति मध्यमच्छेदो हेतुप्रश्ने प्रयुज्यते ॥ १६ ॥**

नान्यत् समर्थम् । कि चात्र कारणम् ? इन्द्रियस्यासामर्थ्यादिति ॥ १६ ॥

नन्वनुमानं भूतादौ समर्थमेव, भूता व्यवहिता विप्रकृष्टा च वृष्टिर्नदीपूरेणाऽनुमीयते, मेघोत्पत्त्या च भविष्यति वृष्टिः, सूक्ष्मं च द्रव्य गन्धात्, अतो न सर्वनिषेधोपपत्तिरत आह—

**यद्यपि त्वनुमानस्याप्येवमादौ समर्थता ।**

**विना सम्बन्धबोधेन[1] न तु तस्योद्भवः क्वचित् ॥ १७ ॥**

ततः किमित्याह—

**न सामान्यविशेषाभ्यां धर्मसम्बन्धदर्शनम् ।**

**लिङ्गस्य कस्यचित्सिद्धं येन स्यादनुमानता ॥ १८ ॥**

धर्मसामान्येन वा धर्मविशेषेण वा न कस्यचिल्लिङ्गस्य सम्बन्धग्रहणमस्ति, येन धर्मोऽस्तीति वाग्निहोत्रादेर्वा धर्मत्वमनुमीयेत; अतो नानुमानं सम्भवतीति ।

अत्र चोदयति—

**ननु शब्दोऽपि सम्बन्धबोधादृते प्रवर्त्तते ।**

परिहरति—

**पदं तत्,**

पदं हि सम्बन्धग्रहणापेक्षमिति ।

ततः किमित्याह —

**न च तद्वाच्यो धर्मः,**

कि तर्हि ? इत्याह—

**वाक्यार्थ एव सः ॥ १९ ॥**

ननु वाक्यस्यापि सम्बन्धग्रहणापेक्षमेव वाचकत्वम्, अन्यथा प्रथमश्रवणेऽपि प्रतीतिप्रसङ्गादत आह—

**वाक्यस्यावाचकत्वं च,**

सत्यं यदि वाक्यं वाचकं स्यात्, न तु तद्वाचकम् ।

---

१. ०बाधेन—मु० पा० ।

कस्तर्हि वाक्यार्थावगतौ हेतुः ? इत्याह—

**पदार्थानां च हेतुता ।**

किं सम्बन्धग्रहणापेक्षाणामेव ? नेत्याह—

**सम्बन्धस्यानपेक्षाणां वाक्यार्थे स्थापयिष्यते ॥ २० ॥**

तदेतत् सर्वं तद्भूताधिकरणे ( जै० सू० १. १. २५ ) वक्ष्यत इति ॥ २० ॥

"नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना यथा यत्किञ्चन लौकिक वचनं नद्यास्तीरे पञ्च फलानि सन्तीति, तत्तथ्यमपि भवति, वितथमपि भवति" ( शा० भा० पृ० १५ ) इति भाष्यम्, तदनुपपन्नम् । कथ हि सम्भवद्दोषलौकिकवचनदृष्टान्तेन नित्यनिर्दोषचोदनाया अप्रामाण्य सम्भाव्येत ? अत आह—

**नित्यत्वादेरसिद्धत्वाद्,**

बाह्यानां हि वेदनित्यत्वमसिद्धम्, अतश्चोदनामपि पौरुषेयी मन्यमानाः पौरुषेयस्यैतादृशे प्रामाण्यासम्भवाल्लौकिकवचनसाम्येनाप्रामाण्यमापादयन्तीति ।

नित्यत्वाद्यभ्युपगपमेन वा चोद्यमित्याह—

**अभ्युपेत्योच्यतेऽथ वा ।**

कथ नित्यत्वे चोद्यम् ? इत्याह—

**सुतरामप्रमाणत्वं वक्तृप्रामाण्यवर्जनात् ॥ २१ ॥**

वक्तृप्रत्ययाधीनं हि शब्दस्य प्रामाण्यम्, असति वक्तरि दूरापास्त स्यादिति ॥ २१ ॥

वक्तृप्रामाण्याभावेऽपि स्वमहिम्नैव शब्दः कि प्रमाण न भवति ? अत आह—

**प्रमाणान्तरदृष्टं हि शब्दोऽर्थं प्रापयेत् सदा ।**
**स्मृतिवच्च स्वयं तस्य प्रामाण्यं नोपपद्यते ॥ २२ ॥**

लौकिकी हि प्रमाणगतिः परीक्षकैरनुसरणीया, लोके च प्रमाणान्तरप्राप्तार्थप्रापक एव शब्दः, अतोऽस्य स्मृतिवन्न स्वमहिम्ना प्रामाण्यमिति ॥ २२ ॥

नन्वदृष्टोऽपि स्वयमर्थ. पुरुषवचनात् प्रतीयते दूरदेशादिवार्तास्विव, कथमस्य प्राप्तप्रापकत्वम् ? अत आह—

**नूनं तत्रानुभूतोऽसावित्याप्तोक्तिनिबन्धना ।**
**बुद्धिः साक्षाददृष्टेऽपि युक्तार्थे पुरुषोक्तितः ॥ २३ ॥**

येय साक्षात्स्वयमदृष्टेऽप्यर्थे पुरुषोक्तितो बुद्धिः सा युक्ता, सा हि नून 'वक्त्रानुभूतोऽसावर्थः' इत्येव वक्त्रनुभवकल्पनापुरःसरा, तेन तत्रापि वक्तृप्रमाणप्राप्रस्यैवार्थस्य शब्दः प्रापको न स्वतन्त्रः । कुतः पुनर्वक्त्रनुभवकल्पनाऽऽप्तोक्तिनिबन्धना ? उक्तिः = उच्चारणम्, तन्निबन्धना, आप्तो नाननुभूतार्थं वाक्यं रचयति, तेनाप्तोच्चारणनिबन्धनवक्त्रनुभवानुमानद्वारा पुरुषवचनार्थे बुद्धिर्युक्तेति ॥ २३ ॥

यत्र त्वात्मीयमन्यदीयं वा प्रत्यक्षादिकं नास्ति तत्र वाक्यप्रामाण्य लोके न दृष्टमिति वेदेऽपि तथैव युक्तमित्याह्—

**नात्मीयादन्यदीयाद्वा प्रत्यक्षादेर्विना क्वचित् ।**
**वचसः सत्यता दृष्टा तथा स्याच्चोदनास्वपि ॥ २४ ॥**

ननु वेदादपि ज्ञान तावदुत्पद्यते किमित्यप्रमाणम् ? अत आह्—

**तेन सत्यपि विज्ञाने प्रतिज्ञादेर्यथैव[1] हि ।**
**स्वातन्त्र्यान्न प्रमाणत्वं तथा वेदेऽपि दृश्यताम् ॥ २५ ॥**

शब्दो हि यत्रैव उच्यते तत्रैव ज्ञानं जनयति, नार्थसदसद्भावावपेक्षते, यच्चैवमर्थसदसद्भावानपेक्षमत्यन्तस्वतन्त्र ज्ञान तस्य प्रतिज्ञाज्ञानवत् प्रामाण्यं न सम्भवति, प्रत्यक्षादिरहितत्वं वा स्वातन्त्र्यम् । तदेवं प्रयोग—वेदो न प्रमाणम्; स्वातन्त्र्यात्, प्रतिज्ञावदिति ॥ २५ ॥

प्रयोगान्तरमाह्—

**स्वर्गयागादिसम्बन्धविषया चोदना मृषा ।**
**प्रत्यक्षाद्यगतार्थत्वादीदृग्बुद्धादिवाक्यवत् ॥ २६ ॥**

बुद्धादिवचनमपि किञ्चित्सत्यमस्तीति साध्यवैकल्यं मा भूदिति ईदृग्ग्रहणम् । ईदृशं प्रत्यक्षाद्यनधिगतार्थं सत्यवचनादिवाक्यं तद्वदिति ॥ २६ ॥

अत्रैव हेतुदृष्टान्तान्तरमाह—

**यद्वाऽऽप्तेनाप्रणीतत्वाद् बालोन्मत्तादिवाक्यवत् ।**

प्रयोगान्तरमाह्—

**व्योमादिवच्च नित्यत्वात् प्रामाण्यस्य निराकृतिः ॥ २७ ॥**

नित्यत्वाभ्युपगमेन प्रसङ्गापादनान्न हेतो प्रतिवाद्यसिद्धिरुद्भावनीयेति ॥२७॥

प्रयोगान्तरमाह्—

**यदि वा पुरुषाधीनप्रामाण्याः सर्वचोदनाः ।**

प्रामाण्ये गुणवन्त पुरुषमपेक्षन्त इत्यर्थः । ततश्च पुरुषस्य गुणसद्भावो प्रमाणाभावादनायासेनाप्रामाण्य सिद्ध्यतीति अभिप्रायः ।

प्रयोगान्तरमाह—

**स्वतो वा न प्रमाणं स्युर्वाक्यत्वात् पुरुषोक्तिवत् ॥ २८ ॥**

प्रयोगान्तरमाह्—

**प्रामाण्यं वा नरापेक्षं सर्वशब्देषु गम्यताम् ।**
**शब्दैः सम्बध्यमानत्वादप्रामाण्यं तथैव[2] हि ॥ २९ ॥**

नरगुणापेक्षमित्यर्थः । तदपेक्षं च प्रामाण्यं वेदस्यापौरुषेयत्वात्, पौरुषेयत्वे वा गुणसद्भावे प्रमाणाभावान्न सिद्ध्यतीत्यभिप्रायः ॥ २९ ॥

---

१. प्रतिमादे०—मु० पा० ।    २. यथैव—मु० पा० ।

अवश्यं च वक्तृगुणाधीनं शब्दस्य प्रामाण्यमङ्गीकर्तव्यम्, तदन्वयव्यतिरेकानुविधानात्। यदि तथा सत्यपि तदधीनं न स्यात्, ततोऽप्रामाण्यमपि दोषाधीनं न स्यादित्याह—

**न स्याद् वक्तृगुणानां चेद्वचः प्रामाण्यहेतुता।**
**तद्दोषैरप्रमाणत्वं किमित्यस्य भविष्यति॥ ३०॥**

उपसंहरति—

**एवं स्थिते तु वेदस्य सति वाऽसति वा नरे।**
**प्रामाण्यं दुर्लभं मत्वा नन्वित्येतदचूचुदत्॥ ३१॥**

'सति नरे' इति नित्यत्वादेरसिद्धत्वादित्यस्योपसंहार, असतीत्यभ्युपेत्योच्यत इति॥ ३१॥

अत्र परिहारभाष्यम्—"विप्रतिषिद्धमिदमभिधीयते—ब्रवीति, वितथं च" ( शा० भा० पृ० १६ ) इति। तदाक्षिपति—

**तत्र विप्रतिषिद्धत्वं बुद्धवाक्येऽपि युज्यते।**
**ततोऽपि प्रत्ययोत्पत्तेस्तस्माज्जात्युत्तरं त्विदम्॥ ३२॥**

जात्युत्तरम् = उत्तराभासमिति॥ ३२॥

एवमाक्षिप्य तत्समाधित्सयैव तावदुपोद्घातचिन्तामवतारयति—

**सर्वविज्ञानविषयमिदं तावत् परीक्ष्यताम्[1]।**
**प्रमाणत्वाप्रमाणत्वे स्वतः किं परतोऽथ वा॥ ३३॥**

तदिहैव चिन्ता—किं ज्ञानस्य प्रामाण्यमप्रामाण्यं च स्वत एव निर्णीयते, किं वोभयमपि कारणगुणदोषादिना निरूपयितव्यम्, उताप्रामाण्यं स्वतः प्रामाण्यं परतः, विपरीतं वेति॥ ३३॥

तत्र प्रथमं[2]पक्षमुदाहरति—

**स्वतोऽसतामसाध्यत्वात् केचिदाहुर्द्वयं स्वतः।**

यस्य हि यत्र स्वाभाविकं सामर्थ्यं नास्ति न तत्तस्यान्येन साधयितुं शक्यते, अतो ज्ञानानामप्रामाण्यं प्रामाण्यं च स्वत एव साधयतीति।

[3]पक्षान्तरमाह—

**अपरे कारणोत्पन्नगुणदोषावधारणात्॥ ३४॥**

ज्ञानं हि प्रामाण्याप्रामाण्ययोः साधारण्यान्न स्वतः किञ्चिदवधारयितुं क्षमते, अतो गुणवता दोषवता च कारणेनोत्पन्नौ यौ ज्ञानस्य गुणदोषौ तद्वशेन यथार्थत्वरूपं प्रामाण्यमयथार्थत्वरूपं चाप्रामाण्यं निर्णेतव्यम्, अतो द्वयमपि परत इति॥ ३४॥

स्वतो द्वयमिति तावन्निराकरोति—

१. प्रतीक्ष्यताम्—मु० पा०। २. साङ्ख्यपक्षमित्यर्थः। ३. न्यायवैशेषिकाभिमतमित्यर्थः।

**स्वतस्तावद् द्वयं नास्ति, विरोधात्,**

प्रामाण्याप्रामाण्यशक्ती हि मिथो विरुद्धे, ते कथमेकस्मिन् ज्ञाने स्वाभाविक्यौ स्याताम्। एवं हि ज्ञानोत्पत्तिवेलायामेव प्रामाण्यमप्रामाण्यं च निर्णेतव्य स्यात्, तच्चाशक्यम्, तन्न तावद्—द्वयं स्वत इति।

नापि परत इत्याह—

**परतो न च।**

द्वयमित्यनुषङ्गः।

कारणमाह—

**निःस्वभावत्वमेवं हि ज्ञानरूपे प्रसज्यते ॥ ३५ ॥**

उत्पन्नं हि ज्ञानं गुणदोषावधारणात् प्रागर्थमवधारयति चेत् स्वत एव प्रामाण्यम्, नो चेदप्रामाण्यम्। उभयस्य तु पराधीनत्वे प्राग्वदवधारणादुभयरूपरहितं नि.स्वभावं विज्ञानं स्यात्, न ह्यर्थं नावधारयति न च नावधारयतीति सम्भवति। किञ्च, गुणदोषावधारणगम्यत्व प्रामाण्याप्रामाण्ययोर्वदता गुणजन्यं प्रामाण्यं दोषजन्य चाप्रामाण्यमित्यङ्गीकर्त्तव्यम्। तज्जन्यत्वे हि तयो. कारणभूताभ्यां ताभ्या काष्ठाग्निसयोगादिव धूमस्यावधारणं सम्भवति, नान्यथा। तज्जन्यत्वे च गुणदोषादिरहिताच्चक्षुरादेरुत्पन्नस्य प्रामाण्यमप्रामाण्यं चोभयं नास्तीत्यापद्यते, तच्चायुक्तम्; नि.स्वभावत्वप्रसङ्गादिति ॥ ३५ ॥

'स्वतो न द्वयं विरोधाद्' इति यदुक्तम्, तद्विवृणोति—

**कथं ह्यन्यानपेक्षस्य विपरीतात्मसम्भवः।**

एकस्य ज्ञानस्य कारणान्तरानपेक्षस्य स्वत एव प्रामाण्यमप्रामाण्यं चात्यन्तविपरीतरूप न सम्भवति। परतो न द्वयमित्येतद्विवृणोति—

**किमात्मकं भवेत्तच्च स्वभावद्वयवर्जितम् ॥ ३६ ॥**

सर्वं हि ज्ञान राशिद्वये शक्यमन्तर्भावयितुम्—प्रमाणमप्रमाण वेति, तदुभयरहितं ज्ञान किमात्मकं स्यादिति ॥ ३६ ॥

'स्वतो न द्वयं विरोधाद्' इत्यत्र किञ्चिदाशङ्कते—

**विज्ञानव्यक्तिभेदेन भवेच्चैवविरुद्धता।**

एकस्य हि विरुद्धरूपासम्भवः, विज्ञानव्यक्तिभेदात्तु न[1] विरोध इति।

परिहरति—

**तथाप्यन्यानपेक्षत्वे किं क्वेति न निरूप्यते ॥ ३७ ॥**

न तावज्ज्ञानत्वातिरिक्त किञ्चिच्चिह्नमस्ति—ईदृशं प्रमाणमीदृशमप्रमाणमिति। तत्सद्भावे वा तदधीननिरूपणात् स्वाभाविकत्वहानिः। अतो ज्ञानस्वभावत्वे यस्यामेव ज्ञानव्यक्तौ प्रामाण्य तस्यामेवाप्रामाण्यमपि भवत्येव, अतोऽस्त्येव

१. मु० पु० नास्ति।

विरोधः। अथापि ज्ञानव्यक्तिभेदः स्यात्, तथाप्यन्यस्य चिह्नस्यानाश्रयणात्कि क्वेति निरूपणाशक्तेः प्रमाणाप्रमाणसङ्करः स्यादिति ॥ ३७ ॥

एवमनयोरुक्तं दूषणमुपसंहरन् पक्षान्तरं परिगृह्णाति—

**तस्मात् स्वाभाविकं तेषामप्रमाणत्वमिष्यताम्।**
**प्रामाण्यञ्च परापेक्षम्,**

कुतः ? इत्याह सपादेन—

**अत्र न्यायोऽभिधीयते ॥ ३८ ॥**

**अप्रामाण्यमवस्तुत्वान्न स्यात् कारणदोषतः।**
**वस्तुत्वात्तु गुणैस्तेषां प्रामाण्यमुपजन्यते ॥ ३९ ॥**

अप्रामाण्य हि प्रामाण्याभावः। अभावश्चावस्तुत्वान्न केनचिज्जन्यते, अतो नाप्रामाण्यं दोषैर्जन्यते, अतज्जन्यं च न ततोऽवधारयितुं शक्यम्। प्रामाण्यं तु वस्तुत्वाद् गुणजन्यं सत्तदवधारणाधीननिर्णयमिति युक्तम्। किञ्च, घटादघटाच्च घटज्ञानदर्शनात् कथं तन्मात्रेण घटनिश्चयः, अतोऽवश्य गुणसवादार्थक्रियाज्ञानानामन्यतमेनैव घटज्ञानस्य यथार्थतालक्षणं प्रामाण्य निर्णेतव्यमिति ॥ ३८–३९ ॥

परत एव प्रामाण्यम्, स्वतः प्रामाण्ये च सर्वेषा स्वप्नादिज्ञानानामपि प्रामाण्यं स्यादित्याह—

**प्रामाण्यं हि यदोत्सर्गात् तदभावोऽथ कृत्रिमः।**
**तदा स्वप्नादिबोधेऽपि प्रामाण्यं केन वार्यते ॥ ४० ॥**

तेषामपि तावदुत्सर्गतः प्राप्तं प्रामाण्यम्, न च दोषाधीनेनाप्रामाण्येनापवादः सम्भवति, अप्रामाणस्यावस्तुत्वेन दोषाधीनत्वासम्भवादित्युक्तमिति ॥ ४० ॥

त्वत्पक्षे कथमप्रामाण्यम्, दोषादिति चेत्, तदवस्थ तर्ह्यवस्तुनो हेतुमत्त्वम् ? अत आह—

**मत्पक्षे कारणाभावात् प्रामाण्यं नोपजायते।**
**हेतुमत्त्वप्रसङ्गोऽतो न भविष्यत्यवस्तुनः ॥ ४१ ॥**

मम हि स्वाभाविकमप्रामाण्यम्, अपवादक तु प्रामाण्यम्, तच्चेह कारणाभावादनुपजातम्। अतः स्वाभाविकमप्रामाण्यमनपोदित तिष्ठति न तद्दोषैर्जन्यते, अतो न भविष्यत्यवस्तुनो हेतुमत्त्वप्रसङ्ग इति ॥ ४१ ॥

किं पुनः प्रामाण्यस्य कारणं तदभावादिह प्रामाण्यानुपजन ? अत आह—

**इन्द्रियादिगुणाश्चास्य कारणम्,**

ज्ञानकारणभूतेन्द्रियादिगता गुणाः प्रामाण्यस्य कारणम्, अतस्तदभावे तस्यानुपजन इति। केन पुनः प्रकारेण तस्याऽभावः ? अत आह—

**तदसद् द्विधा।**

तावेव प्रकारौ दर्शयति—

**दुष्टत्वादिन्द्रियादीनामभावेऽन्यतमस्य[1] वा ॥ ४२ ॥**

शुक्तिरजतसंवेदने सतामेवेन्द्रियाणां दुष्टत्वाद्दोषनिराकृतत्वाद् गुणानामभावः स्वप्नादिष्विन्द्रियादीनां ज्ञानकारणानामन्यतमस्येन्द्रियस्य लिङ्गस्य वा अन्यस्य वा अभावान्निराश्रयतया गुणानामभाव इति ॥ ४२ ॥

ननु ज्ञायमानेषु सत्सु दोषेष्वप्रामाण्यं गम्यते, तत्कथं न दोषनिमित्तम्? अत आह—

**अत एव च वो भ्रान्तिर्दोषैर्मिथ्यात्वधीरिति ।**
**तद्व्याप्तेस्तु गुणाभावस्तत्कृता ह्यप्रमाणता ॥ ४३ ॥**

यत एव दोषनिराकृतगुणेषु शुक्तिरजतवेदनादिष्वप्रामाण्यम्, अत एव वो मीमांसकानामियं भ्रान्तिर्दोषैर्मिथ्यात्वधीर्ज्ञानस्य मिथ्यात्वावगम इति तद्भाव-भावभ्रमात् । परमार्थतस्तु तद्व्याप्तेर्दोषव्याप्तेरिन्द्रियादीनां गुणाभावोऽवगम्यते, तदभावाच्च तदधीनं प्रामाण्यमनवगम्यमानं न स्वाभाविकस्याप्रामाण्यस्याप-वादकं भवतीत्यनपोदितैवाप्रमाणतावतिष्ठते । तत्कृता = गुणाभावकृता । तत्कृतत्वं चापवादाभावस्य तदधीनत्वादिति ॥ ४३ ॥

एतदेवोपसंहरति —

**तस्मात् कारणशुद्धत्वं ज्ञानप्रामाण्यकारणम् ।**
**स्वभावतोऽप्रमाणत्वं तदभावेन लक्ष्यते ॥ ४४ ॥**

एवं तावद्दोषान्वयव्यतिरेकावप्रामाण्यस्याङ्गीकृत्याप्यसिद्धिरुक्ता, सम्प्रत्य-न्वयव्यतिरेकावपि न स्त इत्याह—

**अन्वयव्यतिरेकाभ्यामप्रामाण्यं न दोषतः ।**

अन्वयव्यतिरेकाभ्यामप्रामाण्यं दोषत इति यदुच्यते तन्नेत्यन्वयः । कथम्? इत्याह—

**नाज्ञाने दृश्यते ह्येतत्कारणाभावहेतुके ॥ ४५ ॥**

त्रिविधमप्रामाण्यं संशयाज्ञानविपर्ययैः, तत्राज्ञानलक्षणस्याप्रामाण्यस्य दोषाधीनत्वं नास्ति, ज्ञानकारणाभावादेव तत्सिद्धेरिति । केचित्त्वज्ञाने दोषव्य-तिरेकेऽप्यप्रामाण्यान्वयान्न दोषो निमित्तमित्येवं व्याचक्षते ॥ ४५ ॥

आक्षेपमुपसंहरति—

**ततश्च पुरुषाभावात् सति वा शुद्ध्यसम्भवात् ।**
**निर्मूलत्वात् प्रमाणत्वं चोदनायां न युज्यते ॥ ४६ ॥**

यदा हि गुणापेक्षं प्रामाण्यं तदा शब्दस्य पुरुषशुद्ध्यधीनं प्रामाण्यम्, वेदस्य चापौरुषेयत्वे निराश्रयत्वादेव शुद्ध्यभावः । पौरुषेयत्वे पुरुषस्यातीन्द्रियार्थे

१. अन्यतरस्य—मु० पा० ।
२. वचोऽभ्रान्ति०—मु० पा० ।

नैव शुद्धिः सम्भवतीत्यप्रामाण्यं वेदस्य। स्वतो द्वयमित्यत्रापि साङ्कर्यादेव प्रामाण्यानिर्णयात् फलतोऽप्रामाण्यमेव, परतो द्वयमित्यत्रापि गुणाभावादेवाप्रामाण्यमिति ॥ ४६ ॥

अत्र प्रतिविधत्ते--

**स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्।**

कारणमाह—

**न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥ ४७ ॥**

यदि ज्ञानस्य स्वविषयतथात्वावधारणे स्वतः शक्तिर्न स्यात्, तदा नान्येनापि शक्यते सम्पादयितुम्, अतो न कदाचित् कस्यचित् कश्चिदप्यर्थोऽवधार्येतेत्यान्ध्यमेवाशेषस्य जगतः प्रसज्येत। कुतश्चास्य परतः सिद्धिः? गुणावधारणादिति चेत्। के पुनर्गुणा नाम? न हि चक्षुरादिषु गुणा नाम केचिदुपलभ्यन्ते। वैमल्यं गुण इति चेत्, नन्वेवं दोषाभावो गुणः, तथा चेद् वेदस्यापि तत्सम्भवाद् गुणाधीनेऽपि प्रामाण्ये नास्माकं काचित् क्षतिः। कथं च गुणात्तत्सिद्धिः, गुणनिमित्तं विज्ञानस्य यथार्थविषयत्वम्, अतः कारणभूतगुणावगमेन विषयस्यार्थस्य तथात्वमवगम्यते। विषयतथात्वमेव च ज्ञानस्य प्रामाण्यम्, अतोऽस्य गुणावगम्यत्वमिति चेत्? स्यादेव यदि गुणनिमित्तं यथार्थत्वं स्यात्, न तु तदस्ति। यदि हि तन्निमित्तं स्यात्, तदा गुणरहिताद्दोषयुक्ताच्च चक्षुरादेरुपजाते पीतशङ्खादिज्ञाने न किञ्चित् सत्यं गम्येत, गम्यते तु तत्रापि शङ्खरूपादिकं सत्यम्। अतः स्वकारणनिमित्तमेव ज्ञानस्य यथार्थत्वं तद्दोषनिमित्तं चायथार्थत्वम्। तथा हि सति पीतशङ्खादिज्ञानस्य स्वकारणतः सत्यविषयत्वम्, तद्दोषतश्चासत्यविषयत्वं युक्तं भविष्यति ॥ ४७ ॥

अभ्युपेत्यापि प्रमाणज्ञानस्य गुणवत्कारणजन्यत्वं विषयावधारणस्य तदधीनत्वं नास्तीत्याह—

**आत्मलाभे च भावानां कारणापेक्षता भवेत्।**
**लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥ ४८ ॥**

सर्वे हि भावाः स्वात्मलाभायैव स्वकारणमपेक्षन्ते, घटो हि मृत्पिण्डादिकं स्वजन्मन्येवापेक्षते, नोदकाहरणेऽपि। तथा ज्ञानमपि स्वोत्पत्तौ गुणवदितरद्वा कारणमपेक्षतां नाम, स्वकार्ये तु विषयनिश्चयेऽनपेक्षमेवेति ॥ ४८ ॥

यदुक्तम्—'न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते' इति, तद्विवृणोति त्रयेण—

**जातेऽपि यदि विज्ञाने तावन्नार्थोऽवधार्यते[1]।**

1. तवान्नार्थो—मु० पा०।

**यावत्कारणशुद्धत्वं न प्रमाणान्तराद् भवेत् ॥ ४९ ॥**
**तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात् ।**
**यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा ॥ ५० ॥**
**तस्यापि कारणे शुद्धे तज्ज्ञाने स्यात् प्रमाणता ।**
**तस्याप्येवमितीच्छँश्च न क्वचिद्व्यवतिष्ठते ॥ ५१ ॥**

यद्युपजातमपि ज्ञान स्वविषयावधारणाय स्वकारणगतगुणावधारणमपेक्षते, ततो गुणावधारणाय प्रमाणान्तराज्ज्ञानोत्पाद प्रतीक्षितव्य.। न ह्यपरिच्छिन्नो गुणः प्रामाण्य गमयति, असत्समत्वात्, तदपि ज्ञान विषयज्ञानवदेव स्वविषयावधारणाय स्वकारणगुणावधारक ज्ञानान्तरमपेक्षते, तदपि तथेति जन्मसहस्रेणापि न कश्चिदर्थोऽवधार्येतेति प्रामाण्यमेव सर्वत्रोच्छिद्येत। अत. प्रामाण्यं चेदस्ति स्वत एवाङ्गीकर्त्तव्यमिति ॥ ४९-५१ ॥

ननु स्वतः प्रामाण्येऽप्यपवादकदोषाभावग्रहणेऽस्त्येवानवस्था ? अत आह—

**यदा स्वतः प्रमाणत्वं तदान्यन्नैव गृह्यते ।**
**निवर्त्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः ॥ ५२ ॥**

स्यादेवं यद्यपवादकाभावाय दोषाभावो ग्रहीतव्य., न त्वेवम्, ज्ञायमाना हि दोषाः प्रामाण्य विघ्नन्तीति तदज्ञानादेव तदपवादकं मिथ्यात्वं निवर्त्तते तदज्ञान चायत्नसिद्धमिति[1] न काचिदनवस्थेति ॥ ५२ ॥

उपसंहरति—

**तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।**
**अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ ५३ ॥**

प्राप्ता = अवगता, प्रमाणता = विषयतथात्वम्, अर्थान्यथात्वकारणगतदोषज्ञानाभ्यामवगतेनाप्रामाण्येनापोद्यते—नैवमयमर्थ इति ॥ ५३ ॥

नन्वप्रामाण्यमवस्तुत्वान्न दोषजन्यम्, अतज्जन्य च कथं ततोऽवगम्यते ? अत आह—

**अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः ।**

तत किम् ? इत्याह—

**वस्तुत्वाद् द्विविधस्यात्र सम्भवो दुष्टकारणात् ॥ ५४ ॥**

संशयो नाम स्थाणुर्वा पुरुषो वेत्यनवधारणात्मकः प्रत्ययः, विपर्ययोऽपि अतथाभूतार्थे तथाभावनिश्चायकं ज्ञानमेव, अतस्तयोर्वस्तुत्वात् सम्भवति दोषजन्यत्वम्। दोषनिमित्तं हि ज्ञानस्यायथार्थत्वम्, दोषान्वयव्यतिरेकानुविधानात्। अतो दुष्टकारणजन्येन ज्ञानेनात्मनः प्रामाण्यं विषयस्यार्थस्यातथाभूतस्यापि तथात्वमवगतमप्यर्थान्यथात्वज्ञानेन दोषज्ञानेन वा अपोद्यते ॥ ५४ ॥

१. वा यत्र सिद्ध०—मु० पा०।

यत्त्वज्ञानरूपमप्रामाण्यं तत्र दोषाणां व्यापारो नैवास्माकमपि विद्यते ज्ञानकारणाभावादेव, तद्भवतामिवास्माकमपि सिद्धमित्याह—

**अविज्ञाने तु दोषाणां व्यापारो नैव कल्प्यते।**
**कारणाभावतस्त्वेव तत्सिद्धं नस्त्वदुक्तिवत् ॥ ५५ ॥**

ननु प्रामाण्यवदप्रामाण्येऽपि परायत्ते किमित्यनवस्था न भवति ? आह—

**दोषतश्चाप्रमाणत्वे स्वतःप्रामाण्यवादिनाम् ।**
**गुणज्ञानानवस्थावन्न दोषेषु प्रसज्यते ॥ ५६ ॥**

स्वतःप्रामाण्यवादिनामिति वा अनवस्थाभावे हेतुः। न हि पराधीनत्वमात्रेणानवस्था भवति, सजातीयापेक्षायां ह्यनवस्था भवति। तेन यदि प्रमाणान्तरायत्तप्रामाण्यवदप्रमाणान्तरायत्तमप्रामाण्यं स्यात्तत स्यादनवस्था, तत्तु प्रमाणभूतार्थान्यथात्वदोषज्ञानाधीनम्, प्रामाण्यं च स्वत इति नानवस्था ।। ५६ ।।

एतदेव विवृणोति—

**साक्षाद्विपर्ययज्ञानाल्लघ्व्येव त्वप्रमाणता।**

यत्र तावत्साक्षादेकस्मिन्विषये विपर्ययज्ञानं विपरीतरूपाज्ञानं नेदं रजतमिति तत्र तेनैव स्वत. प्रमाणेनार्थान्यत्वरूपा लघ्वी शीघ्रगम्यैवाप्रमाणतेति नानवस्थाशङ्केति। किमिति पुनस्तद्वशेन पूर्वस्याप्रामाण्यम्, विपरीत कस्मान्न भवति ? इत्यत आह—

**पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति ॥ ५७ ॥**

पूर्वं हि परमबाधित्वोत्पद्यते, परस्य तदानीमनुत्पन्नत्वात्। उपजाते तु तस्मिन्नुपजायमानेनैव तेन बाधित पूर्वमसत्त्वान्न परस्य बाधकं भवति, परं तु पूर्वस्मिन्नुपजाते तद्विरुद्धर्थोपस्थापकमुपजायमानमेव तस्य बाधकं भवतीति ।। ५७ ।।

कथ वा लघ्वीत्याह—**पूर्वेति**। ततश्च पूर्वाबाधेनोत्पत्तिमेवानासादयतोऽन्तरेणोत्पत्त्यवस्थायामेवार्थान्यथात्वरूपाप्रामाण्यबोधनाल्लाघवमिति।

भवत्वेवम्, समानविषयेणार्थान्यथात्वज्ञानेन[१] पूर्वस्य बाधः सम्भवत्यत आह—

**दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे।**
**अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥ ५८ ॥**

यद्यप्यत्र साक्षाद्विपर्ययज्ञानाभावान्न पूर्ववदप्रमाणता लघ्वी भवति, तथापि कारणदोषावगमप्रणाड्या अर्थात्तुल्यार्थता प्राप्य कियता विलम्बेनास्त्येव बाधः, यथा गोदोहनेन पशुकामस्य प्रणयेदिति पुरुषार्थेनापि गोदोहनेन चमसस्य क्रत्वर्थस्याप्यार्थिकतुल्यविषयतया भवति बाधः, द्वयोरपि प्रणयनद्वारत्वात्तत्र गोदोहनेन

---

१. ०ज्ञाना०—मु० पा०।

२. ०विशेषेणा०—मु० पा०।

प्रणयने साधिते, दोषज्ञानेन तु भिन्नविषयेण कथं पीतशङ्खज्ञानं बाध्यते? पीतशङ्खज्ञानं हि शङ्खे पीतिमानमवगमयति, दोषज्ञानं तु नेत्रे पित्तदोषम्, अतो नात्र बाधः। चमसस्यार्थाभावान्निवृत्तिः, एवमत्राप्यस्त्येवार्थतस्तुल्यविषयत्वम्। पीतज्ञानं हि पित्तं गृह्णाति, तच्च श्वेते पीतभ्रमस्य कारणतयावगते चक्षुषि दृश्यमानं स्वकार्यस्य पीतज्ञानस्य भ्रान्तत्वमवगमयति, तद्भ्रान्तत्वेन चार्थान्यथात्वमिति बाधसिद्धिः॥ ५८॥

किमेष एवोत्सर्गः यत्सर्वस्याद्यस्य द्वितीयेन बाध इति? नेत्याह—

**तत्र दोषान्तरज्ञानं बाधधीर्वा परा न चेत्।**
**तदुद्भूतौ द्वितीयस्य मिथ्यात्वादाद्यमानता॥ ५९॥**

तत्र द्वितीये बाधकज्ञाने तृतीयं दोषान्तरज्ञानं बाधधीर्वा यदि नोद्भवति तत् तस्याद्यबाधकत्वम्, तदुद्भूतौ तु द्वितीयस्य मिथ्यात्वादाद्यस्य प्रामाण्यं भवतीति॥ ५९॥

नन्वेवं तृतीयाधीनमाद्यस्य प्रामाण्यं परत एव स्यादत आह—

**स्वत एव हि तत्रापि दोषाज्ञानात् प्रमाणता।**

तदुत्पत्तिनैव स्वार्थं परिच्छिन्दत् स्वत एव प्रमाणम्, द्वितीयेन तु दोषज्ञानेन भ्रान्त्या प्रसक्तबाधनम्, तृतीयेन तु द्वितीये बाधिते तद्ज्ञानदोषत्वान्निरपवादं भवति।

ननु यथा आद्यस्य द्वितीयेन दोषावगमात् तस्यापि तृतीयेन, तथा तृतीयस्यापि दोषाशङ्का भवत्येव, तथा सर्वत्रापि न क्वचिदाश्वासः स्यात्? अत आह—

**दोषज्ञाने त्वनुत्पन्ने न शङ्क्या निष्प्रमाणता॥ ६०॥**

दिक्कालावस्थेन्द्रियविषयदोषा हि मिथ्यात्वहेतवो लोकप्रसिद्धा यत्र नैव सम्भवन्ति, यथा [1]जागर्यायामालोके स्वस्थेन्द्रियमनस्कस्य सन्निहितघटज्ञानं; तत्र नैव दोषाशङ्का, तदभावाच्चाप्रामाण्यशङ्कापि नैव भवति। यथाविधेषु ह्यप्रामाण्यसम्भवस्तथाविधेष्वेव तदाशङ्का भवति, सम्भावितदोषेषु च तत्सम्भव इति कथमन्यत्र शङ्क्यते! न हि ज्ञानत्वमात्रेण संशयो युक्तः; संशयस्य साधारणधर्मादिनिश्चयाधीनत्वात्। तदवश्य कानिचिज्ज्ञानान्यसन्दिग्धप्रामाण्यान्येवोत्पद्यन्ते। तस्मान्न सर्वत्राशङ्का। यत्रापि दूरत्वादिदोषसम्भवादप्रामाण्यशङ्का तत्रापि प्रत्यासत्तिगमनादिनान्यतरपदार्थनिर्णयान्नातिदूरगमनमिति॥ ६०॥

**एवं च, तृतीयज्ञाने दोषो यदि न सम्भावितस्ततस्तदवधिरेव निर्णयः। अथ तु सम्भावितस्ततस्तन्निराकरणप्रयत्नेन चतुर्थज्ञानावसानो निर्णय इति नाधिकज्ञानापेक्षा। तावतैव तृतीयेन चतुर्थेन वा द्वितीयस्य तृतीयस्य बाधे**

---

१. जागरणावस्थायामित्यर्थः।

सति यस्यैवाद्यस्य द्वितीयस्य वा अप्रामाण्य समर्थ्यते तस्य स्वाभाविकं प्रामाण्यमनपोदित भवति, इतरच्चापवादादप्रमाणमिति नानवस्था। तदिदमाह—

**एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः।**
**प्रार्थ्यते तावतैवैकं[1] स्वतः प्रामाण्यमश्नुते॥ ६१॥**

एवं सामान्येन स्वत प्रामाण्यम्, परतश्चाप्रामाण्यमुपपाद्य, अधुना प्रकृतवेदप्रामाण्यसिद्धये शब्दस्वभावमनुसन्धत्ते—

**शब्दे दोषोद्भवस्तावद् वक्त्रधीन इति स्थितिः।**

वक्तृदोषाधीने इत्यर्थः।

तदभावस्तर्हि कथम्? इत्यत आह—

**तदभावः क्वचित् तावद् गुणवद्वक्तृकत्वतः॥ ६२॥**

क्वचित्=पौरुषेयवाक्ये॥ ६२॥

कथमेतद्? इत्याह—

**तद्गुणैरपकृष्टानां शब्दे संक्रान्त्यसम्भवात्।**

वेदे तु पुरुषाभावादेव निराश्रयत्वाद्दोषाणामभाव इत्याह—

**यदा वक्तुरभावेन न स्युर्दोषा निराश्रयाः॥ ६३॥**

दोषाभावाच्च वेदस्यौत्सर्गिक प्रामाण्यमनपोदित भवति॥ ६३

ननु वक्तृगुणान्वयव्यतिरेकानुविधायित्वाच्छब्दस्य प्रामाण्यं तदधीनमेव युक्तम्, तदभावाच्च वेदस्याप्रामाण्यमेव युक्तम्? अत आह—

**पौरुषेये द्वयं दृष्टं दोषाभावो गुणास्तथा।**
**प्रामाण्यं तत्र गुणतो नैव स्यादित्युदाहृतम्॥ ६४॥**

सर्वत्र प्रमाणभूतपौरुपेयवचसि न केवलं गुणा एव, दोपाभावोऽपि दृष्टः। तत्र गुणनिबन्धनत्व प्रामाण्यस्य प्रागेव निरस्तम् अतो दोषाभावनिबन्धनमेव तदतो वेदस्यापि सिध्यतीति॥ ६४॥

ननु दोपाभावनिबन्धनमपि परत एव स्यादितीमामाशङ्कामपनुदन्नुपसंहरति—

**तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः।**
**अप्रामाण्यद्वयासत्त्वं[2] तेनोत्सर्गोऽनपोदितः॥ ६५॥**

दोपाभावोऽपवादाभाव एको युज्यते न साक्षात् प्रामाण्ये अप्रामाण्यद्वयासत्त्वमिति। यत्रापि साक्षाद्विपर्ययज्ञानादर्थान्यथात्वमवगम्यते[3], यत्रापि दोषज्ञानेन—तत्रोभयत्रापि ज्ञानस्यायथार्थविषयत्वे दोषा एव कारणम्, अतो दोषाभावे द्वयासत्त्वादुत्सर्गस्यानपवाद इति॥ ६५॥

असति चापवादे यत्प्रत्ययोत्पत्तिहेतुत्वात् प्रत्यक्षादिवत्पुरुषवाक्यस्यापि प्राप्तं प्रामाण्यम् तन्नापनीयत इत्याह—

---

१. एके—का०।  २. ०सत्त्वात्—पाठान्तरम्।
३. गम्यते—२ पु०।

**प्रत्ययोत्पत्तिहेतुत्वात् प्रामाण्यं नापनीयते ।**

तेन लोकेऽपि शब्दस्य स्वत एव प्रामाण्याद्वेदस्यापि तत्सिद्धिरिति ।

अत्र गुणेभ्यो दोषाभावः पौरुषेयेष्वित्येतच्छ्रुत्वा कश्चिच्चोदयति—

**दोषाभावो गुणेभ्यश्चेन्ननु सैवास्थितिर्भवेत् ? ॥ ६६ ॥**

परिहरति—

**तदा तु[1] व्याप्रियन्ते हि ज्ञायमानतया[2] गुणाः ।**

**दोषाभावे तु विज्ञेये सत्तामात्रोपकारिणः ॥ ६७ ॥**

प्रामाण्यावधारणे हि ज्ञायमानतया गुणा कारणमिति स्यादनवस्था, दोषाभावे तु सत्तामात्रोपकारिणस्ते, तन्निराकृतास्तु दोषा नौत्सर्गिक प्रामाण्यमपवदन्तीति ॥ ६७ ॥

स्यात् तावदेवं गुणनिराकृतदोषेष्वाप्तवाक्येष्वपवादनिर्मुक्तिः, वेदे तु गुणरहिते कथम् ? अत आह—

**तत्रापवादनिर्मुक्तिर्वक्त्रभावाल्लघीयसी ।**

**वेदे तेनाप्रमाणत्वं नाशङ्कामपि गच्छति ॥ ६८ ॥**

एवं लोकेऽपि शब्दप्रामाण्यस्य वक्त्रपेक्षाभावाद् यद्वेदस्य प्रामाण्यसिद्ध्यर्थं नैयायिकादिभिः कर्त्तुरुपासनमुपपादन कृतं तदनर्थकमित्याह—

**अतो वक्त्रधीनत्वात् प्रामाण्ये तदुपासनम् ।**

**न युक्तम्,**

यदि तु शाक्यादिवदप्रामाण्यमेव वेदस्य कल्पयितव्यम्, ततोऽर्थवती कर्तृप्रार्थनेति सोपहासमाह—

**अप्रमाणत्वे कल्प्ये तत्प्रार्थना[3] भवेत् ॥ ६९ ॥**

ततश्च यदुक्तम्–'सुतरामप्रमाणत्वं वक्तृप्रामाण्यवर्जनात्' (श्लो० वा० २-२१) इति, तदयुक्तमित्याह—

**ततश्चाप्ताप्रणीतत्वं न दोषायात्र जायते ।**

ये तु 'स्वर्गयागादिसम्बन्धविषया' इत्यादयः प्रयोगास्ते सप्रतिसाधनत्वान्न वेदाप्रामाण्यमापादयन्तीत्याह—

**प्रयोगाणां तु सर्वेषां वक्ष्यामः प्रतिसाधनम् ॥ ७० ॥**

'चोदनाजनिता बुद्धिः' ( श्लो० वा०-२-१८४ ) इत्यादिना वक्ष्यत इति ॥७०॥

ननु पौरुषेयमपि चेत् स्वतः प्रमाणं, किं तस्यापि मूलप्रमाणेन ? अत आह—

**पौरुषेये तु वचने प्रमाणान्तरमूलता ।**

प्रमाणान्तरमूलता अपेक्षणीयैवेति । कथम् ? इत्याह—

**तदभावे हि तद् दुष्येदितरन्न कदाचन ॥ ७१ ॥**

प्रमाणाभावे हि तदर्थादप्रमाणमूलतया दृष्टं भवति, दोषाच्च प्रामाण्यापवाद

---

१. न—मु० पा० । २. ज्ञानमानतया—मु० पा० । ३. नात्मार्थता—२ पु० ।

इत्यनपवादाय प्रमाणान्तरमपेक्षते, इतरत्तु वैदिक तदभावेऽपि न दुष्यतीति नाप्रमाण भवतीति ॥ ७१ ॥

न केवलं दोषाभाव , किन्तु गुण एव मूलप्रमाणाभावे वेदस्येत्याह—

**तेनेतरैः[1] प्रमाणैर्या चोदनानामसङ्गतिः[2] ।**
**तयैव स्यात् प्रमाणत्वमनुवादत्वमन्यथा ॥ ७२ ॥**

तेन मूलप्रमाणाभावेनाजाता येयं प्रमाणान्तरसङ्गतिस्तयैव प्रागाण्यम्, अन्यथानुवादत्वापत्तेरिति ॥ ७२ ॥

ननु संवादनिबन्धनमेव सर्वेषां प्रत्यक्षादीना पौरुषेयवाक्याना च प्रामाण्यम्, न चासौ वेदस्यास्तीति कथ प्रामाण्यम् ? अत आह—

**अन्यस्यापि प्रमाणत्वे सङ्गतिर्नैव कारणम् ।**

पूर्वत्र गुणनिबन्धनत्व निराकृतम्, अधुना संवादाधीनत्वमिति वेदितव्यम् ।

संगतिर्न कारणम्, किन्तु विरोधिन्येवेति कथम् ? इत्याह—

**तुल्यार्थानां विकल्प्यत्वादेकं तत्र हि बोधकम् ॥ ७३ ॥**

यत्रैकस्मिन्विषयेऽनेकैविज्ञानसन्निपातस्तत्र तेषामन्योन्यनिरपेक्षार्थपरिच्छेद-हेतुत्वेन तुल्यानामेव प्रामाण्यम्, न समुच्चितानाम् । अतो न संवादाधीनं प्रामाण्य-मिति ॥ ७३ ॥

नन्वेकमेवार्थं दूराद् दृष्ट्वापि पुनः प्रमित्सयैव प्रत्यासीदन्तो दृश्यन्ते तत्पूर्वस्य नैरपेक्ष्ये नोपपद्यते, अत सवादापेक्षमेव प्रामाण्यम् ? अत आह—

**यत्रापि स्यात् परिच्छेदः[3] प्रमाणैरुत्तरैः पुनः ।**
**नूनं तत्रापि पूर्वेण सोऽर्थो नावधृतस्तथा ॥ ७४ ॥**

अप्रमितविशेषप्रमित्सया तत्र प्रत्यासत्तिर्न पुन· प्रमितस्य संवादायेति ॥७४॥

सङ्गतिनिबन्धन च प्रामाण्य गुणनिबन्धनवदेव न क्वचिद् व्यवतिष्ठत इत्याह—

**सङ्गत्या यदि चेष्येत पूर्वपूर्वप्रमाणता ।**
**प्रमाणान्तरमिच्छन्तो न व्यवस्थां लभेमहि ॥ ७५ ॥**

ननु विषयज्ञानस्यार्थक्रियाज्ञानाधीनं प्रामाण्यम्, तच्च स्वतः प्रमाणमिति नानवस्था । यथाऽऽह **धर्मकीर्तिः—**

"प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिः ।
अविसंवादनम्" ( प्र० वा० १–३ ) इति ।

**न्यायविदो**ऽप्याहु —'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्' ( न्या० सू० १. १. १ ) इति ।

---

१. तेनेतरेः—मु० पा० । २. असवाद इत्यर्थः । ३. निश्चय इत्यर्थः ।

तदिदमाशङ्कते—

**कस्यचित् तु यदीष्येत स्वत एव प्रमाणता ।**

परिहरति—

**प्रथमस्य तथाभावे प्रद्वेषः किंनिबन्धनः ॥ ७६ ॥**

न विषयज्ञानार्थक्रियाज्ञानयोः कश्चिद् विशेष इति दर्शितं **न्यायरत्नमालायाम्, शास्त्रदीपिकायां** च ॥ ७६ ॥

इतश्च न सवादाधीनं प्रामाण्यमित्याह—

**श्रोत्रधीश्चाप्रमाणं स्यादितराभिरसङ्गतेः ।**

इतराभिः, नेत्रादिधीभिरित्यर्थः । शङ्कते—

**स्याच्चेत्तज्जनितेनैव ज्ञानेनान्येन सङ्गतिः ॥ ७७ ॥**

परिहरति—

**वेदेऽपि शतकृत्वः स्याद् बुद्धिरुच्चारणानुगा ।**

अथ वेदस्य विजातीयसवादाभावादप्रामाण्य तच्छ्रोत्रबुद्धेरपि स्यादित्याह—

**साधनान्तरजन्या तु बुद्धिर्नास्ति द्वयोरपि ॥ ७८ ॥**

ततश्च संवादकारणवादिना सजातीयसंवादोऽपि कारणमिति वेदितव्यम् । ततश्च सिद्ध्यति वेदस्यापि प्रामाण्यमित्याह—

**यथा त्वेकेन्द्रियाधीनज्ञानान्तरनिबन्धना ।**
**सङ्गतिः कारणं प्राप्ता[1] तथा वेदेऽपि कल्प्यताम् ॥ ७९ ॥**

यत एव गुणसंवादार्थक्रियादीनामपेक्षा नास्ति तस्मादीदृशं ज्ञान प्रमाणमित्याह—

**तस्माद् दृढं यदुत्पन्नं नापि संवादमृच्छति ।**
**ज्ञानान्तरेण विज्ञानं तत्प्रमाणं प्रतीयताम् ॥ ८० ॥**

ननु न क्वचिदप्याप्ताप्रणीतस्य वाक्यस्य प्रामाण्यं दृष्टम्, तत्कथं वेदस्य स्यात् ? अत्राह—

**न चानुमानतःसाध्या शब्दादीनां प्रमाणता ।**

अनुमानसाध्ये हि प्रामाण्ये दृष्टान्तापेक्षा, न तु तत्तथेति ।

कस्मात् ? इत्याह—

**सर्वस्यैव हि मा प्रापत् प्रमाणान्तरसाध्यता ॥ ८१ ॥**

अनुमानापेक्षत्वे सत्यनुमानस्याप्यनुमानान्तरापेक्षत्वात् सैवानवस्था स्यादिति ॥ ८१ ॥

---

१. प्राप्य—मु० पा० । प्राप्तमित्यपि उचितः पाठः ।

चोदयति—

**ननु प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते।**
**न चेत्थमगृहीतेन व्यवहारोऽवकल्पते ॥ ८२ ॥**

नान्यापेक्षं प्रामाण्यम्, किन्तु स्वत सिद्धमित्युक्तम्। न च प्रत्यक्षादिज्ञान-मुत्पद्यमानमेव प्रमाणमित्येव गृह्यते, न हि तदात्मानं गृह्णाति, कथ तद्धर्मत्वेन प्रामाण्यं गृह्णीयात्। न चागृहीतप्रामाण्येन व्यवहारसिद्धिरिति ॥ ८२ ॥

परिहरति—

**प्रामाण्यं[१] ग्रहणात् पूर्वं स्वरूपेणैव संस्थितम्।**
**निरपेक्षं स्वकार्येषु गृह्यते प्रत्ययान्तरैः ॥ ८३ ॥**

विनैवात्मग्रहणेन प्रमाण स्वसत्तामात्रेणैव सस्थितं कृतकार्यं भवति अर्थपरि-च्छेदकरणात्, परिच्छिन्ने चार्थे तन्मात्रनिबन्धनत्वात्। कार्यस्य व्यवहारस्य तत्रापि नान्यापेक्षा। एवं कृतकार्यं पश्चात् सजाताया जिज्ञासायामानुमानिकैः प्रत्ययान्तरैर्गृह्यते। यथा वक्ष्यति—ज्ञाते त्वनुमानादवगच्छाम इति। ॥ ८३ ॥

तेनास्य ज्ञानस्य ज्ञायमानत्वमात्मीयप्रामाण्ये ग्रहीतव्ये नोपयोग्येवेत्याह—

**तेनास्य[२] ज्ञायमानत्वं[३] प्रामाण्ये नोपयुज्यते।**

कथं तदज्ञानेन तत्प्रामाण्यग्रहणम्? इत्याह—

**विषयानुभवो ह्यत्र पूर्वस्मादेव लभ्यते ॥ ८४ ॥**

न ज्ञानसम्बन्धित्वेन प्रामाण्यं गृह्यत इति ब्रूमः, किन्तु विषयतथात्वं तद्वि-ज्ञानस्य प्रामाण्यम्, तन्निबन्धनत्वाज्ज्ञाने प्रमाणबुद्धिशब्दयोः। तच्चाज्ञातादेव ज्ञानात् स्वत एव गृहीतमित्यनर्थकं प्रमाणान्तरमिति। अप्रमाणं तु न स्वीयम-प्रामाण्यं स्वतो गमयति। तदपि हि स्वरूपेणैवार्थं गृह्णाति स्वानुरूपमिति यावत्। रजतज्ञानं हि शुक्तिकाशकल रजतमित्येव गृह्णाति, न पुन.—नेद रजतमिति। तेनाप्रमाणज्ञानमपि स्वतः प्रामाण्यमेवात्मनोऽविद्यमानमपि गृह्णत् तन्निबन्धनं व्यवहार प्रवर्त्तयति ॥ ८४ ॥

तत्राप्रामाण्यग्रहणाय व्यवहारनिवृत्तये वास्ति परापेक्षेत्याह—

**अप्रमाणं पुनः स्वार्थग्राहकं स्यात् स्वरूपतः।**
**निवृत्तिस्तस्य मिथ्यात्वे नागृहीते परैर्भवेत् ॥ ८५ ॥**

तदेव व्यनक्ति—

**न ह्यर्थस्यातथाभावः पूर्वेणार्थस्तथात्ववत्[४]।**

अर्थान्यथात्वं हि ज्ञानस्याप्रामाण्यम्, न च तत्तथात्ववत् स्वतो गृहीतमिति युक्ता परापेक्षेति।

---

१. प्रमाणं—मु० पा०।    २. अस्येति। अप्रमाणस्येत्यर्थः।
३. तेनास्याज्ञायमानत्वे—का०।    ४. पूर्वेणातस्तथा०—मु० पा०।

यद्येवं वेदस्यापि परत एवाप्रामाण्यमिति ब्रूम , अस्ति हि बाधः पूर्वोक्तादनुमानगुणादित्यत आह—

**तत्राप्यर्थाऽन्यथाभावे धीर्यद्वा दुष्टकारणे ॥ ८६ ॥**

' तत्राप्यप्रामाण्येऽर्थान्यथात्वे वा दुष्टकारणे वा आत्मनो या धी. सैव कारण नानुमानगण इति ॥ ८६ ॥

किमियं राजाज्ञा ? नेत्याह—

**तावतैव च मिथ्यात्वं गृह्यते नान्यहेतुकम् ।**

तावतैव कारणद्वयेन लोके ज्ञानानामप्रामाण्य गृह्यते नान्यथेति सर्वजनस्वसवेद्यमिति ।

ननु प्रमाण सद् वाधक पूर्वस्य मिथ्यात्व करोति, तस्य तु कुतः प्रामाण्यमत आह—

**उत्पत्त्यवस्थं चैवेदं प्रमाणमिति मीयते ॥ ८७ ॥**

स्वतस्तस्य प्रामाण्यमिति वर्णितमिति ॥ ८७ ॥

यत एवैव कारणद्वयादेकमिथ्यात्व स्वयमवगतम्, अत एव परेभ्यो मिथ्यात्वं प्रतिपादयता एतदेव द्वयं वक्तव्यम्, न यत्किञ्चित्साधर्म्यमात्रं प्रत्यक्षाद्यगतार्थत्वादित्यादिकमित्याह—

**अतो यत्रापि मिथ्यात्वं परेभ्यः प्रतिपाद्यते ।**

**तत्राप्येतद् द्वयं वाच्यं न तु साधर्म्यमात्रकम् ॥ ८८ ॥**

आगमविरुद्धं चानुमानमित्याह—

**चोदनार्थान्यथाभावं कुर्वतश्चानुमानतः ।**

**तज्ज्ञानेनैव यो बाधः स कथं विनिवार्यते ॥ ८९ ॥**

शङ्कते—

**तन्मिथ्यात्वादबाधश्चेत्,**

परिहरन्ति—

**प्राप्तमन्योन्यसंश्रयम् ।**

कथम् ? इत्याह—

**नानुमानादतोऽन्यद्धि बाधकं किञ्चिदस्ति ते ॥ ९० ॥**

तेनैवानुमानेन बाधान्मिथ्यात्वम्, सिद्धे च मिथ्यात्वेऽनुमानम्—इतीतरेतराश्रयत्वमिति ॥ ९० ॥

ननु यथानुमानादन्यद्बाधकं नास्ति तथा साधकमप्यागमादन्यन्नास्ति, तेन सद्भावोऽपि वेदार्थस्य दुर्लभ एव ? अत आह—

**न चान्यैरग्रहेऽर्थस्य स्यादभावो रसादिवत् ।**

**तेषां जिह्वादिभिर्यस्मान्नियमो ग्रहणेऽस्ति हि ॥ ९१ ॥**

न हि वयमनुमानसद्भावमङ्गीकृत्यैव बाधकान्तराभावान्मिथ्यात्वस्यासिद्धिं ब्रूमः, किन्त्वनुमानमेव नोदेतीति। साधकस्त्वागमो विद्यत एवेति ॥ ९१ ॥

नन्वेकेन गृहीतस्यार्थस्यान्यैरगृहीतस्याभावो भवति रसादीनामिव, अन्यथा तेषामपि जिह्वादिगृहीताना नेत्राद्यगृहीतानामभाव. स्यादिति शङ्कते—

**तद्धियैवार्थबोधश्चेत्**[1],

परिहरति—

**तादृग्धर्मे भविष्यति।**

पूर्वं प्रमाणस्य प्रमाण्यं न प्रमाणान्तरापेक्षमित्युक्तम्, इदानी तु प्रमेयोऽप्यर्थः एकेनैव सिध्यन्न स्वसिद्धये प्रमाणान्तरमपेक्षत इत्युच्यत इत्यपौनरुक्तचम्।

नन्वसिद्ध[2] नश्चोदनाप्रमाण्य कथं तद्बाधोऽनुमानदूषणम्? अत्र तावदिदमेव वक्तव्यम्—यद्यपि तवासिद्ध तथाप्यस्माकं तावत्सिद्धम्, अस्मत्प्रतिपादनार्थं च साधनवचनम्, न च वयमागमबाधितमर्थमनुमानेन प्रतिपादयितु शक्या[3]। तेन भवत्येवागमबाधोऽनुमानस्य दूषणम्। न च तवाप्यसिद्धिः शक्यते वक्तुमित्याह—

**ममासिद्धमिदं किन्तु वेदाज्जातेऽवबोधने ॥ ९२ ॥**
**वक्तुं न द्वेषमात्रेण युज्यतेऽसत्यवादिना[4]।**

तवापि हि वेदादसन्दिग्धाविपर्यस्तार्थबुद्धिर्जायते, अतः सिद्धमेव प्रामाण्यम्। असिद्धाभिधान तु द्वेषमात्रेणासत्यमेवोच्यत इति!

न च द्वेषादसम्प्रतिपत्तेर्वा भवत्यप्रमाण्यम्, नापीच्छानुज्ञाभ्यां प्रामाण्यमित्याह—

**द्वेषादसम्मतत्वाद्वा न च स्यादप्रमाणता ॥ ९३ ॥**
**न चात्मेच्छाभ्यनुज्ञाभ्यां प्रामाण्यमवकल्पते।**

अत्रैवोदाहरणमाह—

**अग्निदाहादिदुःखस्य न ह्यप्रत्यक्षतेष्यते ॥ ९४ ॥**
**न चाभिलापिकं ज्ञानं प्रामाण्येनावधार्यते[5]।**

उपसंहरति पादत्रयेण—

**तस्मादालोकवद् वेदे सर्वसाधारणे सति ॥ ९५ ॥**
**नैवं विप्रतिपत्तव्यम्,**

नन्वेवं बौद्धादिवाक्यादपि ज्ञानोत्पत्तेस्तस्यापि वेदवत् प्रामाण्य स्यादत आह—

**बौद्धादेर्वक्ष्यतेऽन्तरम्।**

---

१. न द्वितीया०—२ पु०। २. सिद्धम्—२ पु०।
३. शक्ता—३ पु०। ४. सत्यवादिनाम्—२ पु०।
५. प्रामाण्येनावकल्पते—२ पु०।

"अशक्य हि तत्पुरुषेण ज्ञातुमृते वचनात्" (शा० भा० पृ० १७) इत्यत्र वक्ष्यन इति ।

एतदेव दर्शयति—

**पुरुषाशक्तितस्तत्र सापवादत्वसम्भवः ॥ ९६ ॥**

न ह्यतीन्द्रियार्थे पुरुषस्य दर्शनशक्तिः सम्भवति, प्रत्यक्षाद्यासंभवात्। तेन भ्रान्ती । भ्रमभूलतया तद्वाक्यस्य दुष्टत्वादौत्सर्गिकमपि प्रामाण्यमपोद्यते ॥९६॥

वेदस्य त्वपौरुषेयत्वेन निर्दोषत्वादनपोदिता प्रमाणता सिद्धा भवतीत्याह—

**वेदस्यापौरुषेयत्वे सिद्धा त्वेव प्रमाणता ।**

किमिति पुनर्वेदस्य कर्ता नाङ्गीक्रियते कल्पनागौरवात् ? तदाह—

**कर्तृमत्त्वे[1] तु वेदस्य सम्यङ्मिथ्यात्ववादिभिः ॥ ९७ ॥**

**कर्ता गुणाश्च दोषाश्च महाजनपरिग्रहः ।**

**एवमादि विना युक्त्या कल्प्यम्,**

सम्यक्त्ववादिनो वेदाना महाजनपरिग्रह प्रामाण्याय वर्णयन्ति, इतरे स्वागमानाम्; तदिद सर्वमप्रमाणकमिति ।

मीमासकैस्तु न किञ्चिददृष्ट कल्पनीयमित्याह—

**मीमांसकैः पुनः ॥ ९८ ॥**

**इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते ।**

तदेवं नित्यनिर्दोषस्य ज्ञान चोत्पादयतो यदि परसशयविपर्ययनिमित्तमप्रामाण्यं स्यात्, तद् द्वयमपि "न चाग्निहोत्रं जुहुयाद्" इत्यादिना "न नैव देशान्तरे[2]" इत्यादिना[3] च भाष्येण निराकृतमित्याह—

**एवम्भूतस्य वेदस्य ज्ञानोत्पत्ति प्रकुर्वतः ॥ ९९ ॥**

**स्वरूपविपरीतत्वसंशयौ भाष्यवारितौ ।**

एवम्भूतशब्देन नित्यनिर्दोषत्वमुक्तम् । तद्दर्शयति—

**निवारयिष्यते चापि दुष्टकारणकल्पना ॥ १०० ॥**

**पुरुषाभावतस्तेन तद्द्वारेणाप्यशङ्कितौ ।**

दोषसशयात् प्रामाण्यसशयः, दोषनिश्चयाच्च तद्विपर्ययः—तदुभय दोषनिवारणेन निवारितं भवति ।

---

१. कर्तृ सत्त्वे—पाठान्तरम् । २. दोषान्तरे—मु० पा० ।

३. न च स्वर्गकामो यजेतेत्यतो वचनात् सन्दिग्धमवगम्यते—भवति वा स्वर्गः, न वा भवतीति । न च निश्चितमवगम्यमानमिदं मिथ्या स्यात् । यो हि जनित्वा प्रध्वंसते नैतदेवमिति स मिथ्याप्रत्ययः । न चैष कालान्तरे, पुरुषान्तरे, अवस्थान्तरे, देशान्तरे वा विपर्येति तस्मादवितथः । ( शा० भा० पृ० १७ ) ।

सम्प्रत्याक्षिप्त भाष्य समाधत्ते—

**तथा सत्यतथाभावो बुद्ध्यनुत्पत्तिमाश्रितः ॥ १०१ ॥**

**तत्र विप्रतिषिद्धत्वं ब्रवीतीत्येवमादिना ।**

यदा हि सशयविपर्ययौ निराकरिष्यते तदा ज्ञानानुत्पत्तिविषयमेवा-तथाभावचोद्य भवतीति । तत्रेदमुत्तरम्—"विप्रतिषिद्धमिदमुच्यते—ब्रवीति, वितथ चेति" । बोधयति न बोधयतीति विप्रतिषिद्धमित्यर्थः । "यत्तु लौकिकं वचनं तच्चेत् प्रत्ययितात्पुरुषादिन्द्रियविषय वा, अवितथमेव तत् । अथा-प्रत्ययितात् पुरुषादनिन्द्रियविषय वा, तत्पुरुषबुद्धिप्रभवमप्रमाणम् । अशक्य हि तत् पुरुषेण ज्ञातुम्, ऋते वचनात्" । ( शा० भा० पृ. १७ ) इति भाष्यम्, तत्र प्रत्ययितशब्दस्यार्थमाह—

**यथादृष्टार्थवादित्वं तच्चेत् प्रत्ययितादिति ॥ १०२ ॥**

तथाभूतमतथाभूतं वा यथादृष्टार्थ यो वदति स प्रत्ययित इति ॥ १०२ ॥

'इन्द्रियविषयम्' इत्यपि तस्यैव विशेषणमित्याह—

**इन्द्रियेति तु मूलं चेदस्यास्तीत्येवमब्रवीत्[1] ।**

इन्द्रियग्रहणमनुमानादीनामपि मूलप्रमाणान्तराणामुपलक्षणम् । तदयं भाष्यार्थः—सम्भवत्प्रमाणमूल यत्प्रत्ययितवाक्यं तत्प्रमाणमेव, अतो यदि तदभि-प्रायं यथा यत्किञ्चेनेति दृष्टान्तवचन ततः साध्यवैकल्यमिति । यत्त्वप्रत्ययितवचनं यच्चासम्भवन्मूलप्रमाणं तत्पुरुषबुद्धिप्रभवं मूलदोषेण दुष्टत्वादप्रमाणम्, नैतद्दृष्टा-न्तेनादुष्टस्यापि वेदवचसोऽप्रामाण्यमिति ।

केचित्तु यथावस्थितार्थदर्शित्वम्, यथादृष्टार्थवादित्व च द्वय प्रत्ययितशब्दार्थ-माहुरित्याह—

**द्रष्टृत्वसत्यवादित्वे[2] तच्चेत् प्रत्ययितादिति ॥ १०३ ॥**

द्रष्टृत्वम्=यथावस्थितार्थदर्शित्वम् , सत्यवादित्वम्=यथादृष्टार्थवादित्व-मिति ॥ १०३ ॥

'इन्द्रियविषय वा' इत्यनेन त्वनाप्तवाक्यमपि श्रोतुरिन्द्रियविषयभूतमवितथ-मित्युच्यते इत्याह—

**दृश्यमानार्थवादित्वे स्यादनाप्तोक्तिसत्यता ।**

एतद्व्याख्यान दूषयति—

**एवं त्वेकाङ्गवैकल्यात् प्रत्युदाहरणस्थितिः ॥ १०४ ॥**

**एकैकाभावमात्रे स्यादाप्तत्वैन्द्रियकत्वयोः ।**

एकाङ्गविकलं हि प्रत्युदाहरण न द्व्यङ्गविकलम् । अत्र त्वाप्तत्वैन्द्रियकत्व-

---

१. एतदब्रवी—२ पु० ।                    २. दृष्टसत्य०—मु० पा० ।

योरेकैकमेव प्रामाण्यकारणमाश्रितम्, अनयोरेकैकस्याभावे प्रत्युदाहरण स्यात्। ततः किं जातम् ? अत आह सपादेन—

**अप्रत्ययितपक्षे स्यादैन्द्रियस्याप्यसत्यता ॥ १०५ ॥**
**अनिन्द्रियत्वपक्षे वा सत्प्रत्ययितभाषितम् ।**
**व्याहतग्रन्थतैवं स्यात्,**

प्रत्ययितप्रत्युदाहरणे हि 'अथाप्रत्ययितात्' इत्युच्यमाने प्रत्ययिताभावमात्रेणाप्रामाण्यात् श्रोतुरिन्द्रियविषयं यदप्रत्ययितवाक्यं प्रमाणत्वेनोदाहृतम्, तदेवेदानीमप्रमाणत्वेन प्रत्युदाहरणं स्यात्। इन्द्रियविषयं वेत्यस्य[1] प्रत्युदाहरणे त्वनिन्द्रियविषयं वेत्युच्यमाने यदाप्तवाक्यमपि श्रोतुरनिन्द्रियविषय प्रमाणत्वेनाभ्युपागतम्, तदेवाप्रमाणत्वेन प्रत्युदाहरण स्यादिति ग्रन्थव्याघातः स्यादिति । किञ्च, यदि 'इन्द्रियविषयम्' इत्यनेन दृश्यमानार्थविषयमनाप्तवचनमुच्यते, ततोऽनिन्द्रियविषयमित्यनेनापि श्रोत्रा यन्नोपलभ्यते तद्वक्तव्यम्, ततश्च 'अशक्य हि तत्पुरुषेण ज्ञातुमृते वचनात्'' इति भाष्यं नोपपद्येत । न हि यत् श्रोत्रा नोपलभ्यते तज्ज्ञातुमशक्य भवति । तस्मादिन्द्रियविषयमित्यनेन सम्भवन्मूलप्रमाणमुच्यते, अनिन्द्रियविषयमित्यनेन चासम्भवन्मूलप्रमाणम्। एव च "अशक्य हि तत्" इति भाष्यमुपपन्न भवति । प्रत्ययितशब्दश्चायमितजन्तः 'प्रत्ययोऽस्य सञ्जातः' इत्येतावद् वदति, प्रत्ययश्चायथार्थोऽपि सम्भवतीति न यथार्थदर्शी प्रत्ययितः, किन्तु यथादृष्टार्थवाद्येव । तस्मात् पूर्वव्याख्यैव ज्यायसीत्याह—

**तस्मात् पूर्वेण सत्यता ॥ १०६ ॥**
**परेण मूलसद्भाव इन्द्रियेण तु दर्शितः ।**

सत्यता यथादृष्टार्थवादिता पूर्वेण प्रत्ययितशब्देन दर्शिता, परेण तु 'इन्द्रियविषयम्' इत्यनेन तस्यैव मूलसद्भावो विशेषणमुच्यत इति ।

नन्वेवं सम्यङ्मूलापेक्षं गुणत एव प्रामाण्यं स्यादत आह—

**अप्रामाण्यनिवृत्त्यर्थं दोषाभावोपवर्णनम् ॥ १०७ ॥**

अपवादभूताप्रामाण्यनिवृत्त्यर्थमेव दोषाभावोपवर्णनमिदं गुणद्वारेण, न तु गुणस्वरूपमेव प्रामाण्यायोच्यत इति ॥ १०७ ॥

किमित्येव वर्ण्यते ? इत्याशङ्क्याह—

**गुणात् प्रामाण्यमित्येवं तत्पूर्वं सुनिराकृतम् ।**
**पूर्वत्र प्रतिषिद्धत्वान्नैतत् प्रामाण्यकारणम् ॥ १०८ ॥**

---

१. अथेन्द्रियविषयं चेत्तस्य—२ पु० ।

निराकृतमिदम्, निराकृतत्वाच्च नेदं प्रामाण्यकारणमिति ॥ १०८ ॥

यदि प्रत्ययितत्वमैन्द्रियकत्व च समुच्चितं लक्षणम्, कथ वाशब्द. ? अत आह—

**समुच्चयार्थो वाशब्दः पूर्वस्मिन्,**

निपातानामनेकार्थत्वादित्यर्थ. । प्रत्युदाहरणे तु विकल्पार्थ एव । द्वयोरपि सत्यपि प्रत्ययितत्वैन्द्रियकत्वयोः पृथक् पृथक्प्रत्युदाहरणार्थं इत्याह—

**उत्तरत्र च ।**

**विकल्पेनोभयोराह प्रत्युदाहरणे पृथक् ॥ १०९ ॥**

ते एव प्रत्युदाहरणे दर्शयति—

**शक्येऽप्यसत्ये मिथ्यात्वं दृष्टं सत्येऽप्यशक्तिके ।**

असत्येऽनृतवादिनि पुरुषे सति शक्येऽप्यर्थे यद्यप्यर्थ' प्रमातुं शक्य.[1], तथाप्यप्रामाण्यमनाश्वासाद् दृष्ट सत्ये प्रत्ययितेऽपि वक्तर्यशक्तिके यद्यस्योच्यमानमर्थं द्रष्टु शक्तिर्नास्ति प्रत्यक्षाद्यसम्भवात्, अत्राप्यप्रामाण्य मूलदोषात् । न ह्यतीन्द्रियार्थे वचनमन्तरेणावगति. सम्भवति, तदिदमुक्तम्—"अशक्यं हि तत् पुरुषेण ज्ञातुमृते वचनात्" ( शा० भा० पृ. १७ ) इति ।

इदं तु भाष्य केचित् सर्वज्ञनिराकरणपरं व्याचक्षते, तान्निराकरोति—

**नानेन वचनेनेह सर्वज्ञत्वनिराक्रिया ॥ ११० ॥**

कारणमाह—

**वचनादृत इत्येवमपवादो हि संश्रितः ।**

'वचनादृते ज्ञातुमशक्यम्' इति वदन् वाचनिकेऽतीन्द्रिये ज्ञानशक्तिं निरोकरोति, न सर्वत्र, प्रकृतत्वाच्चातीन्द्रियमेव तच्छब्देन परामृश्यते न सर्वमिति ।

किञ्च, अनिराकरणीयत्वादपि सर्वज्ञस्य न तन्निराकरणपर भाष्यमित्याह—

**यदि षड्भिः प्रमाणैः स्यात् सर्वज्ञः केन वार्यते ॥ १११ ॥**

यो हि षड्भिः प्रमाणै सर्वं जानाति स धर्माधर्मावपि वेदेन जानन्न चोदनैवेत्यवधारण विरुणद्धीति न निराकर्त्तव्य इति ॥ १११ ॥

यस्त्वेकेनैव सर्वं जानातीति कैश्चित् कल्पितः, सोऽतितुच्छत्वादेव न निराकार्य इत्याह—

**एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ।**
**नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते ॥ ११२ ॥**

यो ह्येवंविधं सर्वज्ञं कल्पयति स स्वय तावच्चक्षुषा नून रसादीन् जानाति, इतरथा कथं स्वभावनियम जानन्नविषये सर्वार्थे प्रत्यक्षस्यान्यस्य वा प्रवृत्तिमध्यवस्येदिति ॥ ११२ ॥

---

१. प्रत्यासत्तिशक्य—२ पु० ।

ननु यद्यप्यर्वाचीनाना प्रत्यक्षं न सर्वविषयम्, तथापि बुद्धप्रत्यक्ष दिव्यचक्षुर्जनित सर्वविषयं भविष्यति ? अत आह—

**यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ।**
**भवेदिदानीं लोकस्य तथा कालान्तरेऽप्यभूत् ॥ ११३ ॥**

अद्यत्ववदेव कालान्तरेऽपि प्रमाणस्वभावो नान्यादृश इति ॥ ११३ ॥

नन्वद्यत्वेऽपि तावत् प्रमातृभेदेन सातिशय प्रत्यक्षमुपलभ्यते केचिदतिदूरमतिसूक्ष्म च पश्यन्ति, तथा ज्ञानमपि सातिशय लौकिके च शास्त्रार्थे च दृश्यते, तत् कस्यचित् पुरुषवर्यस्य ज्ञानमत्यन्तातिशयित सर्वविषय भविष्यत्यत आह—

**यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।**
**दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥ ११४ ॥**

सत्यमतिशयो दृष्टः, स स्वविषय एव दूरसूक्ष्मादिदर्शने, न तदतिक्रमेण । न ह्यतिशयितमपि श्रोत्र रूपे प्रवर्त्तते नेत्रादयो वा शब्दादिषु, अतो न सर्वविषयत्वमिति ॥ ११४ ॥

ननु प्रत्यक्षस्य न कश्चिद्विषयनियमोऽस्ति, रूपवनामरूपवना दूराणा सूक्ष्माणा च प्रत्यक्षावगमदर्शनात् । अतोऽस्य सम्भवत्येव सर्वविषयत्वम् ? अत आह—

**भविष्यति न दृष्ट च प्रत्यक्षस्य मनागपि ।**
**सामर्थ्यम्,**

वर्तमानविषयमेव प्रत्यक्षमित्यस्ति नियमः । अतो न तस्य भविष्यति धर्मे सामर्थ्यं नतरां सर्वार्थेषु । ज्ञानस्याप्यस्ति विषयनियमः—यत्रास्य कारणं सम्भवति तत्रैव प्रवर्त्तते, नान्यत्र । षड्विध च तत्कारणमिन्द्रियलिङ्गादि । तत्रेन्द्रियं तावद्वर्त्तमानविषयम्, अतस्तज्जनित ज्ञानमपि तत्रैव प्रवर्त्तते न धर्माधर्मयोः, नापि सर्वार्थेष्विति ।

नाप्यनुमानादिना धर्मस्य सर्वस्य वा ज्ञानं सम्भवतीत्याह—

**नानुमानादेर्लिङ्गादिरहिते क्वचित् ॥ ११५ ॥**

यथैव हि प्रत्यक्षस्य वर्त्तमानादिविषयत्वनियमः, तथानुमानादेरपि यत्र लिङ्गादिसम्भव. स एव विषयः, न सर्वार्थेषु धर्मे वा लिङ्गादिसम्भवः । अतो नानुमानादेरपि सर्वत्र सामर्थ्यमस्तीति ॥ ११५ ॥

कश्चिदत्र **लौकायतिकः** प्राह—अन्यैः **शाक्यैः** सर्वज्ञकल्पना निष्प्रमाणिकाऽऽश्रिता, **मीमांसकैस्तु** वेदस्यापौरुषेयत्वकल्पनात् तदुभयस्यापि कल्पना तुल्या, न कश्चिद्विशेष इति ? तं प्रत्याह—

**सर्वज्ञकल्पनान्यैस्तु[1] वेदे चापौरुषेयता ।**
**तुल्यता कल्पिता येन तेनेदं सम्प्रधार्यताम् ॥ ११६ ॥**

---

१. ०कल्पनाद्यै०—मु० पा० ।

एवंवादिना वक्ष्यमाणमनन्तरं सम्प्रधार्यते[1], येन सर्वज्ञो निष्प्रमाणको नापौरुषेयत्वमिति। तत्र सर्वज्ञकल्पनायास्तावदप्रमाणत्व दर्शयति—

**सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः।**

तेन प्रत्यक्ष तावन्नास्ति तत्सद्भावे प्रमाणमिति। नाप्यनुमानेन 'असावासीत्' इति शक्यते कल्पयितुम्, विपरीतस्यैवानुमानादित्याह—

**निराकरणवच्छक्या न चासीदिति कल्पना॥ ११७॥**

न हि सद्भावस्यानुमापकं लिङ्गमस्ति। निराकरणस्य त्वस्ति लिङ्गम्—अतीतः कालः सर्वज्ञशून्यः कालत्वात्, अद्यत्ववदिति। बुद्धो वा न सर्वज्ञः पुरुषत्वादस्मदादिवदिति[2]॥ ११७॥

नाप्यागमगम्यत्वं सर्वज्ञस्येत्याह—

**न चागमेन सर्वज्ञः,**

कथम्? इत्याह—

**तदीयेऽन्योन्यसंश्रयात्।**

सिद्धे हि सर्वज्ञे तदीयस्यागमस्य प्रामाण्यम्, तत्प्रामाण्ये च तत्सिद्धिरिति।

नरान्तरप्रणीतस्य तु मूलान्तरासम्भवान्न सर्वज्ञसद्भावे प्रामाण्यं सम्भवति इत्याह—

**नरान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम्॥ ११८॥**

नापि नित्यागमगम्यत्वं तदभावादित्याह—

**न चाप्येवम्परो नित्यः शक्यो लब्धुमिहागमः।**

नन्वस्त्येव सर्वज्ञः सर्वविदित्यादि? अत आह—

**नित्यश्चेदर्थवादत्वं[3] तत्परे स्यादनित्यता॥ ११९॥**

किमित्यर्थवादत्वम्? अत आह—

अनित्यस्य विग्रहवतः पुरुषस्य सर्वज्ञत्व प्रतिपादयन्नागमोऽप्यनित्यः स्यादिति॥ ११९॥

किञ्चागमनित्यत्वेऽङ्गीकृते वृथैव सर्वज्ञकल्पना? इत्याह—

**आगमस्य च नित्यत्वे सिद्धे तत्कल्पना वृथा।**

---

१. सम्प्रधार्य—३ पु०।

२. यथा वा— चैत्यवन्दनं वाक्यमप्रमाणं सौगतवाक्यत्वात्, क्षणिकवाक्यवत्। अप्रामाण्यं च धर्माधर्मयोः। एवम्—क्षणिवाक्यं धर्माधर्मातिरिक्तार्थेऽप्रमाणम्, तत एव तद्वदिति। अथवा—क्षणिकवाक्यं धर्माधर्मयोः प्रमाणम्, बुद्धवाक्यत्वात्। चैत्यवन्दनवाक्यं धर्माधर्मयोः प्रमाणं बुद्धवाक्यत्वात्, क्षणिकवाक्यवत्।

३. तत्परश्चेदनित्यत्वम्—२ पु० पा०।

कथम् ? इत्याह—

**यतस्तं प्रतिपद्यन्ते धर्ममेव ततो नराः[१] ॥ १२० ॥**

येनैवागमेन सर्वज्ञत्व प्रतिपाद्य तेन धर्म एव[२] प्रतिपाद्यताम्, किमन्तर्गडुना सर्वज्ञेनेति ॥ १२० ॥

अत्र कश्चिदाह[३]—मा भूत्सर्वज्ञ. धर्मज्ञस्तु भविष्यति, तदुक्तम्—

कीटसख्यापरिज्ञान तस्य नः क्वोपयुज्यते ।
दूरं पश्यतु मा वासौ तत्त्वमिष्ट तु पश्यति ॥
( प्र० वा० १. ३५ ) इति ।

धर्मज्ञत्व चास्ति प्रमाणम् । अस्मदादिप्रमाणगोचरार्थ क्षणिकं सर्वसस्कृत[४]-मित्यादिबुद्धवाक्य सत्य प्रमाणमूल दृष्टमत श्रद्धेयेऽर्थे धर्मे यच्चैत्यवन्दनादि-वाक्यं तदपि प्रमाणमूलं तद्वचनत्वात् अनुमीयते । तदुपन्यस्यति—

**योऽपीन्द्रियार्थसम्बन्धविषये सत्यवादिताम् ।**
**दृष्ट्वा तद्वचनत्वेन श्रद्धेयेऽर्थेऽपि कल्पयेत् ॥ १२१ ॥**

इन्द्रियादिसम्बन्धविषये, प्रत्यक्षादिविषये इत्यर्थ. ॥ १२१ ॥

दूषयति—

**तेनापि पारतन्त्र्येण बाधिता स्यात् प्रमाणता ।**

कथम् ? इत्याह—

**प्रामाण्यं चेत् स्वयं तस्य कापेक्षान्येन्द्रियादिषु ॥ १२२ ॥**

यदि हि क्षणिकादिवाक्यस्यास्मदादिप्रमाणानादरेण स्वातन्त्र्यं स्यादस्म-दादीन्द्रियोपन्यासोऽनर्थकः स्यात्, अतस्तद्वदेव श्रद्धेयार्थस्याप्यस्मदादिपर-तन्त्रमेव प्रामाण्यं व्याप्तिबलेनहेतुः साधयेत्, न स्वतन्त्रमिति ॥ १२२ ॥

तदेव विवृणोति—

**यथैवात्रेन्द्रियादिभ्यः परिच्छेदात् प्रमाणता ।**
**श्रद्धेयेऽपि तथैव स्यान्न स्वातन्त्र्येण लभ्यते ॥ १२३ ॥**

सोऽयं धर्मविशेषविपर्ययसाधनाद् विरुद्धो हेतुरिति ॥ १२३ ॥

विरुद्धाव्यभिचारी चायं हेतुरित्याह—

**यथा च तेषां सत्यत्वं सिध्यत्येतेन हेतुना ।**
**तथान्यानवबुद्धार्थप्रामाण्याभावसाधनम् ॥ १२४ ॥**

सोऽयमेक एव हेतुः सत्यत्वमसत्यत्वं च मिथो विरुद्धमव्यभिचारात् साध-यन् विरुद्धाव्यभिचारीति ॥ १२४ ॥

---

१. अयं श्लोकस्त्रुटितः २ पु० । २. सर्वज्ञं प्रतिपाद्यते तेन धर्ममेव—२ पु० ।
३. आचार्यधर्मकीर्तिः । ४. संस्कारः=वासना । सा च पूर्वज्ञाननाशः, सन्तानो वा ।

विरोधान्तराणि दर्शयति—

**अश्रद्धेयार्थसत्यत्वं श्रद्धेये चाप्यसत्यता ।**
**पूर्वज्ञानानुवादित्वं दृष्टान्तवदिहेष्यताम् ॥ १२५ ॥**

सप्रतिसाधनश्चाय हेतुरित्याह—

**अपि चालौकिकार्थत्वे सति पुंवाक्यहेतुकम् ।**
**मिथ्यात्वं बौद्धवाक्यानां[1] स्यादन्योन्यं सपक्षतः[2] ॥ १२६ ॥**

अविशेषितेनैव वा पुंवाक्यत्वेन धर्माधर्मातिरिक्तेऽप्रामाण्यमन्योन्यदृष्टान्तेनैव साधयितव्यमित्याह—

**धर्माधर्मातिरिक्तार्थे प्रामाण्यं च प्रसज्यते ।**

दृष्टान्तोऽपि साध्यविकल इत्याह—

**सांख्यादिषु च जीवत्सु दृष्टान्तो दुर्लभोऽस्य च ॥ १२७ ॥**

पूर्वोक्तमेव प्रतिसाधनं विशेषणविशेष्यभावव्यत्ययेन वाच्यमित्याह—

**अलौकिकार्थवाचित्वं नृवाक्यत्वे सतीति च ।**
**परस्परमपेक्ष्यैव बौद्धादेः स्यान्मृषार्थता ॥ १२८ ॥**

सप्रतिसाधनप्रसङ्गेनेदानी सर्वज्ञदूषणमेवोपक्रम्य[3] "'सर्वज्ञोऽस्मि' इति बुद्धेन यदुक्त तत्सत्यं तदुक्तत्वात् 'ज्योतिरूष्मण्यौष्ण्याह्लव' इतिवत्" इत्यस्य परोक्तस्य सर्वज्ञसाधनस्य प्रतिसाधन दर्शयति—

**वदेदेवं च यो नाम वादी प्रथमसङ्गतः ।**
**तस्यापि हेतुः स्यादेष भवन्तं प्रत्यसंशयम् ॥ १२९ ॥**

एवमिति चैष इति च वक्ष्यमाणप्रतिसाधनपरामर्शनम् । तदेव दर्शयति—

**'बुद्धादीनामसार्वज्ञमिति सत्यं वचो मम ।**
**मदुक्तत्वाद् यथैवाग्निरुष्णो भास्वर इत्यपि ॥ १३० ॥**

इदमेव साधनं न त्वदीयमित्याह—

**प्रत्यक्षं च मदुक्तत्वं त्वया साध्या तदुक्तता ।**
**तेन हेतुर्मदीयः स्यात् सन्दिग्धासिद्धता तव ॥ १३१ ॥**

असर्वज्ञत्ववचनस्य मदुक्तत्वं प्रत्यक्षसिद्धम्,सर्वज्ञोऽस्मीत्यस्य बुद्धोक्तत्वमसिद्धम्। न ह्यत्यन्तानृतमुद्धतं च बुद्धो वदतीति सम्भावयामः, असिद्धश्च न हेतुर्भवतीति ॥

अतितुच्छश्चायं सर्वज्ञवादो यस्य सर्वसाधारणैरपि प्रमेयत्वादिभिः प्रमाणान्तराविरोधेनैव निराकरणं सम्भवतीत्याह—

**प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च ।**
**सद्भाववारणे शक्तं को नु तं कल्पयिष्यति ॥ १३२ ॥**

---

१. वेद०—मु० पा० । २. अन्योन्यसपक्षता—पाठा० । ३. उपसंक्रम्य—२ पु० ।

ननु 'बुद्धः सर्वज्ञः' इत्यस्ति लौकिकानामविच्छिन्ना स्मृतिः, अतोऽस्ति बुद्धस्य सर्वज्ञत्वम्, तदानीन्तनैश्च प्रमितमिति कल्पयाम ? अत आह—

**न चापि स्मृत्यविच्छेदात् सर्वज्ञः परिकल्प्यते ।**

कारणमाह—

**विगानात्,**

विप्रलिप्सुना बुद्धेनागमः प्रणीत इत्यपि स्मृतिरस्तीति ।

असम्भवन्मूलं च सर्वज्ञत्वस्मरणमित्याह—

**छिन्नमूलत्वात्,**

विगानं विवृणोति—

**कैश्चिदेव परिग्रहात् ॥ १३३ ॥**

छिन्नमूलतां विवृणोति—

**सर्वज्ञोऽसाविति ह्येव तत्काले तु बुभुत्सुभिः ।**
**तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥ १३४ ॥**

तज्ज्ञानज्ञेयं यत्सर्वं तद्विषयज्ञानरहितैर्नरैः कथं सर्वज्ञो ज्ञायताम् ? अतो न सर्वज्ञे कस्यचित्किञ्चित्प्रमाणं सम्भवतीति निर्मूलैव स्मृतिरिति ॥ १३४ ॥

यदि त्वन्योऽपि कश्चित् सर्वज्ञ इष्यते बुद्धस्य सर्वज्ञत्वज्ञानार्थम्, ततस्तेनैव प्रकारेणान्यस्यान्यस्य कल्पनायां बहुसर्वज्ञापत्तिरित्याह—

**कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ।**

कथम् ? इत्याह—

**य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते ॥ १३५ ॥**

एवं सर्वज्ञो न केनचित् प्रमातुं शक्यत इत्युक्तम्, एवं च सम्यङ्मूलाज्ञानात् तदागमस्यापि रथ्यापुरुषवाक्यवन्न प्रामाण्यं सिध्यतीत्याह—

**सर्वज्ञोऽनवबुद्धश्च येनैव स्यान्न तं प्रति ।**
**तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेऽन्यवाक्यवत् ॥ १३६ ॥**

इतश्च तदागमस्याप्रामाण्यमित्याह—

**रागादिरहिते चास्मिन् निर्व्यापारे[1] व्यवस्थिते ।**
**देशनान्यप्रणीतैव स्यादृते प्रत्यवेक्षणात् ॥ १३७ ॥**

लाभ-पूजा-ख्याति-रागनिमित्तं हि आगमप्रणयनम्, स्वयूथ्यस्पर्द्धानिमित्तं वा प्रक्षीणरागादिदोषस्य बुद्धस्य न सम्भवति । निर्व्यापारश्चायं, नासावर्थप्रतिपादनाय शब्दं समुच्चारयितुं शक्नोति । कथम् ? प्रत्यवेक्षणपर्यायस्य विकल्पस्यासम्भवाद् 'अस्येदं साधनमनेन च शब्देनेदं प्रतिपादयितुं शक्यम्' इति यावन्न विकल्प्यते न तावद् वाक्यप्रणयनं सम्भवति । न चायं विकल्पो निर्विकल्पकेन प्रत्यक्षेणाखिलं

---

१. नुर्व्यापारे—मु० पा० ।

जगदध्यक्षयतो बुद्धस्यास्ति, तस्मादन्येन केनचित् प्रणीतो देशनाधर्मोपदेश[1] इत्यप्रामाण्यमिति ॥ १३७ ॥

तस्मिन्निर्व्यापारेऽपि तत्सन्निधिमात्रेणैव कुड्यादिभ्योऽपि देशना निःसरन्तीति चेत् ? श्रद्दधानस्योच्यमानमिदं शोभते, नास्माकमित्याह सार्द्धेन—

**सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।**
**निःसरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥ १३८ ॥**
**एवमाद्युच्यमानं तु श्रद्दधानस्य शोभते ।**

श्रद्दधानम् प्रत्युच्यमानमित्यर्थः ।

कुड्यादिनिःसृतासु च बुद्धप्रभावकृतत्वं न निर्णेतुं शक्यम्, अन्यथापि सम्भवादित्याह सार्द्धेन—

**कुड्यादिनिःसृतत्वाच्च नाश्वासो देशनासु नः ॥ १३९ ॥**
**किन्नु[2] बुद्धप्रणीताः स्युः किमु कैश्चिद् दुरात्मभिः ।**
**अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः ॥ १४० ॥**

ततश्च न प्रामाण्याध्यवसाय सम्भवतीति ॥ १३९-१४० ॥

एव तावच्छाक्यसर्वज्ञो निराकृतः ॥

अन्यन्मतम्—स्वभावादेवायमिन्द्रियाद्यनपेक्ष्यैव पुरुषः सर्वं जानाति, देहावृतस्त्विन्द्रियादिद्वारेण किञ्चिदेव वेत्ति, विगलितदेहस्य तु स्वाभाविकं सर्वज्ञत्वमाविर्भवतीति, तदुपन्यस्यति—

**एवं यैः केवलं ज्ञानमिन्द्रियाद्यनपेक्षिणः ।**
**सूक्ष्मातीतादिविषयं जीवस्य परिकल्पितम् ॥ १४१ ॥**

केवलम्, इन्द्रियादिकारणानपेक्षमेवेति ॥ १४१ ॥

तद् दूषयति—

**नर्ते तदागमात् सिध्येन्न च तेनागमो विना ।**

न हि मुक्तस्य सर्वज्ञत्वे तदागममन्तरेणान्यत् प्रमाणमस्ति, अतः सर्वज्ञप्रणीतत्वे सिद्धे तदागमस्य प्रमाणत्वम्, तत्प्रामाण्ये च तत्सिद्धिः—इतीतरेतराश्रयम् । अशरीरस्य च ताल्वादिरहितस्यागमप्रणयनमपि कथमिति न विद्मः । शरीरयुक्तेन त्वसर्वज्ञेन प्रणीतस्य न प्रामाण्यं स्यादिति ।

यदि त्वद्यत्वेऽपि कश्चिन्मुक्तः सर्वज्ञो दृश्येत, ततोऽर्हन्नपि मुक्तः सर्वज्ञ इति युज्यते, न तु तदस्तीत्याह—

**दृष्टान्तोऽपि न तस्यान्यो नृषु कश्चित् प्रवर्तते ॥ १४२ ॥**

यत्तु वेदवादिभिरेव कैश्चिदुक्तम्—'नित्य एवाय वेदः प्रजापतेः प्रथममार्षज्ञानेनावबुद्धो भवति' इति, तदपि सर्वज्ञवदेव निराकार्यमित्याह—

---

१. प्रणीताद्धर्मोपदेश—२ पु० ।          २. किन्तु—मु० पा० ।

**नित्यागमावबोधोऽपि प्रत्याख्येयोऽनया दिशा।**

अनुच्चरितशब्दज्ञानमपि सर्वज्ञज्ञानवद् धर्माधर्मज्ञानवच्चाकारणकमेवेति।

नन्वेतस्मिन् पक्षे वेदस्यैव धर्मे प्रामाण्याच्चोदनैवेत्यस्याविरोधात् किमिति तन्निराकरणम् ? अत आह—

**न हि तत्रापि विश्रम्भो दृष्टोऽनेन कृतोऽथ वा ॥ १४३ ॥**

कृतकत्वाशङ्कया प्रामाण्योच्छेदनान्निराकार्योऽयं पक्ष इति ॥ १४३ ॥

न च तद्वचनाद्विस्रम्भसम्भवः, अद्यत्ववत् तदानीन्तनेऽपि काले पुरुषाणां प्रायेणानृतवादित्वसम्भवादित्याह—

**सर्वदा चापि पुरुषाः प्रायेणानृतवादिनः।**
**यथाद्यत्वे न विस्रम्भस्तथातीतार्थकीर्तने[1] ॥ १४४ ॥**

किञ्च—अयमस्यागमप्रतिभासः स्वप्नादिवद्यादृच्छिको निर्निमित्तोऽप्रमाणं स्यादित्यपि शङ्कासम्भवान्न प्रामाण्यसिद्धिरित्याह—

**स्वप्नादिज्ञानवच्चापि प्रत्ययोऽस्यागमार्थयोः।**
**भवेदिति सशङ्काना प्रामाण्यं गम्यते कथम्[2]॥ १४५ ॥**

अर्थग्रहणे तुल्यत्वादागमस्य तद्ग्राहिणः प्रामाण्यासम्भवात्। तस्मान्निराकार्योऽयं पक्ष इति ॥ १४५ ॥

निराकरणं चानया दिशेति सर्वज्ञनिराकरणमार्गेण दर्शितम्, तद्विवृणोति—

**पुरुषातिशयश्चेष्टः सैव चागमनित्यता।**

अद्यतनानामदृष्टोऽतिशयः प्रजापतेः कल्पितः, अनुच्चारितशब्दाङ्गीकारात्। तं च कल्पयित्वा पुनरागमनित्यता वृथवाङ्गीकृतेति।

यदि तु स्मृतिर्वेदस्य न ग्रहणं तत्राह[2]—

**कल्पितं स्मरणं चास्य जन्मान्तरनिबन्धनम् ॥ १४६ ॥**

जन्मान्तरानुभवनिबन्धनं स्मरणं निमित्तासम्भवादेव कल्पितम्, कथं हि द्विपरार्द्धसंख्याकं प्रलयकालमतीत्यैतावान् ग्रन्थराशिर्मात्रयाप्यन्यूनानतिरिक्तः स्मर्येतेति ॥ १४६ ॥

पुनरपि ग्रहणपक्षमेव दूषयति—

**ग्राह्यत्वे चागमस्यैवं द्वेषोऽर्थग्रहणे वृथा।**

ग्राह्यत्वमागमस्येच्छता शाक्यादिसमाश्रिते धर्माधर्मग्रहणे वृथैव प्रद्वेष इति।

नन्वैन्द्रियकः शब्दः, धर्मस्त्वतीन्द्रिय इति कथं तुल्यत्वम् ? अत आह—

**यो ह्यनुच्चारितं शब्दं गृह्णात्यर्थेऽस्य का कथा ॥ १४७ ॥**

---

१. तथा कालान्तरेऽप्यभूत्—२ पु०।

२-२. प्रजापतेरित्यग्रे एतत्पर्यन्तं टीकाया ग्रन्थस्त्रुटितः १-२ पु०।

'शब्दोऽप्यनुच्चरितोऽतीन्द्रिय एव' इति शाक्यादिपक्षादपि पापीयानयं पक्ष इत्याह—

**पुमांस्तावत् स्वतन्त्रः स्यादर्थग्रहणवादिनाम् ।**
**आगमप्रतिभाने[1] तु पारतन्त्र्यं द्वयोरपि ॥ १४८ ॥**

तन्मते हि पुरुषस्य स्वातन्त्र्यात् तत्प्रत्ययादर्थनिश्चयो युक्तः, अस्मिस्तु पक्षे पुरुषोऽप्यर्थनिश्चये वेदपरतन्त्रः, सोऽपि स्वरूपसिद्धये तत्तन्त्र इति न कस्यचित् स्वातन्त्र्यमिति ॥ १४८ ॥

ननु तवापि पूर्वपूर्वपुरुषाधीनमुत्तरोत्तरेषा वेदस्य स्वरूपावधारणमिति तुल्यं पारतन्त्र्यम् ? अत आह—

**अनेकपुरुषस्थत्वादेकत्रैव च जन्मनि ।**
**ग्रहणस्मरणाद् वेदे न स्वातन्त्र्यं विहन्यते ॥ १४९ ॥**

एकपुरुषाधीनत्वे हि पारतन्त्र्य भवति, तत्र हि कृतकत्वाशङ्कया दृष्टत्वेऽपि यथावद् दृष्टो विप्लवो वा जात इति संशयान्न स्वातन्त्र्येण प्रामाण्यं सिध्यति, अनेकपुरुषस्थे तु वेदे नैष दोषो भवति । किञ्च, जन्मान्तरानुभूतमतिदीर्घकालव्यवहित स्मर्तुमशक्यं मन्यमाना नूनमय कृत्वैव वेद श्रद्धार्थ स्मृतमुपदिशतीति शङ्कमाना न विश्वस्युः, एकस्मिन्नेव तु जन्मनि बहुशोऽनुभूय स्मर्यमाणेऽयमपि दोषो न भवतीति न स्वातन्त्र्यहानिरिति ॥ १४९ ॥

अनेकपुरुषस्थत्वे को गुणः ? अत आह—

**अन्यथाकरणे चास्य बहुभ्यः स्यान्निवारणम् ।**

एकेन विनाशितस्यान्यैर्बहुभिर्निवारणात् तत्पारतन्त्र्य निवर्त्तत इति ।

एकस्य तु प्रतिभान कृतकादविशिष्टमिति स्यादेव पारतन्त्र्यमित्याह—

**एकस्य प्रतिभानं तु कृतकान्न विशिष्यते ॥ १५० ॥**

उपसंहरति—

**अतश्च सम्प्रदाये च नैकः पुरुष इष्यते ।**
**बहवः परतन्त्राः स्युः सर्वे ह्यद्यत्ववन्नराः ॥ १५१ ॥**

पूर्वस्मिन् काले यथैकः कर्त्ता वेदाना नास्ति तथा सम्प्रदायप्रवर्त्तक ऽपि नैकः, किन्त्वद्यत्ववदेव बहवः परतन्त्रा एवेति ॥ १५१ ॥

एवं तावत्सर्वज्ञकल्पना निष्प्रमाणिका प्रमाणविरुद्धा चेत्युक्तम् । एवं च यल्लौकायतिकैस्तेषामस्माकं च कल्पनातुल्यत्वमुक्त तदनेककल्पनीयहानोपादानाभ्यामुक्तमिति सोपहासमाह—

**एवं च कल्पयन्त्यन्ये यावदागमसिद्धये ।**
**तावन्न कल्पयत्येतत् समत्वं जैमिनेः[2] परैः[2] ॥ १५२ ॥**

---

१. प्रतिभावे—२ पु० । २–२. जैमिनि. पदैः—२ पु० ।

ननु जैमिनेरपि निष्प्रमाणिका प्रमाणविरुद्धा वाऽपौरुषेयत्वकल्पनास्त्येवेति कथमतुल्यता ? अत आह—

**न हि दृष्टाधिकं किञ्चित् प्रामाण्ये तेन कल्प्यते ।**

दृष्टा ह्यद्यत्वे सर्वे पुरुषाः पूर्वपूर्वेभ्यो वेदमवधारयन्त., न तु कर्त्तार । अतः कालान्तरेऽपीदृगेवेत्यङ्गीकुर्वता न किञ्चिददृष्टं विरुद्धं वा कल्पितमिति ।

परेषां च स्वागमप्रामाण्यवद् वेदाप्रामाण्यार्थमप्यस्त्येवादृष्टकल्पना दृष्टहानिश्च कर्तुस्तद्दोषाणां च कल्पनादवगतप्रामाण्यबाधाच्चेत्याह—

**अप्रामाण्यनिमित्तेषु [1]परस्यादृष्टकल्पना ॥ १५३ ॥**
**दृष्टप्रामाण्यबाधश्च नास्तिकस्य प्रसज्यते ।**

नन्वस्त्येवात्र पूर्वोक्तेनानुमानगणेन बाध इति तदाश्रयणमदोषः ? अत आह—

**उत्पन्ने सति विज्ञाने बलाद् बाधप्रकल्पना ॥ १५४ ॥**

प्रामाण्यं तावदौत्सर्गिकप्राप्तम्, अनुमानं तु तद्विरोधात् सप्रतिसाधनत्वाच्च न समर्थं तद्बाधितुम्, अतो विनैव प्रमाणेन स्वाच्छन्द्येन बाधः कल्प्यत इति ॥१५४॥

यत्तूक्तं 'प्रमाणान्तरदृष्टं हि शब्दं' इति 'नात्मीयादन्यदीयाद् वा' इति च, तत्राह—

**साधिते पुरुषाभावे निर्दोषज्ञानजन्मनः ।**
**प्रत्यक्षान्नास्तिकैर्वाच्यो विशेषश्चोदनाधियः ॥ १५५ ॥**

प्रमाणान्तरैरविशेषादस्य न तत्तन्त्रत्वमिति ॥ १५५ ॥

"न च विदुषामुपदेशो नावकल्पते" ( शा० भा० पृ० १८ ) इति भाष्यम्, तस्यार्थमाह—

**उपदेशोऽन्यथा न स्यादतीन्द्रियनिबन्धनः ।**
**तस्य कर्त्रा[2] न चेद् दृष्टः सोऽर्थ इत्यर्थकल्पना ॥ १५६ ॥**

अर्थकल्पनार्थापत्तिरियं धर्मज्ञत्वे मनुबुद्धादीनां प्रमाणमुपन्यस्तमिति ॥१५६॥

अनुमानं चेदमित्याह पादत्रयेण—

**यद्वानुमानमेवेदमुपदेशित्वमुच्यते**
**दृष्टार्थपूर्वताव्याप्तम्,**

अनुमीयते अमुनेत्यनुमानं लिङ्गमुपदेशित्वम् । तद्धि वैद्योपदेशादौ दृष्टार्थपूर्वतया व्याप्तमिति ।

नन्वविदुषामुपदेशानुपपत्तिस्तत्रोक्ता नोपदेशस्य विद्वत्तया व्याप्तिः, अतः कथमिदमनुमानम् ? अत आह—

**व्यतिरेकोऽस्य नन्विति ॥ १५७ ॥**

---

१. परस्येति । चार्वाकादेरित्यर्थः ।
२. कर्ता—मु० पा० ।

व्यतिरेकमुखेनेदमनुमानमुपन्यस्तमिति ॥ १५७ ॥

"उपदेशा हि व्यामोहादपि भवन्ति" ( शा० भा० पृ. १८ ) इति परिहार-भाष्यम्, तस्यार्थमाह—

**अन्यथाप्युपपन्नत्वं व्यामोहादिति कथ्यते।**
**लिङ्गस्य व्यभिचारो वा बालवाक्यनिदर्शनात्**[1] ॥ १५८ ॥

अथापत्तिपक्षे अन्यथाप्युपपत्तिः, अनुमाने त्वनैकान्तिकत्व हेतोर्दूषणमुच्यते, बालोन्मत्तादीनामनवगतार्थेप्युपदेशदर्शनादिति ॥ १५८ ॥

"असति व्यामोहे वेदादपि भवन्ति" ( शा० भा० पृ. १८ ) इति भाष्यम्, तस्यार्थमाह पादत्रयेण—

**वेदाज् ज्ञात्वोपदिष्टं चेदित्येवं सिद्धसाधनम्।**
**वेदादपीत्यनेनोक्तम्,**

यदेतदुपदेशान्मूल कल्पितं तत्तावत् प्रत्यक्षादिकं न सम्भवतीत्युक्तम्, यदि तु वेदाज्ज्ञात्वोपदिष्टमिति कल्प्यते, ततः सिद्धसाधनम्। न ह्येवं चोदनैवेत्यस्य विरोध इति।

किमिदानी बुद्धाद्यागमानामपि वेदमूलत्वमङ्गीक्रियते ? नेत्याह—

**मन्वादेश्चैतदिष्यते** ॥ १५९ ॥

उपदिष्टवन्तश्च मन्वादय इति बौद्धवादिनोक्तम्, ततस्तदभिप्रायमिदं सिद्ध-साधनमिति ॥ १५९ ॥

एवं तावत् पुरुषवचनादर्थे निश्चयो जातः प्रतिष्ठितश्च प्रत्यक्षादिनिश्चयवत्प-श्चान्मूलदोषावगमेन बाध्यत इत्येव बुद्धादिवचसामप्रामाण्यमुक्तम्, इदानी मूला-वधारणद्वारैव निश्चयप्रतिष्ठेति मूलासम्भवे झटिति जातोऽपि निश्चयो द्रागेव-विलीनोऽनुत्पन्नसमो भवति। अतो बुद्धादिवचसामसम्भवन्मूलानां प्रामाण्यसम्भा-वनापि नैव भवति। वेदस्य तु मूलानपेक्षित्वात् प्रतिष्ठितं प्रामाण्यमित्येतदुपपाद-यितु भाष्यम्—"अपि च पौरुषेयाद्वचनादेवमयं पुरुषो वेद इति भवति प्रत्ययो नैवमयमर्थः" ( शा० भा० पृ. १८ ) इति।[2] प्रत्ययोऽर्थेन प्रतितिष्ठतीति यावत्। तदिह पुरुषवचनाद् यन्मूलज्ञानावधारणमुक्तम्, तदाक्षिपति—

**अन्यथा संविदानोऽपि विवक्षत्यन्यथा यतः।**
**तस्मादेकान्ततो नास्ति पुंवाक्यात् तद्धियां गतिः**[2] ॥ १६० ॥

अनैकान्तिकत्वान्न वाक्येन तद्विषयज्ञानावधारणं युक्तमिति ॥ १६० ॥

किञ्च, ज्ञानादपि वाक्यरचनस्य प्रत्यासन्ना विवक्षा, न च तन्मात्रमपि वाक्यात् कल्पयितुं शक्यते किमुत ज्ञानमित्याह—

---

१. बालवाक्ये निदर्शनात्—का०। —निदर्शना—पाठान्तरम्। २. प्रामाण्यमित्यर्थः।

**भ्रान्तस्यान्यविवक्षायामन्यद् वाक्यं च दृश्यते।**
**यथाविवक्षमप्येतत् तस्मान्नैव प्रवर्त्तते ॥ १६१ ॥**

समाधत्ते—

**वक्तृधीराप्तवाक्येषु गम्यते,**

सामान्येनोक्तमप्येतद् वक्तृज्ञानावधारणमाप्तवाक्यविषयमेवेति।
"विप्लवते खल्वपि" इत्यादि[1] त्वनाप्तवाक्यविषमित्याह—

**अन्यत्र विप्लुतिः।**

विप्लुतिः=भ्रान्तिः, संशयो वा।
एवमाक्षेपं समाधाय भाष्यतात्पर्यं दर्शयति—

**तेनोत्सर्गा[2]पवादाभ्यां वचसः शक्तिरुच्यते ॥ १६२ ॥**

सामान्येन मूलज्ञानावधारणशक्तिमनाप्तवाक्ये चापवादं वदता पुरुषवचसा द्वेधा शक्तिर्दर्शिता—ज्ञानद्वारेणार्थे प्रामाण्यम्, अप्रामाण्यं वेति ॥ १६२ ॥

कथं पुनरवाचकादेव वाक्याज्ज्ञानमवगम्यते? अत आह—

**पदार्थरचनायत्तो वाक्यार्थप्रत्ययोद्भवः।**
**विवक्षापूर्विकाज्ञानवशाच्च रचनाकृतिः ॥ १६३ ॥**

नेदं शाब्दं ज्ञानावधारणं किन्त्वानुमानिकम्। वाक्यार्थप्रत्ययो हि पदपदार्थरचनाधीनः, रचना च विवक्षाधीना, सा च ज्ञानाधीनेति ॥ १६३ ॥

कथं पुनरवगम्यते विवक्षाधीना रचनेति? अन्वयव्यतिरेकाभ्यामित्याह—

**विवक्षान्तरयुक्ता हि कुर्वाणा रचनान्तरम्।**
**आवापोद्वाप[3]भेदेन दृश्यन्तेऽर्थेषु मानवाः ॥ १६४ ॥**

विवक्षान्तरयुक्ता हि रचनान्तरं कुर्वन्तो दृश्यन्ते, अतो विवक्षाधीना रचनेति। एवं परम्परया मूलज्ञानकार्यभूतं वाक्यरचनमिति ॥ १६४ ॥

ततस्तस्मिन्नानुमानिकी मतिर्युक्तेत्याह—

**तेनार्थप्रत्ययोत्पादे श्रोतुर्जातेऽपि वाक्यतः।**
**ज्ञातो नूनमनेनेति वक्तुर्ज्ञाने मतिर्भवेत् ॥ १६५ ॥**

कथं पुनरवगम्यते—वक्तृज्ञानमुखेनार्थनिश्चयो न साक्षादिति? अत आह—

**आप्तोक्तिकारणं कश्चिदनुयुङ्क्ते[4] नरं यदा।**
**तदा च निर्दिशत्याप्तं स जानात्येतदित्यसौ ॥ १६६ ॥**

यदा ह्याप्तोक्तमनुतिष्ठन् कश्चित् केनचिदनुयुज्यते—किमत्र ते प्रमाणमिति,

---

१. विप्लवते हि खल्वपि कश्चित् पुरुषकृताद् वचनात् प्रत्ययः। (शा० भा० पृ. १९)
२. उत्सर्ग इति। सामान्यम्। ३. आवापोद्धार०—का०। ४. अनुयुक्ते—२ पु०।

तदासावाप्तमेव निर्दिशति—स तज्जानाति नाहमिति, तेनावगच्छामः—नूनमस्य तज्ज्ञानद्वारार्थनिश्चय इति ॥ १६६ ॥

नन्वेवमर्थमनवबोधयत· शब्दस्य वाचकत्वमेव न स्यात्, न चानवगतवाचकत्वानां लोके वेदेऽपि बोधकत्वं सम्भवतीति दूरापास्त वेदप्रामाण्य स्यात् ? कथं चानवगतेऽर्थे तद्विषयज्ञानानुमानम् ? अत आह—

**तज्ज्ञानान्तरितत्वाच्च शब्दास्तावदुदासते ।**
**प्रामाण्यस्थापनं तु स्याद् वक्तृधीहेतुसम्भवात् ॥ १६७ ॥**

स्यादेव यदि शब्दा नाऽर्थे प्रत्याययेयु., ते तु श्रुतमात्रा एवार्थे प्रतीतिमाधायापि तत्प्रतिष्ठाया वक्तृज्ञानान्तरित·वाद् यावद्वक्तृज्ञानं नावगत तावदुपजातस्यापि निश्चयस्यासत्समत्वादुदासीना इव भवन्ति। यदा तु वक्तृधीहेतुः सम्भावितो निश्चितश्च भवति, तदा पूर्वमज्ञातेऽप्यर्थे प्रामाण्य पुन· प्रतिष्ठाप्यते, तस्माददोष. ॥ १६७ ॥

किं पुन कारणमुपजातेऽप्यर्थनिश्चये वक्तृज्ञानप्रणाडी समाश्रीयते ? अत आह—

**अर्थे पूर्वप्रतीतेऽपि निश्चयो हि तदाश्रयः ।**

प्रथममुपजातेऽपि वाक्यार्थप्रत्यये तस्य वाक्यस्य पुरुषबुद्धिप्रभवत्वात् तद्दोषेण दोषसम्भवात् पुनर्विचिकित्सा जायते, मूलज्ञानस्य तु सम्यक्त्वे निश्चिते विचिकित्सानिवृत्तौ निश्चय· प्रतिष्ठितो भवतीति युक्त निश्चयस्य वक्तृज्ञानाश्रयत्वम् । एव च यदुक्तम्—अनवगतेऽर्थे कथ तद्विषयज्ञानानुमानमिति, तदपि परिहृत भवतीति दर्शयति—

**तेनार्थज्ञानगम्यापि प्रामाण्ये सैव पूर्वभाक् ॥ १६८ ॥**

विशिष्टार्थविषया वक्तृधीर्यद्यप्यर्थज्ञानगम्यार्थमवगम्यैवावगन्तव्येत्यर्थ एव पूर्वं गम्यते[1], तथापि प्रामाण्यनिश्चये सैव पूर्वभाक्, अर्थनिश्चय पश्चादेव प्रतितिष्ठतीति । तेन पुरुषवाक्येषु निमित्तपुरुषबुद्ध्यधीन प्रामाण्यमिति ॥ १६८ ॥

तदसम्भवाद् बुद्धादिवचसा मृषात्वमुपपन्नमित्याह—

**अतोऽत्र पुंनिमित्तत्वादुपपन्ना मृषार्थता ।**

वेदस्य तु वक्तुरभावान्नाय स्वभाव इत्याह—

**न तु स्यात् तत्स्वभावत्वं वेदे वक्तुरभावतः ॥ १६९ ॥**

कस्तर्हि तस्य स्वभाव. ? इत्याह—

**तद्बुद्ध्यन्तरयोर्नास्तीत्यर्थो ऽर्थैश्च[2] प्रतीयते[4] ।**

वक्तृबुद्ध्यन्तरायाभावात् पदार्थैरेव साक्षाद्वाक्यार्थ. प्रतीयत[5] इति ।

---

१. अवगन्तव्येत्यर्थ एवं गम्यते—२ पु० ।    २. अर्थं इति । वाक्यार्थ· ।
३. अर्थैरिति । पदार्थै. ।    ४. प्रमीयते—१ पु० ।
५. विधीयते—२ पु० ।

प्रकरणार्थमुपसंहरति—

**अतो न ज्ञानपूर्वत्वमपेक्ष्यं नौयथार्थता[1] ॥ १७० ॥**

न वक्तृज्ञानपूर्वकत्वापेक्षं वेदप्रामाण्यम्, तदनपेक्षत्वादेव च न तदभावादयथार्थता। तदेवं न च तथाभूतमित्यत्र यत्पुंवचनसाधर्म्यादप्रामाण्यमुक्तं तदेवंपर्यन्तेन परिहृतमिति यथार्थत्वमिति। तदिद 'न तु वेदवचनस्य'[3] इत्यनेन भाष्येणोक्तमिति ॥ १७० ॥

अन्यथा भाष्यार्थमाह—

**अप्रमाणत्वसिद्धौ वा दृष्टान्तो य उदाहृतः।**
**बुद्धादिवचनं तस्य साध्येनासङ्गतोच्यते ॥ १७१ ॥**

ये 'वक्तृज्ञान एव वाक्यस्य प्रामाण्य नार्थे' इनि मन्यन्ते, तन्मतेनेदं भाष्य प्रमाणत्वसिद्धौ दृष्टान्तस्य बुद्धादिवाक्यस्य साध्यवैकल्यं प्रतिपादयति ॥ १७१ ॥

साध्यवैकल्यमेव दर्शयनि—

**तेषामपि हि यत् कार्यं पूर्वत्र प्रतिपादितम्।**
**तत्र सम्यक्त्वमर्थे तु व्यापारो नैव विद्यते[2] ॥ १७२ ॥**

'पदार्थरचनायत्त.' (श्लो० वा० २-१६३) इत्यादिना यत् पुवचसा कार्यमनुमेयं वक्तृज्ञान प्रतिपादित तत्र बुद्धादिवचनानामपि प्रमाण्यमस्त्येवेति साध्यवैकल्यम्, अर्थे तु तेषां नास्त्येव व्यापार इति ॥ १७२ ॥

यदि तु यत्र व्यापारो नास्ति तत्रैवाप्रामाण्यं वेदस्यापि साध्यते, तेन न भविष्यति साध्यवैकल्यमिति। तत सिद्धसाधनमित्याह—

**स्वव्यापारातिरिक्तेऽर्थे वेदस्यापि मृषार्थता।**
**पूर्वपक्षार्थवत्त्वेन प्रसक्ता सिद्धसाध्यता ॥ १७३ ॥**

'ननु सामान्यतोदृष्टम्[4]' इत्यादि भाष्यमयुक्तं 'तत्पुरुषबुद्धिप्रभवमप्रमाणम्' इति वदता दोषनिमित्तं लौकिकस्याप्रामाण्यं न वाक्यत्वप्रयुक्तं दर्शितम्, अत आह सपादेन—

**अज्ञात्वैवमभिप्रायं कृतकाकृतकत्वयोः।**
**सत्यमिथ्यात्वहेतूक्तिमात्रज्ञानात् परोऽब्रवीत् ॥ १७४ ॥**
**ननु सामान्यतोदृष्टम्,**

---

१. नो यथार्थता—मु० पा०। २. विधीयते—२ पु०।

३. न तु वेदवचनस्य मिथ्यात्वे किञ्चित् प्रमाणमस्ति। (शा० भा० पृ० १९)।

४. ननु सामान्यतोदृष्टं पौरुषेयं वचनं वितथमुपलभ्य वचनसाम्यादिदमपि वितथमवगम्यते। (शा० भा० पृ. १९)।

पुरुषदोषो मिथ्यात्वे तदभावश्च सम्यक्त्वे हेतुरनेनोक्त इत्येतावन्मात्रं ज्ञात्वा वाक्यत्वस्याप्रयोजकत्वाभिप्रायमजानन् भवतु तावद् येन केनचिद्धेतुना लौकिकस्याप्रामाण्यम्, तावतापि तत्प्रतिबद्धं वाक्यत्वं वेदस्यापि मिथ्यात्वमनुमापयतीति चोदयति। इतिशब्दश्चात्र द्रष्टव्यः सामान्यतो दृष्टमित्यत्राब्रवीदिति। **कृतकाकृतकत्वयो**रिति स्वार्थे भावप्रत्यय इति।

"नान्यत्वात्" (शा० भा० पृ. १९) इति परिहारभाष्यमाक्षिपति पादत्रयेण—

**नान्यत्वादित्यदूषणम्।**
**अन्यत्वादेव[1] दृष्टान्तो न हि पक्षे सपक्षता॥ १७५॥**

गुण एव हि पक्षसपक्षयोरन्यत्वं न दोष इति॥ १७५॥

यस्मादेवं यथाश्रुतं भाष्यमनुपपन्नम्, तस्मादय वक्ष्यमाणो भाष्याभिप्राय इत्याह—

**तस्मादयमभिप्रायो भाष्यकारस्य वर्ण्यते।**

तमेव दर्शयति द्वयेन—

**अभ्युपेत्यार्थविषयं वाक्यव्यापारमुच्यते॥ १७६॥**
**यदि स्याद् व्यवधानेऽपि वाक्यार्थपेक्षया[2] नृतम्।**
**दृष्टान्तो नृवचोऽत्रापि हेतुः साधारणो[3] भवेत्॥ १७७॥**
**सत्येष्वपि हि दृष्टैव पौरुषेयेषु वाक्यता।**

ज्ञाने एव पुंवचसां प्रामाण्य नार्थे तेषां व्यापारः, अतः साध्यविकलो दृष्टान्त इति तावदुक्तम्। अभ्युपेत्याप्यर्थविषयं व्यापार दूषणान्तरमुच्यते। यदि ज्ञानव्यवधाने सत्यर्थापेक्षयैव दृष्टान्तः, तथापि हेतोर्वाक्यत्वस्य सत्येष्वपि वैद्योपदेशेषु दृष्टत्वादनैकान्तिकत्वमिति।

यदि त्वतीन्द्रियविषयत्वे सति वाक्यत्वादित्युच्यते, तथाप्यनैकान्तिकत्वमित्याह—

**अतीन्द्रियेऽपि किञ्चिद्धि सत्यं दृष्टं यदृच्छया॥ १७८॥**

केनचिदतीन्द्रियविषयमेव वाक्यमिन्द्रोऽस्तीति प्रयुक्तम्, अपरेण नास्तीति, तयोरन्यतरदवश्यमस्ति सत्यमिति। एतच्च सत्यत्वमात्राभिप्रायेणोक्तम्, न तु प्रामाण्याभिप्रायेण। द्वयोरपि मूलाभावेनानिर्णायकत्वादप्रामाण्ये साध्ये नास्त्यनैकान्तिकत्वम्। तत्र तु वक्ष्यमाणान्येवाप्रयोजकत्वसप्रतिसाधनत्वागमविरुद्धत्वान्येव दूषणानीति॥ १७८॥

वर्णितेऽभिप्राये भाष्यं प्रयोजयति पादत्रयेण—

---

१. एतस्मादेव—मु० पा०।    २. बाह्यार्थपेक्षया—२ पु०।
३. हेतुसाधारणो—२ पु०।

**नान्यत्वादिति चानेन परोक्तादन्यतोच्यते ।**

**अन्यो ह्येष तदाभासः,**

परेण हि सामान्यतोदृष्टं वक्तव्यत्वेन प्रतिज्ञातम्, ततोऽन्यदिदं तदाभासमनैकान्तिकहेतुत्वादिति ।

अस्मिन्नेव दूषणे भाष्यमन्यथा प्रयोजयति—

**विपक्षं वान्यमब्रवीत्[1] ॥ १७९ ॥**

सामान्यतोदृष्टस्य हि विपक्षो हेतुशून्यो भवति । अस्य विपक्षः सत्यवाक्यं हेतुयुक्तोऽन्य इति । अस्मिंश्च व्याख्याने "न ह्यन्यस्य" इत्यादिभाष्यं[2] सुगमम् । न ह्यनाप्तवाक्यस्य वैतथ्ये सत्याप्तवाक्यस्यापि वैतथ्यम्, अतोऽनैकान्तिकत्वमिति योजना ॥ १७९ ॥

व्याख्यान्तरमाह —

**यद्वाऽन्यस्माद् विसंवादान्मिथ्यात्वं तत्र न त्विह ।**

अन्यदेव लौकिकस्य मिथ्यात्वे प्रयोजकं दुष्टत्वम्, दुष्टवाक्यं त्वप्रयोजकमिति । न ह्यन्यस्य दुष्टस्य मिथ्यात्वे सत्यदुष्टस्यापि मिथ्यात्वम्, न हि श्यामत्वहेतुयुक्तस्य देवदत्तस्य श्यामत्वेन तद्रहितस्य यज्ञदत्तस्यापि तद्भवति ।

व्याख्यान्तरमाह—

**विषयस्यापि चान्यत्वात् साधनासङ्गतैव सा ॥ १८० ॥**

लौकिकस्य हि वक्तृज्ञानं विषयः, नार्थः । तत्र न प्रमाणमेव तदिति तदैव साध्यवैकल्यं दृष्टान्तस्येति ॥ १८० ॥

"न ह्यन्यस्य" इति भाष्यमनुभाष्यास्मिन् पक्षे योजयति—

**न ह्यन्यस्येति नैकस्मिन्मृषार्थेऽन्यमृषार्थता ।**

एतदेव विवृणोति—

**विवक्षाया मृषार्थत्वे न च वाक्ये मृषार्थता ॥ १८१ ॥**

एकं वाक्यलिङ्गकं विवक्षाविषयं ज्ञानविषयं वानुमानम्, द्वितीयं तु विवक्षालिङ्गकमर्थविषयम् । तत्र द्वितीयस्य मिथ्यात्वेऽन्यस्य प्रथमस्यापि न मिथ्यात्वसिद्धिरिति । "न हि देवदत्तस्य[4]" इति सुगमम् ॥ १८१ ॥

अनैकान्तिकपक्षे देवदत्तनिदर्शनस्यार्थमाह—

**श्यामत्वे पुंस्त्ववच्चैतत् साधारण्ये निदर्शनम् ।**

न हि देवदत्तस्य श्यामत्वे पुंस्त्वेऽनैकान्तिकत्वेन यज्ञदत्तस्यापि तद्भवतीति ।

'नान्यत्वात्' इत्यस्य व्याख्यानान्तरमाह—

---

१. वान्यम्—पाठान्तरम् । ३. चासत्वात्—पाठान्तरम् ।

२. न ह्यन्यस्य वितथभावेऽन्यस्य वैतथ्यं भवितुमर्हति, अन्यत्वादेव । (शा० भा० पृ. १९) ।

४. न हि देवदत्तस्यश्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति । (शा० भा० पृ. २० )

**परोक्तेर्वापि दुष्टत्वाद् विकल्पसममुच्यते[1] ॥ १८२ ॥**

परोक्तं साधनमतिस्थूलदोष न सम्यगुत्तरार्हमिति मत्वा विकल्पसमं जात्युत्तरमाह। साधनधर्मयुक्ते धर्मिणि धर्मान्तरविकल्पात्साध्यधर्मविकल्पापादन विकल्पसमम्, वाक्यत्वे सत्यपि यथा किञ्चिल्लौकिक किञ्चिच्च ततोऽन्यद्वैदिकमित्येव लौकिकवैदिकत्वे विकल्पेनावतिष्ठेते। तथा किञ्चित्प्रमाण किञ्चिच्चाप्रमाणं भविष्यति, न वाक्यत्वमनुसहितमित्येतावता धर्मान्तराणामप्यनुसन्धान भवतीति। 'न ह्यन्यस्य' इत्यादि चास्मिन् पक्षे सुगमम् ॥ १८२ ॥

व्याख्यानान्तरमाह—

**यद्वा प्रमाणमेवेदं सम्यक्त्वेऽन्यत्वमुच्यते।**
**विरुद्धाव्यभिचारित्वं बाधो वाप्यनुमानतः ॥ १८३ ॥**

सम्यक्त्वे प्रामाण्ये प्रमाण लिङ्गमन्यत्वमुच्यते। तच्च यदि परोक्तेन साधनेन तुल्यबलम्, ततोऽस्य हेतोर्विरुद्धाव्यभिचारित्वम्, अथ प्रबलं ततोऽनुमानविरोधः प्रतिज्ञाया इति ॥ १८३ ॥

तदेव प्रमाण प्रयोगेण दर्शयति—

**चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः।**
**कारणैर्जन्यमानत्वाल्लिङ्गाप्तोक्त्यक्षबुद्धिवत् ॥ १८४ ॥**

प्रत्येक लिङ्गादिभिर्बुद्धिशब्द सम्बध्यते ॥ १८४ ॥

अस्मिन्नेव[2] साध्येऽन्ये द्वे[2] प्रमाणे दर्शयति—

**तथानाप्ताप्रणीतोक्तिजन्यत्वाद्[3] बाधवर्जनात्।**
**देशकालादिभेदादौ[4] चाप्तोक्तिप्रत्ययो यथा ॥ १८५ ॥**

देशान्तरादौ बाधवर्जनादित्यन्वय। भाष्यस्य चायमर्थ.—न वितथं वैदिकं किन्तु तथ्यमेव, कस्माद्? दोषयुक्त बाधयुक्त च यज्ज्ञानकारण ततोऽन्यत्वात् प्रत्यक्षादिवदनाप्तवाक्यत्वाद् वाक्यान्तरत्वादाप्तवाक्यवदिति। न ह्यन्यस्य ज्ञानकारणस्य बाधितस्य दोषयुक्तस्य च वितथभावेऽन्यस्य तद्रहितस्य वैतथ्यं भवति, अन्यत्वादेवेति ॥ १८५ ॥

नन्वसिद्धमेवानाप्ताप्रणीतत्वं दोषवर्जनं च वेदस्यानाप्तप्रणीतत्वात्? इत्यत आह—

**अकर्तृकत्वसिद्ध्या[5] च हेतुत्वं साधयिष्यते।**

---

१. ०सम उच्यते—२ पु०।   २-२. प्रयोगान्तरे द्वे—३ पु०।
३. ०नाप्तप्रणीतो०—मु० पा०।   ४. भेदेन—मु० पा०।
५. अकृत्रिमत्व०—१-२ पु०।

भाष्यार्थमुपसंहरति—

**एवमाद्यवबुध्यायं नान्यत्वादित्यवोचत ॥ १८६ ॥**

आदिशब्दश्चान्यस्यापि दोषस्योपसंग्रहार्थः। "अपि च पुरुषवचनसाधर्म्याद् वेदवचनं मिथ्येत्यनुमानम्, प्रत्यक्षस्तु वेदवचनेन प्रत्ययः। न च प्रत्यक्षविरुद्धमनुमानमात्मान लभते" (शा० भा० पृ. २१) इति भाष्यम्, तदयुक्तम्; प्रत्यक्षशब्दो ह्यैन्द्रियकप्रत्ययवचनः। न च शाब्दस्यैन्द्रियकत्वमस्ति। यदि तु वचनविषयो यः श्रौत्रः प्रत्ययः तस्य प्रत्यक्षत्वमुच्यते, न च तद्वैतथ्यस्य बाधकम्, वन्ध्यासुतवचनस्यापि श्रौतत्वात् ॥ १८६ ॥

अथ वाचनिकमेव ज्ञानं प्रत्यक्षगम्यत्वाभिप्रायेण प्रत्यक्षमुच्यते 'घट. प्रत्यक्षः' इतिवत्, तदप्ययुक्तम्, ज्ञानस्यानुमेयत्वादित्यत आह—

**प्रत्यक्षस्त्विति दार्ढ्यं वा प्राथम्यं वापि लक्षयेत्।**
**स्वरूपतः प्रमाणत्वं मिथ्यात्वं पररूपतः ॥ १८७ ॥**

ऐन्द्रियकज्ञानवचन एवाय प्रत्यक्षशब्दो वाचनिके ज्ञाने गुणवृत्त्या प्रयुक्त, अस्ति हि तस्य दार्ढ्यमनुमानाच्च प्राथम्यम्, स्वतश्च प्रामाण्य परतश्चाप्रामाण्यमिति प्रत्यक्षसादृश्यम्। तदनेनागमविरोध एव पूर्वोक्त प्रतिज्ञाया. कथ्यत इति ॥ १८७ ॥

मुख्य एव वा प्रत्यक्षशब्द इत्याह—

**ज्ञानाभावश्च मिथ्यात्वं द्वयस्यासम्भवाद् यदि।**
**प्रत्यक्षं तत्परेषां च सिद्धमस्यानुमानतः ॥ १८८ ॥**

परेण ह्यप्रामाण्यमुक्तम्, तच्च सशयविपर्ययात्मक द्वयमपि नास्तीति प्रागेव स्थितम्। तद्यदि ज्ञानाभावरूपमुच्यते ततो भवता प्रत्यक्षविरुद्धा प्रतिज्ञा भवति, भवन्मतेऽज्ञानस्य प्रत्यक्षत्वात्। अस्यैव हि केवलं मीमासकस्य तदनुमेयम्, परेषां तु प्रत्यक्षमेवेति ॥ १८८ ॥

विशेषविरुद्धत्वं वा हेतोरनेन भाष्येणोच्यत इत्याह—

**यथा च तव मिथ्यात्वं साधनं साधयेदिदम्।**
**तथा च बाधकाधीनं मिथ्यात्वमपि साधयेत् ॥ १८९ ॥**

बाधकाधीनेन हि मिथ्यात्वेन व्याप्तं वाक्यत्वं तादृशमेव साधयेत्। न च तद्वेदे शक्यं साधयितुम्, प्रत्यक्षो हि वेदोत्थापितः प्रत्ययः तद्वदेव न कदाचिद् बाध्यत इति अस्मिन् पक्षे गौण एव प्रत्यक्षशब्द इति ॥ १८९ ॥

"तस्माच्चोदनालक्षणः श्रेयस्कर." (शा० भा० पृ. २०) इति भाष्ये शब्दान्तरेणोपसंहारस्याभिप्रायमाह—

**धर्म इत्युपसंहार्ये यच्छ्रेयस्करभाषणम्।**
**तद्धर्मपदवाच्यार्थनिरूपणविवक्षया ॥ १९० ॥**

श्रेयस्करवाचित्वं धर्मशब्दस्य निरूपयितुम् एवमुपसहृतमिति। "य एव श्रेयस्करः स एव धर्मशब्देनोच्यते" ( शा० भा० पृ. २० ) इति भाष्यम्, तदनेन कस्य धर्मत्वमुक्तम् ? तद्दर्शयति—

**श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः।**
**चोदनालक्षणैः साध्या तस्मात् तेष्वेव धर्मता॥ १९१॥**

द्रव्यादीना धर्मत्वमुक्तमनेनेति॥ १९१॥

कथं पुनर्यागादीनामेव धर्मशब्दवाच्यत्वम् ? इत्याशङ्क्य लोकप्रयोग प्रमाण-मुपदर्शयता भाष्यकारेणोक्तम्—"यो हि यागमनुतिष्ठति तं धार्मिकं समाचक्षते" ( शा० भा० पृ. २० ) इति, तदयुक्तम्, यागानुष्ठाय्येव ह्यपूर्वान्ति.करणवृत्त्या-दिकमप्यनुतिष्ठति, अतो यागयोगादेवात्र कि धार्मिकशब्द., नापूर्वादियोगादिति कथं विविच्यते ? अत आह—

**अन्यत् साध्यमदृष्ट्वैव यागादीननुतिष्ठतः।**
**धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते॥ १९२॥**

लौकिका हि नापूर्वादिस्वरूप जानन्ति, कथ तन्निमित्त धार्मिकशब्दं प्रयुञ्जीरन्, यागादीनामेव श्रेय साधनत्व मत्वा तदभिप्रायेणैव तदनुष्ठायिनि धार्मिकशब्द प्रयुञ्जते। अतो यागादीनामेव श्रेय साधनात्मना धर्मशब्दाभिधेयत्व-मिति निर्णीयते॥ १९२॥

न च शूद्रकृतस्य धर्मत्वप्रसङ्ग , श्रेय साधनत्वाभावादिति प्रसिद्ध्यन्तरमपि दर्शयति सपादेन—

**पश्वादीनि च धर्मस्य फलानीति व्यवस्थितम्।**
**चित्रागोदोहनादीनां तान्युक्तानि फलानि च॥ १९३॥**
**तस्मात् तेष्वेव धर्मत्वम्[1],**

पश्वादीनि हि धर्मफलत्वेन प्रसिद्धानि। तेन येषा तानि फलानि ते धर्मा इति गम्यते। तानि च चित्रादीना फलत्वेन चोदनातोऽवगतानीति चित्रादीनामेव धर्मत्वमिति।

'वैदिकादपि सामानाधिकरण्याद्यागादेरेव धर्मत्वम्' इति वदता भाष्यकारे-णोदाहृतम्—"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्" ( शा० भा० पृ. २१ ) इति, तद्दर्शयति—

**धर्माणीति च दर्शनात्।**

कथं तर्हि पुल्लिङ्गैकवचनान्तेन यज्ञशब्देन नपुंसकबहुवचनान्तस्य धर्मशब्दस्य सामानाधिकरण्यम् ? अत आह—

**लिङ्गसंख्याविनिर्मुक्तो धर्मशब्दो निदर्शनम्॥ १९४॥**

---

१. एतेषु धर्मत्वम्—२ पु०।

तानीत्यत्र प्रातिपादिकं तावद्यज्ञवाच्येवान्यस्याप्रकृतत्वात् तत्समानाधिकरणश्च धर्मशब्द, तत सोऽपि यज्ञविषय एव । लिङ्गसख्ययोस्तु छान्दसत्वादसौ व्यत्यय इति ॥ १९४ ॥

एवं स्वमतेन धर्मपदस्यार्थमुक्त्वा मतान्तराणीदानी दूषयति—

**अन्तःकरणवृत्तौ वा वासनायां च चेतसः ।**
**पुद्गलेषु[1] च पुण्येषु नृगुणेऽपूर्वजन्मनि ॥ १९५ ॥**
**प्रयोगो धर्मशब्दस्य न दृष्टः,**

**सांख्या** ह्यन्तःकरणस्य मनसो वृत्तिविशेष यागाद्यनुष्ठानजन्यं धर्ममाहुः । **शाक्यास्तु** चेतसो ज्ञानस्य ज्ञानान्तरजन्या वासनाम् । **आर्हतास्तु** कायारम्भकान् परमाणून् पुद्गलाख्यान् । **वैशेषिकास्तु** आत्मनो विशेषगुणम् । **एकदेशिनस्त्व**पूर्वम् । सर्वेषु च तेषु लोके धर्मशब्दप्रयोगो न दृष्ट इति न तेषा धर्मत्वमिति यागाद्यनुष्ठानात् पूर्वं जन्म यस्य नास्ति तदपूर्वजन्मेति ।

किञ्च, श्रेयःसाधनवचनो धर्मशब्दो लोके प्रसिद्ध, न चान्त.करणवृत्त्यादीना तत्साधनत्व चोदनादिभिरवगम्यते, अतो न तेषा धर्मत्वमित्याह—

**न च साधनम् ।**
**पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः ॥ १९६ ॥**

आदिशब्देन बाह्यागमादीना ग्रहणम् । तेष्वपि चैत्यवन्दनादीनामेव श्रेय-साधनतावगम्यते, न वासनादीनामिति ॥ १९६ ॥

मा नामान्त करणवृत्त्यादीना श्रेय साधनत्व विज्ञायि, अपूर्वस्य तु ज्ञायते, तेनापूर्वं कृत्वा नान्यथेति वक्ष्यति, तस्मात् तस्य धर्मत्वं युक्तमत आह—

**न च वस्त्वन्तरं शक्यमपूर्वं स्वर्गयागयोः ।**
**ज्ञातुं साधनभूतं वा साध्यं वा नाप्यतोऽन्यथा ॥ १९७ ॥**

नापूर्वं नाम स्वतन्त्र वस्त्वन्तर स्वर्गयागयोः क्रमेण साधनभूत साध्यभूतम् अन्यादृशं वा ज्ञायते ॥ १९७ ॥

कथम् ? इत्याह—

**श्रुतसाधनसाध्यत्वत्यागेनाश्रुतकल्पना ।**
**प्रसज्येतास्य ताद्रूप्ये व्यतिरेके त्वरूपता ॥ १९८ ॥**

अस्यापूर्वस्य ताद्रूप्ये साध्यसाधनरूपत्वे श्रुतस्य स्वर्गसाध्यत्वस्य यागसाधनत्वस्य च हानिः, अश्रुतस्य चापूर्वसाध्यसाधनभावस्य कल्पनम्, अताद्रूप्ये तु स्वरूपमेवापूर्वस्य न स्यान्निष्प्रमाणकत्वादिति ॥ १९८ ॥

---

१. पुष्कलेषु—मु० पा० ।
२. नृगुणैः पूर्व०—का० मु० पा० ।

किमिदानी नास्त्येवापूर्वम् ? अत आह—

**तस्मात् फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् ।**
**उत्पत्तौ वापि पश्वादेरपूर्वं न ततः पृथक् ॥ १९९ ॥**

फलं साधयितुमभिप्रवृत्तस्य यागादे शक्तिमात्रमुत्पत्तौ वा प्रवृत्तस्य पश्वादेः फलस्य सूक्ष्मावस्था शक्तिरङ्कुरस्थानीया अपूर्व न तत पृथग्भूत स्वतन्त्रं वस्त्वन्तरम् । एतच्चापूर्वाधिकरणे ( जै० सू० २ १. ५ ) स्पष्टं वक्ष्यति ॥ १९९ ॥

तथापि कि धर्मशब्दवाच्यं न भवति ? अत आह—

**शक्तयः सर्वभावानां भावशब्दैर्विशेषतः ।**
**नोपाख्यायन्त इत्येवं नापूर्वे धर्मशब्दता ॥ २०० ॥**

उक्त तावत्—लोकप्रयोगाभावान्न तस्य धर्मशब्दवाच्यत्वमिति । किञ्च, सर्वपदार्थानामेव शक्तय साधारणैरेव शक्तिसामर्थ्यादिपदैरभिधीयन्ते, न च धर्मशब्दः शक्तिमात्रवचन अग्न्यादिशक्तावप्रयोगात्, अतो यागादे श्रेय साधनस्य या शक्तिः सा तद्विशिष्टाभिधेया स्यात् । न च शक्तीना भावविशिष्टानामभिधान क्वचिद् दृष्टम् । **विशेषत** इति विशेषण कृत्वेति । ल्यब्लोपे पञ्चमी । **भावशब्दैर्विशेषिता** इति क्वचित् पाठ । न चानभिधाय श्रेय साधन तद्विशिष्टा शक्तिरभिधातु शक्यते, तदभिधाने च न शक्ति यावदभिधा गन्तुमर्हति । तस्माद् यागादिरेव धर्मो नापूर्वमिति ॥ २०० ॥

"उभयमिह चोदनया लक्ष्यते[1]" इत्यादि भाष्यमर्थशव्दप्रयोजनकथनार्थम्, तदाक्षिपति—

**पुरस्ताच्चोदनाशब्दो विधावेव व्यवस्थितः ।**
**न च तल्लक्षणा हिंसा प्रत्युदाहरणं कथम् ॥ २०१ ॥**

क्रियाया प्रवर्तक वचन चोदनेति वदता क्रियाविधावेव चोदनाशब्दो व्यवस्थापित । तेन नानर्थस्य हिंसासुरापानादेश्चोदनालक्षणत्वम् । निषेधेषु हि यदि तावन्निवारण नाम विधेरर्थान्तर वाक्यार्थ , यदि वा नञर्थविधि —उभयथापि क्रियाविधित्वाभावान्न निपेधलक्षणस्यानर्थस्य चोदनालक्षणत्वम्, अतल्लक्षणस्य च द्व्यङ्गविकलत्वाच्चोदनालक्षणशब्देनैव तद्व्यावृत्तिसिद्धेनर्थिग्रहणप्रत्युदाहरणत्वम् । तस्मादुभय चोदनालक्षणमित्येतत्तावदयुक्तम् ॥ २०१ ॥

यदपि "कोऽनर्थः[2]" इति पृष्ट्वा अनर्थोदाहरणत्वेन श्येनादिकमुपन्यस्तम्, तदाक्षिपति—

१. उभयमिह चोदनया लक्ष्यते—अर्थोऽनर्थश्च । कोऽर्थः ? यो निःश्रेयसाय, ज्योतिष्टोमादिः ( शा० भा० पृ. २१ )

२. कोऽनर्थः ? यः प्रत्यवायाय—श्येनः, वज्रः, इषुः, इत्येवमादिः । तत्र अनर्थो धर्म उक्तो मा भूदित्यर्थग्रहणम् । ( शा० भा० पृ० २१ ) ।

**चोदनालक्षणो यश्च श्येनादिरिह गम्यते।**
**निषेधाभावतस्तस्य कथं ब्रूयादनर्थताम् ॥ २०२ ॥**

विधेयत्वेन श्येनादेर्निषेधाभावान्नानर्थत्वमिति।

एवं वा श्लोकद्वयमिदं व्याख्येयम्—अनर्थः श्येनादि चोदनालक्षण इत्यत्र विकल्प्य दूषणमुच्यते। श्येनग्रहणं यदि लक्षणया फलपरम्, ततस्तत्फलं हिंसा चोदनालक्षणत्वाभावादुभयाङ्गविकलं न प्रत्युदाहरणम्। अथ श्येनस्वरूपपरम्, तदप्यनर्थत्वाभावादुभयाङ्गयुक्तं न प्रत्युदाहरणमिति ॥ २०२ ॥

ननु विधेयस्यापि श्येनादेः षोडशिग्रहणादिवत् सम्भवत्येव निषेधः? अत आह—

**यद्यपि स्याद् विधिस्पृष्टे निषेधो नैव तादृशः।**
**विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवत् ॥ २०३ ॥**

अनन्यगोचरो हि निषेधो विधिविषयमास्कन्दति, सामान्यविषयो हिंसानिषेधो विशेषविहिते श्येनादौ न प्रवर्तत एव। अथापि प्रवर्तेत, तथापि विहितनिषिद्धस्य षोडशिवदेव नानर्थत्वमिति ॥ २०३ ॥

यदपि "कथं पुनरसावनर्थः" इति पृष्ट्वा "हिंसा च प्रतिषिद्धा"[1] इत्युक्तम्, तदप्याक्षिपति—

**चोदनालक्षणं चोक्त्वा निषिद्धत्वाद् विरुध्यते।**
**श्येनादावुपदिष्टे च हिंसा हीति न युज्यते ॥ २०४ ॥**

किमिति न युज्यते—श्येन एव हि हिंसा? अत आह—

**हिंसा हि फलमेतेषां भिन्ना तेभ्यः स्वरूपतः।**

कथं भिन्ना? इत्यत आह—

**सा हि प्राणवियोगात्मा श्येनस्तत्रासिवत्पृथक् ॥ २०५ ॥**

प्राणवियोगः=प्राणानां वियोजनम्, प्राणवियोगभावनेति यावत्। तस्यां चासिवदेव श्येनयागो धात्वर्थः करणम्, तस्य तु फलं प्राणवियोगभावना हिंसा श्येनादेर्भिन्नैवेति ॥ २०५ ॥

यदपि "कथं पुनरनर्थः कर्त्तव्यतयोपदिश्यते" इति पृष्ट्वा "नैव श्येनादयः कर्त्तव्यतया विज्ञायन्ते" इति तेषामविधेयत्वमुक्त्वा पुनः "यो हि हिंसितुमिच्छेत्, तस्यायमभ्युपायः" (शा० भा० पृ. २२) इति हि तेषामुपदेशः श्येनेनाभिचरन् यजेतेति कर्मवाचिन्या षष्ठ्या तेषामुपदेश्यत्वं विधेयत्वमुक्तम्, तदपि व्याहतम्? इत्याह—

**उपदेशाभिधानं च नाविधेयेऽवकल्पते।**

---

१. कथं पुनरसावनर्थः? हिंसा हि सा, हिंसा च प्रतिषिद्धेति (शा० भा० पृ. २२)।

"नैव श्येनादयः" इत्येतदपि विधेयत्वनिराकरणमयुक्तमित्याह—

**श्येनादेरविधाने च कस्यान्यस्य विधेयता ॥ २०६ ॥**

फल तावत्सर्वत्राविधेयम्, तद्यदि फलसाधनस्यापि श्येनादेरविधेयत्वं तदा न किञ्चिद्विधेयमवशिष्येत। इतिकर्त्तव्यतांशो विधीयत इति चेत्, न, अविशेषात्। यथैव हि साधनं साधनत्वेनोपदिश्यमानमप्यविधेयम्, तथैवेतिकर्त्तव्यता करणोपकारकत्वेनोपदिश्यमानाप्यविधेया स्यात्। यथा च साधने फलरागात् प्रवृत्तिः तथेतिकर्त्तव्यतायामपि तदभावे फलानुत्पत्तेरित्यलम् ॥ २०६ ॥

स्थितसिद्धान्तहानिश्च श्येनादीनामविधेयत्वे स्यादित्याह—

**सर्वत्रावस्थितो[1] न्यायो भावनांशद्वये विधिः।**
**स बाध्येत,**

"किञ्चैवं सति कोऽर्थो यो निःश्रेयसाय ज्योतिष्टोमादिः" (शा० भा० पृ० २२) इति भाष्ये ये धर्मत्वेन सम्मतास्तेऽपि न धर्माः स्युः, अधर्मत्वमेव तेषामपि स्यात्। तेऽपि हि साधनत्वेनोपदिश्यमानत्वादविधेयाः। अग्नीषोमीयादिहिंसाङ्गत्वाच्च तेनांशेन निषेधावताराद् अधर्मत्व स्यादित्याह—

**इह ये चामी ज्योतिष्टोमादयो मताः ॥ २०७ ॥**
**धर्मत्वेन न तेऽपि स्युर्हिंसासाधनका हि ते।**

किञ्च, विध्यभावे श्येनादीना तदङ्गाना च फलाङ्गत्व तत्साधनाङ्गत्वं च न स्यात्, समानपदोपात्तधात्वर्थावरुद्धाया भावनायाः समीहितसाध्यापेक्षत्वाभावादित्याह—

**न चाविधीयमानस्य फलतत्साधनाङ्गता ॥ २०८ ॥**

स्यादेतत्। नैव श्येनादयः कर्त्तव्यतया विज्ञायन्त इति कृत्यप्रत्यययोगात् साध्यतया विधान वार्यते, साधनतया तु विधानमनुज्ञायत एवातो न विरोध; न च समीहितसाधनत्वहानिरिति, तत्राह—

**साधनत्वेन[2] विहितं न चाविहितमुच्यते।**

एवमपि तावद्विहितमेव विहित चेन्निषेधागोचरत्वानर्थत्वेन[3] प्रत्युदाहर्तुं युक्तमिति। किञ्च, साधनत्वेनैव सर्वं विधेय विधीयते, साध्यांशस्य क्वचिदपि विधानाभावादित्याह—

**साध्यत्वेन[4] विधानं तु नैवेष्टं लोकवेदयोः ॥ २०९ ॥**

एवमाक्षिप्तं भाष्यं समाधत्ते—

**तेनैवमर्थशब्दस्य प्रयोजनमिहोच्यते।**

---

१. ०वसितः—२ पु०।
२. साधकत्वेन—का०।
३. चरत्वान्नार्थत्वेन—मु० पा०।
४. साध्यत्वेनेति। फलत्वेनेत्यर्थः।
श्लो० वा० : ६

यस्मादेवं यथाश्रुतं भाष्यमनुपपन्नम्, तस्मादेवं वक्ष्यमाणप्रकारेणार्थशब्दस्य प्रयोजनमिह भाष्ये कथितम्, न यथाश्रुतेनेति। तमेव प्रकारं दर्शयितुमुपक्रमते—

**प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः ॥ २१० ॥**
**सा चोदनेति सामान्यं लक्षणं हृदये स्थितम्।**

प्रवर्त्तकं निवर्तक च वाक्य चोदना, न केवलं प्रवर्त्तकमेव। धीग्रहण ज्ञानस्यापि चोदनात्वसम्भवात्। तच्च प्रागेवास्माभिर्दर्शितमिति भवत्युभयं चोदना।

कथं तर्हि प्रवर्त्तकं चोदनेति भाष्यम्? अत आह—

**प्रवर्तकगृहीतिस्तु[1] स्यादुदाहरणार्थता ॥ २११ ॥**

किमित्येवं भवति? इत्याह—

**तात्पर्ये ह्यर्थशब्दस्य नेयं व्याख्योपपद्यते।**

प्रवर्त्तकैकपरत्वे सति येयमर्थशब्दस्यानर्थनिवृत्तिपरत्वव्याख्या सा न युज्येतेति। अर्थशब्दसहितस्य वा चोदनाशब्दस्य तत्प्रवर्त्तकवचनत्वमुक्तमित्याह—

**अर्थग्रहणलभ्यं वा तत्प्रवर्तकभाषणम् ॥ २१२ ॥**

व्याख्यानान्तरमाह—

**धर्मे प्रमाणभूतायास्तद्वा लक्षणमुक्तवान्।**

यदा चोभयमपि चोदना, तदा तयैव विधिरूपया विधेयानामर्थत्व निषेधरूपया च निषेध्यानामनर्थत्व[2] लक्ष्यते, ततो युक्तमर्थानर्थयोः चोदनालक्षणत्वम्? इत्याह—

**एवं सति विधिभ्यः स्याद् विधेयार्थावधारणम् ॥ २१३ ॥**
**निषेधेभ्यो निषेध्यानामनर्थत्वेन निर्णयः।**

सति चोभयोस्तल्लक्षणत्वे निषेध्यस्यानर्थस्य धर्मत्वव्यावर्त्तनेन विधेयस्यैवार्थस्य धर्मत्वं वक्तुमर्थवदेवार्थग्रहणमित्याह—

**तेनार्थग्रहणेनोक्ता विधेयस्येह धर्मता ॥ २१४ ॥**

नन्वधर्मोऽपि हानाय जिज्ञासितव्य, अतस्तत्स्वरूपमपि वक्तव्यमत आह—

**निषेध्यानामनर्थत्वमर्थसिद्धं न सूत्रितम्।**

धर्मविपरीतो ह्यधर्म। ततोऽर्थस्य धर्मत्वे सूत्रिते तद्विपरीतस्यानर्थस्य निषेध्यस्याधर्मत्वमर्थसिद्धत्वान्न सूत्रितमिति।

एव च 'उभयं चोदनालक्षणम्' इति भाष्य विधेयनिषेध्याभिप्रायमित्याह—

**तस्मादुभयमित्यत्र विधेयप्रतिषेध्ययोः[3] ॥ २१५ ॥**
**यागादिब्रह्महत्यादिवर्गयोः स्यान्निदर्शनम्।**

यत्तु 'श्येनोदाहरणमयुक्तं विहितत्वेनानर्थत्वाभावात्[4]' इत्युक्तम्, तत्राह—

---

१. ०गृहीते०—मु० पा०। २. धर्मत्वमित्यर्थः।
३. ०प्रतिषेधयोः—मु० पा०। ४. ०त्वेनार्थत्वा०—मु० पा०।

**श्येनादीनां विधेयत्वादिष्टस्यापि च साधनात् ॥ २१६ ॥**
**उपचारादनर्थत्वं फलद्वारेण वर्ण्यते ।**

विहितत्वादभिलषिततमस्य च शत्रुवधस्य साध्यमानत्वान्न स्वरूपेणानर्थत्वं श्येनादीना सम्भवतीति फलगतमनर्थत्व श्येनादावुपचर्यते । श्येनशब्देन वा फलं लक्षयित्वा मुख्यवध एवानर्थत्वमुच्यत इति ।

**भाष्यकारेणैव** 'श्येनफलाभिप्रायमेवेदमनर्थत्वम्, न श्येनस्वरूपाभिप्रायम्' इति विस्पष्टीकृतमित्याह--

**प्रतिषिद्धा हि सेत्यत्र स्फुटमेतत् करिष्यते ॥ २१७ ॥**
**हिंसा हीति च यच्चापि ब्रूते नाभिचरेदिति ।**

कथमेभिर्भाष्यैरिदं विस्पष्टीकृतम् ? इत्याह—

**श्येनादीनां स्वरूपे तु नोत्तरग्रन्थसङ्गतिः ॥ २१८ ॥**

कथमुत्तरेषा "हिंसा हि" इत्यादिग्रन्थानामसङ्गतिरित्याह--

**विहितत्वान्निषेधस्य प्रवृत्तिस्तेषु दुर्लभा ।**

निषेधग्रहणमुपलक्षणम् । विहिते श्येनादिस्वरूपेऽनर्थत्वेन प्रतिज्ञाते निषिद्धत्वानुपपत्ति, यागस्वरूपे हिंसात्वानुपपत्ति । नाभिचरितव्यमिति वाभिचारस्य श्येनफलस्याविधेयत्वेन निषेधविषयत्व समर्थयता फलमेव पूर्वमनर्थत्वेनोदाहृतमिति दर्शयति । श्येनादिस्वरूपे तदपि न सङ्गच्छेतेति ।

तदेव निषेधस्यापि विधिवच्चोदनात्वाद् 'उभयं चोदनालक्षणम्' इति भाष्यं विधेयनिषेध्याभिप्रायं व्याख्यातम् ।

अस्तु वा विधिरेव चोदना, तथापि शक्यमेव कथञ्चिद्भाष्यं नेतुमित्याह--

**यदा तु चोदनाशब्दो विधावेव व्यवस्थितः ॥ २१९ ॥**
**तदोभयादिको ग्रन्थः साध्यसाधनसंश्रितः ।**

ननु साध्यस्याविधेयत्वात् कथं चोदनालक्षणत्वम् ? अत आह—

**साध्यसाधनसम्बन्धे विधिना प्रतिपादिते ॥ २२० ॥**
**लक्ष्यमाणत्वमुभयोः,**

यथैव हि हिंसासाधनं साधनरूपेण चोदनालक्षणम्, तथैव फलमपि स्वर्गादिसाध्यरूपेण चोदनालक्षणमेवेति ।

'अर्थोऽनर्थ' इत्येतत्तु फलद्वैविध्याभिप्रायमित्याह—

**द्विविधं च फलं क्रतोः ।**

कथं द्विविधम् ? इत्याह पादत्रयेण--

**स्वर्गादि[1] प्राप्यते तत्र प्रतिषेधानतिक्रमात् ॥ २२१ ॥**
**अतिक्रमेण हिंसादि,**

---

१. स्वर्गो हि—का० ।

स्वर्गादिरनिषिद्धत्वादर्थः, हिंसादिस्तु निषिद्धत्वादनर्थ इति।

कथं निषेधः ? अत आह—

**शास्त्रान्तरनिरीक्षया**[1]।

'न हिंस्यात्' इति शास्त्रान्तरेण निषिद्धत्वादिति।

ननु चाभिचारविधिना विहिता हिंसा कथं निषिध्येत ? अत आह—

**फलांशे भावनायाश्च प्रत्ययो न विधायकः॥ २२२॥**
**वक्ष्यते, जैमिनिश्चाह तस्य लिप्सार्थलक्षणा।**

वक्ष्यति हि फलस्याविधेयत्वम् "उद्देशाच्च फलत्वेन" ( श्लो० वा० २-२६५ ) इत्यत्र श्लोके। तथा **भाष्यकारो**ऽपि "जानात्येवासौ मयैतत्कर्त्तव्यम्, उपाय तु न वेद" इति। **जैमिनिश्च** "तस्य लिप्सार्थलक्षणा" इति। यत एवाविधेयं फलमत एव सामान्यतः प्राप्तो निषेधः फलांशेऽभिचारविधिना न वार्यत इत्याह—

**तेन सामान्यतः प्राप्तो विधिना न**[2] **निवारितः॥ २२३॥**
**फलांशोपनिपातिन्या हिंसायाः प्रतिषेधकः।**

एवमभिचारविधिगोचरे प्रविशन्नपि निषेधो न श्येनस्वरूपस्यानर्थत्वं बोधयति, किन्तु तत्फलस्यैवेत्याह—

**अनर्थप्राप्तिहेतुत्वं बोध्यते तत्र यद्यपि॥ २२४॥**
**श्येनस्वरूपं नानर्थस्तत्फलस्य त्वनर्थता।**

भाष्य चैवं योजनीयम्—उभयं चोदनया लक्ष्यते साध्यं साधनं च। साध्यमपि द्विविधम् अर्थोऽनर्थश्च। कोऽर्थ इत्यत्रार्थशब्दः साधनलक्षणार्थः। अर्थात्मकस्य फलस्य साधकमित्यर्थः। यो ज्योतिष्टोमादि। कोऽनर्थ इति फलस्वरूपाभिप्रायमेव। यः श्येनादि. फलमित्यर्थः। तत्रानर्थस्य हिंसादेर्धर्मत्वव्यावर्त्तनेन ज्योतिष्टोमादेर्धर्मत्वं वक्तुमर्थग्रहणमिति। एवं चार्थात्मकफलसाधनस्य श्येनादेरुभयं नोक्तम्। अतोऽसौ न धर्मो नापि स्वरूपेणाधर्म इति सिद्धं भवति। तथा च वक्ष्यति— "अतः स्वतो न धर्मत्वं श्येनादेर्नाप्यधर्मता" ( श्लो० वा० २. २६६ ) इति।

"कथं पुनरनर्थः कर्तव्यतयोपदिश्यते" ( शा० भा० पृ. २२ ) इति चोद्यमयुक्तं फलं ह्यनर्थत्वेनोदाहृतम्, तच्चाविधेयत्वान्नैव कर्त्तव्यतयोपदिश्यतेऽत आह—

**परस्तूभयमित्यादेः फलस्यापि विधेयताम्॥ २२५॥**
**भावनान्तर्गतत्वाद् वा मत्वानर्थत्वमाक्षिपत्।**

फलस्याविधेयत्वमजानन् 'उभयम्' इत्यादिना फलस्यापि चोदनालक्षणत्वाभिधानात् भावनांशत्वाद्वा तद्विधाने इतरांशवत् फलस्यापि विधेयत्वादनर्थत्वमाक्षिपदिति।

---

१. ०विवक्षया— का०। २. च—मु० पा०।

"नैव श्येनादयः कर्त्तव्या." ( शा० भा० पृ २२ ) इति परिहारभाष्यमनुपपन्नम्, फलस्य विधेयत्वे चोदिते श्येनस्य निवारणमसङ्गतमयुक्तं च, श्येनस्य विधेयत्वाभिधानात्, अतो भित्त्वा व्याचष्टे—

**नैवेत्येतावता चास्य विधेयत्वनिराक्रिया ॥ २२६ ॥**

अस्यानर्थस्य विधेयत्वनिराक्रिया नैव 'अनर्थः कर्त्तव्यतयोपदिश्यते' इति भाष्यार्थः। किं तर्हि विधेयमिति ? अत उत्तर श्येनादय इति भाष्यमित्याह—

**किं विधेयमिदानीं स्यादाह श्येनादयस्त्विति।**

यश्चाय तव्यप्रत्ययः प्रश्नग्रन्थे पठित' परिहारग्रन्थे चानुषक्त. स विधेयत्वाभिप्रायो न साध्यत्वाभिप्राय इत्याह पादत्रयेण—

**प्रश्नापाकरणे चात्र तव्यो विधिविवक्षया ॥ २२७ ॥**
**प्रयुक्तो न तु साध्येऽर्थे,**

प्रश्नश्चापाकरण च प्रश्नापाकरणम्, समाहारद्वन्द्व इति।

कथं न साध्यार्थ इति ? अत आह—

**द्वयेऽप्यनुपयोगतः।**

अनर्थत्वाक्षेपो हि चोद्यम्, तत्समर्थनं च परिहार.। न चोभयत्रापि यथाक्रमं साध्यत्वं तन्निराकरणं चोपयुज्यत इति।

कथं नोपयुज्यते ? अत आह—

**अनर्थस्यापि साध्यत्वमविधेयस्य हीष्यते ॥ २२८ ॥**
**साध्यत्वरहिते चेष्टा विधेये नित्यमर्थता।**

सुरापानादेरनर्थस्यापि साध्यत्वदर्शनान्न साध्यत्वमनर्थत्वाक्षेपायोपयुज्यते, चोद्यवादिनो विधेयत्वमेव त्वनर्थविरोधित्वादुपयुज्यते। एवमसाध्यस्यापि गोदोहनादेर्विधेयस्यार्थत्वदर्शनाद् विधेयत्वनिराकरणमेवानर्थत्वं समर्थयमानस्य परिहारवादिन उपयुज्यते, न साध्यनिराकरणमिति।

यच्चेदं नैवेत्येतावता 'अनर्थस्य विधानं निराक्रियते' इत्युक्तम्, तद्भाष्यकारेणैव स्फुटीकृतमित्याह—

**शतुश्च लक्षणार्थत्वं तेषां चाप्युपदेशनम् ॥ २२९ ॥**
**ब्रुवन् स्फुटीकरोतीष्टमुपदेशो हि नान्यथा।**

'श्येनेनाभिचरन्यजेत' इति हि समामनन्तीति लक्षणे शतुर्वृत्ति दर्शयल्लक्षणस्य प्रसिद्धत्वादविधेयत्वमभिचारस्य दर्शयति, तथा तेषामुपदेश इति श्येनादीनामुपदेश्यत्वं दर्शयति। तेन फलस्यैव पूर्वग्रन्थे विधेयत्वं निराकर्त्तुमिष्टम्, न श्येनादीनामिति स्फुटयति। न ह्यविधेयानामुपदेशोपपत्तिः, विध्युपदेशशब्दयोः पर्यायत्वादिति।

**'श्येनादयः' इत्यादिशब्दार्थमाह—**

**विधित्वमादिशब्दात् स्यादितिकर्तव्यतास्वपि ॥ २३० ॥**

विधिशक्तिरित्यर्थः। तेनांशद्वयगतैव हिंसा निषेधस्याविषयः॥ २३० ॥

फलांशस्य त्वविधेयत्वान्निषेधगोचरोऽनर्थं एवेत्युपपन्नं प्रत्युदाहरणमित्युपसंहरति—

**तस्मात् फलांशे या हिंसा वैदिकी सा निषिध्यते।**

केचित्तु साधनेतिकर्त्तव्यताशस्थापि हिंसा निषिध्यते, अतोऽनर्थं इति मन्यन्ते; तां निराकरोति—

**अंशद्वये तु या नाम तन्निषेधाभिधायिनाम्॥ २३१ ॥**

**अविशेषेण यच्छास्त्रं शिरोवदिति चोत्तरम्।**

"अविशेषेण यच्छास्त्रम्" इत्यत्र "वचनाद्वा शिरोवत्" इत्यत्र च सामान्यस्याहवनीयविधेः शवस्पर्शनिषेधस्य च विशेषेण वर्त्महोमविधिना पुरुषशीर्षोपधानविधिना च बाधो वक्ष्यते, तद्वद्धिंसानिषेधोऽपि सामान्यरूपत्वादग्नीषोमीयादिक्रत्वर्थहिंसाविधिना 'श्येनेनाभिचरयजेतन्' इति पुरुषार्थहिंसाविधिना च बाध्यते।

अथासत्यपि निषधे किमित्यनर्थोऽग्नीषोमीयहिंसा न भवतीत्यत आह—

**निषेधेनानवष्टब्धे विषये न ह्यनर्थता॥ २३२ ॥**

**प्रत्यक्षादेरशक्यत्वात् कल्प्यते निष्प्रमाणिका।**

निषेध एव ह्यनर्थत्वे प्रमाणं प्रत्यक्षादीनामशक्तत्वादतोऽप्रतिषिद्धे निष्प्रमाणिकानर्थता कल्प्येतेति। प्रत्यक्षाद्यशक्तिं तावद् दर्शयति—

**न हि हिंसाद्यनुष्ठाने तदानीं दोषदर्शनम्॥ २३३ ॥**

नन्वसत्यपि दोषदर्शने बाह्यहिंसावद्विचिकित्सा जायते? अत आह—

**बाह्येऽपि विचिकित्सा तु शास्त्रादेवोपजायते।**

तच्च शास्त्रमिह नास्तीति न तन्निबन्धना विचिकित्सेति। अथानुमानेन कर्त्तुर्दुःखं भविष्यतीत्यनुमीयते, हिंस्यमानस्य तदात्वे दुःखदर्शनादत आह पादत्रयेण—

**हिंस्यमानस्य दुःखित्वं दृश्यते यन्न तावता॥ २३४ ॥**

**कर्तुर्दुःखानुमानं स्यात्,**

व्याप्त्यभावादित्यर्थः। प्रत्युत कर्त्तुस्तदात्वे सुखदर्शनात् कालान्तरे तदेवानुमीयत इत्याह—

**तदानीं तद्विपर्ययः।**

पूर्वशङ्कितमनुमानं दर्शयति—

**विषयेऽस्याः[1] फलं यादृक् प्रेत्य कर्तुस्तथाविधम्॥ २३५ ॥**

**हिंसा क्रियाविशेषत्वात् सूते शास्त्रोक्तदानवत्।**

---

१. विषयोऽस्याः—मु० पा०।

**हिंसेति**। धर्मिनिर्देश.। अस्या हिंसाया विषये हिस्यमाने यादृक् फल दु.खं तादृगेव कालान्तरे कर्त्तुः प्रसूत इति प्रतिज्ञा[1] क्रियाविशेषत्वाच्छास्त्रोक्तदानवत्। तद्धि स्वविषये सम्प्रदाने यादृक् फलं सुख तादृगेव कर्त्तु. प्रसूते इति। तद् दूषयति—

**य एवमाह, तस्यापि गुरुस्त्रीगमनादिभिः ॥ २३६ ॥**
**सुरापानादिभिश्चापि विपक्षैर्व्यभिचारिता।**

दूषणान्तरमाह—

**विरुद्धता च,**

कथम् ? इत्याह—

**यादृग्घि दानैस्तादृक् फलं भवेत् ॥ २३७ ॥**

तादृक्त्वमेव दर्शयति—

**विधिगम्यफलावाप्तिः,**

तथापि कथ विरोधः ? इत्याह—

**अदुःखात्मकता तथा।**

तथा सति विधिगम्यफलत्वे सत्यदुःखात्मकता फलस्य स्यात्, ततश्च दुःखविपरीतसुखसाधनत्वाद् विरुद्धतेति। दृष्टान्तश्च साध्यविकल इत्याह—

**न च या सम्प्रदानस्य प्रीतिस्तादृक् फलं श्रुतम् ॥ २३८ ॥**
**दातुस्तेन हि दृष्टान्तः साध्यहीनः प्रतीयते।**

सम्प्रदानस्य स्वल्पं सुख कर्त्तुस्तु महत्, समद्विगुणसहस्रानन्तानि फलानीति स्मृतेरिति। किञ्च, सपक्षे येनैव हेतोर्व्याप्तिस्तदेव पक्षेऽपि साधयितव्यम्, इह च सम्प्रदानतुल्यफलत्व सपक्षे, कर्मकारकतुल्यफलत्वं तु पक्षे; विषयशब्दमात्रं त्वेकम्, अर्थस्तु विषय एवेति नानुमानोपपत्तिरित्याह—

**सम्प्रदानं च दाने ते विषयः कर्म हिंसने ॥ २३९ ॥**
**वैषम्यम्,**

यदि तु सपक्षवत् पक्षेऽपि सम्प्रदानतुल्यफलत्वमेव साध्यते, ततो विरुद्धता हेतोरित्याह—

**सम्प्रदाने तु पक्षे[2] त्वेतद्विरुद्धता।**

कथम् ? इत्याह—

**प्रीयते सम्प्रदानं हि देवतेति मतं तव ॥ २४० ॥**

ततश्च दुःखफलत्वसाधनाय प्रयुक्तो हेतुः सुखफलत्वसाधनाद्विरुद्धः स्यादिति। शङ्कते—

**दृष्टान्ते कर्म दानं चेत्,**

---

१. प्रतिज्ञेति नास्ति ३ पु०। २. पक्षस्त्वे०—मु० पा०।

उभयत्र कर्मवचनत्वान्न वैषम्यमिति ।

दूषयति—

**तस्य कीदृक् फलं भवेत् ।**

न हि हिरण्यादेर्देयस्य किञ्चिदपि फलमस्तीति ।

दूषणान्तरमाह—

**जपहोमादिदृष्टान्तात् परपीडादिवर्जनात् ॥ २४१ ॥**
**चोदितत्वस्य हेतुत्वाद् विरुद्धाव्यभिचारिता ।**

अग्नीषोमीयहिंसा सुखकरी चोदितत्वाज्जपादिवत् । किञ्च, आगमैकविषययोर्धर्माधर्मयोरनुमानोपन्यासो[1] न युक्त इत्याह—

**विहितप्रतिषिद्धत्वे मुक्त्वान्यन्न च कारणम् ॥ २४२ ॥**
**धर्माधर्मावबोधस्य तेनायुक्तानुमानगीः ।**

किञ्च, विषयानुरूपफलदायिवादिना परस्यात्मनो वा पीडानुग्रहनिबन्धन धर्माधर्मत्वमाश्रितम्, ततश्च जपे सुरापाने च परोपकारापकाराभावाद्धर्माधर्मत्वे न स्यातामित्याह—

**अनुग्रहाच्च धर्मत्वं[2] पीडातश्चाप्यधर्मताम्[3] ॥ २४३ ॥**
**वदतो जपसीध्वादिपानादौ नोभयं भवेत् ।**

गुरुदाराभिगमश्च धर्म. स्यादित्याह—

**क्रोशता हृदयेनापि गुरुदाराभिगामिनाम् ॥ २४४ ॥**
**भूयान् धर्मः प्रसज्येत भूयसी ह्युपकारिता ।**

यद्यपि गुरुदाराभिगामी हृदयक्रोशमल्पमात्मनोऽपकार करोति, तथाप्युपकारभूयस्त्वाद् धर्म एव भूयान् स्यात् । किञ्च, अनुमानप्रधानस्य भवतो मते हृदयक्रोशनमपि निर्निबन्धनमेव, दृष्टपीडाभावात्तन्निबन्धनत्वाच्च क्रोशनस्येत्याह—

**अनुमानप्रधानस्य प्रतिषेधानपेक्षिणः ॥ २४५ ॥**
**हृदयक्रोशनं कस्माद् दृष्टां पीडामपश्यतः ।**

यदि हृदयक्रोशरूपात्मपीडावशादेवाधर्मत्वम्, अधर्मत्वाच्च हृदयक्रोशोपपत्तिरित्युच्यते, तत इतरेतराश्रयमित्याह—

**पीडातश्चाप्यधर्मत्वं तथा पीडामधर्मतः ॥ २४६ ॥**
**अन्योन्याश्रयमाप्नोति विना शास्त्रेण साधयन् ।**

म्लेच्छादीना च हृदयक्रोशाभावान्नाधर्मयोगः स्यादित्याह—

**एवमादावशास्त्रज्ञो म्लेच्छो नोद्विजते क्वचित् ॥ २४७ ॥**
**तस्य नाधर्मयोगः स्यात् पूर्वोक्ता यदि कल्पना ।**

---

१. ०विषयो धर्मा०—मु० पा० । २. ०च्चाधर्मत्वं—मु० पा० ।
३. ०धर्मता—मु० पा० ।

उपसहरति—

**तस्मादनुग्रहं पीडां तदभावमपास्य च ॥ २४८ ॥**
**धर्माधर्मार्थिभिर्नित्यं मृग्यौ विधिनिषेधकौ ।**

केचित्तु निषेधप्रामाण्यादेव विहितानामपि हिंसानामधर्मत्वमिच्छन्ति, तन्मत-मुपन्यस्यति त्रयेण—

**क्वचिदस्या निषिद्धत्वाच्छक्तिः शास्त्रेण बोधिता ॥ २४९ ॥**
**प्रत्यवायनिमित्तत्वे विधिना नापगच्छति ।**
**शास्त्रेण न हि शक्तीनामावापोद्वापनक्रियाः ॥ २५० ॥**
**विद्यमाना हि कथ्यन्ते शक्तयो द्रव्यकर्मणाम् ।**
**तदेव चेदं कर्मेति शास्त्रमेवानुधावता ॥ २५१ ॥**
**हिंसादीनामधर्मत्वं कथ्यते नानुमानतः ।**

एकैव हिंसा, तस्याश्च क्वचिद् ब्राह्मणादिविषये प्रत्यवायनिमित्तत्वशक्तिर्निषे-धेन बोधिता, सा पुनर्विधानादपि नापगच्छति। न हि शास्त्रं शक्तीनामावापोद्वापौ करोति, विद्यमानशक्तिकथनमात्रे व्यापारात्। अत शास्त्रानुसारादेवाग्नीषोमीय-हिंसाया अधर्मत्व नानुमानत इति। आदिग्रहणमुपधानान्तरमित्याद्यभिप्रायम्। तदिदमतिप्रसङ्गापादनेन दूषयति—

**एवं ये निपुणं प्राहुस्तैरप्येतत् परीक्ष्यताम् ॥ २५२ ॥**
**सुरापानादिभिः शूद्रः किं याति नरकं कृतैः ।**
**वैश्यस्तोमेन वा किं स्याद्विप्रराजन्ययोः फलम् ॥ २५३ ॥**
**पञ्चम्यामिष्टिकरणान्मध्याह्ने चाग्निहोत्रतः ।**

उपसहरति—

**तस्माद् यद्यादृशं कर्म यत्फलोत्पत्तिशक्तिकम् ॥ २५४ ॥**
**शास्त्रेण गम्यते तस्य तादृशस्यैव तत् फलम् ।**

यादृशस्य यद्विशेषणविशिष्टस्य यत्फलं तादृशस्यैव तत्फलम्, न स्वरूपैक्यात् फलसङ्कर इति।

ननु वैश्यस्तोमादेर्वैश्यादिविशिष्टस्य फलसाधनत्वावगमादन्यादृशस्य मा भूत् फलम्, न हिंस्यादिति तु हिंसामात्रस्यानर्थफलत्व ज्ञातम्, न हिंसाविशेषस्य, तत्स्वरूप चाग्नीषोमीयादावप्यस्तीत्यत आह पादत्रयेण—

**हिंसा चांशद्वयादन्या या तस्याः प्रतिषेधजम् ॥ २५५ ॥**
**प्रत्यवायार्थताज्ञानम्,**

कथम्? इत्यत आह—

**विधिनान्यत्र वार्यते ।**

अन्यत्रांशद्वये विधिना वार्यते, तेन तत उत्कालितो न हिंस्यादिति सामान्य-

निषेधो हिंसान्तराण्यवलम्बत इति तेषामेवानर्थत्वमवगतम्, न हिंसामात्रस्येति । यत्तु ज्ञापकं शास्त्रं न कारकमित्युक्तम्, तदनुज्ञायत एव । तदेतद् व्यवस्थितविषयं नैकविधमित्याह—

**ज्ञानमेव च शक्तीनां नावापोद्वापनक्रियाः ॥ २५६ ॥**
**ज्ञायन्ते शास्त्रतस्तास्तु क्रियाभेदव्यवस्थिताः ।**

दृष्टा च लोकेऽप्यभिन्नरूपस्यैव कर्मण. शक्तिभेदेन व्यवस्थेत्याह—

**व्यवस्थाः शक्तिभेदानां दृष्टार्थेष्वपि कर्मसु ॥ २५७ ॥**
**अभिन्नत्वेऽपि दृश्यन्ते भुजेः स्वस्थातुरेष्वपि ।**

अथ तत्र भोजनस्यैकत्वेऽपि उपाधिकृतभेदादेव शक्तिव्यवस्था, तथा हिंसाया अपि अङ्गानङ्गत्वकृतभेदाश्रयणात् तुल्येत्याह—

**रूपाभेदेऽपि हिंसादेर्भेदोऽङ्गानङ्गकारितः ॥ २५८ ॥**

तथा सत्यपि चेदेकफलत्व हिंसायाः, तत. क्रियात्वेनैकत्वात् सर्वासामश्वमेध-ब्रह्महत्यादिक्रियाणा फलसङ्कर· स्यादित्याह—

**तथाप्येकफलत्वं चेत् क्रियात्वात् सर्वसङ्करः ।**

यदि तु न क्रियात्वेनैकत्वम्, किन्त्ववान्तररूपैकत्वमेवैकफलत्वे हेतुरित्युच्यते, तथापि यजित्वाविशेषाच्चित्रासौर्यादीना तुल्यफलत्व स्यादित्याह—

**यजित्वाद्यविशेषाच्च चित्रादिफलतुल्यता ॥ २५९ ॥**

अथ तत्र यागव्यक्तिभेदाद् व्यवस्था, हिंसायामपि तुल्या ? इत्याह—

**भेदात् तत्र व्यवस्था चेदिहाप्येवं भविष्यति ।**

ननु विहितापि हिंसा किं नानर्थो भवति ? अत आह—

**विधीनां वापि सर्वेषां साक्षाद् व्यवहितोऽपि वा ॥ २६० ॥**
**पुरुषार्थः फलं तेन नानर्थोऽतः प्रतीयते ।**

दर्शादीनां साक्षात्प्रयाजादीनां व्यवहित , तेन विधिरेवानर्थत्वपरिपन्थीति ।

प्रमाणाभावादपि नानर्थत्वमित्याह—

**न चैषु श्रूयतेऽनर्थः,**

न च निषेधवशादपि कल्पयितुं शक्यते, तदभावस्य दर्शितत्वादित्याह—

**निषेधान्न च कल्प्यते ॥ २६१ ॥**

किञ्च, पुरुषार्थपरत्वे सत्यनर्थोऽपि कल्प्यत इति शङ्क्येत, न च तदस्ति प्रकरणस्थत्वादित्याह—

**न च प्रकरणस्थत्वात् पुरुषार्थः फलं भवेत् ।**

किं नाम तर्हि प्रकरणस्थस्य फलम् ? अत आह—

**कर्मोपकारः कल्प्यस्तु दृष्टोऽदृष्टोऽथ वा पुनः ॥ २६२ ॥**

क्रतावेवोपकारकल्पनावसर., अनर्थस्य त्वनपेक्षितस्यावसर एव नास्तीत्याह–

**कल्पनावसरस्तत्र नानर्थस्यानपेक्षणात् ।**

क्रत्वर्थोऽप्यसौ सस्कारो नारादुपकारक इत्याह—

**क्रत्वर्थश्चापि संस्कारः पशोर्नारादुपक्रिया ॥ २६३ ॥**

सस्कारोऽपि हृदयाद्यवदाननिष्पत्त्या दृष्टार्थ , न प्रोक्षणादिवददृष्टार्थ इत्याह–

**दृष्टैव त्ववदानानां निष्पत्तिः क्रत्वपेक्षिता ।**

तदेवं निषेध्यत्वमङ्गीकुर्वतार्थफलस्यानर्थफलत्वम्, क्रत्वर्थस्य पुरुषार्थत्वम्, संस्कारस्यार्थकर्मत्वम्, दृष्टार्थस्यादृष्टार्थत्वम्—इति चतुष्टय प्रमाणविपरीतं कल्पितमिति ।

एवं चाभिचारार्थे श्येनादावप्यङ्गभूता हिंसा नाधर्म', किन्त्वनङ्गभूताया फलांशस्थायामेवाधर्मत्वमिति तल्लक्षणार्थमेव श्येनादिग्रहणं नाङ्गहिंसालक्षणार्थमित्याह—

**अभिचारेऽप्युपायस्था हिंसा नाधर्म उच्यते ॥ २६४ ॥**

**तस्मादनङ्गभूतायां हिंसायामेतदुच्यते ।**

यत्तु फलाशस्यापि चोदनालक्षणत्वाद् भावनान्तर्गतत्वाद्वा विधेयतैवेत्युक्तम्, तत्राह—

**उद्देशाच्च फलत्वेन श्येनादौ न विधीयते ॥ २६५ ॥**

**भावनाविधिरप्येव फलांशाद् विनिवर्तते ।**

श्येनादौ हि विधीयमाने फलत्वेनोद्दिश्यते हिसा, न तु सैव विधीयते, तावदेव च तस्याश्चोदनालक्षणत्वम्, तया हिसा श्येनसाध्यतया लक्ष्यते । न चैतावता विधेयत्वम् । न हि यद्विधिप्रमेयं तद्विधेयमिति विधेयलक्षणम्, कि तर्हि ? यत्राप्रवृत्तः पुरुषो विधिवशात् प्रवर्त्तते तद्विधेयम् । न च फलस्य तदस्ति, विधितः प्रागेव तत्र रागतः प्रवृत्तेरित्यविधेयत्वम् । तथा भावनाविधिरप्यर्थाद् विषयेष्ववतरन्नन्यतः प्राप्तात् फलाशाद्विनिवृत्तः साधनेतिकर्त्तव्यतांशयोरेवावतरतीति तयोरेव विधेयत्व न फलस्येति ।

यत एवं फलस्यानर्थत्वम्, अतस्तद्द्वारेणानर्थत्वात् श्येनत्वस्य न धर्मत्वं नाप्यधर्मत्वम्, स्वरूपेणानर्थत्वाभावात् फलस्यानर्थानुबन्धित्वात् तद्द्वारेण श्येनोऽप्यधर्म इत्युपचर्यत इत्याह—

**अतः स्वतो न धर्मत्वं श्येनादेर्नाप्यधर्मता ॥ २६६ ॥**

**फलानर्थानुबन्धित्वात् तद्द्वारेणोपचर्यते ।**

नन्वनर्थानुबन्धित्वं चेच्छ्येनस्योच्यते साक्षादेव तदुच्यताम्, किमुपचाराश्रयणेन ? अत आह—

**निराकाङ्क्षस्य चैकेन श्येनस्य न फलद्वयम् ॥ २६७ ॥**

**तस्मात् क्रियान्तरादेव[1] हिंसातोऽनर्थं[2] उच्यते।**

विहितस्य तावन्न प्रत्यवायफलत्व युक्तम्, अभिचारेणैव श्रुतेन निराकाङ्क्षत्वादपि नानर्थकल्पनम्। तस्माच्छ्येनसाध्याद्धिसाख्यात् क्रियान्तरादेवानर्थ. न श्येनस्वरूपादिति।

मा भूदधर्मत्वम्, धर्मस्तर्हि किं न भवति ? अत आह—

**फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते॥ २६८॥**
**केवलप्रीतिहेतुत्वात् तद्धर्मत्वेन हीष्यते।**

तादृश्या एव धर्मत्वप्रसिद्धेरिति।

चोदयति—

**ननु चेष्टाभ्युपायत्वात् श्येनादेर्धर्मता भवेत्॥ २६९॥**

परिहरति—

**फलं तावदधर्मोऽस्य श्येनादेः सम्प्रधार्यते।**

श्येनः समीहितस्य शत्रुवधस्य साधनम्, सोऽपि प्रत्यवायस्येत्येषा तावदर्थस्थितिः। धर्मशब्दार्थत्व तु श्येनादेः कीदृशमिति लोकानुसारेण सम्प्रधार्य निर्णेतव्यम्, नात्राभिनिवेश इति। सम्प्रधारणमेव दर्शयति त्रयेण—

**यदि येनेष्टसिद्धिः स्यादनुष्ठानानुबन्धिनी॥ २७०॥**
**तस्य धर्मत्वमुच्येत ततः श्येनादिवर्जनम्।**
**यदा तु चोदनागम्यः कार्याकार्यानपेक्षया॥ २७१॥**
**धर्मः प्रीतिनिमित्तं स्यात् तदा श्येनेऽपि धर्मता।**
**यदि त्वप्रीतिहेतुर्यः साक्षाद् व्यवहितोऽपि वा॥ २७२॥**
**सोऽधर्मश्चोदनार्थः स्यात् तदा श्येनेऽप्यधर्मता।**

**कार्याकार्ये**ति। यत् केवलाभ्युदयनिमित्तं तत् कार्यम्, इतरच्चाकार्यमिति।

पुनरपि चोदितहिंसामेवोपक्रम्याधर्मत्वेऽनुमानमुपन्यस्य दूषयति—

**यस्तु हिंसात्वसाधर्म्याद् बाह्यवच्चोदनास्वपि॥ २७३॥**
**वदेदनर्थहेतुत्वं तस्याप्यागमबाधनम्।**

आगमानादरे चातिप्रसङ्ग इत्याह—

**तमनादृत्य यो ब्रूयाद् यागादेरप्यसौ वदेत्॥ २७४॥**
**स्वर्गादिसाधनाशक्तिं क्रियात्वाद् भोजनादिवत्।**

ननु विहितापि हिंसानर्थहेतुरिति मन्त्रार्थवादेतिहासपुराणेभ्योऽवगम्यते। तथा हि **भगवद्गीतासु**—

"श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप"। (भ० गी० ४-३३)
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः॥

---

१. क्रियान्तरादेवं—मु० पा०। २. ०तो नार्थं—मु० पा०।

इति हिंसायोगादेव विधियज्ञस्य निन्दा। तथा मन्त्रवर्णोऽपि 'यत्पशुर्मायुमकृतोरो वा पद्भिराहते, अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस' इति संज्ञपनादेनो दर्शयति। तथान्यान्यपि वचनानि, अत आह—

**गीतामन्त्रार्थवादैर्या　कल्प्यतेऽनर्थहेतुता ॥ २७५ ॥**
**प्रत्यक्षश्रुतिबाध्यत्वात् सान्यार्थत्वेन नीयते ।**

प्रत्यक्षया श्रुत्या हिंसाया विहितत्वात्तद्विरुद्धत्वादेषामर्थवादमात्रत्वमिति।

अत्र भाष्यकारेण "नन्वशक्तमिदं सूत्रम्" इत्यर्थद्वयविधौ वाक्यभेदादशक्तिमाशङ्क्य "तत्तु वैदिकेषु न सूत्रेषु[1]" इति परिहृतम्, तदाक्षिपति—

**शिष्यान् प्रत्यविशिष्टत्वात् सूत्रवैदिकवाक्ययोः ॥ २७६ ॥**
**अशक्तेश्चोभयोः साम्यान्न सूत्रेष्वित्यनुत्तरम् ।**

एकस्य वाक्यस्यानेकार्थविधावशक्तिस्तावद्वेदसूत्रयोस्तुल्या। यदि परं सूत्राणां प्रमाणान्तरावगतार्थत्वात् तद्वशेन वाक्यभेदादिनापि व्याख्यानं न दुष्यतीत्युच्यते, तदपि न युक्तम्, सूत्राणामपि शिष्यान् प्रत्यनवगतार्थत्वादिति।

समाधत्ते—

**प्रागुक्तपरिसंख्यायाः फलमेतत् प्रकाश्यते ॥ २७७ ॥**
**सूत्रेषु ह्यनया युक्त्या गतिरेषापि युज्यते ।**

सत्यम् शिष्यान् प्रत्यविशेष, व्याख्यातृभिस्त्ववगतार्थैरनया युक्त्या प्रमाणान्तरावगतार्थतया वाक्यभेदगतिरपि कथञ्चिद्युज्यते कर्त्तुम्, दर्शिता हि परिसंख्या सति सम्भवे वाक्यभेदादिदोषाणा वर्जनम्, नासतीति[2] तत्फलं प्रकाशितमिति। यत एवम्, अतः सकलमेव सूत्रमर्थद्वयप्रतिपादनाय द्विरावर्त्तनीयमित्याह—

**तस्मादावर्तते सूत्रम्,**

अत्रैक सूत्रं 'चोदनालक्षणो धर्म.' इत्येवम्परम्, इतरद् 'अर्थो धर्मः' इत्येवम्परम्। पूर्वत्रार्थग्रहणमुत्तरसूत्रसिद्धत्वादनुवाद। उत्तरत्र चोदनालक्षणशब्दः पूर्वसिद्धत्वादनुवाद।

प्रकारान्तरमाह—

**[3]तन्त्रं वा शक्तिभेदतः ॥ २७८ ॥**

धर्मपद तन्त्रोच्चरितमितराभ्यां प्रत्येकमभिसम्बध्यते, विध्यनुवादाश्रयणात्। एव ह्यावृत्तिदोषो नातीव भविष्यति, सत्यप्यर्थद्वयनिमित्तवाक्यभेदे। तदयं

---

१. ननु अशक्तमिदं सूत्रम् इमावर्थाविभिधातुम्, चोदनालक्षणो धर्मो नेन्द्रियादिलक्षणः, अर्थश्च धर्मो नानर्थ इति। एकं हीदं वाक्यं, तदेवं सति भिद्येत? उच्यते; यत्र वाक्यादर्थोऽवगम्यते तत्रैवम्। तत्तु वैदिकेषु, न सूत्रेषु। ( शा० भा० पृ० २२ )।

२. नास्तीति—मु० पा०।

३. अर्थद्वयबाधनमुद्दिश्य सकृदुच्चरितं तन्त्रम्।

सूत्रार्थः—यश्चोदनालक्षण इत्यनूद्य स धर्म इति विधीयते, ततो योऽयं धर्मः सोऽर्थ एव नानर्थ इति ॥ २७८ ॥

**भाष्यकारेण** "भिन्नयोरेव वाक्ययोरिमावेकदेशौ" ( शा० भा० पृ. २३ ) इति वदता सूत्रद्वयमेव कल्पितम्, तद्दर्शयति—

**एकदेशानुमानाद् वा द्वे सूत्रे परिकल्पिते ।**

'अर्थो धर्म इत्येकं सूत्रम्, अपर ' "चोदनालक्षण" इति । अस्य च साकाङ्क्षत्वादनन्तरसूत्रागतो धर्मशब्दोऽनुषङ्गेण तदेकदेशतयानुमीयते—चोदनालक्षणो धर्म इति ।

नन्वेवमर्थो धर्म इत्यत्राचोदनालक्षणस्यापि धर्मत्वम्, चोदनालक्षणो धर्म इत्यत्रानर्थस्य पि स्यादत आह—

**इतरेतरसामीप्यादेतावेव परस्परम् ॥ २७९ ॥**

**कल्प्येते वाक्यशेषाय[1] नान्यावयवकल्पना ।**

'अर्थो धर्म" इत्यतो धर्मशब्दोऽनुषज्यमानोऽन्तर्णीतार्थ एव चोदनालक्षणसूत्रेऽनुषज्यते, न तदनादरेण स्वतन्त्रं धर्मपदमवयवत्वेन कल्प्यते, तादृशस्यासन्निहितत्वात् । तेनार्थत्वविशिष्ट एव चोदनालक्षणो धर्म , अर्थोऽपि चोदनालक्षणत्वविशिष्ट एव धर्मो न त्वविशिष्ट इति न कश्चिद्दोष ।

"अथ वार्थस्य सतश्चोदनालक्षणस्य धर्मत्वमुच्यते इति एकार्थमेव" ( शा० भा० पृ २४ ) इति भाष्यम्, तदाक्षिपति—

**विशिष्टार्थानुवादित्वादथ वेत्यपि भाषिते ॥ २८० ॥**

विशिष्टानुवादेऽपि हि [2]वाक्यभेदोऽस्त्येवेति ॥ २८० ॥

तस्मात् पूर्वोक्तमेव धर्मपदतन्त्रत्व वाक्यभेदस्योत्तरमित्याह—

**वाक्यभेदः स एवेति संज्ञातन्त्रत्वमुत्तरम् ।**

संज्ञाशब्देन धर्मपदमुच्यते ।

अर्थचोदनालक्षणशब्दयोर्वेतगभ्यां तन्त्रसम्बन्धो वाच्य इत्याह—

**अर्थं वा प्रत्युपादानात् संज्ञालक्षणशब्दयोः ॥ २८१ ॥**

**तन्त्रं लक्षणशब्दो वा वाच्यो धर्मार्थशब्दयोः ।**

अर्थं प्रत्युपादनमित्यर्थः । पदेनोभयो सम्बन्ध इत्यर्थ । सूत्रार्थश्च धर्मपदतन्त्रत्ववद् दर्शयितव्य इति ।

चोदयति—

**धर्मे सामान्यतः सिद्धे प्रमाणं कथ्यते यदा ॥ २८२ ॥**

**वृत्तमेव तदार्थत्वं[3] किमर्थं पुनरुच्यते ।**

---

१. वाक्यदोषाय—मु० पा० ।

२. अत्र गौरवलक्षण एव वाक्यभेद इति ध्येयम् । ३. तदार्थत्वे—मु० पा० ।

चोदनालक्षणानुवादेन धर्मत्वविधावनर्थस्यापि चोदनालक्षणस्य सद्भावात् तद्व्यावृत्तयेऽर्थवदर्थग्रहणम्, धर्मानुवादे तु चोदनालक्षणत्वविधौ धर्मस्यार्थाव्यभिचारादविशेषणमर्थग्रहणमनर्थकमिति ।

परिहरति—

**चोदनालक्षणत्वस्य धर्मं प्रति विधेयता ॥ २८३ ॥**
**लभ्यतेऽर्थानुवादेन संशयो ह्यन्यथा भवेत् ।**

सत्यमस्या वचनव्यक्तौ[1] अविशेषणमर्थपद नित्यानुवादोऽस्तु[2], तथापि नानर्थकम् । अर्थानुवादबलेनैव हि धर्मानुवादेनैव चोदनालक्षणत्वविधिरितीयं वचनव्यक्तिर्लभ्यते, अन्यथा[3] पूर्वोक्तवाक्यभेदप्रसङ्गान्नित्यप्राप्त्यभावाद् विध्यनुवादानुपपत्ते. । तदभावे तु 'चोदनालक्षणो धर्मः' इत्येतावति सूत्रे द्वयोरपि सम्भवात् संशय स्यात् । ततः को दोषः ? अत आह—

**तथा च येऽप्यनर्थस्य साधनत्वेन कल्पिताः ॥ २८४ ॥**
**निषेधैस्तेऽपि धर्माः स्युश्चोदनालक्षणत्वतः ।**

द्वयसम्भवे हि चोदनालक्षणानुवादेन धर्मत्वविधिरपि परिगृह्येत, तथा च सत्यसति चार्थपदेऽनर्थस्यापि धर्मत्व स्यादिति ।

तस्माद् वचनव्यक्त्यन्तरपरिग्रहेणानर्थस्य धर्मत्वं परिहर्तुमर्थग्रहणमित्याह—

**तस्मादर्थापरित्यागादेकार्थग्रहणं यथा ॥ २८५ ॥**
**लभ्यते वचनव्यक्त्या सा स्यादर्थानुवादतः ।**

अर्थानुवादेन हि सा वचनव्यक्ति· सिध्यति यथार्थशब्दापरित्यागेनैकार्थं वाक्य भवति । सा च धर्मानुवादेन लक्षणविधिरिति नियम एवान्यस्यां[4] वाक्यभेदापत्ते· । तस्मात् तत्सिद्ध्यर्थमर्थशब्दोऽनुवादभूतः प्रयुज्यत इति ।

यद्येषैवात्र वचनव्यक्तिः, कथ तर्हि **भाष्यकारः** "अनर्थो धर्म उक्तो मा भूदित्येवमर्थग्रहणम्" ( शा० भा० पृ २२ ) इति विशेषणत्वमर्थशब्दस्य दर्शयति ? अत आह—

**विशेषणाद् विना चैतदर्थसामर्थ्यकारितम् ॥ २८६ ॥**

नेदं विशेषणत्वकथनं विनैव विशेषणादर्थशब्दसामर्थ्यकारितमिदं हिंसादिवर्जनं फलं **भाष्यकारेण** कथ्यते । तद्बलेनैव हि वचनव्यक्त्यन्तरपरिग्रहाद्धिंसादीना धर्मत्वेन वर्जनं लभ्यते, तदभावे तु चोदनालक्षणानुवादेन धर्मविधेरपि सम्भवाद्धिंसादीनामपि धर्मत्वं स्यादिति ।

---

१. सत्यमस्यावचनमसत्यमस्यावचनं तद्व्यक्तौ—२ पु० पा० ।

२. नित्यानुवादस्तु—३ पु० ।

३. अन्यस्या—मु० पा० ।

४. नियमे व०—मु० पा० ।

'अथ वा' इत्यादि भाष्य यदाक्षिप्तं तत्समाधानं चेदम्—

**कथ्यते भाष्यकारेण फलं हिंसादिवर्जनम् ॥**

अयमर्थः—नैवायं विशिष्टानुवाद उच्यते, किं तर्हि ? विनैव विशेषणादर्थपदसामार्थ्यकारित यत्फलं वचनव्यक्तिविशेषपरिग्रहद्वारेण हिंसादिवर्जन तदेवेदमुच्यते। वचनव्यक्त्यन्तरपरिग्रहार्थम् 'अथ वा' इत्यादिभाष्यमिति यावत्। अयं च भाष्यार्थः—अर्थस्य सतो यद्धर्मत्व तच्चोदनालक्षणस्येत्युच्यत इति। अर्थस्य सत इति नित्यानुवादतामर्थशब्दस्य दर्शयतीति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे द्वितीयं चोदनासूत्रम्

## तस्य निमित्तपरीष्टिः[1] ( जै० सू० १. १. ३ )

उक्तमिदस्माभिः "चोदनानिमित्तं धर्मस्य ज्ञानमिति तत्प्रतिज्ञामात्रेणोक्तम्" ( शा० भा० पृ. २५ )। इति भाष्यम्, तदयुक्तम्, 'चोदना हि भूतम्' इत्यादिना युक्तेरपि दर्शितत्वादत आह सार्द्धेन—

**प्रतिज्ञाव्यतिरेकेण भाष्यकारेण यद्यपि।**
**वक्ष्यमाणा स्वपक्षस्य युक्तिः पूर्वं निर्दर्शिता ॥ १ ॥**
**प्रतिज्ञामात्रमित्येतज्जैमिनेर्मतमुच्यते ।**

परिहारान्तरमाह—

**[2]वृत्तिकारोऽधिकं वापि भूतादि द्वारमब्रवीत् ॥ २ ॥**

प्रतिज्ञातार्थसाधनाय युक्तिरुपरिष्टादेव वक्ष्यते। पूर्वं तु भूतादौ सामर्थ्यकथनद्वारेण प्रतिज्ञातार्थस्य सम्भावनामात्रमधिकमुक्तं न साधनम्, अतः स्वाभिप्रायेणाप्युपपन्नं प्रतिज्ञामात्राभिधानमिति ॥ २ ॥

इति तृतीयं निमित्तसूत्रं सम्पूर्णम्

---

१. तस्य = धर्मविषयकतत्त्वज्ञानस्य निमित्तं = कारणम्, तस्य परीष्टिः = परीक्षा, युक्तिपूर्वकसाधकतर्ककलापैर्विचारः। कर्तव्य इति शेष। ( सु० )।

२. भाष्यकार इत्यर्थः।

**सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्**
**प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्**[1] **( जै० सू० १. १. ४ )**

**भवदासे**नैतत् सूत्र द्विधा कृत्वा **सत्सम्प्रयोगे** इत्यवेमादि **तत्प्रत्यक्ष**मित्येवमन्तं प्रत्यक्षलक्षणपरम्, **अनिमित्त**मित्यादि च तस्य धर्मं प्रत्यनिमित्तत्वपरं व्याख्यातम्, तदुपन्यस्य दूषयति—

**वर्ण्यते सूत्रभेदेन येन प्रत्यक्षलक्षणम् ।**
**तेन सूत्रस्य सम्बन्धो वाच्यः पूर्वप्रतिज्ञया ॥ १ ॥**

न केवलमसङ्गतिः, अनुपयोगोऽपीत्याह—

**लक्षणस्याभिधानं तु केनांशेनोपयुज्यते ।**

द्वयशा हि पूर्वप्रतिज्ञा—चोदनैव, प्रमाणमेवेति च । तत्र कस्मिन्नंशे लक्षणोपयोगः शास्त्रे वास्मिन् कोपयोग इति लक्षण च कथयन् किमित्यनुमानादेर्लक्षणं न कथयति । न हि तेषामप्रामाण्यम्, नापि प्रत्यक्षान्तर्भाव. । तदनन्तर्भावादेव च न लक्षणमप्येकम्, अतस्तेषामपि पृथग्वक्तव्यं लक्षणमित्याह सार्द्धेन—

**किमर्थं चानुमानादेर्लक्षणं नात्र कथ्यते ॥ २ ॥**
**न तावदप्रमाणत्वं तेषां नाप्यक्षबुद्धिषु ।**
**शक्यतेऽन्तर्गतिर्वक्तुं न च लक्षणतुल्यता ॥ ३ ॥**

स्यादेतत्, प्रत्यक्षलक्षणोक्तावर्थादितरेषां तत्पूर्वकत्वमेव लक्षणमुक्तं भवतीति, तत्राह—

**न चापि सिद्धिरेषां स्यादर्थात् प्रत्यक्षलक्षणात् ।**

एषां न लक्षणस्य सिद्धिरत्यर्थं इति ।

कथं न सिद्धि ? इत्यत आह—

**न हि तत्पूर्वकं सर्वं प्रमाणमिति निश्चितम् ॥ ४ ॥**

अतिव्यापकमिदम्, लक्षणमप्रमाणेऽपि स्मृत्यादौ भावादिति ॥ ४ ॥

न चाक्षेपोऽपि सम्भवति, विना पि तेन प्रत्यक्षलक्षणोपपत्तेरित्याह—

**प्रत्यक्षलक्षणोक्तिश्च नानुमानादिलक्षणात् ।**
**विना न सिध्यतीत्येवमर्थाक्षेपो न युज्यते ॥ ५ ॥**

---

१. पुरुषस्येन्द्रियाणा सति = विद्यमाने विषये सम्प्रयोगे सति, यद् बुद्धचा ज्ञानस्य जन्म तत् प्रत्यक्षम् । ईदृशं यत् प्रत्यक्षं तद्धर्मज्ञानेऽनिमित्तम् = नोत्पादकम् । प्रत्यक्षप्रमासाधनीभूतानीन्द्रियाणि धर्मप्रमा न साधयन्तीति फलितम् । तत्र हेतुमाह—विद्यमानस्य = वर्तमानस्यैव वस्तुन इन्द्रियैरुपलम्भात् । धर्मस्य ज्ञानकालेऽसत्त्वेन इन्द्रियायोग्यत्वादिति भावः । ( सु० ) ।

श्लो० वा० : ७

किञ्च, तत्पूर्वकत्वमपीति तेषां न प्रत्यक्षलक्षणेनावगम्यते, किमु तस्य लक्षणत्वम् ? इत्याह—

**तदेतत्पूर्वकत्वे धीर्न च तल्लक्षणाद् भवेत् ।**

अनुपपत्त्यभावेऽपि तत्पूर्वकत्वमाक्षिप्येत ।

विपरीतमपि किं न स्यात् ? इत्याह—

**तदुक्तेर्वानुमानादि किं न स्यात् तदपूर्वकम् ॥ ६ ॥**

सिध्यतु वा तेषां सामान्यतस्तत्पूर्वकत्वम्, यस्तु तेषामवान्तरलक्षणभेदः, स्वरूपम्, इयत्ता वा, तत्सर्वं न प्रत्यक्षलक्षणेनावधार्यत इति वक्तव्यमेव तेषां लक्षणमित्याह—

**न च लक्षणभेदस्य स्वरूपे यत् तयोरपि ।**
**प्रत्यक्षलक्षणादेषां कथञ्चिदवधारणा ॥ ७ ॥**

अथ लोकप्रसिद्धत्वात् तेषां लक्षणं न वक्तव्यं तत्प्रत्यक्षेऽपि स्यादित्याह—

**प्रसिद्धत्वादवाच्यत्वं प्रत्यक्षेऽपि प्रसज्यते ।**

तेन बहुप्रमाणेषु यदेकस्य लक्षणकरणं तदितरपरिसंख्या वा मूढता वा सूत्रकारस्य गमयति, न ह्यन्यथैकस्य लक्षणं युक्तमित्याह—

**तेनान्यपरिसंख्यार्थं[1] सूत्रं मूढेन वोच्यते ॥ ८ ॥**
**न त्वेकं लक्षयेदेषु बुद्धिपूर्वं कथञ्चन ।**

वाक्यभेदश्चैकवाक्यत्वसम्भवे न युक्त इत्याह—

**सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते ॥ ९ ॥**

लक्षणमपि चैतदाभाससङ्करादयुक्तमित्याह पादत्रयेण—

**न चाप्येतेन सूत्रेण प्रत्यक्षं लक्ष्यते स्फुटम् ।**
**तदाभासेऽपि तुल्यत्वात्,**

अत्यल्पं चैतदुच्यते—तदाभासेषु तुल्यत्वादिति, स्वप्नज्ञानमेकं वर्जयित्वा सर्वेष्वाभासेष्वनुमानादिषु च तुल्यमिदं लक्षणमित्याह—

**स्वप्नज्ञानैकवर्जनात्[2] ॥ १० ॥**

कारणमाह—

**तद्धीन्द्रियार्थसम्बन्धव्यापारेण[3] विना भवेत् ।**
**केनचित् सम्प्रयोगे तु भ्रान्त्यादि स्यान्नियोगतः ॥ ११ ॥**

स्वाप्नज्ञानमेव हीन्द्रियार्थसम्बन्धाद् विना भवति, तदतिरिक्तं तु सर्वमेव भ्रान्त्यादि केनचिदर्थेनेन्द्रियस्य सम्प्रयोगे सत्येव भवतीत्यस्त्येवातिव्याप्तिः ।

१. परिसंख्या=व्यावृत्तिः ।

२. भ्रमज्ञानै०—१ पु० ।

३. ०संयोगव्यापारेण—२ पु० ।

इन्द्रियार्थसम्बन्धराहित्य बाह्येन्द्रियविषयम्, आत्मेन्द्रियसन्निकर्षस्य सर्वत्र सत्त्वादिति ॥ ११ ॥

ननु ग्राह्येण सम्प्रयोगो लक्षणम्, तथा च वक्ष्यति **वृत्तिकारः**—"यदाभास विज्ञानं तेन सम्प्रयोग" इति। न चासावनुमानादिषु भ्रान्तौ वास्ति, धूमादिशुक्त्यादिसयुक्तेन्द्रियवह्न्यादिरजतादिषु उपजायमानत्वादतो नातिव्याप्तिरित्याह—

**ग्राह्येणान्येन वेत्येतत् कृतं नैव विशेषणम्।**
**सम्प्रयोगस्य येन स्याद् विशेषो वक्ष्यमाणवत् ॥ १२ ॥**

सम्प्रयोगमात्रमिहोपात्त न ग्राह्यविशेषण वक्ष्यमाण इव **वृत्तिकार**मते व्यस्तेन तच्छब्देन, अतोऽस्त्येवातिव्याप्तिरिति ॥ १२ ॥

यत एव यथावस्थित सूत्र लक्षणायासमर्थम्, अत एव **वृत्तिकारेण** तत्सम्प्रयोग इति पाठान्तरमुदाहृतमित्याह—

**असामर्थ्यं च मत्वास्य वृत्तिकारेण लक्षणे।**
**तत्सम्प्रयोग इत्येवं पाठान्तरमुदाहृतम् ॥ १३ ॥**

उपसहरति—

**तेनान्येनापि संयोगे चक्षुरादेर्यदुत्थितम्।**
**विषयान्तरविज्ञानं तत्प्रत्यक्षं प्रसज्यते ॥ १४ ॥**

ननु येन केनचित् सम्प्रयोगस्य सर्वज्ञानसाधारणत्वात् तदुपादानमनर्थकम्, अतस्तदुपादानादेव ग्राह्यविशेषणसिद्धि. ? इति शङ्कते—

**सत्सम्प्रयोगनिर्देशो व्यर्थश्चेद्,**

दूषयति—

**एतदेव हि।**
**प्रतिपाद्यं परस्यापि लक्षणासिद्धिरेव च ॥ १५ ॥**

परस्य लक्षण दूषयतोऽप्येतदेव प्रतिपाद्यमव्यभिचाराद् विशेषणोपादानमप्यनर्थकं लक्षण चातिव्याप्तत्वान्न सिध्यतीति। न ह्यनर्थकत्वमात्रेण वाचकमन्तरेण ग्राह्यविशेषणसिद्धिरिति स्यादेव लक्षणस्यातिव्याप्तिरिति ॥ १५ ॥

स्वप्नादिव्यावृत्तिफलत्वाद्वा नानर्थकमित्याह—

**स्वप्नादीनां निवृत्तिर्वा फलं तस्य भविष्यति।**

आदिशब्देन भूतचिन्तादिक गृह्यत इति।

तस्मान्नास्मिन् सूत्रे लक्षणमनुपात्तत्वाद् विधातुमनुवदितुं वा शक्यमित्याह—

**तस्माद् विध्यनुवादित्वं नानुक्ते लक्षणे भवेत् ॥ १६ ॥**

ये च लक्षणानुवादेनैवानिमित्तपरं सूत्रमिति मन्यन्ते, तन्निरासार्थमनुवादनिराकरणम्। न ह्यनुक्तस्यानुवादोऽपि सम्भवतीति ॥ १६ ॥

तस्मान्नैषा वक्ष्यमाणा वचनव्यक्ति. सूत्रस्य—इत्युपसंहरति—

**तेन नैषा वचोव्यक्तिर्यत्सतोन्द्रियसङ्गमे।**

**विज्ञानं जायते[1] तस्य प्रत्यक्षत्वं प्रतीयताम् ॥ १७ ॥**

का तर्हि ? इत्यत आह—

**प्रत्यक्षं यज्जने सिद्धं तस्यैवन्धर्मकत्वतः ।**
**विद्यमानोपलम्भत्वं तेन धर्मे ऽनिमित्तता ॥ १८ ॥**

यल्लोकप्रसिद्ध प्रत्यक्ष तस्य सत्सम्प्रयोगजत्वधर्मयोगाद्विद्यमानोपलम्भनत्वम्, तेन धर्मे भविष्यत्यस्या निमित्ततेति ॥ १८ ॥

ननु **भाष्यकारेण** "प्रत्यक्षमनिमित्तमेवंलक्षणक हि तत्" (शा० भा० पृ० २५) इति वदता लक्षणानुवादो दर्शित, अत कथमनुवादो न सम्भवतीत्युक्तम् ? तत आह—

**एवंलक्षणकत्वं च न स्वरूपविवक्षया ।**
**एवंलिङ्गकमित्येतद् भाष्यकारेण वर्ण्यते ॥ १९ ॥**

न प्रत्यक्षस्वरूपापेक्षमेवलक्षणकत्वम्, न प्रत्यक्षस्वरूपं तेन लक्ष्यत इति लक्षणवाचोयुक्ति, किन्तु धर्म प्रत्यनिमित्तत्व येन लिङ्गेन लक्ष्यते तल्लक्षणकं प्रत्यक्षमित्यर्थं इति ॥ १९ ॥

कि तल्लिङ्गम ? अत आह—

**यतोऽस्ति तत्र धर्मोऽयं विद्यमानोपलम्भनम् ।**
**तस्मात् तेन प्रसिद्धेन गम्यतामनिमित्तता ॥ २० ॥**

'तस्यैवधर्मकत्वत ' इत्युक्तेन सत्सम्प्रयोगजत्वेन हेतुना प्रसिद्धो विद्यमानोपलम्भनत्वं नाम प्रत्यक्षस्य धर्मोऽस्ति, तस्मात् तेन प्रसिद्धेनानिमित्तता गम्यत इति भाष्यार्थः ।

सत्सम्प्रयोगजत्वस्यैव कुत सिद्धिः ? इत्यत आह—

**प्रत्यक्षत्वमदो हेतुः शेषं हेतुप्रसिद्धये ।**

तदेते त्रयः प्रयोगा'—प्रत्यक्षमनिमित्त विद्यमानोपलम्भनत्वाद्, विद्यमानोपलम्भनत्वं च सत्सम्प्रयोगजत्वात्, सत्सम्प्रयोगजत्वं च प्रत्यक्षत्वादिति । सत्सम्प्रयोगजत्व भविष्यद्वृष्ट्यनुमाने मेघेन्द्रियसंयोगजेऽपि सम्भवादनैकान्तिकं न विद्यमानोपलम्भनत्व साधयितुमलमिति चेत् ? न; असत्सम्प्रयोगजत्वात्, वर्त्तमानवचनो ह्यय सच्छब्द', स च सम्प्रयोगसमानाधिकरणः, तेन वर्त्तमानात् सम्प्रयोगाद्यज् ज्ञानं जायते तत् सत्सम्प्रयोगजम् । न चैवम्भावोऽनुमानस्यास्ति, तद्धि सम्प्रयोगे लिङ्गज्ञानोत्पादनेन निवृत्तव्यापारे पश्चाल्लिङ्गज्ञानेन जायते, अतो न सत्संप्रयोगजमिति नास्ति व्यभिचार. । तर्हि **भवदास**पक्षेऽपि लक्षणस्यानुमानादावतिव्याप्तिर्न स्यात् ? स्यादिति ब्रूम. । तेन हि सच्छब्दः सम्प्रयुज्यमानवचनो व्याख्यातः—सता सम्प्रयोगः सत्सम्प्रयोग इति । अनुमानादिकमपि

---

१. ज्ञायते—मु० पा० ।

सतैव लिङ्गादिना इन्द्रियसम्प्रयोगाज्जायत इति भवत्यतिव्याप्ति । यदि तु सोऽपि सच्छब्दं सम्प्रयोगविशेषण व्याचक्षीत, ततः पीतशङ्खादिविषयेषु प्रत्यक्षाभासेष्वतिव्याप्तिर्वक्तव्या, नानुमानादिष्विति ।

ननु 'प्रत्यक्षमनिमित्त विद्यमानोपलम्भनत्वात्, विद्यमानोपलम्भनत्व च सत्सम्प्रयोगजत्वात्, सत्सम्प्रयोगजत्व च प्रत्यक्षत्वात्' इत्युक्ते को दृष्टान्तः ? न तावत् प्रत्यक्षम्, पक्षसपक्षयोरेकत्वायोगात् । नाप्यप्रत्यक्षम्, तत्र प्रत्यक्षत्वस्य हेतोर्दर्शयितुमशक्यत्वात् । प्रसिद्ध चास्मदादिप्रत्यक्षस्य विद्यमानोपलम्भनत्वं सत्सम्प्रयोगजत्वम्, धर्मं प्रति अनिमित्तत्वं च, अतोंऽशे सिद्धसाध्यता स्यादत आह—

**अस्मदादौ प्रसिद्धत्वाद् योग्यर्थमभिधीयते ॥ २१ ॥**

यत एवास्मदादौ सिद्ध प्रत्यक्षस्य सत्सम्प्रयोगजत्वादिकम्, अत एव सिद्धसाध्यतापरिहाराय योगिप्रत्यक्षार्थमेवेदमनुमानम् । अस्मिश्च प्रत्यक्षविशेषे पक्षीकृतेऽस्मदादिप्रत्यक्ष दृष्टान्त. । तत्र हि प्रसिद्धा प्रत्यक्षत्वादेः सत्सम्प्रयोगजत्वादिनाऽव्याप्तिरिति ॥ २१ ॥

न च लक्षणपक्षवत् प्रकृतासङ्गति. ? इत्याह—

**प्रकृतेन च सम्बन्धः शेषाप्रामाण्यदर्शनात् ।**

शेषाणा शब्दातिरिक्तानाम् अप्रामाण्येन चोदनैवेत्यस्यांशस्य साधनादिति ।

ननु प्रत्यक्षस्यैवात्राप्रामाण्यमुच्यते नान्येषाम्, तत् कथ शेषाप्रामाण्यम् ? अत आह—

**तदप्रामाण्यसिद्धिश्च सम्बन्धादेरनीक्षणात् ॥ २२ ॥**

प्रत्यक्षगृहीते हि धर्मे तत्सम्बन्धः सादृश्यं चार्थान्तरस्य शक्यते ग्रहीतुम्, नान्यथा, तेन प्रत्यक्षानिमित्तत्वकथनादेव तन्मूले एवाप्रामाण्यसिद्धिरिति ॥ २२ ॥

ननु लक्षणपक्षे यथा तेषामपि लक्षण वक्तव्यं तथा किमिति तेषामपि सूत्रैणेवानिमित्तत्वं नोच्यते ? अत आह—

**शक्यमन्याप्रमाणत्वमिति सूत्रैर्न पठ्यते ।**
**न च पर्यनुयोगोऽत्र लक्षणानुपयोगतः ॥ २३ ॥**

प्रत्यक्षानिमित्ततयैव तेषामप्यनिमित्तत्वं शक्यमवगन्तुमिति न सूत्रे निबद्धम्, लक्षणं तु प्रत्यक्षलक्षणादसिद्धत्वाद् वक्तव्यमिति ॥ २३ ॥

यश्च लक्षणानुपयोगे पर्यनुयोग., यश्च न्यूनातिरेकादिदोषः, स सर्वोऽपि लक्षणानङ्गीकारादेव परिहृत इत्याह—

**न च न्यूनातिरेकादिप्रसङ्गो लक्षणं प्रति ।**

नन्वनिमित्तत्वेऽपि सत्सम्प्रयोगजं प्रत्यक्षमित्येवोच्यते, अतोऽस्त्येवाभासेष्वतिप्रसङ्गः ? अत आह—

**सर्वथा लोकसिद्धत्वाद् धर्मोऽयं तावदिष्यते ॥ २४ ॥**
**ततश्च मृगतृष्णादि न प्रत्यक्षं प्रसज्यते ।**
**अनिमित्तप्रसङ्गस्तु तस्यापि न[१] निवार्यते[१] ॥ २५ ॥**

न हि यदेवंविध तत् प्रत्यक्षमित्युच्यते, किन्तु यत् प्रत्यक्ष तदेवंरूपत्वाद-निमित्तमिति । अस्ति चास्याय धर्मो लोकसिद्ध । यद्यन्यदपि तथाविधमस्ति मृगतृष्णादिज्ञान तदपि भवत्वनिमित्तम्, न तु तस्य प्रत्यक्षत्वापत्तिरिति ॥ २५ ॥

यदुक्तम्—'योग्यर्थमभिधीयते' (श्लो० वा० ४–२१) इति, तत्रेयमा-शङ्का भवति—योगिप्रत्यक्षस्य वा किं न सिद्ध विद्यमानोपलम्भनत्व येन तत् साध्यते ? अत आह सार्द्धद्वयेन—

**अतीतानागतेऽप्यर्थे सूक्ष्मे व्यवहितेऽपि च ।**
**प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि ॥ २६ ॥**
**विद्यमानोपलम्भत्वमसिद्धं तत्र तान् प्रति ।**
**भविष्यत्त्वस्य[२] वा हेतोस्तद्ग्राह्यैर्व्यभिचारिता ॥ २७ ॥**
**मा भूतामिति तेनाह लोकसिद्धं सदित्ययम् ।**

योगिना हि भावनाबलज प्रत्यक्ष सकलातीतानागतसूक्ष्मादिविषयं धर्माधर्मा-वपि गोचरयतीति **शाक्यादयो** मन्यन्ते । स्वभावत एवात्मान सर्वज्ञा , ते देहाव-रणेनावृतज्ञाना किञ्चिदेवेन्द्रियादिवशेन जानन्ति, निर्मुक्तदेहावरणास्तु मुक्ता सर्वमनागतादि जानन्तीत्या**र्हताः**[३] । तान् प्रत्यसिद्ध विद्यमानोपलम्भनत्व तथाऽ-विद्यमानोपलम्भन प्रत्यक्षमिति वदत. **सूत्रकारस्य** धर्मो न प्रत्यक्ष , भविष्यत्त्वा-दनागतवृष्टिवदिति हेतुः सम्मत , तस्यापि योगिमुक्तात्मग्राह्यैरर्थान्तरैरनागतादि-भिर्व्यभिचारिता मन्यन्ते । तावुभावपि दोषौ मा भूतामिति लोकप्रसिद्ध सत्सम्प्र-योगजत्व विद्यमानोपलम्भनत्वसाधनार्थमयं **जैमिनि**राहेति ।

ननु सत्सम्प्रयोगजत्वमेषा सिद्धम्, यद्यपि लौकिकस्य प्रत्यक्षस्य तदस्ति तथापि योगिप्रत्यक्षस्य तदसिद्धमेव; भावनाबलजत्वाभ्युपगमात्, तदसिद्धौ च[४] विद्यमानो-पलम्भनत्वमपि सिद्धमेव, अत आह—

**न लोकव्यतिरिक्तं हि प्रत्यक्षं योगिनामपि ॥ २८ ॥**

लोके हि प्रत्यक्ष सत्सम्प्रयोगे[४] विद्यमानोपलम्भनं च दृष्टम्, अतो योगिप्रत्यक्ष-मपि न तत्स्वभावमतिवर्त्तितुमर्हतीति ॥ २८ ॥

कथम् ? इत्यत आह—

**प्रत्यक्षत्वेन तस्यापि विद्यमानोपलम्भनम् ।**
**सत्सम्प्रयोगजत्वं वाप्यस्मत्प्रत्यक्षवद् भवेत् ॥ २९ ॥**

---

१–१ विनिवार्यते—मु० पा० । २. भविष्यत्यस्य—मु० पा० ।
३. जानन्तीत्याहु.—३ पु० । ४–४. एतदन्तर्गतष्टीकाग्रन्थो नास्ति १-२ पु० ।

प्रत्यक्षत्वेनास्मदादिप्रत्यक्षवद् विद्यमानोपलम्भनत्वं साधयितु शक्यम्, पूर्वोक्तमार्गेण वा प्रत्यक्षत्वेन भावनाबलजत्व निराकृत्य सत्सम्प्रयोगजत्व साधयित्वा ततो विद्यमानोपलम्भनत्व साधयितव्यम् । न हि भावनाबलज प्रत्यक्ष नाम सम्भवति, भावना हि समानविषया विजातीयाऽव्यवहिता स्मृतिसन्तति., स्मृतिश्च पूर्वानुभूतविषयिणी नाननुभूत गोचरयति । तद्यदि धर्मः प्रमाणान्तरेणानुभूत:, कि भावनया ? यदि नानुभूतो भावयितुमपि न शक्यते ? मुक्तात्मना तु सर्वविषयं ज्ञान प्रागेव निराकृतम्, प्रमाणाभावात् । केवलभावनाबलजप्रत्यक्षनिरासार्थोऽयं प्रस्ताव इति ॥ २९ ॥

प्रत्यक्षं विद्यमानोपलम्भनमिति वदता यदविद्यमानविषय[1] योगिज्ञानं तत्प्रत्यक्षं न भवतीति सूचितम्, तत् प्रयोगद्वयेन दर्शयति द्वयेन—

**तेषामवर्तमानेऽर्थे वा नामोत्पद्यते मतिः ।**
**प्रत्यक्षं सा ततस्त्वेव नाभिलाषस्मृतादिवत् ॥ ३० ॥**
**लोके चाप्यप्रसिद्धत्वात् प्रत्यक्षत्वप्रमाणतः ।**
**प्रतिभावद् [2]द्वयासत्त्वं सदित्येतेन कथ्यते ॥ ३१ ॥**

**ततस्त्वेवेति** । अवर्त्तमानविषयत्वादेवेत्यर्थः[3] । प्रमाणत्वनिराकरण प्रमाणाभासमेव[4] भवति, किं पुन प्रत्यक्षमिति दर्शयितुमिति ॥ ३१ ॥

**वैशेषिकादयस्तु** प्रातिभाख्यप्रमाणान्तरगम्यत्वं धर्माधर्मयोर्मन्यन्ते, तच्च लोकेऽपि क्वचिदस्त्येव, यथा—श्वो मे भ्रातागन्तेति, बाहुल्येन तद् ऋषीणामेवेत्यार्षमित्युच्यते । तान्निराकरोति—

**लौकिकी प्रतिभा यद्वत् प्रत्यक्षाद्यनपेक्षिणी ।**
**न निश्चयाय पर्याप्ता तथा स्याद् योगिनामपि ॥ ३२ ॥**

अस्मदादिप्रतिभा तावल्लिङ्गाद्याभासजन्या प्रत्यक्षादिकमनपेक्ष्य स्वातन्त्र्येणार्थमनिश्चाययन्ती नैव प्रमाणम्, अतस्तद्वदेव योगिनामपीति ॥ ३२ ॥

तदेव विद्यमानोपलम्भनत्वस्य हेतोरसिद्धिपरिहारार्थं सत्सम्प्रयोगजत्वाभिधानमिति यदुक्तम्, तद्विवृतम् । इदानी भविष्यत्त्वस्य वा हेतोरनैकान्तिकत्वनिराकरणार्थमिति यदुक्त तद्विवृणोति—

**अविद्यमानसंयोगात् स्याच्चेत् प्रत्यक्षधीः क्वचित् ।**
**भविष्यत्यपि धर्मे स्याच्छक्तेत्याह सदित्ययम् ॥ ३३ ॥**

यद्यविद्यमानादपि सम्प्रयोगाद् योगिना क्वचिदर्थे प्रत्यक्षा धी. स्यात्, ततः

---

१. यद्विद्यमान०—२ पु० पा० ।
२. असिद्धि., व्यभिचारश्चेति द्वयम्, तस्यासत्त्वमित्यर्थः ।
३. वर्तमान०—मु० पा० ।   ४. प्रमाणम्—१ पु० ।

तेनानैकान्तिकत्वान्न भविष्यत्त्वेन धर्मस्याप्रत्यक्षत्व सिध्येदिति तदर्थमय **जैमिनि.** सदित्यादिकमाहेति ॥ ३३ ॥

ननु भविष्यदवस्थायां मा भूद्धर्म प्रत्यक्ष , यदा त्वसौ निष्पन्न. तदा किं न प्रत्यक्षः ? अत आह—

**प्रत्यक्षः प्रागनुष्ठानान्न धर्मोऽनुष्ठितोऽपि वा ।**

प्राक् तावदनुष्ठानाद् भविष्यत्त्वान्न प्रत्यक्ष , अनुष्ठितोऽपि नैव प्रत्यक्ष इति । कस्मात् ? इत्यत आह—

**फलसाधनरूपेण तदानीं येन नास्त्यसौ ॥ ३४ ॥**

फलसाधनरूपेण हि यागादीना धर्मत्वम्, न च यागस्वरूपकाले तत्साधनत्व वर्त्तते, फलस्य चिरभाविनस्तदानीमक्रियमाणत्वात् । यदा तु फल निष्पद्यते तदा यागश्चिरविनष्टत्वान्न तत्साधनरूपेण शक्यते प्रत्यक्षयितुम्, अपूर्वं तु स्वभावादेवाप्रत्यक्षम् । यदि प्रत्यक्ष स्यात् ततो यागानन्तर तदुत्पत्ति कालान्तरे च ततः सिद्धि फलस्य दृष्ट्वा यागस्य तद्द्वार फलसाधनत्व गम्येत[1] । यापि यागस्यापूर्वं फलं वा प्रति शक्ति सा यद्यपि यागकाले विद्यते, तथापि न प्रत्यक्षा सर्वशक्तीनाम्; अतीन्द्रियत्वादिति ॥ ३४ ॥

प्रकृतमिदानी विद्यमानोपलम्भनत्वेनानिमित्तत्व धर्मे प्रत्यक्षस्योपसहरन् प्रयोगान्तरं दर्शयति—

**अस्मत्प्रत्यक्षवच्चापि विद्यमानोपलम्भनम् ।**
**प्रत्यक्ष ध्यायिनां धर्मे प्रत्यक्षत्वाच्च नेष्यते ॥ ३५ ॥**

विद्यमानोपलम्भनमिति हेतुनिर्देश , ध्यायिनां प्रत्यक्ष धर्मे नेष्यते विद्यमानोपलम्भनत्वादित्युपसहार', प्रत्यक्षत्वादिति प्रयोगान्तरमिति ॥ ३५ ॥

एवं सूत्रतात्पर्यं व्याख्यायावयवाननुसन्धत्ते । तत्र **भिक्षुणा** 'सद्ग्रहणमनर्थकम्, असता सम्प्रयोगासम्भवात्' इत्युक्तम्, यथाह—

सदित्यसद्व्युदासाय न नियोगात् स गस्यते ।
सम्प्रयोगो हि नियमात् सत एवोपपद्यते ॥ इति ।

तत्तावद् **भाष्यकारेणैव** "सतीन्द्रियार्थसम्प्रयोग" (शा० भा० पृ० २६) इति कर्मधारयं दर्शयता परिहृतम् । न च कर्मधारयपक्षेऽस्यानर्थक्यमित्याह—

**अविद्यमानसंयोगात् प्रत्यक्षत्वनिराकृतिः ।**
**योगिनां केन लभ्येत नेष्टं सद्ग्रहणं यदि ॥ ३६ ॥**

अविद्यमानात्, अतीताद्, अनागताद् वा सम्प्रयोगादतीतानागतार्थविषयं योगिनां प्रत्येक्षम् असति सद्ग्रहणे कथं निराक्रियेतेति ॥ ३६ ॥

ननु निमित्तसप्तम्यैवायमर्थो लभ्यते, न ह्यतीतस्यानागतस्य वा सम्प्रयोगस्य

---

१. गम्यते—मु० पा० ।

निमित्तत्वं सम्भवति। यद्यपि चातीतस्य केनचिद् द्वारेण सम्भवेत्, न त्वनागतस्य कथञ्चिदपि सम्भवति, तदेव च भविष्यति धर्मे प्रत्यक्षस्यानिमित्तत्व प्रतिपादयता निवारणीयम्, तच्चैतत् सप्तम्यैव लब्धमिति कि सद्ग्रहणेन ? अत आह—

**सप्तम्यापि तु लभ्येत सदर्थः, कल्पना पुनः।**
**परेषां वारणीयेति यत्नो जैमिनिना कृतः॥ ३७॥**

सत्य लभ्यते, तथापि योगिनोऽनागतादेव सम्प्रयोगादनागतेऽप्यर्थे प्रत्यक्षमुत्पद्यत इति यत्परेषा कल्पन तन्निराकरणार्थोऽयं यत्नः, अन्यथातीते भाविनि वेत्यपि भ्रान्ताः कल्पयेयुरिति॥ ३७॥

सशब्दं व्याचष्टे—

**सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः।**

कः पुनः प्रयोगो यस्य दुष्टत्व वार्यते ? तद् दर्शयति—

**प्रयोग इन्द्रियाणां च व्यापारोऽर्थेषु कथ्यते॥ ३८॥**

कः पुनर्दुष्प्रयोग, यन्निवारण सशब्द. ? तमाह—

**दुष्टत्वाच्छुक्तिकायोगो वार्यते,**

कथ दुष्टत्वम् ? अत आह—

**रजतेक्षणात्।**

शुक्तौ हि रजतभ्रान्ति कुर्वन् शुक्तीन्द्रियसम्प्रयोगो दुष्ट, तन्निवारणेन सम्यग्ज्ञानजननो य प्रयोगस्तत्परिहार्थ. सशब्द इति।

एवं चावयवव्याख्याया लक्षणानुवादेनैवानिमित्तता शक्या विधातुमित्याह—

**एवं सत्यनुवादत्वं लक्षणस्यापि सम्भवेत्॥ ३९॥**

**भवदासेन** हि 'सता सम्प्रयोगः' इति उक्तम्, सम्प्रयोगशब्दश्च सकलसम्बन्धवचनो व्याख्यात, अतस्तस्यानुमानादिष्वाभासेषु चातिव्याप्तिर्भवति, नास्मद्व्याख्यान इति॥ ३९॥

यदपि **बौद्धैः** प्राप्तिवचन सम्प्रयोगशब्द मत्वा श्रोत्रचक्षुषोरप्राप्यकारित्वादव्यापक लक्षणम्, प्राप्यकारित्वे हि तयोर्यदिद सान्तरग्रहणम्—दूरे[1] शब्दो[1] दूरेऽर्थ इति, तन्न स्यात्; प्राप्तौ दूरत्वासम्भवात्। न चात्मापेक्षया दूरत्वम्, तस्य विभुत्वेनाभ्युपगमात्। तथा अधिष्ठानाधिकपरिमाणाना महीमहीधरादीनां ग्रहणं न स्यात्, न ह्यल्पेन महता प्राप्तिः सम्भवतीत्युक्तम्[2] सान्तरग्रहण न स्यात्, प्राप्तौ स्थानाधिकस्य वेति। तथा निरन्तरग्रहण न स्यादित्युक्तम्, तदपि व्यापारमात्रवाचित्वात् सम्प्रयोगशब्दस्य प्राप्तिवचनत्वाभावात् परिहृतमित्याह सार्द्धद्वयेन—

**ततश्चाप्राप्यकारित्वाद् यद् बौद्धैः श्रोत्रचक्षुषोः।**

---

१–१. दूरशब्द—२ पु०।    २ इत्युक्तं तदुक्तम्—२ पु०।

**लक्षणाव्याप्तिसिद्ध्यर्थं[1] संयोगो नेति कीर्त्यते ॥ ४० ॥**
**प्राप्यग्रहणपक्षे हि[2] सान्तराग्रहणं किल ।**
**अधिष्ठानाधिकश्चार्थो न गृह्येत त्वगादिवत् ॥ ४१ ॥**
**व्यापारमात्रवाचित्वाद्[3] अविरुद्धं तदत्र नः ।**

अर्थार्जवेनावस्थान वा सम्प्रयोग इत्याह—

**यदि वार्थार्जव[4]स्थानं सम्प्रयोगोऽत्र वर्ण्यते ॥ ४२ ॥**

शक्तिलक्षणो वा सम्बन्धः कार्यगम्य शब्दार्थयोरिवेन्द्रियार्थयोः सम्प्रयोग इत्याह—

**योग्यतालक्षणो[5] वाच्य[5] संयोगः कार्यलक्षितः ।**

भवतु वा सांख्यादिसिद्धान्तेन प्राप्यकारित्वमेव श्रोत्रचक्षुषोरित्याह—

**सांख्यादीन् वा विनिर्जित्य प्राप्तिपक्षोऽत्र[6] दूष्यताम् ॥ ४३ ॥**

न च ते शक्यन्ते निर्जेतुमित्यभिप्राय इति ॥ ४३ ॥

किं पुनः प्राप्यकारित्वे प्रमाणम् ? अत आह—

**तयोश्च प्राप्यकारित्वमिन्द्रियत्वात् त्वगादिवत् ।**

ननु प्रत्यक्षविरुद्धमेवेदमनुमान कर्णशष्कुल्याश्चक्षुर्गोलकस्य च शरीर एवोपलम्भात् ? अत आह—

**केचित् तयोः शरीराच्च बहिर्वृत्ति प्रचक्षते ॥ ४४ ॥**

सांख्यास्तावद्—'आहङ्कारिकयो. श्रोत्रचक्षुषोर्वृत्तिः शरीराद् विनिर्गत्यार्थं गृह्णाति' इति मन्यन्ते, सा चादृश्येति न प्रत्यक्षविरोध इति ॥ ४४ ॥

नन्वधिष्ठानमेवेन्द्रियम्, तत्र चिकित्सादिप्रयोगात् ? अत आह—

**चिकित्सादिप्रयोगश्च योऽधिष्ठाने प्रयुज्यते ।**
**सोऽपि तस्यैव संस्कार आधेयस्योपकारकः ॥ ४५ ॥**

अधिष्ठानाधारा वृत्ति, तेन चिकित्सादिप्रयोगोऽधिष्ठानसंस्कारोऽपि तत्राधेयस्योपकरोतीति ॥ ४५ ॥

नन्वधिष्ठागतस्येवोपकर्तुं शक्नोति, कथ बहिर्गतस्योपकरोति ? अत आह—

**तद्देशश्चापि संस्कारः सर्वव्याप्त्यर्थ उच्यते[7] ।**

अपरित्यक्ताधिष्ठानैव वृत्तिरर्थदेशं प्राप्नोति दीपप्रभावत्, अतोऽधिष्ठानगतोऽपि सस्कारो बहिर्गताया अप्युपकरोतीति । दृष्ट च देशान्तरगतस्यापि संस्कारस्य देशान्तरेऽपि उपकारकत्वम्, यथा पादादिगतस्य चक्षुरादाविति । तदाह—

१. लक्षणव्याप्ति०—मु० पा० ।
२. पक्षेऽपि—मु० पा० ।
३. ०बाधित्वात्—का० ।
४. आर्जवम्=साम्मुख्यमित्यर्थः ।
५–५. योग्यतालक्षणेनान्य—का० ।
६. प्राप्तपक्षो०—मु० पा० ।
७. इष्यते—पाठा० ।

**चक्षुराद्युपकारश्च पादादावपि दृश्यते ॥ ४६ ॥**

एतदेवोपसंहरति—

**तस्मान्नैकान्ततः शक्यं संस्कारात्तत्र वर्तनम्[1] ।**

निरन्तरग्रहणमधिकग्रहण चोपपादयति सपादेन—

**बहिर्वृत्तिस्तयोश्चेष्टा पृथ्वग्रा[2] सन्ततापि च ॥ ४७ ॥**

**अधिष्ठानाधिकं तेन गृह्यते यत्र यादृशम् ।**

**पृथुत्वं[3] वृत्तिभागे[4] स्याद्,**

दीपप्रभैवात्र दृष्टान्तः । तेन यत्र यादृश पार्थव पृथुत्वं तत्र तावदधिक गृह्यत इति । न च वाच्यम् -यदि वृत्तिर्गत्वार्थं प्रकायति, किमतिदूर न गच्छतीति, कार्यगम्या हि तद्गति., अतो यथाकार्यमवतिष्ठत इति नातिदूरगमनम् । तत्रापि दीपप्रभैव निदर्शनम्, प्रत्युताप्राप्यकारित्ववादिनामेवातिदूरव्यवहितार्थग्रहण-प्रसङ्ग इत्यभिप्रायेणाह—

**दूरेऽपि ग्रहणं तथा ॥ ४८ ॥**

नन्वर्थगता वृत्तिरधिष्ठाननाशेऽपि किमित्यर्थं न प्रकाशयति ? अत आह—

**दीपप्रभा यथा तस्मिन् विनश्यति विनश्यति ।**

**तथा बहिर्गताप्येषा मूलच्छेदाद्[5] विनश्यति ॥ ४९ ॥**

यद्यपि वाचि नाशः, तथाप्यात्मप्रयत्नानुगृहीता सार्थमात्मन उपनयति[6] समर्पयति, नष्टेऽप्यधिष्ठाने पिहितेऽपि वा उच्छिन्नयत्नया तयार्थोऽनुपनीतत्वान्नात्मन्यन्यात्मना[7]नुभूयत इत्याह—

**अधिष्ठानपिधाने तु सत्यप्युच्छिन्नयत्नया ।**

**तयार्थोऽनुपनीतत्वादात्मना नानुभूयते ॥ ५० ॥**

सान्तरग्रहणमुपपपादयति—

**विच्छिन्न इति बुद्धिः स्यादधिष्ठानमपेक्ष्य च ।**

यथा सर्वगतमप्यात्मान शरीरान्तर्गतमेव प्रतिपत्तारो मन्वते, तथेन्द्रियमपि गोलकमेव । अतः शरीरापेक्षया गोलकापेक्षया वा विच्छिन्ने विच्छेदबुद्धि. । शब्देऽप्ययमेव न्यायः **सांख्यानामिति** ।

स्वमते आह—

**शब्दे त्वाधिक्यविच्छेदौ भ्रान्त्यैवोक्तावसम्भवात् ॥ ५१ ॥**

श्रोत्रदेशे एव शब्दो गृह्यते, अतो न विच्छेदः, अमूर्त्तद्रव्यत्वाच्च न वृद्धिह्रासाविति ।

---

१. वर्जनम्—का० । २. पृथ्व्यन्या—पाठा० । ३. पार्थव—मु० पा० ।
४. पार्थिवं—मु० पा० । पार्थिवो—पाठा० । ५. मूलभेदात्—का० ।
६. आत्मानमुपनमयति—३ पु० । ७. अर्थानुपनीतत्वात्—२ पु० ।

तदेव **सांख्यानां** मतेन प्राप्यकारित्व समर्थितम् । न त्वाहङ्कारित्वेऽक्षाणां तत्त्वान्तरवृत्तिसद्भावे वा प्रमाणमस्ति, तेन भौतिकान्येवेन्द्रियाणि प्राप्यकारीणीति वक्तव्यम् । तथा हि चक्षुस्तावद् रूपप्रत्यक्षहेतुत्वादालोकवत्तैजसम्[1], तथा च सति दीपप्रभावदेव पृथुग्राहिकल्पन सुकरमिति न किञ्चिच्चोद्यम् । यथा रूपवदेव तैजस चक्षू रूपस्य विशेषगुणस्य प्रकाशकम्, एवं गन्धस्यापि विशेषगुणस्य गन्धवदेव प्रकाशकमिति घ्राणस्य पार्थिवत्वसिद्धि । तच्च वायुप्रेरितेषु चम्पकादिसूक्ष्मद्रव्येषु घ्राणोदरप्रविष्टेषु तद्गत गन्ध संयुक्तसमवायेन प्राप्यैव गृह्णातीति वाच्यं प्राप्यकारित्वम् । एव रसनमपि रसग्राहि रसवदेवेति स्थिते पार्थिवमाप्यं वेति चिन्तायामाप्यत्वं युक्तम् । आर्द्रजिह्वो हि स्फुटतर रस गृह्णाति न शुष्कजिह्वः, तेन जिह्वागतानाममेव रसग्राहकत्वमिति रसनस्याऽऽप्यत्वम् । तथा निमग्नोत्तीर्णाना वायुसम्पर्काच्छीतस्पर्शोपलम्भात् शरीरेऽपि वायोरेव स्पर्शोपलब्धिनिमित्तत्वमिति त्वगिन्द्रियस्य वायवीयत्वम् । प्राप्यकारित्व तु त्वग्रसनयोरविवादम्, श्रोत्र तु दिङ्मयम् इति शब्दाधिकरणे ( जै० सू० १. १. ६–२३ ) वक्ष्यत इत्यलमतिविस्तरेण ॥ ५१ ॥

अत्र सत्सम्प्रयोगे पुरुषस्येन्द्रियाणा बुद्धिजन्मेति द्वयमप्ययुक्तम्, सर्वमेव हि ज्ञानं पुरुषस्य सम्प्रयोगे सत्येव जायते, तस्य विभोर्नित्यस्य सर्वदा सर्वार्थसम्प्रयोगात्, अतो व्यभिचाराभावादविशेषणमिदम्, इन्द्रियाणां त्वचेतनत्वात् बुद्धिजन्मानुपपत्तेः ? अत आह—

**पुरुषेन्द्रियशब्दौ च व्यवधानेन कल्पितौ ।**

"सतीन्द्रियार्थसंप्रयोगे पुरुषस्य या बुद्धिः" ( शा० भा० पृ० २६ ) इति वदता **भाष्यकारेण** व्यवहितकल्पना दर्शितेति ।

कः पुनः पुरुषः ? न तावल्लौकिक. कायः, तस्याचेतनत्वात्, अथ आत्मा ? स यदि बुद्धिजन्मना विक्रियते क्षीरवदनित्यः स्यात्, अविक्रियते वा पूर्ववदप्रमातृत्वादसत्तुल्यः स्यात्, यथाऽऽह—

बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
अथाविकृतिरात्मायं प्रमातेति न युज्यते ॥

तथा—

वर्षातपाभ्यां कि व्योम्नश्चर्मण्यस्ति[2] तयोः फलम् ।
चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्समः ॥ इति ।

अत आह—

**पुरुषो लौकिको वा स्याद् यो वास्मिन् साधयिष्यते॥ ५२ ॥**

---

१. आलोकतैजसम्—१-२ पु० ।
२. चर्मणोऽस्ति—२ पु० । चर्मण्येवेति पाठान्तरम् ।

अन्यपरत्वात् सूत्रस्य नात्र तात्पर्यम्, परमार्थतस्तु साधयिष्यमाण एव पुरुषः, स च बुद्धिजन्मना विक्रियत एव, न किञ्चिद्विकारमात्रेण वस्तु नश्यति कुण्डलादिषु स्वर्णवदिति वक्ष्यते, तदाह—

**विक्रिया ज्ञानरूपास्य न नित्यत्वे विरोत्स्यते[1]।**

यदि बुद्धेरर्थान्तरं जन्म ? तत् किं वैशेषिकोक्तः कारणे कार्यस्य समवाय इति चेन्न, तस्य नित्यत्वेनाक्षानधीनत्वात् प्रत्यक्षत्वानुपपत्तेः, अथ नार्थान्तरम् ? तत. पुनरुक्तम् ? अत आह—

**बुद्धिजन्मेति चाप्याह जायमानप्रमाणताम् ॥ ५३ ॥**

कर्तृवचनोऽयं जन्मशब्दो बुद्धिसमानाधिकरण, जायमाना बुद्धिरित्यर्थ.। कीदृशी पुनर्जननक्रिया, यस्यां कर्तृत्वम् उपादानकारणदशाविशेष, यदनन्तरं कार्यस्य सत्ता तस्यापि दशाविशेषस्य तत. प्राच्यवस्थैव, तत. प्रागपि तथेत्यनादिरेषागन्तुककार्यकारणपरम्परा, न तु समवायो जन्म, नापि तस्य नित्यत्वमिति।

जायमानावस्थाविशेषोपादानस्य प्रयोजनमाह—

**व्यापारः कारकाणां हि दृष्टो जन्माऽतिरेकतः।**
**प्रमाणेऽपि तथा मा भूदिति जन्म विवक्ष्यते ॥ ५४ ॥**

किमिति पुनः कारकान्तरवैधर्म्यं प्रमाणस्य ? अत आह—

**न हि तत् क्षणमप्यास्ते,**

अस्थायित्वादस्य जन्मनोऽतिरिक्तव्यापारासम्भव इति।

यद्यपि स्थायि, तथापि जायमानमेव तन्नाप्रमात्मक[2] जायते, तेन पश्चादिन्द्रियवद् व्यापारान्तरमर्थप्रकाशने स्यात्, इत्याह पादत्रयेण—

**जायते वाप्रमात्मकम्।**
**येनार्थग्रहणे पश्चाद् व्याप्रियेतेन्द्रियादिवत् ॥ ५५ ॥**

नन्वक्रियस्य कथं कारकवाचिभ्या करणं प्रमाणमिति सामान्यविशेषशब्दाभ्यामभिधानम् ? अत आह—

**तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते।**
**तदेव च प्रमारूपं तद्वती करणं च धीः ॥ ५६ ॥**

जन्मैवास्य क्रियेति नाक्रियत्वम्, तदेव चार्थप्रकाशनफलविशेषात् प्रमा, तद्योगाद्धी करणम्, चशब्दात् प्रमाणं चोच्यत इति ॥ ५६ ॥

इदं च बुद्धिजन्मनोरनतिरिक्तत्वम् "या बुद्धिर्जायते" ( शा० भा० पृ० २६ ) इति वदता भाष्यकारेण दर्शितमित्याह—

**जन्म चाव्यतिरेकेण भाष्यकारेण वर्णितम्।**

---

१. विरुध्यते—का०।

२. नामात्मकम्–२ पु०।

जायमानविशेषणस्यान्यदपि प्रयोजनमाह—

**तच्च भूतभविष्यत्त्वात् कृतं बुद्धेर्विशेषणम् ॥ ५७ ॥**

तदभावे भूता भविष्यन्ती वेत्यपि शङ्क्येत, अतोऽस्माद् द्वयाद् विशेषणं व्यवच्छेक जन्मग्रहणमिति ॥ ५७ ॥

भवतु वा **वैशेषिक**सिद्धान्तात् समवायो जन्म, स च नित्य, तथापि तस्याक्षाधीनाभिव्यक्तिरित्युपपन्न प्रत्यक्षत्वमित्याह—

**यदाप्यौलूक्यसिद्धान्तात् समवायस्य जन्मता ।**
**बुद्धिस्तत्रेन्द्रियाधीना[1] तेन प्रत्यक्षमश्नुते ॥ ५८ ॥**

"बुद्धिर्वा जन्म वा" ( शा० भा० पृ० २६ ) इति भाष्यार्थं दर्शयति—

**प्रमाणफलभावश्च यथेष्टं परिकल्प्यताम् ।**

अनादरे कारणमाह—

**सर्वथाप्यनिमित्तत्वं विद्यमानोपलम्भनात् ॥ ५९ ॥**

यथेष्टकल्पनामेव प्रपञ्चयति—

**यद्वेन्द्रियं प्रमाणं स्यात् तस्य वार्थेन सङ्गतिः ।**
**मनसो वेन्द्रियैर्योग आत्मना सर्व एव वा ॥ ६० ॥**

आत्मना मनसो योग इत्यनुषङ्ग, सर्व एव वा समुच्चिता इति ॥ ६० ॥

एषु प्रमाणेषु फल दर्शयति—

**तदा ज्ञानं फलम्,**

करणानां हि काष्ठादीनां पाकादिक्रिया, तत्साध्य चौदनादि फलम्, तदिहापीन्द्रियादीना ज्ञान फल प्रमेयज्ञानमित्यर्थ ।

कथं पुनरेतेषा प्रामाण्यम् ? अत आह—

**तत्र व्यापाराच्च प्रमाणता ।**

सर्वाणि तानि ज्ञानोत्पत्तौ व्याप्रियन्ते इति ।

व्यापार एव कुतोऽवगम्यते ? अत आह—

**व्यापारो न यदा तेषां तदा नोत्पद्यते फलम् ॥ ६१ ॥**

स्वप्नादाविन्द्रियादिव्यापाराभावे ज्ञानानुदयात् सति चोन्मीलनादिव्यापारे तदुदयात् तद्व्यापाराधीनता ज्ञानफलस्यावगम्यत इति ॥ ६१ ॥

यत्त्विन्द्रियार्थसङ्गतिप्रमाणपक्षे त्वचा रूपादयोऽपि बुध्येरन्, तेषामपि स्पर्शवत् सयुक्तसमवायसद्भावात्, अतो ज्ञानमेव प्रमाणम्, तस्य तु कारणमात्रमिन्द्रियार्थसम्बन्ध.' इति 'परैरुक्तम्, तत्राह—

**न च सर्वात्मनाक्षेण सम्बन्धोऽर्थस्य विद्यते ।**

१. व्यक्तिस्तस्येन्द्रियाधीना—२ पु० । बुद्धिस्तस्य—पाठा० ।

**येन सर्वार्थबोधः स्यात् तत्प्रमाणाभिधायिनाम् ॥ ६२ ॥**

कथं न विद्यते ? इत्यत आह—

**प्राप्तिमात्रं हि सम्बन्धो नेन्द्रियस्याभ्युपेयते ।**

किमिति नाभ्युपेयते ? अत आह—

**मा भूत् कारणमात्रेण त्वचा रूपावधारणम् ॥ ६३ ॥**

प्रमाकरण[1]मिन्द्रियार्थसम्बन्ध[2] इत्यत्रापि पक्षे तुल्योऽयं दोष, त्वचा रूपावधारणं स्यादिति तत्रापि प्राप्तिसद्भावादिति ॥ ६३ ॥

अतो यथा प्रमाणनिष्पत्तौ योग्यतासहितैव प्राप्ति कारणम्, न प्राप्तिमात्रम्, एवं फलनिष्पत्तावपीति नातिप्रसङ्ग इत्याह—

**यथा प्रमाणनिष्पत्तौ योग्यत्वादिन्द्रियार्थयोः ।**
**नियता सङ्गतिर्हेतुः फलेऽप्येवं भविष्यति ॥ ६४ ॥**

तत्रैव कार्यदर्शनेन योग्यत्वावगमादिति ॥ ६४ ॥

ननूभयाश्रितो योग, तस्य[2] 'सत्संप्रयोगे' इत्यादिके सूत्रे प्रत्यक्षमिति यो व्यपदेश सोऽनुपपन्न इन्द्रियार्थसम्बन्धनिमित्तत्वाद् व्यपदेशस्य चोभयाश्रितत्वात् प्रत्यर्थमिति व्यपदेशोऽपि कि न स्यात् ? अत आह—

**योगस्य द्व्याश्रयत्वेऽपि भवत्यन्यतराश्रयः ।**
**व्यपदेशः,**

अर्थसम्बन्धस्य प्रमाणान्तरसाधारणत्वाद् वा प्रत्यक्षमिति व्यपदेश इत्याह—

**अथ वाप्यक्षं [3]तत्रासाधारणं भवेत् ॥ ६५ ॥**

यद्वा[2]—किमक्षेणैव व्यपदिश्यते प्रत्यक्षमिति[4] न पुनरर्थेनापि ? इत्यत आह—**योगस्येति ।**

यथा लोके डित्थडपित्थमाता डित्थमातेति ॥

परिहारान्तरमाह—

**अथवेति ।**

विशिष्टज्ञानफलोपाधिर्ह्यत्र प्रत्यक्षशब्द, तस्य चाक्षम् असाधारणमिति तेनैव व्यपदेश, नार्थेन, तस्य ज्ञानान्तरकार्यान्तरसाधारणत्वात् । अत्र प्रमाणफलयोर्विषयैकत्वं विस्पष्टम्, इन्द्रियसम्बन्धस्यार्थाश्रयत्वाज् ज्ञानस्यापि तद्विषयत्वादिति ॥ ६५ ॥

---

१ प्रमाणकारणम्—३ पु० ।

२–२ परैरुक्तमित्यत. सम्बन्ध इति एतावान् टीकाग्रन्थो २ पु० नास्ति ।

२–२. नास्ति २ पु० ।

३. तस्य—पाठान्तरम् ।

४. अर्थेनापि प्रत्यक्षम्—२ पु० ।

आत्ममनःसंयोगप्रमाणपक्षे तस्यात्ममनोऽधिष्ठानत्वात् ज्ञानस्य त्वर्थविषयत्वाद् विषयभेदः स्यादिति शङ्कते—

**संयोगे त्वात्ममनसोः स्याच्चेद् विषयभिन्नता।**
**प्रमाणफलयोः,**

निराकरोति—

**नासौ,**

कारणमाह—

**अर्थे हि व्यापृतं द्वयम् ॥ ६६ ॥**

एतावदेव हि लोके क्रियाकारकयोरेकविषय यत्, यत्र परश्वादिक व्याप्रियते तेनैव च्छिदेति, तदिहाप्यात्ममनःसयोगस्यार्थे विषये व्यापारादस्ति ज्ञानसमानविषयतेति ॥ ६६ ॥

यदि त्वाश्रयो विषयस्तदा ज्ञानस्याप्यात्माश्रयत्वादस्त्येव विषयैक्यमित्याह—

**अथाप्याश्रय इष्टस्ते न योगाद् विषयान्तरम्।**
**आत्मस्थत्वेन विज्ञानं न भिन्नविषयं[1] ततः ॥ ६७ ॥**

अयमेव चात्ममनःसयोगो ज्ञानस्यैकार्थसमवायित्वेन प्रत्यासन्नत्वात् प्रकृष्टं साधन करणमिति तस्यैव प्रामाण्यं युक्तम्, न कारकान्तरस्य? इत्याह—

**प्रकृष्टसाधनत्वाच्च प्रत्यासत्तेः स एव नः।**
**करणं तेन नान्यत्र कारके स्यात् प्रमाणता ॥ ६८ ॥**

सर्वसयोगप्रमाणपक्षेऽपि व्यापारतः समानविषयत्वम्, योग्यतावशेन चातिप्रसङ्गपरिहार इति न कश्चिद्दोष इत्याह—

**प्रमाणे सर्वसंयोगे दोषो नैकोऽपि विद्यते।**

**सर्वसंयोग** इति। आत्मा मनसा सयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति हि सन्निकर्षत्रय पक्षे **न्यायविदः** सङ्गिरन्ते। तदस्य त्रयस्यापि तुल्यत्वविवक्षया यदा प्रामाण्यम्, तदा न कश्चिद्दोष इति।

इन्द्रियप्रामाण्येऽपि तस्यार्थप्राप्तस्य तद्विषयत्वाद्व्यक्तमेव विषयैक्यमित्याह—

**प्रमाणं त्विन्द्रियं यस्य तस्यैको विषयः स्फुटः ॥ ६९ ॥**

मनइन्द्रियसंयोगप्रामाण्येऽप्यात्ममनःसयोगवद् व्यापारतः समानविषयत्वमित्यूहनीयम् ॥ ६९ ॥

एव तावदिन्द्रियादिप्रामाण्ये फलं विषयसाम्यं चोक्तम्, इदानी ज्ञानप्रामाण्येऽप्युभयं दर्शयति—

**प्रमाणफलते बुद्ध्योर्विशेषणविशेष्ययोः।**
**यदा तदापि पूर्वोक्ता भिन्नार्थत्वनिराक्रिया ॥ ७० ॥**

---

१. अभिन्न०—पाठान्तरम्।

विशेषणज्ञानपूर्वकं विशेष्यज्ञानम्, तत्र विशेष्यज्ञानं फलम्, विशेष्यज्ञानसिद्ध्यर्थ-त्वाच्च विशेषणज्ञानस्य व्यापारतः समानविषयत्व पूर्ववद्व्यक्तमेवेति ॥ ७० ॥

यदा तर्हि विशेषणपर्यन्तैव प्रमितिस्तदा कि फलम् ? अत आह सपादेन—

**विशेषणे तु बोद्धव्ये यदालोचनमात्रकम् ।**
**प्रसूते निश्चयं पश्चात् तस्य प्रामाण्यकल्पना ॥ ७१ ॥**
**निश्चयस्तु फलं तत्र,**

सर्वत्रैव तावदिन्द्रियार्थसम्प्रयोगानन्तरमनिश्चयात्मिका बुद्धिरालोचनमात्र-रूपा जायते, सा च पश्चान्निश्चयं प्रसूते । तत्रालोचनं प्रमाणम्, तस्य तु निश्चयः फलमिति ।

यदा पुनरालोचिते निश्चयो न जायते तदा अर्थानवधारणात् उत्प्रेक्षाज्ञान-वदर्थप्रकाशने सत्यपि नास्ति प्रामाण्यम्, नापि फलमित्याह पादत्रयेण—

**नासावालोचिते[1] तदा ।**
**तदा नैव प्रमाणत्वं स्यादर्थानवधारणात् ॥ ७२ ॥**

यदा तु विशेष्यबुद्धिरेव प्रमाणं तदा हानोपादानोपेक्षाबुद्धयः फलमित्याह—

**हानादिबुद्धिफलता प्रमाणं चेद् विशेष्यधीः ।**

शङ्कते—

**उपकारादिसंस्मृत्या व्यवायश्चेत्,**

परिहरति—

**इयं[2] फलम् ॥ ७३ ॥**

इयमेवोपकारादिस्मृतिरव्यवहिता फलमस्तु, नात्राभिनिवेश इति ॥ ७३ ॥

यत्तु बौद्धैर्विषयैकत्वतृष्णया ज्ञानमेव प्रमाणं फलं चेत्युक्तम्, तदलौकिकमि-त्याह—

**विषयैकत्वमिच्छंस्तु यः प्रमाणं फलं वदेत् ।**
**साध्यसाधनयोर्भेदो लौकिकस्तेन बाधितः ॥ ७४ ॥**

कथ भेदस्य लौकिकत्वम् ? इत्याह—

**छेदने खदिरप्राप्ते पलाशे न च्छिदा यथा ।**
**तथैव परशोर्लोके च्छिदया सह नैकता ॥ ७५ ॥**

विषयैकत्ववत् क्रियाकारकयोः स्वरूपभेदोऽपि लोकसिद्ध एव, च्छेदने पर-श्वादिवदिति ॥ ७५ ॥

सत्यं द्वयं दृष्टम्, इह तूभयासम्भवात् विषयैक्यमेव भेदहानेनास्मभ्यं रोचत[3] इति चेत् ? तर्हि परैर्नैयायिकादिभिरिन्द्रियादिप्रामाण्यवादिभिरपि विपरीतं वक्तुं शक्यमिति सोपहासमाह—

१. नासावालोचितो—मु० पा० ।　　　　२. इदम्—१ पु० ।

३. भेदाज्ञानं नास्मभ्यो रोचते—३ पु० ।

**भवते[1] भेदहानेन[1] रुचिता विषयैकता।**
**तत्त्यागेन परेभ्यस्तु भेदो रुचिमुपागतः॥ ७६॥**

फलमेव ज्ञानम्, तस्य चौपचारिकं प्रामाण्यमिति शङ्कते—

**करणत्वोपचारस्तु फले[3] चेत्[3] कल्प्यते त्वया।**

परिहरति—

**कथञ्चिद् विषयैकत्वं परैर्वा किं न कल्प्यते॥ ७७॥**

पूर्वोक्तेन मार्गेण व्यापारत. समानविषयत्वमाभिर्वा किं न कल्प्यते, तथा सत्युभयमपि सुस्थं भवति, न किञ्चिदौपचारिकमिति॥ ७७॥

उपसंहरति—

**परिच्छेदफलत्वेन वृत्तस्यानन्तरस्य नः।**
**प्रमाणत्वं भवेज्ज्ञाने प्रमाणे तु परं फलम्॥ ७८॥**

परिच्छेदस्य ज्ञानस्य तु फलत्वेनानन्तरवृत्तस्येन्द्रियादेः प्रामाण्यम्, ज्ञानस्य तु प्रमाणत्वे परं विशेष्यादिज्ञानं फलमिति॥ ७८॥

यत्तु **सौत्रान्तिकै**रुक्तम्, ज्ञानस्य विषयाकारो नीलपीतादिरूपार्थेन ज्ञाने आहित., स प्रमाणम्, तन्निबन्धनत्वान्नीलपीतादिविषयव्यवस्थाया', स्वसंवित्तिस्तु फलम्, बाह्यार्थस्तु प्रमेय इति, यदाहुः—

विषयाकार एवास्य प्रमाणं तेन मीयते।
स्वसंवित्तिः फलं चास्य तद्रूप्ये ह्यर्थनिश्चयः॥ इति॥

तन्निराकरोति—

**स्वसंवित्तिफलत्वं तु तन्निषेधान्न युज्यते।**

निषेत्स्यते **शून्यवादे** स्वसंवित्तिरिति।

किञ्चैवं विषयभेदोऽपीत्याह—

**प्रमाणे विषयाकारे भिन्नार्थत्वान्न युज्यते॥ ७९॥**

विषयाकारो हि प्रमाणं ते, प्रमाणं च प्रमेयविषयम्, नीलादिकं च प्रमेयमिति विषयाकारो विषयविषय', स्वसंवित्तिस्तु विज्ञानविषयेति विषयभेद इति॥ ७९॥

**योगाचारास्तु** बाह्यार्थमपलपन्तः 'ज्ञानस्यैवानादिवासनोपप्लावितो नीलपीतादिविषयाकारः प्रमेयं, स्वाकारः प्रमाणम्, स्वसंवित्तिः फलम्' इति मन्यन्ते, यथाहुः—

यदाभासं प्रमेयं तत्प्रमाणफलते पुनः।
ग्राहकाकारसंवित्त्योस्त्रयं नातः पृथक् कृतम्॥ इति॥

---

१—१. भवत्यभेद०—का०।
२. तस्य तु०—१ पु०।
३—३. फलं वा—१ पु०।

तान् दूषयति—

**स्वाकारश्च स्वसंवित्तिं मुक्त्वा नान्यः प्रतीयते ।**
**प्रामाण्यं यस्य कल्प्येत स्वसंवित्तिफलं प्रति ॥ ८० ॥**

स्वसवित्तिस्तावन्निषेत्स्यत एव । यश्चायं स्वाकारः प्रमाणत्वेन कल्पितः सोऽपि स्वसवित्तेरन्यो न गम्यते, स्वसवित्तिरेव ज्ञानस्याकार. । न हि स्वस्य संवित्तिः स्वसंवित्तिरिति सम्भवति, सविदन्तरानभ्युपगमादिति ॥ ८० ॥

किञ्च, अथ स्वाकारः परिच्छिन्नो वा प्रमाणम्, अपरिच्छिन्नो वा; परिच्छेदस्तावत् स्वेनैव स्वस्य न सम्भवति; विषयाकारस्य प्रमेयत्वहानात्, अत आकारान्तरमप्यङ्गीकर्त्तव्यम्; न च तदस्ति, भावे वा तस्याप्याकारान्तरकल्पनायाम् अनवस्था ? इत्याह—

**स्वाकारस्य परिच्छेदो न चाकारान्तराद् विना ।**
**तस्याप्येवं तथा च स्यान्नाकारान्तः कदाचन ॥ ८१ ॥**

अपरिच्छिन्नस्तु सत्तामेव न लभते, कुतस्तस्य प्रामाण्यम् ? इत्याह—

**न चासञ्चेतितः सत्तां स्वाकारः प्रतिपद्यते ।**

न चास्माकमिव ज्ञानस्य पश्चादन्येन ग्रहण सम्भवति, सर्वसंविदा स्वांशपर्यवसायित्वादिति ।

यदा चैव स्वाकारोऽपलपितः, तदा तदधीनग्रहणस्य विषयाकारस्यप्यसिद्धिरेवेत्याह—

**ग्राह्ये च विषयाकारे ग्राहकोऽन्यो न लभ्यते ॥ ८२ ॥**

ननु भवता पि सुखदु खेच्छादीना स्वसवेद्यत्वमेष्टव्यम्, अन्यस्य वक्त्रादेस्तद्ग्राहकत्वाभावादत आह—

**मनसस्त्विन्द्रियत्वेन प्रत्यक्षा धीः सुखादिषु ।**

किमिन्द्रिय मन इत्येतावता तज्ज्ञान प्रत्यक्षम्, कः पुनर्मनसः सुखादिभिः सन्निकर्षः ? अत आह—

**मनसा सम्प्रयुक्तो हि तान्यात्मा[1] प्रतिपद्यते ॥ ८३ ॥**

मनसा=मन.संज्ञकेनेन्द्रियेण सयुक्त आत्मा स्वसमवेतान् सुखादीन् संयुक्तसमवायसन्निकर्षेण प्रतिपद्यत इति नास्ति तेषामपि स्वसंवित्तिरिति ॥ ८३ ॥

ननु सौगतैर्विशेषयविषत्वम्, वेदान्त्यादिभिः सामान्यविषयत्वं प्रत्यक्षस्योक्तम्; इदं तु ग्राह्यानुपादानात् न्यूनं लक्षणमत आह—

**सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना ।**
**सामान्यं वा विशेषो वा ग्राह्यं नातोऽत्र कल्प्यते ॥ ८४ ॥**

---

१. नान्यात्मा—मु० पा०।

यदेव योग्यं सम्बद्धं च सामान्यं विशेषो वा तत्सर्वं ग्राह्यमिति न विशेष-कथनेन प्रयोजनमिति ॥ ८४ ॥

ननु कल्पनापोढमभ्रान्तं प्रत्यक्षम्, तच्चतुर्विधम्—इन्द्रियजम्, इन्द्रिय-जसमनन्तरप्रत्ययोद्भवं मानसम्, सर्वचित्तचैत्तानामात्मसंवेदनम्[1], योगिज्ञानं च। योगिज्ञानमपि भावनाबलजम्, अतीतानागतादिविषयमपि कल्पनापोढत्वात् प्रत्यक्षमेव, तेन यद्यपि सत्सम्प्रयोगजस्य प्रत्यक्षस्य विद्यमानोपलम्भनत्वात् धर्मं प्रत्यनिमित्तता, तथापि कल्पनापोढलक्षणस्य योगिज्ञानस्य तन्निमित्तता भवि-ष्यति ? इत्यत आह—

**लक्षणं यच्च यैरुक्तं प्रत्यक्षे लौकिके सति।**
**विद्यमानोपलम्भित्वात् सर्वस्यैवानिमित्तता ॥ ८५ ॥**

सर्वमेव प्रत्यक्षं विद्यमानोपलम्भनं लोके, अतो यस्मिन् कस्मिश्चिदपि लक्षणे सिध्यत्येवानिमित्तता, भावनाबलजं तु ज्ञानं स्मृतिरेव, अनुभूतविषयत्वाद् भावनायाः; तेन प्रामाण्यमेव नास्ति नतरां प्रत्यक्षत्वमित्युक्तम् ॥ ८५ ॥

कल्पनापोढपक्षे च सुतरामनिमित्ततेत्याह—

**निर्विकल्पकपक्षे तु सुतरामनिमित्तता।**

कारणमाह—

**साध्यसाधनसम्बन्धो नाविकल्प्य हि गृह्यते ॥ ८६ ॥**

श्रेयःसाधनता हि धर्मता, सा चावश्यमिदमस्य साधनमिति विकल्प्यैव ग्रहीतव्या, नाविकल्पितेन शक्या ग्रहीतुमिति ॥ ८६ ॥

एवं प्रत्यक्षानिमित्तत्वं प्रतिपाद्य प्रत्यक्षपूर्वकत्वादनुमानोपमानार्थापत्तीनाम-कारणत्वमुक्तं[2] भाष्यकारेण, तदाक्षिपति—

**कथं प्रत्यक्षपूर्वत्वमनुमानादि नो भवेत्।**

कथं च नानुभवति[3] ? अत आह—

**यदा स्मृत्यसमर्थत्वान्निर्विकल्पेन्द्रियस्य धीः ॥ ८७ ॥**

इन्द्रियार्थसामर्थ्यजं ज्ञानं प्रत्यक्षम्, न चेन्द्रियस्यार्थस्य वा स्मर्तुं सामर्थ्यम्, सविकल्पकं च स्मृत्याकृष्टं जात्यादियोजनयोपजायते, अतो निर्विकल्पकमेव प्रत्यक्षमिति ॥ ८७ ॥

ततः किम् ? इत्याह—

**न चाविकल्प्य लिङ्गस्य लिङ्गिसम्बन्धयोस्तथा[4]।**
**गृहीतिः,**

---

१. चित्तशब्दो नास्ति ३ मु०। ०चैत्याना०—मु० पा०।

२. प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामप्यकारणत्वमिति। (शा० भा० पृ० २७)

३. चानुभवति—मु० पा०। ४. लिङ्गसम्बन्ध०—मु० पा०।

लिङ्गलिङ्गितत्सम्बन्धग्रहणपूर्वकं ह्यनुमानम्, न च निर्विकल्पकेन तद्ग्रहणं सम्भवति, अतो न प्रत्यक्षपूर्वकमनुमानमिति।

तथोपमानेऽपि न तत्पूर्वकतेत्याह—

**उपमानेऽपि सादृश्यग्रहणात् स्मृतेः ॥ ८८ ॥**

गां दृष्ट्वा गवय तत्सदृशतया विकल्प्य पश्चात् स्मृते गवि सादृश्यं तेन गृह्यते, अतो नाविकल्पकपूर्वकमिति ॥ ८८ ॥

अर्थापत्तिस्त्वत्यन्तातीन्द्रिये शक्त्यादौ प्रवर्त्तमाना कथं प्रत्यक्षपूर्विकेत्याह—

**अर्थापत्तिः पुनः प्रायो नान्यदृष्टेऽर्थ इष्यते।**

मा भूत् प्रमेयप्रत्यक्षपूर्विका[1], अनुपपन्नं[2] तु प्रत्यक्षेण दृष्ट्वा प्रवर्तत इति तत्पूर्विका[3] भविष्यति ? इत्यत आह—

**प्रवर्तते च यं दृष्ट्वा सोऽप्यर्थः सविकल्पकः ॥ ८९ ॥**

दाहादिक हि 'अनेन विनेद नोपपद्यते' इति विकल्पितमेवार्थापत्त्युदये निमित्तमिति ॥ ८९ ॥

किञ्च, यत्र देशान्तरप्राप्त्यनुमितेन[4] सूर्यगत्यादिना लिङ्गेन गतिकारणं लिङ्ग्यनुमीयते, तत्र द्वितीयस्यानुमानस्य कथ प्रत्यक्षपूर्वकत्वम् ? इत्याह—

**यत्र चानुमितं लिङ्गं सूर्यगत्यादि लिङ्गि च।**
**तत्र प्रत्यक्षपूर्वत्वं कथमध्यवसीयते ॥ ९० ॥**

तथा धर्मेऽप्यप्रत्यक्षपूर्वकमनुमान भविष्यतीति ॥ ९० ॥

किञ्च, विकल्पनीयमिद प्रत्यक्षपूर्वकत्वम्, यदि तावत् प्रमेयविषयं प्रत्यक्षमपेक्ष्यैषां प्रवृत्ति., ततः प्रामाण्यमेव न स्यादित्याह—

**प्रत्यक्षावगते चार्थे कुतस्तेषां प्रमाणता।**

कालभेदात् प्रामाण्यमिति चेत्, ततोऽनवगतविषयत्वान्न प्रत्यक्षपूर्वकतेत्याह—

**तैर्यदा स प्रतीयेत तदा नाक्षस्य गोचरः ॥ ९१ ॥**

अथ कस्मिंश्चिदर्थे प्रत्यक्षेण गृहीते अनुमानादीनां प्रवृत्तिरिति शङ्कते—

**अथ कस्यचिदर्थस्य ज्ञानात् तत्पूर्वता भवेत्।**

दूषयति—

**तदार्थस्य भविष्यत्त्वं न स्यादज्ञानकारणम् ॥ ९२ ॥**

अर्थस्य धर्मस्यानुमानादिभिरज्ञाने भविष्यत्त्वेन धर्मस्याप्रत्यक्षत्वं न कारणं स्यादिति ॥ ९२ ॥

---

१. प्रमेये०—३ पु०। २. अनुपपद्यमानं—३ पु०।
३. तत्पूर्वकतया—३ पु०। ४. दिशान्तर०—२ पु०।

कथम् ? इत्याह—

**वर्तमाने हि कस्मिंश्चिद् विज्ञातेऽर्थेऽक्षबुद्धिभिः ।**
**लिङ्गादविद्यमानोऽपि धर्मो गम्येत तैस्तदा ॥ ९३ ॥**

तदा हि वर्तमान किञ्चित् प्रत्यक्षेण गृहीत्वा भविष्यन्नपि धर्मोऽनुमानादिभिर्गृह्येतेति ॥ ९३ ॥

किञ्च, ईदृश प्रत्यक्षपूर्वकत्वं शब्दस्याप्यस्त्येवेति सोऽपि धर्मनिमित्तं न स्यादित्याह—

**प्रत्यक्षेण गृहीत्वा च वर्णान् वेदेऽपि[1] गृह्यते ।**
**प्रमेयमिति सोऽपि स्यात् तत्पूर्वत्वादकारणम् ॥ ९४ ॥**

एवमाक्षिप्त भाष्यम् एकेषा मतेन समाधत्ते—

**केचित् तत्पूर्वकत्वं तु हेतुर्नैवेति मन्वते ।**

कि तर्हि ? इत्याह—

**तत्पूर्वकत्वाद् यत् तावत् प्रामाण्यं तदसम्भवः ॥ ९५ ॥**

प्रत्यक्षागृहीते धर्मे यत्तत्पूर्वकतया[2] प्रामाण्यमन्येषाम्, तत्तावन्नास्तीत्येतावदुच्यत इति ॥ ९५ ॥

एवं तु प्रमाणान्तराणामनिमित्तत्वे हेत्वनाभिधानान्मन्दफलं भाष्य स्यादिति मत्वा स्वमतेन समाधत्ते—

**प्रत्यक्षेण गृहीत्वा च,**

सविकल्पकमपि प्रत्यक्षमित्युपपादयिष्यते, एवं च सामान्यतो वा विशेषतो वा प्रत्यक्षगृहीते एवार्थेऽनुमानादिप्रवृत्तिः, सम्बन्धग्रहणापेक्षत्वादगृहीते सम्बन्धिनि तद्ग्रहणासम्भवात् ।

**लिङ्गाद्यन्यतमं[3] ध्रुवम् ।**
**प्रवृत्तिरनुमानादेर्न च धर्मेऽस्ति तादृशम् ॥ ९६ ॥**
**अनुमानानुमानादेर्न चाप्यस्तीह सम्भवः ।**
**सम्बन्धलिङ्गिलिङ्गानां पूर्वसिद्धेरसम्भवात् ॥ ९७ ॥**
**सत्ता च नानुमानेन कस्यचित् प्रतिपद्यते ।**
**धर्मेणान्यद् विशेष्यं चेत्,**

लिङ्गत्वेन वा सदृशत्वेन वा धूमगवयादिकं गृहीत्वानुमानादेः प्रवृत्ति; न चागृहीतेऽग्नौ गवि वा तल्लिङ्गतया तत्सदृशतया वा धूमगवयादिग्रहण सम्भवति,

---

१. वर्णाद्वेदोऽपि—१ पु० ।

२. यत् तावत् तत्पूर्वकतया—३ पु० ।

३. अन्यतमत्—१–२ पु० ।

तदनेन प्रकारेणानुमानादिप्रमेयस्यैव प्रत्यक्षग्रहणापेक्षा दर्शिता भवति। धर्मस्य चाप्रत्यक्षत्वेन तल्लिङ्गं तत्सदृशं वा न शक्यं ग्रहीतुमिति नानुमानादेर्धर्मं प्रति निमित्ततेति।

न चानुमितानुमानमपि धर्मे सम्भवति, तस्यापि प्रत्यक्षपूर्वकत्वात्, यावद्धि न कार्यं कारणं तयोश्च सम्बन्धः प्रत्यक्षेण गृहीतः, न तावदनुमितयापि गत्या तत्कारणमनुमातुं शक्यम्, न च धर्मेणेति।

परिहरति—

**पक्षोऽसिद्धविशेषणः ॥ ९८ ॥**

धर्मस्य क्वचिदपि प्रमाणेन सिद्ध्यभावात्; न ह्यप्रमितसद्भावेन वस्तुना शक्यमन्यद्विशेष्टुम्, न तर्हि धर्मानुवादेन प्रमाणविधिः सिध्येत्, सत्यं यदि विद्यमानो यो धर्म इत्यनूद्येत। यदा तु योऽयं निष्प्रमाणत्वादिविवादास्पदीभूत इत्यनूद्यते तदा विवादास्पदीभूतस्यानूद्यमानरूपस्य प्रमाणसिद्धिरस्त्येव, अनूद्यमानसिद्धिरेव चानुवादस्यापेक्षिता, न धर्मस्वरूपस्य।

ये तु तस्यापि सामान्यतः सिद्धिमेव मन्यन्ते तेषां कुतः सिद्धिरिति वक्तव्यम्, 'पक्षोऽसिद्धविशेषणः' इति च ग्रन्थविरोधः। तथा परीक्षाविशेषं दर्शयता न चान्यन्नापि चोदनेत्ययमपि पक्षो दर्शितः, तस्मिंश्च पक्षे विद्यमाने कथं वा सामान्यसिद्धिरविवादा स्यात्, अभावनिराकरणं च "अभावोऽपि नास्ति" (शा० भा० पृ० २७) इति भाष्यकारस्यासङ्गतं स्यादित्यास्तां तावत् ॥ ९८ ॥

एवमुपपादितमनुमानाद्यविषयत्वं **सौगतान्** प्रति प्रयोगेण दर्शयति द्वयेन—

**तस्माददृष्टपूर्वत्वात् केनचिद् वस्तुना सह।**
**धर्मस्य नानुमेयत्वमसाधारणवस्तुवत् ॥ ९९ ॥**
**अदृष्टसदृशत्वाच्च स्वयं चानुपलम्भनात्।**
**धर्मस्य नोपमेयत्वमसाधारणवद् भवेत् ॥ १०० ॥**

असाधारणं हि **सौगतानामपि** अविकल्पत्वान्नानुमानादिगम्यमिति ॥ १०० ॥

चोदयति—

**नन्वर्थापत्तिरेवं स्याज्जगद्वैचित्र्यदर्शनात्।**

**एवमिति**। प्रमाणं स्यादित्यर्थः।

वैचित्र्यमेव दर्शयति—

**सुखिदुःख्यादिभेदो हि नादृष्टात् कारणादृते ॥ १०१ ॥**

कथम्? इत्याह—

**दृष्टस्य व्यभिचारित्वात् तदभावेऽपि सम्भवात्।**

कस्यचित् प्रयस्यतोऽपि धनं न भवति, कस्यचिदप्रयस्यतोऽपि भवतीति।

व्यभिचारमेवोदाहरणेन दर्शयति—

**सेवाध्ययनतुल्यत्वे दृष्टा च फलभिन्नता ॥ १०२ ॥**

निराकरोति—

**स्यादेवं यदि शक्येत स्वाभाविकनिवारणा ।**

न च सा शक्येत्याह—

**कर्मशक्तेश्च वैचित्र्ये हेतुरन्यो भवेद् यदि ॥ १०३ ॥**

यदि ब्रह्महत्याश्वमेधयोः शक्तिवैचित्र्ये स्वभावादन्यो हेतुः स्यात्, ततो निवार्येत स्वाभाविकत्वम् । न चासावस्तीत्यतो यथा कर्मशक्तिवैचित्र्यं स्वाभाविकम्, एवं जगद्वैचित्र्यमेवास्तु, किमन्तर्गडुना कर्मणा इत्याह—

**यथा च फलवैचित्र्ये कर्मणां शक्तता स्वत ।**

**तथा च[1] चित्रता लोके स्वभावादुपपत्स्यते ॥ १०४ ॥**

नन्वव्यभिचारात् कर्मशक्तीना युक्त स्वाभाविकत्वम्, न चैवं जगद्वैचित्र्यस्य सम्भवति, एकस्यैव हि दारिद्र्यमैश्वर्यं च पर्यायेण दृश्यते, तत्स्वाभाविकत्वेऽनुपपन्नम्; अतोऽवश्यम्भाविनि कारणे दृष्टस्य व्यभिचाराददृष्टं कल्प्यम् ? अत आह—

**अधर्मे धर्मरूपे वा ह्यविभक्ते फलं प्रति ।**

**किमप्यस्तीति विज्ञानं नराणां क्वोपयुज्यते ॥ १०५ ॥**

भवत्वेवम्, तथापि दुःखफलसाधनमधर्मो ब्रह्महत्यादिः, सुखफलहेतुश्च धर्मोऽग्निहोत्रादिः, सुखेऽपि 'इद स्वर्गस्य साधनम्, इद पशोः' इति यावत्फलविशेषं प्रति धर्माधर्मौ न विभज्येते तावत् किमप्यदृष्टमस्तीति एतावदर्थापत्तिज्ञानम् अनुपयोगीति ॥ १०५ ॥

एतदेव विवृणोति सार्द्धेन—

**किं नु यागादितो दुःखं हिंसादेः किं सुखोद्भवः ।**

**स्वर्गपुत्रादिभेदश्च कीदृशात् कर्मभेदतः ॥ १०६ ॥**

**इति यावदविज्ञानं तावन्नैव प्रवर्तते ।**

मा प्रवर्तिष्ट, सिद्धं तावदर्थापत्तिरपि धर्मे प्रमाणमिति, तथा च चोदनैवेत्यवधारणासम्भव. ? अत आह—

**प्रवृत्त्यङ्गं च यज्ज्ञानं तस्य मूलं प्रतीक्ष्यते ॥ १०७ ॥**

प्रवृत्त्यङ्गं यत् ज्ञानं तत्र चोदनैव कारणमिति नात्रार्थापत्तिर्मूलं विवक्षितमित्यर्थः । अतोऽर्थापत्तेः सामान्ये मानत्वेऽपि विशेषे चोदनैवेति प्रतिज्ञासिद्धिरित्युपसंहरति—

**तस्मात् सिद्धेऽपि सामान्ये विशेषो नागमाद् ऋते ।**

---

१. तथापि—मु० पा० । तथैव इत्यपि क्वचित् पाठः ।

सूत्रकारेणापि न सामान्यमात्रजिज्ञासा सूत्रिता, तन्मात्रस्याप्रयोजनत्वात्, किन्तु विशेषपर्यन्तैवेत्याह—

**विशेषस्य तु जिज्ञासा सूत्रकारेण सूत्रिता ॥ १०८ ॥**

न सामान्यस्यैव किन्तु विशेषस्यापीत्यर्थः, विशेषपर्यन्तेति यावदिति ॥१०८॥

नन्वर्थापत्तेः सामान्यस्य विशेषस्य चागमात् सिद्धेः समुच्चितयोः प्रामाण्येन चोदनैवेत्यवधारणासिद्धिरत आह—

**गम्यमाने विशेषे च तदन्तर्भावकारितः ।**
**सामान्यप्रत्ययोऽपि स्याच्छास्त्रादेवेत्यकारणम् ॥ १०९ ॥**

सामान्यं हि साधयन्ती अर्थापत्तिः न विशेषं निर्धारयितुमलम्, विशेषं तु साधयच्छास्त्रम् अन्तर्णीतसामान्यमेव साधयतीति किं प्रमाणान्तरेणेति ॥ १०९ ॥

केचित्तु[1] इमामेव वैचित्र्यार्थापत्तिम् अनुमामेव कार्यात् कारणगोचरां मन्यन्ते सा ह्यर्थापत्तिवदेव निराकार्येत्याह[1]—

**यथार्थापत्तिरेवं च नानुमानोपमेष्यते ।**

सापि[2] सामान्यमात्रसाधनात् अनुपयोगिन्येव उपमाग्रहणं दृष्टान्त इति ।

अथ तदेव [3]शास्त्रमनुमाप्यपेक्षते, ततस्तदेवास्तु प्रमाणम्, किमनुपयोगिन्यानुमया इत्याह—

**शास्त्रं चेत् तदपेक्षेत तस्यैव स्यात् प्रमाणता ॥ ११० ॥**

यत्तु लिङ्गादि न प्रत्यक्षग्राह्यं निर्विकल्पकत्वात् प्रत्यक्षस्येत्युक्तं तदनुभाषते—

**प्रत्यक्षाग्रहणं यत्तु लिङ्गादेरविकल्पनात् ।**

निराकरोति—

**तन्न,**

कारणमाह—

**इष्टत्वाद् विकल्पस्याप्यर्थरूपोपकारिणः ॥ १११ ॥**

'अर्थरूपोपकारिण' इति यो विकल्पः[4] स्वेनैव रूपेणार्थं विकल्पयति नान्यरूपेण शुक्तिरजतवत्, तस्यापि प्रत्यक्षत्वेनेष्टत्वात् अस्ति प्रत्यक्षलक्षण[5] लिङ्गादेरिति ॥ १११ ॥

यस्त्वपिशब्दमसहमानः सर्वमेव ज्ञानं शब्दानुविद्धत्वात् सविकल्पकमेव न किञ्चिन्निर्विकल्पकमस्तीति मन्यते, तं प्रत्याह—

**अस्ति ह्यालोचना[6] ज्ञानं प्रथमं निर्विकल्पकम् ।**
**बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ ११२ ॥**

---

१–१. अयं ग्रन्थो ३ पु० नास्ति । २. सोऽपि—३ पु० । ३. तदेव भाष्यम्—२ पु० ।
४. अर्थरूपोपकारी यो विकल्पस्तेनैव—३ पु० ।
५. प्रत्यक्षम्—२ पु० । प्रत्यक्षग्रहणम्—३ पु० । ६. ह्यालोचनं—पाठा० ।

बालानामिवाव्युत्पन्नानामस्माकमपि चक्षुःसन्निपातानन्तरं सविकल्पकात् प्रथममस्ति निर्विकल्पकं प्रतीतिसिद्धमालोचनविज्ञानं शुद्धवस्तुविषयम्, तदभावे हि निर्निमित्तं न[1] शब्दस्मरणं स्यात्, अस्मृतशब्दस्य[2] च न[1] शब्दानुविद्धो विकल्पः[2] सम्भवतीति ॥ ११२ ॥

शुद्धवस्तुजमित्येतद् विवृणोति—

**न विशेषो न सामान्यं तदानीमनुभूयते ।**

**तयोराधारभूता तु,**

विशेषः=व्यवच्छेदः, व्यावृत्तिः । सामान्यम्=समानत्वम्, अनुवृत्तिरिति यावत् । अनुवृत्तिव्यावृत्ती न निर्विकल्पके प्रकाशेते, तयोस्त्वाधारभूतमनुवृत्तं व्यावृत्तं च यज्जातिव्यक्त्याद्यनेकाकारं वस्तु तत्तदाकारसयुक्तं सम्मुग्धं सर्वमवसीयते, तत् शुद्धवस्त्वित्युच्यते—

**व्यक्तिरेवावसीयते ॥ ११३ ॥**

वस्त्वित्यर्थः ॥ ११३ ॥

**वेदान्तिनस्तु** महासामान्यमेव सत्ताद्रव्यशब्दाभिलप्यनिर्विकल्पकस्य विषयमाहुरित्याह—

**महासामान्यमन्येस्तु[3] द्रव्यं सदिति चोच्यते ।**

एवं च सर्वमेव प्रत्यक्षं सामान्यविषयमाश्रितं भवतीत्याह—

**सामान्यविषयत्वं च प्रत्यक्षस्यैवमाश्रितम् ॥ ११४ ॥**

निर्विकल्पकमेव चेत् प्रत्यक्षम्, कथं तर्हि विशेषप्रतिपत्तिः ? अत आह—

**विशेषास्तु प्रतीयन्ते सविकल्पकबुद्धिभिः ।**

तानेव द्विविधान् विभजते—

**ते च केचित् प्रतिद्रव्यं केचिद् बहुषु संश्रिताः ॥ ११५ ॥**

प्रतिद्रव्यवृत्तयः खण्डादिव्यक्तयः, गोत्वादयस्तु बहुष्वनुगताः, ते च सत्तादिमहासामान्यापेक्षया विशेषा इति ॥ ११५ ॥

तांश्च द्वयानपि विशेषान् व्यावृत्त्यनुगमात्मना स्थितानकल्पयत्[4] प्रत्यक्षं सन्मात्रविषयमुपजायमानं गवि चाश्वे चैकरूपमेव भवतीत्याह—

**तानकल्पयदुत्पन्नं व्यावृत्तानुगतात्मना ।**

**गव्यश्वे चोपजातं तु प्रत्यक्षं न विशिष्यते ॥ ११६ ॥**

किमिति विशेषान् न कल्पयति, भेदावभासाधीनत्वाद् विशेषावभासस्य, तस्य

---

१. मु० पु० नास्ति ।

२–२. अस्मत् शब्दस्य वनशब्दस्य वनशब्दानुविद्धविकल्पः—३ पु० ।

३. तद्—२ पु० ।

४. ०नधिकल्पयत्—२ पु० ।

चेतरेतराभावरूपस्य प्रत्यक्षेण ग्रहणासम्भवात्। अपि चाभावपूर्वको वा विशेषावभासो विपरीत वा। न तावदभावपूर्वकत्वमभावस्य; प्रतियोग्याश्रयग्रहणाधीनत्वात्। न हि सद्रूपमेकमेवेतरेतराभावस्य प्रतियोगि चाश्रयश्चेति सम्भवति। नापि विशेषावभासपूर्वको भेदावभासः, भेदानवभासे विशेषानवभासात्। तस्मादनाद्यविद्यानिबन्धनविकल्पविलसिता एव विशेषाः, न परमार्थतः सन्ति। एवं चाद्वितीयमेक सविद्रूपमक्षर[1]मित्यद्वैतश्रुतिः प्रत्यक्षानुगुणैव, न प्रत्यक्षविरोधिनी ॥ ११६ ॥

तदेतद् दूषयति—

**तदयुक्तम्, प्रतिद्रव्यं भिन्नरूपोपलम्भनात्।**

किं खलु भवतो नीलपीतयोस्तिक्तमधुरयो. शीतोष्णयोर्गवाश्वयोश्चाक्षुषप्रयोगानन्तरम् उपजायमानं विज्ञानम् एकरूपमेव ? सत्यमिति ब्रुवाणस्य नोत्तरं वाच्यम्। यत्त्वितरेतराभावो भेद इति, तदस्तु, न त्वत्र भेदग्रहणेन कार्यम्। यद्धि नीलाद्भिन्नं पीतं तत्स्वरूपमेव गृह्यते न तु भिन्नतया, येन भेदग्रहणापेक्षा भवेत्, तेन नीलपीतादीनां भिन्नरूपाणा प्रत्यक्षग्रहणे सति पश्चादितरेतराभावः[2] प्रतीयत इति न कश्चिद्दोषः। अन्यथा सविकल्पकबुद्धिरपि[3] उपपादयितुं न शक्यते, सत्य न शक्यते, अत एवाविद्येत्युच्यत इति चेत्, नन्वविद्ययाप्यशक्यमेव विशेषग्रहणाधीन भेदग्रहणम्, तदधीन च विशेषग्रहणम्, कथमविद्ययापि निर्णीयेत, न चानादितया बीजाङ्कुरवत् परिहारेणापि[4] विशेषो ग्रहीतु शक्यत इति[4]असम्भवः स्वापादुत्थितस्याद्य विशेषज्ञान भेदज्ञान चान्योन्याश्रयत्वान्नालमुत्पत्तुम्। अथ भेदग्रहणमन्तरेणाप्यविद्यामात्रेण विशेषग्रहणम्, तदिन्द्रियमात्रमेवानपेक्षमस्तु किम् अविद्याग्रहणेनेत्यास्तां तावत्।

ननु निर्विकल्पकदशाया तावदीदृशमिति भिन्नरूप नोपाख्यातुं शक्यते, तत् कथं तस्य ग्रहणम् ? अत आह—

**न ह्याख्यातुमशक्यत्वाद् भेदो नास्तीति गम्यते ॥ ११७ ॥**

किमिदानी भिन्नरूपमेव निर्विकल्पकग्राह्यम् ? नेत्याह—

**निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनः।**

**ग्रहणम्,**

द्व्यात्मकस्य, सामान्यविशेषात्मकस्येत्यर्थ.। सामान्यावभासोऽपि प्रतीतिसिद्ध एव। न हि निर्विकल्पकेनागृहीतस्य सविकल्पकेनापि ग्रहण सम्भवति, न

---

१. प्रत्यक्षम्—३ पु०।

२. पश्चादभावेनेतरे०—मु० पा०।

३. अपिशब्दो नास्ति ३ पु०।

४-४. अयं ग्रन्थ. ३ पु० एव दृश्यते।

वा अगृहीते सामान्ये व्यक्त्यन्तरे प्रत्यभिज्ञा सम्भवति। तस्मात् सामान्यं विशेषश्च निर्विकल्पकेऽपि प्रकाशत एव।

ननु 'न विशेषो न सामान्यं तदानीमनुभूयते' ( श्लो० वा० ४-११३ ) इत्युक्तम्, तत् कथं तयोर्ग्रहणमुच्यते ? अत आह—

**लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते ॥ ११८ ॥**

**न चासाधारणत्वेन[1] परव्यावृत्त्यकल्पनात् ।**

**विशेषानुगमाक्लृप्तेः सामान्यमिति नापि तत् ॥ ११९ ॥**

न हीदानीमप्यनुवृत्तिव्यावृत्त्योर्ग्रहणमुच्यते, या त्विय गृह्यमाणस्य द्व्यात्मकत्वाख्या सा लक्षणाख्या गृह्यमाणस्य वस्तुनो लक्षणमाख्यायते सामान्यविशेषात्मकं तद्वस्त्विति, ज्ञात्रा पुनः शुद्धमेवानुवृत्तिव्यावृत्तिरहित गृह्यते, न त्वसाधारणत्वेन, परेभ्यो व्यक्त्यन्तरेभ्यो व्यावृत्तेरकल्पनात्। तथा व्यक्त्यन्तरानुवृत्तेरकल्पनात् न सामान्यमपि गृह्यते, अतो न विरोध इति ॥ ११९ ॥

एवं निर्विकल्पकं तद्विषय च व्याख्याय सविकल्पकस्य प्रत्यक्षत्वं पूर्वोक्त प्रपञ्चयति—

**ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया ।**

**बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता ॥ १२० ॥**

ततो निर्विकल्पकादुत्तरकाल जात्यादिभिर्विकल्प्य वस्तु यया बुद्ध्या गृह्यते सापि प्रत्यक्षमेवेति ॥ १२० ॥

यत्तु सविकल्पकस्य स्मृत्यनुविद्धत्वादिन्द्रियस्य स्मृतावसामर्थ्यान्नेन्द्रियजत्वमित्युक्तम्, तत्राह—

**करणं चेन्द्रियं बुद्धेर्न तत्र ज्ञानमाहितम् ।**

**ततः स्मृत्यसमर्थत्वाद् विकल्पोऽतो न वार्यते ॥ १२१ ॥**

क्व तर्हि ज्ञानमाहितम् ? अत आह—

**आत्मन्येव स्थितं ज्ञानम्,**

तत्र कारणमाह—

**स हि बोद्धात्र गम्यते ।**

ततः किम् ? इत्याह—

**स्मरणे चास्य सामर्थ्यं सन्धानादौ च विद्यते ॥ १२२ ॥**

तथापि कथं स्मरणोपेताक्षव्यापारजन्यस्य सविकल्पकस्य प्रत्यक्षत्वम् ? अत आह—

**तेनेन्द्रियार्थसम्बन्धे विद्यमाने स्मरन्नपि ।**

**विकल्पयन् स्वधर्मेण वस्तु प्रत्यक्षवान् नरः ॥ १२३ ॥**

---

१. न त्व०—का० ।

पुरुषो हि पूर्वदृष्टं जात्यादि कालान्तरे चक्षुरादिभिर्गृहीत्वा तस्य पूर्वदर्शनं मनसा स्मृत्वा तदिदमित्यनुसन्धायानुपरतेन्द्रियव्यापारः पुरः स्थितम् अर्थं विकल्पयन् प्रत्यक्षवानेव, तदानीमपीन्द्रियव्यापारस्याविरमादिति ॥ १२३ ॥

नन्विन्द्रियमात्रज प्रत्यक्षम्, इद तु स्मरणसहितेन्द्रियजम्, कथमिन्द्रियव्यपदेश्यम् ? अत आह—

**तच्चैतदिन्द्रियाधीनमिति तैर्व्यपदिश्यते ।**

इन्द्रियज प्रत्यक्षं न तन्मात्रमिति ।

अक्षासम्बद्धाथविषयकस्य[1] अस्माभिरपि नैव प्रत्यक्षत्वमिष्यत इत्याह—

**तदसम्बन्धजातं तु नैव प्रत्यक्षमिष्यते ॥ १२४ ॥**

तत्सम्बन्धानुसारिणस्तु बहवो विकल्पा. पुन.[2] पुनरपि जायमाना न प्रत्यक्षतामतिवर्तन्त इत्याह—

**पुनः [3]पुनर्विकल्पेऽपि सती जातिः प्रतीयते ।**
**तत्सम्बन्धानुसारेण सर्वं[4] प्रत्यक्षमिष्यते[4] ॥ १२५ ॥**

नन्वक्षतश्चेद्विकल्पः, किमिति प्रथमाक्षसन्निपात एव न जायते, अतो नाक्षज इत्यत आह—

**न हि प्रविष्टमात्राणामुष्णाद् गर्भगृहादिषु ।**
**अर्था न प्रतिभान्तीति गृह्यन्ते नेन्द्रियैः पुनः ॥ १२६ ॥**

यदि तु तत्र प्रथममेवास्फुटावभास विज्ञानमस्तीत्युच्यते, तदिहापि समानम् ? इत्याह—

**यथा त्वाभासमात्रेण पूर्वं ज्ञात्वा स्वरूपतः ।**
**पश्चात् तत्रावबुध्यन्ते तथा जात्यादिधर्मतः ॥ १२७ ॥**

यदा चैव स्मृत्युत्तरकालम् इन्द्रियव्यापारानुपरमात् प्रत्यक्षत्वं तदा यत्परैरुक्तम् 'स्मरणव्यवहितस्यापि सविकल्पकस्येन्द्रियव्यापारसन्निधिमात्रेण प्रत्यक्षत्वे सत्यालोच्य निमील्यावस्थितस्य विकल्पयतो विकल्पः प्रत्यक्षं स्यात्' इति, तन्न प्रसज्यत इत्याह—

**यदि त्वालोच्य संमील्य नेत्रे कश्चिद् विकल्पयेत् ।**
**न स्यात् प्रत्यक्षता तस्य सम्बन्धाननुसारतः ॥ १२८ ॥**

नन्वनेककारणकं सविकल्पकं किमक्षेणैव व्यपदिश्यते ? इत्यत आह—

**असम्बद्धविकल्पेऽपि[5] तुल्यमात्मादि कारणम् ।**
**तेनासाधारणत्वं स्यादत्राक्षस्यैव कल्पने[6] ॥ १२९ ॥**

---

१. विषयविकल्पस्य—३ पु० ।
२. पु० नास्ति ।
३. धारावाहिकप्रत्यक्षेऽपीत्यर्थं ।
४–४. नास्ति का० पुस्तके ।
५. असम्बन्ध०—मु० पा० ।
६. कल्प्यते—पाठान्तरम् ।

अक्षासम्बद्धविषये[1] अनुमानादिविकल्पे[1]ऽप्यात्मादेः साधारणत्वादपरोक्ष-विकल्पेऽक्षस्यासाधारणत्वात्तेनैव व्यपदेश इति ॥ १२९ ॥

तुल्य चेद निर्विकल्पकेऽपीत्याह—

**निर्विकल्पकबोधेऽपि नाक्षं केवलकारणम् ।**

एवमक्षव्यापारानुपरमात् प्रत्यक्षत्वमुक्तम् । अस्तु वा निर्विकल्पकोत्पत्तौ[2] निवृत्तव्यापारत्वमक्षस्य, तथापि परम्परया तावदक्षजत्वम्, तावतापि प्रत्यक्षत्वोपपत्तिः । किञ्च, एवमनुमानादीनामपि प्रत्यक्षत्व स्यादिति तन्निवृत्त्यर्थं रूढिरभ्युप गम्यते, यथा परम्परया पङ्काज्जननम्[3] उत्पलादिसाधारणमिति तन्निवृत्तये पद्म-विषये पङ्कजशब्दस्य, तदिदमाह—

**तत्पारम्पर्यजाते वा रूढिः स्यात् पङ्कजादिवत् ॥ १३० ॥**

अनिमित्तैव वा सविकल्पे रूढिरस्तु, वृद्धव्यवहारे सुतरा तत्रैव प्रयोगादिति आह—

**अनिमित्तैव वा रूढिः सुतरां सविकल्पकम् ।**
**प्रत्यक्षं सम्मतं लोके न तथा निर्विकल्पकम् ॥ १३१ ॥**

ननु सत्यपि वृद्धप्रयोगे तन्निवृत्त्या परीक्षकैर्निर्विकल्पकमेव प्रत्यक्षमाश्रीयते ? अत आह—

**वृद्धप्रयोगगम्याश्च शब्दार्थाः सर्व एव नः ।**
**तेन यत्र प्रयुक्तोऽयं न तस्मादपनीयते ॥ १३२ ॥**

किमिति नापनीयते ? अत आह—

**सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ।**
**न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥ १३३ ॥**

यदि नाक्षज सविकल्पकं तत 'कल्पनापि स्वसवित्तौ इष्टा नार्थे विकल्पनात्' इति यदस्यां स्वसवित्तौ प्रत्यक्षत्वमिष्टं तदपि न स्यादित्याह—

**कल्पनायाः स्वसंवित्ताविन्द्रियाधीनता कथम् ।**

अथेन्द्रियजनिर्विकल्पकसमनन्तरप्रत्ययाख्यमनोजन्यतया तत्र प्रत्यक्षम्, ततो गोत्वादिविषयेऽपि तस्याः प्रत्यक्षत्वं मनोजन्यतयैव भविष्यति; मन.स्वरूपं त्वदुक्तम्[4], अन्यद्वा—इत्यन्यदेतदित्याह—

**मनस्तत्रेन्द्रियं चेत् स्याद् गोत्वादावपि तत्समम् ॥ १३४ ॥**

बाह्ये मनसः प्रवृत्त्ययोगात् स्वसविद्रूपस्यैव मानसप्रत्यक्षत्वमिति शङ्कते—

**स्वसंवित्तौ तदिष्टं चेत्,**

---

१-१. विषयेष्वनुमानादिविकल्पेषु—३ पु० ।

२. निर्विकल्पकं जनित्वा सविकल्पकोत्पत्तौ—३ पु० ।

३. जातत्वं—३ पु० ।  ४. तदुक्तम्—मु० पा० ।

दूषयति—

**लोको न ह्येवमिच्छति।**

लोको हि गोत्वादिविषयेऽपि मनसः प्रत्यक्षहेतुत्वमिच्छति, संविदश्च बहिर्विषयत्व मन्यते, न स्वसवित्तिप्रत्यक्षत्वम्, अतो बहिरेव सविकल्पस्य प्रत्यक्षत्वमङ्गीकर्त्तव्यम्, तत्र यदि मनो न बहिर्वर्त्तते चक्षुर्व्यापारस्य च व्यवहितत्वम्। तथा च रूढिर्वा परिभाषा वाङ्गीक्रियताम्, न त्वप्रत्यक्षत्वम्, लोकविरोधादित्याह—

**तस्माद् रूढत्वमेष्टव्यं[1] पारिभाषिकताऽपि वा ॥ १३५ ॥**

अथवा—निर्विकल्पकसहाय मनो बहि प्रवर्त्स्यति, तथापि च मनोजन्यतास्त्येवेति तदधीनसुखादिबुद्धिवत् प्रत्यक्षता भविष्यतीत्याह—

**मनसस्त्विन्द्रियत्वेन सुखदुःखादिबुद्धिषु।**
**यथा प्रत्यक्षतैवं नस्तदधीना भविष्यति ॥ १३६ ॥**

नन्वन्यसहितमनोजन्यत्वमनुमादीनामप्यस्त्येवेति तेषामपि प्रत्यक्षत्वं स्यात्? इत्यत आह—

**तदधीनत्वसाम्येऽपि कल्पनापोढशब्दनात्।**
**प्रत्यक्षं किञ्चिदेवेष्टं यथा तत्र तथैव नः ॥ १३७ ॥**

यथा मनोजन्यत्वे समानेऽपि सविकल्पकस्य कल्पनापोढलक्षणाश्रयणेन किञ्चिदेव स्वसवेदनं प्रत्यक्षमिष्टम्, न गोत्वादिसवेदनम्, तथास्माकमपि मनोजन्यत्वे समानेऽप्यपरोक्षावभासमेव ज्ञान प्रत्यक्ष नान्यदिति ॥ १३७ ॥

पारिशेष्यादपि सविकल्पकस्य प्रत्यक्षत्व बाधाभावाच्च नाप्रामाण्यमित्याह—

**लिङ्गाद्यभावतश्चापि नानुमानादिधीरियम्।**
**बाधकप्रत्ययासत्त्वान्नाप्रामाण्यं च युज्यते ॥ १३८ ॥**

अथ निर्विकल्पकस्य प्राप्तप्रापकत्वात् स्मृतिरियमुच्यते? अत आह—

**न च पूर्वमदृष्टत्वात् स्मृतित्वमुपपद्यते।**

भवन्मते तावन्निर्विकल्पकेनागृहीतमेव सामान्यम्, अस्माकमपि क्षणान्तरसम्बन्धस्यागृहीतस्य ग्रहणान्न स्मृतित्वमिति।

पारिशेष्यात् प्रत्यक्षत्वमेवेत्युपसहरति—

**तस्मात् प्रत्यक्षमेवेदम्,**

भवतामपि योऽनुमानस्य प्रत्यक्षविरोधादिव्यवहार. स तथैव सविकल्पकस्य सामान्यग्राहिणः प्रत्यक्षत्वे सत्येवावकल्पते, नान्यथेत्याह—

**व्यवहारस्तथैव च ॥ १३९ ॥**

स्वलक्षणमात्रं हि सर्वसामान्यसहम्, अतो यत्तद्विषय प्रत्यक्षं तद् यत्किञ्चिदपि

---

१. रूढित्वम्—मु॰ पा॰।

सामान्यमनुमादिगम्यं न बाधते। यथा सन्तमसे गो· स्वलक्षणमेव गृह्णदपि प्रत्यक्षं गोत्वानवधारणात् नाश्वत्वानुमानस्य बाधकम्, एवमालोकेऽपि प्रत्यक्षं तन्मात्रमेवानधिकं गृह्णदश्वत्व, तस्मिन्नेव स्वलक्षणेऽनुमीयमान न बाधेतेति ॥ १३९ ॥

यदुक्तम्—नेदमनुमानं न स्मृतिरिति, तत्सत्यम्, नाप्रमाणमिति यदुक्त तन्न मृष्यामहे, इति चोदयति—

**जात्याद्यर्थान्तरं यस्मादतद्रूपेऽपि वस्तुनि ।**
**भवत्यध्यस्य धीस्तस्मान्मृगतृष्णादिभिः समा ॥ १४० ॥**

जातिगुणक्रियानामधेयानि व्यक्तेरर्थान्तरभूतानि, अनर्थान्तरत्वे व्यक्तिमात्रत्वापत्तेर्जात्यादीनामभावप्रसङ्गात् तानि व्यक्त्यात्मतया सविकल्पकेन गृह्यन्ते—गौरयं दण्ड्ययं शुक्लोऽय गच्छति, अपण्डितोऽयमिति। तेनार्थान्तरमर्थान्तरात्मतयाध्यवस्यदूषरमिव सलिलतया मिथ्यैव सविकल्पकमिति ॥ १४० ॥

परिहरति—

**नैतदश्वादिबुद्धीनामध्यारोपाद्यसम्भवात् ।**

कथमसम्भव· ? अत आह—

**स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो हि नः ॥ १४१ ॥**

नामधेयेनैव तावत् ताद्रूप्यप्रतीतिरस्तीति वक्ष्याम·, जात्यादित्रयस्यानर्थान्तरत्वमेकान्ततो जात्यादे स्यात्, सर्वदैव सर्वषाम् 'इय गौ·' इति गोत्वात्मिकैव व्यक्तिः प्रतीयते, न चेयं प्रतीतिरैकान्तिके भेदेऽवकल्पते। इयमेव च प्रतीतिर्जातौ प्रमाण नान्यत्, इयं च जात्यात्मिकामेव व्यक्ति गमयति। न चास्या· किञ्चद् बाधकमस्तीति पारमार्थिकमेव तादात्म्यमिति नाप्रामाण्यमिति ॥ १४१ ॥

**यदि ह्येकान्ततो भिन्नं विशेष्यात् स्याद् विशेषणम् ।**
**स्वानुरूपां सदा बुद्धिं विशेष्ये जनयेत् कथम् ॥ १४२ ॥**

ननु भिन्नमेव लाक्षादिक स्वानुरूपा बुद्धि मिथ्याभूता स्फटिके जनयति, तथा जात्यादिकमपि कि न स्यादित्यत उक्तम्—**सदेति** ॥ १४२ ॥

तद्विवृणोति—

**स्फटिकादौ तु लाक्षादिस्वरूपा या मतिर्भवेत् ।**
**अव्युत्पन्नस्य सा मिथ्या व्युत्पन्नानां हि भेदधीः ॥ १४३ ॥**

कदाचिदेव तद्रूपं स्फटिकमजातविवेकैर्गृह्यते न सर्वदा, व्युत्पन्नानां भेदावगमादिति ॥ १४३ ॥

गोत्वानुरूपां तु व्यक्तिं सर्वदावगच्छन्ति, न हि जात्यादिरूपत्वं व्यक्तेः व्यक्तिरूपत्वं वा जात्यादीनां कदाचिद् बाध्यते, लाक्षास्फटिकयोरिवेतरेतरात्मकत्वमित्याह—

**न तु[1] जात्यादिनिर्मुक्तं वस्तु दृष्टं कदाचन।**

ननु वस्तुविमोकेन व्यक्त्यन्तरेऽपि जात्यादीनि दृश्यन्ते, वस्त्वपि बदरादिफलं श्यामत्वनिर्मुक्तं पक्वावस्थायां रक्तगुण दृश्यते ? सत्यम्, अत एव जात्यादीनां द्रव्याद् भेदोऽभ्युपगम्यते। कथं तर्हि न विमोको दृष्टः ? इत्यत आह—

**तद्विमोकेन वा तानि लाक्षादिस्फटिकादिवत् ॥ १४४ ॥**

तादात्म्यप्रत्ययस्य बाधो न दृष्ट इत्यर्थः। न हि व्यक्त्यन्तरेऽपि गोत्वं पश्यन् पूर्वव्यक्तेर्गवात्मकत्वं मिथ्या मन्यते; सोऽपि गौः, अयमपि गौरिति प्रतिभासात्। तथा फलेऽपि रक्तप्रत्ययो न पूर्वसञ्जातं श्यामप्रत्ययं बाधते, पूर्वं श्याममेवेदानी रक्तमित्यवगमात्। लाक्षास्फटिकयोस्तु तादात्म्यं बाधत एवेति ॥ १४४॥

बाधाभावे तु तत्रापि नाप्रामाण्यमित्याह—

**तत्रापि[2] चेन्न दृश्येत भेदः कैश्चित् कदाचन।**
**रक्तादिबुद्धिसम्यक्त्वं विनिवार्येत केन वा ॥ १४५ ॥**

वैशेषिकास्तु जात्यादीना व्यक्तेश्चैकान्तमेवाङ्गीकृत्य समवायसम्बन्धं मन्यन्ते, यथोक्तम्—'अयुतसिद्धानामाधार्याधारभूतानामिह प्रत्ययहेतुर्यः सम्बन्धः स समवायः' इति। युतसिद्धि =पृथक्सिद्धि', न युतसिद्धिः अयुतसिद्धिः ॥ १४५ ॥

तान्निराकरोति—

**न चाप्ययुतसिद्धानां सम्बन्धित्वेन कल्पना।**

किमिति न कल्पना ? इत्यत आह—

**नानिष्पन्नस्य सम्बन्धः,**

न तावदनिष्पन्नस्य सामान्येन सम्बन्ध. सम्भवति; सम्बन्ध्याधारत्वात्, सम्बन्धस्य तदभावेऽनुपपत्तेरिति।

निष्पत्तौ वा पृथक्सिद्धेः अयुतसिद्धेरनुपपत्तिरित्याह—

**निष्पत्तौ युतसिद्धता ॥ १४६ ॥**

युतसिद्धत्वे वा को दोषः ? अत आह—

**तथा च सति[3] सम्बन्धे हेतुः कश्चिन्न विद्यते।**

न ह्यसम्बद्धायां व्यक्तौ निष्पन्नाया पश्चात् समवायाख्यसम्बन्धलाभे कश्चिद्धेतुरस्तीति।

यदा चैव धर्मधर्मिणोः सम्बन्धो न लब्धः, तदा धर्माणामपि तन्निबन्धनस्यैकार्थसमवायसम्बन्धस्याभावात् षण्णामपि द्रव्यादिविशेषपर्यन्तानामसम्बन्ध एवापन्न इत्याह—

**तस्माच्चापि[4] न सम्बन्धः पदार्थानां प्रतीयते ॥ १४७ ॥**

---

१. नहि—२ पु०।    २. अत्रापि—का०।
३. तथा सति च—२ पु०।    ४. षण्णामपि—मु० पा०।

श्लो० वा० : ९

किञ्च, अस्य समवायस्य धर्मधर्मिभ्यां वियोगादसम्बन्धान्न तद्वशेन धर्मधर्मिणोः संश्लेषः स्यादित्याह—

**समवायवियोगाच्च[1] विश्लेषः स्यात् परस्परम् ।**

यदि त्वस्त्येव समवायस्य समवायिभ्या धर्मधर्मिभावः सबन्धः, ततस्तस्यापि सम्बन्धस्य सम्बन्धान्तरकल्पनादनवस्थेत्याह—

**तत्क्लृप्तावव्यवस्था स्यात् तस्य तस्यान्यसङ्गतेः ॥ १४८ ॥**

शङ्कते—

**अथ तस्यात्मरूपत्वान्नान्यसम्बन्धकल्पना ।**

धर्मधर्मिरूपत्वात् ताभ्या समवायस्याभिन्नत्वान्न सम्बन्धान्तरकल्पनेति ।

दूषयति—

**अभेदात् समवायोऽस्तु स्वरूपं धर्मधर्मिणोः ॥ १४९ ॥**

एवं तर्ह्यभेदस्याङ्गीकृतत्वाद्धर्मधर्मिणोरेवाभेदमङ्गीकृत्य तयोरेव समवायसंज्ञाङ्गीक्रियताम् यद्यवश्यं तया प्रयोजनम्, न तु तद्व्यतिरिक्तसमवायाङ्गीकरण युक्तम्। यच्चापृथग्गतिमत्त्वादिकं समवायात्मकतया कथितम्, तत् शास्त्रदीपिकायामाकृतिग्रन्थे दूषितमिति ॥ १४९ ॥

कारणमाह—

**न हि स व्यतिरिक्तः सन् सम्बन्धं प्रतिपद्यते ।**

पूर्वोक्तमेवैतदनवस्थापत्तिरिति ॥ १५० ॥

अभेदपक्षे चाभिन्नेनाभेदाद् धर्मधर्मिणोरभेदापत्तिरित्याह—

**तस्मिंस्ताभ्यामभिन्ने तु न नानात्वं तयोर्भवेत् ॥ १५० ॥**

यदुक्तम्—'ततः पर पुनर्वस्तु' ( श्लो० वा० ४-१२० ) इति, तदाक्षिपति—

**ननु धर्मातिरेकेण धर्मिणोऽनुपलम्भनात् ।**
**तत्सङ्घमात्र एवायं गवादिः स्याद् वनादिवत् ॥ १५१ ॥**

न हि रूपादिधर्मेभ्योऽन्यो धर्मी विद्यते, यो जात्यादिभिर्विशिष्टो गृह्येत । रूपादिसङ्घातमात्रमेव गवादिक वृक्षसङ्घातमात्रमिव वनं नान्यत्, अनुपलम्भादुपलम्भकारणासम्भवाच्च; यथाहुः—

क्षीणानि चक्षुरादीनि रूपादिष्वेव पञ्चसु ।
न षष्ठमिन्द्रियं तस्य ग्राहकं विद्यते बहिः ॥ इति ॥

न चासत्यपि बहिरिन्द्रियेऽन्तःकरणेन गृह्यतामिति वाच्यम्; तस्य बहिरस्वातन्त्र्यादिति ॥ १५१ ॥

---

१. ०नियोगा च्च—मु० पा० ।

परिहरति—

**आविर्भावतिरोभावधर्मकेष्वनुयायि यत्।**
**तद्धर्मि यत्र वा ज्ञानं प्राग्धर्मग्रहणाद् भवेत्॥ १५२॥**

रक्तत्वहरितत्वादिधर्मेष्वाविर्भावतिरोभावधर्मकेषु यद् वदरफलमवस्थाद्वयानुयायि प्रत्यभिज्ञायते, यद्वा पिण्डघटकपालाद्यवस्थास्वनुगतमवस्थावत्, यद्वा सन्तमसे बलाकापङ्क्तौ प्रागेव शुक्लरूपग्रहणाद् गृह्यते, तद्धर्मि। न हि तदभावे प्रत्यभिज्ञा सम्भवति, धर्माणां भिन्नत्वाद् दर्शनस्पर्शनाभ्यां च ग्रहणमिति न ग्राहकाभाव इति॥ १५२॥

प्रकृतं सविकल्पकस्य प्रामाण्यमुपसंहरति—

**अतो जात्यादिरूपेण धर्मि यद् गृह्यते नरैः।**
**पाररूप्यं न तस्यास्तीत्यप्रामाण्यं न युज्यते॥ १५३॥**

भवतु वात्यन्तभेदो धर्मधर्मिणोः, तथापि नाप्रामाण्यम्? इत्याह द्वयेन—

**यस्यापि व्यतिरेकः स्याद्धर्मेभ्यो धर्मिणः स्फुटः।**
**नित्यं तस्यापि ताद्रूप्यान्न मिथ्यात्वं प्रसज्यते॥ १५४॥**
**यो ह्यसद्रूपसंवेद्यः[1] संवेद्येतान्यथा पुनः[1]।**
**स मिथ्या न तु तेनैव यो नित्यमवगम्यते॥ १५५॥**

नित्य ताद्रूप्याद् बाधकाभावात् सवेद्येतान्यथा पुनरिति बाध्येतेत्यर्थः। कथ पुनर्भिन्नयोरभेदप्रतीतिरमिथ्या स्यात्? सत्यम्, न त्वय गौरिति प्रतीतिरभेदप्रतीतिः। न हि अय गौरिति च गौरेवायमिति च बुद्धिद्वयं पर्यायरूपं गम्यते; अतः समवाय एवायमेव प्रतीयते, येनेत्थम्भावेन धर्मिणो धर्मः प्रतीयत इति भेदवादिनो मतिरिति॥ १५४-१५५॥

ननु दर्शनस्पर्शनाभ्या गृह्यमाण द्रव्य ग्राहकभेदादाद् रूपादिवद्भिद्येत, यदि सत्यपि ग्राहकभेदे न भिद्यते, रूपादयोऽपि न तद्वदेव मिथो भिद्येरन्। पञ्चभिरक्षैर्ग्राह्यं सत्तासामान्यम् एकं दृष्टमिति चेत्? न; तस्यानैन्द्रियकत्वात्, सर्वसामान्याना सविकल्पकविलसितत्वात्। इन्द्रियसङ्करे वा ज्ञानैकत्ववैयर्थ्यं स्यात्। एकमेव त्वगिन्द्रियं भिन्नेष्वपि विषयेषु पञ्चसु शक्तिमदङ्गीक्रियताम्। तदुक्तम्—

नैकं रूपाद्यभेदो वा दृष्ट चेन्नेन्द्रियेण तत्।
अक्षानेकत्ववैयर्थ्यं स्वार्थे भिन्नेऽपि शक्तिमत्॥ इति।

अत आह—

**न [2]चानेकेन्द्रियग्राह्यं भिन्नतां प्रतिपद्यते।**

---

१-१. मु० पु० नास्त्ययं पाठः।

२. न वा०—का०।

अनैकान्तिको हेतुरित्याह—

**मा भूद् भिन्नशरीरस्थग्राह्यत्वाद्[1] भिन्नरूपता ॥ १५६ ॥**

नानैकान्तिको हेतुरिति शङ्कते—

**जात्यभेदादभेदश्चेत्,**

चक्षुष्ट्वजातेरेकत्वान्न रूपस्यानेकेन्द्रियग्राह्यतेति ।

परिहरति—

**इन्द्रियत्वेन तत्समम् ।**

यथा[2] रूपगोचराणां चक्षुष्ट्वेन एकत्व तथा दर्शनस्पर्शनयोरपि[2] इन्द्रियत्वेनैकत्वाद् द्रव्यस्यापि नानेकेन्द्रियग्राह्यत्वम्[3] इति असिद्धो हेतुः स्यात् । तेनैकबुद्धिग्राह्यत्वात् एकमेव द्रव्यं ग्राहकभेदस्वतन्त्रमिति ।

अत एव पञ्चेन्द्रियगोचरापि[3] सत्ता तुल्यबुद्धिगम्यत्वादभिन्ना[4] भवति, अन्यथा सापि भिद्येतेत्याह—

**तुल्यबुद्धेरतो भिन्ना न सत्तेन्द्रियभेदतः ॥ १५७ ॥**

यत्तु 'नेन्द्रियेण तत्' इत्युक्तं तदयुक्तम्, ऐन्द्रियक हि सामान्य स्थापितमिति ।

'रूपाद्यभेदो वा' ति यदुक्तम्, तत्राह—

**बुद्धिभेदाच्च नैकत्वं रूपादीनां प्रसज्यते ।**

'नैकं रूपाद्यभेदो वा' इत्यत्रोभयत्रापि सिद्धसाध्यता शक्या वक्तुमित्याह—

**एकानेकत्वमिष्टं वा सत्तारूपादिरूपतः ॥ १५८ ॥**

रूपादीनां सद्रूपतयैकत्वम्, द्रव्यस्यापि रूपाद्यात्मनानेकत्वमिष्टमेवेति ॥१५८॥

अक्षानेकत्ववैयर्थ्यं परिहरति—

**क्वचिच्च सङ्करान्नाक्षमेकमित्यवसीयते ।**

कारणमाह—

**दार्ढ्यदौर्बल्यभेदेन व्यवस्थापि[5] यतः क्वचित् ॥ १५९ ॥**

प्रबलचक्षुर्दुर्बलश्रोत्रो रूप गृह्णाति न शब्दम्, विपरीतस्तु विपरीतम् । सेयं व्यवस्था अक्षैकत्वेऽनुपपन्नेति सत्यपि द्रव्यविषये सङ्करे नाक्षानेकत्ववैयर्थ्यमिति ॥ १५९ ॥

नन्वक्षाणां सङ्करे द्रव्य इव रूपादिष्वपि सङ्करः स्यात् ? तत्राह द्वयेन—

**यथा हि मनसः सार्धं रूपादौ चक्षुरादिना ।**
**प्रवृत्तिः सुखदुःखादौ केवलस्यैव दृश्यते[6] ॥ १६० ॥**

---

१. ०शरीरस्य ग्राह्य०—मु० पा० ।
२-२. एतन्मध्यगो ग्रन्थो २ पु० नास्ति ।
३-३. एतन्मध्यस्थो ग्रन्थः ३ पु० न दृश्यते ।
४. गम्यत्वाद्भिन्ना—मु० पा० ।
५. व्यस्थापि—मु० पा० ।
६. गम्यते—का० ।

**न क्वचित् सङ्कराभावात् सर्वत्रैव निवर्तते।**
**क्वचिच्च[1] सङ्करं दृष्ट्वा सङ्करोऽन्यत्र कल्प्यते॥ १६१॥**

न हि यदेकत्र दृष्टं तदन्यत्रादृष्टमपि भवति। यथा तावन्मनसो रूपादिग्रहणे चक्षुरादिसहायस्य प्रवृत्तिः स्मृतिसुखादौ केवलस्य, तथा चक्षुरादेरपि रूपादिष्वसङ्करो द्रव्ये च सङ्करो भविष्यति, न सर्वत्रैकरूप्यमिति॥ १६०-१६१॥

कथं पुनर्मनस एव रूपादिग्रहणे चक्षुरादिसहायस्य प्रवृत्तिः स्मृतिसुखादौ केवलस्येति व्यवस्था गम्यते? अत आह—

**श्रोत्रादेरुपघातेऽपि शब्दादिस्मृतिदर्शनात्।**
**वर्तमानस्य चाज्ञानाद्[2] व्यवस्था सम्प्रतीयते॥ १६२॥**

श्रोत्रादिरहितस्यापि बधिरादेः शब्दादिस्मरणं सुखाद्युपलब्धिश्च दृश्यत इति तत्र श्रोत्राद्यनपेक्षत्वम्, वर्त्तमानस्य च शब्दादेरग्रहणात् तत्र श्रोत्रादिसापेक्षत्वं मनसोऽवगम्यत इति॥ १६२॥

एवं दार्ढ्यदौर्बल्यवशाद् रूपाद्युपलब्धिव्यवस्था दर्शिता। यथा तु तया अक्षानेकत्व सिध्यति तथा दर्शयति—

**एकं यदि भवेदक्षं सर्वं[3] गृह्णीत वा न वा।**

यत्तूक्तम्—'स्वार्थे भिन्नेऽपि शक्तिमत्' इति, तदाशङ्कते—

**कल्प्यते शक्तिभेदश्चेत्,**

परिहरति—

**शक्तिरेवेन्द्रियं भवेत्॥ १६३॥**

शक्तिपञ्चक तावत्कल्पनीयमिन्द्रियस्थानीयम्, तत्र तद्वा कल्पनीयमिन्द्रियपञ्चकं वेति न विशेषः। ननु धर्मिकल्पनाद् धर्मकल्पना लघीयसी? सत्यम्, इह तु क्लृप्तमेव पृथिव्यादिपञ्चकम्, तत्र पञ्चाना शक्तिपञ्चककल्पने दृष्टानुगुण्यं प्रागेव दर्शितम्, एकस्य तु वायवीयस्य त्वगिन्द्रियस्य शक्तिपञ्चककल्पन दृष्टाननुगुणत्वादयुक्तमिति।

यदुक्तम्—'कचिद्वा सङ्कर दृष्ट्वा रूपादावपि सङ्करो न युक्तो व्यवस्थादर्शनात्' इति, तस्य व्यतिरेकमाह—

**शृणुयाद् बधिरः शब्दं सङ्करे चक्षुरादिना।**

सङ्करे व्यवस्था न स्यादिति।

यत्तु वर्त्तमानस्याज्ञानान्मनसो बहिरस्वातन्त्र्यमुक्तम्, तस्य व्यतिरेकमाह—

**मनसो वा स्वतन्त्रत्वे वर्तमानार्थबुद्धिषु॥ १६४॥**

'शृणुयाद्बधिरः शब्दम्' इत्यनुषङ्गः, तस्यापि मनोऽस्तीति॥ १६४॥

यत्तु श्रोत्रादेरुपघातेऽपि शब्दादिस्मृतिदर्शनात् तत्र श्रोत्राद्यनपेक्षं मनः स्वतन्त्रमित्युक्तम्, तस्य व्यतिरेकमाह—

---

१. क्वचिद्वा—२ पु०। २. वा ज्ञानात्—का०। ३. सर्वम्०—२ पु०।

**न स्मरेद् बधिरः शब्दं श्रोत्रं चेत् स्मृतिकारणम् ।**

अथासत्यपि कारणे स्मृतिः स्याद्, वर्त्तमानोपलब्धिरपि स्याद् ? इत्याह—

**स्मृतिवद् वा भवेदस्य वर्तमानार्थधीरपि ॥ १६५ ॥**

ननु वर्त्तमानः शब्दादिः श्रोत्रादिभिरेव गृह्यताम्, किं तत्र मनसा ? अत आह पादत्रयेण—

**स्मृतिश्च न भवेत् पश्चाद् गृह्णीयात् तन्न चेन्मनः ।**
**श्रोत्रग्रहणवेलायाम्,**

यत् खलु मनसा स्मर्यते तद्ग्रहणेऽपि मनोव्यापारो दृष्टः, यथा सुखादेः । शब्दादिकमपि मनसैव स्मर्यते, सर्वस्मरणानां मानसत्वात् । अत' शब्दादिग्रहणेऽपि मनोव्यापारोऽनुमीयते । तत्र च स्वातन्त्र्ये बधिरादेरपि शब्दादिग्रहणप्रसङ्गात् श्रोत्राद्यपेक्षैव मन.प्रवृत्तिरवधार्यते । किञ्च, विषयान्तरव्याक्षिप्तमनस्कस्य चक्षुरादिसयुक्तेष्वपि रूपादिषु ज्ञानानुदयादस्ति तत्रापि मनोव्यापार इति निश्चीयते । तथा शब्दादिषु गृह्यमाणेषु तदतिरिक्तेष्वर्थान्तरेषु सर्वेषु स्मरण न जायते, तदवगम्यते—नून तद्ग्रहणे मनोव्यापृतमिति । इतरथा त्वव्यापृत मनोऽर्थान्तरेष्वपि सर्वेषु स्मृतिमादधीतेति न सर्वा स्मृतिः सिध्येत्[1], इत्याह—

**न चासर्वा स्मृतिर्भवेत्[2] ॥ १६६ ॥**

'श्रोत्रग्रहणवेलायाम्[3]' इत्यनुषङ्ग इति ॥ १६६ ॥

ननु बोधस्वभावः पुरुषोऽन्यानपेक्ष एव विषया[4]नान्तरान् बाह्यांश्च जानाति, किमस्यान्तःकरणेन बहिःकरणेन वा ? तत्राह—

**बोधात्मकतया पुंसः सर्वत्र ग्रहणं भवेत् ।**
**युगपद्विषयेऽप्यस्य करणापेक्षिता न चेत् ॥ १६७ ॥**

यदि बोधस्वभावतया पुरुषो विषयेषु बोद्धव्येषु करणं नापेक्षते, ततः सर्वदा सर्वं जानीयात्, ततोऽस्त्यन्यापेक्षा । ततश्च बाह्येषु रूपादिषु चक्षुरादीनां करणत्वमन्वयव्यतिरेकाभ्यामनुमीयते । सुखादिवेदनस्य तु किञ्चित्करणमनुमीयते, तत्र लिङ्गादीनामसम्भवात् तज्जन्यत्वे चापरोक्षत्वानुपपत्तेरिन्द्रियमेवेति निश्चीयते, तत्तु मन उच्यते । ननु शरीरमेव मनोऽस्तु ? न, इन्द्रियत्वेन नेत्रादिवत् तद्व्यतिरेकानुमानादिति ॥ १६७ ॥

प्रकृतमुपसंहरति—

**तस्माज्ज्ञानानुसारेण व्यवस्थासङ्करौ क्वचित् ।**
**ग्राह्यग्राहकशक्तिभ्यः कार्यद्वारेण कल्पितौ ॥ १६८ ॥**

---

१. साध्येद्—२ पु० ।
२. च सर्वा—मु० पा० ।
३. वेलाम्—२ पु० ।
४. एकविषयान्—२ पु० ।

ज्ञानाख्यकार्यद्वारेण ग्राह्यग्राहकशक्तय', ताभ्य. क्वचिद् रूपादावसङ्करः, क्वचिद् द्रव्यादौ च सङ्कर इति ॥ १६८ ॥

किमिति तर्हि रूपादीनामिव रूपविशेषाणामपि नीलपीतादीनामिन्द्रियभेदो न कल्प्यते ? अत आह—

**चक्षूरूपादिभेदस्तु पञ्चधैव व्यवस्थितः ।**
**तेन नीलादिभेदेऽपि नेन्द्रियानन्त्यकल्पना ॥ १६९ ॥**

न हि रूपरसादिवत् रूपविशेषोपलब्धिव्यवस्थास्ति यत इन्द्रियभेदः कल्प्येत, अतः पञ्चधैव चक्षुरादिभेद. । तथा रूपादीनामपि चाक्षुषत्वं श्रौत्रत्वम् इत्येवं पञ्चधैव भेदो व्यवस्थित इति न नीलादिवशेनानन्तेन्द्रियकल्पनेति ॥ १६९ ॥

क्व पुनरेषामिन्द्रियाणा सङ्कर., क वा व्यवस्थितत्वम्, तत्सक्षिप्य दर्शयति—

**तस्मात् पञ्चभिरप्यक्षैर्बोधः सत्तागुणत्वयोः ।**
**द्रव्यमूर्तौ पुनर्द्वाभ्यां रूपादावेकशः स्थितिः ॥ १७० ॥**

मूर्त्ति.=परिमाणम्, तच्च द्रव्य च, द्वाभ्या दर्शनस्पर्शनाभ्यामिति ॥ १७० ॥

शब्दविकल्पमिदानीमनुसन्धत्ते, तत्र चोदयति—

**ननु जात्यादिरूपेऽपि शब्दाभेदोपचारतः ।**
**प्रवर्तमाना मिथ्या स्याद् बुद्धी रूपेषु बुद्धिवत्[1] ॥ १७१ ॥**

जात्यादिरूपत्वाद्वस्तुनस्तद्रूपप्रतीतेरस्तु नामामिथ्यात्वम्, शब्दस्य त्वर्थान्तरत्वात् तद्रूपा बुद्धिर्मिथ्यैव । तत्र ये जातिगुणक्रियावाचिनो गवादिशब्दाः ते प्रथम स्वाभिधेय जात्यादिक स्वात्मतया विकल्प्य पश्चात् तादृशेन जात्यादिना द्रव्यं विकल्पयन्ति, तत्र यद्यपि द्रव्यस्य जात्याद्यात्मना न मिथ्यात्वम्, तथापि जात्यादेः शब्दात्मता मिथ्यैव । ये तु डित्थादिशब्दा द्रव्यवाचिनः, तेऽपि द्रव्यमेव साक्षाच्छब्दाभेदेन विकल्पयन्तीति मिथ्यात्वमिति ॥ १७१ ॥

परिहरति—

**न शब्दाभेदरूपेण बुद्धिरर्थेषु जायते ।**
**प्राक् शब्दाद् यादृशी बुद्धिः शब्दादपि हि तादृशी ॥ १७२ ॥**

बुद्धिरेवात्र शब्दाकारा नास्तीति भाव. ॥ १७२ ॥

पुनश्चोदयति द्वयेन—

**ननु गोत्वादिरूपेण गवाकारादिबुद्धयः ।**
**न प्राक् शब्दार्थसम्बन्धज्ञानात् सन्ति कदाचन ॥ १७३ ॥**
**जात्यादेस्तत्स्वरूपं चेदशब्दज्ञोऽपि लक्षयेत् ।**
**अन्वयव्यतिरेकाभ्यां शब्दरूपत्वनिश्चयः ॥ १७४ ॥**

गवाकारादिषु गोत्वजात्यादिषु गोत्वशुक्लत्वादिरूपेण बुद्धयो न शब्दार्थ-

---

१. व्यतिरेक्ययं दृष्टान्तो बोद्धव्यः ।

सम्बन्धज्ञानात् प्राग्जायन्ते। तद्यदि जात्यादेरेव रूपं तत् स्याद्, अशब्दज्ञोऽपि तद्रूपं लक्षयेत्, न तु तदस्ति, तस्माच्छब्दरूपमेव तदिति ॥ १७३-१७४ ॥

परिहरति—

**यथा रूपादयो भिन्नाः प्राक् शब्दात् स्वात्मनैव तु।**
**गम्यन्ते तद्वदेवैतत् संज्ञित्वं केवलं परम् ॥ १७५ ॥**

रूपादिस्वलक्षणवदेव जात्यादिकमपि प्रागेव शब्दार्थसम्बन्धज्ञानात् स्वेनैव रूपेण गम्यते न शब्दरूपेण, शब्दज्ञस्तु संज्ञित्वं केवलमधिकं स्मृत्वानुसन्धत्ते, नान्यत् किञ्चिदिति ॥ १७५ ॥

अथाशब्दज्ञस्य नैव गोत्वादिप्रतीतिरस्ति, शब्दानुवेधस्य तदानीमभावात्, अशब्दानुविद्धस्य च प्रत्ययस्याभावादित्युच्यते, यथाह—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञान सर्वं शब्देन गृह्यते ॥ इति। (वा० प० १-१२३)

अत आह—

**न चाविकल्पितः शब्दादिति वाच्यो न गृह्यते।**
**तेनागृहीतशब्दोऽपि गोत्वादीन् प्रतिपद्यते ॥ १७६ ॥**

उक्तमशब्दानुविद्धमपि ज्ञानमस्तीति तेनाशब्दज्ञोऽपि प्रत्येत्येव गोत्वादिकमिति ॥ १७६ ॥

एव च शब्दसस्पृष्टबोधेऽपि संज्ञित्वमेवाधिकं न तादूप्यप्रतीतिरित्याह—

**श्रुतिसंस्पर्शबोधेऽपि नैवाभेदोपचारता।**

कस्मात्? इत्याह—

**विवेकादर्थशब्दानां चक्षुःश्रोत्रधिया कृतात् ॥ १७७ ॥**

यदि न शब्द. स्वात्मानमर्थेऽध्यारोपयति, कि तर्हि करोति? अत आह—

**अनन्तधर्मके धर्मिण्येकधर्मावधारणे।**
**शब्दोऽभ्युपायमात्रं स्यान्नात्माध्यारोपकारणम् ॥ १७८ ॥**

यद्युपायः शब्द., व्यक्तमसौ रूपमर्थेऽध्यारोपयति दर्पण इव मुखे, अत आह—

**न चोपेयेऽभ्युपायस्य रूपाध्यासः प्रसज्यते।**
**न हि दीपेन्द्रियादीनां रूपाध्यारोप[1] इष्यते ॥ १७९ ॥**

किञ्च, यदि व्यक्तिरिव जातिरूपेण, जातिरपि शब्दरूपेण गृह्यते न च बाध्यते तथा सत्यभेद एव स्यात्, न त्वध्यास इत्याह—

**नित्यं यदि च गोत्वादि शब्दरूपेण गृह्यते।**
**रूपान्तरं न दृष्टं चेद् भेदाध्यासौ कुतो न्विमौ ॥ १८० ॥**

---

१. रूपेऽध्यारोपः—२ पु०।

सति चाभेदे तदनुविद्धस्य बोधस्य न मिथ्यात्वमित्याह—

**यद्यभेदो न मिथ्यात्वम्,**

भेदे वा नाध्यारोपः; भ्रान्त्या तु भवतामध्यारोपकल्पनेत्याह—

**भेदश्चेत् स्यात् स्वरूपतः।**
**नाध्यारोपप्रसङ्गः स्याद् भ्रान्त्या त्वध्यासकल्पना ॥ १८१ ॥**

भ्रान्तिकारणमाह—

**शब्देनैव च निर्देशो गृहीतेऽर्थेऽवकल्पते।**

सर्वमेव वस्तु शब्देन परस्मै निर्दिश्यत इति। ततः किम्? इत्याह—

**गौरित्येव च निर्देशो वाच्यतद्बुद्धिवादिनाम् ॥ १८२ ॥**

वाच्यं च तच्च वचनम्, बुद्धिश्च=वाच्यतद्बुद्धयः, तद्वादिनां पुंसां गौरित्येव निर्देशः, गौरित्यर्थ, गौरिति शब्दः, गौरिति ज्ञानमिति ॥ १८२ ॥

तथापि किम्? इत्यत आह—

**निर्देशतुल्यतायां[1] च श्रोत्रा वक्तृस्वरूपता[2]।**
**शब्दज्ञानप्रमेयेषु विज्ञानस्यावसीयते ॥ १८३ ॥**

वक्तुस्त्रिष्वपि निर्देश तुल्य दृष्ट्वा श्रोत्रादिष्वपि ज्ञानस्य वक्तुः सरूपतां कल्पयति, तत्कृतनिर्देशसरूपताम्=एकसरूपतामिति यावत् ॥ १८३ ॥

ननु निर्देशतुल्यतयाध्यासं मन्यमानः किं शब्दज्ञानयोरेवार्थेऽध्यारोप मन्यते, न त्वर्थस्य तयो., अत आह—

**भ्रान्तिहेतुसमानत्वेऽप्युपायत्वान्मतिश्रुती ।**
**मन्यतेऽर्थे समध्यस्ते नार्थाध्यासं तयोः पुनः ॥ १८४ ॥**

ज्ञानारोपश्च कैश्चिज्जात्यादीनामाश्रितः, स शब्दाध्यासनिरासेनैव तुल्यन्यायतया निरस्तो भवतीति इह नोपन्यस्त इति ॥ १८४ ॥

तदेव भ्रान्तिरेवारोप., परमार्थतस्तु त्रिष्वपि विलक्षणैव संविदित्याह—

**गोत्वे सास्नादिमद्रूपाङ्गादि[3]रूपाभिधायके।**
**निराकारोभयज्ञाने संवित्तिः परमार्थतः ॥ १८५ ॥**

केचित्तु जात्यादीनपह्नुत्य स्वरूपमेव शब्दानामभिधेयं मत्वा तस्यैव व्यक्तावारोपं मन्यन्ते, शब्दैक्यादेव च खण्डमुण्डादिष्वेकरूपतावगमो न जातिनिबन्धन इति मन्यन्ते, तान् प्रत्याह—

**यदि चाभेदरूपेण शब्देनार्थः प्रतीयते।**
**एकरूपत्वमक्षादौ देवनादेः प्रसज्यते ॥ १८६ ॥**

---

१. तुल्यतायाः—२ पु०। २. श्रोत्रवक्तृ०—का०।
३. रूपाङ्गादीति ३ पु०।

शब्देन सहाभेदेनेत्यर्थः ॥ १८६ ॥

नन्वनक्षव्यावृत्तिरूपेणास्त्येव[1] त्रयाणामेकत्वमिति शङ्कते—

**स्यादनक्षनिवृत्त्या चेत्,**

दूषयति—

**न प्राक् शब्दात् प्रतीयते[2] ।**

अध्यासवादिनोऽभिप्राय शङ्कते—

**गवादिष्वपि तुल्यं चेत्,**

परिहरति—

**नैकरूपस्य दर्शनात् ॥ १८७ ॥**

अक्षादिषु नैवमस्तीत्याह—

**त्रये बिभीतकादीनां नैकधर्मान्वयोऽस्ति हि ।**

कस्य तर्हि तत्रान्वय. ? अत आह--

**शब्दः साधारणस्तेषां जातिशब्दाद् विलक्षणः ॥ १८८ ॥**

शब्द एवात्र साधारण , न तु गवादिवदर्थैक्यमिति ॥ १८८ ॥

कस्मात् ? इत्याह—

**परस्परविभिन्नं तु ज्ञायतेऽत्राकृतित्रयम् ।**

तच्च वैलक्षण्यमध्यासपक्षे न युज्यते, शब्दरूपस्याविलक्षणत्वादित्याह—-

**तदध्यासे न युज्येत तद्रूपस्याविभागतः ॥ १८९ ॥**

शङ्कते—

**भिन्नाः स्युरक्षशब्दाश्चेत्,**

दूषयति—

**नार्थे संशयदर्शनात् ।**

ततः किम् ? इत्याह—

**न सामान्यादृते स स्याद्,**

साधारणधर्मदर्शननिबन्धनो हि सशयो न शब्दभेदेऽवकल्पत इति ।

प्रत्यभिज्ञानाच्च न शब्दभेद इत्याह—

**रूपाभेदश्च गम्यते ॥ १९० ॥**

दोषान्तरमप्यध्यासे दर्शयति—

**भवत्यादौ च भिन्नेऽपि नामाख्यातत्वसंज्ञया ।**
**रूपैकत्वेन चाध्यासे तुल्यार्थत्वं प्रसज्यते ॥ १९१ ॥**

---

१. अलक्षव्यावृत्ति०—२ पु० ।

२. एतत्पूर्वमर्द्धमेतदर्धं च त्रुटितं का० पु० ।

इदमपरमध्यासेऽनुपपन्नं स्यादित्याह—

**शब्दनिष्पत्त्यभेदाच्च तिङन्तार्थस्य साध्यता ।**

**कथम्,**

शब्दस्य हि निष्पन्नरूपता आख्यातेष्वपि न भिद्यते, तस्तस्मिन् सिद्धरूपेऽध्यस्यमाने तिङन्तार्थस्य पूर्वापरीभूतता न स्यादिति ।

केचित् शब्दपरिणाम रूपमाहुः, अपरे तु शब्दविवर्त्तनम्, तान् प्रत्याह—

**कथं च मूर्तार्थो वाचके मूर्तिवर्जिते ॥ १९२ ॥**

मूर्त्तानामेव हि क्षीरादीना चन्द्रादीनां च मूर्त्तरूपो दध्यात्मकः परिणामः प्रतिबिम्बरूपो वा विवर्त्तो दृश्यते, शब्दस्य त्वमूर्त्तस्य मूर्त्तोऽर्थः, कथं परिणामो विवर्त्तो वा स्यादिति ? जातिगुणाद्यपह्नवेन च शब्दरूप एवार्थेऽध्यस्यमाने— अयं जातिशब्द., अयं गुणशब्द इत्यपि व्यवस्था न स्यात् ? इत्याह—

**गवाश्वशुक्लशब्दादेर्वाच्यरूपानपेक्षणे ।**
**वाचकत्वव्यवस्थानं कथं जातिगुणादिषु ॥ १९३ ॥**

जात्याद्यनपेक्षया शब्दस्वरूपेऽध्यस्यमाने विशेषणविशेष्यतापि न व्यवतिष्ठते इत्याह—

**वृक्षप्लक्षादिशब्दानां तुल्ये भेदे घटादिभिः ।**
**विशेषणविशेष्यत्वं कथमर्थानपेक्षया ॥ १९४ ॥**

सामानाधिकरण्यं च नीलोत्पलादिषु वाचकबुद्ध्योरिवार्थबुद्ध्योरपि न स्यात्, वाचकस्यैव वाच्यत्वात्, तयोश्च भेदादेकविषयत्वाभावाद् एकविषयत्वाधीनत्वाच्च सामानाधिकरण्यस्येत्याह—

**सामानाधिकरण्यं च न स्याद् वाचकबुद्धिवत् ।**

ननु जात्यादिवादिनामिवैकस्वलक्षणविषयबुद्धिजनकतया सामानाधिकरण्यं स्यादत आह—

**एकत्र चोपसंहारो न बुद्ध्योर्निर्विकल्पके ॥ १९५ ॥**

स्वलक्षणे प्रवर्त्तमानयोर्नीलोत्पलशब्दयोर्न किञ्चिद्व्यवस्थापकमस्ति—अस्मिन् स्वलक्षणे वृत्ति', नास्मिन्निति, जातिगुणादेरभावादिति ॥ १९५ ॥

यदि च वस्तुमात्रे प्रयोगस्ततः सर्वेषा गवादिशब्दानां वस्तुविषयत्वात् सामानाधिकरण्य स्यादित्याह—

**वस्तुमात्रे स चेदेवं सर्वेषामेकवाच्यता ।**
**भवेद् गवादिशब्दानां सर्वैर्वस्तु हि गम्यते ॥ १९६ ॥**

**एकवाच्यतेति** । सामानाधिकरण्यमित्यर्थः ॥ १९६ ॥

यदि यत्रासाधारणे नीलोत्पलादिशब्दयोः प्रयोगो दृष्टः, तत्र तयोः प्रयोगः; तथा सत्यस्मिन्नदृष्टप्रयोगे प्रथमप्रयोगो न स्यादित्याह—

**न चासाधारणे भेदे नीलोत्पलमितीष्यते ।**
**न हि शब्दप्रवृत्तिः स्यादन्यत्रान्यत्र चेष्यते ॥ १९७ ॥**

न च नीलोत्पल नाम जातिर्भवतेष्यते, यन्निबन्धन' प्रयोग इत्याह—

**न च नीलोत्पलं नाम वस्त्वेकं किञ्चिदिष्यते ।**

न पर नेष्यते, निष्प्रमाणक चेत्याह—

**शब्दार्थयोर्यतो भेदो गम्यतेऽवयवानुगः ॥ १९८ ॥**

शब्दयोरर्थयोश्च जातिगुणयोर्भेदावगमादिति ॥ १९८ ॥

किञ्च, नीलोत्पलवदेव कर-हस्तशब्दयोरपि भिन्नयोरेवैकत्राध्यासादपौन रुक्त्येन सामानाधिकरण्य स्यादित्याह—

**शब्दद्वयस्य चाध्यासः पर्यायेष्वपि दृश्यते ।**
**एकाधिकरणास्तेन स्युस्ते नीलोत्पलादिवत् ॥ १९९ ॥**

किञ्च, सम्बन्धग्रहणापेक्ष. शब्द:, तत्र सम्बन्धग्रहणकाले कीदृगर्थ. प्रतीयते ? इति निरूपणमशक्यमित्याह—

**न चानवगते पूर्वं पदमर्थे प्रयुज्यते ।**
**तत्र सम्बन्धवेलायां कीदृशोऽर्थः[1] प्रतीयते ॥ २०० ॥**

कथ न शक्यम् ? इत्याह—

**तदानीं नार्थरूपे हि शब्दरूपस्य सम्भवः ।**

गृहीते सम्बन्धे शब्दात्मकतार्थस्य गम्यते, न प्रागिति ।

यत्त्वसाधारण तदा प्रतीत तेन न सम्बन्धानुभव., तस्यानन्त्यादित्याह—

**न चासाधारणांशेन सम्बन्धानुगमः क्वचित् ॥ २०१ ॥**

तत्र यद्यगृहीतसम्बन्ध एवात्मान शब्दोऽर्थेऽध्यस्येत्, प्रथमश्रवणेऽप्यध्यस्येत् ? इत्याह—

**तत्र पूर्वानपेक्षत्वे यद्यात्माध्यासशक्तता ।**
**शब्दस्य प्रथमेऽपि स्याच्छ्रवणेऽध्यस्तरूपता ॥ २०२ ॥**

ननु तवापि नित्यत्वात्सम्बन्धस्य तुल्यमेतत् ? अत आह—

**मम वाच्यानभिज्ञत्वान्न भवेत् स्मरणं ततः ।**

गृहीतसम्बन्धो हि प्रत्यायकोऽयम् । अतो योऽस्येदं वाच्यमिति न जानाति, न तस्य शब्दादर्थस्य स्मरण सम्भवतीति । भवतस्तु भवेदेव स्मरणम्, सम्बन्ध-ग्रहणानपेक्षेषु वाचकेषु गृहीतेष्वेवार्थज्ञानाभ्युपगमादित्याह—

**भवतस्त्वर्थरूपस्य वाचकेष्वपि दर्शनात् ॥ २०३ ॥**

न त्वेतदस्तीत्याह—

---

१. कीदृगर्थः—२ पु० ।

**यथा त्वज्ञातशब्दानां वाच्ये तद्धीर्न जायते ।**
**तथैवाज्ञातवाच्यानामुपलब्धेऽपि वाचके ॥ २०४ ॥**

उपसहरति—

**तस्माज्ज्ञातेव वाच्यानां वाचकाधीनता भवेत् ।**
**स्मारकत्वाच्च तेष्वेव पारतन्त्र्यं प्रतीयते ॥ २०५ ॥**

न शब्दरूपेणार्थोऽवगम्यते, यथावस्थितमेव त्वर्थरूप शब्दः स्मारयति इति ॥ २०५ ॥

एवं च सविकल्पकस्य न मिथ्यात्वमित्याह—

**तेन सम्बन्धवेलायामर्थात्मा योऽवसीयते ।**
**शब्दादपि स एवेति नार्थरूपं प्रणश्यति ॥ २०६ ॥**

न प्रणश्यति, नान्यरूपं गम्यत इत्यर्थ ॥ २०६ ॥

इतश्च न शब्दाध्यास इत्याह—

**प्रवृत्तौ वा निवृत्तौ वा यां[1] शब्दः कुरुते मतिम्[1] ।**
**तादात्म्यं तस्य[2] शब्दस्य न कथञ्चित् प्रतीयते ॥ २०७ ॥**

दोषान्तरमाह—

**करहस्तादिशब्देभ्यः शब्दरूपस्य भेदतः ।**
**भिन्नोऽर्थः सम्प्रतीयेत तदध्यारोपकल्पने ॥ २०८ ॥**

किञ्च, अध्यास सादृश्यादनुरागाद्वा भवति, शुक्ताविव रजतस्य, मणाविव लाक्षाया., न चेह सादृश्यमस्ति, दूरस्थत्वाच्च नानुरागः इत्याह सार्द्धेन—

**आत्माध्यासस्तु सादृश्यादुपरागाच्च दृश्यते ।**
**न तावदर्थसादृश्यं शब्दस्येह प्रतीयते ॥ २०९ ॥**
**न चानुरागः शब्देन भिन्नदेशस्य युज्यते ।**

अथ दूरस्थोऽपि शब्दोऽर्थे चन्द्र इव जले प्रतिबिम्बितो गृह्यते ? अत आह—

**दूरस्थप्रतिबिम्बं च नारूपस्य प्रतीयते ॥ २१० ॥**

रूपवतामेव प्रतिबिम्बमिति, चक्षुर्ग्राह्याणामेवेत्यर्थः ॥ २१० ॥

यदुक्तम्-'दूरस्थत्वान्नानुराग' इति, तत्र शङ्कते—

**शब्दसर्वगतत्वेन यद्यर्थप्राप्तिरुच्यते ।**

दूषयति—

**सर्वार्थानां भवेच्छब्दैः सर्वैरेवानुरञ्जनम् ॥ २११ ॥**

इतश्च नानुराग इत्याह—

**न च भिन्नेन्द्रियग्राह्यं किञ्चिदस्त्यनुरागकृत् ।**

---

१–१. यः शब्दः सकृदुच्यते—का० ।

२. तत्रेति पाठान्तरम् ।

कारणमाह—

**न हि लाक्षानुरक्तेऽपि स्फटिके धीस्त्वगादिभिः**[1] ॥ २१२ ॥

किञ्च, अध्यासवादिनामनुमानागमयोः प्रामाण्य न स्यादित्याह—

**अनुमानागमौ मिथ्या स्यातामध्यासकल्पने ।**

अत्यल्पमिदमुच्यते, सर्वस्य निरूपणस्य सविकल्पकस्य मिथ्यात्वात् तन्निबन्धनत्वाच्च सर्वलोकव्यवहाराणामुच्छित्तिरेव स्यादित्याह—

**निरूपणस्य मिथ्यात्वात् सर्वाभावः प्रसज्यते ॥ २१३ ॥**

इतरस्त्वाह—

**तथास्त्विति यदि ब्रूयात्,**

इष्टमेव न. सर्वाप्रामाण्यमिति ।

दूषयति—

**मिथ्या स्ववचने सति ।**

**कथमेवं वदेदर्थो नानृताद्धि प्रतीयते ॥ २१४ ॥**

'सर्वं मिथ्या' इत्येतदपि भवद्वाक्य मिथ्या स्यात्, तन्मिथ्यात्वे चेतरेषाममिथ्यात्वमिति ॥ २१४ ॥

किञ्च, अयमध्यासः शून्यवादनिरासेनैव निरस्त इत्याह—

**शून्यवादोत्तराच्चापि यथार्थं बुद्धिशब्दयोः ।**

**प्रवृत्तिर्न तु तत् तन्त्रमर्थरूपं कदाचन ॥ २१५ ॥**

बुद्धिवदेव शब्दस्यापि नित्य परविषयत्वान्न स्वात्मग्रहणसामर्थ्यमित्युपसंहरति—

**तस्मात् प्रागपि ये शब्दाद्भिन्नैकत्वादि**[3]**बुद्धिभिः ।**

**गृह्यन्ते सर्वदा तेषां परमार्थास्तिता भवेत् ॥ २१६॥**

**सर्वदेति** । परस्तादपि पूर्वावगतेनैव रूपेणावगमात् मिथ्यात्वमिति ॥ २१६ ॥

**प्रागपि शब्दादित्यतिशयार्थमुक्तम्**, शब्दैकगम्यत्वेऽपि ताद्रूप्यस्यानवगमान्नार्थस्य स्वरूपहानिरित्याह—

**शब्दाभ्युपायकेऽप्यर्थे तदभावे च यद्यपि ।**

**अर्थबुद्धिर्न जायेत नार्थे रूपं प्रणश्यति ॥ २१७ ॥**

अत्रैव दृष्टान्तमाह—

**चक्षुरादेरभावे हि रूपाद्यात्मा न गृह्यते ।**

**स्वरूपनाशो**[4] **रूपादेस्तावन्मात्रेण नेष्यते ॥ २१८ ॥**

---

१. धीस्त्वगाधिभिः—२ पु० ।

२. अर्थतत्त्वम्—का० ।

३. शब्दादन्यैकत्वादि०—२ पु० ।

४. स्वभावनाशो—पाठान्तरम् ।

चक्षुराद्यभावे रूपादिर्न प्रकाशत इति चक्षुरादिपिधानेन रूपस्य तिरोभावः, न तु स्वरूपविनाश इति ॥ २१८ ॥

भवतु वा ताद्रूप्यप्रतीतिः, तथापि न मिथ्यात्वं नित्य ताद्रूप्यादर्थस्येत्याह—

**सम्बन्धस्य च नित्यत्वान्नार्थस्य स्यादरूपता ।**

सम्बन्धस्तावन्नित्यः, तादात्म्यमेव च भवता शब्दार्थयोः सम्बन्ध इति तादात्म्यमेव नित्यं भवति । अरूपत्वमशब्दरूपत्व नित्यम् । 'यदि च गोत्वादि' (श्लो० वा०४-१८०) इत्यत्र गोत्वादिजातीना शब्दरूपत्वाङ्गीकारेण मिथ्यात्व परिहृतम्, इदानी तु व्यक्तेरिति न पौनरुक्त्यम् । ननु न प्राक्सम्बन्धज्ञानात् ताद्रूप्यं प्रतीयत इति कथं ताद्रूप्यस्य नित्यत्वम् ? अत आह—

**युगपन्न हि सर्वेषामन्याकारार्थवेदनम्**[1] ॥ २१९ ॥

तदापि कैश्चित् ताद्रूप्यं प्रतीयते, न तु कदाचिदपि सर्वेषामन्यरूपप्रतीतिरिति ॥ २१९ ॥

शङ्कते—

**तदाकारेऽपि तद्वच्चेद्,**

परिहरति—

**द्वये सति परीक्ष्यताम् ।**

**किं न्वर्थस्यातथाभावो ग्रहीतुः किं न्वशक्तता ॥ २२० ॥**

तत्र निर्णयमाह—

**सदसद्भावयोरर्थे विरोधित्वादसम्भवः ।**

**ग्रहीतृभेदाच्छक्तत्वमशक्तत्वं च युज्यते ॥ २२१ ॥**

अत्रैव दृष्टान्तमाह—

**यथान्धानन्धयोः पार्श्वे रूपस्येत्यभिधास्यते ।**

सम्बन्धपरिहारेऽभिधास्यत इति ।

उपसंहरति—

**तेनार्थे ध्वन्युपायस्य तद्धीर्नान्यस्य जायते ॥ २२२ ॥**

विद्यमानमेव शब्दसम्बन्धित्वं शब्दात्मकत्वमर्थस्य येन वृद्धव्यवहारेऽवगतम्—स ध्वन्युपायः शब्दोपायः, तस्यैव तदात्मकत्वधीः, नान्यस्येति ॥ २२२ ॥

चोदयति—

**देवदत्तादिशब्दे तु सम्बन्धाद्यत्वदर्शनात् ।**

**अर्थस्यानित्यतायां च ताद्रूप्यस्याप्यनित्यता ॥ २२३ ॥**

तेन तत्रातदात्मकस्य तादात्म्यप्रतीतेर्मिथ्यात्वमिति ॥ २२३ ॥

---

१. अर्थदर्शनम्—२ पु० ।

तदेतत् केषाञ्चिन्मतेन परिहरति--

**तत्राप्यौत्पत्तिकी शक्तिस्तद्रूपप्रत्ययं प्रति ।**
**ग्राह्यग्राहकयोरिष्टा नियोगस्य त्वनित्यता ॥ २२४ ॥**

तत्राप्यर्थस्य यावत्सद्भावं ताद्रूप्यमस्त्येव, ततस्तद्ग्राहकशक्तिः शब्दस्यार्थस्य च तद्रूपग्राह्यताशक्तिर्नित्यैव । यस्तु तत्र पिण्डशब्दप्रयोगः, तन्मात्र समवाया-पेक्षत्वादनित्यमिति ॥ २२४ ॥

अन्येषा मतमाह—

**तत्र सर्वैरताद्रूप्यं[1] प्राङ्नियोगात् प्रतीयते ।**
**तेनेष्टमेव मिथ्यात्वं कैश्चिदध्यासकल्पने ॥ २२५ ॥**

अविद्यमानमेव ताद्रूप्य समयवशात् पश्चात् प्रतीयते, न तु प्रागस्ति; प्रमाणाभावात् । अत एव पश्चादपि नास्त्येवेति मिथ्यैव तत्र शब्दविकल्पोऽध्यास-पक्ष इति ॥ २२५ ॥

परमार्थतस्त्वध्यासाभावान्नास्त्येव मिथ्यात्वमित्याह—

**यदा तु[2] यादृशः पिण्ड पूर्वं शब्दात् प्रतीयते ।**
**तादृशस्मरणे हेतुः शब्दस्तत्र यथार्थता ॥ २२६ ॥**

सम्बन्धावगमवेलाया तत प्राक्काले च यादृशमर्थरूपं तादृशमेव शब्दः स्मारयति, न त्वात्मानमर्थेऽध्यस्यतीति । कथं तर्हि गौरय शुक्लो गच्छतीति डित्थोऽयमिति च सामानाधिकरण्यम्, जातिशब्दस्तावज्जाति स्मारयित्वा तथा तादात्म्येन व्यक्ति बोधयन्नुपस्थितव्यक्तिबोधकेन 'अयम्' इत्यनेन सामानाधिकरण्यं भजते । तथा गुणशब्द , क्रियाशब्दश्च । डित्थशब्दोऽपि यस्य पिण्डस्य वाचकत्वेन प्रागवगतः त स्मारयित्वा तत्तादात्म्येन पुरःस्थित पिण्डं विकल्पयति, न तु स्वात्मना । न हि डित्थोऽयमित्यस्यायमर्थः—डित्थशब्दोऽयमिति, किं तर्हि ? डित्थ इति नामास्येत्यर्थः—योऽसौ चैत्रे मास्यस्माभिरुज्जयिन्यामुपलब्धो डित्थः सोऽयमिति । तेनात्रापि न शब्दस्वरूपमर्थस्य विशेषणम्, किन्तु पूर्वानुभूतार्थस्म-रणोपयोग्येव । तत्रापि शब्देन पूर्वावगतव्यक्तितादात्म्येन पुरःस्थिता व्यक्ति-र्विशेष्यत इति विनैवाध्यासेन सामानाधिकरण्य विशेषणविशेष्यभावश्चार्थ-मुखेनैव सम्भवतीति निष्प्रमाणकोऽध्यास इति ॥ २२६ ॥

ननु स्मार्यत्वशक्ति[3]रेवार्थस्य डित्थादौ नास्ति समयात् प्रागदर्शनात्, तत् कथं तेनार्थः स्मार्यते ? अत आह—

**नियोगात् परतो वापि शब्देन व्यज्यतामियम्[4] ।**
**तद्ग्राह्यशक्तिरर्थस्य, पाररूप्यं न तावता ॥ २२७ ॥**

---

१. ताद्रूप्यम्—२ पु० । २. च—का० ।
३. स्मार्यशक्तिः—२ पु० । ४. व्यज्यतां मियः—का० ।

स्मार्यत्वशक्तिरर्थस्य प्रागपि विद्यमानैव नियोगेन समयेन व्यज्यते वा, शब्दात् क्रियते वा, न तु तद्रूपतार्थस्य[1]; यतोऽयं न स्मार्येत[2]। नियोगशब्देन प्रयोगवाचिना तत्कारणं समयो लक्ष्यत इति।

ननु यस्यैव कस्यचिच्छब्दस्य यस्मिन्नेवार्थे समयः क्रियते स एव तं स्मारयति, तत् कथं प्रागपि विद्यते शक्तिरित्युच्यते ? अत आह—

**सर्वाकारपरिच्छेद्यशक्तेऽर्थे वाचकेऽपि वा।**
**सर्वाकारार्थविज्ञानसमर्थे नियमः कृतः॥ २२८॥**

सर्वाः शक्तयो विद्यन्त एवेति न कश्चिद्दोषः॥ २२८॥

विद्यमानास्वेव सर्वासु नियता काचिदेव व्यवहारनियमार्थं समयेनाभिव्यज्यते इत्येवं जात्यादिविकल्पाना मिथ्यात्वं निरस्तम्। इदानी स्मृतिसम्भेदे कथं प्रत्यक्षत्वमित्याशङ्कयाह सार्धेन—

**तत्र शब्दार्थसम्बन्धं प्रमातुः स्मरतोऽपि या[3]।**
**बुद्धिः पूर्वगृहीतार्थसन्धानादुपजायते॥ २२९॥**
**चक्षुषा सन्निकृष्टेऽर्थे नाप्रत्यक्षमसौ भवेत्।**

शब्दार्थसम्बन्धं स्मरतोऽपि प्रमातुरित्यन्वय।

कथ नाप्रत्यक्षम् ? अत आह—

**विविक्ता एव तेऽप्यर्थाः स्मृतिप्रत्यक्षगोचराः॥ २३०॥**

विविक्तत्वमेव दर्शयति—

**स्मर्येते शब्दसम्बन्धौ मा भूत् प्रत्यक्षता तयोः।**
**तदप्रत्यक्षभावेन न त्वर्थस्यापि वार्यते॥ २३१॥**
**गृहीतमपि गोत्वादि स्मृतिस्पृष्टं च यद्यपि।**
**तथापि व्यतिरेकेण पूर्वबोधात् प्रतीयते॥ २३२॥**

एकमेव ज्ञानं सस्कारेन्द्रियाभ्यां जायमान शब्दतत्सम्बन्धयोः स्मरणम्, अर्थरूपे त्विन्द्रियसन्निकृष्टे प्रत्यक्षमिति॥ २३१-२३२॥

नन्वर्थोऽपि गोत्वादि पूर्वगृहीत एव स्मर्यत इति कथ प्रत्यक्षत्वप्रामाण्यसिद्धिरिति, किं पुनरधिकम् ? तद्दर्शयति—

**व्यक्तिकालादिभेदेन तत्रास्त्यवसरो[4] मितेः।**

व्यक्त्यन्तरेऽवगत सामान्यं व्यक्त्यन्तरसम्बन्धितयावगम्यते, पूर्वेद्युरवगतो देवदत्तः परेद्युः प्रथमक्षणे निर्विकल्पकेनावगतः स द्वितीयक्षणे सविकल्पकेनावगम्यत इति सिध्यति प्रामाण्यमिति।

---

१. तद्रूपता क्रियतेऽर्थस्य—२ पु०।    २. न स्मार्यंते—२ पु०।
३. वा—का०।    ४. तत्रास्त्यभ्यधिको—का०।

ननु गृहीतमपि गृह्यत इति कथं प्रामाण्यम् ? अत आह—

**यः पूर्वावगतोंऽशोऽत्र स न नाम प्रमीयते[1] ॥ २३३ ॥**
**इदानीन्तनमस्तित्वं न हि पूर्वधिया गतम् ।**

तस्मिन्नंशे मा भूत् प्रामाण्यम्, अगृहीतकालान्तरसम्बन्धापेक्षमेव तु प्रामाण्यमिति ।

कथं पुन. स्मरणोत्तरकालं भवत्सविकल्पकं प्रत्यक्षम्, न हि निर्विकल्पकस्य तथात्व दृष्टम् ? अत आह—

**न हि स्मरणतो यत्प्राक् तत् प्रत्यक्षमितीदृशम् ॥ २३४ ॥**
**वचनं राजकीयं वा वैदिकं वापि विद्यते ।**

स्यादप्येवं यदि स्मरणेनेन्द्रियव्यापारो दूष्यते बाध्यते वा, न तु तदस्तीत्याह—

**न चापि स्मरणात् पश्चादिन्द्रियस्य प्रवर्तनम् ॥ २३५ ॥**
**वार्यते केनचिन्नातस्तत् तदानीं प्रदुष्यति ।**

उपसंहरति—

**तेनेन्द्रियार्थसम्बन्धात् प्रागूर्ध्वं वापि यत्स्मृतेः ॥ २३६ ॥**
**विज्ञानं जायते सर्वं प्रत्यक्षमिति गम्यताम् ।**

ननु यदि जात्याद्याकारा परमार्थतोऽर्थे सन्ति, तत सर्वेऽप्यव्यवहितसम्बन्धा., किमिति न तैरर्थं विकल्पयन्ति, तेन वासनामात्रनिबन्धना भ्रान्तिरेवेयम् ? अत आह द्वयेन—

**विमनस्का यदा केचित् सम्बद्धमपि चेन्द्रियैः ॥ २३७ ॥**
**न बुध्यन्ते तथा चान्ये सादृश्यादिविमोहिताः ।**
**तत्र योऽर्थं विवेकेन कौशलात् सदृशेष्वपि ॥ २३८ ॥**
**सूक्ष्मं वापि प्रपद्येत तस्य भ्रान्तिर्न तावता ।**

विमनस्कतया स्थूलदर्शितया वा सादृश्यादिविमोहिता यदि न जानन्ति, तावता नैव प्रणिहितचेतसा सूक्ष्मग्रहणशक्तिशालिना वावगतिर्भ्रान्तिर्भवति ।

अत्रैव दृष्टान्तमाह द्वयेन—

**यथा[2] षड्जादिभेदेन गाने लौकिकवैदिके ॥ २३९ ॥**
**विवेकेनावगच्छन्ति येषां तत्संस्कृता मतिः ।**
**गानमात्रं विजानन्ति तत्रानधिकृतास्तु ये ॥ २४० ॥**
**तदज्ञानान्न मिथ्यात्वं वक्तुं शक्यं विवेकिनाम् ।**

यद्यप्यसंस्कृता गानमात्रं प्रतिपद्यन्ते तथापि **विश्वावसुशास्त्र**संस्कृताना विवेकप्रतिपत्तिर्न मिथ्येत्यर्थः । ननु वास्तवो भेदोऽप्यस्तीति वक्तुं न शक्यते, न हि षड्जादिशब्दभेदं मुक्त्वा गानस्य कश्चित् स्वगतो विवेकोऽस्ति ? अत आह पादत्रयेण—

१. प्रतीयते—मु० पा० । २. तथा—का० ।

**ते हि षड्जादिशब्देभ्यो विनाप्येषां विविक्तताम् ॥ २४१ ॥**
**यथावदधिगच्छन्ति,**

दार्ष्टान्तिके योजयति—

**तद्वद् गोत्वादिवस्त्वपि ।**

एतदेव विवृणोति—

**सङ्कीर्णमर्थमात्रं तु बुध्यन्तेऽभ्यासवर्जिताः ॥ २४२ ॥**
**विवेकं प्रतिपद्यन्ते ये शब्दस्मृतिसंस्कृताः ।**

अभ्यासः = शब्दस्मरणमिति ।

किमिति पुनर्विकल्पयन्तोऽपि कदाचित् केनचिद्विकल्पयन्ति, न सर्वैः सर्वदा ? अत आह द्वयेन—

**यथा रूपादिमत्यर्थे यस्यैवास्ति यदिन्द्रियम् ॥ २४३ ॥**
**स तन्मात्रं गृहीत्वान्यन्न गृह्णात्यनुमानतः ।**
**तथा विवेकहेतूनां यदा यं प्रतिपद्यते ॥ २४४ ॥**
**तदुपेये तदा ज्ञानं वर्तते तदनुग्रहात् ।**

**विवेकहेतूनां** शब्दानामित्यर्थः । तेन शब्दस्मरणव्यवस्थेति ।

यस्तु न किञ्चिदपि शब्दं स्मरति तस्य निर्विकल्पकमेव भवतीत्याह—

**तेन यावत् प्रमातॄणां विवेकोपायदर्शनम् ॥ २४५ ॥**
**न स्यात् तावद् भवेत्तेषां विज्ञानं निर्विकल्पकम् ।**

प्रकृतं सविकल्पकस्य प्रामाण्यमुपसंहरति—

**तस्माद् यत्र प्रकल्प्येत वस्तु वस्त्वन्तरात्मना ॥ २४६ ॥**
**प्रमाणाभासता तत्र न स्वधर्मविकल्पने ।**

सति चैवं लिङ्गलिङ्गिसामान्ययो· तत्सम्बन्धस्य च प्रत्यक्षत्वादुपपन्नं प्रत्यक्ष-पूर्वकत्वमनुमानादीनामित्याह—

**प्रत्यक्षत्वमतः सिद्धं सामान्यस्य तथैव च ॥ २४७ ॥**
**सम्बन्धस्येति तत् पूर्वमनुमानादि जायते ।**

ये तु **शाक्याः** सविकल्पकस्य प्रत्यक्षत्वं नेच्छन्ति, तेषामनुमानादेरुत्पत्तिर्न सिध्यति—इत्य**नुमानवादे** वक्ष्यते, इत्याह—

**सर्वं चाप्यनुमानादि प्रत्यक्षे निर्विकल्पके ॥ २४८ ॥**
**न प्रवर्तेत इत्येतदनुमानेऽभिधास्यते**[1] **।**

यदुक्तम्–'इन्द्रियव्यापारानुपरमात् सविकल्पकमपि प्रत्यक्षम्' इति, अत्र चोदयति—

---

१. अनुमाने हि साध्यते—का० ।

**नन्वेवं सति याप्यग्नेर्दूरादप्यौष्ण्यकल्पना ॥ २४९ ॥**
**सापि[1] प्रत्यक्षमेव स्याद् यथा गोत्वादिबुद्धयः[2] ।**

परिहरति—

**प्रत्यासन्नतरं गोत्वं[3] प्रत्यक्षत्वेन सम्मतम् ॥ २५० ॥**
**विज्ञानं नान्यदस्तीति प्रत्यक्षमिदमेव नः ।**

अत्राग्नित्वेन प्रत्यक्षेणौष्ण्यमनुमीयते, न तु तदेव प्रत्यक्ष गोत्व तु वस्त्वन्तरम् । इन्द्रियव्यापारात् प्रत्यासन्न प्रत्यक्ष नास्ति यतो गोत्वमनुमीयते, गोत्वमेव प्रत्यक्षम् इति ।

यदा तु गोत्वेऽप्यपरोक्षाभावात् अक्षैरसम्बन्ध मन्वानस्य शब्दविशेष्यादिना गोत्वबुद्धिः, तदा नैव प्रत्यक्षमित्याह—

**तत्राप्यक्षैरसम्बन्धं मन्वानस्योपजायते ॥ २५१ ॥**
**यदा बुद्धिः, तदा नैव प्रत्यक्षत्वेन कल्प्यते ।**

कस्मात् पुनरनुपरतेन्द्रियव्यापारस्यैव जायमानम् औष्ण्यज्ञान प्रत्यक्ष भवति ? अत आह—

**स्पर्शनेन तु सम्बन्धे प्रत्यक्षत्वेन जायते ॥ २५२ ॥**
**मतिरौष्ण्ये, परोक्षेयं चक्षुषाग्नौ ऽकाशिते ।**

नहि दूरादग्निमध्यक्षयतो यदौष्ण्यज्ञान तत् स्पर्शनवेलायामिवापरोक्षम्, अतो नेन्द्रियव्यापारज गृहीतसम्बन्धस्यैव जायते नान्यस्येत्यानुमानिकमेव, न प्रत्यक्षमिति । तेनात्मीयेन्द्रियानुपरम एव प्रत्यक्षम्, नेन्द्रियान्तरानुपरम इत्याह—

**तस्माद् यदिन्द्रियं यस्य ग्राहकत्वेन कल्पितम् ।**
**तेनैव सति सम्बन्धे प्रत्यक्षं नान्यथा भवेत् ॥ २५३ ॥**

तदेव च तस्यात्मीय यतो यस्यापरोक्ष्यम् । न हि चक्षुषा स्पर्शनस्यापरोक्ष्य भवति, अतो नौष्ण्यस्य चक्षुरात्मीयमिति ॥ २५३ ॥

उपसहरति—

**एवं समानेऽपि विकल्पमार्गे यत्राक्षसम्बन्धफलानुसारः ।**
**प्रत्यक्षता तस्य तथा च लोके विनाप्यदो[4] लक्षणतः प्रसिद्धम् ॥ २५४ ॥**

इति प्रत्यक्षसूत्रं चतुर्थम्

गोत्वोष्णत्वयोर्विकल्पगम्यत्वे तुल्येऽपि यत्र गोत्वे अक्षसम्बन्धफलमापरोक्ष्य तत्प्रत्यक्षम्, नेतरत आपरोक्ष्यम् । एवं हि प्रत्यक्ष लक्षणमनपेक्ष्यैव लौकिका मन्यन्त इति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे चतुर्थं प्रत्यक्षसूत्रं संपूर्णम्

●

१. मीमांसका हि ज्ञानलक्षणया प्रत्यासत्त्या प्रत्यक्षं नानुमन्यन्ते ।
२. गोत्वादिमतयो यथा—का० । ३. गोत्वे—मु० पा० । ४. अतः—का० ।

**औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञान-**
**मुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं**
**बादरायणस्यानपेक्षत्वात् ( जै० सू० १. १. ५ )**

एव प्रत्यक्षाद्यनिमित्तत्व प्रतिपाद्याभावगम्यत्व धर्मस्याशङ्क्य तन्निराकरण-परतया औत्पत्तिकसूत्र **भाष्यकारे**णावतारितम्–"अभावोऽपि नास्ति, यत औत्पत्तिक" ( शा० भा० पृ. २७ ) इत्यादिना, एतदाक्षिपति—

**प्रत्यक्षादौ निषिद्धेऽपि ननु लोकप्रसिद्धितः ।**
**धर्माधर्मौ प्रमास्येते ब्राह्मणादिविवेकवत् ॥ १ ॥**

शब्दातिरिक्तसमस्तसदुपलम्भकप्रमाणास्तमये[1] ह्यत्राभावशङ्कानिराकरणाय शब्दप्रामाण्यावतारण युक्तम्, न चेह तथास्ति, ब्राह्मणादिविवेक इव लोकप्रसिद्धेः सद्भावादिति । तामेव दर्शयति--

**धार्मिकाधार्मिकत्वाभ्यां पीडानुग्रहकारिणौ ।**
**प्रसिद्धौ हि,**

लोकप्रसिद्धिगम्यत्व धर्माधर्मयोर्भगवता **व्यासेना**पि दर्शितमित्याह—

**तथा चाह पाराशर्योऽत्र वस्तुनि ॥ २ ॥**

**व्यास**वचनमुदाहरति--

**'इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।**
**आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम्' ॥ ३ ॥**

इद प्रपातडागादिक पुण्यम्, इदमगारदहनादिकमपुण्यम्—इत्येवमुपकारापकारविषये[2] धर्माधर्मपदद्वये यावच्चाण्डालप्रसिद्धे सत्यल्प शास्त्रप्रयोजनमिति ।

परिहरति पादत्रयेण--

**निर्मूलासम्भवादत्र प्रमाणैः सैव मृग्यते ।**
**कुतः पुनः प्रवृत्तेति,**

प्रसिद्धिर्हि प्रज्ञानम्, न सा निर्मूला सम्भवतीति तस्या मूल निरूप्यते--किं भ्रान्तिमूलेयम् ? उत प्रत्यक्षादिमूला ? किं वा चोदनामूलेति ?

ननु यत्किञ्चन मूल समीचीनमेव कल्प्य कथमिवाभावाशङ्का ? अत आह—

**प्रत्यक्षादि तु वारितम् ॥ ४ ॥**

न चासम्भावितमूल शक्यते कल्पयितुम्, तदिह प्रत्यक्षादिचतुष्टये निराकृते द्वयमेवावशिष्यते, अतो युक्तमभावनिराकरणाय शब्दप्रमाण्यावतारणमिति ॥ ४ ॥

न च प्रत्यक्षादिपरित्यागेन स्वयमेव प्रसिद्धेः प्रामाण्य भवतीत्याह--

---

१. प्रमाणप्रत्यक्षसमये—२ पु० । प्रमाणमन्यस्तमये—३ पु० ।

२. उपकाराय विषये—१ पु० ।

**न चैतानि परित्यज्य पृथग् लोके प्रमाणता ।**

ब्राह्मणादिविवेकस्तु प्रत्यक्ष एवेति वक्ष्यते इति ।

अव्यवस्था च प्रसिद्धिरिति न तन्निमित्तत्वं धर्मस्य सम्भवतीत्याह सार्धेन—

**संसारमोचकादेश्च हिंसा पुण्यत्वसम्मता ॥ ५ ॥**

**न पश्चात्[1] पुण्यमिच्छन्ति केचिदेवं विगानतः ।**

**म्लेच्छार्याणां प्रसिद्धत्वं न धर्मस्योपपद्यते ॥ ६ ॥**

ननु 'शास्त्रस्था वा तन्निमित्तत्वात्' ( जै० सू० १. ३. ९ ) इत्येवं व्यवस्था सिध्यति ? अत आह—

**न चार्याणां विशेषोऽस्ति यावच्छास्त्रमनाश्रितम् ।**

**तन्मूलार्थप्रसिद्धिस्तु[2] तत्प्रामाण्ये स्थिते भवेत् ॥ ७ ॥**

उपसंहरति—

**तस्मादभाववक्त्रस्थौ[3] धर्माधर्मौ न शक्नुयात् ।**

**चोदना चेत् समुद्धर्तुं ग्रस्तौ तेनैव[4] पश्यताम् ॥ ८ ॥**

'पश्यताम्' इत्यनादरे षष्ठी ॥ ८ ॥

"औत्पत्तिक. सम्बन्धो नित्यो निमित्तम्" इत्युक्त्वा "उपदेशो हि भवति" ( शा० भा० पृ० २८ ) इति हेतुरुक्त., स चाय सौत्रेण ज्ञानपदेनोपस्कृत्य[5] व्याख्यातव्य इत्याह—

**उपदेशो हि भवति ज्ञानं तस्येति योज्यते ।**

शब्दवाचकस्योपदेशशब्दस्य ज्ञानशब्देन कथं सामानाधिकरण्यम् ? इत्यत आह—

**ज्ञायते येन तज्ज्ञानमेकाधिकरणत्वतः ॥ ९ ॥**

तदनेनाज्ञानरूपमप्रामाण्य निरस्तमिति ॥ ९ ॥

कारणदोषाधीन चाप्रामाण्यमौत्पत्तिकशब्दान्निरस्तमित्याह—

**औत्पत्तिकगिरा दोषः कारणस्य निवार्यते ।**

बाधाभावस्त्वव्यतिरेकशब्देनेत्याह—

**अबाधोऽव्यतिरेकेण,**

एवं चानपोदित स्वारसिक प्रामाण्यमित्याह—

**स्वतस्तेन प्रमाणता ॥ १० ॥**

तदिदम् 'तत्प्रमाणम्' इत्यनेन सूत्रावयवेनोक्तमिति ॥ १० ॥

'अर्थेऽनुपलब्धे[6]' इत्यस्य प्रयोजनमाह—

---

१. तत्पश्चात्—२ पु० । २. तन्मलार्थ०—मु० पा० ।
३. ०वक्तृस्थौ—मु० पा० । ४. तेनेव—मु० पा० ।
५. संयोज्येत्यर्थः । ६. अर्थे उपलब्ध—मु० पा० ।

**सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा ।**

ननु चोदनाया. प्रामाण्य प्रतिज्ञातम्, तत्कथमुपदेशस्य साध्यते[1] ? अत आह—

**चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः ॥ ११ ॥**

अत्र चोदयति—

**वाक्यान्तरे समर्थेऽपि किमर्थं विधिराश्रितः ।**

वाक्यान्तरसामर्थ्यमेव दर्शयति—

**साध्यसाधनसम्बन्धः सर्वाख्यातेषु विद्यते ॥ १२ ॥**

**सर्ववाक्येषु चाख्यातं तेनाकाङ्क्षानिवर्तनात् ।**

श्रेय.साधन हि धर्मः, तच्च भावनाद्वारम् । सर्वाख्यातेषु च भावना विद्यते, सर्ववाक्येषु चाख्यातमस्ति, तदधीनत्वादाकाङ्क्षापूरणस्य । अतो विनापि विधेः स्वर्गयज्ञादीनां साध्यसाधनसम्बन्धसिद्धेर्विध्याश्रयणमनर्थकमिति ।

सिध्यत्यपि साध्यसाधनसम्बन्धे पुरुषप्रवृत्तये विधिरिति चेत् ? अत्राह—

**प्रवृत्तिसिद्धिरिच्छातः,**

विधिरपि हि न बलात् प्रवर्त्तयति, किन्तु श्रेयःसाधनत्वं गमयति, अत एव स्वेच्छया प्रवृत्ति., सा च विनापि विधिना सिध्यतीति ।

स्यादेतत् 'न ब्राह्मण हन्यात्' इत्यादिषु निवृत्तिसिद्धये, तत्राह—

**प्रतिषेधात् तु वर्जनम् ॥ १३ ॥**

नञ इत्यर्थ इति ॥ १३ ॥

परिहरति—

**विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते ।**

कथं न लभ्यते ? अत आह—

**श्रुतस्वर्गादिबाधेन[2] धात्वर्थः साध्यतां व्रजेत् ॥ १४ ॥**

असति विधौ समानपदश्रुत्या धात्वर्थ एव भावनांशे निपतेत्, विप्रकृष्टस्वर्गादिबाधे न, अतो न यागादे समीहितसाधनत्व स्यादिति ॥ १४ ॥

विधौ तु सति तेन पुरुषप्रवर्तनात्मकेन समानप्रत्ययोपात्तेन धात्वर्थादपि सन्निकृष्टतरेणावरुद्धा भावना धात्वर्थमुल्लङ्घ्य[3] विप्रकृष्टमपि स्वर्गादिकमेव भाव्यतया गृह्णाति, साधनतया च यागादिकमिति सिध्यति यागादेः श्रेयःसाधनतया धर्मत्वमित्याह—

**विधौ तु तमतिक्रम्य स्वर्गादिः साध्यतेष्यते ।**

**तत्साधनस्य धर्मत्वमेवं सति च लभ्यते ॥ १५ ॥**

---

१. गम्यते—१ पु० । २. श्रुतः स्वर्गा०—२ पु० ।

३. संनिकृष्टतरेणाविरुद्धा भावना धात्वर्थम्—२ पु० ।

अवरुध्या भावना धात्वर्थम्—१ पु० ।

अनपेक्षत्वादिति सूत्रपदं व्याचष्टे—

**स्वप्रत्ययान्तरापेक्षा स्यादनाप्तनरोक्तिषु ।**
**आप्तोक्तिषु नरापेक्षा[1] नोभयं चोदनासु नः ॥ १६ ॥**

इति औत्पत्तिकसूत्रं पञ्चमं पूर्णम्

अथ वृत्तिकारग्रन्थः

"वृत्तिकारस्त्वन्यथेमं ग्रन्थं वर्णयाञ्चकार, तस्य निमित्तपरीष्टिरित्येवमादिम्" ( शा० भा० पृ. ३० ) इति भाष्यम् । तत्रादिशब्दं केचित् लुप्तमकारं पठन्ति, तद् दूषयति—

**आदिशब्दो मकारान्तः,**

कारणमाह—

**लुकि क्लेशेन सङ्गतिः ।**

सामान्यविवक्षायां हि नपुंसकता वक्तव्या, ग्रन्थात्मके तूपात्ते विशेष्ये सामान्यविवक्षा क्लिष्टेति । "न परीक्षितव्य निमित्तम्" ( शा० भा० पृ. ३० ) इति निमित्तसूत्रव्याख्यानपर भाष्यमयुक्तम्, सूत्रे नञोऽश्रुतत्वादत आह—

**नञध्याह्रियते सूत्रे,**

ननु "व्यभिचारात् परीक्षितव्यं निमित्तम्, शुक्तिका हि रजतवत् प्रकाशते यतस्तेन प्रत्यक्ष व्यभिचरति" ( शा० भा० पृ ३१ ) इति चोद्यभाष्यमयुक्तम्, आभासस्य ह्यत्रायथार्थत्वलक्षणो व्यभिचारो न प्रत्यक्षस्येति ? अत आह—

**सङ्करात् परिचोदना ॥ १७ ॥**
**प्रमाणलक्षणाज्ञानाद् व्यभिचारात् परीक्षणम् ।**

प्रत्यक्षस्याभासाद् विविक्तलक्षणमजानन् उभयोरक्षतत्वेन सङ्कीर्णत्वादाभासस्य व्यभिचारेऽपि प्रत्यक्षस्य व्यभिचार मत्वा सति व्यभिचारात् परीक्षणं चोदितवानिति ।

"यत्प्रत्यक्ष न तद्व्यभिचरति यद्व्यभिचरति न तत्प्रत्यक्षम्" ( शा० भा० पृ. ३१ ) इति परिहारभाष्यम्, तत्पूर्वया परीक्षया सम्बन्धव्यमित्याह—

**नैतत् प्रत्यक्ष मित्येवमपरीक्षोपसंहृता[3] ॥ १८ ॥**

भाष्यार्थं दर्शयति—

**तत्रान्यस्यायथार्थत्वं प्रत्यक्षे तु यथार्थता ।**

अतः शुक्तिरजतप्रकाशनेऽन्यस्याभासस्यायथार्थत्वम्, न प्रत्यक्षस्येति पुनः

---

१. परापेक्षेति—२ पु० ।
२. न तत्प्रत्यक्षमिति २ पु० ।
३. उपसंहृतमिति पाठान्तरम् ।

प्रत्यक्षस्याभासासङ्कीर्णं लक्षणम्, तत्कथनार्थं सूत्रम्—सत्सम्प्रयोगे पुरुषस्येन्द्रियाणामिति। तस्यार्थमाह—

**यदाभासं हि विज्ञानं तत्संयोगे तदिष्यते ॥ १९ ॥**

ननु लक्षणपरत्वं सूत्रस्य ग्राह्यविशेषणानुपादानादतिव्याप्तिनिरस्तम्, तत् कथं तदधिक्रियते ? अत आह—

**सम्पूर्णं लक्षणं ह्येतत्,**

कथम् ? इति आह—

**तत्सतोर्व्यत्ययः कृतः ।**

प्रत्यक्षविशेषणस्यार्थमाह—

**शोभनार्थस्तु सच्छब्दः,**

यद्वा, यथावस्थितावेव सत्तच्छब्दावविचाल्यैव तच्छब्दान्तरग्राह्यविशेषणोपादानायैवाध्याहर्त्तव्यमित्याह—

**यद्वाध्याहारकल्पना ॥ २० ॥**

नन्वाभासस्यापि लक्षण वक्तव्यम्, न हि तस्मिन्नज्ञाते तद्विविक्तं प्रत्यक्ष ज्ञायते ? अत आह—

**अर्थापत्त्येतरेषां[1] च प्रत्यक्षाभासलक्षणम् ।**

"तत्सम्प्रयोगज प्रत्यक्षाभास ज्ञायते एवेति कथमन्यसम्प्रयोगजत्व ज्ञायते" इत्याशङ्क्य "बाधकज्ञानात्" ( शा० भा० पृ० ३३ ) इत्युक्तं भाष्ये, तदयुक्तम्; केन हि विशेषणोत्तरस्य बाधकत्वम्, न पूर्वस्य ? अत आह—

**बाधकज्ञानलाभो हि पूर्वाबाधे न सम्भवेत् ॥ २१ ॥**

अस्ति च तस्यात्मलाभ इत्याह—

**स चास्तीति,**

इति हेतोरुत्तरस्य बोधकत्वमिति।

ननु मिथ्यासत पूर्वस्योत्तरेण बाध., बाधाच्च मिथ्यात्वमितीतरेतराश्रयम् ? अत आह—

**अवबोधत्वे सति नान्योन्यसंश्रयम् ।**

अवबोधकं हि मिथ्यात्वस्योत्तर न जनकम्, येनेतरेतराश्रय स्यात्। तेन दुष्टकारणादेव भूतस्य मिथ्यात्वस्योत्तरेणावबोधान्नेतरेतराश्रयम्, न च पूर्वमिथ्यात्वावगमापेक्षमुत्तरस्य जननम्, अतो नेतरेतराश्रयमिति।

यत्तु पूर्वमेव कि न बाधकमित्युक्तम् ? तत्राह—

**न चानागतबाधे च पूर्वेणात्मा हि लभ्यते ॥ २२ ॥**

---

१. इतरेषामिति। आभासानामित्यर्थः।

पूर्वोत्पत्तिवेलायामनागतमुत्तरम् असत्त्वादशक्यं बाधितुम्, जाते तूत्तरे जायमानेनैव तेन पूर्वं बाधितम् असत्त्वात् कथमुत्तरस्य बाधक स्यात्, उत्तरं तु पूर्वस्मिन्नुपजायते तद्बाधेन जायत इति युक्तमिति ॥ २२ ॥

"प्राग् बाधकज्ञानोत्पत्तेः कथं मिथ्यात्वमवगम्यते ?" इति चोदयित्वा "यदा चक्षुरादिभिः" इत्यादिना भाष्येण[1] तत्रापि कारणदोषज्ञानावगम्य मिथ्यात्वमित्युक्तम्, तद्दर्शयति—

**निमित्तदोषबोधेन[2] पश्चाद् यत्राप्यबाधनम् ।**

पश्चाद् यत्राप्यबाधन तत्रापि निमित्तदोषबोधेन मिथ्यात्व गम्यत इति । यदि त्ववश्यं विपर्ययेण प्रयोजन सोऽप्यस्त्येव दिङ्मोहादौ नरान्तराणामित्याह—

**भवत्येव हि तत्रापि नरान्तरविपर्ययः[3] ॥ २३ ॥**

एतच्चाभ्युच्चयमात्रम्, न त्ववश्यमेतदादर्त्तव्यम्, विनापि विपर्ययेण कारणदोषज्ञानमात्रेणैव शक्य मिथ्यात्वमवगन्तुम् । यादृशस्य ज्ञानस्य व्यभिचारो दृष्ट, तादृशे ज्ञाने निश्चयरूपे ज्ञातेऽपि विनापि बाधकेन विचिकित्सा जायते । यथा दूराद् 'देवदत्तोऽयम्' इति सहसा निश्चित्य पुन सशेते, सशयाच्च निश्चये प्रतिबद्धे सति मिथ्यात्वम् । तन्नियतदोषदर्शनादनुमीयमान निश्चयेन न प्रतिबध्यते । एवं च शाक्याद्यागमाना कारणदोषादेवाप्रामाण्यसिद्धिरिति ॥ २३ ॥

यदि साक्षाद्विपर्ययाभावेनानुमानिकबाधात् प्रत्यक्षाभासत्वं भवति, ततो जात्यादिज्ञानानामपि व्यतिरेकादिविकल्पाक्षमतया बाधादाभासता स्यादत आह—

**सर्वेषां सर्वदा यत्र धीः स्यात् तत्र न बाधनम् ।**

अथ न बाधः ? अत आह—

**न हि कारणदुष्टत्वबुद्धिस्तत्र बलीयसी ॥ २४ ॥**

यादृशस्य व्यभिचारो दृष्टः तादृशे विचिकित्सा भवति, न चालोके जाग्रतः प्रत्यासन्नविषय गोत्वादिजातिज्ञानं कदाचिदपि दृष्टव्यभिचारम् । अतस्तस्मिन् दृढरूपे जायमाने तद्विरुद्धं यौक्तिकं कारणदोषज्ञान नात्मानं लभते, दुर्बलत्वादिति ॥ २४ ॥

---

१. "प्राग् ज्ञानोत्पत्तेः कथमवगम्यते ? यदा न तत्काले सम्यग्ज्ञानस्य मिथ्याज्ञानस्य वा कश्चिद्विशेषः । यदा हि चक्षुरादिभिरुपहतं मनो भवति, इन्द्रियं वा तिमिरादिभिः, सौक्ष्म्यादिभिर्बाह्यो वा विषयः, ततो मिथ्याज्ञानम्; अनुपहतेषु हि सम्यग्ज्ञानम्, इन्द्रियमनोऽर्थसन्निकर्षो हि सम्यग्ज्ञानस्य हेतुः, असति तस्मिन् मिथ्याज्ञानम्, तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः, दुष्टेषु हि मिथ्याज्ञानं भवति" ( शा० भा० पृ. ३३ ) ।

२. ०दोषभेदेन—मु० पा० । ३. ०विपर्यय इति । ०बाधज्ञानमित्यर्थः ।

सोऽयमितरेतराश्रयस्य व्यक्तो विषय इत्याह—

**जात्यादिषु यदा जाता बुद्धिः पश्चादसम्भवात् ।**
**नाश्यते युक्तिभिस्तत्र व्यक्तमन्योन्यसंश्रयम् ॥ २५ ॥**

मिथ्यात्वे ह्यवगतेऽवगतिबाध., ततश्च तदवगम इति ॥ २५ ॥

नन्वमिथ्यात्वेऽपि तुल्यमितरेतराश्रयम्—बाधाभावाधीनममिथ्यात्वम्, तदधीनश्च बाधाभाव इति ? अत आह—

**स्वतः प्रामाण्यतश्चात्र निर्णयोऽस्तित्वबोधनात् ।**
**तद्रूपप्रत्ययोत्पत्तेस्तदसद्वादिनामपि ॥ २६ ॥**

वृत्तिकारग्रन्थ. समाप्त.

सद्भावबोधस्तावज्जात्यादिषु जायते । तस्य च स्वतः प्रामाण्यन्यायादेवामिथ्यात्व निर्णीयते, न बाधाभावमपेक्षते । निर्णीते चामिथ्यात्वे तद्विरोधादेव न बाधोत्पत्ति. सम्भवति । निर्विगानं च सद्भावबोधनं तदपलापवादिनामप्युत्पद्यमानत्वादिति ॥ २६ ॥

इति न्यायरत्नाकरे वृत्तिकारमतम्



## अथ निरालम्बनवादः

"ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्यय[1]" इत्यादिना बाह्यार्थसद्भावं प्रतिपादयति भाष्यकार, तस्य स्वतन्त्र्योपयोगं[2] दर्शयति चतुर्भिः—

**प्रमाणत्वाप्रमाणत्वे पुण्यपापादि तत्फलम् ।**
**विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना ॥ १ ॥**
**सर्वेषु लक्षणेष्वेवं स्वप्रमाणगणैः स्थितिः ।**
**वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता ॥ २ ॥**
**कर्मभ्यः[3] फलसम्बन्धः पारलौक्यैहलौकिके[4] ।**
**सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु ॥ ३ ॥**

---

१ ननु सर्व एव निरालम्बन· स्वप्नवत् प्रत्ययः, प्रत्ययस्य हि निरालम्बनतास्वभाव इव लक्षितः स्वप्ने, जाग्रतोऽपि स्तम्भ इति वा कुड्य इति वा प्रत्यय एव भवति, तस्मात् सोऽपि निरालम्बनः । ( शा० भा० पृ. ३४ ) ।

२. स्वशास्त्रोपयोगम्—इति पाठान्तरम् ।

३. कर्मिभ्यः—पाठान्तरम् । धर्मेभ्य इत्यपि क्वचित् ।

४. लौकिकः—इति पाठान्तरम् ।

**तस्माद् धर्मार्थिभिः पूर्वं प्रमाणैर्लोकसम्मतैः।**
**अर्थस्य सदसद्भावे यत्नः कार्यः क्रियां प्रति॥ ४॥**

यदि सर्वा बुद्धयो बाह्यार्थशून्याः स्वांशपर्यवसायिन्यो भवेयुः, ततो योऽयं चोदना धर्मे प्रमाणम् अन्यदप्रमाणम्, तत्सयोगज प्रत्यक्षम् अतत्सयोगजमाभासम्, ज्योतिष्टोमादि पुण्य ब्रह्महत्यादि पापम्, तदुभयविलक्षणमभ्युदयप्रत्यवायात्मकं तेषा फलम्, विधेरर्थः प्रवर्त्तनम्, अर्थवादस्य प्ररोचनमर्थः, मन्त्राणामनुष्ठेयप्रकाशनम्, नामधेयानां गुणफलविधानार्थत्वविचारः, आदिशब्दोपात्तश्च स्मृत्याचारप्रामाण्याप्रामाण्यविचारः, तथा शब्दान्तरश्रुतिलिङ्गश्रुत्यर्थादिभिः कर्मभेदशेषत्वक्रमनियमाः, वचनव्यक्तिभेदेन वाक्यार्थचिन्ता, कर्माणि कानिचिदामुष्मिकस्वर्गफलानि कानिचिदनियतफलानि, कानिचिदैहिकवृष्ट्यादिफलानीत्यादिव्यवहारः, स सर्वश्चोदनादीनामभावादयुक्तः स्यात्। अतोऽवश्यं **धर्मार्थिभिः** पुरुषैः सुगताशीविपोपसृष्टमाहायानिकविषचिकित्सया बाह्यार्थसद्भावे **लोकसम्मतप्रमाणादौ** बाधनेन **यत्नः** कर्त्तव्यः **क्रियां प्रति** क्रियानुष्ठानम्, तत्सिद्ध्यर्थमित्यर्थः॥ १-४॥

चोदयति—

**यदा संवृतिसत्येन सर्वमेतत् प्रकल्प्यते।**
**ज्ञानमात्रेऽपि कस्माद्वो वृथाग्रहो[1]ऽर्थकल्पने॥ ५॥**

**शाक्याः** प्राहुः—

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।
लोके संवृतिसत्यं च सत्यं च परमार्थतः॥ (म० शा० २४-८) इति।

तेन तद्वदेव भवतामपि संवृतिसत्येन बाधेन पूर्वोक्तसमस्तव्यवहारसिद्धेः पारमार्थिकार्थसद्भावकल्पने वृथैवाभिनिवेश इति।

परिहरति—

**संवृतेर्न तु सत्यत्वं सत्यभेदः कुतोऽन्वयम्।**

मिथ्यापर्यायस्य संवृतिशब्दस्य न सत्यशब्देन सामानाधिकरण्यम्, न हि सत्यस्य मिथ्यात्वपरमार्थरूपेण भेदोऽस्ति, परमार्थस्य हि सत्यशब्दो वाचकः, न त्वक्षादिशब्दवदनेकार्थं इति। एतदेव विवृणोति—

**सत्या[2] चेत् संवृतिः केयं मृषा चेत् सत्यता कथम्॥ ६॥**

सत्यं नानेकार्थः सत्यत्वमेव वदति, तत्तु मृषात्वेऽप्यनुगतमिति तद्वचनेन संवृतिशब्देन सामानाधिकरण्यं सिध्यति, अत आह—

**सत्यत्वं न च सामान्यं मृषार्थपरमार्थयोः।**

---

१. वृथाग्राहः—पाठान्तरम्।
२. सत्यं—मु० पा०।

कारणमाह—

**विरोधात्,**

मृषात्वविपरीत सत्यत्वं कथं तत्रानुवर्त्तेतेति । अत्रैव दृष्टान्तमाह—

**न हि वृक्षत्वं सामान्यं वृक्षसिंहयोः ॥ ७ ॥**

तेन मिथ्यावचनोऽप्ययं संवृतिशब्दो बौद्धैः स्वनास्तिक्यपरिहाराय लोकं वञ्चयितुं प्रयुक्तो लालायामिव वक्त्रासवशब्द इत्याह—

**तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः ।**

**वञ्चनार्थं उपन्यासो लालावक्त्रासवादिवत् ॥ ८ ॥**

**नास्तिक्यपरिहारार्थं[1] संवृतिः,**

काल्पनिकेनैव बाह्येन सर्वव्यवहारसिद्धिरित्यपि **बौद्धानां** कल्पनावाचोयुक्तिः संवृतिवाचोयुक्तिवद् वञ्चनार्थैव, न हि निर्वस्तुके जगति अभिन्नस्य चिन्मात्रस्य विचित्रव्यवहाराय भेदकल्पना सम्भवतीत्याह—

**कल्पनेति च ।**

**कल्पनापि त्वभिन्नस्य नैव निर्वस्तुके भवेत् ॥ ९ ॥**

उपसंहरति—

**तस्माद् यन्नास्ति नास्त्येव, यस्त्वस्ति परमार्थतः ।**

**तत् सत्यमन्यन्मिथ्येति[2], न सत्यद्वयकल्पना ॥ १० ॥**

यत् खलु परमार्थतो नास्ति तन्नास्त्येव, न तु सत्यम् । यदेव परमार्थतोऽस्ति तदेव सत्यं नान्यत् । तद्धि मिथ्यैव कथं सत्यं स्यान्न तु सत्यद्वयमस्तीति.। किञ्च, संवृतित्वे प्रपञ्चस्य स्वप्नसुखोपभोगवत् स्वर्गाद्युपभोगोऽपीत्याश्रीयेत, अतस्तन्निराकरणाय परमार्थे प्रयतितव्यमित्याह—

**स्वप्नादिभोगवच्चापि योपभोगत्वकल्पना ।**

**तन्निवृत्त्यर्थमेवेह परमार्थे प्रयत्यते ॥ ११ ॥**

तत्तुल्यत्वे वा को दोषः ? अत आह—

**न हि स्वप्नसुखाद्यर्थं धर्मे कश्चित् प्रवर्तते ।**

किमिति न प्रवर्त्तते ? अत आह—

**यादृच्छिकत्वात् स्वप्नस्य तूष्णीमास्येत पण्डितैः ॥ १२ ॥**

अनिरूपितनिमित्तं हि स्वप्नसुखं, न तदभिसन्धाय प्रवृत्तिः सम्भवतीति । तेनार्थस्य पारमार्थिकत्वसिद्ध्यर्थं बाह्यविषयत्वं प्रतीतेः साधयितव्यमित्याह—

**परमार्थफलावाप्तिमिच्छद्भिस्तेन यत्नतः ।**

**प्रतिपत्तिर्विधातव्या युक्तिभिर्बाह्यवस्तुषु ॥ १३ ॥**

---

१. परिहासार्थमिति क्वचित् ।

२. मिथ्यैव—इति पाठान्तरम् ।

किमु पुनर्बाह्यस्यैव सद्भाव प्रतिपाद्यते न ज्ञानस्य, तदपि कैश्चिदपह्नुतम्, अत आह त्रयेण—

**तत्रार्थशून्यं विज्ञानं योगाचाराः समाश्रिताः ।**
**तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥ १४ ॥**
**तत्र बाह्यार्थशून्यत्वं तुल्यं तावद् द्वयोरपि ।**
**निवृत्त्यास्य[1] ततो ज्ञाने तद्वत् संवृतिकल्पना ॥ १५ ॥**
**तस्मात् साधारणत्वेन तन्मूलत्वेन चाप्ययम् ।**
**बाह्यार्थसदसद्भावे यत्नो भाष्यकृता कृतः ॥ १६ ॥**

ज्ञानापह्नववादिनोऽपि प्रथममर्थमपह्नुत्य निर्विषयज्ञानानुपपत्तेः ज्ञानमपह्नुवते, तेनार्थापह्नवो द्वयसाधारणत्वात्, ज्ञानापह्नवस्य च तन्मूलस्य तन्निराकरणेनैव निराकरणसिद्धेस्तदेव निराक्रियत इति ॥ १६ ॥

**भाष्यकारेण** प्रमाणशक्तिपरीक्षाद्वारेण बाह्यापह्नवो निराकृत, न तु प्रमेयपरीक्षाद्वारा । तत्र कारणमाह सार्द्धेन—

**बाह्यार्थापह्नवेऽद्वैतमेकाथस्य[2] परीक्षणात् ।**
**प्रमाणमाश्रितश्चैकस्तत्रास्तां यः प्रमेयतः ॥ १७ ॥**
**प्रमाणस्थस्तु मूलत्वादिहेदानीं परीक्ष्यते ।**

प्रमाणबलेनैव बाह्यार्थे व्यवस्थापिते यदिदमवयविनोऽवयवातिरेकेणानुपलब्धेः परमाणूनां चातीन्द्रियत्वान्न बाह्यं ग्राह्यं सम्भवतीति चोद्यं तत् प्रमाणबलेनैव निरस्तं भवतीति प्रमाणबलेनैव परीक्षितु युक्तमिति ।

प्रमाणस्थोऽप्यपह्नवो द्विविध इत्याह—

**प्रस्तुतः स द्विधा चात्र प्रथमं त्वनुमानतः ॥ १८ ॥**
**प्रत्यक्षबाधने चोक्ते पश्चात् तच्छक्त्यवेक्षणात् ।**

भाष्यतात्पर्यमाह—

**तत्रानुमानमाहेदं नन्विति,**

का पुनरस्य सङ्गतिः ? तां द्वेधा दर्शयति—

**अस्य च सङ्गतिः ॥ १९ ॥**
**तत्सम्प्रयोगजं नाम[3] प्रत्यक्षमिति भाषितम् ।**
**तत्रेन्द्रियार्थसम्बन्धभेदो न परमार्थतः ॥ २० ॥**
**कल्पितः सम्प्रयोगस्तु स्वप्नादावपि विद्यते ।**
**तदतद्योगजन्यस्य[4] विभागस्तेन दुर्लभः ॥ २१ ॥**

---

१. निवृत्त्यर्थम्—२ पु० । अस्येति । अर्थस्येति भावः ।

२. बाह्यार्थापह्नवो द्वैधमेकोऽर्थस्य—२ पु० ।

३. नान्यदिति पाठान्तरम् ।

४. ०योगजत्वस्य—२ पु० ।

**मिथ्यात्वं यद् द्विधैवोक्तं[1] नान्यथेत्यत्र चोच्यते ।**
**सर्वस्यैव च मिथ्यात्वे किं विशिष्याभिधीयते[2] ॥ २२ ॥**

पारमार्थिकं तत्सम्प्रयोगजत्वं न क्वचिदस्ति, काल्पनिकं त्वाभासेऽपि विद्यते, तदपि नातत्सम्प्रयोगजं स्यात्। तथा सत्यमिथ्याविभागोऽप्ययुक्तः, सर्वस्य मिथ्यात्वादिति पूर्वोक्ताक्षेपेण सङ्गतिरिति ॥ २२ ॥

भाष्योक्तमनुमानमुपन्यस्यति—

**स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात् तथा हि यः ।**
**प्रत्ययः स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा ॥ २३ ॥**

भाष्ये सर्वशब्दः स्वप्नादिप्रत्ययानपि पक्षीकरोतीति लक्ष्यते, तत् कथं स्तम्भादिप्रत्यय इत्युच्यते ? तत्राह सार्द्धेन—

**सिद्धसाधनभावोंऽशे[3] दृष्टान्ताभाव एव च ।**
**मा भूतामेवशब्दश्च व्यर्थोऽशेषप्रसाधने ॥ २४ ॥**
**सर्व एवेति तेनात्र जाग्रद्बुद्धिपरिग्रहः ।**

तेष्वपि हि पक्षीकृतेषु तस्मिन्नंशे सिद्धसाधनता दृष्टान्ताभावश्च स्याताम्, एवशब्दश्च नोपपद्येत। स हि येन सम्बध्यते तत्प्रतियोगिनं व्यवच्छिनत्ति, साकल्यवचनश्च सर्वशब्द इति तत्समस्तपक्षगतो वैकल्यव्यवच्छेदार्थः। तेन जाग्रद्बुद्धिपरिग्रहार्थ एवशब्दः, न कश्चिदेव प्रत्ययो निरालम्बनः किन्तु सर्व एवेति।

एवं सर्वशब्दं विशेषपरं व्यवस्थाप्य धर्मवचनमपि निरालम्बनपदं बाह्यानालम्बनत्वेन व्यवस्थापनीयम्, अन्यथा बौद्धस्य स्वाभ्युपगतस्वांशालम्बनत्वविघातादिति आह—

**स्वांशाभ्युपगमाच्चापि बाह्यग्राह्यनिवारणम् ॥ २५ ॥**

प्रत्ययस्येति[4] भाष्यार्थमाह—

**प्रत्ययस्येति साध्यांशव्याप्तहेतुनिदर्शनम् ।**

ननु भाष्ये न कश्चिद्धेतुरुक्तः, यस्य प्राप्तिर्निर्दिश्येत ? इत्यत आह—

**हेतुश्चोपनयेनात्र जाग्रतोऽपीति दर्शितः ॥ २६ ॥**

उपनयो नामोदाहरणोपदर्शितसाध्यनियमस्य हेतोः साध्यधर्मिण्युपसंहारः। तदिह "प्रत्ययस्य हि" इत्यादिनोदाहरणीयस्य प्रत्ययस्य निरालम्बनत्वेन नियमं दर्शयित्वा "जाग्रतोऽपि" इत्यादिना जाग्रद्बुद्धावुपसंहारः कृतः, तदेव प्रत्ययत्वं हेतुरुक्तं भवति। नावश्यं पञ्चम्यैव हेतुर्निर्देष्टव्यः। उदाहरणोपनयनिगमनैरपि ह्यविकलमेव साधनं निगमनं च "तस्मात् सोऽपि" इत्यनेन दर्शितमिति ॥ २६ ॥

---

१. द्विधेति । विभज्येत्यर्थः ।
२. विशेष्य०—१ पु० ।
३. ०भावांशे—मु० पा० ।
४. प्रत्यक्षस्येति—मु० पा० ।

ननु यन्निरालम्बनं न भवति तत्प्रत्ययो न भवतीति विपक्षाद् व्यतिरेकः किं नोक्तः ? अत आह—

**विपक्षाभावतश्चात्र व्यतिरेको न कथ्यते ।**

ननु[1] निरालम्बन. प्रत्ययत्वादित्युक्ते प्रतिज्ञार्थैकदेशता हेतोः स्यादत आह—

**सामान्यस्य च हेतुत्वात् कस्मात् पक्षैकदेशता ॥ २७ ॥**

न हि[2] निरालम्बनज्ञानमात्रवादिना तदतिरिक्तमस्ति तत्त्वम् तदभावादेव तत्र हेतोरप्रवृत्तेः किं व्यतिरेककथनेनेति ॥ २७ ॥

इति पूर्वपक्षभाष्यव्याख्या[3]

ननु "प्रत्यये जाग्रतो बुद्धि सुपरिनिश्चिता कथ विपर्येष्यति" ( शा० भा० पृ ३५ ) इति सिद्धान्तभाष्यम्, तदाक्षिपति द्वयेन—

**जाग्रज्ज्ञाने[4] विशेषोऽयं यतः सुपरिनिश्चयः ।**
**बाह्यालम्बनसम्बन्धो न प्रसिद्धः परं प्रति ॥ २८ ॥**
**तस्माद् यद् भाष्यकारेण दत्तमुत्तरमत्र तु ।**
**विकल्पसमता वा स्याद् वैधर्म्यसमतापि वा ॥ २९ ॥**

योऽय स्वप्नादिभ्यो जाग्रज्ज्ञानस्य सालम्बनत्वसाधनाय सुपरिनिश्चयरूपो विशेषोऽभिहित , स यस्मात् सालम्बनत्वव्याप्ततया परेषामसिद्ध , तस्माद्विकल्पसमा वैधर्म्यसमा वा जातिरियम् । प्रत्ययत्वे तुल्येऽपि यथा किञ्चित् सुपरिनिश्चित किञ्चिन्न, तथा किञ्चिन्निरालम्बन किञ्चित् सालम्बन भविष्यतीति विकल्पसमा । यदि प्रत्ययत्वेन साधर्म्यान्निरालम्बनत्व सुपरिनिश्चितत्वेन वैधर्म्यान्निरालम्बनत्व न स्यादिति वैधर्म्यसमा । तदेव तज्जात्युत्तर साधनमिति ॥ २९ ॥

तत्र केषाञ्चिन्मतेन समाधत्ते—

**दुष्टत्वात् पूर्वपक्षस्य जात्युक्तिः कैश्चिदाश्रिता ।**

स्वमत आह—

**प्रतिज्ञादोषमेवाहुः केचित् प्रत्यक्षबाधनम् ॥ ३० ॥**

नेद सुपरिनिश्चितत्वं लिङ्गत्वेनोच्यते, किन्तु सुपरिनिश्चितरूपा जाग्रत. प्रत्यक्षादिरूपा बुद्धिर्बाह्य सुपरिनिश्चितं व्यवस्थापयन्ती तदभावप्रतिज्ञां बाधत इति । प्रत्यक्षग्रहणं सर्वप्रमाणोपलक्षणार्थम्, सर्वाणि हि बाह्य व्यवस्थापयन्तीति ॥ ३० ॥

ननु नीलादिमात्रं प्रत्यक्षेण गृह्यते, तच्च ज्ञानरूपमपि सम्भवतीति नावश्यं बाह्यमेवेति कथं बाह्याभावस्य प्रत्यक्षबाधः ? अत आह—

---

१. न हि—मु० पा० ।
२. मु० पुस्तके नास्ति ।
३. इदं नास्ति १ पु० ।
४. जाग्रज्ज्ञावे—१ पु० ।

**शक्ष्यामो यदि विस्पष्टं स्वांशग्राह्यनिवारणम् ।**
**तदा ते शुद्ध एव स्यात् पक्षो ग्राह्यनिवारणः ॥ ३१ ॥**

स्वांशस्य ग्राह्यत्वासम्भवे सिद्धे बाह्यग्राह्यनिवारणोऽपि पक्ष फलतः शुद्ध एव ग्राह्यमात्रनिवारणः स्यादित्यस्ति तदुपस्थापकप्रत्यक्षविरोध इति ॥ ३१ ॥

यद्वा, यदा स्वांशस्य ग्राह्यत्व निरस्तम्, तदा बाह्यस्यैव प्रत्यक्षादिग्रहणाद् बाह्याभावप्रत्यक्षस्याप्यस्त्येव प्रत्यक्षादिविरोध इत्याह—

**प्रत्यक्षादेश्च विषयो बाह्य एवावतिष्ठते[1] ।**
**तन्निषेधकृतस्तस्य तैर्भवेत् पक्षबाधनम् ॥ ३२ ॥**

सुपरिनिश्चितत्वं च भाष्ये प्रत्यक्षादीना निरालम्बनानुमानाद् बलीयस्त्वं कथयितुम्, न तु लिङ्गत्वेनेत्याह—

**सुनिश्चयेन चैतेषां बाधकप्रत्ययाद् ऋते ।**
**प्रमाणाभासता नास्तीत्येतस्मात् कथ्यते बलम् ॥ ३३ ॥**

एतदेव विवृणोति—

**दुष्टज्ञानगृहीतार्थप्रतिषेधो हि युज्यते ।**
**गृहीतमात्रबाधे तु स्वपक्षोऽपि न सिध्यति ॥ ३४ ॥**

स्वपक्षासिद्धिमेव प्रपञ्चयितुमारभते—

**अग्राह्यत्वाच्च भेदेन विशेषणविशेष्ययोः ।**
**अप्रसिद्धोभयत्वं वा वाच्यमन्यतरस्य वा ॥ ३५ ॥**

प्रत्ययरूपधर्मिग्राहकस्य निरालम्बनरूपधर्मग्राहकस्य च प्रत्ययस्य निरालम्बनत्वात् अप्रसिद्धविशेष्यत्वम्, अप्रसिद्धविशेषणत्वम्, अप्रसिद्धोभयरूपत्वं वा पक्षदोषः स्यादिति ॥ ३५ ॥

स्ववचनविरुद्धश्चाय पक्ष इत्याह—

**वक्तृश्रोत्रोश्च यज्ज्ञानं विशेषणविशेष्ययोः ।**
**तन्निरालम्बनत्वेन स्ववाग्बाधो द्वयोरपि ॥ ३६ ॥**

धर्मधर्मिविषयस्यापि वक्तृश्रोत्रोः प्रत्ययस्य निरालम्बनत्वेनाङ्गीकृतस्यैव धर्मस्य धर्मिणश्च बाधादुभयोः स्यात् स्ववाग्विरोध इति ॥ ३६ ॥

किञ्च, विशेष्यात् प्रत्ययाद् विशेषणस्य निरालम्बनत्वस्याभेदे विशेषणत्वानुपपत्तिः, भेदस्तु न सम्भवति, भेदग्राहिणः प्रत्ययस्य निरालम्बनत्वादित्याह—

**सम्भवो न च भेदस्य[2] विशेषणविशेष्ययोः ।**

उपसंहरति—

**तस्मान्निरूपणं नास्ति प्रतिज्ञार्थस्य शोभनम् ॥ ३७ ॥**

---

१. अवशिष्यते—२ पु० ।

२. बोधस्य इति पाठान्तरम् ।

चोदयति—

**निरालम्बनता नाम न किञ्चिद् वस्तु गम्यते ।**
**तेन तद्व्यतिरेकादौ प्रश्नो नैवोपपद्यते ॥ ३८ ॥**

परिहरति पादत्रयेण—

**यद्यवस्तु कथं त्वस्मांस्त्वं बोधयितुमिच्छसि ।**
**बुध्यसे वा स्वबुद्ध्या त्वम्,**

शङ्कते—

**कल्पिता त्वथ साध्यते[1] ॥ ३९ ॥**

दूषयति—

**असतः कल्पना कीदृक्,**

कल्पना हि ज्ञानम्, न च तुच्छस्य तद्विषयत्वं सम्भवतीति ।

तद्विषयत्वे चार्थक्रियालक्षणत्वात् सत्त्वस्य तुच्छत्वानुपपत्तिरित्याह—

**क्लृप्तौ वस्तु प्रसज्यते ।**

चोदयति—

**कथमिष्टमभावे चेद्,**

अभावस्यावस्तुनोऽपि ज्ञानविषयत्व दृष्टमिति ।

परिहरति—

**वस्तु सोऽपीति वक्ष्यते ॥ ४० ॥**

यश्चायं धर्मिवचन प्रत्ययशब्द: स भावकर्मकर्तृकरणानामन्यतमं वदेत्, कर्तृभावादिषु स्ववाग्विरोध , कर्मणि सिद्धसाधनमित्याह—

**तथा प्रत्यय इत्येष कर्म भावादि वा भवेत् ।**
**भावादिषु विरोधः स्यात् कर्म चेत्सिद्धसाधनम् ॥ ४१ ॥**

सिद्धसाधनमेव विवृणोति—

**प्रत्याय्यस्य हि रूपादेर्निरालम्बनतेष्यते ।**

कथमिष्यते ? अत आह—

**अविज्ञानात्मकत्वेन किञ्चिन्नालम्बते ह्यसौ ॥ ४२ ॥**

कर्तृकरणवचनत्वे तु धर्मधर्मिप्रतिपादकयोरपि शब्दयोर्विवक्षावशेन प्रतीतौ करणत्वसम्भवात् तयोरपि निरालम्बनत्व स्यात्, शब्दस्य च निरालम्बनत्वमभिधेयशून्यत्वं नान्यत्, अतश्च पक्षस्यैवाभाव: प्रतिज्ञातः स्यादित्याह—

**कर्तृत्वे करणत्वे वा पक्षत्वं शब्दयोरपि ।**
**तन्निरालम्बनत्वेन पक्षाभावः प्रसज्यते ॥ ४३ ॥**

---

१. कल्पयित्वाथ साध्यते—पाठान्तरम् ।

"भावादिषु विरोध स्यात्" ( श्लो० ४१ ) इति यदुक्तम्, तद्विवृणोति—

**प्रत्याय्येन च भिन्नेन विना कर्त्राद्यसम्भवः ।**
**प्रत्यये तन्निमित्ते वा बाधः स्ववचनेन ते ॥ ४४ ॥**

भावे तावत् प्रतीतिः=प्रत्ययः, सा च वस्त्वन्तरप्रकाशस्वभावेति उद्दिष्टमात्रैव सालम्बना प्रतीतेति तन्निमित्तप्रत्ययशब्देन धर्म्युक्त्यैव निरालम्बनत्वस्य बाधः, तत्सालम्बनतयैव कर्तृकरणयोरपि [1]तद्द्वारेण सालम्बनत्वात् स एव दोष इति ॥ ४४ ॥

यदि तु रूढ एव प्रत्ययशब्दः, तथापि स्ववाग्विरोध इत्याह—

**अथापि रूढिरूपेण प्रत्ययः स्यात् तथापि तु ।**

कारणमाह—

**ग्राहकं वस्तु सिद्धं नः प्रत्ययोऽन्यस्य वस्तुनः ॥ ४५ ॥**

प्रत्ययशब्दस्यार्थान्तरग्राहकवस्तुवचनता लोकसिद्धेति ॥ ४५ ॥

तादृश च प्रत्ययमभ्युपेत्य निरालम्बनत्वसाधनेऽभ्युपगमविरोधोऽपीत्याह—

**तमभ्युपेत्य पक्षश्चेदभ्युपेतं विरुध्यते ।**

ईदृशश्च प्रत्ययस्तवासिद्ध इत्यप्रसिद्धविशेष्यता पक्षस्येत्याह—

**विशेष्यस्याप्रसिद्धिश्च तव,**

अतादृशे तु पक्षीकृतेऽस्माकमत्राप्रसिद्धविशेष्यत्वमित्याह—

**अस्माकमतादृशे ॥ ४६ ॥**

किञ्च, आत्मधर्मो वा प्रत्ययः पक्षीक्रियते, स्वतन्त्रो वा, पूर्वत्र तवाप्रसिद्धविशेष्यत्वम्, उत्तरत्र ममेत्याह—

**आत्मधर्मस्वतन्त्रत्वकल्पनेऽपि तथा भवेत् ।**

न चानिर्धारितविशेषं प्रत्ययमात्र पक्ष , तस्यानिरूपणादित्याह—

**न च प्रत्ययमात्रत्वं किञ्चिदस्त्यनिरूपणात् ॥ ४७ ॥**

नन्विद सर्वसाधनेषु शक्य वक्तुम्, नित्य. शब्द इति किमाकाशगुणः शब्दः ? कि वा वायवीय इत्यपि सम्भवात्; अथ तत्र शब्दशब्दवाच्यं पक्षः, तदिहापि प्रत्ययशब्दवाच्यमात्र सम्भवत्येवात आह—

**शब्दार्थमात्ररूपेण यथान्येषां निरूपणम् ।**
**तथा च भवतो न स्याद् वाच्यभेदमनिच्छतः ॥ ४८ ॥**

न ह्यसाधारणाद्[2] भिन्न शब्दार्थमात्रं सामान्य भवतामस्तीति ॥ ४८ ॥

एवं धर्मी विकल्प्य दूषितः, धर्ममपि निरालम्बनत्व विकल्प्य दूषयति—

**निरालम्बनता चापि[3] सर्वथा यदि साध्यते ।**
**विशेषणाप्रसिद्धिश्च दृष्टान्तश्च न विद्यते ॥ ४९ ॥**

---

१. तद्द्वारेणेति । प्रतीतिद्वारेणेत्यर्थः । २. असाधारणादिति । स्वलक्षणादित्यर्थः ।
३. चेह—पाठान्तरम् ।

स्वप्नादावपि देशकालान्तरावस्थितमस्त्येव, बाह्यं सन्निहिततद्देशकालसंसर्गमात्रं तु नास्ति, तेनात्यन्तं निरालम्बनं न किञ्चिदप्यस्तीत्यप्रसिद्धविशेषणता पक्षस्य, दृष्टान्तस्य च साध्यविकलतेति ॥ ४९ ॥

कथञ्चिन्निरालम्बनत्वे तु सिद्धसाधनमित्याह—

**केनचिच्चेत् प्रकारेण निरालम्बनतोच्यते ।**
**रसज्ञानस्य रूपादिशून्यत्वात् सिद्धसाधनम् ॥ ५० ॥**

रसज्ञानं रसालम्बनं रूपस्वरूपात्मना न विद्यत एवेति तदालम्बनत्वं तज्ज्ञानस्य नास्त्येवेति सिद्धसाधनमिति ॥ ५० ॥

अथ यदाभासा बुद्धिस्तस्यासत्त्वमुच्यते, ततः स्वांशस्य बोधानभ्युपगमात् [१]तदसत्त्वेऽभ्युपगमविरोध इत्याह—

**अथ बुद्धिर्यदाकारा तदालम्बनवारणम् ।**
**स्वाकारस्याभ्युपेतत्वात् तदभावो विरुध्यते ॥ ५१ ॥**

यदि तु बाह्यानालम्बनत्व साध्यते बाह्यं स्वातिरिक्तं नालम्बते बुद्धिरिति ॥ ५१ ॥

तत्रापि यदि बाह्य इत्येवमग्रहण साध्यते, तत. सिद्धसाधनमित्याह—

**बाह्यानालम्बनत्वेऽपि बाह्य इत्यग्रहो[२] यदि ।**
**स्तम्भादौ नैव तद्बुद्धिरित्येवं सिद्धसाधनम् ॥ ५२ ॥**

स्तम्भादिरूपेण त्वनालम्बनत्वे सविद्विरोध इत्याह—

**अथ स्तम्भादिरूपेण निरालम्बनतोच्यते ।**
**संवेदनस्य दृष्टत्वात् तद्विरोधः प्रसज्यते ॥ ५३ ॥**

शङ्कते—

**द्विचन्द्रादिषु तुल्यश्चेत्,**

तुल्योऽयमनालम्बनत्वाभिमतेष्वपि द्विचन्द्रादिज्ञानेषु संविद्विरोध इति ।

परिहरति—

**नेन्द्रियाप्राप्तितो हि नः ।**
**तत्रानालम्बनोक्तिः स्यान्नार्थसंवित्त्यभावतः ॥ ५४ ॥**

द्विचन्द्रबुद्धिरिन्द्रियाप्राप्तमर्थमविद्यमानमेव चन्द्रद्वित्वं गृह्णातीति कृत्वानालम्बना, न तु संवित्त्यभावादिति ॥ ५४ ॥

पूर्वत्र शुक्तिरजतसंवेदनेऽपीदृशमेवानालम्बनत्वं न संविदभावादित्याह—

**सर्वत्रार्थेन्द्रियाणां नः संयोगसदसत्तया[३] ।**
**संवित्तौ विद्यमानायां सदसद्ग्राहिका स्थितिः ॥ ५५ ॥**

---

१. तदसत्त्वे इति । स्वांशासत्त्वे इत्यर्थः ।

२. आग्रह इति क्वचित् ।

३. संयोगः०—मु० पा० ।

भवन्मते त्विन्द्रियादीनामभावात् तद्रूपग्रहणमेव तदालम्बनत्वम्, तन्निषेधे च स्फुट एव तद्विरोध इत्याह—

**भवतस्त्विन्द्रियादीनामभावाद् ग्रहणादृते ।**
**नालम्बनस्य[1] हेतुः स्यान्निषेधोऽतो न युज्यते ॥ ५६ ॥**

बाह्यानालम्बनत्वे बाह्य इत्यग्रहणे सिद्धसाधनमुक्तम् । अथ यद्वस्तुतो बाह्यं तदनालम्बनत्वं साध्यते, ततोऽप्रसिद्धविशेषणः पक्ष. स्याद्, बहिर्भावरूपस्यार्थस्य भवतामप्रसिद्धत्वात् तद्विशिष्टेन निरालम्बत्वेन विशिष्टः प्रत्ययो न साधयितु शक्यत इत्याह—

**बहिर्भावाप्रसिद्धत्वात् तेनानालम्बना मतिः ।**
**कथञ्चित्[2] साध्यते नैष पक्षो हि ज्ञायते तदा[3] ॥ ५७ ॥**

ननु विशेषणाप्रसिद्धिर्दोषः, न तु विशेषणविशेषणाप्रसिद्धिरत आह—

**यथान्यबोधनाशक्तेर्नाप्रसिद्धे विशेषणे ।**
**पक्षसिद्धिस्तथैव स्याद्[4] विशेषणविशेषणे[5] ॥ ५८ ॥**

कथमन्यबोधनाशक्तिः ? अत आह—

**नाप्रसिद्धे पदार्थे हि वाक्यार्थः सम्प्रतीयते ।**
**तत्पूर्वकत्वात् पक्षश्च वाक्यार्थः स्थापयिष्यते ॥ ५९ ॥**

बहिर्भावादिपदार्थविशिष्टो हि पक्षः, स वाक्यार्थरूपत्वादप्रसिद्धेषु पदार्थेषु न ज्ञायत इति ॥ ५९ ॥

व्यतिरिक्तानालम्बनत्व च साधयता यदि पर्युदासाङ्गीकरणेनाव्यतिरिक्तमालम्बत इति साध्यते, यदि वा प्रतिषेधाङ्गीकरणेन व्यतिरिक्तं नालम्बते इति साध्यते[6]—द्वेधापि सिद्धसाधनम्, प्रमेयत्वरूपेण सर्वस्य सर्वस्मादव्यतिरेकादित्याह—

**पर्युदासे[7] निषेधे वा व्यतिरिक्तस्य वस्तुनः ।**
**प्रमेयत्वाद्यभेदेन जगतः सिद्धसाधनम् ॥ ६० ॥**

व्यतिरिक्तत्वं च यद्यप्यात्यन्तिक तथापि तस्य क्वचिदप्यभावात् तदनालम्बनत्वे सिद्धसाधनमेवेत्याह—

---

१. नालम्बनत्वहेतुः—का० । नालम्बनत्वे हेतुः—मु० पा० ।
२. कथं च—२ पु० ।
३. यदा—२ पु० ।
४. तवेह स्यादिति पाठान्तरम् ।
५. विशेषेण विशेषणे इति क्वचित् ।
६. साध्यते इति नास्ति १ पु० ।
७. तद्भिन्नत्वे सति तत्सदृशार्थबोधजनकत्वं पर्युदासत्वम् ।

**यदि चात्यन्तभेदेन[1] निरालम्बनतोच्यते ।**

सिद्धसाधनम्—इत्यतीतेनान्वय इति ।

यदि तु कथञ्चिद् भिन्न नालम्बत इत्युच्यते, तत प्रमेयाकारस्य नीलादे. प्रमाणाकारस्य च सविद्रूपस्य काल्पनिकभेदाभ्युपगमात् तद्विरुद्धः पक्ष इत्याह—

**कथञ्चिच्चेद् विरुध्येत प्राक्पक्षः कल्पितेन ते ॥ ६१ ॥**

अन्यथा सिद्धसाधन दर्शयति—

**वस्त्वाद्याकारतश्चापि धीर्निरालम्बनेष्यते ।**

बुद्धिर्ह्यसाधारणेन संविद्रूपेणार्थमालम्बते, व्योमादिसाधारणेन तु जडरूपेण वस्त्वाकारेणनालम्बनैवेति ।

यदि तु ग्राह्यमेव पक्षीकृत्य ग्राहकादभिन्नमिति साध्यते, तथापि काल्पनिकशक्तिभेदाभ्युपगमेन विरोध ,प्रमेयत्वाद्यभेदाच्च सिद्धसाधनमित्यभिप्रायेणाह—

**ग्राहकाच्चेदभिन्नत्वं शक्तिभेदो विरुध्यते ॥ ६२ ॥**

यदि तु सर्वप्रकारासम्भवान्निरालम्बनबुद्ध्युत्पत्तिमात्रमेव चिकीर्षितम्, तदस्तु नाम, सा तु बुद्धिर्बाह्यग्राह्यवर्जिता मिथ्याभूतेत्येतावदस्माभिरुच्यत इति आह—

**निरालम्बनबुद्धेश्च यद्युत्पत्तिः प्रसाध्यते ।**
**दृष्टत्वात् सेष्यतेऽस्माभिर्बाह्यग्राह्यविवर्जिता ॥ ६३ ॥**

त्वयापि नास्याः सम्यक्त्वमर्थान्तरालम्बनत्वमिष्यते, बुद्ध्यान्तरवदियमपि स्वांशपर्यवसायिन्येव, अन्यथा[2] तत्रैव हेतुरनैकान्तिकः स्यादित्याह—

**सम्यक्त्वं पुनरेतस्यास्त्वं नेच्छसि कथञ्चन ।**
**आत्मांशेऽवसिता ह्येषा मृगतृष्णादिबुद्धिवत् ॥ ६४ ॥**

किञ्च भवदीयसाधनोत्थिता अनुमानबुद्धिरियम्,साप्यात्मांशपर्यवसायिन्येवेति[2] तया प्रत्ययान्तराणां धर्मतया निरालम्बनत्वं न गृहीतमिति प्रतियोगिभूतेन निरालम्बनत्वेनानिराकृता सती स्वरसप्राप्ता सालम्बनता न केनचिद् वारिता स्यादित्याह द्वयेन—

**चैत्रादिप्रत्ययानां च निरालम्बनता यदि ।**
**धर्मभूता न गृह्येत साधनोत्थितया[3] धिया ॥ ६५ ॥**
**ततो विषयनानात्वात् प्रति[4]योग्यनिराकृता ।**
**रूपात् सालम्बनप्राप्तिः सती केन निवार्यते ॥ ६६ ॥**

यदि धर्मिवचनेन प्रत्ययशब्देन स्वरूपपरेण प्रत्ययशब्दमेव पक्षीकृत्य तत्सवि-

---

१. अत्यन्तभिन्नेन—२ पु० ।
२–२. अयं टीका ग्रन्थो नास्ति २ पु० ।
३. साधनोज्झितया—१ पु० ।
४ प्रतियोगीति । विरोधीत्यर्थः ।

त्यालम्बनत्व स्तम्भादीना वार्यते, प्रत्ययशब्दो निरालम्बन न किञ्चिदवलम्बते, न किञ्चिज्जानाति, तत सिद्धसाधनम्, अचेतनत्वात् तस्येत्याह—

**यदि प्रत्ययशब्दोऽपि प्रत्ययत्वेन गृह्यते ।**
**संवित्त्यालम्बनत्वं च वार्यते, सिद्धसाधनम् ॥ ६७ ॥**

यदि तु बुद्ध्यनुत्पादकत्वं निरालम्बनत्ववचनत्वम्, तथा सत्यज्ञानात्सिद्धिः साध्यधर्मिणोर्न स्यादित्याह—

**बुद्ध्युत्पादनशक्तिश्चेद् वार्या, साध्यं न सिध्यति ।**

कारणमाह—

**साधनस्य प्रयोगोऽत्र बोधकत्वाद् विना न ते ॥ ६८ ॥**

न हि धर्मिनिर्देशकस्य प्रत्ययशब्दस्यावबोधकत्वे साधनप्रयोगः सम्भवतीति ॥ ६८ ॥

पूर्वाभ्युपगमविरुद्धश्चायं पक्ष इत्याह त्रयेण—

**न चाभिधास्त्यसम्बन्धादृते भेदाच्च नास्त्यसौ ।**
**न चासौ तद्गतं भेदं बोधयन्त्या धिया विना ॥ ६९ ॥**
**प्राश्निकैरगृहीते[1] च वाक्यस्यावयवे पृथक् ।**
**पक्षे हेतौ च दृष्टान्ते वादिनि प्रतिवादिनि ॥ ७० ॥**
**साधनस्याप्रयोगः स्यादभ्युपेत्योच्यते यदि ।**
**पूर्वाभ्युपगमेनैव प्रतिज्ञा बाध्यते[2] ततः ॥ ७१ ॥**

साधनवाक्यगताना शब्दाना तद्वाच्याना च मिथो भेद सम्बन्धम्, तथा प्राश्निकाना च साधनावयवतद्वाच्यपक्षादिवादिप्रतिवादिविषय यज् ज्ञानं, तस्य सालम्बनत्वनमङ्गीकृत्य साधन प्रयोक्तव्यं, तदङ्गीकरणे च तेनैव प्रतिज्ञा बाध्येति ।

किञ्च, धर्माधर्मोपदेशानुमितबुद्धाभिप्रायविरुद्धोऽयं बाह्यापह्नवः, न ह्यनभिप्रेते धर्मादिभेदे तदुपदेशानुष्ठानमवकल्पत इत्याह—

**धर्माधर्मादिभेदे च नासिद्धे परमार्थतः ।**
**शिष्यात्मनोश्च धर्मादेरुपदेशोऽवकल्पते ॥ ७२ ॥**
**तदनुष्ठानतो बुद्धैरिष्टो भेदः,**

शिष्यात्मनोश्च असिद्धे भेद इत्यनुषङ्गः । साक्षादेव बाह्यसद्भावः, स धर्मसमाख्याते[3] सूत्रे बुद्धेनोक्तः, तेनापि बाधः पक्षस्येत्याह—

१. नागृहीते—मु० पा० । २. साध्यते—मु० पा० ।
३. तथा हि—देशना लोकनाथना सत्त्वाशयवशानुगा ।
भिन्नापि देशनाऽभिन्ना शून्यताद्वयलक्षणा ।
गम्भीरोत्तानभेदेन देशना बहुधा मता ॥ इति ।

**स्फुटं च तैः।**

**सूत्रान्तरेऽभ्युपेतत्वाद् भवेदागमबाधनम् ॥ ७३ ॥**

सर्वलोकप्रसिद्धस्य बाह्यस्यापह्नवस्तेनैव साध्यत इत्याह—

**सर्वलोकप्रसिद्धया च पक्षबाधोऽत्र ते ध्रुवम्।**

किञ्च, त्वदीयसाधनगतपदार्थवाक्यार्थज्ञानानां सर्वेषां मिथ्यात्वे सर्वस्य साधनस्याभावो यथेष्ट पक्षादिन्यूनत्वं वा शक्यं वक्तुमित्याह—

**कृत्स्नसाधनबुद्धिश्च यदि मिथ्येष्यते ततः ॥ ७४ ॥**

**सर्वाभावो यथेष्टं वा न्यूनता वाभिधीयते[1]।**

अमिथ्यात्वे तैरेव हेतुरनैकान्तिकः स्यादित्यह—

**तेषां सालम्बनत्वे वा तैरनैकान्तिको[2] भवेत् ॥ ७५ ॥**

शङ्कते—

**तदन्यस्य प्रतिज्ञा चेत्,**

दूषयति—

**तदन्यप्रत्ययो मृषा।**

ततः किम् ? इत्याह—

**तन्मिथ्यात्वप्रसङ्गे च सर्वं पूर्वं न सिध्यति ॥ ७६ ॥**

अन्यत्वग्राहिप्रत्ययमिथ्यात्वे हि सर्वं साधन न सिध्यतीति ॥ ७६ ॥

कथं न सिध्यति ? इत्यत आह—

**स्तम्भादिसाधनज्ञानभेदो न हि तथा[3] भवेत्।**

अन्यत्वज्ञानमिथ्यात्वे हि अन्यत्वं न स्यात्, तदभावे च स्तम्भादिज्ञानवदेव साधनत्वज्ञानस्यापि मिथ्यात्वात् साधनासिद्धिरिति।

यदि तु तदन्यत्वग्राहिप्रत्ययव्यतिरिक्तः प्रत्ययः पक्षीक्रियते, ततस्तद्व्यतिरेकग्राहिप्रत्ययस्य मिथ्यात्वात् सर्वस्य पूर्वस्यासिद्धिः, एवं ततः परमपि वक्तव्यमित्याह—

**यावद् यावत् प्रतिज्ञेयं तदबाह्यस्य प्रतीयते[4] ॥ ७७ ॥**

**तावत्तावत् परेषां स्यान्मिथ्यात्वादन्यबाधनम्।**

---

१. न्यूनत्वाद्यभिधीयते—२ पु०।

२. अनैकान्तिका—२ पु०।

३. यथा—मु० पा०।

४. प्रणीयते—१ पु०।

ये चेमे प्रथमपक्षात् प्रभृति तदन्यप्रतिज्ञादिभिः पक्षा दर्शिताः, तेषु सर्वेषु विरुद्धाव्यभिचारित्वं हेतोः, अनुमानबाधो वा प्रतिज्ञायाः स्यादित्याह—

**विरुद्धाव्यभिचारित्वं बाधो वाप्यनुमानतः ॥ ७८ ॥**

कथम् ? इत्याह—

**इत्थं सर्वेषु पक्षेषु वक्तव्यं प्रतिसाधनम् ।**

तदेव दर्शयति—

**बाह्यार्थालम्बना बुद्धिरिति सम्यक् च धीरियम् ॥ ७९ ॥**
**बाधकापेतबुद्धित्वाद् यथा स्वप्नादिबाधधीः ।**

'बाह्यार्थालम्बना बुद्धिः' इत्यस्माद् वाक्याद् या बुद्धिः सा समीचीना, बाधकापेतत्वात्, स्वप्नादीनां या बाधिका धीर्जाग्रद्धीस्तद्वदिति ।

शङ्कते—

**सापि मिथ्येति चेद् ब्रूयात्,**

ततश्च साध्यवैकल्यमिति ।

दूषयति पादत्रयेण—

**स्वप्नादीनामबाधनात् ॥ ८० ॥**
**तस्मात् साधर्म्यदृष्टान्तो भवतः साधने नहि[1] ।**

दोषान्तरमाह—

**विज्ञानास्तित्वभिन्नत्वक्षणिकत्वादिधीस्तथा ॥ ८१ ॥**
**सम्यक् चेदभ्युपेयेत तदानैकान्तिको भवेत् ।**

अथ सापि मिथ्येत्युच्यते, ततः पक्षीकृतस्य ज्ञानस्य तद्विशेषणाना च भेदादीनामभावः स्यादित्याह—

**तन्मिथ्याभ्युपपत्तौ च पक्षबाधः प्रसज्यते ॥ ८२ ॥**

भेदाभावे च नित्यैकज्ञानवादिनामिव भवतामपि बद्धमुक्तव्यवस्थानुपपत्तिरित्याह—

**तथा च बद्धमुक्तादिव्यवस्था न प्रकल्पते ।**

एवं च मुक्तस्यापि बद्धादभिन्नस्य तद्वदेव बन्धापरित्यागान्मोक्षयत्नोऽपि विफलः स्यादित्याह—

**ततश्च मोक्षयत्नस्य वैफल्यं वः प्रसज्यते ॥ ८३ ॥**

यदि तु न ज्ञानानां मिथ्यात्वं किन्तु विकल्पकज्ञानानामेव, तेन ज्ञानास्तित्वादिधीरपि यदि विकल्पः स्यात् ततो मिथ्या स्यात्, सा तु निर्विकल्पिकेति, तत्राह सार्द्धेन—

---

१. अधुना—मु० पा० ।

**विकल्पोत्पद्यमाना च ज्ञानास्तित्वादिधीर्यदि।**
**मृषेष्टा, न च दृष्टात्र प्रमाणान्तरतो गतिः॥ ८४॥**
**प्रमाणाभावतस्तेन ज्ञानास्तित्वादि दुर्लभम्।**

सविकल्पकात् प्रमाणान्तर निर्विकल्पकम्, न तेन क्षणिकत्वाद्यवगन्तु शक्यमिति।

किञ्च, सर्वेष्वेषु तन्त्रार्थेषु सविकल्पकत्वादस्माकं ज्ञान मिथ्यैव, न चेन्द्रियसन्निध्यसन्निधिकृतोऽर्थसदसत्त्वकृतो वा विशेषोऽस्ति, सर्वस्य मिथ्यात्वात्।

एवं सांख्यादितन्त्रसिद्धान्तपरित्यागेन बौद्धसिद्धान्ते पक्षपातो न युक्त इत्याह द्वयेन—

**सर्वं चाप्यस्मदादीनां मिथ्या ज्ञानं विकल्पनात्॥ ८५॥**
**सान्निध्यविप्रकृष्टत्वे सत्त्वासत्त्वे[1] च दुर्लभे।**
**मिथ्याज्ञानाविशेषेऽपि सांख्यादिपरिवर्जनात्॥ ८६॥**
**बौद्धदर्शन एकस्मिन् पक्षपातो न युज्यते।**

स्वप्नादिषु मिथ्यात्व बाधनियत दृष्टम्, तदभावान्न जाग्रज्ज्ञानेषु तत् स्यादित्याह—

**मृषात्वं यदि बुद्धेः स्याद् बाधः किं नोपलभ्यते॥ ८७॥**

तदभावेऽपि चेन्मिथ्यात्व स्यात् तत. क्षणिकत्वादिज्ञानानामपि मिथ्यात्वात् स एव दोष इत्याह—

**बाधाद्विनापि तच्चेत् स्याद्व्यवस्था न प्रकल्पते।**

किञ्च, स्वतः प्रामाणस्य प्रमाणभूतप्रतियोगिज्ञानाधीन मृषात्वम्, तव तु सर्वमिथ्यात्वात् 'इद बाधकमिदं बाध्यम्' इति भेदः किंकृतः, तदभावाच्च न स्वप्नप्रत्ययस्य मिथ्यात्व स्यात्? इत्याह—

**प्रतियोगिनि दृष्टे च जाग्रज्ज्ञाने मृषा भवेत्॥ ८८॥**
**स्वप्नादिबुद्धिरस्माकं तव भेदोऽपि किङ्कृतः।**

ननु मा तावत् सिध्यतु स्वप्नप्रत्ययस्य मिथ्यात्वम्, जाग्रज्ज्ञानस्य कि न भवति? अत आह—

**न चान्यत् प्रतियोग्यस्ति जाग्रज्ज्ञानस्य शोभनम्॥ ८९॥**
**यद्दर्शनेन मिथ्यात्वं स्तम्भादिप्रत्ययो व्रजेत्।**

**शोभनम्,** प्रमाणमित्यर्थः। तदभावान्न मिथ्यात्वमिति।

सम्यक्त्वं वा कथं येन मिथ्यात्व[2] न स्यात्? अत आह—

**स्वप्नादिप्रतियोगित्वं सर्वलोकप्रसिद्धितः॥ ९०॥**
**तदीयधर्मवैधर्म्याद् बाधकप्रत्ययो यथा।**

---

१. सत्तासत्ते—२ पु० पा०। २. प्रतियोगित्वं—२ पु०।

स्वप्नादिप्रतियोगित्व जाग्रज्ज्ञानस्य सर्वलोकप्रसिद्धम्, तदीयधर्मवैधर्म्या-दबाध्यत्वादित्यर्थः। न ह्यबाध्यस्य मिथ्यात्व भवति, यथा स्वापादुत्थितस्य साक्षाद् बाधक नैतदेवमिति ज्ञानम्, तथा अन्या अपि जाग्रद्धिय· स्वप्नगृहीतार्था-विपरीतं गृह्णन्त्य स्वप्नप्रतियोगिन्यो भवन्तीति।

चोदयति—

**योगिनां जायते बुद्धिर्बाधिका प्रतियोगिनी॥ ९१॥**
**जाग्रत्स्तम्भादिबुद्धीनां तुलः स्वप्नादितुल्यता।**

योगिज्ञानेनैव जाग्रज्ज्ञानानाम् अबाध्यत्वहेतुरसिद्ध इति।

ननु कतिपयाना योगिना ज्ञाने कथ लोकसिद्धस्य जाग्रज्ज्ञानस्य बाध्यत्वम्? अत आह—

**प्राप्तानां तामवस्थां च सर्वप्राणभृतामपि॥ ९२॥**
**बाधोऽयं भविता तेन सिद्धा सप्रतियोगिता।**

परिहरति—

**इह जन्मनि केषाञ्चिन्न तावदुपलभ्यते॥ ९३॥**
**योग्यवस्थागतानां तु न विद्मः किं भविष्यति।**

नास्त्यत्र प्रमाणमित्यर्थः। तदभावेऽपि चेदुच्येत, तदस्माकमपि शक्यम्, स्वाच्छन्द्यनियामकाभावादित्याह—

**योगिनां चास्मदीयानां[1] त्वदुक्तप्रतियोगिनी॥ ९४॥**
**त्वदुक्तिविपरीता वा बाधबुद्धिर्भविष्यति।**

प्रतियोगिनी शुक्तिरियमिति, विपरीता नेद रजतमिति, तदनयोरन्यतर-विधोपनिपातिनी त्वदुक्तबाह्यापह्नवबाधिकास्मद्योगिनामस्ति बुद्धिरिति।

यद्वा, नावयोस्तुल्यत्वं भवति, योगिनां बाधकज्ञानसद्भावे तव दृष्टान्तो नास्ति, मम तु बाह्यत्वे योगिना रथ्यापुरुषस्यैव दृष्टान्तस्य लाभात् सम्भवत्यनु-मानमित्याह—

**ईदृक्त्वे योगिबुद्धीनां दृष्टान्तो न तवास्ति च[2]॥ ९५॥**
**दृष्टान्तस्त्वस्मदादीनां यो गृहीतः स विद्यते।**

शङ्कते—

**अथ स्तम्भादिबुद्धीनां वदेत् सप्रतियोगिताम्॥ ९६॥**
**बाध्यत्वं[3] चापि बुद्धित्वान्मृगतृष्णादिबुद्धिवत्।**

ममाप्यस्त्येवानुमानमिति।

---

१. अस्मदादीनाम्—२ पु०। २. हीति पाठान्तरम्।
३. बाह्यत्व—१ पु०।

निराकरोति—

**इष्टं सप्रतियोगित्वं मृगतृष्णादिबुद्धिभिः ॥ ९७ ॥**

**तदात्मना[1] च बाध्यत्वं ग्राह्यान्तरतयापि च ।**

सत्यबुद्धीनामपि मिथ्याबुद्धिभि. सप्रतियोगित्वमात्रमस्त्येव, मिथ्याज्ञानतद्ग्राह्ययोश्च बाधे सम्यग्ज्ञानतद्ग्राह्ययोरपि ज्ञानत्वेन ग्राह्यत्वेन च ताभ्यामभेदात् तेनात्मनास्त्येव बाध्यत्वमिति ।

बाधकाभिमतैश्च योगिज्ञानैरनैकान्तिको हेतुरित्याह—

**बाधकैश्चाप्यनेकान्तः,**

तदन्यविशेषणे च पूर्ववद् दोष इत्याह—

**तदन्यत्वे च पूर्ववत् ॥ ९८ ॥**

विशेषविरुद्धश्चाय हेतुः, तद्धर्मविशेषविपर्ययसाधनत्वादित्याह सार्द्धेन—

**मिथ्याधीप्रतियोगित्वं स्वप्नादाविव ते भवेत् ।**

**रागादिक्षययोगित्वनिमित्ताधिगतिस्तथा ॥ ९९ ॥**

**यावान् विशेष इष्टश्चेत् सर्वाभावाद् विरुद्धता ।**

स्वप्नबुद्धेर्मिथ्याभूतया रागद्वेषयुक्तया योगिजाग्रद्बुद्ध्या सप्रतियोगित्वं दृष्टमिति जाग्रद्बुद्धीनामपि तादृश्यैव बुद्ध्या सप्रतियोगित्वं साधनीयमिति प्रतियोगिनी योगिनामधिगतिरमिथ्या, रागादिक्षयनिमित्ता, योगित्वनिमित्तेति यावान् विशेषो दृष्टस्तस्य सर्वस्य बाधाद् विशेषविरुद्धो हेतुरिति ।

सप्रतिसाधनश्चाय हेतुः, प्रतिज्ञा वानुमानविरुद्धेत्याह—

**महाजनस्य वा बाधादिदानीम्बाधबुद्धिवत् ॥ १०० ॥**

**वाच्योऽनुमानबाधो वा यदि वा प्रतिसाधनम् ।**

निरालम्बनानुमानदोषाश्च सर्वेऽस्यानुसन्धेया इत्याह—

**पूर्वसाधनदोषाश्च सन्धेयाः,**

तस्य पूर्वं धर्मधर्मिविकल्पेन दूषणमुक्तम्, अधुना दोषान्तरमुच्यत इत्याह—

**तस्य चाधुना ॥ १०१ ॥**

कथमुच्यते ? इत्याह—

**साध्याभेदादवाच्यत्वाद् हेतोर्नोभयसिद्धता ।**

**प्रत्ययत्वं च,**

यदि जाग्रत्प्रत्ययत्वं हेतुः, ततस्तस्य साध्यधर्मिणोऽनतिरेकात् स्वप्नज्ञानेष्वननुवृत्तेर्न निरालम्बनत्वेनान्वयः शक्यते दर्शयितुम्, स्वप्नप्रत्ययत्वं च जाग्रद्बुद्धिस्वभावादसिद्धत्वादेवावाच्यम्, अनुगत तु प्रत्ययत्वसामान्यम् उभयसिद्धं नास्तीति ।

---

१. तद्रूपेण—२ पु० ।

सामान्यासिद्धिं प्रपञ्चयति—

**सामान्यं भिन्नाभिन्नं न विद्यते ॥ १०२ ॥**

**भवतोऽत्यन्तभिन्नं च मत्पक्षेऽपि[1] कथञ्चन ।**

भिन्नाभिन्नं भवतोऽसिद्धम्, अत्यन्तभिन्नं तव मम चोभयोरसिद्धमिति ।

ननु जातिरूपं सामान्यमस्माभिर्नेष्यते, सादृश्यान्यनिवृत्तिरूपं तु किं न भवति इत्यत आह—

**सारूप्यान्यनिवृत्ती च नेत्येतत् साधयिष्यते[2] ॥ १०३ ॥**

जात्यभावे सादृश्याभावादुभयोरनुपपत्तिर्वक्ष्यत इति ॥ १०३ ॥

उपसहरति—

**तस्माद्धेतुर्न सामान्यमस्ति सिद्धं द्वयोरपि ।**

विशेषयोस्तु जाग्रत्प्रत्ययत्वस्वप्नप्रत्ययत्वयो᾿ पक्षसपक्षगतयोरन्वयहीनत्वादपक्षधर्मत्वाच्चाहेतुत्वं पूर्वसंक्षिप्तं प्रपञ्चयति—

**विशेषयोश्च हेतुत्वं पक्षतत्तुल्यसंस्थयोः ॥ १०४ ॥**

**न स्यादन्वयहीनत्वादतद्धर्मतयापि च ।**

ननु प्रत्ययत्वादित्युक्ते अर्थशून्यापि तावदुत्पद्यते बुद्धिः, सैव हेतुर्भवतु ? अत आह—

**न चार्थहीना तद्बुद्धिर्हेतुत्वेन भविष्यति ॥ १०५ ॥**

न ह्यर्थशून्या लिङ्गबुद्धिर्लिङ्गिज्ञानाय कल्पत इति ॥ १०५ ॥

विशेष्यासिद्धिकथनेनैव हेतोराश्रयासिद्धिरुक्तैवेत्याह—

**आश्रयासिद्धिता चोक्ता विशेष्यस्याप्रसिद्धितः ।**

यच्च पूर्वं विशेषणासिद्धचर्थेन विकल्पेन सर्वथा निरालम्बनत्व क्वचिदप्यप्रसिद्धमित्युक्तम्, तेनैव स्वप्नप्रत्ययस्यापि तदभावात् साध्यवैकल्यम्, तद्वदेव जाग्रद्धियामपि सर्वथा निरालम्बनत्वाभावसाधनाद्धेतोश्च विरुद्धत्वं युक्तमेव ? इत्याह—

**तथा हेतोर्विरुद्धत्वं दृष्टान्ते साध्यहीनता ॥ १०६ ॥**

**विशेषणाप्रसिद्धत्वविकल्पेनैव[3] बोधिते ।**

साध्यवैकल्यसाधनादेव हेतोर्विरुद्धता, विशेषणस्य चाप्रसिद्धि. साधिता भवतीति मत्वा साध्यवैकल्यमेव प्रपञ्चयति—

**स्वप्नादिप्रत्यये बाह्यं सर्वथा न हि नेष्यते ॥ १०७ ॥**

किमिति नेष्यते ? अत आह—

**सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम् ।**

---

१. तु—१ पु० । २. गमयिष्यते—पाठा० ।

३. विशेषणाप्रसिद्धर्थविक०—पाठा० ।

बाह्यमेव देशान्तरे कालान्तरे वानुभूतमेव स्वप्ने स्मर्यमाण दोषवशात् सन्निहितदेशकालवत्तयावगम्यते, अतोऽत्रापि न बाह्याभाव इति ।

नन्वननुभूतमपि क्वचित् स्वप्नेऽवगम्यते ? अत आह—

**जन्मन्येकत्र भिन्ने वा तथा कालान्तरेऽपि वा ॥ १०८ ॥**

**तद्देशो वान्यदेशो वा स्वप्नज्ञानस्य गोचरः ।**

अनन्तरदिवसानुभूतस्य स्वप्ने वर्त्तमानवदवगमात् स्मृतिरेव तावत् स्वप्नज्ञानमिति निश्चीयते, अन्यत्रापि स्मृतित्वमेव युक्तम्, ततश्चास्मिन् जन्मनि अननुभूतस्यापि स्वप्ने दृश्यमानस्य जन्मान्तरादावनुभव कल्प्यत इति ।

एवं स्वप्नप्रत्ययस्य बाह्यालम्बनत्वं दर्शयित्वा जाग्रद्विभ्रमाणां बाह्यालम्बनत्वं दर्शयति—

**अलातचक्रेऽलातं स्याच्छीघ्रभ्रमणसंस्कृतम् ॥ १०९ ॥**

**गन्धर्वनगरेऽभ्राणि पूर्वदृष्टं गृहादि च[1] ।**

**पूर्वानुभूततोयं च रश्मितप्तोषरं तथा ॥ ११० ॥**

**मृगतोयस्य विज्ञाने कारणत्वेन[2] कल्प्यते ।**

**द्रव्यान्तरे विषाणं च शशस्यात्मा च कारणम् ॥ १११ ॥**

**शशशृङ्गधियः,**

अन्यत्र विद्यमानेनैव चक्रादिरूपेण विद्यमानमेवालातादिकं शीघ्रभ्रमणादिदोषवशात् ससृष्टमवगम्यत इति ।

ननु 'शशविषाण नास्ति' इति बुद्धेरभावावभासिन्याः किं बाह्यमालम्बनम्, न तावदभाव, तस्य स्वातन्त्र्याभावात्, भावान्तराश्रितो हि सर्वोऽभाव., न च 'शशविषाण नास्ति' इत्यत्र क्वचिद्देशे कालाभावोऽवगम्यते, अतोऽवश्यमत्र ज्ञानरूपस्यैव भावस्यालम्बनत्वमङ्गीकर्त्तव्यम् ? अत आह—

**मौण्ड्यं निषेधे शिरसोऽस्य च ।**

अस्य शृङ्गनिषेधे शृङ्गाभावज्ञाने शिरसो मौण्ड्यमालम्बनम् । शिरोवर्त्तिन एवावयवा. शृङ्गरूपेण परिणताः शृङ्गाभावात्मना ज्ञायन्ते, ततस्तदाश्रयोऽभावः, न स्वतन्त्र इति । अतोऽत्रापि बाह्याभावालम्बनत्वान्न स्वाशालम्बत्वमिति ।

'चैत्रशून्यं गृहम्' इति शून्यबुद्धेस्तर्हि किमालम्बनम् ? अत आह—

**वस्त्वन्तरैरसंसृष्टः[3] पदार्थः शून्यताधियः ॥ ११२ ॥**

अङ्गुल्यग्रादिवाक्यार्थज्ञानेऽप्यङ्गुल्यग्रादिपदार्था विद्यमाना आलम्बनम् ? इत्याह—

---

१. वा—२ पु० ।  २. करणत्वेन—१ पु० ।

३. ०रैकसंसृष्टः—मु० पा० ।

**कारणत्वं पदार्थानामसद्वाक्यार्थकल्पने ।**

यत्तर्ह्यत्यन्ताविद्यमानाननुभूतप्रकृत्याद्यालम्बनं **सांख्यादीनां** ज्ञानम्, तस्यानालम्बनत्वमेव स्याद्, बाह्याभावादत आह—

**अत्यन्ताननुभूतोऽपि बुद्ध्या योऽर्थः प्रकल्प्यते[1] ॥ ११३ ॥**

**[2]तस्योत्पत्तौ कथञ्चित्स्युः पृथिव्यादीनि कारणम् ।**

पृथिव्यादिस्थूलप्रपञ्चस्य हेतुभूता सूक्ष्मावस्थैव तैः प्रकृतिरुच्यते, तेन तदवस्थाविशिष्टाः पृथिव्यादय एतद्बुद्धेरालम्बनम्, सूक्ष्मत्वेन तु परमाणूनजानन्तस्तद्व्यतिरेकेण सूक्ष्मत्वात् तत्रैव प्रकृत्यादिशब्दमुपचरन्तीति ।

ननु देशान्तरे कालान्तरे वा विद्यमानमपि बाह्यमत्र तावन्न विद्यते, अतः कथमालम्बनत्वम् ? अत आह—

**एष प्रत्यक्षधर्मश्च वर्तमानार्थतैव या ॥ ११४ ॥**

**सन्निकृष्टार्थवृत्तिश्च न तु ज्ञानान्तरेष्वियम् ।**

सन्निहितवर्त्तमानविषयत्वनियमो हि प्रत्यक्षस्य धर्मः, न त्वाभासानामिति शङ्कते चेदन्तेन—

**कथमुत्पादयेज्ज्ञानं तत्रासंश्चेत्,**

उत्पादकस्यैवालम्बनत्व तत्रासतः सम्भवतीति ।

परिहरति—

**कुतो न्वियम् ॥ ११५ ॥**

**अर्थस्याविद्यमानस्य विज्ञानोत्पत्त्यशक्तता ।**

न तावदुत्पादकत्वमेवालम्बनत्वम्, यद्यपि तथा स्यात्, तथाप्यालम्बनहेतुत्वमसतोऽपि ज्ञानं प्रति सम्भवतीति दर्शनबलादङ्गीक्रियत इति ।

नन्वेवमपि सन्निहितं बाह्यमालम्बनभूत नास्त्येव ? सत्यम्, स त्वदोषः, असन्निहितस्यापि बाह्यस्यालम्बनत्वात्, तन्मात्रविषयत्वाच्चावयोर्विवादस्य ? इत्याह—

**बाह्यालम्बनतायां नौ विवादोऽर्थस्य संनिधिः ॥ ११६ ॥**

**यदि नास्ति, किमेवं स्यादस्मत्पक्षनिवर्तनम् ।**

किमिदानी निरालम्बन ज्ञान नास्त्येव, तथा चेल्लोकविरुद्ध. स्यात् ? अत आह पादत्रयेण—

**तस्माद् यदन्यथासन्तमन्यथा प्रतिपद्यते ॥ ११७ ॥**

**तन्निरालम्बनं ज्ञानम्,**

यस्मादेवं सर्वत्र बाह्यमस्ति, तस्माद्यदेव विज्ञानम्, अन्यथा शुक्तिकादिरूपेण

---

१. प्रकाश्यते—२ पु० पा० ।

२. तस्येति । तदर्थविषयकज्ञानस्येत्यर्थः ।

सन्तमर्थमन्यथा[1] रजतादिरूपेण[1] गृह्णाति, तदेव निरालम्बनं ज्ञानम्, न तु यदात्मालम्बनमिति।

यर्त्तीह 'इह घटो नास्ति' 'इदं रजतं न भवति' इत्यादिकमभावज्ञानम्, तस्य किमालम्बनम्, न ह्यभावाख्यमस्तीत्यत आह—

**अभावालम्बनं च तत्।**

यदेवान्यथासन्तमन्यथा प्रतिपद्यते तन्निरालम्बनम्, तदेवाभावावलम्बनम्। तदुक्तं भवति—सर्वं हि वस्तु सदसदात्मकम्, तत्र शुक्तिकारजतादिज्ञानं शुक्तिकाख्यं भावं शुक्तिकारूपेण सद्रूप भावान्तरस्य रजतस्य यत् सद्रूपं रजतरूप तेन रूपेण गृह्णद्भ्रान्तं भवति। 'नेद रजतम्' इति त्वभावज्ञान शुक्तिरूपेण सन्तमेव भावं रजतस्य यदसद्रूप तेनात्मना गृह्णदभावावलम्बनमभ्रान्त भवति। तेन भ्रान्तिज्ञानमभावज्ञान चोभयमन्यथासन्तमर्थमन्यथारूपेण प्रतिपद्यते। तत्र भ्रान्तिरन्यस्य सद्रूपेणान्यत् प्रतिपद्यते, अभावज्ञान त्वन्यस्यासद्रूपेणान्यत् प्रतिपद्यत इत्येव विशेष इति।

नन्वभावमात्रमेवाभावज्ञानस्यालम्बनम्, न भावान्तरमत आह—

**भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्॥ ११८॥**

रजतादेर्भावस्य यदभावाख्य रूप तन्न स्वतन्त्रम्, अनिरूपणात्, किन्तु भावान्तरमेव तत्तद्धर्म इत्यर्थः। तेनाभावज्ञानस्यापि शुक्तिकादिभावान्तरं बाह्यमेवालम्बनमिति न स्वांशालम्बनमिति॥ ११८॥

यद्वा 'अभावालम्बनं च तत्' इत्यत्र तच्छब्देनैतदेव परामृश्यते—अभावालम्बनमपि ज्ञानं तादृशमेव बाह्यभावालम्बनमेवेति। नन्वभावावभासिनः कथं भावालम्बनत्वमिति? अत उक्तम्—भावान्तरमिति।

सर्वमिथ्यात्ववादिनां तु निरालम्बनत्वम्, अभावालम्बनत्वं च द्वयमपि दुर्निरूपम्, हेत्वभावाद्। बाधकसत्यत्वे हि बाध्यमिथ्यात्वम्, तस्यापि मिथ्यात्वे कुतस्तद्बाध्यस्य मिथ्यात्वम्, ज्ञानरूपस्य च स्वरूपमेवावलम्बमानस्य कथमभावालम्बनत्वम्, तदिदमाह—

**भवता द्वयमप्येतद् दुर्निरूपं सहेतुकम्।**

हेतोरिदानी पूर्वोक्तादन्येन कारणेन विरुद्धतामाह—

**प्रतिज्ञादोषवच्चापि योज्या हेतोर्विरुद्धता॥ ११९॥**
**समस्तव्यस्तधर्मादिस्वरूपादिविपर्ययात्[2]।**

यथा ह्यप्रसिद्धविशेष्यत्वादिः प्रतिज्ञादोषो दर्शितः, तथैव हेतोरपि विरुद्धता दर्शयितव्या। हेतुर्हि सर्वप्रत्ययानां मिथ्यात्वं साधयन् धर्मधर्मितद्विशेषग्राहिप्रत्ययमिथ्यात्वसाधनेन तेषां विपर्ययं साधयन् विरुद्धः स्यादिति।

---

१–१. अयं ग्रन्थो नास्ति—२ पु०। २. स्वस्वरूपाविपर्ययात्—२ पु०।

दृष्टान्तस्यापि न केवल साध्यविकलत्वम्, किन्तु सर्वे एव साध्यसाधनोभय-व्याप्तिशून्यत्वादिदोषा वक्तव्या इत्याह—

**दृष्टान्तदोषाः सर्वे च योज्याः,**

कथम् ? इत्याह—

**न ह्येकवस्तुनि ॥ १२० ॥**

**तव साध्यांशहेत्वंशव्याप्तधर्मादिसम्भव[1] ।**

न हि ज्ञानस्वलक्षणव्यतिरेकेण प्रत्ययत्वम्, निरालम्बनत्वम्, तयोश्च धर्मरूपा व्याप्तिरस्तीति ।

केचित्तु 'वैधर्म्योदाहरणमपि साध्यस्यावश्यम्भावि' इति मन्वानास्तदभावाद् न्यून निरालम्बनसाधनमित्याहुः, तदुपन्यस्यति—

**केचिद् वैधर्म्यदृष्टान्तो नास्तीत्यप्यनुयुञ्जते ॥ १२१ ॥**

ननु विपक्षाभावादेव हेतोरवृत्तिसिद्धेर्न वैधर्म्येण प्रयोजनमित्युक्तम्, परैरप्युक्तम्—'तदभावात्तत्रावृत्तेर्नायि दोष ' इति ? तत्राह—

**तदभावादवृत्तेश्च नास्त्यत्रावसरस्तव ।**

कथ नास्ति ? इत्यत आह—

**विधिरूपप्रतिज्ञायामेतद् वक्तुं हि शक्यते ॥ १२२ ॥**

वस्तुरूपे साध्ये सत्यवस्तुनो विपक्षत्वादवस्तुनि च हेतोर्व्यतिरेकसिद्धेर्वैधर्म्य-वचन निष्फल स्यात्, अवस्तुरूपे तु निरालम्बनत्वे साध्ये वस्तुरूपसालम्बनत्वस्य विपक्षत्वात् तत्र हेतोर्वृत्तिसम्भवात् तद्व्यतिरेको वक्तव्यः, एतदवचने वैक्लव्य-मेवेति ॥ १२२ ॥

किञ्च, विधिरूपप्रतिज्ञायामपि वैधर्म्यप्रयोजनाभावमात्रम्, शक्यं तु तत्राप्य-वस्तुन्यपि विपक्षे वैधर्म्यं प्रयोक्तुमित्याह—

**तत्रावस्तुविपक्षेऽपि प्रयोगस्य हि सम्भवः ।**

प्रयोगमेव दर्शयति—

**यस्मिन्ननित्यता नास्ति कार्यतापि न विद्यते ॥ १२३ ॥**

**तस्मिन्, यथा खपुष्पादाविति शक्यं हि भाषितुम् ।**

'अनित्यः शब्द.' इति प्रतिज्ञायामिद वैधर्म्यम् । अनित्यत्व च न नित्यत्वा-भावमात्रम्, किन्तु कादाचित्कत्व विधिरूपमेवेति । प्रकृते तु निरालम्बनसाधने वस्तुनि विपक्षे सुतरां वैधर्म्यं वक्तव्यमेवेत्याह—

**अत्र त्ववस्तुसाध्यत्वं[2] वस्तुनश्च विपक्षता ॥ १२४ ॥**

**तेन स्याद् व्यतिरेकोऽस्य वाच्यः,**

---

१. व्याप्तिधर्मादि०—२ पु० ।
श्लो० वा० : १२

२. साध्यत्वात्—का० ।

यश्चापि वैयात्यात् प्रतिषेधद्वयाश्रयणेन वैधर्म्यं वदेत् यन्निरालम्बनं न भवति तत्प्रत्ययोऽपि न भवतीति, तेन प्रतिषेधप्रतिषेधात् सालम्बनविधिरेव दर्शितो भवति, न च प्रत्ययातिरिक्ते वस्तुनि कस्मिंश्चिदसति तद्विधिः शक्यो दर्शयितुम्, अतो न्यूनमेवेदं साधनमित्याह चिदन्तेन—

**यश्चापि दर्शयेत् ।**
**प्रतिषेधद्वयात् तेन विधिरेव प्रदर्शितः ॥ १२५ ॥**
**न च शक्यो विधिर्वक्तुं वस्तुन्यसति केनचित् ।**

नन्वेवं सर्वज्ञाभावसाधनेऽपि वस्तुस्वरूपस्य सर्वज्ञस्य विपक्षत्वात् तद्व्यतिरेको हेतोः पुरुषत्वादेर्वाच्यः—यः सर्वज्ञः स पुरुषोऽपि न भवतीति, न चैव शक्यम्, सर्वज्ञस्य क्वचिदप्यभावादत आह—

**एवं स्थिते च सर्वज्ञनिषेधादावियं गतिः ॥ १२६ ॥**
**प्रत्यक्षादेरसामर्थ्यं तदीयस्यास्मदादिवत् ।**

बुद्धप्रत्यक्षमनागतादिविषयं न भवति, प्रत्यक्षत्वादस्मदादिप्रत्यक्षवदिति । यत्त्वनागतादिविषयं तत्प्रत्यक्षमेव न भवति, यथा शब्द इति ।

अन्ये तु वैधर्म्यावचने निरालम्बनसाधनमविद्यमानदूषणमित्याहुरित्याह—

**वैधर्म्यासम्भवेऽप्येतदन्ये त्वाहुरदूषणम् ॥ १२७ ॥**

कथमदूषणम् ? अत आह—

**विनैव तत्प्रयोगेण हेतुरैकान्तिको यतः ।**

किञ्च, विद्यमानोपायानामेव वादादिषु त्रिष्वपि कथास्वधिकारः । शून्यवादी तु सर्वोपायरहितः कथमिहाधिक्रियेत, यो हि जात्यैवान्धो बधिरो मूकश्च पङ्गुश्च भवति स कथं ज्योतिष्टोमेऽधिक्रियेत ? इत्याह—

**सर्वथा सदुपायानां वादमार्गः[1] प्रवर्तते ॥ १२८ ॥**
**अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः ।**

चोदयति—

**ननु सर्वं भवत्सिद्धं मयेदं साधनं कृतम् ॥ १२९ ॥**
**किमर्थं तदसिद्ध्या त्वं[2] विकल्प्यात्रात्थ[3] दूषणम् ।**

यदिदं मया साधनमुक्तम्, तत् सर्वं भवतस्तावत्सिद्धम्, तत्किमर्थं मदसिद्ध्या बहुभिर्विकल्पैर्दूषणमुच्यत इति ।

सिद्धान्तवादी चैववादिनमुपालभते—

**विप्रलिप्सुरिवाहैवं किमर्थं न्यायविद् भवान् ॥ १३० ॥**

---

१. वादसार्थ—२ पु० ।

२. तदसिद्ध्यर्थम्—२ पु० ।

३. अत्रार्थ—कौ० ।

कथं विप्रलिप्सा ? अत आह—

**नाश्रौषीः साधनत्वं किं प्रसिद्धस्य द्वयोरपि ।**

भवद्वृद्धैरेव हि **दिङ्नागाचार्यैः** 'यो वादिप्रतिवादिनिश्चितो हेतुः स साधनम्' इत्युक्तम्, तच्छ्रुत्वा कथमविप्रलिप्सुरेवं वदेदिति ।

किञ्च, प्रतिवाद्यसिद्धस्य वादिना[1] साध्यमानस्य स्यादपि साधनता, वाद्यसिद्धस्य तु प्रतीकाराभावात् कथ स्यात् ? इत्याह—

**योऽपि तावत् परासिद्धः स्वयं सिद्धोऽभिधीयते ॥ १३१ ॥**

**भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया ।**

प्रतीकारासम्भवमेव दर्शयति—

**तं साधयन् विरुन्ध्याद्धि पूर्वाभ्युपगतं नरः ॥ १३२ ॥**

**असाधिते तु साध्योऽर्थो[2] न तेन प्रतिपद्यते ।**

पुनश्चोदयति—

**परासिद्धो न पर्याप्तः परेषां प्रतिपत्तये ॥ १३३ ॥**

**तेनासाधनता युक्ता, स्वतोऽसिद्धे तु किङ्कृता ।**

परप्रतिपत्त्यर्थं हि साधनम्, तदस्य परासिद्धिर्दोषः, न स्वासिद्धिरिति ।

**दिङ्नागवचनमपि** न्यायमूलत्वात् प्रतिवादिसिद्धिपरमेव व्याख्येयमित्याह—

**द्वयोः सिद्धस्य हेतुत्वं नादृष्टायोपदिश्यते ॥ १३४ ॥**

**प्रत्येष्यन्ति स्वसिद्धेन साधनेन स्वयं यतः ।**

शङ्कते—

**वदेत् कथमसिद्धं चेत्,**

निराकरोति—

**इत्यनेनापि किं तव ॥ १३५ ॥**

एतदेव विवृणोति—

**गृहीतमगृहीतं वा साध्यं वा साधनापि वा ।**

**मयोच्यते चेत्त्वसिद्धं[3] किं त्वं न प्रतिपद्यसे ॥ १३६ ॥**

ननु पौरुषं साधनवाक्यं कथं वक्तुरप्रतिपन्नमेवार्थं साधयति, अत आह—

**यत्र स्यात् पुरुषाधीना बुद्धिस्तत्रेदमुच्यते ।**

**कुतोऽस्य पूर्वविज्ञानमित्यत्रैतन्न युज्यते ॥ १३७ ॥**

यत्र हि पुंवाक्यादर्थबुद्धिः तत्रैव वक्तुः पूर्वज्ञानहेत्वन्वेषणं न त्वत्रेति ॥१३७॥

भवत्वत्रापि वाक्याधीनैव बुद्धिरिति चेत् ? तत्राह—

---

१. वादिता—मु॰ पा॰ । २. साध्यार्थो—मु॰ पा॰ ।

३. सिद्धमिति पाठान्तरम् ।

**यदि चैवं भवेदत्र प्रतिज्ञामात्र एव हि।**
**मद्दोषाज्ञानमात्रेण प्रतिपत्तिर्भवेत् तव॥ १३८॥**

यतस्तु प्रतिज्ञाव्यतिरेके सा हेतुमपेक्षते, अतोऽस्यैवात्र प्रमाणता, न वाक्यस्येत्याह—

**यतस्तु साधनापेक्षा तेनास्यैव प्रमाणता।**

कथं तर्हि वाक्यम्? अत आह—

**तत्स्मृत्युत्पत्तिमात्रे तु वाक्यव्यापार इष्यते॥ १३९॥**

यस्मादेव साधनस्य साध्यनियमस्मरणमात्रोपयोगि वाक्यम्, तस्माद् यथैव स्वयमेव नियतहेतुदर्शनेन साध्यमनुमिमानो न वक्तृप्रामाण्यमपेक्षते, तथात्रापि नापेक्षितव्यम् इत्याह—

**तस्माद् यथैव साध्यांशव्याप्तहेतुनिदर्शनात्।**
**साध्यं गृह्णन्न वक्तारमपेक्षेत तथा[1] भवान्॥ १४०॥**

एवं सत्यपि मत्प्रसिद्धिमपेक्षमाण प्रत्यक्षेणाप्यर्थं प्रतिपद्यमानोऽपेक्षेतैवेत्याह—

**यच्चापि भवतो ज्ञानं प्रत्यक्षादिषु[2] किमत्र ते।**
**मत्प्रसिद्धास्ति युक्तिर्वा साध्यं वात्र यथेच्छसि॥ १४१॥**

तस्माद् वाद्यप्रसिद्ध्युपालम्भ उपहासास्पदमित्युपसंहरति—

**तस्मान्न विदुषामेतदुत्तरं युज्यते यतः।**
**तव हेतुरसिद्धोऽयं मम तेन न साधनम्॥ १४२॥**

अत्र परिहारमाह द्वयेन—

**सत्यं यदि ममैवात्र प्रतिपत्तिः फलं भवेत्।**
**तदा त्वदप्रसिद्धेऽपि हेतौ मां प्रति हेतुता॥ १४३॥**
**यदा तु ज्ञानमात्रत्वप्रतिपत्तौ[3] भवान् मया।**
**पृष्टः को हेतुरत्रेति तदैवं[4] नोपपद्यते॥ १४४॥**

मत्प्रतिपत्तिमात्रफलत्वे साधनस्य स्यादेवम्, भवता त्वय सिद्धान्तः—ज्ञानमात्रं सर्वमिति, तत्र 'को हेतु' इति पृष्टे 'नाहं जानामि' इत्युत्तर बालभाषितं स्यादिति॥ १४४॥

कथम्? इत्याह—

**स्वयं न ह्यगृहीतेन[5] मत्प्रसिद्धेन वा भवान्।**
**हेतुना साध्यमेतत् तु प्रतिपन्नः कथञ्चन॥ १४५॥**

---

१. यथा—मु० पा०। २. प्रत्यक्षादेः—२ पु०।
३. ज्ञानमात्रत्वं प्रतिपन्नो०—२ पु०। ४. तदैतत्—२ पु०।
५. स्वयं यन्न गृहीतेन—क्वचित्।

भवदीयेनापि 'परार्थमनुमानं तु स्वदृष्टार्थप्रकाशकम्' ( प्र० समु० ३-१ ) इति लक्षणेन स्वप्रतिपन्नमेव प्राश्निकेभ्यः प्रतिपादनीयमित्याह—

**न च व्याप्रियतेऽन्यत्र वचनं प्राश्निकान् प्रति।**
**स्वनिश्चयाय यो हेतुस्तस्यैव प्रतिपादनात् ॥ १४६ ॥**

प्रतिपादनादन्यत्रेत्यन्वय. ॥ १४६ ॥

किञ्च, मत्प्रसिद्धिरपि साधनस्य निरुपायेन भवता कथमवगम्यते ? इत्याह—

**मत्प्रसिद्धत्वमेतस्य कुतश्चावगतं त्वया।**

किञ्च, अप्रतिपत्त्यार्थस्य भवतो विवक्षापि निर्निबन्धनैव, तदभावाच्च साधनरचना दूरे निरस्ता ? इत्याह—

**कथं चेत्थं विवक्षा ते स्वयमर्थमजानतः ॥ १४७ ॥**
**मयि जिज्ञासमानेऽपि बुद्धिपूर्वाभिधायिनः।**

**जिज्ञासमानेऽपीति**। यद्यप्यहं जिज्ञासुर्न निग्रहपर., तथापीति।

अत एव दिङ्नागाचायरप्युभयसिद्धिरादृतेत्याह—

**इति ज्ञात्वा च वो वृद्धैर्भाषितोभयसिद्धता ॥ १४८ ॥**

यथा च तवासिद्धेनापि मत्प्रसिद्धेन साधनेन साध्यज्ञानं ममाधातुमिच्छसि, तथा दूषणैरपि मत्प्रसिद्धैरेव साध्यज्ञानमाधास्यामीत्याह—

**तेन यद्वन्ममैतेन त्वमाधित्ससि हेतुना।**
**साध्यज्ञानम्, तथैवाहमज्ञानं तव दूषणैः ॥ १४९ ॥**

किञ्च, तवेव ममापि सर्वमिथ्यात्व प्रतिपाद्यमानस्य साधनासिद्धिरेव स्यात्, तत्सद्भावे वा न सर्वमिथ्यात्व बोद्धुं शक्यमित्याह त्रिभिः—

**यथैव च भवानीदृक् साध्यमुक्त्वास्य साधनम्।**
**साध्यानुरूपमज्ञात्वा विहतः प्रतिपादनात् ॥ १५० ॥**
**तथैव प्रतिपाद्योऽपि तादृक्साध्यबुभुत्सया।**
**मन्वानः साधनं दुष्टं ततः साध्यं न बुध्यते ॥ १५१ ॥**
**संवित्त्या[1] साधनं मत्वा तत्सद्भावे दृढे स्थिते।**
**साध्यस्यासम्भवादेव त्वदुक्तं नावबुध्यते ॥ १५२ ॥**

उपसंहरति—

**तेनाशेयं न कर्तव्या मोहादपि मयेरिते।**
**साधने साधनं ज्ञात्वा पर एवावभोत्स्यते ॥ १५३ ॥**

हेतुप्रतिज्ञाविरोधाख्यस्य निग्रहस्थानस्य इदं निरालम्बनानुमानमुदाहरणम्, यददर्शनेन शाक्यैर्दूषणत्वमस्य निरस्तमित्याह—

१. सम्यक् च—२ पु०।

**विस्पष्टश्चाक्षपादोक्तो विरोधो हेतुसाध्ययोः ।**
**यमदृष्ट्वा परैरुक्तमदूषणमिदं किल ॥ १५४ ॥**

'प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः' (न्या० सू० ५ २. ४) इत्यक्षपादेनोक्तम्, तत्र चोदाहरणं 'नित्यः शब्दः सर्वस्यानित्यत्वात्' इति सांख्योक्तमनुमानम्, सर्वस्य ह्यनित्यत्वे तदन्तर्गतत्वात्तस्याप्यनित्यता स्यात्, तन्नित्यत्वे वा न सर्वस्यानित्यत्वमिति। तदिद शाक्यैर्दूषितम्—न हि सर्वस्यानित्यत्व सांख्यैर्हेतुत्वेनोक्तम्, येन हेतुप्रतिज्ञाविरोधः स्याद्, वैधर्म्यदृष्टान्तस्त्वयम्, सर्वत्वं च सावयवत्वमभिमतम् । तत्र हेत्वभावेन साध्याभावस्य नियमो वक्तव्यः, अनित्यस्य सर्वत्वादिति, असुशिक्षितवैधर्म्यवचनत्वात्तु विपर्ययेणोक्तमिति, तदुक्तम्–दृष्टान्तोऽभिहितो ह्येष वैधर्म्येणासुशिक्षितैरिति। तदिदमुदाहरणदूषणमात्रेण प्रतिज्ञाविरोधस्य निग्रहस्थानत्व न दूषितं भवतीति किलशब्देन दर्शितम् । यद्यपि तदुदाहरण न भवति, तथापि भवदीयमेव निरालम्बनानुमानमुदाहरणं भवति । सर्वनिरालम्बनत्वे हि प्रत्ययत्वग्राहिज्ञानस्यापि निरालम्बनत्वात् प्रत्ययत्व न सिध्येत्, तत्सिद्धौ वा न सर्वनिरालम्बनत्वम् ॥ १५४ ॥

चोदयति—

**ननु लोकप्रसिद्धेन पूर्वमेतेन हेतुना ।**
**साध्यसिद्धिर्ममाप्यासीत् परमार्थोऽस्य नास्तिता ॥ १५५ ॥**

तव हि प्रत्ययत्वग्राहिज्ञानस्यापि निरालम्बनत्वात् प्रत्ययत्व न सिद्ध्येत्, तत्सिद्धौ वा न प्रागस्मान्निरालम्बनानुमानाल्लोकसिद्धा हेत्वादयः सद्रूपा एव, अतस्तैः सद्भिः पारमार्थिकं निरालम्बनत्व साध्यते । तस्मिश्च साधिते पश्चाद्धेत्वादीनामसत्त्वं भवदपि न साध्यसिद्धि विहन्ति, तस्य प्रागेव सिद्धत्वादिति ॥१५५॥

परिहरति सार्धेन—

**योऽधुना परमार्थेन नास्तीत्येवं प्रकाशते[1] ।**
**कथं पूर्वमसावासीदसंश्चेत् साधनं कथम् ॥ १५६ ॥**
**साधनं चेदवश्यं च परमार्थास्तिता भवेत् ।**

न हि प्राक्सदेव हेत्वादिकं निरालम्बनानुमानेन विनाश्यते, किं तर्हि ? प्रागप्यसदेव पश्चान्न तदवगम्यते, शुक्तेरिव रजतत्वम् । अतः पूर्वमसदेव, असत्त्वाच्च न परमार्थस्य साध्यस्य साधनमिति । कथम् ? इत्यत आह—

**सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते ॥ १५७ ॥**

कथ न युज्यते ? अत आह—

**न दृष्टा शशशृङ्गादेः सम्यग्ज्ञानादिहेतुता ।**

---

१. प्रतीयते—२ पु० ।

किञ्च, विद्यमानादपि बाष्पाद् भ्रान्त्या धूमतयावगतान्न परमार्थाग्निसिद्धिः, किमु अत्यन्ताविद्यमानादित्याह—

**बाष्पादिनाप्यधूमेन मिथ्या वह्न्यादिबोधनम् ॥ १५८ ॥**

उपसंहरति—

**तस्मादसत्यहेतोर्या परमार्थे मतिस्तव ।**
**साप्यसत्या न सत्यं हि सत्याभासेन गम्यते ॥ १५९ ॥**

असत्येन हेत्वादिना परमार्थत्वसम्मते निरालम्बनत्वे या मतिः सा मिथ्येति।

ननु वर्णस्वरूपेणापरमार्थैरपि रेखादिभिः परमार्थवर्णज्ञानं दृष्टम् ? अत आह—

**येऽपि रेखादयो दृष्टा वर्णानां प्रतिपादकाः ।**
**न ते स्वेनापि रूपेण परमार्थत्ववर्जिताः ॥ १६० ॥**

शङ्कते—

**वर्णात्मना न सत्याश्चेत्,**

परिहरति—

**सर्वभावेष्वयं विधिः ।**

एतदेव विवृणोति—

**पदार्थान्तररूपेण न सत्यं किञ्चिदिष्यते ॥ १६१ ॥**

एतदुक्तं भवति—यद्यपि रेखासु मकारोऽयमिति वर्णात्मकत्वं भ्रान्तम्, तथापि न तेन रूपेण वर्णज्ञानोपायत्वम्, यतो वर्णज्ञानं मिथ्या स्यात् । वर्णात्मके हि तदवगमे जाते पश्चान्न किञ्चिज् ज्ञातव्यमस्ति, यदसत्योपायतया पश्चान्मिथ्या स्यात् । अतः स्वरूपेणैव गमकता, तच्च सत्यमेवेति नोपायासत्यत्वम् । रेखास्वरूपेण तु वर्णस्वरूपमवगम्यमानं सम्बन्धग्रहणसमयवर्तितादात्म्यशिक्षाबलेन भ्रान्त्या तद्रूपतयावगम्यत इति नासत्यात् सत्यसिद्धिः ॥ १६१ ॥

किञ्च, यदपि बाष्परेखादिकम्, तदपि स्वरूपेण सत्यभूतेन पररूपेण वा धूमादिरूपेणासत्येनावगम्यते, यत्तु स्वरूपेणैवात्यन्ताविद्यमानं न तत्स्वरूपेण प्रमाणम्, ततः पररूपेण वा भ्रान्त्या गम्यते, बुद्ध्यारोह एव तस्य न सम्भवति ? इत्याह—

**स्वरूपे विद्यमाने तु यदप्येवं प्रकाशते ।**
**स्वरूपाभावक्लृप्तौ तु न सत्यं नाप्यसत्यता ॥ १६२ ॥**

ततः किम् ? इत्याह—

**हेत्वादीनां तु भवतः स्वरूपेणाप्यसत्यता ।**

उपसंहरति—

**तेन बाष्पादिवत् तेषामुपायत्वम्, न लेख्यवत् ॥ १६३ ॥**

नेत्युभयत्र सम्बध्यते। वाष्पादिवत् तेषा भ्रान्तिज्ञानहेतुत्वमपि न सम्भवति, नापि लेख्यवत् सम्यग्ज्ञानहेतुत्वमिति ॥ १६३ ॥

चोदयति—

**उपायानां स्वरूपं हि संवृत्त्यात्मकमेव नः।**
**तथा च सत्यतेष्टैव स्वरूपासत्यता कथम् ॥ १६४ ॥**

यद्यत्यन्तासन्तो हेत्वादयः स्युः, न स्युरुपाया., ते तु सावृतेन रूपेण सत्या एवेति ॥ १६४ ॥

परिहरति—

**संवृत्या यत् स्वरूपं हि तद्वाङ्मात्रनिबन्धनम्।**
**हेतुत्वं परमार्थस्य प्रतिपत्तुं न शक्नुयात् ॥ १६५ ॥**

सावृतं रूप वाङ्मात्रनिबन्धनम्, असत्यापरपर्यायत्वात् सवृते, अतो नैवविधेन हेत्वादिना परमार्थसाध्यसिद्धि.। पूर्व धर्म्यधर्मादिव्यवहार. सावृतेन बाह्येन सिध्यतीत्युपन्यस्य तन्निरस्तम्, इदानी साधनव्यवहारौपयिकत्वमुपन्यस्यते निरस्यते चेति विषयभेदादपौनरुक्त्यमिति ॥ १६५ ॥

किञ्च, लोकपरमार्थयोर्भेदोऽपि तव न सिध्यति, तद्ग्राहिज्ञानमिथ्यात्वात् ? इत्याह—

**परमार्थाच्च लोकस्य न भेदे हेतुरस्ति ते।**

लोकशब्देन सवृतिरुच्यते इति।

किञ्च, सावृतोपायगम्यस्य वाष्पावगताग्निवन्न परमार्थता स्यादित्याह—

**लौकिकोपायगम्यस्य केन स्यात् परमार्थता ॥ १६६ ॥**

सम्प्रति सर्वपूर्वोक्तपरिहारेण परः प्रत्यवतिष्ठते—

**नन्वसत्यपि बाह्येऽर्थे बुद्ध्यारूढेन सिध्यति।**

यथैव विद्यमानैरेव बुद्ध्यारूढैर्घटादिभिरुदकाहरणादिव्यवहारः सुखोपभोगश्च स्वप्ने सिद्ध्यति, तथैव बुद्ध्यारूढेन धर्मधर्मिहेत्वादिविभागेनानुमानानुमेयव्यवहार. सेत्स्यतीति किं बाह्येनेति ॥ १६६ ॥

किंनिबन्धनो बुद्धिभेदो यतो हेत्वादिविभागः ? अत आह—

**वासनाशब्दभेदोत्थविकल्पप्रविभागतः ॥ १६७ ॥**

वासनाभेदाच्छब्दभेदाच्च हेत्वाद्याभासविकल्पविभागाः सम्भवन्ति, ततश्च हेत्वादिविभाग इति। शब्दग्रहणं चार्थनिराकरणपरतयानास्थयोक्तम्, परमार्थतस्तु ज्ञानमात्रवादिना शब्दोऽपि नास्त्येव, वासनाभेदनिबन्धन एव तु विकल्पभेद इति ॥ १६७ ॥

वृद्धानामप्यस्मदीयानामिदमेवाभिमतमित्याह—

**न्यायविद्भिरिदं चोक्तं धर्मादौ बुद्धिमाश्रिते।**
**व्यवहारोऽनुमानादेः कल्प्यते न बहिःस्थिते ॥ १६८ ॥**

सर्व एवायमनुमानानुमेयव्यवहारो बुद्धयारूढेन धर्मधर्मिन्यायेन न बहिः-सत्तामपेक्षत इति **दिङ्नागे**नोक्तमिति ॥ १६८ ॥

दूषयति--

**अस्तीदं वचनं तेषामिदं तत्र परीक्ष्यताम्।**
**भेदोऽसतः कथं हि स्याद् बुद्धिशब्दप्रकल्पनात् ॥ १६९ ॥**

न हि शशविषाणादेर्बुद्धिनिबन्धनो भेदो दृष्ट इति ॥ १६९ ॥

निर्वस्तुके च जगति बुद्धिशब्दविभाग एव निर्निबन्धन इत्याह्--

**निर्वस्तुके कथञ्चिन्नु[1] प्रसवो बुद्धिशब्दयोः।**

ज्ञानमात्रवादिनश्च शब्दाभावात् तद्भेदो बुद्धिभेदकारण न सम्भवतीत्याह्—

**शब्दभेदोऽपि भवतस्तदभावान्न सिध्यति[2] ॥ १७० ॥**

बुद्धिमात्रनिबन्धनत्वे च साधनस्य दूषणमप्यस्मदीय तावन्मात्रेण सिध्य-तीत्याह् द्वयेन--

**यदि वा विद्यमानोऽपि भेदो बुद्धिप्रकल्पितः।**
**साध्यसाधनधर्मादिर्व्यवहाराय कल्प्यते ॥ १७१ ॥**
**ततो भवत्प्रयुक्तेऽस्मिन् साधने यावदुच्यते।**
**सर्वत्रोत्पद्यते बुद्धिरिति दूषणता भवेत्[3] ॥ १७२ ॥**

**यावदुच्यते,** दूषणमिति शेषः। **दिङ्नाग**वचनमपि[4] सर्व एवायं दूष्यदूषण-व्यवहार इत्येवमूहेन प्रकल्पितव्यमित्याह्—

**यश्च मन्त्रस्त्वयोक्तोऽयं धर्म्यादौ बुद्धिमाश्रिते।**
**न बाह्यापेक्षया स स्यादसिद्धयादौ मयेरिते ॥ १७३ ॥**

न चैवमावयोस्तुल्यत्वमित्याह्—

**बुद्धिप्रक्लृप्तिसिद्धिश्च भवतां व्यवहारिणाम्।**
**मदुक्तं दूषणं सिद्धं त्वदुक्तं तु न साधनम् ॥ १७४ ॥**

कथ न साधनम् ? अत आह्—

**बाह्यार्थव्यवहारित्वाज्ज्ञानोत्पादे स्थितेऽपि नः।**
**कथञ्चिन्न हि कल्प्येत व्यवहारोऽर्थवर्जितः ॥ १७५ ॥**

चोदयति—

**ननु यद्वन्मया हेतुर्नेष्यते दूषणं तथा।**
**तेन मे दूषणाभावाददुष्टं साधनं भवेत् ॥ १७६ ॥**

---

१. कथञ्चिद् स्यात्--मु० पा०। २. न विद्यते—२ पु०।

३. दूषणभाग् भवेत्—२ पु०।

४. यथा दिङ्नागेन साध्यसाधनव्यवहारो बुद्धिप्रकल्पित इष्टः, तथैवास्माभिर्दूष्यदूषण-व्यवहारः किमिति नेष्यत इति भावः।

परिहरति—

**नेदानीं दूषणैः कार्यम्, साधनाभावतो यदि ।**
**त्वयैवास्मदभिप्रेता स्वपक्षासिद्धिराश्रिता ॥ १७७ ॥**

यश्च वासनाभेदो बुद्धिभेदनिबन्धनत्वेनोक्तः, सोऽपि निर्निबन्धन इत्याह—

**न चास्ति वासनाभेदो निमित्तासम्भवात् तव ।**

शङ्कते—

**ज्ञानभेदो निमित्तं चेत्,**

दूषयति—

**तस्य भेदः कथं पुनः ॥ १७८ ॥**

पुनः शङ्कते—

**वासनाभेदतश्चेत् स्यात्,**

दूषयति—

**प्राप्तमन्योन्यसंश्रयम् ।**

स्वाभाविको ज्ञानभेदो न वासनानिबन्धन इति चेत् ? तत्राह—

**स्वच्छस्य ज्ञानरूपस्य न हि भेदः स्वतोऽस्ति ते ॥ १७९ ॥**

स्वभावत. स्वच्छ चिन्मात्ररूपमविलक्षणमेव ज्ञानम्, वासनानिबन्धनस्तु तस्य नीलादिरूपो भेद , अत एव हि तुरीये सकलवासनोच्छेदात् सच्चिन्मात्ररूपेण ज्ञानमवतिष्ठत इति ॥ १७९ ॥

प्रमाणमपि वासनातद्भेदयोर्नास्तीत्याह—

**प्रमाणं वासनास्तित्वे भेदे वापि न विद्यते ।**

विद्यमानापि वासना पूर्वगृहीतेऽर्थे ग्राहकभेदं ज्ञानान्तरमेव कुर्यात्, न तु नीलादिकं ग्राह्यमाविर्भावयितुमलमित्याह—

**कुर्याद् ग्राहकभेदं सा ग्राह्यभेदस्तु किङ्कृतः ॥ १८० ॥**

कथं न ग्राह्यभेद करोतीति ? तत्राह—

**संवित्त्या जायमाना हि स्मृतिमात्रं करोत्यसौ ।**

पूर्वानुभवजनितसस्कारः = वासना, अतोऽसौ स्मृतिमेवानुभूते करोति, न सांवृत घटादिकमत्यन्तागृहीत ग्राहयतीति ।

इतश्चानुपपन्ना वासनेत्याह—

**क्षणिकेषु च चित्तेषु विनाशे च निरन्वये ॥ १८१ ॥**
**वास्यवासकयोश्चैवमसाहित्यान्न वासना ।**

कारणत्रयं वासनाभाव उक्तम्, तत्रासाहित्यं विवृणोति—

**पूर्वक्षणैरनुत्पन्नो वास्यते नोत्तरः क्षणः ॥ १८२ ॥**
**उत्तरेण विनष्टत्वान्न च पूर्वस्य वासना ।**

न हि युगपदविद्यमानयोरेकेन इतरस्य वासना सम्भवति, सहभुवामेवाङ्गा-रागुरुधूमादीना वास्यवासकभावदर्शनादिति ।

साहित्याभ्युपगमेऽपि ज्ञानाना मिथः सम्बन्धाभावान्न वासना सम्भवति, न वानन्तरक्षणवर्त्तित्वमेककालत्व वा सम्बन्ध., तस्य सन्तानान्तरेषु ज्ञानान्त-रेषु च साधारणत्वादित्याह—

**साहित्येऽपि तयोर्नैव सम्बन्धोऽस्तीत्यवासना ॥ १८३ ॥**

'क्षणिकत्वान्न वासना' इत्येतद् विवृणोति—

**क्षणिकत्वाद् द्वयस्यापि[1] व्यापारो न परस्परम् ।**

सयोगसमवायादिव्यापारनिबन्धना वासना दृष्टेति ।

'निरन्वयविनाशित्वान्न वासना' इत्येतद् वृणोति—

**विनश्यच्च कथं वस्तु वास्यतेऽन्येन नश्यता ॥ १८४ ॥**

सावयवाना स्वरूपेण सतामेव वास्यवासकभावः, यथा धूमावयवाना सूक्ष्मा-णामगारे, चम्पकावयवाना च तैले सक्रान्तिरिति ॥ १८४ ॥

किमिति न वास्यते ? अत आह—

**अवस्थिता हि वास्यन्ते भावाभावैरवस्थितैः ।**

अवस्थिताना ह्यवस्थितै. सक्रान्तिर्वासना, न च निरन्वयविनष्टस्य पूर्वोत्त-रेषु केनचिदशेन संक्रान्ति सम्भवति । अस्मत्पक्षे तु आत्मन· स्थिरत्वाद् द्वित्रि-क्षणवर्त्तिना ज्ञानेन सम्भवति वासनेति ।

चोदयति—

**अवस्थितो हि[2] पूर्वस्माद्भिद्यते नोत्तरो यदि ॥ १८५ ॥**

**पूर्ववद् वासना तत्र न स्यादेवाविशेषतः ।**

यदुक्तम् 'अवस्थिता हि वास्यन्ते' इति, तदयुक्तम्, अवस्थितत्वे हि पूर्वापर-कालयोरेकरूपत्वमङ्गीकरणीयम्, इतरथा अवस्थितत्वानुपपत्तेः। ततश्च प्रागवस्थि-तरूपस्य पश्चादपि तद्रूपत्वाद्वासनानुपपत्तिरविशेषात् । अथ विशेषान्तर वासना-ख्यम् अवस्थित एव धर्मिणि जायत इत्युच्यते, स खलु विशेषो धर्मिणो भिन्नश्चेद् धर्मिणस्तादवस्थ्यम्, अभिन्नत्वे तज्जनने धर्मिणोऽपि तदभिन्नस्य जननापत्तेर-वस्थितत्वानुपपत्तिरिति ।

क्षणभङ्गुरत्वे तु सम्भवति वासनेत्याह—

**भङ्गुरे पूर्वसादृश्याद् भिन्नत्वाच्चास्ति वासना ॥ १८६ ॥**

अवस्थिते पूर्वापरकालयोरेकरूपस्य रूपान्तरजननानुपपत्ति. स्याद् । अस्म-

---

१. 'द्वयोश्चापि—२ पु० ।

२. अपि—२ पु० ।

त्पक्षे तु पूर्वस्माज् ज्ञानक्षणादुत्तरक्षणस्य भिन्नत्वात् सादृश्याच्च युक्तैव वासना। ताद्रूप्यमेव च वासना, यथा लाक्षारसोपसिक्ताद्बीजपूरकुसुमात् तद्रूपं जायमानं फल तद्वासितमित्युच्यते, तेन पूर्वमुत्तरमात्मसरूप जनयद् वासयतीत्युच्यते, उत्तरं च वास्यते इति, न पुनर्व्यापारापेक्षा वासना, येन क्षणिकस्य न स्यात्। कार्य-कारणत्व च वास्यवासकयो. सम्बन्ध इति नासम्बन्धदोष इति ? परिहरति—

**नैतदस्त्यनुरूपं तु क्षणिकत्वे धियां तव।**

क्षणिकाना हि जनकत्वमेव सम्भवति नतरा सदृशजनकत्वमिति।

यथा तावन्न जनकत्व तथा तद् दर्शयति सार्धेन—

**पूर्वज्ञानं त्वनुत्पन्नं कार्यं नारभते क्वचित्॥ १८७॥**
**न विनष्टं, न तस्यास्ति निष्पन्नस्य क्षणं स्थितिः।**
**तेनोत्पन्नविनष्टत्वान्नास्त्यारम्भक्षणोऽपि हि॥ १८८॥**

न तावदनुत्पन्नं विनष्ट वा जनकम्, असत्त्वात्तस्य, न वोत्पन्नस्य क्षणिकत्वात्, क्षणान्तरावस्थान कदा कार्यमारभते, पूर्वक्षणवर्त्तित्वमेव कारणत्वमिति चेन्न, गवाश्वयोरपि यादृच्छिकपौर्वापर्ये तत्प्रसङ्गात्, पौर्वापर्यनियमस्तु भूयोदर्शन-गम्यः, न च क्षणिकाना निरन्वयविनाशिना च विशेषत सामान्यतो वा भूयोदर्शन सम्भवतीति न कार्यकारणभाव इति॥ १८८॥

सादृश्य तु सुतरा न सम्भवतीत्याह—

**निरन्वयविनष्टत्वादानुरूप्यं[1] कुतः पुनः।**

कथ निरन्वयविनाशे सारूप्यानुपपत्तिः ? अत आह—

**न तदीयोस्ति कश्चिच्च धर्म उत्तरबुद्धिषु॥ १८९॥**

तथापि कथम् ? अत्याह—

**समानधर्मतां मुक्त्वा नानुरूप्यं च विद्यते।**

अवयवादिसामान्यानुगमनिबन्धन हि सादृश्यम् इति।

न च सरूपजनकत्वेन वासकत्वे विलक्षणाद्विलक्षणोत्पत्ति. स्यादित्याह द्वयेन—

**यदि स्यादानुरूप्याच्च वासना गोधियो यदा॥ १९०॥**
**हस्तिबुद्धिर्भवेत् तत्र वैलक्षण्यान्न वासना।**
**ततः परं च गोज्ञानं निर्मूलत्वान्न[2] सम्भवेत्॥ १९१॥**
**सर्वं विलक्षणं ज्ञानं न स्यादेव विलक्षणात्।**

ननु सरूपमपि जनयता नावश्यमनन्तरमेव जनयितव्यम्, परम्परयापि तज्जन-नाविरोधात्, तेन गवाकार ज्ञानम् अश्वाकारविज्ञानमपि जनयत् [3]तादृश्या वास-

---

१. ०विशिष्ट०—मु० पा०।
२. निर्बीजत्वान्न—२ पु०।
३. तादृश्येति। 'गो' इत्याकारकज्ञानवासनया।

नया 'कार्यं करोति[1], यथा च सह जनयति[2] तथा पश्चात्[3] तस्यां सन्ततौ कदाचिदपि गोज्ञानं जन्यते। सा ह्युत्तरोत्तरज्ञानसंक्रान्त्यैव शक्नोत्येव कालान्तरेऽपि स्वोत्पादकसरूप ज्ञानमुत्पादयितुम्। एव नोलपीतादिज्ञानानि सर्वाण्येव स्वानुरूपज्ञानजननसमर्थानि विचित्रवासना कुर्वन्ति। तदेव सर्वाणि ज्ञानानि सर्वाकारवासनायुक्तानि, कदाचित्तु कानिचित्। वासना स्वकार्याणि[4] करोति, यथा भवन्मते बहुष्वर्थेषु पूर्वानुभूतेषु तद्विषयका वासनाः सहस्रश पुरुषे व्यवस्थिता अपि स्वप्ने जागर्यायां च कदाचित् काश्चित् स्मृति जनयन्ति, तथास्माकमपि भविष्यतीत्यत आह—

**बाह्यार्थानुग्रहाभावात् पारार्थ्येनावशीकृताः ॥ १९२ ॥**
**निरन्वयविनाशिन्यः कुर्युः कार्यं कथं क्रमात्।**

सत्यपक्षे हि स्थायिन्य सर्वा वासना पुरुषे अवस्थिता अपि बाह्यार्थानुग्रहात् सदृशदर्शनादृष्टदेशकालाद्युद्बोधकक्रमात् पारार्थ्येनात्मार्थत्वेन च वशीकृतास्तदीयमनःप्रणिधानक्रमाद्युक्तं क्रमेण कार्यं कुर्वन्ति। भवतस्तु ज्ञानवासनातिरिक्तस्य कस्यचिदभावात् निरन्वयविनाशित्वाच्च वासनाना कथ किमपेक्षया क्रमारम्भः स्यादिति।

इतश्च न क्रमारम्भ इत्याह—

**विनाशे कारणस्येष्टः कार्यारम्भश्च नान्यथा ॥ १९३ ॥**

कारणविनाशानन्तरमेव कार्यमिति भवतः दर्शनमिति ॥ १९३ ॥

तत. किम्? इत्याह सार्द्धेन—

**तत्रैव ज्ञाननाशेन विनष्टाः सर्ववासनाः।**
**तेन सर्वाभ्य एताभ्यः सर्वाकारं यदुत्थितम्[5] ॥ १९४ ॥**
**ज्ञानमेकक्षणेनैव विनाशं गन्तुमर्हति।**

ज्ञानधारा हि सर्वा वासना ज्ञाननाशेन नश्यन्ति, अत सर्वाकारमेक ज्ञानं युगपज्जनयेयुरिति न क्रमारम्भसिद्धिरिति।

अथ ज्ञाननाशेऽपि शक्तिपर्याया वासना न नश्येयु., तत क्षणिकसिद्धान्तहानिः, अक्षणिकस्य च कार्यारम्भानुपपत्तिरित्याह—

**यद्याश्रयविनाशेऽपि शक्त्यनाशोऽभ्युपेयते ॥ १९५ ॥**
**क्षणिकत्वं च हीयेत न चारम्भोऽन्यथा भवेत्।**

शङ्कते—

**वासनानां प्रवाहोऽपि यदि ज्ञानप्रवाहवत् ॥ १९६ ॥**

---

१. कार्यमिति। गोज्ञानम्।
२. करोतीति। जनयति।
३. पश्चादिति। स्वाव्यवहितोत्तरकाले।
४. स्वकार्यं—मु० पा०।
५. समुच्छ्रितम्—का०।

क्षणिकानामपि वासनानां ज्ञानानामिव प्रवाहाङ्गीकरणात् कार्यारम्भ. क्रमारम्भश्च युक्त इति ॥ १९६ ॥

दूषयति—

**वासनातस्ततो ज्ञानं न स्यात्तस्माच्च वासना ।**
**कुर्यातां तुल्यमेवैते[1] नान्योन्यं तु कदाचन ॥ १९७ ॥**

सर्वं हि कारणं सजातीयारम्भकमिति व॰ सिद्धान्त॰, घटो घटं पटः पटमित्यङ्गीकरणात्, ततश्च वासना वासनामेव कुर्यात् ज्ञानं च ज्ञानम्, न तु वासनातो ज्ञान ज्ञानाच्च वासनेति सिद्धयेत्, ततश्च गवाकाराज् ज्ञानादुत्पन्नया वासनया परम्परया कालान्तरे गवाकारज्ञानसिद्धिरनुपपन्ना, ज्ञानमेव गवाकारं गवाकारज्ञानस्योत्पादकमिति उपपद्यते, ततो गोज्ञानादश्वज्ञानं न स्यादिति । न चौत्सर्गिक कारणस्य सजातीयारम्भकत्वम्, विलक्षणसहकारिसमवधाने तु विजातीयमपि करोति[2], यथा मुद्गराभिघातसमवधाने घटः कपालम्, अतो ज्ञानमपि वासनाम्, वासना च ज्ञान कुर्यादित्यत आह—

**नान्यो विलक्षणो हेतुर्येनान्यादृक् फलं भवेत् ।**

ज्ञानातिरिक्तस्याभावादिति ।

उपसहरति—

**तस्मात् संवृतिसत्यैषा कल्पिता नास्ति तत्त्वतः ॥ १९८ ॥**

भवत्विति चेत् ? तत्राह—

**न चेदृशेन भावेन कार्यमुत्पद्यते क्वचित् ।**

उक्तमिदम्—'न सावृत कार्यक्षमम्' ( श्लो॰ वा॰ ५-१६५ ) इति ।

यत्त्ववस्थितस्य भिन्नाभिन्ना वासना न सम्भवन्तीत्युक्तम्, तत्राह—

**यस्य त्ववस्थितो ज्ञाता ज्ञानाभ्यासेन युज्यते ॥ १९९ ॥**
**स तस्य वासनाधारो वासनापि स एव वा ।**

**यस्य** मेऽवस्थितपुरुषो **ज्ञानाभ्यास**पाटवादिना **युज्यते** सम्बध्यते तस्यासौ भिन्नाया एव **वासनाया.** समवायित्वेना**धारो** भवतु, तत्समवायाच्च पूर्वावासितस्यापि वासितत्वोपपत्तिरभेदेन वा, **स एव** तावद् **वासना** भवतु, तदाकारेण च तस्योत्पत्तिविनाशयोरपि सतो रूपान्तरेणावस्थानान्न नित्यत्वहानिरिति ।

यत्तु निर्दशितम्—लाक्षावसिक्त कुसुमसरूप फल जनयतीति, तद् युक्तम्, तत्र हि लाक्षावयवाना सूक्ष्माणां कुसुमात् फले सङ्क्रान्ति., न तु पूर्वज्ञानस्याशः कश्चिदुत्तरेषु ज्ञानेषु अनुवर्त्तते इत्युक्तो विशेष. । तदाह

**कुसुमे बीजपूरादेर्यल्लाक्षाद्युपसिच्यते ॥**

---

१. सदृशी चैते—२ पु॰ ।

२. करोति—२ पु॰ नास्ति ।

**तद्रूपस्यैव संक्रान्तिः फले तस्य,**

प्रकरणार्थमुपसहरति—

**इत्यवासना ॥ २०० ॥**

बौद्धमपि दर्शनं तात्पर्यतो नैवावगतमेवंवादिभिरित्याह—

**युक्त्यानुपेतामसती प्रकल्प्य यद्वासनामर्थनिराक्रियेयम् ।**
**आस्थानिवृत्त्यर्थमवादि बौद्धैर्ग्राह्यं[1] गतास्तत्र कथञ्चिदन्ये ॥ २०१ ॥**

इति निरालम्बनवाद·

## अथ शून्यवादः

अत्र भाष्यम्—"शून्यस्तु कथम् ? अर्थज्ञानयोराकारभेद नोपलभामहे, प्रत्यक्षा च नो बुद्धि.' अतस्तद्भिन्नमर्थरूपं नाम न किञ्चिदस्तीति पश्याम." ( शा० भा० पृ० ३२ ) इति, तदयुक्तम्, अत्र प्रकृतिप्रत्ययशब्दानुवृत्त्या प्रत्ययः शून्य इति उच्यते। किञ्च इद प्रत्ययशून्यत्वमन्यतोऽर्थविरहात् तथा समाप्तावुपसंगृहीतमर्थरूपं न पश्याम इति, तेनार्थालम्बनत्वमेवेदमुच्यते, तच्च निरस्तम्, अत· केन हेतुना पुनः प्रत्यवस्थानम् ? अत आह—

**एवमुक्तेऽनुमानस्य ज्ञानमाश्रित्य दूषणे ।**
**ज्ञानप्रवृत्त्यशक्त्या तु परः प्रत्यवतिष्ठते ॥ १ ॥**

प्रत्यक्षादिज्ञानविरोधेन हि प्रागनुमानं निरस्तम्, तस्य च बहिः प्रवर्त्तितु[2]-मशक्तेर्न तद्विरोधोऽनुमानस्य सम्भवतीति पूर्वोक्तविरोधपरिहारेण प्रत्यवस्थान-मिति ॥ १ ॥

प्रत्यक्षाशक्तिमेव दर्शयितु परीक्षामवतारयति द्वयेन—

**यत् तावन्मन्यमानेन प्रत्यक्षं भवतोच्यते ।**
**दूषणं तद्विरोधादि तदिदानीं परीक्ष्यताम् ॥ २ ॥**
**प्रवर्तितुं हि किं शक्तं स्तम्भाद्यर्थे बहिः स्थिते ।**
**अथ वात्मांश एवैतत् ग्राह्ये क्षीणं न वस्तुनि ॥ ३ ॥**

यादृशं बाह्यार्थग्राहि प्रत्यक्ष मन्यमानेन **मीमांसकेन** तद्विरोधोऽनुमानस्यो-च्यते, तदेव कि बहिः प्रवर्त्तितु[3] शक्तम्, किं वात्माशपर्यवसायित्वान्न बहिर्वस्तुनि प्रवर्तत इति परीक्षितव्यमिति ॥ २-३ ॥

किमर्था पुनरिय परीक्षा ? अत आह—

**तद्यद्येतेन बाह्योऽर्थो गृह्यते दूषणं ततः ।**
**त्वदुक्तं सर्वमात्मांशे ग्राह्ये तन्नोपपद्यते ॥ ४ ॥**

१. बुद्धै०—१ पु० ।  २. प्रवर्तयितु०—२ पु० ।
३. प्रवर्तयितु०—२ पु० ।

बाह्यग्राहिणा हि प्रत्यक्षेण तदपह्नवानुमान बाध्यते नात्मांशपर्यवसायिना, तत्र यदि गृह्यमाणो नीलादिर्बाह्याकारः, ततो बहि: प्रवृत्तिशक्तं प्रत्यक्षम्, अथ ज्ञानस्य, तत: स्वांशपर्यवसायि, तेन कस्यायमाकार इति परीक्षणीयमिति ॥ ४ ॥

ननु सिद्धे ग्राह्यसद्भावे तस्यार्थाकारत्वं ज्ञानाकारत्वं वा परीक्षितु शक्यम्, तत्सिद्धिरेव तु कुत ? तत्राह—

**तत्र तावदिदं सिद्धं सर्वप्राणभृतामपि ।**
**ग्राह्यत्वं नीलपीतादिदीर्घाद्याकारवस्तुनः ॥ ५ ॥**

सर्वप्राणभृतामविवादसिद्धमिदं यन्नीलाद्याकार किञ्चिद् वस्तु प्रकाशत इति ।

तथापि ज्ञानज्ञेययोरपि प्रकाशनादुभयमप्यङ्गीक्रियताम्, कि परीक्ष्यते ? अत आह—

**न चाप्याकारभेदेन ज्ञानज्ञेयावधारणा ।**

एकमेव नीलाकार वस्तु प्रकाशते, न द्वयमिति ।

तथापि यस्यैव प्रकाशनेऽर्थस्य ज्ञानस्य वायमाकार. तस्यैवायमाकारोऽस्तु, क: परीक्षावसर. ? अत आह—

**न चान्यतरधर्मत्वं विस्पष्ट तत्र[1] गृह्यते ॥ ६ ॥**

नायमाकारोऽर्थज्ञानयोरन्यतरधर्मतया निर्धारितो भासते, यत परीक्षावसरो न स्यादिति ॥ ६ ॥

नन्वेकस्मिन्नपि प्रकाशमानेऽन्यदप्रकाशमानमेव सिध्यति, तथा च सिध्यत्येव द्वैतमत आह—

**गृह्यमाणस्य चास्तित्वं नाग्राह्यस्याप्रमाणकम् ।**

तस्मादेकस्यैव ध्रुवमस्तित्वम्, द्वितीय त्वस्ति नास्तीति परीक्षितव्यमित्याह—

**तस्मादाकारवद् वस्तु ग्राह्यत्वाद्विद्यते ध्रुवम् ॥ ७ ॥**

तेन यदि परीक्षमाणा ज्ञानमेवाकारवदध्यवस्यामः, ततस्तन्मात्र एव प्रत्यक्षप्रमा क्षीणेत्यर्थकल्पनां विजहीमः, ज्ञानस्य स्वय प्रकाशमानस्य नार्थमन्तरेणानुपपत्तिरिति सिध्यति द्वैतम्, अथ तु बाह्यस्यैवायमाकारवत्तया प्रकाशस्तावत् प्रकाशमानत्वादस्ति, तस्य च जडत्वेन पराधीनप्रकाशत्वात् तत्प्रकाशोपपत्तये ज्ञानमपि कल्पयितव्यमिति सिध्यति द्वैतम्, तदिदमाह द्वयेन—

**अतः परीक्षमाणानां ज्ञानमाकारवद् यदि ।**
**तन्मात्रे च प्रमा क्षीणा ततो नास्त्यर्थकल्पना ॥ ८ ॥**
**यदि वाकारवत्ता स्याद् बाह्यस्यैवेह वस्तुनः ।**
**तदस्ति गृह्यमाणत्वात् तत्सिद्धैवास्ति धीरपि ॥ ९ ॥**

पूर्वपक्ष गृह्णाति—

**किं तावदत्र युक्तं स्याज्ज्ञानमाकारवत्,**

---

१. तस्य—२ पु० ।

ननु बहिरवभासमानस्य कथ ज्ञानाकारत्वम् ? इति पृच्छति—

**कुतः ?**

उत्तरमाह—

**एकमाकारवद् वस्तु ग्राह्यमित्यध्यगीष्महि ॥ १० ॥**

'एकमेव हि नीलाद्याकारं वस्तु प्रकाशते न द्वयम्' इत्येतावदधिगतवन्तो वयम्, अतस्तन्मात्रमेवाश्रयितव्यम्, न द्वयमिति ॥ १० ॥

तथापि कथ ज्ञानाकारता ? इत्याह—

**तद् यद्याकारवानर्थो बाह्यः कल्प्येत तस्य च ।**
**ग्राह्यत्वमन्यथा न स्यादिति ग्राहककल्पना ॥ ११ ॥**

अर्थस्य बाह्याकारत्वे तस्य जडस्य ग्राह्यत्वसिद्धये ग्राहक ज्ञानमङ्गीकर्त्तव्य-मिति ॥ ११ ॥

तत्र को दोष ? अत आह—

**तेनाकारवतः क्लृप्ताद् ग्राह्यादाकारवर्जितम् ।**
**वस्त्वन्तरं प्रकल्प्यं स्याद् ग्राहकं निष्प्रमाणकम् ॥ १२ ॥**

न हि क्लृप्तेनैवोपपत्तौ विना प्रमाणेनाक्लृप्तकल्पन युक्तमिति ॥ १२ ॥

शङ्कते—

**तस्याकल्पनमिच्छँश्चेदर्थे ग्राहकतां वदेः ।**

ज्ञानवदर्थ एव स्वयम्प्रकाशोऽस्त्विति ।

दूषयति—

**संज्ञामात्रे विसंवादः सिद्धा त्वेकार्थकल्पना ॥ १३ ॥**

एकमेव स्वयम्प्रकाश वस्त्विति मे मतम्, तस्यार्थ इति सज्ञामात्र भवतोच्यते, नार्थे विशेष कश्चिदिति ॥ १३ ॥

एतदेव विवृणोति—

**ग्राह्यग्राहकयोरैक्यं सर्वथा प्रतिपाद्यते ।**

ज्ञानं वा भवत्वर्थो वा, सर्वथा सिद्धं तावद् ग्राह्यग्राहकयोरेकत्वम् । तावदेव चास्माभि· प्रतिपाद्यते, नान्यदिति ।

नन्वर्थो बाह्य·, विज्ञान त्वान्तरं क्षणिकम्, तत् कथं न वस्तुनि विशेषः ? अत आह—

**बाह्याभ्यन्तररूपश्च परिकल्प्यो मृषेष्यते ॥ १४ ॥**

एकमपेक्ष्येतरद् बाह्यम्, तदपेक्ष्य चान्यदान्तरम्, अद्वितीये तु वस्तुनि मृषैवायं विभागः । स्वयम्प्रकाशत्व त्वर्थस्यापि क्षणिकत्वमेव, स्थायिन· सुषुप्त्यादावप्रकाश-मानस्य स्वप्रकाशत्वानुपपत्ते· । अतो वस्तुनि विशेषाभावात् संज्ञामात्रे विवाद इति ॥ १४ ॥

श्लो० वा० : १३

यदि विज्ञानमात्रमेव तत्त्वम्, ततस्तस्य सच्चिन्मात्ररूपत्वान्नीलादेर्ग्राह्याकारस्य कथमाभासो नीलमिदमिति, कदाचिच्च अस्मदर्थस्य ग्राहकाकारस्याहमिति ? अत आह सार्द्धद्वयेन—

**मत्पक्षे यद्यपि स्वच्छो[1] ज्ञानात्मा परमार्थतः ।**
**तथाप्यनादौ संसारे पूर्वज्ञानप्रसूतिभिः ॥ १५ ॥**
**चित्राभिश्चित्रहेतुत्वाद् वासनाभिरुपप्लवात् ।**
**स्वानुरूप्येण नीलादि ग्राह्यग्राहकरूषितम्[2] ॥ १६ ॥**
**प्रविभक्तमिवोत्पन्नं नान्यमर्थमपेक्षते ।**

अनादौ संसारे विचित्रग्राह्यग्राहकाकारबुद्धिजन्याभिर्विचित्राभिर्वासनाभिर्जन्यमानस्य स्वहेत्वानुरूप्येण विचित्रग्राह्यग्राहकाकारशबलस्य विभक्तस्य विचित्रस्योत्पत्तिसिद्धेर्न वैचित्र्यसिद्धयेऽर्थापेक्षा सम्भवति ।

यथाऽऽहुः—

अविभागोऽपि बुद्ध्यात्मविपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ (प्र० वा० २-३ ४) इति ।

तथा—

परिच्छेदो[3]ऽन्तरन्योऽयं भागो बहिरिव स्थितः ।
ज्ञानस्याभेदिनो भिन्नौ प्रतिभासो ह्युपप्लवः ॥ (प्र० वा० २-२१२) इति ।

**उपप्लवाद्** भ्रान्त्याकारसमारोपादित्यर्थः[4] ।

ननु ज्ञानवैचित्र्याद् वासनावैचित्र्यम्, ततश्च तद्वैचित्र्यम्—इतीतरेतराश्रयः स्यादित्युक्तं **निरालम्बनवादे**, अत उक्तम् 'अनादौ संसारे' इति । तद्विवृणोति—

**अन्योन्यहेतुता चैव ज्ञानशक्त्योरनादिका ॥ १७ ॥**

शक्तिरिति वासनोच्यत इति । एकया वासनयैकं ज्ञानं जन्यते, तेनाप्यन्या वासना, तयाप्यन्यज् ज्ञानमिति नेतरेतराश्रयम् । न च सर्वाद्यस्य कथं सिद्धिरिति वक्तव्यम्, अनादित्वात् संसारस्येति ॥ १७ ॥

कल्पनालाघवादपि ज्ञानाकारतैव नीलादेर्युक्तेत्याह—

**अनेककल्पनायाश्च ज्यायसी ह्येककल्पना ।**

ननु भवतामपि ज्ञानवासनयोः कल्पनाभेदादस्त्येवानेककल्पना ? अत आह—

**शक्तिमात्रस्य भेदश्च वस्तुभेदाद् विशिष्यते ॥ १८ ॥**

१. स्वस्थ इति पाठान्तरम्
२. दूषितम्—मु० पा०
३. परिच्छेदान्तराच्चायं भावो बहिरवस्थितः—
ज्ञानस्याभेदिनो भेदप्रतिभासोऽप्युपप्लवः ॥—मु० पा० ।
४. भ्रान्तिविषयीभूतबाह्याकारसमारोपादिति भावः ।

ज्ञानस्यैव हि शक्तिमात्रं वासना, तन्मात्रकल्पना वस्तुभेदकल्पनाल्लघीयसी; ज्ञानशक्तिरूपस्य सस्कारस्यार्थवादिनाप्यभ्युपगमात्। सर्वं चेदं ज्ञानातिरिक्तवासनाभ्युपगमेनोक्तम्। परमार्थतस्तु न ज्ञानातिरिक्तं किञ्चिदस्ति बौद्धानाम्, ज्ञानान्येव तु समनन्तरप्रत्ययवशेन विचित्रनीलपीतादिरूपाणि जायमानानि कार्यकारणरूपाणि अनादिसन्तानरूपेण प्रवर्त्तन्ति, नार्थरूपमपेक्षन्त इति॥ १८॥

उभयवादिसिद्धत्वाच्च ज्ञानस्य तदाकारकल्पनैवार्थाकारकल्पनातो ज्यायसीत्याह—

**तस्मादुभयसिद्धत्वाज् ज्ञानस्याकारकल्पना।**
**ज्यायसी,**

**तस्माद्** अर्थाकारकल्पनादित्यर्थः। भवतस्त्वर्थं कल्पयित्वापि गरीयसीयं ज्ञानाकारकल्पनावश्यमङ्गीकर्त्तव्येत्याह—

**भवतस्त्वर्थं कल्पयित्वा भवेदियम्॥ १९॥**

कारणमाह—

**तदसिद्धावशक्तत्वात्,**

नीलाद्याकारासिद्धौ हि संविन्मात्ररूपं ज्ञानं नीलादिकमर्थविशेषमुपस्थापयितुं न शक्नुयात्, न ह्यसति संविद्भेदे संवेद्यभेदः सम्भवति, नीलाद्याकाराभावे च संविदामभेदः[1] स्यात्, संविद्रूपस्य सर्वत्र समानत्वात्। नीलादिरूपेण त्वर्थसमानं ज्ञानं सरूपार्थविषयं भवतीति युक्तम्, यदाहु —"नहि संवित्तिसत्तयैव तद्वेदना युक्ता, तस्याः सर्वत्राविशेषादविशेषप्रसङ्गात्, तां सारूप्यमाविशत् सरूपयितुं घटयेत्" (    ) इति। तथा—

तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मनः।
भाव्यं तेनात्मना येन प्रतिकर्म विभज्यते॥ (प्र० वा० २-३०२) इति।

तत्रावश्यमर्थविशेषविषयत्वसिद्धये ज्ञानानामपि नीलाद्याकारवत्त्वम् अङ्गीकर्त्तव्यम्। यद्यपि स्वभावत एव संविदो व्यतिभिद्येरन्, तथाप्यसौ भेदो न नीलाद्युपरागमन्तरेण शक्यते निरूपयितुम्, न चानिरूपितभेदाः संवेद्यभेदमलमुपस्थापयितुम् न हि संविदस्तीत्येतावता नीलावधारणं सम्भवति, तद्रूपस्य पीतादिसाधारणत्वात्। तस्माज् ज्ञानाकारो नीलादिः, नार्थाकार इति।

किञ्च, एवमर्थाकारत्वे नीलस्य तेन ज्ञानेन विप्रकृष्टता भिन्नता स्यात्, ततश्च तेनास्य प्रकाशो न स्यादित्याह—

**तेनैवं विप्रकृष्टता।**

मत्पक्षे तु सम्भवति ग्राह्यत्वमित्याह—

**प्रत्यासन्नं च,**

---

१. संविदो न भेदः—२ पु०।

प्रत्यासत्तिः=तादात्म्यम्, ग्राह्य मम भविष्यतीति वक्ष्यमाणेन सम्बन्धः। तदेवं प्रयोगः—नीलरूपं नीलवेदनादभिन्नम्, तदुत्पत्तौ सवेद्यमानत्वात् तत्स्वरूपवत् तद्भिन्नत्वेनासंवेद्यमानत्वाद्वा, तत्स्वरूपवदभिन्नत्वे वा सवेद्यता न स्यात् पीतवदिति। तदनेन संवेदनादिति बौद्धोक्तो हेतुर्दर्शित इति।

अपरमपि ग्राह्यलक्षणयोगादिति तदुक्तमेव हेतु दर्शयति—

**सम्बद्धं[1] ग्राह्यं मम भविष्यति ॥ २० ॥**

मम विज्ञानसम्बद्धमेव नील तदात्मत्वात्, ततश्च युक्त तस्य ग्राह्यत्वम्। इदमेव हि ग्राह्यलक्षणं यत्तादात्म्यम्। तव त्वर्थान्तरत्वान्न तावत्तादात्म्यम्, न चान्योऽपि कश्चिज् ज्ञानार्थयो. सम्बन्धोऽस्ति, यद्वशादर्थो ग्राह्यलक्षणमनुवर्त्तेत, तत्रासम्बन्धे ग्राह्यत्वाभ्युपगमे सर्वसविदां सर्वविषयता स्यात्, तत्सर्वः सर्ववित् स्यात्, हेतुत्वं ग्राह्यलक्षणमिति चेन्न, नेत्रादेरपि प्रसङ्गात्, ज्ञानाकारार्पणक्षमत्वं हेतुत्वमिति चेन्न, प्रमाणाभावात्, न हि नीलोऽर्थो ज्ञाने नीलाकारमर्पयतीति। किञ्च, न प्रमाणमस्ति, ज्ञानवैचित्र्यस्य समनन्तरप्रत्ययादेवोपपत्तेरिति वक्ष्यामः। सारूप्यं ग्राह्यत्वमिति चेत्, असन्निहितोऽपि नीलोऽर्थो नीलज्ञानस्य ग्राह्यः स्यात्।

किञ्च, कथञ्चित् सारूप्य सर्वज्ञाना सर्वार्थैरविशिष्टम्, सर्वेषा क्षणिकत्वात्, ततश्च सैव सर्वज्ञतापत्ति। सर्वात्मना तु सारूप्येऽर्थवज्ज्ञानस्यापि जडत्व स्यात्। यथाहुः—

"एकदेशेन सारूप्ये सर्वं स्यात् सर्ववेदकः।
सर्वात्मना तु सारूप्ये ज्ञानमज्ञानतां व्रजेत्" ॥ ( ) इति।

सारूप्यतदुत्पत्तिभ्या ग्राह्यत्वमिति चेत्? धारावाहिकेषु पूर्वमुत्तरस्य ग्राह्यं स्यात्, तस्मात् सर्वा बुद्धय स्वात्मानमेवानुभवन्ति नान्यत्। स्वयमेव चानुभूयन्ते न बुद्ध्यन्तरेण, तस्यापि बुद्ध्यन्तरस्य स्वात्मपर्यवसायित्वात्। तथाहुः—

"नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः।
तस्यापि तुल्यचोद्यत्वात् स्वयं सैव प्रकाशते" ॥
(प्र० वा० २-३२७) इति ॥ २० ॥

इतश्च ज्ञानाकारो नीलादिक इत्याह—

**इतश्चाकारवज्ज्ञानम्,**

इदमेव साधयितुमुत्पत्त्यवस्थायामेव ज्ञानं गृह्यत इत्येतत्तावत् साधयति—

**यस्मात् तद्वत्[2] प्रकाशकम्।**

भवतामपि हि ज्ञानं प्रकाशकमिति।

कस्य प्रकाशकम्? इति तद्दर्शयति—

**स्वयम्प्रकाशहीनस्य बाह्यस्योपासनं[3] मतम्[4] ॥ २१ ॥**

१. संविद्धमिति पाठान्तरम्।
२. तद्वत्। आकारवादित्यर्थः।
३. उपासनमिति। उपेक्षा।
४. उपायसंमतमिति पाठान्तरम्।

ततः किम् ? इत्याह—

**न चागृहीते ज्ञानाख्ये[1] प्रकाश्योऽर्थोऽवधार्यते।**
**तदधीनप्रकाशत्वाद् दीपाभासे[2] यथा घटः॥ २२॥**

न ह्यगृहीत प्रकाशक प्रकाश्य प्रकाशयति दीपप्रभावदिति। तदाहुः—
"अप्रत्यक्षोपलम्भस्य नार्थदृष्टि प्रसिध्यति" (          ) इति।

इतश्चोत्पत्तावेव गृह्यत इत्याह—

**उत्पन्नेष्वपि चार्थेषु प्रकाशाभावतः[3] क्वचित्।**
**प्रतिबन्धकयोगाद् वा संवित्तिर्नोपजायते॥ २३॥**
**ज्ञानस्योत्पद्यमानस्य प्रतिबन्धो न कश्चन।**
**न चाप्रकाशरूपत्वं येनास्याग्रहणं भवेत्॥ २४॥**
**प्राक् चार्थग्रहणादिष्टा तस्योत्पत्तिस्तदैव च।**
**संवेदनं भवेदस्य,**

प्रागेव तावदर्थग्रहणाज् ज्ञानोत्पत्तिर्भवतामिष्टा, अनुत्पन्नस्य ग्राहकत्वायोगात्, उत्पन्नाश्च भावा द्विधैव न गृह्यन्ते, प्रकाशकाभावात्, प्रतिबन्धकसद्भावाद् वा, यथा सन्तमसे कुड्यव्यवाये पर.। न च ज्ञानस्य प्रतिबन्धकमस्ति, न चाप्रकाशभाव., स्वयम्प्रकाशत्वात्, अतोऽवश्यमुत्पत्तावेव ग्रहीतव्यमिति।

यदि चैवमपि न गृह्येत, कालान्तरेऽपि न गृह्येत, अविशेषादित्याह—

**न चेत् कालान्तरेऽपि न॥ २५॥**

अविशेषमेव दर्शयति—

**किं हि तस्य भवेदूर्ध्वं प्राक् च नासीन्न येन तत्।**
**पूर्वं गृहीतं पश्चाच्च गृहीतमिति भाष्यते॥ २६॥**

ज्ञानान्तरमिति चेत् ? तत्राह—

**ज्ञानान्तरस्य चोत्पत्ति प्रकाशो न प्रतीक्षते।**

घटादीनामप्रकाशात्मनां हि प्रकाशाय प्रकाशापेक्षा युक्ता, न तु प्रकाशात्मनो ज्ञानस्येति।

सजातीयापेक्षायामनवस्थेत्याह—

**तस्य तस्यापि चान्येन संवित्तावस्थितिर्भवेत्॥ २७॥**

मा नाम सवेदि ज्ञानमिति चेन्न, उत्तरकाले स्मृतिदर्शनात्, एवं चैकविषयज्ञानप्रवाहे एवायुषः पर्यवसानाद्विषयान्तरसञ्चारो न स्यात्। यथाहुः—

"ज्ञानान्तरेणानुभवो[4] भवेत्[4] तत्रापि च स्मृति."। (प्र० वा० २-५१३)

"विषयान्तरसञ्चारो यदि सैवार्थधीः कुतः"॥ (प्र० वा० २-५२०) इति।

---

१. ज्ञानांशे—२ पु०।    २. अभ्यासे—पाठान्तरम्।
३. प्रकाशाभावनं—२ पु०।    ४-४. भवे हीष्टा—मु० पा०।

इतश्च ज्ञानपुरस्सर एवार्थानुभवो ज्ञानाकारश्च नीलादिरित्याह द्वयेन--

**ज्ञानपृष्ठेन योऽप्यूर्ध्वमर्थाभावेऽपि दृश्यते ।**
**परामर्शोऽर्थरूपस्य स कथं वोपपद्यते ॥ २८ ॥**
**तद्रूपमर्थमालिख्य[1] यदि धीर्नोपजायते ।**
**भूतकाले च यद्यर्थस्तत्पूर्वं नोपलक्षितः ॥ २९ ॥**

ज्ञातमर्थमुत्तरकाल परस्मै कथयन् ज्ञानपुरस्सरमेव स्मृत्या परामृश्य कथयति--ज्ञातोऽय मया घट इति, यथानुभवं च कथनम्। तथा अतीतेऽनागते चार्थेऽर्थाकारस्य नीलादेः परामर्शोऽसति ज्ञानाकारत्वे नोपपद्यते, न ह्यसता धीरनुरज्यते, अतो ज्ञानपुरस्सरमेवार्थग्रहणम्, ज्ञानाकारश्च नीलादिः, ज्ञानपृष्टेन योऽप्यूर्ध्व परामर्शो ऽर्थरूपस्य स कथमुपपद्यते । भूतकाले यद्यर्थः । **तत्पूर्वं नोपलक्षित** इति । अन्वय.--तथा अर्थाभावे य. परामर्शोऽर्थरूपस्य स कथमुपपद्यते तद्रूपमर्थमालिख्य यदि धीर्नोपजायत इति ।

न केवलमनुभूतार्थकथनम्, अनुभूयमानकथनमप्येवमेवेत्याह--

**वक्तारश्चापि दृश्यन्ते वर्त्तमानार्थबुद्धिषु ।**
**नीलोऽर्थोऽयं यतो मेऽत्र तद्रूपा जायते मतिः ॥ ३० ॥**

उपसंहरति--

**तस्मात् पूर्वगृहीतासु बुद्धिष्वर्थोपलम्भनम् ।**

भवतु ज्ञानपुरस्सरमर्थहणम्, तथापि कथ नीलादेर्ज्ञानाकारत्वमित्यत आह--

**न चोपलब्धिरस्तीह निराकारासु बुद्धिषु ॥ ३१ ॥**

नीलमिदमिति नीलाकारमेव वस्तु प्रथते, न निराकारमिति ॥ ३१ ॥

एवमर्थोऽपि साकारः स्यात् यद्याकारद्वयं दृश्येत, न तु तदस्तीत्याह--

**विवेकबुद्ध्यभावाच्च,**

यदि न किञ्चिदपि साकारं वस्तु दृश्येत, ततोऽर्थवज् ज्ञानमपि साकारं न स्यात्, दृश्यते तु किञ्चित् साकारं वस्त्वित्याह--

**साकारस्य च दर्शनात् ।**

तदस्माद्धेतुत्रयाज् ज्ञानं साकारम्, नार्थ इत्याह--

**आकारवत्तया[2] बोधो ज्ञानस्यैव प्रसज्यते ॥ ३२ ॥**

प्रथम हेतु विवृणोति--

**न ह्येवं कल्पना शक्या निराकारादितो मतिः ।**
**गृह्यतेऽर्थस्ततः पश्चात् साकारः सम्प्रतीयते ॥ ३३ ॥**

१. आलिङ्ग्य--२ पु० ।
२. स्वाकारवत्तया--१ पु० ।

द्वितीयं विवृणोति—

**आकारवत्त्वभेदो हि[1] ज्ञात्वा शक्येत भाषितुम् ।**

यदि त्वगृहीतैव बुद्धिरर्थं गृह्णीयात्, ततस्तस्या निराकारत्वमर्थस्यापि च साकारत्वं सिद्ध्येत्, न तु तदस्तीत्युक्तमित्याह—

**प्राग्बुद्धिग्रहणादर्थे संवित्तिर्नेति साधितम् ॥ ३४ ॥**

केचिदाहुः—सत्यं नीलाकारतया ज्ञान गृह्यते, न त्वसावाकारस्तस्यैव, किन्त्वर्थाकार एवायं ज्ञानं समारूढो दृश्यत इति; तान् निराकरोति—

**न चार्थाकार एवायं ज्ञानारूढः प्रतीयते ।**

कारणमाह—

**न हि सोऽन्तःप्रवेशाय पर्याप्तो नार्थहानये ॥ ३५ ॥**

कथं खल्वर्थधर्मः सन् स्वाश्रयं हि वस्त्वन्तरं ज्ञानं प्रविशेदिति, ज्ञानधर्मतया च गृह्यमाणस्य निष्प्रमाणकमर्थधर्मत्वम् ? इत्याह—

**इत्थम्भावे प्रमाणं च तस्य वक्तुं न शक्यते ।**

मा नामार्थं विहासीद्, अर्थस्थस्यैव प्रतिबिम्बमिदं नीलरूपस्यादर्शसंकाशे ज्ञाने प्रकाशत इत्यत आह—

**तदीयप्रतिबिम्बत्वमेतस्मादेव नेष्यते ॥ ३६ ॥**

**एतस्मादिति** । प्रमाणाभावादित्यर्थः ।

एवं हि प्रतिबिम्बता प्रमाणवती भवतीत्याह—

**निश्चन्द्रे बिम्बरूपं हि दृष्टं येन दिवा जलम् ।**
**स रात्रौ खे च तं दृष्ट्वा जानाति प्रतिबिम्बताम् ॥ ३७ ॥**
**विज्ञाने न कदाचित्तु प्राङ् निराकारदर्शनम् ।**
**बाह्ये वाकारवत्ताधीर्येनैवं कल्पना भवेत् ॥ ३८ ॥**

**खे च,** जले चेत्यर्थः ॥ ३८ ॥

न त्वेवमर्थोऽस्तीत्याह—

**शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता ।**

न केवलं प्रतिबिम्बत्वमप्रमाणम्, अर्थधर्मत्वमप्यप्रमाणकमित्याह—

**ज्ञाने च गृह्यमाणस्य कथं स्यादर्थधर्मता ॥ ३९ ॥**

मा भूत् प्रतिबिम्बम्, ज्ञानार्थौ तु संसृष्टौ समोहादविविञ्चन्नर्थधर्ममेव नीलं ज्ञानेऽध्यवस्यतीत्यत आह—

**बाह्याभ्यन्तरदेशत्वान्न चार्थज्ञानयोर्मिथः ।**
**सम्पर्कोऽस्ति यतो मोहादविवेकमतिर्भवेत् ॥ ४० ॥**

---

१. भेदोऽत्र—पाठान्तरम् ।

किञ्च, सर्वस्य जगत. सम्मोहकल्पनमतिसाहसम्, न कश्चिदप्यसम्मूढो दृश्यत इत्याह—

**असम्मूढस्य चादृष्टे न सम्मोहप्रकल्पना।**

तदेव सत्यपि सम्मोहकल्पनाया तद्द्वयोरेवावतिष्ठने अर्थसहस्रस्यायमाकार· संसर्गात् सम्मूढानाम् एकवदवभासत इति कि न कल्प्यते ? इत्याह—

**कल्प्यमानेऽथ वाप्येवं तद्[1] द्वयोरवतिष्ठते ॥ ४१ ॥**

केचित्त्वाहुः—न ज्ञानधर्मो नीलादि, न चार्थस्य निराकारयो. ससृष्टयोराकारो निष्पद्यते, चूर्णहरिद्रयोरिवारुणिमेति, तान् निराकरोति—

**संसर्गधर्म आकारस्तस्मादेव न युज्यते।**

तस्मादित्येतद् विवृणोति—

**देशभेदादसंसर्गः,**

किञ्च, मूर्त्तयोरेव ससर्गादाकारो निष्पद्यते, न मूर्त्तामूर्त्तयोः, नाप्यमूर्त्तयो·, तदिह ज्ञान तावदमूर्त्तम्, अर्थस्तु यदि मूर्त्तो यदि वामूर्त्त—द्वेधापि नानयोराकारो निष्पद्यत इत्याह—

**मूर्तामूर्ततया तथा ॥ ४२ ॥**

ननु सत्यपि देशभेदे कालैक्यात् ससर्गो भविष्यति ? इत्यत आह—

**त्रैलोक्येन प्रसङ्गाच्च संसर्गो नैककालता।**

ज्ञानसमयवर्त्तिना सर्वेषाम् ईदृशससर्गसम्भवात् सर्वेषामाकारा ज्ञान एकस्मिन्नुपलभ्येरन्निति ॥ ४३ ॥

यदि ज्ञानार्जवेनाभिमुख्येनार्थस्यावस्थानं ससर्ग., तत्राह—

**न चाप्यार्जवतः स्थानं ज्ञाने नार्थस्य विद्यते ॥ ४३ ॥**

ज्ञानस्य मुखाभावादिति ॥ ४३ ॥

किञ्च, येनैवार्थेन ज्ञान ससृज्यते, तेनैव सर्वात्मना ससर्ग[2] प्राप्नोति, न हि संसर्गे कश्चिदश· परिहर्त्तु शक्यते, ततश्चैकस्मिन् घटादौ भावे चक्षुषानुभूयमाने तद्गता रसादय. परमाणवश्चानुभूयेरन्नित्याह—

**सर्वथा कल्पनायां च चक्षुषापि रसादयः।**

**गृह्येरन् सर्वभावानामण्वाकाराश्च तद्गताः ॥ ४४ ॥**

विषयतयावस्थानमर्थस्य ससर्ग, न चातिप्रसङ्ग इति चेत् ? तत्राह—

**न चापि विषयत्वेन स्थाने संसर्गकल्पना।**

कारणमाह—

**विषयत्वं हि[3] कीदृक् स्यात् प्रागाकारोपलम्भनात् ॥ ४५ ॥**

---

१. न—मु० पा०। २. संसर्गमिति नास्ति ३ पु०।

३. च—१ पु० पा०।

किमिति विषयत्वं न भवति ? अत आह—

**न ह्यसञ्चेतितो भावो विषयत्वेन कल्प्यते ।**

एव चेतरेतराश्रयं स्यादित्याह—

**विषयत्वात् तदाकार आकाराद् विषयश्च सः ॥ ४६ ॥**

विषयत्वरूपादेव हि ससर्गादाकारनिष्पत्ति., आकारनिष्पत्तौ चोपलभ्यमान-लक्षणत्वं विषयत्वम्, निराकारोपलम्भाभावाद्, अतोन्योन्याश्रयमिति ॥ ४६ ॥

किञ्च, एवं ससर्गधर्मत्वमाकारस्य युक्तमित्याह—

**द्वयोराकारनिर्मुक्तं सत्त्वं संसृष्टता तथा ।**
**स्वरूपतः परिच्छिद्य वक्तुमित्यादि युज्यते ॥ ४७ ॥**

न त्वेवमत्रास्तीत्याह—

**न चाप्यस्येह सद्भावः प्राग् गृहीतो न चोपरि ।**

कथम् ? इत्याह—

**न ह्याकारविनिर्मुक्तं ग्राह्यमस्तीति भाषितम् ॥ ४८ ॥**

उपसहरति—

**तस्मादर्थेन संसर्गो निष्प्रमाणक एव ते ।**

नन्वसत्यर्थससर्गे यदिद नीलपीतादिरूपेण ज्ञानाना वैचित्र्यं तन्नोपपद्यते, न हि समनन्तरप्रत्ययमात्रादस्योत्पत्ति. सम्भवति, तस्य सर्वत्राविशिष्टत्वात्, अविलक्षणेन च विलक्षणकार्यनिष्पत्त्ययोगात् । एवमालोकेन्द्रियमन.कारणानाम-पि साधारण्यादेव न वैचित्र्यनिमित्तत्वम्, तदिद नीलरूपमन्येषु हेतुषु सत्स्वपि कदाचिदुत्पद्यमानकारणभूतमर्थससर्गं कल्पयत्यत आह—

**ज्ञानवैचित्र्यसिद्ध्यर्थं न चास्त्यर्थस्य कल्पना ॥ ४९ ॥**

कारणमाह—

**तदधीनं हि वैचित्र्यं क्व दृष्टं येन[1] कल्प्यते ।**

न ह्यर्थससर्गकृत वैचित्र्य क्वचिद् दृष्टम्, यतस्तद्दर्शनादर्थससर्ग कल्प्यतइति ।

किञ्च, ससर्गधर्माकारवादिना प्राक्संसर्गान्निराकारोऽर्थो ज्ञान च, तत् कथं तत्ससर्गादाकारो निष्पद्यते, कथन्तरा च तद्वैचित्र्यम् ? इत्याह—

**निराकारेण चोत्पत्तिर्वैचित्र्याकारयोः कथम् ॥ ५० ॥**

साकाराणामेव चूर्णादीना ससर्गादाकारनिष्पत्तिर्दृष्टा, सर्वेषां च निराका-राणाम् अविलक्षणत्वात् कथं विचित्राकारनिष्पत्ति' । अथाविलक्षणादपि कारणाद् विलक्षणकार्यनिष्पत्तिरुपेयते, सा समन्तरप्रत्ययादेवास्तु, किमर्थससर्गग्रहणेनेति ।

यदप्याहु.—नायमाकारः संसृष्टयोरुभयोः सर्वदैवार्थो निराकारः, ज्ञानमेव

---

१. केन—का० ।

कारम्, स चाकारोऽर्थसंसर्गकृत इति; तदपि पूर्ववन्निराकर्त्तव्यम्। न हि राकरणार्थाद् बुद्धावाकारवैचित्र्ययोरापादनं सम्भवतीत्याह—

**निराकाराच्च विषयाद् बुद्ध्याकारोऽतिविस्मयः।**

संसर्गधर्मत्वे वाकारस्यायमपरो दोष इत्याह सार्द्धेन—

**स्मृतिस्वप्नादिबोधे च स्यादनाकारता तव ॥ ५१ ॥**
**न हि तत्रार्थसंसर्गः केवला वासनैव तु।**
**हेतुत्वेनोपपन्नेति सैव जाग्रद्धियामपि ॥ ५२ ॥**

न ह्यतीतस्मृतावनागतानुमाने स्वप्ने कृष्णविषाणाद्यवभासे वार्थसंसर्गोऽस्ति, यन्निमित्तोऽयमाकारः स्यात्, अविद्यमानेन संसर्गायोगात्; तदवश्यं वासनाश्रयिसमनन्तरप्रत्ययकृतैवेयमाकारतद्वैचित्र्योत्पत्तिरङ्गीकर्त्तव्या; तथा जाग्रद्धियामप्यस्तु, किमर्थसंसर्गेणेति।

**सौत्रान्तिकास्तु**—ज्ञानवैचित्र्यसिद्ध्यर्थमर्थमपि नीलपीतादिविचित्राकारमेव कल्पयन्ति न निराकारम्, यदेव चाकारसमर्पणक्षम हेतुत्वं तदेवार्थस्य ग्राह्यमिति न ग्राह्यलक्षणायोगः। यथाहुः—

भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥ (प्र० वा० २-२४७) इति।

नन्वेवं जन्यज्ञानसमये जनकस्यार्थस्यातीतत्वात् कथं वर्तमानावभासः, ज्ञानाकारो ह्यय वर्तमानः प्रथते, अर्थस्तु तत्समर्पकतयातीत एव कल्प्यते, अतो न दोषः। कथ पुनः प्रत्यक्षज्ञानेनावभासमानस्य प्रत्यक्षत्वम्, इदमेव प्रत्यक्षत्वमर्थस्य यत् साक्षात् साकारविज्ञानजननम्, यस्तु परम्परया साकारं विज्ञानं जनयति सोऽनुमेयः, यथा वह्निस्वलक्षणं धूमस्वलक्षणं तद्दर्शनतद्विकल्पप्रणाडिकया अग्निज्ञानं जनयदनुमेयम्; अत एव प्रत्यक्षमनुमानं च द्वे एव प्रमाणे, साक्षाज्जनकस्य प्रत्यक्षत्वात्, परम्परया जनकस्य चानुमेयत्वात्, अजनकस्य चाग्राह्यत्वान्नातो द्वयादन्यत् सम्भवतीति; तेषामपीद तुल्यं निराकरणम्—'तदधीनं हि वैचित्र्यं क्व दृष्टम्' इति, 'स्मृतिस्वप्नादिबोधे च स्यादनाकारता तव' इति च।

इतश्च ज्ञानाकारो नीलादिरित्याह

**अन्वयव्यतिरेकाभ्यामेवं ज्ञानस्य गम्यते।**
**आकारः**

एवंशब्दो युक्त्यन्तरोपन्यासे। तामेव[1] दर्शयति—

**न हि बाह्यस्य ज्ञानापेतो निदश्यते[2] ॥ ५३ ॥**

**बाह्यापेतो मया ग्रहत्,**

१. तावेव—मु० पा०। २. निदश्यते—२ पु०।

स्वप्नादावसत्यप्यर्थे ज्ञानान्वयादेवाकारान्वयो दृश्यते, ज्ञानाभावे तु न क्वचिद् दृश्यत इति। उपसंहरति—

**तस्मात् संसर्गवागियम्।**
**निराकारेऽपि विज्ञाने वासनास्वेव युज्यते॥ ५४॥**

स्वभावतः स्वच्छमेव ज्ञानं समनन्तरप्रत्ययाख्यवासनासंसर्गाद् विचित्रनीलपीताद्याकारमुपजायत इति॥ ५४॥

अपरे त्वाहुः—एक एवायमाकारः द्वाभ्यामर्थज्ञानाभ्यां साधारण्येनानुभूयते लाक्षासन्निहितेनेव मणिद्वयेन लाक्षारूपमिति; तत्राह—

**द्वयोरप्येक आकार इत्येतस्याप्रमाणता[1]।**

कारणमाह—

**देशभेदादसंसर्गः,**

आन्तरं हि ज्ञानम्, अतिदूरे चार्थः, कथमाभ्यामसंसृष्टाभ्यामसंनिहिताभ्यामेकस्यानुभव इति। द्वयसद्भावस्य चासिद्धत्वान्नाकारसाधारण्यमित्याह—

**द्वयोश्चानवधारणात् ॥ ५५॥**

ये त्वाहुः—द्वावपि ज्ञानार्थौ पृथगेवाकारवन्तौ, तथापि त्वत्यन्तसादृश्यादाकारविवेको नावभासत इति; तान् प्रत्याह—

**एवमेवार्थबुद्ध्योः स्यात् सादृश्यान्नाविभक्तता।**

'सादृश्यादविभक्तता' इत्येतदप्येवमेव, द्वयोरनवधारणादेव[2] नयादिति।

एतदेव विवृणोति—

**भेदे ज्ञाते हि सादृश्यं नाज्ञाते स्यात् खपुष्पवत्॥ ५६॥**

इतश्च ज्ञानाकारत्वमित्याह—

**तथा द्विचन्द्रमायादावन्यथार्थे व्यवस्थिते।**
**या स्यादाकारसंवित्तिर्नासावर्थनिबन्धना॥ ५७॥**

सर्वेष्वेव विभ्रमेष्वसत्येवार्थे भासमानो नीलादिः कथमर्थधर्मः स्यादिति।

इतश्चैवमित्याह—

**नक्षत्रं तारका तिष्यो दारा इत्येवमादिषु।**
**नैकत्रार्थे विरुद्धत्वाल्लिङ्गानेकत्वसम्भवः॥ ५८॥**

अर्थधर्मत्वे हि तस्यैकत्वान्न विरुद्धलिङ्गसमावेशो घटत इति। यच्चेदमेकस्यामेव प्रमदातनौ परिव्राजकादीनां कुणपम्, कामिनी, भक्षः—इति व्यवस्थितोपजनं विकल्पत्रयं तदपि न स्यात्, बाह्यार्थो यद्येकाकारः तथैव सर्वैः प्रत्येतव्यः, अथ

---

१. इत्येतच्चाप्रमाणकम्—२ पु०।
२. न यायात्—२ पु०। एव न स्यात्—३ पु०।

तत्र त्रयाणामपि विकल्पत्रयं स्यात्, तदवश्यमात्मीयवासनानिामतै-
विकल्पव्यवस्था आश्रयितव्या। तथा सर्वत्रास्त्वित्याह—

**[1]परिव्राट्कामुकशुनां कुणपादिमतिस्तथा।**

इतश्च नार्थाकार इत्याह सार्द्धेन—

**दीर्घह्रस्वत्वबुद्धिश्च ह्येकस्मिन्नप्यपेक्षया ॥ ५९ ॥**

**घटत्वात् पार्थिवद्रव्यप्रमेयादि[2]मतिस्तथा।**

**युगपद्ग्राहकाणां च न स्यादैकात्म्यवत्तया[3] ॥ ६० ॥**

अपेक्षाभेदादविरोध ब्रुवाणस्योत्तरमप्यपेक्षयेति। सत्यप्यपेक्षाभेदे धर्मिण
कत्वान्नानेकाकारसमावेशः सम्भवति, एकात्मकत्वादेकात्मकनेव ह्येकम्,
न्यथैकत्वहानान्नानात्वैकत्वयोर्विरोधात्। यथाहु—

अन्यथैकस्य भावस्य नानारूपावभासिन.।

सत्यं कथ स्युराकारास्तथैकत्वस्य हानितः ॥ (प्र० वा० २-३५८) इति।

तेन युगपद्ग्राहकाणा पुरुषाणा नैकत्र दीर्घह्रस्ववृक्षत्वाद्यनेकाकारमतिः
यात्, नानाकारत्वे च सर्वेषा सर्वप्रतीतिः स्यात्; न च देशकालापेक्षोद्भव-
शात् प्रभारूपस्पर्शयोरिव नक्तन्दिव ग्रहणाग्रहणव्यवस्था सम्भवति, युगपत् ग्राह-
काणामेव कस्यचित् किञ्चिदाकारावभासादिति ॥ ६० ॥

ह्रस्वादीनां तु विरोधादप्यसमावेश इति आह—

**नार्थे ह्येकत्र युगपद् विरुद्धाकारसम्भवः।**

मत्पक्षे तु भिन्नाः प्रत्ययाः, युक्तं यद् वासनाशक्त्यनुसारेण विरुद्धानविरुद्धांश्च
बहूनाकारान् भजन्त इत्याह—

**प्रत्ययानां तु भिन्नत्वाद् भवेच्छक्त्यनुसारतः ॥ ६१ ॥**

तस्मादर्थानपेक्षमेव यादृशं नीलाकार पीताकार वा ज्ञानमुत्पन्नं यदि तदनु-
सारेणार्थोऽभ्युपगन्तु शक्यते, ततोऽस्तु नाम, न त्वर्थानुसारि ज्ञानं नीलाद्याकारत्वं
ज्ञानस्य नार्थाधीनमिति यावत्। तदाह—

**निरपेक्षं स्वरूपेण तस्माज् ज्ञानं यदाकृति।**

**तथार्थो न यथार्थं तु ज्ञानमुत्पद्यते क्वचित् ॥ ६२ ॥**

भवतु तर्हि तदनुसार्येवार्थः ? अत आह—

**इत्थं विज्ञानतन्त्रत्वे को न्वर्थं कल्पयिष्यति।**

**धीरनारोपिताकारा स्वात्मन्येवोपयोक्ष्यते ॥ ६३ ॥**

---

१. कुणपं मन्यते योगी, कामिनी कामलोलुपः।
श्वा मासपिण्ड सुस्वादु, प्रमदायाः कलेवरम् ॥

२. घटत्वपार्थिव०—२ पु०।

३. एकार्थवत्तया— २ पु०।

नीलाद्याकारे ह्यर्थाधीने स्यादर्थसिद्धिः, स्वतन्त्रे तु ज्ञाने को नामार्थं कल्पयेत्, अर्थानारोपिताकारैव धीरद्वितीयार्थशून्या स्वात्मन्येव पर्यवस्यतीति ॥ ६३ ॥

अत्र प्रतिविधत्ते—

**नैतदस्ति, त्वयैकं हि ग्राह्यं ग्राहकमिष्यते।**
**न चैकस्यैवमात्मत्वे दृष्टान्तः कश्चिदस्ति ते॥ ६४॥**

यदेतद्भवतोक्तम्—एकमेव ज्ञानं ग्राह्यं ग्राहकं चेति, तत् किं क्रियाकर्मत्वाभिप्रायम्? उत करणकर्मत्वाभिप्रायम्? आहोस्वित् कर्तृकर्मत्वाभिप्रायम्? सर्वथा न सम्भवति, न तावत्क्रियाया एव कर्मत्व सम्भवति, न हि पाकः पच्यते, छिदा वा छिद्यते, नापि करणकर्मत्व कर्तृकर्मत्वं वा एकस्य सम्भवति, न ह्यङ्गुल्यग्रेणैवाङ्गुल्यग्रं स्पृश्यते, नाप्यङ्गुल्यग्रमात्मान स्पृशति, तेनासां विधानां दृष्टान्ते क्वचिदप्यदर्शनाज् ज्ञानेऽपि नास्ति सम्भवः। अथ प्रकाशत्वमनेन प्रकारेणोच्यते, ज्ञानं हि स्वयमेव प्रकाशते नान्यमपेक्षत इति न पुनः कर्मत्वमपीति, कस्य प्रकाशते? न तावदन्य पुमानस्ति, तत्र स्वयमेव प्रकाशमानमहं नीलमिति प्रत्यगात्मवृत्ति स्यात्। इदं नीलमिति तु पराग्वृत्ति ज्ञानमुत्पद्यते, अतो नैकस्य ग्राह्यग्राहकतेति ॥ ६४ ॥

ननु अग्न्यादीना स्वयमेव प्रकाश्यप्रकाशकता दृष्टा? अत आह—

**अग्न्यादयो घटादीनां प्रसिद्धा ये प्रकाशकाः।**
**न ते प्रकाश्यरूपा हि प्रकाशस्य,**

येऽग्न्यादयः प्रकाशका प्रसिद्धाः, ते घटादीनां न प्रकाशात्मनः स्वरूपस्य प्रकाशकाः, न प्रकाश्या इत्यर्थः।

कथम्? इत्याह—

**अनपेक्षणात्॥ ६५॥**

यद् घटादीनामेवालोकापेक्षा, नालोकस्येति ॥ ६५ ॥

केन तर्हि ते गृह्यन्ते? अत आह—

**ग्राह्यत्वं तु यदा तेषां तदाक्षं ग्राहकं मतम्।**

तस्यास्तर्हि केन ग्रहणम्? अत आह—

**अक्षग्रहणकाले तु ग्राहिका धीर्भविष्यति॥ ६६॥**

अर्थापत्तिरूपा अनुमानरूपा वा धीरक्षस्य ग्राहिकेति ॥ ६६ ॥

तस्य तर्हि केन ग्रहणम्? अत आह—

**तस्यां तु गृह्यमाणायामन्या धीर्ग्राहिकेष्यते।**

सापि ह्यर्थापत्त्यानुमानेन वा गृह्यते, यथा वक्ष्यति—'नान्यथा ह्यर्थसद्भावः' (श्लो० वा० ५-१८२) इति। भाष्यकारोऽपि ज्ञाने "त्वनुमानादवगच्छति" (शा० भा० पृ. ३७) इति।

चोदयति—

**नन्वात्मा ग्राहको ग्राह्यो भवताभ्युपगम्यते ॥ ६७ ॥**

कर्तृकर्मत्व भवताप्येकस्याभ्युपगतमिति परिहरति—

**कथञ्चिद्धर्मरूपेण भिन्नत्वात् प्रत्ययस्य तत् ।**

**ग्राहकत्वं भवेत् तत्र ग्राह्यं द्रव्यादि चात्मनः ॥ ६८ ॥**

ज्ञानस्य ज्ञेयान्न कथञ्चिद् भेदोऽस्ति तव, मम तु स्वरूपेणैकोऽप्यात्मा धर्मरूपेण कथञ्चिद् भिन्नः, तदस्य ज्ञानरूपेण ग्राहकत्वं द्रव्यादिरूपेण ग्राह्यत्वमिति न ग्राह्यग्राहकयोरेकत्वमिति ॥ ६८ ॥

नन्वेवमप्यत्यन्तभेदो ग्राह्यग्राहकयोर्न स्याद्, धर्मिरूपस्यैकत्वाद्? अत आह—

**यस्तु नात्यन्तभेदोऽत्र क्व वासाविष्यते मया ।**

न क्वचिदप्यत्यन्तभेदोऽस्ति, सर्वत्र प्रमेयत्वाद्यभेदादिति ।

यद्यत्रापि ग्राह्यग्राहकयोर्भेदः, कथं तर्ह्यात्मवादे भाष्यकारेण "प्रत्यगात्मनि चैतद्भवति" ( शा० भा० ) इति प्रत्यग्वृत्तित्वमहम्प्रत्ययस्योक्तम्, अत आह—

**प्रत्यासत्तिनिमित्ता तु प्रत्यगात्मप्रवर्त्तिता[1] ॥ ६९ ॥**

न हि ज्ञानमात्रं ग्राहकम्, किन्तु तद्विशिष्टो धर्मी, स एवाहंबुद्ध्या द्रव्यादिरूपेण गृह्यते न द्रव्यादिमात्रम्, तेनोपाधिभेदेऽप्युपहितस्य कर्त्तुः कर्मणश्च प्रत्यासत्तेरेकत्वाद् युक्तं प्रत्यगात्मवृत्तित्वम् । भेदश्च क्वियानप्यस्ति न सर्वात्मनैकत्वमिति ॥ ६९ ॥

यद्यपि सर्वात्मनैक्यं तथापि न दोष इत्याह—

**अस्मत्प्रयोगसम्भिन्ना ज्ञानस्यैव तु कर्तरि ।**

**भवन्ती तत्र संवित्तिर्युज्येताप्यात्मकर्तृका ॥ ७० ॥**

अस्मत्प्रयोगसम्भिन्नाहमिति संवित् स्वयमात्मकर्तृकापि सती ज्ञानकर्त्र्यात्मन्येव भवतीति तत्र युज्यते प्रतिभासबलादस्मदर्थ एव हि ज्ञाता तत्र प्रतिभासते, नान्य इति ॥ ७० ॥

ज्ञानस्य तु नावभासोऽस्तीत्याह—

**न चात्र करणज्ञानग्राहकाकारवेदनम् ।**

**ग्राह्यत्वं येन बुद्धेः स्यादभिन्नत्वेऽपि पूर्ववत् ॥ ७१ ॥**

ज्ञान हि करणम्, क्रिया, कर्ता वा, न च नीलमित्यत्र त्रयाणामन्यतमदपि प्रकाशते, ग्राह्यरूपस्य नीलमात्रस्य वेदनात्, अतो न पूर्ववदात्मज्ञानस्य ग्राह्यत्वम्, ज्ञानशब्देन च क्रियारूपमुच्यते इति ॥ ७१ ॥

---

१ प्रवृत्तिता—२ पु० ।

यदि तु ग्राह्यमात्रावभासापि संवित्तिर्ज्ञानगोचरेत्युच्यते, ततो यथेष्टकल्पनायां ज्ञानाभासाप्यर्थगोचरा शक्या कल्पयितुमित्याह—

**अन्यरूपापि संवित्तिर्यद्यन्यविषयेष्यते ।**
**ज्ञानाकारापि संवित्तिः कस्मान्नार्थस्य[1] कल्प्यते ॥ ७२ ॥**

यदा च ग्राह्यमात्रमेव भासते न क्रिया कर्ता वा, तदा ये सर्ववित्तिषु त्रितयप्रतिभासमाहुः ते[2] निरस्ताः । यस्तु नीलमहं जानामीति प्रतिभासः स नीले ज्ञाते पश्चादानुमानिकः, न तु नीलवित्तिरेवैवंविधेति विभ्रमितव्यम्; एवं च सहोपलम्भस्यैवाभावात् तन्नियमो दुरुपपादः । 'सहोपलम्भनियमादभेदो नीलतद्धियोः' ( ) इत्येतदपि परोक्त निरस्तम् । तस्माद् भिन्नमेव ग्राह्यं ग्राहकादिति ॥ ७२ ॥

इतश्चैवमित्याह—

**अभिन्नत्वं यदा चेष्टं ग्राह्यग्राहकवस्तुनोः ।**
**तदान्यतरसंवित्तौ द्व्याकारं ग्रहणं भवेत् ॥ ७३ ॥**

न त्वेतदस्तीति व्यतिरेकेण दर्शयन् ग्राह्यसवित्तौ तावद् ग्राहकसंवित्तिर्नास्तीत्याह—

**यदा तु ग्राह्यमाकारं नीलादि प्रतिपद्यते ।**
**न तदा ग्राहकाकारा संवित्तिर्दृश्यते क्वचित् ॥ ७४ ॥**

ग्राहकादभिन्नत्वे च ग्राह्यस्य तदनुभववेलायां ग्राहकोऽप्यनुभूयेत; तद्वदेव वा ग्राह्योऽपि नानुभूयेत, न ह्येकस्य युगपद्ग्रहणमग्रहणं च सम्भवतीत्याह—

**तस्मादभिन्नता चेत् स्यात् तस्याप्यनुभवो भवेत् ।**
**ग्राह्यो वा नानुभूयेत ग्राहकाननुभूतिवत् ॥ ७५ ॥**

एवं ग्राहकसंवित्तावपि ग्राह्यसवित्तिः स्यान्न तु तथाप्यस्तीत्याह—

**ग्राहकग्रहणेऽप्येवं ग्राह्यसंवेदनं भवेत् ।**
**शुद्धमेव निराकारं ग्राहकं संविदस्ति हि ॥ ७६ ॥**

ग्राह्यादभिन्नत्वे च तद्रहिता संवित्तिर्न स्यात्, ग्राह्यमपि संवेद्येत, तद्वदेव वा ग्राहकोऽपि न सवेद्येतेत्याह—

**ग्राह्यादभिन्नताया च सा संवित्तिर्न युज्यते ।**
**ग्राहको वा न गृह्येत तद्ग्राह्याननुभूतिवत् ॥ ७७ ॥**

एवं प्रत्येकमेकाग्रहणे परस्याप्यग्रहणमापाद्य द्वयोरपि समाहृत्य दर्शयति—

**यथावद् ग्राह्यसंवित्तौ ग्राहकग्रहणेऽपि वा ।**
**ग्राह्यग्राहकसंवित्तिर्नास्त्येव स्याद् द्वयोरपि ॥ ७८ ॥**

---

१. अर्थेषु—२ पु० ।

२. ते इति । प्राभाकरमतानुयायिनः ।

उक्तेऽर्थे भाष्यं ( शा० भा० पृ. ३८ ) योजयति—

**'स बहिर्देशसम्बद्धः' इत्यनेन निरूप्यते ।**
**ग्राह्याकारस्य संवित्तिर्ग्राहकानुभवादृते ॥ ७९ ॥**

केचितु—अर्थाकारत्वे नीलादेर्बहिर्देशसम्बन्धित्वं हेतुरुच्यत इति व्याचक्षते, बहिर्देशसम्बद्धो ह्याकार. कथमन्तरस्य ज्ञानस्य स्यादिति, तत्तु न युक्तमित्याह—

**परं प्रति हि[1] साध्यत्वादर्थस्याकारसिद्धये ।**
**बहिर्देशेन सम्बन्धो न हेतुत्वाय कल्पते ॥ ८० ॥**

न बहिर्देशस्तत्सम्बन्धो वा परस्य सिद्ध कथमसौ हेतुरिति ॥ ८० ॥

तस्मात् पूर्वोक्त एव भाष्यार्थ इत्याह—

**तस्माद् बहिरितीहेदं निष्कृष्टं ग्राहकांशतः ।**
**संवेद्यं नीलपीतादि प्रत्यक्षादेरुदाहृतम् ॥ ८१ ॥**

बहिरित्यत्र भाष्ये इदमित्येवम् इदकारेण ग्राहकान्निष्कृष्टमेव प्रत्यक्षादे प्रमाणस्य ग्राह्य नीलपीताद्युदाहृतम् । अय च भाष्यार्थ.—स एव हि नीलाद्याकारो बहिर्देशसम्बद्धो ग्राहकान्निष्कृष्टः प्रतीयते, न बुद्धिरिति । ग्राह्यनिर्मुक्तस्य ग्राहकस्य सवित्ति. "सत्य, पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायते । भवति हि कदाचिदेतत् यज् ज्ञातोऽप्यर्थ. सन्नज्ञात इति उच्यते" ( शा० भा० पृ ४० ) इत्यत्र भाष्ये वक्ष्यते, इत्याह—

**न पूर्वं ज्ञायते बुद्धिरित्यत्रैतद् वदिष्यते ।**
**ग्राहकस्यैव संवित्तिर्लक्ष्यते ग्रहणे क्वचित् ॥ ८२ ॥**

क लक्ष ते ? अत आह—

**न स्मरामि मया कोऽपि गृहीतोऽर्थस्तदेति हि ।**
**स्मरन्ति ग्राहकोत्पादग्राह्यरूपविवर्जितम् ॥ ८३ ॥**

ज्ञातो मया वसन्तेऽस्मिन् देशे कोऽपि पुरुषः सम्प्रति विस्मृतवानस्मीति पूर्वत्राग्राह्ये देवदत्ते स्मृतावप्रतिभासमानेऽपि तद्गोचर ज्ञान प्रतिभासत इति । ग्राहकादभिन्नत्वे च ग्राह्यस्य तत्रापि स्मरणं स्यादित्याह—

**तस्मादभिन्नतायां च ग्राह्येऽपि स्मरणं भवेत् ।**

न तु भवतीत्याह—

**[2]ग्राहकस्मृतिनिर्भासात् तत्राप्येषैव गृह्यते ॥ ८४ ॥**

**एषैव** ग्राहकस्मृतिरेव दृश्यते ग्राहकस्यैव स्मृतौ निर्भासादिति ॥ ८४ ॥

तेन ग्राहकेण ग्राह्यस्यात्यन्ताविनाभावान्न स्मरणमेकाकार जायेतेत्याह—

**तदत्यन्ताविनाभावान्नैकाकारं हि जायते ।**

---

१. तु—इत्यपि उचित. पाठः । न—मु० पा० । २. नीलमित्यादि—२ पु० पा० ।

तदेवमेकस्य ग्रहणान्वयेऽप्यन्यस्य व्यतिरेकात् सिद्धं भिन्नत्वमिति ।

उपसंहरति—

**अन्वयव्यतिरेकाभ्यां सिद्धैवं भिन्नता तयोः ॥ ८५ ॥**

चोदयति—

**ग्राह्यांशो ग्राहकांशेन गृह्यते, ग्राहकः पुनः ।**
**गृह्येतेति न वक्तव्यम्, ग्राहकान्तरवर्जनात् ॥ ८६ ॥**

यदुक्तम्—'एकस्य ग्रहणे परस्यापि ग्रहणं स्यात्' इति, तदयुक्तम्; ग्राह्यांशो हि ग्राहकांशेन गृह्यते, ग्राहकस्य तु न ग्राहकान्तरमस्तीति कथ गृह्येतेति ॥८६॥

ग्राह्यांशेन तस्य ग्रहणमिति चेत् ? न, तस्य ग्राह्यभावस्य ग्राहकशक्त्यभावादित्याह—

**ग्राह्यांशेनाप्यशक्तत्वान्न तस्य ग्रहणं भवेत्[1] ।**

तस्य च ग्राहकत्वे ग्राहकमात्ररूपत्वाज् ज्ञानस्य द्वैरूप्यहानिरित्याह—

**ग्राहकत्वेन चैतस्य हीयेतैव द्विरूपता ॥ ८७ ॥**

एवं ग्राहकस्यापि ग्राह्यत्वे ग्राह्यमात्रया द्वैरूप्यहानिरेव ? इत्याह—

**ग्राहके गृह्यमाणे च ग्राह्यमात्रप्रसञ्जनम् ।**

भवतु तर्ह्येकरूप्यमेवेति चेत् ? तत्राह—

**न स्यादाकार एकश्चेदितरस्यापि नास्तिता ॥ ८८ ॥**

ग्राह्यग्राहकयोरितरेतरापेक्षत्वादन्यतराभावेऽन्यतरदपि न स्यात्, ततश्च निःस्वभावकत्वाज् ज्ञानस्यैवाभावः स्यादिति ॥ ८८ ॥

उद्भवाभिभववशेन चोपपन्नमेकस्य ग्रहणम्, इतरस्य चाग्रहणम्, तथा लोके दर्शनादित्याह—

**उद्भवाभिभवाभ्यां च ग्राह्याग्राह्यत्वदर्शनम् ।**

क्व दृष्टम् ? इत्याह—

**यथा दीपप्रभादीनां रूपमात्रोपलम्भनम् ॥ ८९ ॥**
**दिवा चाग्नेः समीपस्थैः स्पर्श एवोपलभ्यते ।**

प्रभारूपस्पर्शयोर्हि व्यवस्थितं रात्रिन्दिवमुपलम्भनम् । उदाहरणान्तरमाह—

**गन्धवद् द्रव्यवृत्तौ च गन्धस्यैवोपलम्भनम् ॥ ९० ॥**
**न गुणान्तरसंवित्तिर्यथात्राभिभवात्,**

प्रकृते योजयति—

**तथा ।**
**नाकारान्तरसंवित्तिर्ग्राह्यग्राहकबुद्धिषु ॥ ९१ ॥**

---

१–१. ग्राहकस्मृतीत्यादि( २०८ पृ० )तः भवेदित्येतत्पर्यन्तं श्लोकत्रयं १ पु० त्रुटितम् ।
श्लो० वा० : १४

ननु रूपादीनां भेदादुद्भवाभिभवौ युक्तौ, ग्राह्यग्राहकयोः कथम् ? अत आह—

**ग्राह्यादनन्यभूतोऽपि कश्चिन्नैवोपलभ्यते ।**
**नित्यानित्यादयो धर्माः शब्दादिग्रहणे यथा ॥ ९२ ॥**

न हि रूपादिवन्नित्यत्वादीना धर्मिणो भेदः, अथ च तद्ग्रहणेऽप्यग्रहणमिति ।

किञ्च, अभेदस्याभ्युपगमे नेदं प्रसङ्गापादानम्, अभेदे च सत्येकस्मिन् गृह्यमाणेऽपरोऽपि गृह्यत एव, कथमग्रहणमुच्यते ? इत्याह—

**अभेदं वाभ्युपेत्यायं प्रसङ्गो यदि गीयते ।**
**एकस्मिन् गृह्यमाणेऽशे न गृह्येतापरः कथम् ॥ ९३ ॥**

पूर्वमपरस्याग्रहणमुपपादितम्, तदुपसंहरति—

**तस्माद्यत् स्याद् यदा योग्यं तस्यैव ग्रहणं तदा ।**

यदुद्भूतम्[1], यस्य वा ग्राहकसद्भावः तद्योग्यम्, इतरदयोग्यमिति ।

यदपि समुच्चित्योक्तम्—एकस्य ग्रहणाग्रहणे वा द्वयोरपि तथा स्यादिति, तदपि शक्त्यभावादेव न प्रसज्यत इत्याह—

**द्वयं च त्वदुपन्यस्तं शक्त्यभावान्न गृह्यते ॥ ९४ ॥**

परिहरति—

**कुतोऽयमेकवस्तुत्वे योग्यायोग्यत्वसम्भवः ।**
**उद्भवाभिभवात्मत्वं कथं चैकस्य कल्पितम् ॥ ९५ ॥**

न ह्येकस्य युगपद्योग्यायोग्यत्वमुद्भवाभिभवात्मकत्व वा सम्भवति, विरुद्धधर्माध्यासेन भेदापत्तेरिति ॥ ९५ ॥

एवं चैकाभिभवे परस्याप्यभिभवादग्रहण स्यादित्याह—

**एकांशाभिभवे च स्यादितराभिभवोऽपि ते ।**
**तथा तस्याभिभूतत्वाद् ग्राह्यत्वं न च युज्यते ॥ ९६ ॥**

एवमयोग्यतापि विकल्पनीया स्यात् । यद्येकस्यैव तदा न सम्भवति; अभेदात्, अयोग्यत्वे न कश्चिद् गृह्येतेत्याह—

**अयोग्यता विकल्प्यैवम्,**

रूपादीना तु भेदादुपपन्नैवोद्भवाभिभवव्यवस्थेत्याह—

**दृष्टान्ता येऽत्र कीर्तिताः ।**
**रूपादिभेदात् तत्र स्यादुद्भवाभिभवाद्यपि ॥ ९७ ॥**

कथं पुना रूपादीनां द्रव्यादेकस्मादभिन्नानां मिथो भेद. ? अत आह—

**यदाप्येकान्ततो भेदो रूपादेर्न परस्परम् ।**
**तदापि द्रव्यरूपस्य परिणामस्तथा तथा ॥ ९८ ॥**

---

१. यद्भूतं—मु० पा० ।

यद्यपि द्रव्यस्यैकत्वात् तदभिन्नानां रूपादीनामपि तेनात्मनैकत्वान्नैकान्तभेदः, तथाप्यस्त्येव स्वरूपतो भेदः, द्रव्यमपि तत्तद्रूपादिपरिणामभेदेन भिन्नमेवेति ॥९८॥

यच्च शब्दादिग्रहणे तदभिन्नानामपि नित्यत्वादीनामग्रहणमित्युक्तम्, तदनुभाष्य परिहरति सार्द्धेन—

**अभिन्नत्वेऽपि न ग्राह्यमिति यच्चाब्रवीद्भवान् ।**
**कृतकत्वादिधर्माणां धीभेदेऽनन्यता[1] कथम् ॥ ९९ ॥**
**न ह्यन्यत्प्रत्ययादस्ति भिन्नाद् ग्राह्यस्य भेदकम् ।**

तेषामप्यस्त्येव भेदः, बुद्धिभेदात् । न हि बुद्धिभेदादन्यदस्ति भेदे प्रमाणमिति ।

नन्वसति देशभेदे परिमाणभेदे वा कथं भेदः ? अत आह—

**न चेयत्तैव भेदस्य देशतो मूर्तितो[2]ऽपि वा ॥ १०० ॥**

न हि मूर्त्तिदेशभेदनिबन्धन एव भेद इत्येवमियत्तास्ति, तदभावेऽपि प्रमाणबलादुपपत्तेरिति ॥ १०० ॥

कीदृशं पुनः शब्दादिव्यतिरिक्तं कृतकत्वादीना रूपं यद् बुद्धिभेदाद् भिन्नमित्युच्यते ? तद्दर्शयति—

**कारणानां हि सम्बन्धः कार्यैः कृतकतोच्यते ।**

नाशित्वात्मकमनित्यत्वं सावयवानामवयवविश्लेषात्मकम्, तदुपलक्षितः प्रध्वंसाभाव इत्यर्थः । निरवयवानां तु बुद्ध्यादीनां धर्मिणः स्वरूपमात्रेणावस्थानं बुद्धिविरहः, तत्प्रध्वंसाभाव इति यावत् । तदाह—

**विभागोऽवयवानां च भवेत् क्वचिदनित्यता ॥ १०१ ॥**
**बुद्ध्यादेरात्मरूपादिस्थानं नाशित्वमुच्यते ।**

नित्यत्वं दर्शयति—

**नित्यत्वं सर्वदा सत्ता,**

उत्पत्तिनाशरहितत्वे सति सत्त्वं सर्वदा सत्त्वम्, न पुनः सर्वकालसम्बन्धः, कालस्य तदभावप्रसङ्गादिति ।

वस्तुत्वं दर्शयति—

**वस्तुत्वं सैव कीर्त्यते ॥ १०२ ॥**

सैवेति । सर्वदेति विशेषणरहिता सत्तेत्यर्थः ॥ १०२ ॥

प्रमेयत्वं ज्ञेयत्वं च दर्शयति—

**प्रमाणज्ञानसम्बन्धः[3] प्रमेयज्ञेयतोच्यते ।**

---

१. अनन्यतेति । ऐक्यमित्यर्थः । अनन्यथा—मु० पा० ।

२. मूर्तित इति । विचित्राकारादित्यर्थः ।

३. प्रमाणविषयतासम्बन्ध इत्यर्थः ।

ज्ञेयत्वावान्तरसामान्यं प्रमेयत्वमिति ।

सर्वेषु च कृतकत्वादिष्वस्ति केनचिदात्मना शब्दादिभ्यो भेद इत्याह—

**सर्वत्र चात्र भिन्नत्वमस्ति केनचिदात्मना ॥ १०३ ॥**

उपसंहरति—

**तस्माद् यथैव रूपादेर्देशभेदादिभिर्विना ।**
**बुद्धिभेदेन भेदोऽस्ति तथैवात्र प्रतीयताम् ॥ १०४ ॥**

नन्वेवमत्यन्तभेदाभावादभेदोऽप्यस्तीति अभिन्नत्वेऽपि सिद्धमुद्भवादिकम् ? अत आह—

**अत्यन्तभिन्नतास्माभिर्नैव कस्यचिदिष्यते ।**

कथम् ? इत्याह—

**सर्वं हि वस्तुरूपेण भिद्यते न परस्परम् ॥ १०५ ॥**

तेन कथञ्चिद् भेदवतोरेव सर्वत्रोद्भवाभिभवव्यवस्यानमिति ॥ १०५ ॥

कि पुनः कारण शब्दाभिन्नस्यापि कृतकत्वादे, यतस्तद्ग्रहणेऽप्यग्रहणम् ? अत आह—

**सर्वं च कृतकत्वादि क्रियाहेत्वाद्यपेक्षया ।**
**गृह्यते तदसंवित्तावभेदेऽपि न गृह्यते ॥ १०६ ॥**

ज्ञाने तु ग्राह्यग्राहकयोः कथञ्चिदपि भेदो नास्ति, न चापेक्षणीय किञ्चिद्, अतोऽवश्यमेकग्रहणे परस्यापि तत् स्यात् ? इत्याह—

**ज्ञाने नैवंविधो भेदो नापेक्षान्यत्र विद्यते ।**

शङ्कते—

**परस्परेण चापेक्षा स्याच्चेत्,**

ग्राह्यं हि ग्राहकापेक्षम्, तच्च ग्राह्यापेक्षमिति ।

परिहरति—

**सन्निहितश्च सः ॥ १०७ ॥**

चोदयति—

**ननु ग्राहकमित्येवं ग्राह्यमित्यपि वा मतिः ।**
**नीलादिग्रहणे नास्तीत्यपेक्षा कथमुच्यते ॥ १०८ ॥**

यदुक्तम्—सन्निहित इति, तदयुक्तम्; बुद्धिस्थितिर्हि सन्निधानम् । न च नीलादिग्रहणे ग्राहकमिति ग्राह्यमिति वा बुद्धिरस्ति, अतः कथं तयोः सन्निधानम् । **अपेक्षा कथमुच्यत** इति । अपेक्षाङ्गीकरणमयुक्तम्, तदङ्गीकरणे च परिहारासम्भव इत्यर्थः ॥ १०८ ॥

परिहरति--

**मा भूदेवं तथाप्यत्र द्व्याकारे[1] ग्रहणं भवेत् ।**

यद्यपि ग्राह्य ग्राहकमिति वा न गृह्यते, तथापि यावत्स्वरूपेण ग्राह्यं गृहीतं तावता चापेक्षणीयलाभादितरोऽपि ग्रहीतव्यः, तथा ग्राहकेऽपि गृहीते तल्लाभाद् ग्राह्योऽपि ग्रहीतव्य इति ।

किञ्च, यदि ग्राह्य ग्राहकमिति न[2] गृह्यते, ततोऽस्य द्व्याकारत्वे किं प्रमाणम्, न तु ज्ञानान्तरम्, तस्यापि स्वांशपर्यवसानात् ? इत्याह--

**एवं चागृह्यमाणे वा ज्ञाने द्व्याकारता कथम् ॥ १०९ ॥**

एवमेकग्रहणेऽपरस्यापि ग्रहणप्रसङ्गे आहिते परः पुनराह—अस्त्येव साध्याकारा संवित्तिः, उत्पद्यमानमेव हि ज्ञान ग्राह्याकारेण घटादिना ग्राहकाकारेण च ज्ञानरूपेण प्रकाशते, उत्तरोत्तरज्ञानविशेषादुत्तरकाले चोभयत्र स्मृतिदर्शनात् स्वयम्प्रकाशस्तस्यानुमीयते । तथाहुः—

घटविज्ञानतज्ज्ञानविशेषात् तु द्विरूपता ।
स्मृतेरुत्तरकालं च न ह्यसावविभावितः[3] ॥ इति ॥ १०९ ॥

तद् दूषयितुमुपन्यस्यति—

**उत्तरोत्तरविज्ञानविशेषाद् या प्रकल्प्यते ।**
**ग्राहकाकारसंवित्तिः स्मरणाच्चानुमानिकी ॥ ११० ॥**

'उत्तरोत्तरविज्ञानविशेषात्' इत्येतद् विवृणोति सार्धेन—

**एकाकारं किल ज्ञानं प्रथमं यदि कल्प्यते ।**
**ततस्तद्विषयाप्यन्या तद्रूपैव मतिर्भवेत् ॥ १११ ॥**
**घटविज्ञानतज्ज्ञानविशेषोऽतो न सिध्यति ।**

यदि घटज्ञानं घटविषय केवल बिषयाकार स्यात्, ततस्तस्य घटाकारत्वात् तद्विषयमपि द्वितीयज्ञानं केवलविषयाकारं घटाकारमेव स्यात्, एवं तृतीयादिकमपीति नोत्तरोत्तरविज्ञानविशेष. स्यात् । एव केवलग्राहकाकारत्वेऽपि सर्वेषां सविन्मात्ररूपत्वादविशेष एवेति ।

यदा तु प्रथमज्ञानं ग्राह्यग्राहकोभयरूपम्, तदाऽऽकारप्रचयात् सिध्यति विशेष इत्याह—

**ग्राहकाकारसंवित्तौ त्वाकारप्रचयो भवेत् ॥ ११२ ॥**

प्रचयमेव दर्शयति—

**जायते[4] पूर्वविज्ञानं द्व्याकारं यत्र तत् पुनः ।**
**तस्यात्मीयश्च पूर्वौ च विषयस्थावुपप्लुतौ[5] ॥ ११३ ॥**

---

१. द्व्याकारं--मु० पा० ।
२ च--मु० पा० ।
३. अविभावित इति । अज्ञात इत्यर्थ. ।
४. ज्ञायते—२ पु० ।
५. उपप्लुतौ इति । उपगतावित्यर्थ. ।

**परेष्वाकारवृद्ध्यैवं पूर्वेभ्यो भिन्नता,**

प्रथमस्य हि विषयाकारेण ग्राहकाकारेण च द्व्याकारत्वे तद्विषयं द्वितीयं तद्विषयाभ्यामाकाराभ्यामात्मीयेन च ग्राहकाकारेण त्र्याकारं भवति। एवमेकाकारप्रचयादुत्तरोत्तरेषां पूर्वपूर्वेभ्यो भिन्नता सिध्यतीति।

'स्मरणाच्चानुमानिकी' इत्येतद् विवृणोति—

**तथा।**

**ग्राह्यवत् स्मरणात् पश्चात् संवित्तौ ग्राहकः पुरा ॥ ११४ ॥**

ज्ञातो घट इति सहैव ज्ञानेनार्थं स्मरति, न चागृहीतस्य स्मरणं सम्भवति, अतो ज्ञानमपि गृहीतमिति ॥ ११४ ॥

परिहरति—

**न तावदेवमाकारान् पश्यामः प्रचयान्वितान्।**

केवलग्राहकाकार संविन्मात्ररूपमेव सर्वम्, न तु तत्र द्वित्र्याकारप्रचयोऽस्ति, विषयाकारस्तु घटादिर्बाह्य एव ज्ञानस्य विषयो भवति, न त्वसौ ज्ञानस्याकार इति।

कथं तर्हि नीलाद्याकारो ज्ञानमिति व्यपदेश. ? अत आह—

**विषयव्यपदेशाच्च नर्ते ज्ञानंनिरूपणम् ॥ ११५ ॥**

नीलाकार, नीलविषयमित्यर्थ.। विषयविशेषस्य व्यपदेशमन्तरेण[1] ज्ञानस्य स्वगतो विशेषो निरूपयितु व्यपदेष्टु चाशक्य इति विषयद्वारेण व्यपदिश्यत इति ॥ ११५ ॥

नन्वेव संविन्मात्ररूपत्वाज् ज्ञानाना न भेद. सिद्ध्येत् ? अत आह—

**तस्माज्ज्ञानात्मनैकत्वे ग्राह्यभेदनिबन्धनः।**

**संवित्तिभेदः सिद्धोऽत्र किमाकारान्तरेण नः ॥ ११६ ॥**

यस्मादेव विषयादृते न ज्ञाननिरूपणम्, तस्मात् ज्ञानरूपेणैकत्वेऽपि विषयभेदप्रमाणक एव ज्ञानभद:, न ह्यसति ज्ञानभेदे ज्ञेयभेदः सम्भवतीति ॥ ११६ ॥

ननु विद्यमानो भेदो ग्राह्यभेदात् प्रतीयते, निराकाराणां तु संविदा कथं भेद. ? अत आह—

**निराकारत्वसाम्येऽपि[1] यथाकारवतां ध्रुवम्।**

**भेदः स्वाभाविकस्तद्वज्ज्ञानानां किं न सिध्यति ॥ ११७ ॥**

साकाराणामेव कुतो भेद. ? स्वभावात् कारणभेदाद्वेति चेत्, तुल्योऽयं निराकाराणामपीति किं नीलाद्याकारकल्पनया ॥ ११७ ॥

ततश्च यदुक्तम्—'भवतस्त्वर्थं कल्पयित्वा भवेत्' इति 'न हि संवित्तिसत्तयैव तद्वेदना युक्ता' इति, तत् परिहृत्य 'स्मृतेरुत्तरकालम्' इत्येतत् परिहरति—

---

१ व्याहदेश०—मु० पा०।

**स्मृतेरुत्तरकालं चेत्येतन्मिथ्यैव गीयते।**

असिद्धेयं स्मृतिरिति।

कथ तर्हि 'ज्ञातो घट.' इति ज्ञानपरामर्शः ? अत आह—

**तदैव ह्यस्य संवित्तिरर्थापत्त्योपजायते॥ ११८॥**

यथा चार्थापत्त्या ज्ञानकल्पन तथा वक्ष्याम[1] इति॥ ११८॥

यत्तु 'अभेदादेव ग्रहणे परमपि गृहीतमेव' इत्युक्तम्, तदनुभाषते—

**गृहीतमेव यच्चोक्तं तदभेदात्,**

निराकरोति—

**न तद्,**

कारणमाह—

**यतः।**

**नास्माभिर्वाक्यवृत्तेस्त्वं निमित्तमनुयुज्यसे॥ ११९॥**

यदि ह्येकस्मिन् गृहीते किमन्यदपि गृहीतमिति वाक्प्रवृत्तिः सम्भवतीत्येतदस्माभिर्भवान् पृच्छ्येत, तत एवं ब्रूयात्—सम्भवत्येषा वाक्प्रवृत्तिरिति, न त्वेवमस्माभिः पृच्छ्यत इति॥ ११९॥

कि तर्हि भवतोच्यते ? अत आह—

**ग्राह्यग्राहकतैवास्य केनचिन्नोपलभ्यते।**

ग्राह्यग्राहकयोरन्यतरग्रहणेऽन्यतरन्न गृह्यते, तच्चैकत्वेऽनुपपन्नम्। तस्माद् 'भिन्नमेव ग्राह्य ग्राहकात्' इतीदमस्माभिरुच्यत इति।

यच्च 'आकारप्रचयादुत्तरकालस्मृतेश्च ग्राहकस्यापि सवित्तिरस्तीत्यनुमीयते' इत्युक्तम्, इत्याह—

**प्रत्यक्षज्ञानपक्षे च नैषा स्यादानुमानिकी॥ १२०॥**

तदेव ग्राह्यमात्रावभासे विज्ञाने ये द्वितयस्य त्रितयस्य वा भासनमेकदेशिनः सौगताश्च कल्पयन्ति ते सहस्राकारावभासमेव[2] कल्पयेयुरित्याह—

**एकाकारे च विज्ञाने यद्यन्योऽप्यत्र कल्प्यते।**

**सहस्राकारतैकस्य कस्मान्न परिकल्प्यते॥ १२१॥**

चोदयति—

**ग्राह्यग्राहकयोर्भेदो नन्वस्त्येव परस्परम्।**

एकस्यापि ज्ञानस्य ग्राह्यग्राहकाशौ भिन्नावेवेति युक्तमेकग्रहणे परस्याग्रहणमिति।

सिद्धान्तवाद्याह—

**सिद्धो नः पक्ष एवं स्यात्,**

---

१. अर्थापत्तिप्रकरणे इति शेष.।  २. स्वहस्ता०—मु० पा०।

परः पुनराह—

न,

कारणमाह—

**ज्ञानत्वादभेदतः ॥ १२२ ॥**

एकस्यैव ज्ञानस्योभाप्यंशौ, तावंशात्मना भिन्नावपि ज्ञानरूपेणाभिन्नाविति न युष्मत्पक्षसिद्धिरिति ॥ १२२ ॥

तदेतदभ्युपगतसिद्धान्तविरोधेन दूषयति—

**भिन्नाभिन्नत्वमेकस्य कुतोऽत्र परिकल्पितम् ।**
**त्वया सांख्यमतेनैवमुक्त्वा बुद्धस्य शासनम् ॥ १२३ ॥**

बुद्धशासनमेव स्मारयति—

**एकं चेद् ग्राहकं ग्राह्यं कुतो भिन्नत्ववागियम् ।**
**भिन्नं चेत् कथमुच्येत तस्यैकत्वं पुनस्त्वया ॥ १२४ ॥**
**एकज्ञानादनन्यत्वाद् ग्राह्यग्राहकयोर्मिथः ।**

एवं च भवन्मतादैकरूप्यमेव ज्ञानस्यापादयितु शक्यमित्याह—

**एकत्वेन भवेज्ज्ञानं ग्राह्यं ग्राहकमेव वा ॥ १२५ ॥**

यदा त्वन्यतराभावस्तदा ग्राह्यग्राहकयोरितरेतरापेक्षत्वादेकाभावेऽपरस्याप्य- भावान्नि·स्वभावत्वेन ज्ञानस्याप्यभाव एव स्यादित्याह—

**तत्र चान्यतरापाये द्वितीयापायतः पुनः ।**
**ज्ञानस्यांशद्वयासत्त्वान्नैःस्वाभाव्यादभावता ॥ १२६ ॥**

यदि वा भिन्नाभ्यामशाभ्यामभेद·, तद्वदेव ज्ञानस्यापि भेद इत्याह—

**भिन्नाभ्यां वाप्यभिन्नत्वाद्भेदो ज्ञानात्मनो भवेत् ।**
**तत्स्वात्मनः[1],**

एव चात्यन्तभेदाद् ग्राह्यग्राहकयो· सिद्ध नः समीहितमित्याह—

**ततश्चैवं सिद्धं वस्तुद्वयं हि नः ॥ १२७ ॥**

सिद्धे च वस्तुभेदे यद्युभयोर्ज्ञानशब्द· परिभाष्येत, अथ वा कर्मव्युत्पत्त्या अर्थे भावकरणान्यतरव्युत्पत्त्या च बुद्धौ ज्ञानशब्दः प्रयुज्यते, तदस्तु नाम यथेष्टमित्याह द्वयेन—

**तयोश्च यदि संज्ञेयं ज्ञानमित्यस्त्वथापि वा ।**
**ज्ञानं ज्ञायत इत्यर्थो धीर्भावे करणेऽपि वा ॥ १२८ ॥**
**सर्वथा वस्तुभेदो नः सिद्धः शब्दो यथारुचि ।**
**प्रवर्ततां न नस्तत्र काचिद् विप्रतिपन्नता ॥ १२९ ॥**

---

१. तद् स्वात्मवत्—२ पु० ।

**वैभाषिकास्त्वाहुः**—सत्यं ग्राहकाद् भिन्नमेव ग्राह्यम्, तत्तु ज्ञानमेव वातीतं नार्थं इति, तदप्ययुक्तम्, युक्त्यभावादित्याह पादत्रयेण—

**अथ सत्यपि भिन्नत्वे ग्राह्यं ज्ञानान्तरं भवेत् ।**
**ज्ञानत्वे तस्य का युक्तिः,**

यदि तु पूर्वोक्ता परिभाषा कर्मव्युत्पत्तिर्वा ज्ञानत्वे ग्राह्यस्य युक्तिः ततः सेत्स्यते ? इत्याह—

**पूर्वोक्ता यदि[1] सेष्यते ॥ १३० ॥**

अर्थतस्तु नैकरूपं ज्ञानत्वमुभयोरस्तीत्याह—

**ज्ञानं ज्ञानमितीदं तु न द्वयोरनुवर्तते ।**

तवापि नास्त्येवानुगतम्, न हि स्वलक्षणव्यतिरिक्तं सामान्यमस्ति भवतामित्याह—

**व्यतिरिक्तं च सामान्यं त्वया नाभ्युपगम्यते ॥ १३१ ॥**

अभ्युपेत्यापि ब्रूम , तत् खलु पूर्वोत्तराभ्यां ग्राह्यग्राहकस्वलक्षणाभ्यां व्यतिरिक्तमव्यतिरिक्तं वा, व्यतिरिक्तत्वे तावद् ग्राह्यग्राहकयोर्न ज्ञानात्मकता स्यादित्याह—

**व्यतिरेके तयोर्ज्ञानान्न[2] ज्ञानात्मकता भवेत् ।**

ज्ञानस्य च ग्राह्यग्राहकाभ्या भिन्नस्य तद्रूपविरहादभावः स्यादित्याह—

**तद्रूपरहितत्वे च ज्ञानाभावः प्रसज्यते ॥ १३२ ॥**

व्यतिरिक्तस्य च ज्ञानस्वरूपस्य ताभ्या प्रत्येकं सम्बन्धे भूतगतकर्मगुणवद् भेदः स्याद्, व्यासज्य सम्बन्धे सावयवत्वमित्यादिदोषो **वैशेषिकादिवद्** भवतामपि स्यादित्याह—

**ताभ्यां च तस्य सम्बन्धे प्रत्येकं व्यतिषज्य च[3] ।**
**भेदसावयवत्वादि[4] दोषो वैशेषिकादिवत् ॥ १३३ ॥**

**वैशेषिकादिवदि**त्येतद् विवृणोति—

**यथा हि तेषां जात्यादौ दोषा ह्युक्ताः परैरमी ।**
**तथैवैषां प्रसज्यन्ते भिन्नाभिन्नार्थसङ्गतौ ॥ १३४ ॥**

भिन्नेष्वभिन्नस्यार्थस्य सङ्गतावभ्युपगम्यमानायामित्यर्थ. ॥ १३४ ॥

यदि चाव्यतिरिक्तमेव[5] ग्राह्यग्राहकाभ्यां सामान्यम्, ततः पूर्ववद्भिन्नाभ्यामभिन्नात् सामान्यस्यापि भेद. स्यादित्याह—

**ताभ्यामव्यतिरेके वा भेदः पूर्वोक्त एव ते ।**

---

१. तस्येति—का० ।
२. तयोरचेष्टं न—२ पु० ।
३. वा—२ पु० ।
४. भेदे०—मु० पा० ।
५. च व्यति०—मु० पा० ।

ननु जात्यात्मकसामान्याङ्गीकारे अमी दोषाः सन्तु, सादृश्यरूपमपोहरूपं वा कि न भवति ? अत आह—

**सादृश्यापोहसामान्यकल्पना वारयिष्यते ॥ १३५ ॥**

विशेषतश्च ज्ञानमात्रवादिनोऽपोह्याभावान्नापोहसिद्धिरित्याह—

**वस्त्वन्तरस्य चाभावात् त्वयापोहोऽपि दुष्करः ।**

वस्त्वन्तराभावमेव दर्शयति—

**नाज्ञानं नाम किञ्चित् स्यादपोह्यं ज्ञानवादिनः ॥ १३६ ॥**

**अपोहो न ह्यभावस्य कथञ्चिदुपपद्यते ।**

अगोनिवृत्त्या च गवात्मनोऽश्वादयो वस्तुरूपाः सन्त्येवेति शेष.। यदि तु वस्त्वन्तराभावेऽपि ज्ञानाभाव एवापोह्यः[1], तत्रापोहोऽपि वस्तुनिवृत्ति, अभावस्यावस्तुरूपस्यापोह्यस्य तदपोहात्मक ज्ञानसामान्य वस्तुरूपमेव स्यान्न निवृत्तिरूपम्, न ह्यवस्तुनिवृत्तिरवस्तु भवति, तदवस्तुत्वे वापोह्यस्याभावस्य वस्त्वन्तरत्वापत्तिरित्याह—

**वस्त्वन्तरमभावः स्याद्,**

अत्रैव प्रयोगमाह—

**अपोह्यत्वाच्च वस्तुता ॥ १३७ ॥**

अज्ञानं वस्तु, अवस्त्वात्मकस्य सामान्यस्यापोह्यत्वात्, अश्वादिवदिति। तेनाभावस्यापोह्यत्वायोगादज्ञाननिवृत्तिरूपे ज्ञानसामान्येऽङ्गीक्रियमाणे तदपोह्यमज्ञान ज्ञानादन्यद् वस्त्वन्तरमर्थं एव तव प्रसज्यत इत्याह—

**तेनाज्ञाननिवृत्तौ हि ज्ञानेऽन्यार्थः प्रसज्यते ।**

शङ्कते—

**कल्पितं स्यादपोह्यं चेत्,**

दूषयति—

**नात्यन्तासत्यकल्पना ॥ १३८ ॥**

कल्पना हि बुद्धिविशेष , न चात्यन्तासत्यस्य बुद्धिविषयता सम्भवति। भवन्मतेऽपि सर्वज्ञानानामात्मा ज्ञानान्तरं वा ग्राह्यमिति नात्यन्तासत्यस्य कल्पना सम्भवति, एवं च कल्पितमप्यज्ञानमज्ञानात्मिका बुद्धिरेव तवापद्यत इत्याह—

**बुद्धिरज्ञाननिर्भासा तवाज्ञानं प्रकल्पितम्।**

ततः किम् ? इत्याह—

**ततश्च ज्ञानमेवैकमपोह्यत्वेन सम्मतम् ॥ १३९ ॥**

तथापि किम् ? इत्याह—

---

१. एवापोहः—मु० पा० ।

**न चात्मापोह एवास्ति क्वचित् सामान्यकल्पने ।**
**वृक्षस्य न ह्यपोह्यत्वं वृक्षेणैव कदाचन ॥ १४० ॥**

न हि ज्ञानस्य ज्ञानेनापोहः सम्भवति वृक्षस्येव वृक्षेणेति ॥ १४० ॥

अपोह्यस्य चाज्ञानस्य ज्ञानत्व न स्याद् वृक्षापोह्येष्विव घटादिषु न वृक्षत्व-मिति आह—

**अपोह्ये चैव विज्ञाने ज्ञानत्वं न भवेत् तव ।**
**वृक्षत्वं न ह्यपोह्येषु कलशादिषु[1] युज्यते ॥ १४१ ॥**

ज्ञानत्वाभावे चाज्ञानशब्दस्यार्थशब्देनाभिन्नार्थत्वमित्याह—

**ततश्चाज्ञानमेवार्थं इत्यभिन्नार्थता भवेत् ।**

किञ्च, योऽयमज्ञानप्रत्ययो ग्राह्योपस्थापकः स किमालम्बनः, न ज्ञानाति-रिक्तं तावदस्ति भवताम्, यदालम्बन स्यात् ? इत्याह—

**अज्ञानप्रत्ययश्चायं किमालम्बन इष्यते ॥ १४२ ॥**
**न तावज्ज्ञाननिर्मुक्तमज्ञानं ग्राह्यमस्ति ते ।**

चोदयति—

**न च वस्तु निषिद्धं तदभावः किं न गृह्यते ॥ १४३ ॥**

वस्त्वेव हि ज्ञानातिरिक्तमस्माभिर्निषिध्यते, नाभावः, तेन ज्ञानाभावस्या-लम्बनत्वमस्तीति ॥ १४३ ॥

परिहरति—

**भावो न गृह्यते येन तस्याभावेषु का कथा ।**

सर्वप्राणिप्रसिद्धमतिस्थूलमपि महीमहीधराद्यपह्नुवान. कथमभावमङ्गी-कुर्यादिति ।

यच्च भावापह्नवे कारणं सर्वज्ञानानां स्वांशे ज्ञानान्तरे वा वृत्तिर्नान्यत्रेति, तदभावापह्नवेऽपि तुल्यमित्याह—

**स्वांशपर्यवसानं च तुल्यमत्रापि कारणम् ॥ १४४ ॥**

स्वांशग्रहणं ज्ञानान्तरस्याप्युपलक्षणम् । ज्ञानान्तरग्राह्यत्वपक्षेऽपि निराक्रिय-माणे स्वांशपक्षोपक्षेपः तस्मिन्नपि पक्षे तुल्यमिद दूषणमिति दर्शयितुम्, तेनाज्ञान-प्रत्ययस्यापि ज्ञानान्तरमात्मांशो वालम्बनमापद्यत इत्याह—

**तेन ज्ञानान्तरं वा स्याद् ग्राह्यमात्मांश एव वा ।**

न त्वेतत् सम्भवतीत्याह—

**स्वरूपविपरीतं च कथं ग्राह्यं प्रतीयते ॥ १४५ ॥**

अज्ञानरूपविपरीतं विज्ञानरूपम्, तत् कथ ज्ञानाभावप्रत्ययस्य तद्विपरीतं विज्ञानरूपमलम्बनं स्यादिति ॥ १४५ ॥

---

१. घटत्वादिषु—मु० पा० ।

अतोऽत्र दृष्टान्तमाह—

**यथोष्णेऽनुष्णधीर्नास्ति,**

प्रकृते योजयति—

**ज्ञानेऽप्यज्ञानधीस्तथा ।**

तेनावश्यमज्ञानप्रत्ययस्य बलादर्थावलम्बनत्वमभ्युपगन्तव्यम् । अनेनैव न्याये न यदपि द्वित्वस्थूलत्वस्थायित्वचित्रत्वादिविज्ञानं तदप्यर्थालम्बनं दर्शयितव्यम् । [ ह्येकस्य ज्ञानस्य द्वित्वमाकारः सम्भवति, नापि सूक्ष्मस्य स्थूलत्वम्, नापि क्षणिकस्य स्थायित्व रूपं सम्भवति, नाप्येकस्य नानापर्यायश्चित्रत्वम् । तदवश्यमत्रार्थालम्बनत्वमङ्गीकर्त्तव्यम् । तथा च भवदुक्तयुक्तिजं 'सर्वज्ञानानि नार्थमालम्बन्ते' इति यज्ज्ञान तदपि स्वांशमतीत वा ज्ञानमालम्बमान नीलादिज्ञानानाम् अर्थालम्बनत्वाभाव न शक्नुयाद् ग्रहीतुमित्युक्त **निरालम्बनवादे** 'चैत्रादिप्रत्ययाना च' ( श्लो० वा० निरा० ६५ ) इत्यत्र । तस्य वा तदालम्बनत्वेन सर्वज्ञानाना स्वांशग्राहित्वमतीतग्राहित्व वा सिध्येत्, ज्ञानाकारत्वे च नीलादेः प्रत्यभिज्ञानुपपत्ति, ज्ञानस्य क्षणिकत्वादर्थोऽपि क्षणिक इति चेत्, **तच्छब्दाधिकरणे** निराकरिष्यते । ज्ञानमपि स्थायीति चेत् ? सञ्ज्ञामात्रे विवादः स्यात्, नील तावत्प्रत्यभिज्ञानात् स्थायि[1], स्थायित्वे च सुषुप्त्यादौ विद्यमानस्यैवाप्रकाशात्स्वप्रकाशत्वानुपपत्तेरन्येन प्रकाशकेन भवितव्यम्, इति न सिद्धमद्वैतमित्यलमनेन, प्रस्तुतमनुसरामः ।

तत् सिद्धमपोह्याभावान्नापोहरूपसामान्यसिद्धिरित्याह—

**तेन न ज्ञानमात्रत्वे स्यादपोह्यं कथञ्चन ॥ १४६ ॥**

सामान्याभावे च न ग्राह्यग्राहकयोर्ज्ञानात्मनैकत्वमित्याह—

**ग्राह्यग्राहकयोश्चातो न ज्ञानात्मसमानता ।**

उपसंहरति—

**तस्मादन्यतरत्रेदं ज्ञानत्वं सम्प्रतीयते ॥ १४७ ॥**

सति त्वेव ग्राहकस्यैव ज्ञानत्वम्, उभयवादिसिद्धत्वात् ? इत्याह—

**तत्राप्युभयसिद्धत्वाद् ग्राहकस्येति गम्यते ।**

अथ वा, तत्रापि किं न एतेन, वस्तुभेदे[2] व्यपदेशो यथारुचि क्रियतामित्याह—

**वस्तुभेदे प्रसिद्धे च व्यपदेशो यथारुचि ॥ १४८ ॥**

**ज्ञानमस्तूभयं वार्थो ग्राहको वार्थ उच्यताम् ।**

**भाष्यकारेण** त्वतीतस्यालम्बनत्वं क्षणिकत्वान्न सम्भवतीत्युक्तम्—"क्षणिका हि सा न बुद्ध्यन्तरकालमवस्थास्यते" ( शा० भा० पृ० ३९ ) इति । तदाह—

**बुद्ध्योरयुगपद्भावान्न द्वयोर्मेयमानता ॥ १४९ ॥**

**क्षणिका हीत्यनेनोक्तम्,**

---

१. अस्थायि—मु० पा० । २. वस्त्वभेदे—मु० पा० ।

यदास्त्येवमतीतं ज्ञानं प्रत्यक्षबुद्धेरालम्बनं[1] न भवति, तदार्थ एव ग्राह्य इति सिद्धं भवतीत्याह—

**अर्थो ह्येकः[2] प्रसज्यते ।**

मा भूदतीतस्य ग्राह्यत्वम्, युगपज्जन्मनोरेव तु ज्ञानयोरेकं ग्राह्यम्, इतरद् ग्राहकं भविष्यति ? इत्यत आह पादत्रयेण—

**अन्योन्यनिरपेक्षत्वाद् युगपच्चापि जन्मनि ॥ १५० ॥**
**मानमेयत्वनास्तित्वम्,**

कारणत्वमेव हि भवता ग्राह्यत्वम्, यौगपद्ये चान्योन्यनिरपेक्षजन्मनोः कार्यकारणभावाभावान्न ग्राह्यग्राहकत्वमिति कथं नैरपेक्ष्यम् ? इत्यत आह—

**क्रियाकारकवर्जनात् ।**

उत्पादनक्रियाया हि कर्मकारकत्वम्, तस्यामेव च कर्तृत्वं करणत्वं वा कारणत्वम्, न च युगपज्जन्मनोरेककर्तृका क्रियाभपेक्ष्येतरजन्म सम्भवति, सिद्धस्य च कर्तृत्वमसिद्धस्य च कर्मत्वम्, न च युगद्भाविनोरेकस्य सिद्धिः इतरस्य चासिद्धिरिति सम्भवतीति न कार्यकारणभावः, तदभावाच्च[3] न ग्राह्यग्राहकत्वमिति ।

भवत्पक्षे वा कथमर्थज्ञानयोः कार्यकारणभावः, यतो ग्राह्यग्राहकभावः ? अत आह पादत्रयेण—

**अर्थविज्ञानयोरत्र या मितिं प्रति सङ्गतिः ॥ १५१ ॥**
**कार्यकारणभावोऽयम्,**

नास्माकं कार्यत्वं ग्राहकत्वं कारणत्वं वा ग्राह्यत्वम्, किन्तु ग्राहकमेव कारणं ग्राह्यं च कार्यम् । तथा हि, येयं प्रमितिरूपा क्रिया प्रत्यक्षसूत्रे 'बुद्धिजन्या' इति वर्णिता तज्जन्यभासनाख्यफलसमवायित्वादर्थस्य कर्मत्वम्, इदमेव तस्य ग्राह्यत्वम्, तेन रूपेणार्थस्य कार्यत्वम्, तस्याः च क्रियाया यद् बुद्धेः कर्तृत्वं करणत्वं वा तदेव तस्या ग्राहकत्वं कारणत्वं च, ततश्चार्थसमवायिनः फलस्य ज्ञानस्य च पौर्वापर्याद् युक्तः कार्यकारणभाव इति ।

तव तु यौगपद्यान्नैवं सम्भवतीत्याह—

**नान्यत्रैवं च दृश्यते ।**

यौगपद्ये चेद कार्यमिदं कारणमिति नियमोऽपि न स्यादित्याह पादत्रयेण—

**नियमश्च न लभ्येत सव्यदक्षिणशृङ्गवत् ॥ १५२ ॥**
**इदं कार्यमयं हेतुः,**

विशेषाग्रहणे द्वयमपि कार्यं कारणं च भवत्विति चेत् ? नेत्याह—

**द्वयं न,**

---

१. ०बुद्धिरा०—मु० पा० । २. ह्यन्यः—२ पु० ।
३. तद्भावाच्च—मु० पा० ।

कारणमाह—

**अन्योन्यसंश्रयात् ।**

ननु तद्भावभावाव्यभिचार एव कार्यकारणलक्षणम्, तच्च युगपद्भाविनोरपि विद्यत एव, यथाहु.—'प्रत्ययोऽव्यभिचारित्वात् सह' इति । प्रत्यय., कारणमित्यर्थः । तत्राह—

**तद्भावभाविता मात्रं हेतुः कैर्नैव[1] वर्ण्यते ॥ १५३ ॥**
**पौर्वापर्यविनिर्मुक्तं कार्यकारणलक्षणम् ।**

पौर्वापर्यनियमसयुक्तं तद्भावभावित्व तल्लक्षणम्, न तन्निर्मुक्तमिति ।

यथा च पौर्वापर्यनियमसहितमेवेद लक्षणं न नियमरहितम्, नापि पौर्वापर्यरहितम्, तथा दर्शयति सपादेन—

**गवाश्वस्य यथा नास्ति पौर्वापर्येऽपि तत् तथा ॥ १५४ ॥**
**युगपज्जायमानेऽपि सन्तत्यन्तरजे क्षणे ।**
**रूपादिषु घटे यद्वत्,**

उपसंहरति—

**तस्मात् पूर्वमवस्थिते ॥ १५५ ॥**
**यो यस्माज्जायते[2] पश्चात् स तत्कार्यमितीष्यते ।**

यत्तु परै 'असत्यपि पौर्वापर्ये कार्यकारणत्वम्' इत्यत्र सिद्धवद्दीपप्रभावदिति निर्दर्शितम्, तदसिद्धमित्याह—

**हेतुहेतुमतां सिद्धं यौगपद्यनिदर्शनम् ॥ १५६ ॥**
**यत् प्रदीपप्रभाद्युक्तं सूक्ष्मः कालोऽस्ति तत्र नः ।**

कथं तर्हि यौगपद्याभिमानः ? अत आह—

**दुर्लक्षस्तु यथा वेधः पद्मपत्त्रशते तथा ॥ १५७ ॥**

सन्तमपि कालभेदमतिसौक्ष्म्यादलक्षयता पद्मपत्त्रशतव्यतिभेद इव यौगपद्यभ्रमः; तुलानमनोन्नमनयोस्तु न मिथः कार्यकारणत्वम्, उभयोरेककारणत्वादिति ॥ १५७ ॥

इयं च यौगपद्येन कार्यकारणत्वनिराक्रिया ज्ञानाशयोरपि ग्राह्यग्राहकत्वनिराकरणाय वक्तव्येत्याह—

**भागयोर्यौगपद्येन तथैव स्यान्निराक्रिया ।**

मा भूद् यौगपद्यम्, क्रमभाविनोस्तु पूर्वमुत्तरस्य ग्राह्यं भवतु, यत्तु अतीतस्य ग्राह्यत्वं न सम्भवतीत्युक्तम्, तत्त्वयुक्तम्, शक्त्यर्पणद्वारेण सम्भवात्, पूर्वज्ञानार्पितवासनावशेन हि तत्स्वरूपमुत्तरमुत्पद्यमानं तदालम्बनं भवति स्मरणमिव पूर्वानुभवालम्बनम्; तदुक्तम्—'शक्त्यर्पणात् क्रमात्' इति, तत्राह—

---

१. कैनैव कल्प्यते—मु० पा० । २. यस्मिन् यो जायते—२ पु० ।

**न च शक्त्यर्पणद्वारं क्रमेणालम्बनं भवेत् ॥ १५८ ॥**

कारणमाह—

**ग्राह्यं तदा ह्यतीतं स्यात्,**

ततः किम् ? इत्याह—

**ताद्रूप्यं चाप्रमाणकम् ।**

वर्तमानतया गृह्यमाणस्यातीतत्वमप्रमाणकमिति ।

स्मृतिवदेव तु शक्त्यर्पणद्वारेण ज्ञायमानमतीतत्वानुविद्धमेव पूर्वं गृह्येतेत्याह पादत्रयेण—

**अतीतत्वानुविद्धो हि स्मृत्या ग्राह्योऽनुभूयते ॥ १५९ ॥**

**तद्वदेव भवेदत्र,**[1]

स्वप्नेऽपि तर्ह्यनुभूतग्रहणादतीतत्वानुविद्धमेव ग्रहणं स्यात् ? नैवमित्याह—

**स्वप्ने न स्यात्,**

कारणमाह—

**विपर्ययात् ।**

**तत्र ह्यवर्तमानोऽपि गृह्यते वर्तमानवत् ॥ १६० ॥**

भ्रान्तित्वाद् युक्तं स्वप्नेऽवर्तमानस्यापि वर्तमानतया ग्रहणम् । इदमेव भ्रान्तीनां तत्त्वं यदन्यथाभूतस्यान्यथा ग्रहणमिति ॥ १६० ॥

कथं भ्रान्तित्वम् ? अत आह—

**बाधज्ञानादिदं भ्रान्तम्,**

अत्रापि विपर्यय इति चेद् ? नेत्याह—

**न त्वत्रैवं विपर्ययः ।**

बाधाभावादित्यर्थः ।

एवमतीतस्य प्रत्यक्षविषयत्वं निराकृत्य अत्रैव प्रयोगमाह—

**तस्मात् प्रत्यक्षबुद्धीनां नातीतो विषयो भवेत् ॥ १६१ ॥**

**अतीतत्वाद् यथैवासां वृत्तो[2] जन्मान्तरेषु यः ।**

अनन्तरातीतः पक्षः, अतीत्वसामान्यं च हेतुरिति ।

अत्रैव दृष्टान्तान्तरमाह—

**तद्रूपत्वेन वा ज्ञानं हेतुर्भाविवदुच्यते ॥ १६२ ॥**

यो हि यथावस्थितो न गृह्यते नासौ प्रत्यक्षस्य विषयः, भाविवदिति ॥१६२॥

किञ्च, अतीतस्यापि विषयस्त्वज्ञानमेव तदिति नास्ति प्रमाणमर्थ एवातीतो विषय इति सौत्रान्तिकवदङ्गीकर्तुं युक्तम् । एवं हि महीधरादयो लोकप्रसिद्धा नापह्नुता भवन्तीत्याह—

---

१. भवेत्तत्र—मु० पा० ।  २. वृत्तौ—मु० पा० ।

**अतीतत्वेऽपि नार्थोऽयं धीरेषेत्यत्र का प्रमा ।**

यच्चेदमतीतं ग्राह्यतया कल्पितम्, तत् त्रेधा विकल्पयति—

**अतीतं[1] यच्च विज्ञानं ग्राह्यत्वेन प्रकल्पितम् ॥ १६३ ॥**

**तस्माद् ग्राहकरूपं वा ग्राह्यं वोभयथापि वा ।**

ग्राह्यमात्रत्वे दूषणमाह—

**ग्राह्याकारत्वमात्रे स्यादर्थः शब्दान्तरेण ते ॥ १६४ ॥**

अयं चास्मिन् पक्षे दोष इत्याह—

**स्वकाले[2] चाप्यसंवित्तेर्न[3] स्याच्छक्त्यर्पणं ततः ।**

गृहीतविषया हि वासना ग्राह्यैकस्वभावं[4] च पूर्वमुत्तरोत्पत्तेः प्रागगृहीतं स्वविषयां वासनां नार्पयेत्, तदभावेन च नोत्तरं पूर्वविषयत्वेनोत्पद्यत इति ।

शक्त्यर्पणाभावमेव प्रयोगेण दर्शयति—

**यथैवानागताज् ज्ञानात् सन्तत्यन्तरजादपि ॥ १६५ ॥**

**दृढत्वेनाप्यविज्ञातात्[5] तथोत्पन्नाद् विनश्यतः ।**

यथा ह्यनागतात् सन्तानान्तराद्वा न शक्त्यर्पणम्, एवमन्तरातीनादपि दृढत्वेनाविज्ञातादुत्पन्नमात्रविनष्टादविज्ञातत्वादेवेति ।

ग्राहकैकस्वभावत्वे तु पूर्वस्योत्तर प्रति विषयत्व न स्यादित्याह—

**केवलग्राहकत्वे तु विषयत्वं न युज्यते ॥ १६६ ॥**

दूषणान्तरमाह—

**किमपेक्ष्य च तस्येदं ग्राहकत्वं प्रकल्प्यते ।**

तस्यानन्तरातीतमपेक्ष्येति चेत् ? न, तस्याप्यनेनैव न्यायेन ग्राहकैकस्वभावत्वेन ग्राह्यत्वायोगादिति ।

द्व्याकारत्वे दूषणमाह—

**द्व्याकारता निरस्तैव,**

ननु स्वयं ग्राह्यग्राह्यकत्वं निरस्तम्, यथा तु भवन्मते ज्ञानस्यार्थापेक्षया ग्राहकत्व ज्ञानान्तरापेक्षया ग्राह्यत्वम्, तथा मम सर्वज्ञानानां पूर्वापेक्षया ग्राहकत्वम् उत्तरापेक्षया च ग्राह्यत्वं कि नोपपद्यते ? उक्तोत्तरमिदम् । एवं स्वोत्पत्तिवेलायामगृहीतं न शक्तिमर्पयेत्, अस्मत्पक्षे तु ज्ञानं न स्वविषयां वासनां जनयति किं त्वर्थविषयाम्; अत एवार्थविषयैव स्मृतिस्तया जन्यते, न ज्ञानविषया । तस्मादुत्पत्तिवेलायामेव संवित्तिरभ्युपगन्तव्या, ततश्च स्वयमेव ग्राह्यग्राहकत्वमापन्नम्, तन्निरस्तमिति ।

---

१. अतीते—२ पु० ।
२. अकाले—२ पु० ।
३. चाथ संवित्ते—२ पु० ।
४. ०स्वभावा—मु० पा० ।
५. ०नाथ विज्ञातात्—मु० पा० ।

दोषान्तरमाह—

**संवेद्येत तदैव च ॥ १६७ ॥**

ततः को दोषः ? अत आह—

**ततश्चोत्तरविज्ञानं न प्रतीक्षेत बोधकम् ।**

एव ग्राहकरूपत्वं द्व्याकारत्वं चानुपपन्नम् इति ग्राह्यमात्ररूपं पूर्वम्, ततश्चार्थ एवं शब्दान्तरेणोक्तो भवतीति स्थितम् ।

इदानी परमपि त्रेधैव विकल्प्य द्व्याकारत्वे तावद् दूषणमाह—

**द्व्याकारकल्पनायां च परस्यात्मांश एव ते ॥ १६८ ॥**

**प्रमापर्यवसानेन नातीतो विषयो भवेत् ।**

यदि तु पूर्वेण ग्राह्येण सरूपमुत्तरमपि ग्राह्यरूपं ततो ग्राहकत्वं न स्यात् ? इत्याह—

**पूर्वग्राह्यसरूपत्वे[1] ग्राहकत्वं प्रहीयते ॥ १६९ ॥**

ग्राहकाकारमात्रत्वे तूत्तरस्य पूर्वस्तस्य विषयो न स्याद्, ग्राह्यग्राहकरूपत्वेन वैरूप्यात् सारूप्यनिबन्धनत्वाच्च विषयस्येत्याह—

**ग्राहकाकारमात्रे स्याद् विषयो नासरूपतः ।**

यदपि पूर्वमुत्तरत्र शक्तिमर्पयतीत्युक्तम्, तदप्ययुक्तमित्याह—

**न च शक्त्यर्पणस्यात्र व्यापार उपलभ्यते ॥ १७० ॥**

व्यापाराधीनं च वासनार्पणम्, न च क्षणिकस्य ज्ञानस्य व्यापारः सम्भवतीति ॥ १७० ॥

भवत्पक्षे च वासनार्पणम् **निरालम्बनवादे** निराकृतमित्याह—

**शक्त्यर्पणस्य चाभावो युष्मत्पक्षे प्रसाधितः ।**

इदानी ज्ञानानां हेतुसाध्यत्वाभावे वास्यवासकत्वाभावे च प्रयोगमाह—

**सन्तानान्तरवच्चैषां निषेध्या[2] हेतुसाध्यता ॥ १७१ ॥**

**वास्यवासकभावश्च ज्ञानत्वादेकसन्ततौ ।**

एकसन्ततिपतिताना ज्ञानाना न मिथो हेतुमत्त्वं वास्यवासकत्वं[3] वा, ज्ञान त्वात्, सन्ततिद्वयवर्त्तिज्ञानवदिति ।

यदपि पूर्वमेकस्य ग्राह्यग्राहकत्व निराकृतम्, तत्र प्रयोगमाह द्वयेन—

**तस्माद् यद्भासकं रूपं[4] तद्ग्राह्यात् तस्य भिन्नता ॥ १७२ ॥**

**तत्संवित्तावसंवित्ते रसादिग्राहकं यथा ।**

**ग्राह्यं तद्ग्राहकाच्चैव तत्परामृशता यतः ॥ १७३ ॥**

**न परामृश्यतेऽवश्यं रसादिग्राहकं यथा ।**

---

१. ०स्वरूपत्वे—२ पु० । २. निषेध्याद्—मु० पा० ।
३. वाच्यवाच्यकत्वं—मु० पा० । ४. रूपात्—२ पु० ।

तद्ग्राहकं परामृशता यस्मान्न नियमेन परामृश्यत इति तद्दर्शितम्–'न स्मरामि मया कोऽपि" ( श्लो० वा० शून्य० ८३ ) इति, एतदेव द्वय समुच्चित्य दर्शयति—

**द्वयं परस्परेणैवं भिन्नं साध्यं रसादिवत् ॥ १७४ ॥**

रूपं तद्ग्राहक च मिथो भिन्नम्, परस्परपरिहारेण परामर्शाद् रूपरसवदिति ।

अत्रैव हेतुदृष्टान्तान्तरमाह—

**ऐकरूप्येण चाज्ञानात्[1] सन्तानान्तरबुद्धिवत् ।**

प्रयोगान्तरमाह—

**ज्ञानं स्वांशं न गृह्णाति ज्ञानोत्पत्तेः स्वशक्तिवत् ॥ १७५ ॥**

**ग्राह्यत्वप्रतिषेधश्च[2] द्वयहीना हि वासते[3] ।**

ज्ञान स्वाश न गृह्णाति, नापि स्वांशेन गृह्यते, ज्ञानादुत्पद्यमानत्वाद् वासनावत्, सा हि स्वाश न गृह्णाति, नापि स्वांशेन गृह्यते इति ॥ १७५ ॥

प्रयोगान्तरमाह—

**चैत्रज्ञानं तदुद्भूतज्ञानांशग्राह्यबोधकम्[4] ॥ १७६ ॥**

**ज्ञानत्वान्न भवेद् यद्वत् तस्य देहान्तरोद्भवम् ।**

चैत्रज्ञान तज्ज्ञानसन्ततावुद्भूतस्य ज्ञानाशस्य ग्राह्यस्य बोधक न भवति, ज्ञानत्वात्, यथा देहान्तरोद्भव तस्य ग्राहक तद्वदिति ।

ज्ञानस्य ग्राह्यग्राहकशक्तिद्वयनिराकरणेऽप्यनयैव दिशा प्रयोगो दर्शयितव्य इत्याह—

**एतयैव दिशा वाच्या शक्तिद्वयनिराक्रिया ॥ १७७ ॥**

न ज्ञान द्विशक्तिकम्, ज्ञानोत्पत्तेः, वासनावदिति ॥ १७७ ॥

नन्वेवमात्मनो न ग्राह्यग्राहकशक्ति, वस्तुत्वाद्, घटादिवत् ? अत आह—

**प्रमाणान्तरसिद्धत्वाद् अन्यत्रानेकशक्तिता ।**

प्रत्यग्वृत्ति[5]स्वभावेनाहम्प्रत्ययेन मानसप्रत्यक्षसिद्ध ग्राह्यग्राहकत्वं नानुमानेन शक्य निराकर्तुमिति ।

ज्ञानस्य तु नैव प्रमाणान्तरमस्ति, यतः शक्तिद्वय स्यादित्याह—

**न त्वत्र कारणं तादृक् शक्तिभेदकृदस्ति ते ॥ १७८ ॥**

तद्धि 'इदं नीलम्' इति पराग्वृत्तिस्वभावमेव सर्वदोदेतीति ॥ १७८ ॥

यदा त्वेव नीलादेर्ज्ञानादभिन्नत्व न प्रमाणबलात्सिद्ध द्वैतम्, तदा यदुक्तम्—'उभयवादिसिद्धत्वाज् ज्ञानस्य तस्यैवाकारकल्पना युक्ता, लाघवमेव सति भवति' इति, तदनादरणीयम्, न ह्येतावता प्रमाणसिद्धं हातुं शक्यमित्याह—

---

१. विज्ञानात्—२ पु० ।
२. ग्राह्यत्वं०—मु० पा० ।
३. द्विवासना—मु० पा० ।
४. ०बोधनमिति पाठान्तरम् ।
५. प्रत्यावृत्ति०—२ पु० ।

**तस्मादुभयसिद्धत्वाल्लाघवाद् यः[1] परिग्रहः।**

यदपि 'प्रकाशकत्वादर्थग्रहणात् पूर्वमेव ज्ञानं ग्रहीतव्यम्' इत्युक्तम्, तदनैकान्तिकमित्याह—

**उपायत्वाच्च यत् तस्य पूर्वग्रहणकल्पनम्॥ १७९॥**
**चक्षुरादीन्द्रियैरत्र तदनैकान्तिकं भवेत्।**

यदपि प्रतिबन्धकाभावादुत्पत्तावेव ग्रहीतव्यमित्युक्तम्, तदपि अनुभाष्य परिहरति सार्द्धेन—

**यदप्यप्रतिबद्धत्वादुत्पत्तौ गृह्यतामिति॥ १८०॥**
**तत्रात्मना न शक्यं तन्नान्योत्पत्तिस्तदस्ति वा।**
**तेनैतत् कारणाभावात् तदानीं नानुभूयते॥ १८१॥**

न तावत् स्वात्मना शक्यं ग्रहीतुमित्युक्तम्, न च ज्ञानान्तरमपि तदानीमुत्पन्नं येन गृह्येत, ततः प्रत्युत्पन्नमपि ग्राहकप्रमाणाभावान्नोत्पत्तिवेलायां गृह्यत इति॥ १८१॥

किं पुनर्ज्ञानस्य ग्राहकं प्रमाणम्, किमिति वा तत् पश्चादेवोपजायते, न पूर्वम्? अत आह—

**नान्यथा ह्यर्थसद्भावो दृष्टः सन्नुपपद्यते।**
**ज्ञानं चेन्नेत्यतः पश्चात् प्रमाणमुपजायते॥ १८२॥**

अर्थापत्तिर्ज्ञानस्य प्रमाणम्, सा चार्थस्य ज्ञातत्वान्यथानुपपत्तिप्रभवा प्रागर्थस्य ज्ञातत्वाभावान्नोत्पद्यते, ज्ञाते त्वर्थे[2] पश्चात् तज्ज्ञातत्वानुपपत्त्या[3] अर्थापत्तिप्रमाणमुपजायते, तद्युक्तम्—पूर्वं त्वग्रहणं पश्चाच्च ग्रहणमिति।

ननु ज्ञानकर्मत्वं ज्ञातत्वम्, तत् प्रथमं ज्ञाते ज्ञानेऽवगम्यते, अनवगतं च कथं ज्ञानं कल्पयेत्, तदितरेतराश्रयम्—ज्ञानावगमे ज्ञातत्वावगमः, तदवगमे च ज्ञानावगम इति?

तत्र केचिदाहुः—सर्वथा तावदस्ति ज्ञानम्। तथा हि, विद्यमान एव हि घटः कस्यचिदेव व्यवहारयोग्यतामापद्यते न सर्वेषाम्; नापि सर्वदा, तदवश्यं यो यदा तेन व्यवहरति तस्य तद्व्यवहारानुगुणः कश्चिदतिशयः सञ्जात इति कल्पनीयं स ज्ञानमिति? सत्यम्, एवं सिध्यति ज्ञानम्, किन्तु प्रागपि व्यवहारादवगम्यते ज्ञानम्, अव्यवहरन्नपि 'ज्ञातोऽयमर्थो मया' इति आत्मनार्थस्य [4]ज्ञातत्वमनुसन्धत्ते इति सर्वजनीनमेतत्; न च ज्ञानमविदुषा ज्ञातत्वरूपत्वं शक्यं वेदितुम्; तदेवं[5] प्रागेव व्यवहारादुपजायमानो ज्ञातत्वावगमोऽसति ज्ञानस्य प्रत्यक्षत्वे कथमुपपद्यते।

---

१. सिद्धत्वलाघवाद्यप०—मु० पा०। २. त्वथ—मु० पा०।
३. तज्ज्ञानत्वा०—मु० पा०। ४. ज्ञानत्व०—मु० पा०। ५. यदेवं—मु० पा०।

अत्राहुः—ज्ञानजन्योऽर्थगतः कश्चिदतिशयः प्रकाशनभासनादिपर्यायपदवाच्यः, स च पाकजन्यौदनादिगतातिशयवदनवगतेऽपि ज्ञाने शक्यतेऽवगन्तुम्; अतः ज्ञानस्य कल्पक इति, सत्यमस्त्यतिशयः, स च प्रत्यक्षेऽर्थे प्रत्यक्षावगत. कल्पयेदपि ज्ञानम्, अनुमानादिषु तु 'तस्याप्रत्यक्षत्वात् प्राग्व्यहारात् तद्व्याप्तलिङ्गाभावादप्रमितस्य चाकल्पकत्वान्न ज्ञानं कल्पयेत्, अनुमितेऽपि चार्थे 'ज्ञातो मयाग्नि' इति अग्नि ज्ञातमनुसन्धत्ते, अतस्तत्त्व वक्तव्यम्; ज्ञाने प्रमाणमुच्यते ज्ञानक्रियाजनितो ज्ञातुर्ज्ञेयेन सहाप्तत्वसम्बन्ध, स मानसप्रत्यक्षावगतो ज्ञानं कल्पयति सत्या जिज्ञासायाम्, यत्रापि च कश्चिदर्थमनुभूय तद्विषयं ज्ञानमकल्पयित्वैव कालान्तरे तमर्थं स्मरति तत्रापि स्मृतिज्ञानेनैवात्मनोऽर्थस्य च दृश्यद्रष्टृत्वसम्बन्धे निष्पन्ने मानसप्रत्यक्षेण चावगते तद्बलेन च ज्ञाने² कल्पिते तस्य ज्ञानस्येन्द्रियादिप्रत्युत्पन्नकारणासम्भवेन स्मृतित्व निश्चित्य तदनुपपत्त्या पूर्वानुभवः कल्प्यते, यथोक्तम्—'तदैव ह्यस्य संवित्तिरर्थापत्त्योपजायते' ( ) इति । स एवात्मनोऽर्थेन सम्बन्धो दृष्टत्वज्ञातत्वादिपदैरभिधीयत इति ।

कः पुनरसौ सम्बन्धः ? उक्तम्—प्राप्तिरिति । येऽपि च स्वप्रकाशा संविदं मन्यन्ते तेषामपि स्वोत्पत्तिसमये सवित्ति स्वात्मान कर्त्तार वेद्य च भासयति, न तु स्वस्य वेत्तुर्वा संवेद्यसम्बन्धम्, तस्य तदानिष्पन्नत्वेनासत्त्वात् ततो निष्पन्नाया संवित्तौ तस्या कर्त्तुश्च तद्द्वारा विषयसम्बन्धे जाते ततो मानसेनैव प्रत्यक्षेणार्थेन सह सवित्तेः, संवेत्तुश्च सम्बन्धोऽवभासत इति अङ्गीकर्त्तव्यम्, सविदन्तरोत्पत्तिसमये च पूर्वसविदो नष्टत्वान्न तद्धर्मत्वेन सवेद्यसम्बन्ध. शक्यते प्रत्यक्षेण ग्रहीतुमिति सवेत्तृधर्मभूत एव सवेद्यसम्बन्धः कोऽपि नाम सर्वजनीन. प्राप्तिपर्यायो गृह्यत इति । तत एव सवित्तिरूपक्रियाकल्पनासिद्धेरल स्वप्रकाशतया । तत्सिद्धमुत्पत्तिवेलायामर्थस्य दृष्टत्वाभावेन फलाशाभावान्न ज्ञान गृह्यते, पश्चात्तु दृष्टत्ववशेन गृह्यत इति ॥ १८२ ॥

यदि परम् 'असत्यपि ग्राहके प्रतिबन्धाभावात् किमुत्पत्तावेव न गृह्यते' इति उच्यते, तच्चायुक्तमित्याह—

**न चाप्यप्रतिबन्धेन³ केवलेन ग्रहो⁴ भवेत् ।**

किमपरमग्रहे कारणम् ? अत आह—

**विशिष्टकारणाभावेऽप्यर्थो नैवानुभूयते ॥ १८३ ॥**

यत्तु स्वयमेव प्रकाशरूपस्य किमन्यापेक्षयेत्युक्तम् ? तत्राह—

**व्यापृतं चार्थसंवित्तौ ज्ञानं नात्मानमृच्छति⁵ ।**

---

१. तस्येति । अर्थगतस्यातिशयस्येत्यर्थः । २. ज्ञाने इति । स्मृतिरूपे ज्ञाने ।

३. चापि प्रतिबन्धेन—मु० पा० । ४. केवलेनाग्रहो—मु० पा० ।

५. ज्ञानं चात्मानम्०—मु० पा० ।

**तेन प्रकाशकत्वेऽपि बोधायान्यत् प्रतीक्ष्यते[1] ॥ १८४ ॥**

प्रकाशकमपि सदेतदुत्पत्तिवेलायामर्थस्य प्रकाशने व्यापृतत्वान्न स्वात्मानं प्रकाशयति। शक्तावपि हि कारणानि कार्यान्तरव्यापृतानि न कार्यान्तरं कुर्वन्ति, पश्चात्तु विनष्टत्वान्न प्रकाशयतीति ॥ १८४ ॥

यद्वा—अर्थं प्रत्येव तस्य प्रकाशकत्वम्, सर्वदा तन्मात्रांशदर्शनात्, नात्मानं प्रति, तस्य कदाचिदपि तेनानुभवादित्याह—

**ईदृशं वा प्रकाशत्वं तस्यार्थानुभवात्मकम्।**
**न चात्मानुभवोऽस्त्यस्येत्यात्मनो न प्रकाशकम् ॥ १८५ ॥**

न च प्रकाशकत्वे सति कथं व्यवस्थेति वाच्यम्, अन्यत्रापि दर्शनादित्याह सार्द्धेन—

**सति प्रकाशकत्वे च व्यवस्था दृश्यते यथा।**
**रूपादौ चक्षुरादीनां तथात्रापि भविष्यति ॥ १८६ ॥**
**प्रकाशकत्वं बाह्येऽर्थे शक्त्यभावात् तु नात्मनि।**

यत्तु भिक्षुणोक्तम्—"ज्ञानान्तरेणानुभवो[2] भवेत् तत्रापि हि स्मृतिः" ( प्र० वा० २-५१२ ) इति तदिदमनुभाषते—

**अन्येन वानुभावेऽसावनवस्था[3] प्रसज्यते ॥ १८७ ॥**
**तत्र तत्र स्मृतिं दृष्ट्वा सर्वानुभवकल्पना।**

ज्ञाते घटे पश्चाद् घटे तज्ज्ञाने च स्मृतिर्दृश्यते, सा च गृहीतविषया, तेन ज्ञानमपि गृहीतमुत्पत्त्यवस्थायामित्यभ्युपगन्तव्यम्, तद् यदि ज्ञानान्तरेण गृह्येत ततस्तस्यापि ज्ञानस्य पूर्ववदुत्पत्तौ अग्रहणाज् ज्ञानान्तरापेक्षा, तत्रापि तथेत्यनवस्था स्यादिति।

यदा त्वेकेनैव घटज्ञानेन घटाकारो ज्ञानाकारश्चानुभूतो भवति, तदा तन्मात्र-एव सर्वस्मरणसम्भवान्नानवस्थेत्याह—

**एकेन त्वनुभूतत्वे सर्वं तत्रैव सम्भवेत् ॥ १८८ ॥**

परिहरति—

**तत्रापि स्मृतिरित्येतन्न लोकानुमतं वचः।**

यदेतत् त्वया[4] उक्तम्—'तत्रापि हि स्मृति.' इति, तत्किं वीप्साभिप्रायम्—तत्र स्मृतिरिति ? किं वा प्रथमज्ञानमात्राभिप्रायम् ? प्रथमपक्षस्तावल्लोकविरुद्ध इति। कथम् ? इत्यत आह—

**न हि विज्ञानसन्तानं कश्चित् स्मरति लौकिकः ॥ १८९ ॥**

---

१. प्रतीयते—मु० पा०। २. ज्ञानान्तरानुभव—२ पु०। ०भवोऽनिष्ट·—मु० पा०।
३. चास्य सवित्तावनवस्था—२ पु०। ४. त्वयेति। भिक्षुणा।

यदि तु कश्चित् कदाचिदेवं ज्ञानप्रवाहं स्मरेत्, ततस्तस्य कथं निर्वाहः ? अत आह सार्धेन—

**घटादावगृहीतेऽर्थे यदि तावदनन्तरम् ।**
**अर्थापत्त्यावबुध्यन्ते विज्ञानानि पुनः पुनः ॥ १९० ॥**
**यावच्छ्रमं ततः पश्चात् तावत्येव स्मरिष्यति ।**

यो नाम घटज्ञानसमये तज्ज्ञानमप्यर्थापत्त्या कल्पयति तस्य सम्भवति स्मरणम्, तत्रापि तु नानवस्था यावच्छ्रमग्रहणात्, यावद्ग्रहणं च स्मरणादिति ।

यस्तु प्राग् ज्ञानप्रबन्धमकल्पयित्वैव पश्चात् स्मरति स वन्ध्यासुतमपि स्मरेत् ? इत्याह—

**तदा त्वकल्पितेऽप्येवं स्मृतिर्वन्ध्यासुतादिवत् ॥ १९१ ॥**

ननु न ब्रूम —ज्ञानप्रबन्धस्य ग्रहण स्मरण वा, किन्त्ववश्यमुत्पत्तावेव ज्ञानं ग्रहीतव्यम्, पश्चात् स्मृतिदर्शनात्, तदेव सति यदि ज्ञानान्तरेण गृह्येत तत-स्तस्यापि ज्ञानस्वाभाव्येनोत्पत्तावेव ग्रहीतव्यस्य ज्ञानान्तरापेक्षणादनवस्थेति ? तत्राह—

**स्मृतिभ्रान्तिश्च याप्यत्र पश्चाज्ज्ञानेषु जायते ।**
**तदैवार्थस्मृतेरेषां तज्ज्ञानादिप्रमाणता ॥ १९२ ॥**

स्यादेव यदि पश्चाज्ज्ञाने स्मृति स्यात्, न त्वेवम्, अर्थ एव हि तदा स्मर्यते, ज्ञानं तु तदैव प्रतीयते[1], स्मरणानुपपत्तेरित्युक्तम् । या त्वियं भवतो ज्ञानेऽपि स्मृति., भ्रान्तिरेषा, अर्थस्मरणेन हि सन्निकर्षात् ज्ञानेऽपि स्मृतिभ्रम. । परमा-र्थतस्तु घटस्मरण[2] तज्ज्ञानादौ प्रमाण पश्चात् त्वस्य ज्ञानविषयत्व यस्य ज्ञानस्य तत्स्मृतिरेवेति, तथापि ग्रहणस्मरणबन्धे यावच्छ्रम तद्बुद्धौ नानवस्थेत्युक्तम् । अतो यदेकविषयज्ञानप्रवाहकलानायामेवायु पर्यवसानाद् विषयान्तरसञ्चारो न स्यादित्युक्तम्—'विषयान्तरसञ्चारो यदि सैवार्थधीः कुतः' ( प्र० वा० २-५२० ) तदयुक्तमित्याह—

**यावच्छ्रमं च तद्बुद्धिस्तत्प्रबन्धे महत्यपि[3] ।**
**श्रमाद् रुच्यान्यसम्पर्काद्[4] विच्छेदो विषयेष्विव ॥ १९३ ॥**

यथैकस्मिन्विषये चक्षुषा घटादावनुभूयमाने श्रमाद्, रुच्या, विषयान्तर-ससर्गाद् वा पूर्वविषये विच्छेदो भवति तद्वज्ज्ञानकल्पनाविच्छेद इति ॥ १९३ ॥

यदि तु तत्रापि स्मृतिरिति येय स्मृतिः सा प्रथमज्ञानमात्राभिप्राया न वीप्साभिप्राया, ततो नास्त्येवानवस्था ? इत्याह—

---

१. प्रमीयते—१ पु० । २. घटज्ञानं—मु० पा० ।
३. च सत्यपि—२ पु० । ४. श्रमाद्वाप्यन्य०—२ पु० ।

विषयमात्रे चानुभूते भवत्येवैवं परामर्शः, स हि तदानीं परस्मै कथयन्नर्थं स्मृत्वा तद्विषयं ज्ञानं तदैव प्रमाय[1] कथ्यमानस्यार्थस्य ज्ञानोपायत्वात् तत्प्रमाणकत्वात् तत्पुरःसरमेव कथयितुं[2] ज्ञानपृष्टनानुभवादिति[2] ॥ १९९ ॥

यत्तूक्तम्—संवेदनान्नील न भिन्नम्, न ह्यनात्मनः सवेदनं सम्भवति, नीलवित्तौ पीतवत्, सम्बन्धाभावाच्च ग्राह्यलक्षणमपि न युज्यते, मम तु प्रत्यासन्नं तदात्मभूतम्, अत एव च सम्बन्धं ग्राह्यं भवतीति; तत्राह—

**प्रत्यासन्नत्वसम्बन्धौ ग्राह्यत्वासम्भवाच्च्युतौ।**

द्वयमप्येतदेवात्मनो यथोक्तेन न्यायेन ग्रहणासम्भवादेव[4] भ्रष्टम्, अतो बलादनात्मनोऽसम्बद्धस्यैव च ग्रहणमुपेतव्यमिति।

यद्वा तादात्म्याभावेऽपि विषयविषयिभावादेव ज्ञानार्थयोः प्रत्यासत्तिसम्बन्धौ सिद्ध्यत इत्याह—

**विषयत्वेन वाप्येतौ स्तः किं देशाविभागतः ॥ २०० ॥**

देशः, विभागः, तादात्म्यम्, विषयत्व च ज्ञानफलभागित्वम्, तदेव च ग्राह्यलक्षणम्, नान्यत् सम्भवतीति **शास्त्रदीपिकायाम्** उपपादितम्। ज्ञान हि स्वकारणवशादर्थविषयफलजनकस्वभावमुत्पद्यत इति न किञ्चिदनुपपन्नमिति ॥ २०० ॥

अत्र पूर्वोक्तमनुभाष्य परिहरति—

**अर्थाकारस्य योऽप्युक्तो मिथ्याज्ञानेष्वसम्भवः।**
**देशकालान्यथामात्रसम्भवः केषुचित् कृतः ॥ २०१ ॥**

केषुचित् तावद् बुद्धिभ्रमेषु देशकालान्यथाभावमात्रेण बाह्यार्थसद्भावो **निरालम्बनवादे** वर्णित इति ॥ २०१ ॥

कथमसनिहितमवर्त्तमान च ज्ञान जनयेत्, इदमपि तत्रैव दत्तोत्तरम् 'एष प्रत्यक्षधर्मश्च' इत्यत्र ( श्लो० वा० निरा० ११४ ) इत्याह—

**प्रत्यक्षादन्यविज्ञानम् अतीतानागतैरपि।**
**जन्यतेऽर्थे भवन्तीषु वासनास्वसतीषु वा ॥ २०२ ॥**

भवन्तीषु वासनासु स्मृत्यात्मक स्वप्नादिज्ञानमनागतानुमानादि च सतीष्वेव लिङ्गादिवशादिति ॥ २०२ ॥

ननु क्वचिदनुभूतं स्वप्ने गृह्यते ? अत आह—

**यः पुनर्नानुभूतोऽर्थो न वाप्यनुभविष्यते।**
**वासनाभावतस्तत्र तवाप्यनुभवः कथम् ? ॥ २०३ ॥**

तुल्योऽयं दोषस्तवापि, वासनाधीनत्वादाकाराणाम्, अननुभूते च वासनासम्भवादिति ॥ २०३ ॥

---

१. प्रमायेति। कल्पयित्वेत्यर्थः। २–२. कथयति ननु ज्ञानपृष्टेन—३ पु०।
३. प्रत्यासन्नत्वसंबद्धौ—२ पु०। ४. ग्रहणसंभवादेव—३ पु०।

विनापि वासनया तदाकारबुद्ध्यङ्गीकरणे पूर्वाभ्युपगमविरोध इत्याह—

**विनापि वासनातश्चेद् बुद्धिरुत्पद्यते ततः ।**
**वासनाया निमित्तत्वमभ्युपेतं विरुध्यते ॥ २०४ ॥**

वासनाभ्युपगमे तस्या. पूर्वानुभवपूर्वकत्वाद् ध्रुवम् असावर्थः क्वापि देशे काले चानुभूत इत्यभ्युपगन्तव्यमित्याह—

**वासना चेद् भवेत् तत्र सा च संवित्तिपूर्विका[1] ।**
**तथा सति च पूर्वत्र गृहीतः क्वाप्यसौ ध्रुवम् ॥ २०५ ॥**

एव च न क्वचिदपि ज्ञानेऽर्थस्यात्यन्तासत्त्व वक्तव्यमित्याह—

**एवं च नैव वक्तव्यमत्यन्ताभवनं[2] क्वचित् ।**

कि पुनस्तस्य सद्भावे प्रमाणम्, न हि दोषतुल्यतयार्थसिद्धि ? अत आह—

**अन्यथानुपपत्त्या हि सिद्धा जन्मान्तरेऽस्तिता ॥ २०६ ॥**

स्वप्नज्ञानं तावत् प्रत्युत्पन्नकारणाभावादनन्तरदिवसानुभूतस्य च स्वप्ने वर्त्तमानवदाभासात् सस्कारमात्रज स्मरणमेव, ततश्च यदप्यस्मिन् जन्मन्यननुभूतं स्वप्नेऽनुभूयते तस्याप्यन्यथानुपपत्त्या जन्मान्तरेऽनुभवकल्पनात् सिद्धमस्तित्वमिति ॥ २०६ ॥

ननु बाह्य चेद्वस्तु स्याद् यथाव्यवस्थितमेव ग्रहीतव्यम्, अन्यथाग्रहणे न किञ्चित् कारणम्, अतोऽन्यथाकल्पनानिबन्धन एवायमाकारो ज्ञानाकारो वा, न बाह्य[3] इत्यत आह—

**दुष्टत्वेन च विज्ञानमन्यथापि व्यवस्थितम् ।**
**पृथिव्यादिषु गृह्णीयादाकारं तन्निबन्धनम् ॥ २०७ ॥**

नैतावता काल्पनिकत्व भवति, दुष्टत्वेन हि ज्ञानम्, पार्थिवादिष्वेव हि वस्तुषु पृथिव्यादिनिबन्धन परिणतिविशेषाधीन बाह्यमेव शुक्त्याकारमन्यथापि स्थितम्, अन्यथा रजताद्यात्मना गृह्णातीति युक्तम्, न पुनः काल्पनिकत्वं ज्ञानाकारत्वं वा यथा **असत्ख्यातिवादिनो** मन्यन्ते, यथा वा **आत्मख्यातिवादिन** इति ॥ २०७ ॥

कस्मात् ? इत्याह—

**तान्यपास्य तु नैवार्थे क्वचिदाकारकल्पना ।**

पृथिव्यादीनि बाह्यान्यपास्य न क्वचिदाकारकल्पनेति ।

तदेव कथम् ? इत्याह—

**न ज्ञानं ह्यनवष्टम्भमात्मानं लब्धुमर्हति ॥ २०८ ॥**

न हि भ्रान्तिज्ञानमपि शुक्तिशकलाद्युपष्टम्भनशून्यमुत्पद्यते, अत्यन्तासतस्तु ज्ञानाकारस्य वा बहिष्ट्वेनाकारकल्पनाया शुक्तिकादि सन्निधिरकिञ्चित्करी स्यात्,

---

१. ०पूर्वका—मु० पा० ।
२. ०मत्यन्तभवनं—मु० पा० ।
३. बाह्याकार—२ पु० ।

अतो बहिरवस्थितमेव शुक्तिकादिकं बहिरवस्थितेनैव व्यक्त्यन्तरगतेन रजताद्याकारेण गृह्यत इति ॥ २०८ ॥

किञ्च, योऽय स्वप्नादिविभ्रमेष्वाकारोऽवभासते, ये चान्ये जाग्रद्बुद्धिषु स्तम्भाद्याकारा. ते सर्वे यदि ज्ञानस्यैवाकारा भवताम्, ततः सर्वेषा ज्ञानाकारतया विद्यमानत्वादस्य स्वप्नावभासस्याकारस्य को विशेषः, येनायमत्यन्तासन् ? इत्याह—

**विज्ञानस्यैव वा कार्य[1] यद्येषोऽन्ये च कल्पिताः[2] ।**

**विशेषः कोऽत्र येनायमत्यन्तासन्नितीष्यते ॥ २०९ ॥**

यदि सर्वत्र विद्यमानमेव बाह्य गृह्यते, कथ तर्हि भ्रान्तित्वम्, कल्पना हि भ्रान्तिः, असदारोपश्च कल्पना, विद्यमानस्यैव भासने बाधकेन वा कि कृतम् ? इत्यत आह—

**तस्माद् भ्रान्तिरपि त्वेषां कल्पयन्त्यर्थमेव[3] नः ।**

**कल्पयत्यन्यथा सन्तं न त्वात्मानं व्यवस्यति ॥ २१० ॥**

यस्मादेवं सर्वत्र बाह्यमस्ति तस्मादपि कल्पयन्ती कल्पनारूपापि सती अर्थमेवान्यथा स्थितमन्यथा कल्पयति, तेन च रूपेण विद्यमानमेव विद्यमानतया कल्पयति न त्वात्मान बहिष्ट्वेन, नात्यन्तासन्त सत्त्वेनेति ॥ २१० ॥

बाधोऽप्येतावतैव[4] सिद्ध्यतीत्याह—

**ततश्च बाधकज्ञानाद् वाचोयुक्तिरियं भवेत् ।**

**अर्थेऽन्यथापि सत्येष धियाकारः[5] प्रतीयते ॥ २११ ॥**

द्विचन्द्रादिबोधेऽप्ययमेव न्याय इत्याह—

**द्विचन्द्रादिमतिष्वेवम्[6],**

यत्तु "नक्षत्र तारका तिष्य" ( श्लो० वा० शून्य० ५८ ) इति लिङ्गत्रयमेव विरुद्धमित्युक्तम्, तत्राह पादत्रयेण—

**तारकादिमतौ तथा ।**

**स्त्रीत्वाद्यन्यत्र दृष्टं स्यात्,**

प्राणिधर्मत्वाल्लिङ्गत्रयम् अन्यत्र विद्यमानमेवात्र भ्रान्त्यैवावगम्यते, कथं पुनरसति बाधके भ्रान्तित्वम् ? सत्यम्, यदि बाधो न स्यात्, पदप्रयोगवेलायामवगतमप्यप्राणिषु लिङ्ग प्रत्यक्षाद्यनुपलब्ध्या बाध्यत एवेति ।

मतान्तरमाह—

**कथञ्चिद्वेह सम्भवेत् ॥ २१२ ॥**

---

१. वाकारो—२ पु० ।
२. यदि वा ह्येष कल्पिता—पाठान्तरम् ।
३. कल्पयत्यर्थमेव—का० ।
४. एतावानेव—इति १ पु० ।
५. ज्ञेयाकारम्—पाठान्तरम् ।
६. द्विचन्द्रादिष्वपि वेनम्—१ पु० ।

केनचित् प्रकारेणेति ॥ २१२ ॥

तदेव दर्शयति वान्तेन—

**शब्दमात्रप्रतीत्या वा,**

शब्द एव प्रमाणमिति ।

न त्वेतद्युक्तम्, पदमात्रस्याप्रमाणत्वात्, अतः प्रमाणान्तरमाह—

**दृष्टैर्वा कैश्चिदिङ्गनात् ।**
**संस्त्यान-प्रसव-स्थानैर्यथा पातञ्जले मते ॥ २१३ ॥**

इङ्गनम्=कल्पनम् । ये स्त्रीत्वादिभि. प्राय: सहचारिणो धर्मा दृष्टाः तैरिहापि लिङ्गत्रय कल्प्यते, किमिदं कल्पनम् ? अनुमानमिति चेत्, न, प्रत्यक्षानुपलब्धिविरोधात् कथ चैकविरुद्ध लिङ्गत्रयमनुमीयते ? सत्यम्, तच्छब्दप्रयोग एवात्र कल्पनमित्युच्यते, स्त्रीत्वादिषु सस्त्यानप्रसवस्थानाख्यगुणविवक्षाया स्त्रीलिङ्गादिवचनः शब्दोऽप्राणिषु नक्षत्रादिषु गौण. प्रयुज्यते, **संस्त्यानं** रजोबाहुल्य स्त्रीधर्म., **प्रसवः** सत्त्वबाहुल्य पुधर्म , **स्थानं** तमोबाहुल्य नपुसकधर्म इति । ततश्च एकस्मिन्नप्यर्थे निकृष्टरज.पदार्थान्तरापेक्षया यदा रजस. समुत्कर्षो विवक्ष्यते तदा स्त्रीलिङ्गशब्द. प्रयुज्यते, तथा पुंल्लिङ्गो नपुसकलिङ्गश्चेति ॥ २१३ ॥

लिङ्गत्रयमपि सम्भवत्येव गौणमित्याह—

**तेन लिङ्गत्रयस्यात्र सद्भावः स्यात् प्रमाणवान्**[1] **।**

ननु विरुद्धमेकत्र लिङ्गत्रयम् ? अत आह—

**अपेक्षाभेदतश्चात्र विरोधोऽपि न विद्यते ॥ २१४ ॥**

उक्तमिद न मुख्य लिङ्गत्रयमस्ति, गौणं चाभिधानम्, विरुध्यते किम् ! भवति हि निकृष्टसत्त्वाद्यपेक्षया कुत्रापि सत्त्वादीनामुत्कर्षविवक्षा, तेनापेक्षितत्वादुत्कर्षस्य तद्भेदादविरोध इति ॥ २१४ ॥

यत्त्वेकस्यां प्रमदाया परिव्राट्कामुकशुना कुणपादिमतिभेदोऽनुपपन्न इत्युक्तम्, तत्राह—

**कुणपादिमतौ चैवं सार्वरूप्ये व्यवस्थिते ।**
**वासनाः सहकारिण्यो व्यवस्थाकारदर्शने ॥ २१५ ॥**

कुणपादिरूपाणि सर्वाण्येव प्रमदाया सन्ति, परिव्राजकादिस्तु स्ववासनानुसारेण किञ्चिद्रूप पश्यति, न सर्वे सर्वाणि । परिव्राजको हि विषयवैराग्यानुबन्धिचेताः कामिनीरूपम्, श्वा पुनरामिषगन्धिमना. तालफलायमानस्तनशालिनी कबलयितुम् इच्छति, सेयमेषामात्मीयवासनासहकारिकारिता विकल्पव्यवस्था ? इति ॥ २१५ ॥

नन्वेवमेवास्तु, किमर्थाभ्युपगमेन ? अत आह—

---

१. प्रमाणवत्—मु० पा० ।

**स्वप्रत्ययानुकारो हि बह्वाकारेषु वस्तुषु ।**
**निर्धारणे भवेद्धेतुर्नापूर्वाकारकल्पने ॥ २१६ ॥**

स्वहेतुप्रत्ययानुकारो हि वासना स्वकारणभूतं ज्ञानमनुकरोति, यथाविधेन ज्ञानेन जन्यते तथाविधमेव ज्ञान जनयतीत्यर्थ.। तदसौ बह्वाकारे वस्तुनि पूर्वाभ्यस्ताकारनिर्धारणे कारण भवति, न त्वपूर्वाकारं विकल्पयति, न ह्यत्यन्तमन्मथाक्रान्तस्वान्तोऽपि घट कामिनी पश्यति, श्वा वा भक्ष्यमिति ॥ २१६ ॥

तथैकस्मिन्नपि ह्रस्वादिबुद्धिरपेक्षाभेदादविरुद्धा, तथा युगपद्ग्राहकाणां घटत्वपार्थिवत्वाद्याकारभेदसंवित्तिर्देशकालव्यपेक्षशब्दविशेषस्मरणापेक्षया न विरुध्यते, इत्याह—

**तथा दीर्घघटत्वादौ भिन्नापेक्षानिबन्धना ।**
**आकारभेदसम्पत्तिरविरुद्धा भविष्यति ॥ २१७ ॥**

यत्त्वेकस्यानेकाकारत्व विरुद्धम्, ततोऽलीक एवाकार इत्युक्तम् ? तत्राह—

**नानेकाकारसंवित्तेर्निराकारत्वकल्पना ।**
**युक्ता,**

किं तर्हि युक्तम् ? अत आह—

**प्रतीतिभेदात् तु बह्वाकारत्वसम्भवः ॥ २१८ ॥**

भवत्वेकस्याप्यविरुद्धानेकाकारसम्भवः, विरुद्धाना तु दीर्घह्रस्वाद्याकाराणामपेक्षाभेदादपि कथमेकत्र असम्भवः ? इत्यत आह—

**संवित्तेश्च विरुद्धानाम्[1] एकस्मिन्नपि सम्भवः[2] ।**

सविन्निष्ठा हि वस्तुव्यवस्थिति., अतस्तद्बलेन दीर्घादीनामप्यपेक्षाभेदादेकत्रापि सम्भवो नानुपपन्न इति ।

यदुक्तम्—'प्रतीतिभेदादेकस्यापि बह्वाकारत्वम्' इति, तद्विवृणोति—

**एकाकारं भवेदेकमिति नेश्वरभाषितम् ॥ २१९ ॥**
**तथैव[3] तदुपेतव्यं यद् यथैवोपलभ्यते ।**

न ह्येकमेकाकारमेवेति किञ्चन प्रमाणमस्ति, तेन यद् यादृशमेकाकारमनेकाकारं वोपलभ्यते[4] तत्तथैवाङ्गीकर्त्तव्यमिति, किन्त्वेकत्वमपि तस्य वस्तुनो न केनचिद् व्यवस्थापितम्, यतोऽनेकाकारता न स्यात्, तदापि ह्यनेकधर्ममवगम्यमान तेनात्मनानेकताऽपि भजते इत्याह—

**न चाप्यैकान्तिकं तस्य स्यादेकत्वं च वस्तुनः ॥ २२० ॥**

---

१. अविरुद्धानाम्—मु० पा० । २. एकस्मिन्नाप्यसम्भव—मु० पा० ।
३. तथापि—का० । ४. नोपलभ्यते—मु० पा० ।

सति चानेकाकारत्वे युक्ता तत्तदाकारप्रतीतिव्यवस्था, उद्भवाभिभवापेक्षा-भेदादित्युपसहरति द्वयेन—

**तस्माद् देशादिसद्भावनिमित्तैः प्रत्ययैः पृथक्।**
**वस्त्वाकाराः प्रतीयेरन्नुद्भवाभिभवात्मकाः ॥ २२१ ॥**
**युगपद्ग्राहकाणां च यो यदाकारवाचिनम्।**
**शब्दं स्मरति तेनासावाकारः सम्प्रतीयते ॥ २२२ ॥**

देशकालापेक्षया वस्त्वाकारणमुद्भवाभिभवौ, विपिने हि सायुधं पुरुषं पश्यतो हिस्ररूपम् उद्भूत प्रतिभासते, ग्रामनगरेषु पाल्करूपम्, तथा दीपप्रभायां नक्तन्दिवं रूपस्पर्शयोरुद्भवाद् ग्रहणम्, युगपद् ग्राहकाणा त्वेकस्मिन्नपि देशे काले च शब्द-विशेषस्मरणवशादाकारविशेषोपलब्धिरिति ॥ २२१-२२ ॥

तत्रैव दृष्टान्तमाह—

**नित्यं सत्सु तथा लोके रूपादिषु घटे पृथक्।**
**चक्षुराद्यनुरोधेन संवित्तिर्व्यवतिष्ठते ॥ २२३ ॥**

दार्ष्टान्तिके योजयति—

**एवमेव घटत्वादौ सर्वान् प्रति भवत्यपि।**
**वाचकस्मृतिभेदेन संवित्तिर्व्यवतिष्ठते ॥ २२४ ॥**

**भवत्यपी.त**। विद्यमानेऽपीत्यर्थ. ॥ २२४ ॥

नन्वर्थान्तरभूत ग्राह्य केन सम्बन्धेन ज्ञानेन प्रकाश्यते ? विषयत्वादिति चेन्न, तस्यैव निर्निबन्धनत्वात्, भिन्नत्वाविशेषे हि केन हेतुना कश्चिदेवार्थः कस्यचिज्ज्ञा नस्य विषय , न सर्वस्य सर्वः ? अन आह—

**तस्माद् बहिः स्थितोऽप्यात्मा नराणां चक्षुरादिभिः।**
**प्राप्य वाऽप्राप्य वा बुद्धेर्विषयत्वेन कल्प्यते ॥ २२५ ॥**

यस्मादेवम् न कथञ्चिज्ज्ञानस्यात्मविषयता सम्भवति तस्माद् बहिष्ठ एवार्थोऽवश्य प्रकाशयितव्य.। स च ज्ञानकारणचक्षुरादिवशात् कश्चिदेव कस्यचिद्विषयो न सर्वः सर्वस्य, तानि हि क्वचिदेवार्थं प्राप्य अप्राप्य वा बाह्यसामर्थ्येन बुद्धेर्विषयत्वेनोपनयन्तीति ॥ २२५ ॥

यत्तु ज्ञानाकारत्वे नीलादेर्ज्ञानग्रहणस्य कारणत्वमुक्तम्, 'नीलोऽर्थोऽयम्, यतो मेऽत्र तद्रूपा जायते मति.'—इति वक्तारो व्यवहरन्तीति, तदनुभाष्य परिहरति—

**वदन्ति लौकिका यच्च यादृग् ज्ञानं तथा बहिः।**
**ते पुनर्ज्ञानसंवित्त्या[1] तथार्थं प्रति जानते ॥ २२६ ॥**

न ते ज्ञानं साकारं विदित्वा ततः पश्चात्तथाभूतमर्थं प्रतिजानत इति ॥२२६॥

---

१. तेऽपि न ज्ञान०—२ पु०।

कथं तर्हि ? इत्याह—

**ग्राहकत्वेन विज्ञानं यथार्थं नः समर्पयेत् ।**
**तादृगर्थः स इत्येवं तेषां वा तदुपायतः ॥ २२७ ॥**

ज्ञानपुरस्कारस्तावन्न तत्पूर्वकार्थग्रहणात्, किन्तु तदुपायत्वादर्थस्य तत्प्रमाणकत्वादिति यावत् । नीलाकारता च तत्समर्पकता[1] नीलाकारज्ञानमिति नीलसमर्पकमित्यर्थः[2] ॥ २२७ ॥

तदेव प्रत्यक्षस्य बहिर्वृत्तिसामर्थ्यात् तद्विरुद्धं निरालम्बनानुमान नार्थापह्नवायालमिति आनुमानिकं बाह्यार्थासत्त्वम् अप्राप्तैर्बाह्यार्थवादिभिर्ज्ञानानुभवमुत्क्रम्य बाह्ये प्रतीयते[3], बाह्यमेवालम्बनं निश्चीयते, तदाह—

**लैङ्गिकासत्त्वमप्राप्तैरेतैर्बाह्यार्थवादिभिः[4] ।**
**ज्ञानानुभवमुत्क्रम्य बाह्य एव प्रतीयते ॥ २२८ ॥**

ननु यद्यपि प्रत्यक्षादिभि. प्रमाणैर्बाह्यमवस्थाप्यते तथापि परीक्षकास्त युक्तितोऽसम्भावयन्तस्तमपह्नुवते, अतो दोष· ? अत आह—

**यथा लोके च तद्बुद्धिर्वाच्यमेवं परीक्षकैः ।**

लौकिकप्रमाणानुसरणमेव परीक्षकाणा तत्त्वम्, तद्विपर्यये चापरीक्षका एव स्युरिति ।

लोके च नीलादिवित्तौ यादृगन्तराकार', आन्तरस्य ग्राहकस्य यादृगाकारोऽहमिति, न तादृशो नीलादिरवगम्यते, किन्त्वसाविद नीलमिति बाह्यो ग्राहकाद्भिन्न. प्रतीयत इत्याह—

**न यादृगन्तराकारस्तादृग् बाह्योऽवकल्पते ॥ २२९ ॥**

"उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तर प्रदीपवदिति यद्युच्येत" ( शा० भा० पृ ३९ ) इति चोद्यभाष्यमाक्षिपति पादत्रयेण—

**उत्पद्यमाना गृह्येत धीरर्थग्रहणे यदि ।**
**पूर्वपक्षस्य किं सिद्धम्,**

न ह्यर्थग्रहणवेलाया बुद्धेर्ग्रहणमर्थापह्नवस्योपयोगीति ।

न केवलं पूर्वपक्षानौपयिकमिदम्, प्रत्युत विपरीतमिदमर्थान्तर ज्ञापयतीति भाष्यवचनमर्थापह्नवस्येत्याह—

**कथं चार्थान्तरं वदेत् ॥ २३० ॥**

समाधत्ते—

**बाह्यार्थवादिनं ब्रूते भवान् किं नैवमिच्छति ।**
**प्रतिबन्धो न तस्यास्ति गृह्णात्यर्थान्तरं यदा ॥ २३१ ॥**

---

१. तत्समर्थकता—मु० पा० ।
२. नीलसमर्थक०—मु० पा० ।
३. प्रयत्यते—मु० पा० ।
४. ०रतो बाह्यार्थ० २ पु० ।

नायं स्वपक्षोपन्यास, किन्तु **शून्यवादी** बाह्यार्थवादिनमेव चोदयति—किं भवानर्थग्रहणसमये ज्ञानस्य प्रतिबन्धाभाव नेच्छति येन तदा तस्याग्रहण ब्रवीति। न ह्यप्रतिबद्धस्याग्रहण सम्भवति, ग्रहणे च सति तस्यैवायमाकारो भवतीत्यर्थाभावसिद्धिरिष्टा सेत्स्यतीति ॥ २३१ ॥

परिहारभाष्यार्थमाह पादत्रयेण—

**उत्तरं ग्राहकाभावाल्लिङ्गाभावाच्च नास्ति नः ।**

**तदा ग्रहणमित्येतत्,**

सत्य नास्ति प्रतिबन्ध, तथापि ग्राहकाभावान्न तदा गृह्यते, लिङ्गाभावाच्च ग्राहकाभाव, ज्ञातत्वं लिङ्ग न[1] तदा विद्यते च; तदिदमुक्तम्—"न ह्यज्ञातेऽर्थे कश्चिद् बुद्धिमुपलभते, ज्ञाते त्वनुमानादवगच्छति" ( शा० भा० पृ० ३९ ) इति ।

चोद्यभाष्यस्यार्थान्तरमाह सपादेनार्द्धेन—

**अन्यतर्केषु[2] चोच्यते ॥ २३२ ॥**

**तेषु तर्केषु विज्ञानमर्थकालेऽवगम्यते ।**

**वैशेषिकादीना** बाह्यार्थवादिनामेवेद चोद्यम्, ते हि 'अर्थग्रहणवेलायामेव ज्ञानमपि गृह्यते' इति मन्यन्त इति[3] ।

किमिति तर्हि तन्निराकरणम् ? अत आह—

**तथा सत्यर्थनाशः स्यादित्येतदुपदिश्यते ॥ २३३ ॥**

ज्ञानस्य ह्युत्पत्तिसमये ग्रहणाभ्युपगमे निराकारस्य ग्रहणाभावाज्ज्ञानमेवाकारवत्स्यादित्यर्थनाश स्यात्, अतोऽर्थाभ्युपगमविरोधी ज्ञानग्रहणाभ्युपगमस्तेषामित्येतदनेनोच्यते इति ॥ २३३ ॥

"ननूत्पन्नायामेव बुद्धौ अर्थो ज्ञात इत्युच्यते नानुत्पन्नायाम्, अतः पूर्वं बुद्धिरुत्पद्यते पश्चाज्ज्ञातोऽर्थं" ( शा० भा० पृ० ३९ ) इति चोद्यभाष्यमाक्षिपति—

**नन्वित्येतदसम्बद्धं परेष्टस्यैव चोदनात् ।**

सिद्धान्तवादिनो हीदमिष्टम्—बुद्ध्युत्पत्तावर्थोपलब्धिरिति, **शून्यवादिनस्त्व**निष्टमेवार्थग्रहणम्, तदस्यैव चोदयत स्वपक्षहानिः परपक्षाभ्युपगमश्चापद्येतैवेति ।

यदपि 'पूर्वं बुद्धिरुत्पद्यते पश्चाज् ज्ञातोऽर्थ.' इति पौर्वापर्याभिधानम्, तदपि पूर्वोक्तेन विरुद्धम्, "उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरम्" इति हि यौगपद्यमुक्तम्, तदाह—

---

१. नास्ति मु० पुस्तके । २. सर्वेषु—पाठा० ।

३. वस्तुतस्तु वैशेषिका नैव मन्यन्ते, अतष्टीकाकर्तुरयं लेखः प्रामादिक एवेति श्रीमन्तो गुरुचरणाः ।

**पौर्वापर्यविभागोऽपि प्रागुक्तेन विरुध्यते ॥ २३४ ॥**

विरोधपरिहारं शङ्कते—

**क्षणिकत्वेन युक्तं स्याज् ज्ञातत्वमथ चेत् तदा ।**
**भूतकालाश्रयाद् ब्रूयाद्,**

यौगपद्यमेवात्राप्युच्यते, 'पूर्वं बुद्धिरुत्पद्यते' इति हि पूर्वस्मिन् काले बुद्धेरुत्पद्यमानत्वमुक्तम्, 'पश्चाज्ज्ञातोऽर्थः' इति पश्चात्कालेऽर्थस्य ज्ञातत्वं भूतकालप्रत्ययनिर्देशेनोक्तम् । तदनेन प्रकारेण बुद्ध्युत्पत्तिसमय एवार्थस्य ज्ञानविषयत्वमुक्तम् । यदेव हि पूर्वस्मिन् काले ज्ञायमान भवति तदेवोत्तरस्मिन् काले ज्ञातं भवति, अवश्य च यौगपद्यमेव वक्तव्यम् । न हि बुद्ध्युत्पत्तिसमये बुद्धिमुत्पादितवतोऽर्थस्य पश्चादवस्थानं सम्भवति, क्षणिकत्वात् । न चानवस्थितस्य ग्रहणं सम्भवति प्रत्यक्षेण, तस्मात् पश्चाद्ग्रहणासम्भवादिहापि यौगपद्याभिधानादविरोध इति ।

दूषयति—

**वृथोक्तस्य पुनर्वचः ॥ २३५ ॥**

उक्तस्य हि यौगपद्यस्य पुनर्वचनमनर्थकमिति ॥ २३५ ॥

समाधत्ते—

**अत्रापि न स्वसिद्धान्तमूचे व्याजात्[1] परस्य तु ।**
**भ्रान्तत्वादन्यथा पक्षं गृहीत्वेति स्म पृच्छति ॥ २३६ ॥**

पूर्वचोद्यवदत्रापि न स्वपक्षं ब्रूते, यतः परपक्षाङ्गीकरण स्यात्, किन्तु ज्ञाते त्वनुमानादवगच्छतीति सिद्धान्तिनो वाक्याद् भ्रान्त सिद्धान्तिपक्षमन्यथा गृहीत्वा 'ननूत्पन्नायाम्' इति चोदितवानिति ॥ २३६ ॥

कथमस्माद् वाक्याद् भ्रान्तिः ? कीदृशी च ? अत आह त्रयेण—

**सहोत्पत्त्युपलब्धा[2] हि ज्ञानस्यैकान्ततः स्थितिः[3] ।**
**प्रागूर्ध्वं वार्थसंवित्तेर्युगपद् वेति[4] चिन्त्यते ॥ २३७ ॥**
**एवं[5] चार्थस्य संवित्तेः[6] पश्चाज् ज्ञानावबोधनम् ।**
**ब्रवीतु नूनमेतस्य पश्चादुत्पद्यतेऽपि तत् ॥ २३८ ॥**
**न चैतच्छक्यते तस्मादुत्पत्तेरपकर्षणम् ।**
**करोमि तावत् तत्काला संवित्तिरपि सेत्स्यति ॥ २३९ ॥**

एवं **शून्यवादी** भ्राम्यति, ज्ञानस्योत्पत्तिरुपलब्धिश्च द्वयं युगपदिति तावदविवादम्, तत्त्वर्थोपलब्धे. प्राक् पश्चाद्युगपद्वा—इत्येतावच्चिन्त्यम् । एवं च **मीमांसको**ऽर्थसंवित्ते. पश्चाज् ज्ञानसंवित्तिं ब्रवीति, ज्ञाते त्वनुमानादवगच्छतीति । तदस्य

---

१. वाक्यात्—२ पु० । २. उपलब्धी—२ पु० ।
३. स्थिती—२ पु० । ४. अर्थसंवित्ते०—मु० पा० ।
५. एष—मु० पा० । ६. सम्पत्तेः—मु० पा० ।

ज्ञानोत्पत्तिरपि पश्चादेवाभिमता, न च तद्युक्तम्; अतः 'ज्ञानोत्पत्तिं तावदर्थसंवित्तेः प्रागवकर्षामि' इति मत्वा 'ननूत्पन्नायाम्' इत्याह, तदपकर्षे च तत्संवित्तिरपि प्रागेव सिद्ध्यतीत्यभिप्राय इति ॥ २३७-२३९ ॥

भवतु वा प्राक् संवित्तिः, तथापि किम् ? अत आह दर्शनमन्तेन—

**प्राक् च तद्ग्रहणे[1] सिद्धे बाह्याभ्यन्तरयोर्ध्रुवम् ।**

**विवेकादर्शनम्,**

न हि निराकारोपलब्धिरस्ति, न चार्थज्ञानयोर्विवेकेनाकारद्वयं दृश्यते, ततो ज्ञानस्यैवायमाकार इति अर्थाभावसिद्धिरिति ।

तस्मात् स्वपक्षोपयोग्येवेद चोद्यमित्याह—

**तस्मादिदम्,**

चोदितमिति वक्ष्यमाणेन सम्बन्ध इति । यदपि 'पूर्वमुत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरम्' इति यौगपद्यचोद्यम्, तदपि ज्ञानाकारसिद्ध्यर्थमेवेत्याह—

**पूर्वं च चोदितम् ॥ २४० ॥**

एतदेव विवृणोति—

**युगपद् गृह्यमाणेऽपि नाकारोऽर्थस्य लक्ष्यते[2] ।**

यस्मादेव ज्ञानस्य प्राक् संवित्तौ तस्यैवाकारो भवति तस्मादेव सिद्धान्तवादी "सत्यं पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायते" इति अर्थस्यैव पूर्वं सवित्तिः, न बुद्धेरिति साधयतीत्याह—

**तस्मादर्थस्य संवित्तिः पूर्वं यत्नेन साध्यते ॥ २४१ ॥**

कथ पूर्वं न ज्ञायते ? इत्यत आह **भाष्यकारः**—"भवति हि कदाचिदेतद् यज्ज्ञातोऽर्थः सन्नज्ञात इत्युच्यते" ( शा० भा० पृ० ४१ ) इति । तदिदम् 'न स्मरामि मया कोऽपि' इत्यत्र व्याख्यातमित्याह—

**यस्त्वेतस्योत्तरो ग्रन्थः प्रागेवासौ निरूपितः ।**

सिद्धान्तभाष्यमाक्षिपति—

**न त्वेतत्[3] साधनं साक्षात् पूर्वं बुद्धेरबोधने ॥ २४२ ॥**

कथं न साधनम् ? अत आह—

**न [5]परामृश्यतेऽर्थात्मा ज्ञातोऽप्यज्ञातवद् यतः[4] ।**

**तस्मान्न ग्रहणं[6] पूर्वं बुद्धेः किं केन सङ्गतम् ॥ २४३ ॥**

सम्भवति हि सहानुभूतयोरप्येकस्य स्मरणम्, इतरस्य च विस्मरणम्;

---

१. प्राक्तग्रहणे—२ पु० ।
२. लभ्यते—२ पु० ।
३. न्वेतत्—मु० पु० ।
४. स्मर्यत इत्यर्थः ।
५. यदि—२ पु० ।
६. तस्मादग्रहणं—२ पु० ।

अतोऽर्थविस्मरणेऽपि ज्ञानस्य स्मरणाद् नार्थसंवित्तिसमये ज्ञानसवित्तिरित्य-सङ्गतमिति ॥ २४३ ॥

समाधत्ते—

**अतः पूर्वोपलब्ध्या यो बुद्ध्याकारोऽत्र वाञ्छितः ।**
**तन्निराकरणेनैव फलत्वाद् ग्रन्थवर्णना ॥ २४४ ॥**

यत एव साक्षान्न साधनमत एव फलद्वारेण वर्णनीयम्, पूर्वोपलब्धिसाधनस्य हि ज्ञानाकारत्वसिद्धिः फलम्, तदनेन निराक्रियते, नीलाकारं हि ज्ञानं न तन्निर्मुक्तं स्मर्येत[1], अतो न ज्ञानं नीलाकारम्, न च प्राक् ज्ञातुं शक्यम्; अतो न पूर्वं ज्ञायत इति ॥ २४४ ॥

"काममेकरूपत्वे बुद्धेरेवाभाव , न त्वर्थस्य प्रत्यक्षस्य" (शा० भा० पृ. ४२) इति भाष्यमनुपपन्नम्, एवमद्वैतासिद्धे., बुद्ध्यभावे चार्थप्रत्यक्षत्वायोगादत आह—

**कामं बुद्धेरिति त्वेतदर्थाधीनत्वमुच्यते ।**

यद्यवश्यम्, अन्यतरदपह्नोतव्यम्, अतोऽर्थप्रकाशाधीन तेनानुमेयं ज्ञानमेवा-पह्नोतव्यम्, न तु प्रत्यक्षसिद्धोऽर्थ इति । एवमतिशयोक्तिमात्रमिद न परमार्थः । तदाह **भाष्यकारः**—"न चैकरूप्यम्" ( शा० भा० पृ. ४२ ) इति ।

"न चार्थव्यपदेशमन्तरेण" इत्यादे. "तस्मादप्रत्यक्षा बुद्धि.[2]" इत्यन्तस्य भाष्यस्यार्थमाह सार्द्धद्वयेन—

**न चार्थरूपाद् भेदेन धियामस्ति निरूपणम् ॥ २४५ ॥**
**पररूपनिरूप्यं च न मेयं मृगतोयवत् ।**
**असद्ग्राह्यानुसारेण[3] ज्ञानसंवेद्यता तव ॥ २४६ ॥**
**स्वच्छत्वात्तु स्वरूपस्य कल्पिता ग्राह्यता धियाम् ।**
**वासनोपप्लवात् तेन न मेयं पारमार्थिकम् ॥ २४७ ॥**

स्वच्छं हि चिन्मात्र नैसर्गिक ज्ञानरूपम्, तत्तु वासनोपप्लवादविद्यमान-नीलाद्याकारं प्रकाशत इति वो दर्शनम्, न चैवमवगम्यमानं मृगतोयवत् प्रत्यक्षं भवति । पदरूपाव्यपदेश्यमिति च भाष्यार्थ इति ॥ २४५-२४७ ॥

"अपि च नियतनिमित्तः[4]" इति भाष्यमाक्षिपति—

---

१. स्मर्यते—मु० पा० ।

२. न चार्थव्यपदेशमन्तरेण बुद्धेः रूपोपलम्भनम् । तस्मान्न व्यपदेश्या बुद्धिः । अव्यपदेश्यं च न प्रत्यक्षम्; तस्मादप्रत्यक्षा बुद्धिः । ( शा० भा० पृ० ४१ )

३. अनुकारेण—पाठान्तरम् ।

४. अपि च, नियतनिमित्तस्तन्तुष्वेवोपादीयमानेषु पटप्रत्यय'; इतरथा तन्त्वादानेऽपि कदाचिद् घटबुद्धिरविकलेन्द्रियस्य स्यात्, न चैवमस्ति; अतो निरालम्बनः प्रत्यय'; अतो न व्यभिचरति प्रत्यक्षम् । ( शा० भा० पृ० ४२ )

**निमित्तनियतत्वं तु समानमुभयोरपि ।**
**निजशक्त्यनुसारित्वाज् ज्ञानबाह्यार्थवादिनोः ॥ २४८ ॥**

अर्थवादिनोऽपि हि स्वशक्तिवशादेव तन्तवः पटमारभन्ते, न घटम्, मृत्पिण्डो वा घटम्, ज्ञानवादिनोऽपि तन्तुज्ञानानि पटज्ञानमिति सिद्ध्यत्येव व्यवस्थेति ।

तदेवं सति यदि ज्ञानवादी पर्यनुयुज्यते, इतरोऽपि शक्यः पर्यनुयोक्तुमित्याह—

**तन्त्वर्थैरपि कस्माद् वः क्रियते केवलः पटः ।**
**नारभ्यते घटः किं तैर्मृत्पिण्डार्थेन वा पटः ॥ २४९ ॥**

एतदेव विवृणोति—

**तन्तुमृत्पिण्डविज्ञाने ह्यनुयोज्ये मते यदि ।**
**अर्थपर्यनुयोगोऽपि तद्वदेव प्रसज्यते ॥ २५० ॥**

सामर्थ्यतस्तु व्यवस्थाश्रयणमितरस्यापि तुल्यमित्याह—

**अर्थारम्भव्यवस्था चेत् सामर्थ्यनियमाश्रया ।**
**ज्ञानारम्भव्यवस्थायां सामर्थ्यं केन वार्यते ॥ २५१ ॥**

उपसंहरति—

**तस्माद् यत्रोभयोर्दोषः परिहारोऽपि वा समः ।**
**नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ २५२ ॥**

यथाहुः—

"यथाविधं घटं दृष्ट्वा द्वैतवादी विचेष्टते ।
ज्ञात्वा तथाविधं ज्ञानमद्वैती किं न चेष्टते" ॥ इति ॥ २५२ ॥

समाधत्ते—

**देशकालनिमित्तानि व्यञ्जकान्यर्थवादिनः ।**
**शक्तीनां कारणस्थानां स्वकार्यनियमं प्रति ॥ २५३ ॥**

शक्तिमदपि हि तन्त्वादिकारणं न सर्वदा कार्यमारभते, किन्तु शक्त्यभिव्यञ्जकं सहकारिणमपेक्षते, तच्च देशकालादितन्तुवायादिनिमित्तमस्मत्पक्षे विद्यते, यद्वशेन कदाचित् कार्यारम्भनियम इति ॥ २५३ ॥

शक्तिरपि मत्पक्षेऽस्त्येव भावाना पारमार्थिकीत्याह—

**शक्तयोऽपि च भावानां कार्यार्थापत्तिकल्पिताः ।**
**प्रसिद्धाः पारमार्थिक्यः प्रतिकार्यं व्यवस्थिताः ॥ २५४ ॥**

भवतस्तु शक्तिरेव तावन्नास्तीत्याह—

**भवतस्तु न विज्ञानाद् भिन्नाभिन्ना निरूप्यते ।**
**शक्तिः संवृतिसद्भावमुत्सृज्य परमार्थतः ॥ २५५ ॥**

शक्तिरपि संवृतिसत्यैव भवन्मते, संवृतिश्चासत्यपर्याया न कार्यारम्भोपयोगिनीति ॥ २५५ ॥

वासनैव च भवतां शक्तिरभिमता, न वस्त्वन्तरमित्याह—

**वासनैव च युष्माभिः शक्तिशब्देन गीयते।**

ततः किम्? इत्यत आह—

**निमित्तनियतत्वं च वासनाया यदुच्यते॥ २५६॥**
**तस्याश्चासम्भवेनैतदपारार्थ्याच्च दुर्लभम्।**

वासनायाः कारणत्वाद् यन्निमित्ताज्ज्ञानान्नियतत्वमुच्यते—किञ्चिदेव कस्यचिन्निमित्त न सर्वं सर्वस्येति, तद् दुर्लभम्; तस्या एवासम्भवस्य **निरालम्बनवादे** दर्शितत्वादपारार्थ्याच्च। अस्माक ह्यात्मार्था वासना, तदसावात्मप्रणिधानाद्यपेक्षया विलम्बत इति युक्तम्, भवतस्तु यस्मिन्नसावाहिता तस्य क्षणिकत्वादनन्यापेक्षत्वाच्च न किञ्चिद् विलम्बनिमित्तमस्तीति सर्वदैव तन्तुज्ञानात् पटज्ञान स्यादिति।

न च देशकालादिकमपि भवतामस्ति, यतः कदाचिदारम्भ. कदाचिदनारम्भ इति नियम. सिध्येदित्याह—

**देशकालनिमित्तादि न च तेऽस्ति नियामकम्॥ २५७॥**

किञ्च, असत्यपि हि मृत्सलिलच्छन्नबीजज्ञाने अङ्कुरज्ञानं दृश्यते, अतो न कारणं ज्ञानं कार्यस्य ज्ञानस्य जनकमिति शक्य वक्तुम्। तस्माद् युक्त **भाष्यकार**मतमित्याह—

**मत्वैतदपि चेत्याह भाष्यकारः परं प्रति।**

पर्यनुयोगतुल्यत्वमप्ययुक्तमित्याह—

**तस्मादपरिहारोऽयं तन्तुभ्यस्ते यथा पटः॥ २५८॥**
**तथा मे तन्तुबुद्धिभ्यः पटबुद्धिरितीदृशः।**

तदेव प्रत्यक्षस्य बहिः प्रवृत्तिसामर्थ्यान्न तत्परीक्षया बाह्याभावः। न चानुमानेन, तस्य तद्विरुद्धत्वात्, तस्मादाद्येन प्रमाणद्वयेन न बाह्याभावसिद्धिरित्याह—

**एवमाद्यप्रमाणाभ्यां न तावद् बाह्यशून्यता॥ २५९॥**

आगमस्य "नेह नानास्ति किञ्चन" ( बृ० उ० ४. ४. १९ ) इत्यादेर्विद्यमानस्यात्मप्रशंसापरत्वाद् नार्थाभावे व्यापार इत्याह—

**आगमस्य तु नैवेह व्यापारः,**

प्रत्युत विविधोपकरणयुक्तविविधकर्मविधायिनः शास्त्रस्य, अतोऽन्यथा शून्यत्वविपर्यये बाह्यसद्भाव एव व्यापार इत्याह—

**अतोऽन्यथापि वा।**

उपमानं तु सदृशदर्शनोत्पन्नम्, न च ज्ञानातिरिक्तं किञ्चित् शून्यमस्ति, येन ज्ञानं शून्यतयोपमीयेतेत्याह—

**नोपमा सदृशाभावात्,**

अर्थापत्तिस्तु विचित्रव्यवहारान्यथानुपपत्त्या विचित्रान् ग्राह्यानुपदर्शयन्ती विपरीतैव शून्यताया इत्याह—

**नार्थापत्तिर्विपर्ययात्** ॥ २६० ॥

तदेवमभावगम्यत्वमेव शून्यतायाः पारिशेष्यादापन्नम्, इत्याह—

**तस्मादभावगम्यत्वं शून्यतायाः स्थितं हि नः ।**

एवं तावद्यदुक्तम् 'प्रमाणस्थस्तु मूलत्वात्'[1] ( श्लो० वा० निरा० १८ ) इति, तद्विचारितम् । सम्प्रति यत् सांन्यासिकं कृतम्—'तत्रास्तां यः प्रमेयतः' ( श्लो० वा० निरा० १७ ) इति; तदुपन्यस्यति—

**एवं प्रमाणतोऽसिद्धा यैः प्रमेयाश्रयोच्यते** ॥ २६१ ॥

**बाह्यस्याणुसमूहादेर्ग्राह्यस्यासम्भवेक्षणात्** ॥ २६२ ॥

न तावदणूनां ग्राह्यत्वम्, तेषामतीन्द्रियत्वात्, नावयविजात्यादीनाम्, तेषां व्यतिरेकाव्यतिरेकविकल्पाक्षमाणा गगनकुसुमायमानत्वात्, अतो बाह्य नास्तीति यैरुक्तम्, तेषामिदमुत्तरमित्याह—

**तैरान्तरासम्भवतो यथोक्ताद् ज्ञेयत्वमन्यस्य[2] बलादुपेयम् ।**

**ग्राह्या न चेष्टाः परमाणवोऽतः सत्यः समूहः प्रतिपादनीयः[3]** ॥ २६३ ॥

यदाभ्यन्तरस्य ज्ञानाकारस्य न कथञ्चिद् ग्राह्यत्वं सम्भवतीति स्थितम्, तदा बाह्यस्यैव ग्राह्यत्वं बलादभ्युपगन्तव्यम्, ततश्चाणूनां त्वदुक्तेनैव मार्गेण ग्राह्यत्वासम्भवात् समूहाख्यस्यैव त्ववयविनस्तत्समवेताना च जात्यादीना ग्राह्यत्वमङ्गीक्रियताम्; तेषा च **आकृतिवादे** सद्भाव प्रतिपादयिष्यते ॥ २६३ ॥

सिद्धे बाह्यार्थे यन्मध्यमिति **माध्यमिकै**रुक्तम्, अर्थाभावादेव ज्ञानमपि नास्तीति, तदपि मूलनिरासादेव निरस्तमित्याह—

**इति बहिर्विषयप्रतिपादनाद् तदभावकृता मतिसंवृतिः ।**

**मतिसंवृति**रिति । ज्ञानाभाव इत्यर्थ. । सति त्वेव ज्ञानमर्थं चोभयमपि तत्त्वतो जानतां **मीमांसकानाम्** इदमुभयं धर्माख्यरथाङ्गभूते धूःशब्दार्थे विचारे युग्यद्वयमिव धूर्वहने समर्थं चोभयमपि तत्त्वतो ज्ञातमर्थशून्यासूत्तरबुद्धिषु नेति सर्वमीमांसाशास्त्रं दुस्स्थं स्यादित्युक्तम् ।

इदानीमर्थालम्बनत्वे साधिते विचारात्मकं शास्त्रं समर्थितमित्याह—

**उभयतत्त्वविदां परमार्थतः, क्षममिदं धुरि धर्मविचारणे** ॥ २६४ ॥

इति शून्यवाद·



---

[1] तन्मूलत्वात्—२ पु० ।

[2] ज्ञेयं स्वमन्यस्य—मु० पा० ।

[3] परिपालनीयः—१ पु० ।

## अथानुमानपरिच्छेदः

"अनुमानं ज्ञातसम्बन्धस्य" ( शा० भा० पृ. ४३ ) इति भाष्यम्, तस्याभावपर्यन्तस्य लक्षणग्रन्थस्य तात्पर्यमाह—

**प्रत्यक्षाव्यभिचारित्वादेवंलक्षणकं च यत् ।**
**प्रसिद्धमनुमानादि न परीक्ष्यं तदप्यतः ॥ १ ॥**

**निमित्तसूत्रे** हि प्रमाणाना प्रसिद्धत्वेनापरीक्ष्यत्वे वर्णिते व्यभिचारात् परीक्षितव्यम् । शुक्तिरजतवेदने प्रत्यक्षस्य व्यभिचारात् तत्पूर्वकत्वाच्चेतरेषामपि व्यभिचार इति चोदिते प्रत्यक्षस्यैवंपर्यन्तेन ग्रन्थेनाव्यभिचारित्वेनापरीक्ष्यत्वमुक्तम्, ततश्च तत्पूर्वकत्वेन यदनुमानादीना व्यभिचारित्वमुक्तं तत्परिहृतम्, इदानीमात्मीयलक्षणेनाव्यभिचारादनुमानादिक न परीक्ष्यमित्युच्यते । एवंलक्षणं यत्प्रसिद्धम् अनुमानादि तदप्यत एवलक्षणकत्वादेव प्रत्यक्षाव्यभिचारित्वाच्चापरीक्ष्यमित्यक्षरार्थ इति ॥ १ ॥

सम्प्रति प्रत्येक लक्षणानि व्याचक्षाण. प्रथमनुमानलक्षणमनुसन्धत्ते—

**प्रमाता ज्ञातसम्बन्धः,**

**ज्ञातसम्बन्ध** इति । तृतीयार्थे बहुव्रीहिः । बुद्धिसम्बन्धजनितव्यतिरेकस्य प्रमातु. पुरुषस्य निर्देशः । येन प्रमात्रा सम्बन्धो ज्ञात. तस्य बुद्धिरिति षष्ठ्यर्थे वायं वहुव्रीहि. ।

एकदेशद्वयसम्बन्धजनितव्यतिरेकस्यैकदेशिनो धर्मिणो निर्देश इत्याह—

**एकदेश्यथ वोच्यते ।**

यस्य ज्ञातधूमसम्बन्धस्य सपक्षस्य महानसाद्येकदेशिनोऽग्निसम्बन्धो नियमाख्यो ज्ञात. तस्य यो धूमाख्य एकदेश. तस्य पर्वतादौ दर्शनात् तत्रैव ह्येकदेशान्तरेऽग्निबुद्धिरिति ।

कर्मधारयसमासो वायम्, एकदेशशब्दाभ्यां च सम्बन्धिनोरभिधानम्, इत्याह—

**कर्मधारयपक्षो वा सम्बन्धिन्येकदेशता ॥ २ ॥**

सम्बन्धो हि सम्बन्धिनोर्व्यासज्य वर्त्तमान एकदेशी, एकदेशौ च सम्बन्धिनौ, ज्ञातश्चासौ सम्बन्धश्च तस्य य एकदेश· सम्बन्धी धूमः तस्य दर्शनात् सम्बन्ध्यन्तरे बुद्धिरिति ॥ २ ॥

बहुव्रीहावेवार्थान्तरमाह—

**द्वयं वा ज्ञातसम्बन्धमुपलब्धं परस्परम् ।**
**तस्यैकदेशशब्दाभ्यामुच्येते समुदायिनौ ॥ ३ ॥**

यल्लिङ्गलिङ्गिद्वयं तत्समुदाय एव ज्ञातसम्बन्धः, तस्यैकदेशः समुदायी, तस्य दर्शनात् समुदाय्यन्तरे बुद्धिरिति समुदायिवचनावेकदेशशब्दाविति ।

नन्वनुपात्ताना पुरुषैकदेशिसमुदायानां बहुव्रीह्यर्थत्वमयुक्तम्, उपात्तस्त्वेकदेश एवान्यपदार्थो युक्तः, यत उक्तम्—ज्ञातसम्बन्धस्यैकदेशदर्शनादिति ? न; उपसर्जनत्वात्, न हि वृत्तिस्थमुपसर्जनं पदान्तरेण सम्बध्यते, सामर्थ्ये हि समासः, व्यपेक्षालक्षणं च सामर्थ्यम्, पदान्तरसम्बन्धे तदपेक्षत्वात्, सामर्थ्याभावेन समासानुपपत्तिः । यद्युच्येत—उपसर्जनमनुपसर्जनमिति नाय सम्बन्धहेतुराकाङ्क्षित पूरणसमर्थं च सम्बन्धिनापेक्ष्यत इति ? सत्यं यदि पूरणसामर्थ्यं स्यात्, तदेव नास्ति, उपसर्जनत्वादित्युच्यते ।

ननु दर्शनं प्रति दृश्य एकदेशः[1] प्रधानम्, भवति च प्रधानस्य सापेक्षस्यापि समासः, नेदं प्रधानम्, गुण एवायम्, विशेषणत्वं हि गुणत्वं न शेषत्वम्, विशेष्यत्वं च प्राधान्य न शेषित्वम् । ऋद्धस्य राज्ञः पुरुष इत्यत्र शेषिणोऽपि राज्ञो विशेषणत्वादृद्धिमपेक्षमाणस्य समासाभावात्, राजपुरुषः शोभन इति च शेषभूतस्यापि पुरुषस्य विशेष्यस्य शोभनपदापेक्षस्यापि समासदर्शनात्, विशेषणं त्वेकदेशो दर्शनस्येति नान्येन सम्बद्धस्य ज्ञातसम्बन्धपदापेक्षस्य सम्भवति समासः ।

नन्वेकदेशिवाचित्वेऽपि[2] ज्ञातसम्बन्धशब्दस्य तदपेक्षैकदेशशब्दस्य समासानुपपत्तिः स्यात् ? न; नित्यसापेक्षत्वात् । सम्बन्धिशब्दो ह्ययम् एकदेशशब्दः, कश्चिद्धि कस्यचिदेकदेशो भवति, सम्बन्धिशब्दाना प्रतिसम्बन्धिनमपेक्षमाणानामपि न सामर्थ्यविघातो भवति, देवदत्तस्य गुरुकुलमितिवत् तेषामपि प्रतिसम्बन्धि व्यतिरिक्तार्थान्तरापेक्षाया भवत्येव सामर्थ्यविघात । न हि भवति शोभनस्य गुरुकुलमिति, अत्र सम्बन्धिशब्दस्यापि गुरुशब्दस्य शोभनापेक्षस्य न समासः, तेनैकदेशिवचनत्वे ज्ञानसम्बन्धशब्दस्य तदपेक्षत्वेऽप्येकदेशशब्दस्य नास्ति सामर्थ्यविघातः । भवतस्तु ज्ञातसम्बन्धपदमेकदेशमेव[3] ज्ञातसम्बन्धत्वेन विशिनष्टि, शोभनपदमिव गुरुम्, इत्येकदेशशब्दस्य तदपेक्षस्य सामर्थ्यविघातात् समासानुपपत्तिः स्यात् । एकदेश्यपेक्षं ह्येकदेशत्वम्, न ज्ञातसम्बन्धापेक्षमिति वैषम्यमिति ।

स्यान्मतम्, अनुमानमेकदेशस्येत्यनेनासमस्तेन ज्ञातसम्बन्धपदं विशेषणत्वेन सम्बध्यत इति, एवमप्याकाङ्क्षावाक्यस्याश्रवणादनुपात्तान्यपदार्थकत्वं तदवस्थं[4] स्यात्, वाक्यभेदमात्रं त्वधिकम् । न चोपात्तस्यैवान्यपदार्थत्वम्, तत्र प्रमाणाभावात् । स्वर्गकामादिपदाना च बहुव्रीहित्वेऽनुपात्तेऽपि पुरुषे वृत्त्यभ्युपगमात् इत्यास्ता तावत् ॥ ३ ॥

कः पुनर्लिङ्गलिङ्गिनोः सम्बन्धः, कार्यकारणतादात्म्यसंयोगसमवायैका-

१. एव देश—२ पु० । २. वचनत्वे०—मु० पा० ।
३. ०सम्बन्धः पद०—मु० पा० । ४. ०तदवस्तु—मु० पा० ।

र्थसमवायविरोध इति चेत् ? न, तदभावेऽपि कृत्तिकारोहिण्युदयादीनां लिङ्गलिङ्गिभावात्; अत आह—

**सम्बन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना ।**

व्याप्तिः=नियमः, येन केनापि सम्बन्धेन यो नियम स एव सम्बन्धो लिङ्गधर्मस्य लिङ्गिनेति ।

अथास्मिन् सम्बन्धे कस्य गमकत्व कस्य वा गम्यत्वम् ? तद्दर्शयति—

**व्याप्यस्य गमकत्वं च व्यापकं गम्यमिष्यते ॥ ४ ॥**

कारणमाह—

**यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत् ।**
**स व्याप्यो व्यापकस्तस्य समो वाभ्यधिकोऽपि वा ॥ ५ ॥**

भवत्विदं व्याप्यव्यापकयोर्लक्षणम्, ततः किम् ? इत्यत आह—

**तेन व्याप्ये गृहीतेऽर्थे व्यापकस्तस्य गृह्यते ।**
**न ह्यन्यथा भवत्येषा व्याप्यव्यापकता तयोः ॥ ६ ॥**

यस्मादिदं व्याप्यव्यापकयो रूपम्, तेन व्याप्यस्य व्यापकदेशकालाभ्या न्यूनत्वे समत्वे चोभयथापि व्यापकदेशकालातिक्रमणाभावात् तस्मिन् गृहीते व्यापको गृह्यते । यदि न गृह्येत, ततो व्याप्यव्यापकतैव तयोर्न स्यात् । अवगमकस्य तद्देशकालातिक्रमेणापि तद्भावोऽभ्युपगन्तव्यः स्यात् । ततश्चाधिक्यान्न व्याप्यत्व स्यात्, तदितरच्च न्यूनत्वाद् व्यापक न स्यात् । अनधिकस्य त्वव्यभिचारान्नित्यं गमकत्वम्, व्यापकस्य तु समाधिकलक्षणस्य व्याप्यदेशकालातिक्रमेणापि सद्भावान्न तद्गमकत्वमिति ॥ ६ ॥

ननु व्यापकादपि व्याप्यानुमान दृष्टम्, अनित्यत्वादिव कृतकत्वस्यात आह—

**व्यापकत्वगृहीतस्तु व्याप्यो यद्यपि वस्तुतः ।**
**आधिक्येऽप्यविरुद्धत्वाद् व्याप्यं न प्रतिपादयेत् ॥ ७ ॥**

कृतकत्वानित्यत्वयोर्हि समदेशकालत्वात्त्वादुभयमुभयस्य व्याप्यं व्यापकं च, तत्रानित्यत्वं कृतकतामनुमापयदपि व्याप्यरूपेणानुमापकं न व्यापकरूपेण; तस्य रूपस्याधिक्येऽप्यविरुद्धस्य गमकत्वासम्भवादिति ॥ ७ ॥

एतदेवासंकीर्णोदाहरणेन दर्शयति द्वयेन—

**विस्पष्टं दृष्टमेतच्च गोविषाणित्वयोर्मितौ ।**
**व्याप्यत्वाद् गमिका गावो व्यापिका न विषाणिता ॥ ८ ॥**
**तेन यत्राप्युभौ धर्मौ व्याप्यव्यापकसम्मतौ ।**
**तत्रापि व्याप्यतैव स्यादङ्गं न व्यापिता मितेः ॥ ९ ॥**

यत्र हि न्यूनाधिकत्वेन व्याप्यव्यापत्वमसंकीर्णम्, यथा गोत्वविषाणित्वयोः, तत्र व्याप्यमेव गोत्वं विषाणित्वमनुमापयति, न तु व्यापिका विषाणिता गोत्वम्; अतः समोदाहरणेऽपि व्याप्यतैव मितेरनुमानस्याङ्गं न व्यापकतेति ॥ ८–९ ॥

यतो व्याप्यं तत्राङ्गत्वेन व्याप्यस्यैव गमकत्वम्, न व्यापकस्येत्युपसंहरति द्वयेन—

**तेन धर्म्यन्तरेष्वेषा यस्य येनैव यादृशी।**
**देशे यावति काले वा व्याप्यता प्राङ् निरूपिता ॥ १० ॥**
**तस्य तावति तादृक् स दृष्टो धर्म्यन्तरे पुनः।**
**व्याप्यांशो व्यापकांशस्य तथैव प्रतिपादकः ॥ ११ ॥**

**एषा** पूर्वोक्ता समन्यूनकालकव्याप्यता **यस्य** धूमादेर्यादृशस्यानवरतोर्ध्ववृत्ते- **र्येना**ग्न्यादिना यादृशेनार्द्रेन्धनादिसंयोगविशिष्टेन यावद्देशकालवर्तिना **धर्म्यन्तरेषु** पूर्वदृष्टेषु महानसादिषु पक्षेषु **निरूपिता, स** तादृशो **व्याप्यांशो धर्म्यन्तरे** पर्वतादौ साध्यधर्मिणि पक्षे **दृष्टः, तस्य व्यापकांशस्य तथैव** तथाभूतस्यैव तावद्देशकालव- र्त्तिनोऽनुमापको भवति, न तु व्यापको व्याप्यस्येति। **धर्म्यन्तरे**ष्विति च पूर्वदृष्ट- महानसादिसपक्षगतैव व्याप्तिरनुमानाङ्गम्, न तु सकलदेशव्याप्तिरिति दर्शयति। ततश्च लिङ्गसकलदेशकालव्याप्त्यवगमो लिङ्गिनोऽनुमानाङ्गमिति मन्वानाः तस्य च प्रमाणं मृगयमाणाः सकृदेव प्रत्यक्षेण नियमो गम्यते भूयोदर्शनाहितसंस्कारस- चिवेन वा चरमेण प्रत्यक्षेणेत्यादिसंवित्तिविरुद्धाभिधानेन क्लिश्यन्तो निरस्ता इति।

ननु सपक्षेष्वपि बहुषु न केनचिदेकेन प्रमाणेन नियमोऽवगन्तुं शक्यते, सर्व- प्रमाणानामेकैकदेशकालपर्यवसानात्? अत आह—

**भूयोदर्शनगम्या च व्याप्तिः,**

सत्यम् नैकेन गम्यते, बहुभिस्तु दर्शनैर्बहुषु देशेषु धूमस्याग्निना साहित्यं गम्यते, तस्मिंश्चावगते व्यभिचारे चानवगते यथादृष्टेषु धूमस्याग्निना व्याप्तिरवगता भवति। ननु नादर्शनमात्रादनग्निषु सर्वेषु धूमस्याभावः सिध्यति, को वा ब्रूते- सिध्यतीति, किन्त्वदर्शनमात्रमेवानग्नौ धूमस्य ब्रूम, तावतैव बहुशोऽवगताग्नि- साहित्यस्य परिदृष्टेषु देशकालेषु वह्निनियमोऽवगतो भवति, तावदेवानुमानाङ्गम्, तदनन्तरं तु 'यत्र यत्र धूमः तत्र तत्राग्निः' इति योऽवगमः सोऽप्यानुमानिक एव; परोक्षरूपत्वात्। तस्य तु प्रत्यक्षत्वं संविद्विरुद्धम्, आपरोक्ष्याभावादिति **न्याय- रत्नमाला**यामेव प्रपञ्चितमित्यास्तां तावत्।

नन्वन्यस्यैव धूमस्य महानसेऽपि न साहित्यमन्येनैवाग्निनावगतम्, देशान्तरे चान्यस्यान्येन, अतः कस्य केन नियमः साहित्यं वा व्याप्तिर्वा? अत आह—

**सामान्यधर्मयोः।**
**ज्ञायते भेदहानेन,**

अस्ति हि तयोर्भूयोदर्शनमिति।

क्वचित् स्थायिनोर्विशेषणयोरपि व्याप्तिरस्त्येव, कृत्तिकारोहिण्योरिवेत्याह—

**क्वचिच्चापि विशेषयोः ॥ १२ ॥**
**कृत्तिकोदयमालक्ष्य रोहिण्यासत्तिक्लृप्तिवत्।**

यदि व्याप्यं व्यापकमनुमापयति हिंसात्वमप्यग्नीषोमीयादिहिंसायामधर्मत्वमनुमापयेत्, अस्ति तस्याधर्मत्वेन व्याप्तिर्ब्रह्महत्यादौ, अत आह द्वयेन—

**व्याप्तेश्च दृश्यमानायाः कश्चिद् धर्मः प्रयोजकः ॥ १३ ॥**
**'अस्मिन् सत्यमुना भाव्यम्' इति शक्त्या निरूप्यते।**
**अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ॥ १४ ॥**
**तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा।**

सत्यम् अस्ति हिंसात्वस्य व्याप्तिः, तथापि नाधर्मत्वव्याप्तेः तत्प्रयोजकम्, यदेव निषिद्धत्वमस्मिन्नधर्मत्वे सत्यमुष्य निषिद्धत्वस्य भवितुं शक्तिरित्येव निरूप्यते, तदेव प्रयोजकम्। अन्ये तु हिंसात्वादयः परेण निषिद्धत्वेन प्रयुक्तां व्याप्तिमुपजीवन्ति, अतः सत्यामपि व्याप्तौ तैर्दृष्टैरपि व्यापकधर्मत्व नावधारयितुं शक्यम्। कः पुनः प्रयोजकः ? यस्य धर्मान्तरविरहेणापि साध्यान्वयो दृष्ट स प्रयोजक, यस्य त्वन्यसहितस्यैव साध्यान्वयः स तदभावे निश्चिते तद्रहितो न प्रयोजक। निषिद्धत्वस्य च हिंसात्वविरहेणापि सुरापानादावधर्मान्वयो दृष्ट इति तदेवाधर्मत्वव्याप्ते. प्रयोजकम्। हिंसात्वस्य तु निषिद्धत्वविरहेण न क्वचिदधर्मान्वयो दृष्ट इति तदप्रयोजकम्। यत्र तु द्वयोः सहितयोरेव साध्यान्वय तत्र द्वयोरपि प्रत्येकमप्रयोजकत्वात् सहिताभ्यामेवानुमानम्, नैकेनेति।

ये च प्रयोजकानपि हेतून् साध्यसिद्धयर्थं प्रयुञ्जते तेषा न केवलमप्रयोजकत्वम्, अन्येऽपि तु प्रतिहेत्वादिदोषास्तेषा सुलभा, तेन तेषा भ्रान्तिरेवेत्याह—

**ये तु तानपि विस्रब्धं साध्यसिद्धयौ प्रयुञ्जते ॥ १५ ॥**
**सुलभैः प्रतिहेत्वादिदोषैर्भ्राम्यन्ति ते चिरम्।**

**विस्रब्धम्**, आदरेणेत्यर्थः।

तानेव दोषान् दर्शयति—

**तेष्वागमविरुद्धत्वं स्वयं चेष्टविघातिता ॥ १६ ॥**
**अलौकिकविवादाश्च वर्ण्यास्ते हैतुकैस्ततः।**

शक्यते प्रयोक्तुम्—'अग्निषोमीयादिहिंसा धर्म, विहितत्वात्, अग्निहोत्रवत्' इति। आगमविरोधश्चाधर्मत्वानुमानस्य, इष्टविघातश्च, यागादीनामपि क्रियात्वेनाधर्मत्वानुमानात् सर्वलोकप्रसिद्धिविरोधाच्चैववादिनो न्यायविद्भिरुपेक्षणीया इति।

एवमुपपादितमप्रयोजकत्वमुदाहरणतो दर्शयति पञ्चभिः—

**निषिद्धत्वेन हिंसानामधर्मत्वं प्रयुज्यते ॥ १७ ॥**
**तदभावे न तत्सिद्धिर्हिंसात्वादप्रयोजकात्।**
**हेतुद्वयप्रयुक्ते[1] च मिथ्यात्वे सर्वबुद्धिषु ॥ १८ ॥**

---

१. हेतुद्वये प्रयुक्ते—मु० पा०।

**ज्ञानत्वोत्पत्तिमत्त्वादिसाधको नप्रयोजकः[1]।**
**त्रैवर्णिकप्रयुक्ता च यागादेः स्वर्गहेतुता[2] ॥ १९ ॥**
**न मनुष्यत्वमात्रेण शूद्रस्थेन प्रयुज्यते।**
**कृतसावयवत्वादिप्रयुक्ता च विनाशिता ॥ २० ॥**
**प्रयत्नानन्तरज्ञानसदृशैर्न प्रयुज्यते।**
**जातिमत्त्वेन्द्रियत्वादि वस्तुसन्मात्रबन्धनम् ॥ २१ ॥**
**शब्दानित्यत्वसिद्ध्यर्थं को वदेद् यो न तार्किकः।**

हेतुद्वय कारणदोषो बाधकज्ञानच। प्रयत्नानन्तरज्ञानादित्येवञ्जातीयकैरनित्यत्व शब्दस्य न सिद्ध्यति, तथा जातिमत्त्वेनैन्द्रियकत्वेन च। तद्धि वस्तुसत्तामात्रनिबन्धन नित्यानित्यसर्ववस्तुसाधारणमिति **शब्दाधिकरणे** वक्ष्यते। अत. कृतकत्वसावयवत्वादिप्रयुक्तमेवानित्यत्वम्, जातिमत्त्वादिकं त्वतिस्थूलमिति **तार्किकाणा**मेव वक्तुमुचितम्, नास्माकम्। ननु निरवयवस्यापि कर्मादेर्विनाशित्वदर्शनात् कृतकत्वमेवानित्यत्वस्य प्रयोजक न सावयवत्वम्? सत्यम्, सावयवत्वेनापि कृतकत्वमनुमाय शक्यमनित्यत्वमनुमातुम्। यदि हि कृतकत्वस्याभावो निश्चत. स्यात् ततोऽशक्यमेव सावयत्वेनानित्यत्वानुमानमिति।

उपसहरति—

**तस्माद् य एव यस्यार्थो दृष्टः साधनशक्तितः ॥ २२ ॥**
**स एव गमकस्तस्य न प्रसङ्गान्वितोऽपि यः।**

ननु पक्षधर्मिणोऽनुपादानात्[3] परिपूर्ण लक्षणमत आह—

**उपात्तश्चैकदेशाभ्यां धर्म्यप्यत्रैकदेशवान् ॥ २३ ॥**

अन्यस्यैकदेशस्योपादाने कथमन्यस्यैकदेशिन उपादानम्? अत आह—

**अपारार्थ्ये हि धूमादेः स्वरूपैर्नैकदेशता।**

एकदेशिसम्बन्धिरूपमेव ह्येकदेशत्वम्, न वस्तुरूपमात्रमिति। ननु प्रमातुरन्यपदार्थत्वे पक्षधर्म्यपेक्षमेकदेशत्वमिति युज्यते एकदेशाभ्यामर्थात् पक्षधर्म्याक्षेपः, यदा सपक्षैकदेशी समुदायो वान्यपदार्थ. यदा वा कर्मधारय., तदा सपक्षसम्बन्धसमुदायानामन्यतमस्यैकदेशावेकदेशशब्दावभिदधाते न तु पक्षैकदेशाविति न ताभ्यां पक्षधर्म्युपादान सिद्ध्यति, तेन त्रिष्वपि समासार्थेषु यथा पक्षधर्म्युपादान सिद्ध्यति तथा वक्तव्यम्? अत आह—

**स एव चोभयात्मायं गम्यो गमक एव वा[4] ॥ २४ ॥**

स एव पक्षैकदेश्येव हि लिङ्गलिङ्गैकदेशवत् तयोभयात्मा गम्यो गमकश्च, न त्वेकदेशिमात्रम्, तस्य सम्बन्धग्रहणसमय एव गृहीतस्याननुमेयत्वात्; तदिदं

१. न प्रयोजकः—२ पु०। २. स्वर्गहेतुकाम्—मु० पा०।
३. अनुपादानाय—मु० पा०। ४ एव च—२ पु०।

पक्षधर्मिणोऽनुमेयत्वमसन्निकृष्टग्रहणेन भाष्ये दर्शितमिति नानुपादानं दोष इति ॥ २४ ॥

तावेव गम्यगमकात्मानौ विभजति—

**असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः।**

असिद्धेन प्रमाणान्तराप्रसिद्धेन वह्निमत्त्वात्मनानुमेयत्वम्, प्रमाणान्तरसिद्धेन तु धूमवत्त्वात्मना गमकत्वमिति।

अथायमेकदेशी साधनवाक्ये कथमुपादातव्यः ? इत्यत आह—

**अतः[1] पृथगभिन्नो वा प्रयोक्तॄणां विवक्षया ॥ २५ ॥**

**पृथगे**कदेशाभ्यां वैयधिकरण्येन **अभिन्न**स्ताभ्यां सामानाधिकरण्येन यथाविवक्षमुपादानमिति ॥ २५ ॥

तावेव प्रकारौ दर्शयति—

**अनित्यः कृतको यस्माद् धूमवानग्निमानिति।**

**धर्म्यभिन्नमुपादानम्, भेदोऽत्राग्निरितीदृशे ॥ २६ ॥**

यदुक्तम्—'एकदेश्येवासिद्धेनैकदेशेन गम्य.' इति, तदुपपादयितुमुपक्षिपति[2]—

**एकदेशविशिष्टश्च धर्म्येवात्रानुमीयते।**

उपपत्तिमाह—

**न हि तन्निरपेक्षत्वे सम्भवत्यनुमेयता ॥ २७ ॥**

कथं न सम्भवति ? अत आह—

**न धर्ममात्रं सिद्धत्वात्, तथा धर्मी, तथोभयम्।**

**व्यस्तं वापि समस्तं वा स्वातन्त्र्येणानुमीयते ॥ २८ ॥**

अग्निः सम्बन्धग्रहणकाले एव सिद्धः, पर्वतोऽपि प्रत्यक्षसिद्ध , अत एव अग्निपर्वतात्मकमुभयमपि स्वातन्त्र्येण सिद्धम्, अतो न तयोर्व्यस्तयो समस्तयोर्वा स्वातन्त्र्येणान्योन्याविशिष्टरूपेणानुमेयत्वमिति ॥ २८ ॥

इतश्च धर्मधर्म्युभयेषां नानुमेयत्वमित्याह—

**एकदेशस्य लिङ्गत्वं साध्येनानुगमोऽस्य च।**

**द्वयं च न स्यादिष्टं सत् पक्षेष्वेषु यथाक्रमम् ॥ २९ ॥**

एतदेवोदाहरणेन दर्शयति—

**अनित्यत्वादयो धर्माः कृतकत्वादयो न हि।**

**ध्वनिनानुगमो नैषां नोभयस्योभयेन वा ॥ ३० ॥**

अनित्यत्वमस्तीत्येतावति प्रतिज्ञाते कृतकत्वस्यातद्धर्मत्वान्न पक्षैकदेशस्य लिङ्गत्वं स्यात्। शब्दास्तित्वप्रतिज्ञायां तु कृतकत्वस्य घटादिषु तदनुगमो न

---

१. आत्त इति पाठान्तरम्।

२. उपक्षिपतीति। उपस्थापयतीत्यर्थः।

शक्यते दर्शयितुम् । शब्दानित्यत्वयो. सद्भावप्रतिज्ञायामपि न कृतकत्वस्योभयधर्मत्वम्, शब्दमात्रधर्मत्वात् । अतो न स्वातन्त्र्येण धर्मधर्मिणोरनुमेयत्वमिति ॥ ३० ॥

सम्बन्धोऽपि न धर्मधर्मिणोः स्वातन्त्र्येण साध्य., मितौ साधनवाक्ये षष्ठ्या नाम्ना वा सम्बन्धपदेनानुपादानात्, न ह्येव प्रयुञ्जते लौकिकाः—पर्वतस्याग्निरस्तीति, अग्निपर्वतसम्बन्धोऽस्तीति वा । यथालोक च परीक्षकैर्वक्तव्यम्, न तद्विपर्ययेणेत्याह—

**सम्बन्धोऽप्यनुपादानान्नाम्ना षष्ठ्यापि वा मितौ ।**

उदाहरणेऽपि लिङ्गस्य न सम्बन्धेनानुगम दर्शयन्तीत्याह—

**न चाप्यनुगमस्तेन लिङ्गस्येह निदर्श्यते ॥ ३१ ॥**

किञ्च, सम्बन्धसत्त्वमात्र न साध्यम्, सिद्धत्वात् । न चासौ पर्वतवत् साध्यसाधनरूपमाकारद्वय बिभर्ति, येन सम्बन्ध पक्षीकृत्याग्निमत्तया शक्यते साधयितुम्, सम्बन्धमात्रस्याग्निमत्त्वाभावात्, सम्बन्धविशेषस्य प्रागनुमानादसिद्धस्य पक्षीकर्तुमशक्यत्वात्, न च तस्य धूमवत्त्व सिद्ध येन हेतु स्यात् । तदिदमाह—

**न चाकारद्वयं तस्य साध्यसाधनभाग् भवेत् ।**

तस्माद् धर्मविशिष्टो धर्म्येवानुमानज्ञानेन विषयीक्रियते, न चासति सम्बन्धे विशिष्ट शक्यते प्रतिपत्तुमिति सम्बन्धोऽपि तत्रार्थादन्तर्णीतो गम्यते । तत्र तु प्राप्ताप्राप्तविवेकेन सम्बन्धस्येवार्थगृहीतस्य गम्येतानुमेयता, न तु स्वातन्त्र्येण इत्याह पादत्रयेण—

**तस्मादर्थगृहीतत्वान्मतुबर्थस्य गम्यता ॥ ३२ ॥**
**न स्वातन्त्र्येण मन्तव्या,**

अत्रैव दृष्टान्तमाह—

**यथा दण्डयादिशब्दतः ।**
**विशिष्टार्थप्रतीतौ स्यात् सम्बन्धो नान्तरीयकः ॥ ३३ ॥**

दण्डिशब्देन हि प्रकृत्या दण्ड प्रत्ययेन तद्वानभिधीयते, सम्बन्धस्तु नान्तरीयकतया गम्यत इति ॥ ३३ ॥

उपसंहरति गम्यावन्तेन—

**विशेषणविशेष्यत्वमापन्नौ द्वाविमावतः ।**
**गम्यौ,**

**इमौ** । धर्मधर्मिणौ ।

तत्र तु किं विशेषणं किं वा विशेष्यम् ? इत्यत्रैकेषा मतमाह—

**अङ्गाङ्गिभावस्तु कैश्चिदिष्टो विकल्पतः ॥ ३४ ॥**

विकल्पाभिप्रायमेव दर्शयति—

**सर्वथा धर्मिणो धर्मो धर्मेण त्ववगम्यते ।**
**विशेषणविशेष्यत्वे न विशेषोऽवधार्यते ॥ ३५ ॥**

धर्मिगतो धर्मोऽनित्यत्वं कृतकत्वधर्मेणावगम्यते, स्वातन्त्र्ये सिद्धसाध्यतापत्तेः; स तु धर्मो विशेषणं वा विशेष्यो वा भवतु न तत्राभिनिवेश इति ॥ ३५ ॥

एतद् दूषयति सपादद्वयेन—

**तत्रोत्तरं वदन्त्यन्ये यदि धर्मो विशेषणम् ।**
**हेतुधर्मेण सम्बन्धस्तस्याप्राधान्यतः स्फुटः ॥ ३६ ॥**
**प्रधानत्वाद्धि धर्मेण सम्बन्धो वाक्यतो भवेत् ।**
**तत्रासम्भवतः पश्चात् कल्प्योऽसौ धर्मिणा सह ॥ ३७ ॥**
**ध्वनेरित्यथ वा वाच्यम्,**

अनित्यत्वं शब्दगतमिति हि प्रतिज्ञाय कृतकत्वं हेतुत्वेनोच्यमान प्रतिज्ञावाक्ये शब्दस्य विशेषणत्वेनाप्राधान्यान्न तेन सम्बध्यते, प्रधानेनैव त्वनित्यत्वेन सम्बन्धः सहसा गम्यते । तत्र चासम्बन्धमालोक्य क्लेशेन धर्मिसम्बन्ध. कल्प्यः स्यात्, शब्दस्य कृतकत्वादिति वा पुन' शब्दग्रहण कर्त्तव्य स्यात् । अतः शब्दस्यैवानित्यत्वविशिष्टस्य साध्यत्व युक्तमिति ।

नन्वेवं 'यद् यत् कृतक तत्तदनित्यम्' इत्यन्वय', दर्शनवेलाया प्रधानभूतेन शब्देनैवान्वयो गम्येत, न गुणभूतेनानित्यत्वेनात आह—

**अन्वयस्य तु दर्शने ।**
**भेदोपात्तस्य धर्मस्य गुणभावो न दुष्यति ॥ ३८ ॥**

'यत्कृतकं तदनित्यम्' इत्यन्वयवाक्ये पुनरनित्यत्वस्योपादानात् कृतकत्वान्वयसिद्धेः प्रतिज्ञायां तस्य गुणभावो न दूषणाय भवतीति ॥ ३८ ॥

इतश्चाग्नेर्न विशेष्यत्वमित्याह—

**अग्नेर्देशविशिष्टत्वे[1] न चैतत् पक्षलक्षणम् ।**

वक्ष्यमाणं पक्षलक्षण पक्षप्रकारो विशेष्यस्याग्नेर्न सम्भवतीति ।

तानेव प्रकारान् दर्शयति इत्यन्तेन——

**विशिष्टतास्य देशेन भवेदेवम्प्रकारिका ॥ ३९ ॥**
**योऽग्निः सोऽस्ति क्वचिद्देशे यो दृष्टो यत्र तत्र वा ।**
**अग्निः पूर्वानुभूतो वा देशमात्रेण सङ्गतः ॥ ४० ॥**
**योऽग्निः सोऽनेन युक्तो वा, यो दृष्टोऽनेन सोऽथ वा ।**
**योऽयं स देशमात्रेण युक्तः, पूर्वेण वाप्ययम् ॥ ४१ ॥**
**एतद्देशविशिष्टो वा योऽयमग्निरिति,**

---

१. ०देशाविशिष्टत्वे—मु० पा० ।

एतेषु षट्सु पक्षेषु प्रथमद्वितीययोः सिद्धसाध्यत्वम्, उत्तरेषु पञ्चसु प्रमाणान्तरविरोध इत्याह—

**इह तु ।**

**पूर्वयोः सिद्धसाध्यत्वं परेषु स्याद् विरुद्धता ॥ ४२ ॥**

**सिद्धसाध्यत्वम्** सुगमम् ।

विरोधं प्रपञ्चयति—

**व्याप्तिरेतेन देशेन सर्वाग्नीनां न युज्यते ।**

चतुर्थपक्षे हि 'योऽग्निः सोऽनेन युक्त.' इत्यग्न्युद्देशेन पर्वतसंयोगोपादानेन यावदुद्देश्यमुपादेयसम्बन्धात् उद्देश्यस्य च सर्वाग्निव्यक्तिविशेषत्वात् सर्वाग्नीनां पर्वतसम्बन्धोऽवगम्येत, ततश्च प्रमाणान्तरविरोध. स्यात् । पर्वतविशेषोद्देशेन त्वग्निजातिसम्बन्धोपादानेऽप्युपादेयस्योद्देश्येनाव्याप्तेर्न कश्चिद् विरोध इति ।

पञ्चम-षष्ठ-सप्तमेषु यथाक्रम विरोध दर्शयति—

**नापि पूर्वस्य, नाप्येष वह्निः सर्वैर्विशिष्यते ॥ ४३ ॥**

**देशैः, पूर्वेण वाप्यस्य न देशेन विशेष्यता ।**

पूर्वदृष्टस्याग्नेरेतद्देशेन न सम्बन्ध एव, पर्वतगतो वह्निः सर्वैर्देशैर्न विशिष्यत इति । अय च षष्ठस्य विरोध' तृतीयस्यापि 'अग्नि पूर्वानुभूतो वा देशमात्रेण सङ्गत.' इत्यस्यापि तुल्य इति न पृथक् प्रदर्शित इति ।

अष्टमं पक्षं दूषयति—

**'एतद्देशविशिष्टोऽयम्' इत्येतत् कथ्यते कथम् ॥ ४४ ॥**

किमिति वा न कथ्यते ? अत आह—

**यदा देशानपेक्षोऽग्निर्नायमित्यवधार्यते ।**

[1]नह्यगृहीतपर्वतसम्बन्धैरयमिति तद्गतो वह्निरवधार्यते, अनवधारितश्च कथं पक्षीक्रियते, तत्सम्बन्धग्रहे[2] वा नानुमेयत्वमवशिष्येतेति ।

इतश्च न देशस्य विशेषणत्वमित्याह—

**अग्नेः पूर्वतरं चात्र देश एवावधार्यते ॥ ४५ ॥**

**तज्ज्ञानकालबुद्धश्च न देशः स्याद् विशेषणम् ।**

प्रागवधारितो हि पश्चाद्विशेषणविशिष्टोऽनुमेयदेशश्च प्रागेव गम्यते, तदसौ वह्निज्ञानकाले[3]ऽवबुद्धत्वान्न विशेषणमिति ।

विशेष्यस्तु भवतीत्याह—

**देशस्य पर्वतादेस्तु स्वरूपे पावकाद् ऋते ॥ ४६ ॥**

**गृहीतेऽग्निविशिष्टस्य पुनर्ज्ञानं न दुष्यति ।**

---

१. तद्ध्यगृहीत—मु० पा० ।  २. ०सम्बन्धाग्रहे—मु० पा० ।

३. वह्निर्ज्ञान०—मु० पा० ।

उपसंहरति—

**तस्माद् धर्मविशिष्टस्य धर्मिणः स्यात् प्रमेयता ॥ ४७ ॥**

सा च देशस्यैव धर्मित्वादित्याह—

**सा देशस्याग्नियुक्तस्य,**

**नैयायिकास्तु** धूममेव धर्मीकृत्य तस्यैवाग्निविशिष्टस्यानुमेयतामाहुरित्याह—

**धूमस्यान्यैश्च कल्पिता ।**

चोदयति—

**ननु शब्दवदेव स्याल्लिङ्गगम्यं विशेषणम् ॥ ४८ ॥**

यथैव जातिविशिष्टव्यक्त्यवगमेऽपि शब्दस्य जातावेव[1] विशेषणे शक्तिर्न तद्विशिष्टे तथा लिङ्गस्यापि विशेषणभूतेऽग्नावेव पर्यवसानाद् न विशिष्टविषयतेति ॥ ४८ ॥

परिहरति—

**नैवम्,**

कारणमाह—

**न ह्यत्र लिङ्गस्य शक्त्यनेकत्वकल्पना ।**

कथम् ? इत्याह—

**न च तस्यानुमेयत्वम्,**

**च**शब्दो हेतौ । विशेषणं हि सम्बन्धग्रहणकाले गृहीतम् इदानीं स्मर्यमाणमेव विशेष्यं शक्नोति विशेष्टुमिति तत्र न शब्दस्येव लिङ्गस्य शक्तिः कल्पनीयेति ।

विशेष्यमपि पर्वतादिकं प्रमाणान्तरावधारितमिति न तत्रापि लिङ्गस्य शक्तिकल्पनमित्याह—

**विशेष्यश्चावधारितः ॥ ४९ ॥**

विशेषणसम्बन्धमात्रं त्वन्यतोऽनवगतमिति तन्मात्रस्यानुमेयत्वमिति तत्रैव लिङ्गस्य शक्तिरिति न शक्त्यनेकत्वमित्याह—

**विशिष्टत्वेन चाज्ञानात् तन्मात्रस्यानुमेयता ।**

ननु व्यापकमनुमेयम्, न चाग्निविशिष्टस्य पर्वतस्य व्यापकत्वं व्यापकविशिष्टधर्म्यन्तरावगतिरनुमानम्, न व्यापकस्वरूपावगतिरिति न दोषः ।

चोदयति—

**ननु धूमविशेष्यत्वे हेतोः पक्षैकदेशता ? ॥ ५० ॥**

परिहरति—

**नैतदस्ति, विशेषे हि साध्ये सामान्यहेतुता ।**

---

१. जाताविव—मु० पा० ।

साम्प्रतिको हि धूमविशेषोऽग्निमत्तया साध्यमानः पक्ष.[1], धूमत्वं सामान्यं च हेतुरिति ।

दर्शितमनुमानस्य प्रमेयम्, इदानी प्रमाणफले तयोश्च विषयैकत्वं दर्शयति—

**धूमतज्ज्ञानसम्बन्धस्मृतिप्रामाण्यकल्पने ॥ ५१ ॥**
**फलेन विषयैकत्वं तद्व्यापारात् पुरोदितम् ।**

धूमतज्ज्ञानादीना प्रमाणत्व प्रमेयज्ञान फलम्, तत्प्रामाण्ये तु हानादिबुद्धिः फलम् । व्यापारत. समानविषयत्वं प्रत्यक्षवदिहापि वेदितव्यम्, सर्वेषा धूमादीना प्रमेयज्ञाने व्यापारात् ।

यत्तु **भिक्षुणा** विषयैकत्वतृष्णया ज्ञानमेव प्रमाण फलं चेति प्रत्यक्षे दर्शयित्वा तदेवानुमानेऽप्यतिदिष्टम्—'पूर्ववत्फलमस्य' इति, तस्य निराकरणमपि प्रत्यक्षोक्तमेव 'साध्यसाधनयोर्भेदो लौकिकस्तेन बाधितः' (          ) इत्यतिदेष्टव्यम् । आह च—

पूर्ववत्फलमस्येति य प्रमाणफलैकताम् ।
आह प्रत्यक्षवत् तस्य प्रतिषेधोऽपि पूर्ववत् ॥
को वृक्षच्छिदयैकत्व परशोर्वेदितु क्षम. ॥ इति ।

ननु प्रमेयबुद्धेरेव प्रामाण्य **भाष्यकारेणोक्तम्**, तत् कथ भवता प्रमाणानियमो वर्ण्यते ? अत आह—

**प्रमेयधीप्रमाणत्वं[2] भाष्यकारस्तु मन्यते ॥ ५२ ॥**
**प्रत्यक्षानियमोक्तिश्च सर्वत्रैवानुषज्यते ।**

सत्यमत्रैव **भाष्यकारेणोक्तम्**, प्रत्यक्षोक्तस्त्वयमनियम. 'बुद्धिर्वा जन्म वा' इत्यादिरिहाप्यनुषङ्गेण द्रष्टव्य इति ।

एव प्रमाणं प्रमेयं फल च दर्शितम् । प्रतिज्ञाहेतुदृष्टान्तदोषास्तु साधनगता एव वक्तव्या इति साधनमनुसन्धत्ते—

**अनुमानगृहीतस्य तेनैव प्रतिपादनम् ॥ ५३ ॥**
**परेभ्यो वाञ्छता[3] वाच्य. पूर्वपक्षो यथोदितः ।**

स्वयमनुमितार्थे परस्याप्यनुमानबुद्धिर्येन वाक्येनोत्पद्यते तद् वाक्य साधनमित्युच्यते । तच्च वाक्य प्रतिज्ञाहेतुदृष्टान्तै सावयवमङ्गीकृत्य प्रतिज्ञा शोधयति, साध्यनिर्देश प्रतिज्ञा, साध्यश्च पक्षः, स च यथोदितो धर्मविशिष्टो धर्मी, स स्वयमनुमितस्यार्थस्यानुमानेनैव प्रतिपादन परस्मै वाञ्छता प्रथमं वक्तव्यः, तद्वचनशब्दः प्रतिज्ञाख्यः साधनावयव. प्रयोक्तव्य इति ।

---

१. साध्यमानपक्ष.—मु० पा० ।     २. ०प्रमाणं हीति क्वचित् पाठः ।
३. वाञ्छित—३ पु० ।

कीदृशं तद्वचनम् ? तद्दर्शयति—

**तत्र[1] धर्मिणमुद्दिश्य साध्यधर्मो विधीयते ॥ ५४ ॥**

'योऽयं पर्वतः सोऽग्निमान्' इति ॥ ५४ ॥

ननूद्देश्यस्योपादेयेन नियमादग्निमानेवेत्यापद्यते, ततश्च धर्मान्तराणा व्युदासे धूमवत्त्वस्यापि व्युदासः स्यात् ? अत आह—

**नियमस्तद्विपक्षाच्च[2] कल्प्यते[3] नाविरोधिनः ।**

अग्निमत्तया हि पर्वतो नियम्यमानो योऽग्निमत्त्वविपक्षस्तदभावः, तदभावनियतं च धर्मान्तर तस्मादेव नियम्यते, तस्यैव व्युदासो भवति नाविरोधिनो धर्मान्तरस्य; यथा 'शुक्ल एव पटः' इत्युक्ते शौक्ल्याभावस्य कृष्णादीना च निवृत्ति , न तु दैर्घ्यादेः, तथात्रापीति ।

**भाष्यकारेण** ' असन्निकृष्टे' ( शा० भा० पृ. ४३ ) इति प्रतिज्ञातार्थस्य साध्यस्य विशेषणमुपात्तम्, तस्य व्यावर्त्यं दर्शयति—

**असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ॥ ५५ ॥**

**ताद्रूप्येण परिच्छित्ति[4]स्तद्विपर्ययतोऽपि च ।**

येन रूपेणानुमातुमिष्यते, तेनैव रूपेण तद्विपरीतेन वा रूपान्तरेण शीघ्रप्रमाणेन[5] परिच्छिन्नो यो धर्मी स सन्निकृष्ट', तस्य पक्षत्व व्यावर्त्तयितुमसन्निकृष्टग्रहणमिति ।

किमिति पुनस्तद् व्यावर्त्यते ? अत आह—

**प्रमितस्य प्रमाणे हि नापेक्षा जायते पुनः ॥ ५६ ॥**

द्वेधापि प्रमिते नास्ति प्रमाणापेक्षेति ॥ ५६ ॥

एतदेव विभज्य विवृणोति—

**ताद्रूप्येण परिच्छिन्ने[6] प्रमाणं निष्फलं परम् ।**

न हि हस्तिनि दृश्यमाने पुनस्तत्पादेनानुमान फलवत्, अतो न तत्र प्रमाणापेक्षेति। ननु महानसादौ परिच्छन्नस्याग्नेः पर्वतेऽपि परिच्छेदात् कथमपरिच्छिन्नविषयत्वम् ? देशान्तरकालान्तराधिक्यादिति चेत् ? न, यावद्धूमदेशकालमग्निसद्भावस्य व्याप्तावगृहीतत्वात् । असन्निकृष्टग्रहण तु स्मरणाभिमाननिरासार्थम्। मैवम्, न ह्यनुमानादन्येन यावद्धूमदेशकालमग्निसद्भाव. शक्यते ग्रहीतुमित्यसकृदुक्तम् । 'धूमवानग्निमान्' इति सामान्यतोऽवगतेऽपि पर्वतादेर्देशविशेषस्य स्वरूपं व्याप्तिसमये नावगतम्, नतरामग्निमत्त्वम्, तस्माद् देशकालाधिक्याद् युक्तमगृहीतग्राहित्वमनुमानस्य । स्मरणाभिमाननिरासार्थत्वे चासन्निकृष्टसहणस्य

---

१. तव—१ पु० ।
२. तद्विरुद्धाच्च—२ पु० ।
३. कल्पते—३ पु० ।
४. गृहीतत्वम्—२ पु० ।
५. शीघ्रप्रवृत्तिना प्रमाणेनेत्यर्थः ।
६. परिच्छन्ने—मु० पा० ।

विपरीतपरिच्छन्नेऽनुमानप्रवृत्तिरनिरस्ता स्यात्, न हि तन्निरासस्यावयवान्तरमस्तीत्यलमनेन ।

तन्न तावत् ताद्रूप्यपरिच्छिन्नेऽनुमानम्, विपरीतरूपेणापि शीघ्रप्रवृत्तिना प्रमाणेन परिच्छिन्ने परस्य नावकाशोऽस्तीत्याह—

**वैपरीत्यपरिच्छिन्ने नावकाशः परस्य तु ॥ ५७ ॥**

कारणमाह—

**मूले तस्य ह्यनुत्पन्ने पूर्वेण विषयो हृतः ।**

लिङ्गदर्शनव्याप्तिस्मरणादिकमनुमानस्य मूलम्, तद्यावन्नैव निष्पद्यते तावदेवानुमानविषयोऽपहृत , अनुमानावगम्यरूपविपरीतरूपेण परिच्छिन्ने तद्विपरीतरूपे न प्रमाणापेक्षेति ।

न केवलमनुमानविषयमेवेद मन्थरस्य बाध्यत्वम्, षण्णामपि प्रत्यक्षादीना मध्ये येनैव शीघ्रप्रवृत्तिना प्रथममर्थोऽवधारितो भवति तेनैवोत्तरकालस्य मन्थरस्योत्पत्तिनिरोधलक्षणो बाधो भवतीत्याह—

**प्रत्यक्षादेश्च षट्कस्य येनैवार्थोऽवधारितः[1] ॥ ५८ ॥**

**तेनैवोत्तरबाधः स्याद्,**

कारणमाह—

**विकल्पादेरसम्भवात् ।**

विकल्पस्तावत् सिद्धवस्तुविषयो न सम्भवति, नियतैकस्वभावत्वाद् वस्तुनः । समुच्चयोऽपि विरोधान्न सम्भवतीति पारिशेष्याद् बाध । तद्यदि परं पूर्वानपेक्षमुत्पद्यते, यथा—नेद रजतमिति, तस्य पूर्वाबाधेनोत्पत्त्यसम्भवात् उत्पन्नस्यैव पूर्वस्योत्तरेण मिथ्यात्वस्थापनरूपो बाधो भवति, अनुमानस्य च लिङ्गदर्शनदृष्टान्तापेक्षया विलम्बमानस्यालब्धात्मकस्योत्पत्तुमभिप्रवर्त्तमानस्य शीघ्रप्रवृत्तिना प्रत्यक्षादिना विषयापहारेण मुखनिरोधादुत्पत्तिरेव निरुध्यते । शीघ्र हि प्रमाणं प्रथममेव प्रमेय विषयीकृत्य 'एवमिदम्' इत्यनुपरमेण निश्चाययतीति न तद्विरुद्धस्यात्मलाभ सम्भवति । तदेवं सर्वत्र शीघ्रप्रवृत्ति प्रमाण प्रतिष्ठितं तद्विलम्बितस्य बाधकं भवति । न ह्यग्नावुष्णत्वविपरीतशैत्यानुमान कस्यचिदुत्पद्यते । तेनाबाधितविषयत्वमपि मन्थरस्योत्पत्तौ कारणमित्यङ्गीकर्त्तव्यमिति ।

अनुमाने चायमपरो विशेष —यदा हि प्रत्यक्षावगतौष्ण्येऽग्नौ द्रव्यत्वेन पृथिव्यादिवदनुष्णत्वमनुमानमिष्यते, तदैवोष्णेऽप्यग्नौ द्रव्यत्व पश्यतोऽनुमानमनैकान्तिकत्वान्नानुष्णत्वमनुमापयेत् । ननु अनुमित्सितविषयव्यतिरिक्तविषयैव व्याप्तिरनुमानाङ्गम्, अस्ति च द्रव्यत्वस्याग्निव्यतिरिक्तेषु पृथिव्यादिषु अनुष्णत्वेन व्याप्तिरिति स्यादेव ततस्तदनुमानम् ? नैवम्; अदृष्टव्यभिचारो हेतुरनुमा-

---

[1] नैवार्थो ह्यवधारितः—का० ।

नाङ्गम्, स यत्र क्वचिदपि दृष्टव्यभिचारो नानुमानज्ञान जनयतीति यत्किञ्चि-देतत्।

यत्र तु शीघ्रमपि प्रमाण प्रत्यक्षादिकम् उपजातमपि दूरत्वादिदोषेण साशयिकं स्वयमेवाप्रतिष्ठित भवति, तत्र मन्थरेणापि नि.सशयेन विपरीतार्थ-परिच्छित्तिर्भवत्येवेति।

प्रत्यक्षविरोधोदाहरणमाह—

**अग्राह्यता तु शब्दादेः प्रत्यक्षेण विरुध्यते ॥ ५९ ॥**

अग्राह्यत्वम् = ग्रहणायोग्यत्वम्, अविद्यमानत्वमिति यावत्। यो हि **शून्यवादी मायावादी** वा नामरूपप्रपञ्चस्यासद्भाव प्रतिजानीते तस्य प्रत्यक्षरोिध इति ॥ ५९ ॥

अनुमानविरोधमुदाहरति—

**तेषामश्रावणत्वादि विरुद्धमनुमानतः।**

**दिङ्नाग**स्त्विदं प्रत्यक्षविरोधोदाहरणच्छिति, तन्निराकरोति—

**न हि श्रावणता नाम प्रत्यक्षेणावगम्यते ॥ ६० ॥**

इद शब्दस्य श्रावणत्व यज्ज्ञानस्य श्रोत्रजन्यत्वम्, तद्भावभावनियमश्च तज्ज-न्यत्वम्, न च श्रोत्र शब्दज्ञान वा प्रत्यक्षम्, तत् कथ श्रोत्रभावे शब्दज्ञानस्य भावः प्रत्यक्षेण गृह्यते; अतो न प्रत्यक्षगम्या श्रावणतेति। किन्त्वनुमानगम्येत्याह—

**सान्वयव्यतिरेकाभ्यां गम्यते बधिरादिषु।**

शब्दज्ञानस्य कार्यत्वात् कारणवत्त्वे कल्पिते शब्दोच्चारणादिषु सत्स्वपि कदा-चिच्छब्दस्याज्ञानात् तदतिरिक्तमपि कारणमस्तीति निश्चिते कर्णशष्कुलीपिधाने, तस्याश्च वातदोषादिवशादपघाते वा बधिरस्याश्रवणादन्यस्य च श्रवणात् कर्ण-शष्कुलीगतमेवाकाशमित्यनुमीयते, तच्च श्रोत्रम्; अतोऽनुमानगम्यैव श्रावणता। तेन यो नाम 'शब्दोऽश्रावणः गुणत्वाद्रूपादिवत्' इति प्रयुङ्क्ते, तस्यानुमानविरोधः। किं पुनः श्रावणत्वानुमानस्याश्रावणत्वानुमानाद् बलीयस्त्वम्? शीघ्रप्रवृत्तित्वमेव। शब्दज्ञानश्रोत्रयोर्हि कार्यकारणभाव प्रतिषेधता अवश्यं कार्यकारणभावोऽन्यत्राव-गतोऽत्र प्रतिषेद्धव्यः, अनवगतस्य प्रतिषेधायोगात्। तस्य च तद्भावभावित्वमेवा-न्यत्रापि प्रमाणम्, तच्च शब्दज्ञानश्रोत्रयोरपि समानमिति यथैवान्यत्र कार्यकारण-भावो गृह्यते तथैव शब्दज्ञानश्रोत्रयोरपि गृह्यत इति पाश्चात्यस्याश्रावणत्वा-नुमानस्यानुत्पत्तिरिति।

शब्दविरोधं दर्शयति—

**त्रिधा शब्दविरोधः स्यात् प्रतिज्ञादिविभागतः ॥ ६१ ॥**

विभागमेव दर्शयति—

**प्रतिज्ञापूर्वसञ्जल्प[1]सर्वलोकप्रसिद्धितः ।**

अथ प्रतिज्ञाविरोधमप्युच्चारणधर्मधर्म्युक्तिद्वेधा दर्शयति सार्द्धेन—

**यावज्जीवमहं मौनीत्युक्तिमात्रेण बाध्यते ॥ ६२ ॥**
**सर्ववाक्यमृषात्वे तु[2] धर्मोक्त्यैवात्मबाधनम् ।**
**धर्म्युक्त्याह यतो जातः सा वन्ध्या जननी मम ॥ ६३ ॥**

उक्तिः=उच्चारणम्, तेनैव प्रतिज्ञातमौनित्वस्य बाध्यत्वं सर्ववाक्यं मृषेति मृषात्वधर्मोक्त्यैव प्रतिज्ञातार्थो मृषात्वं बाध्यते, सर्वमृषात्वे प्रतिज्ञावाक्यमपि मृषा स्यात्, तदेव च तस्य मृषात्वं यत्सर्वेषाममृषात्वम्, अतो मृषात्वेनैव मृषात्वस्य बाधः, 'जननी मे वन्ध्या' इति जननीति धर्म्युक्त्यैव वन्ध्यात्वबाधः। सोऽयं स्ववचनविरोध इति ।

पूर्वसञ्जल्पविरोधमुदाहरति—

**बौद्धस्य शब्दनित्यत्वं पूर्वोपेतेन बाध्यते ।**

सर्वलोकप्रसिद्धिविरोधमुदाहरति—

**चन्द्रशब्दाभिधेयत्वं शशिनो यो निषेधति ॥ ६४ ॥**
**स सर्वलोकसिद्धेन चन्द्रज्ञानेन बाध्यते ।**

चन्द्रशब्देन हि शशिविषयं विज्ञानं सर्वलोकप्रसिद्धमुपजायमानं तस्य तदभिधेयतां बोधयदनभिधेयत्वं बाधत इति। एतेन च प्रतिज्ञाविरोधादयः शब्दसंस्पर्शित्वमात्रेण शब्दविरोधा इत्युच्यन्ते, न त्वत्र क्वचिदपि शब्देन प्रतिज्ञातार्थो बाध्यते, सर्वत्रानुमानेनार्थापत्त्या प्रत्यक्षेण वा बाधः। य एव तु श्रुतिस्मृतिविरुद्धोऽर्थः प्रतिज्ञायते, यथा 'शुचि नरशिरःकपालं प्राण्यङ्गत्वाच्छुक्तिवत्', 'अग्निहोत्रं न स्वर्गसाधनं क्रियात्वाद् भोजनवत्', 'अग्निषोमीयहिंसा प्रत्यवायकरी हिंसात्वाद् ब्रह्महत्यादिवत्' इति, अत्रैवागमबाधः। पदार्था ह्यगृहीतसम्बन्धा एवागमार्थं बोधयन्तो नियमस्मरणसापेक्षाल्लिङ्गाद् बलीयांसो भवन्तीत्यनुमानादागमस्य बलीयस्त्वम्। विशेषतश्च वेदस्य निर्दोषस्यानन्यथासिद्धेश्च सम्भवाद् दोषादन्यथोपपत्तेश्चानुमानाद् बलीयस्त्वमिति ।

उपमानविरोधमुदाहरति—

**ज्ञातगोगवयाकारं प्रति यः साधयेदिदम् ॥ ६५ ॥**
**न गोर्गवयसादृश्यं तस्य बाधोपमानतः ।**

अर्थापत्तिविरोधं दर्शयन् दृष्टार्थापत्तिविरोधस्य तावदुदाहरणपञ्चकं दर्शयति द्वयेन—

**गेहावगतनास्तित्वो जीवंश्चैत्रो यदा बहिः ॥ ६६ ॥**
**नास्तीति साध्यते बाधस्तत्रार्थापत्तितो भवेत् ।**

---

१. संकल्प०—१ पु० । २. मृषात्वेन—१ पु० ।

**अग्नावदाहके साध्ये शब्दे चानभिधायके ॥ ६७ ॥**
**श्रोत्रादिनास्तितायां च शब्दानित्यत्वसाधने ।**

दृश्यादर्शनावगतगृहाभावकल्पितस्य बहिर्भावस्याभावप्रतिज्ञाऽभावपूर्विकयार्थापत्त्या बाध्यते, वह्नेस्तु प्रत्यक्षावगतदाहकल्पिततच्छक्तेरदाहकत्वम् अतच्छक्तित्वं प्रत्यक्षपूर्विकया चेष्टानुमितज्ञानकल्पिताभिधानशक्त्यनुमानमनुमानपूर्विकया शब्दज्ञानकारणत्वेनानुमितस्य कर्णशष्कुल्यवच्छिन्नस्य दिगाकाशाहङ्काराणामन्यतमस्य सामर्थ्ये कल्पिते तदभावानुमानस्यानुमानपूर्विकयार्थापत्त्या बाध. । श्रोत्रशब्देन तच्छक्तिर्लक्ष्यते । तथा [1]अर्थापत्तिसिद्धाभिधानशक्त्यन्यथानुपपत्तिकल्पितशब्दनित्यत्वविपरीता नित्यत्वपक्षस्यार्थापत्तिपूर्विकया ।

श्रुतार्थापत्तिविरोधमुदाहरति—

**श्रुतार्थापत्तिबाधोऽत्र यदाप्तोक्तिनिवारिते ॥ ६८ ॥**
**दिवाभुजौ निषिध्येत[2] हेतुना रात्रिभोजनम् ।**

अभावविरोधमुदाहरति—

**शशशृङ्गादिसद्भावविरोधोऽनुपलब्धितः ॥ ६९ ॥**

भावप्रमाणवदेव चाभावस्यापि बलाबलभाव, प्रमाणेषु यद् यतो बलीयः तदभावोऽपि ततो बलीयान्, यच्च यतो दुर्बल तदभावोऽपि ततो दुर्बल इति वेदितव्यमिति ॥ ६९ ॥

एवमुदाहृतं प्रत्यक्षादिबाधमुपसहरति—

**एवं च धर्मसम्बन्धबाधस्तावदुदाहृतः ।**

धर्मसम्बन्धो हि धर्मिणोऽनुमानस्य प्रमेयः[3], तत्स्वरूपस्य प्रत्यक्षादिबाधो दर्शित इति धर्मस्वरूपवत् तद्विशेषस्य धर्मिस्वरूपतद्विशेषयोरुभयस्वरूपतद्विशेषयोश्च प्रत्यक्षादिबाधो दर्शयितव्य इत्याह—

**धर्मधर्म्युभयेषां च स्वरूपस्व[4]विशेषयोः ॥ ७० ॥**

धर्मग्रहण दृष्टान्तार्थम् । अत्र पूर्वाभ्युपगमबाधे यत्किञ्चिद्विशेषबाधोऽपि दूषणमेव । प्रत्यक्षादिबाधस्तु प्रतिज्ञातस्यैव[5] विशेषस्य वक्तव्यो यो धर्मधर्म्युक्त्यैवावर्जनीय तयार्थादाक्षिप्यते, तद्बाधेऽपि प्रतिज्ञातार्थे बाधो भवति, अत उक्तम्—

**श्रुत्यर्थाक्षिप्तयोर्वाक्ये वाच्यः सर्वप्रमाणकः ।**

श्रुत्युपात्तस्य स्वरूपस्य, अर्थाक्षिप्तस्य च विशेषस्येत्यर्थः । यस्तु विशेषो नाक्षिप्यते तस्मिन् बाधितेऽपि न प्रतिज्ञातार्थो बाधितो भवति । तस्य यदि वाद्युप-

---

१. अर्थापत्ति. सिद्धा—मु० पा० ।
२. दिवाभुजेर्निषिद्धेन—१ पु० । दिवाभुजौ निषिधेन—२ पु० ।
३. प्रमेयतत्स्व०—मु० पा० ।    ४. स्वरूपत्वेति पाठान्तरम् ।
५. प्रतिज्ञातस्येव—मु० पा० ।

गममात्रेण प्रतिवादी बाधं ब्रूयात्, ततः प्रकृतात् सिद्धान्तान्तरदूषणं नाम निग्रह-स्थानमापद्यत इति।

तत्र धर्मविशेषबाधमुदाहरति—

**तृणादिविक्रियाहेतोरग्निमद्धिमसाधने ॥ ७१ ॥**
**प्रत्यक्षावगताच्छैत्यात् तद्विशेषोत्थबाधनम्।**

अग्निर्हि उष्णत्वव्याप्त स्वव्यापकमुष्णत्वमाक्षिपेत्, तस्य च प्रत्यक्षावगतेन शैत्येन बाधात् तद्व्याप्तोऽग्निरपि बाधितो भवति।

धर्मिस्वरूपतद्विशेषबाधमुदाहरति सार्द्धेन—

**अधर्मो विहितो दुःखं करोत्यल्प[1]मितीह तु ॥ ७२ ॥**
**विहितत्वादधर्मस्य स्वरूपस्यैव बाधनम्।**
**तथा दुःखनिमित्तत्वं विशेषस्तस्य बाध्यते ॥ ७३ ॥**

विहितग्रहणमुपलक्षणमात्र न तु धर्मि, तद्विशेषणं वा। तदयमर्थ.—योऽग्नीषो-मीयहिंसाद्यधर्म, सोऽल्पदु ख करोति इति। अत्र चाधर्मत्वादेवार्थाक्षिप्त दु.खकर-त्वम्। अल्पत्वस्य विपयज्ञानार्थमुपात्तमल्पत्वमेव साध्यते, तदिहाधर्मस्वरूप-धर्मिणो विहितत्वादेव बाध., आगमेन बाध इत्यर्थ। तथा यो दु.खकरत्वमधर्मस्य धर्मिणो विशेपोऽर्थाक्षिप्त., तस्याप्यागमेनैव बाध., तद्बाधे च तद्विषयमल्पत्वमपि प्रतिज्ञातार्थो बाधित भवतीति ॥ ७३ ॥

उभयस्वरूपतद्विशेषबाधमुदाहरति पादत्रयेण—

**'अयथार्था धियः सर्वाः' इत्युक्ते द्वयबाधनम्।**
**स्वरूपस्वविशेषाभ्याम्,**

कारणमाह—

**तद्धीमिथ्यात्वसाधनात्[1] ॥ ७४ ॥**

कौ पुनरनयोर्विशेषौ ? तौ दर्शयति—

**क्षणिकात्यन्तमिथ्यात्वे विशेषौ च द्वयोरिह।**

ज्ञानस्वरूपस्य तद्विशेषस्य च क्षणिकत्वस्यायथार्थत्वस्य तद्विशेषस्य चात्यन्तिकत्वस्य बाध', तद्ग्राहिणीनामपि धियां मिथ्यात्वापातात्। सोऽय प्रतिज्ञयैव धर्म-धर्मिस्वरूपयोर्बाधात् स्ववचनबाध। पूर्वं धर्मोक्त्या धर्म्युक्त्या च बाधो वर्णितः, सम्प्रत्युभयोक्त्या, सोऽयं **निरालम्बनवादे** दर्शित.। क्षणिकात्यन्तिकयोश्च धर्म-धर्मिविशेषयोरभ्युपगतयोर्बाधात् पूर्वाभ्युपगमबाध इति।

नन्वप्रसिद्धविशेष्यत्वमप्रसिद्धविशेषणत्वमप्रसिद्धोभयत्व च दोषा. किमिति नोच्यन्ते, **निरालम्बनवाद** एवाप्रसिद्धोभयत्व वा वाच्यम्, अन्यतरस्य वेति दर्शि-तत्वादुदाहरणमपि नान्यन्मृग्यम्। नन्वदृष्टस्वलक्षणस्यापि कर्मण. सयोगविभागा-

१. अलमिति पाठा०। १. ०बोधनात्—का०।

भ्यामनुमानादप्रसिद्धविशेषणत्वं दोष', कथं पुनरदृष्टस्वलक्षस्यानुमानमुत्पत्तिमतः फलस्य दर्शनादिति चेत् ? नन्वेवं संयोगविभागावुत्पत्तिकारणजन्याविति पक्षः स्यात्, प्रसिद्धं चोत्पत्तिकारणजन्यत्वं घटादाविति नाप्रसिद्धविशेषणत्वम् । अथ कर्मजन्याविति साध्येनागृहीते कर्मणि तद्विशिष्टबुद्ध्यसम्भवात्, न ह्यगृहीतविशेषणा विशेष्ये बुद्धि', अथ कर्मस्वरूपमप्यनुमानेनैव गृह्येत ? न, अत्यन्तादृष्टेन तेन कस्यचिल्लिङ्गस्य सम्बन्धग्रहणासम्भवात् । यश्च दृष्टस्यापि वह्न्यादेर्देशकालान्तरसम्बन्धमात्रमप्यगृहीत नानुमानेन गृह्यते, गृहीतविषयमेवानुमानमिति वदति, स कर्मस्वरूपमेवागृहीतमनुमानेन गृह्यत इति वदन्नुन्मादमेवात्मनः प्रकटयतीत्यास्ता तावत् ।

एवमसन्निकृष्टग्रहणनिरस्ता' प्रतिज्ञाभासाः प्रपञ्चिताः ॥

सम्प्रति हेत्वाभासानसिद्धानैकान्तिकविरुद्धान् प्रपञ्चयन् एकदेशदर्शनादित्यनेन दर्शनशब्देन निश्चयवाचिना निरस्तमसिद्ध दर्शयति—

**दर्शनादेकदेशस्येत्यनेनैतद् व्युदस्यते ॥ ७५ ॥**
**यत्रैकस्योभयोर्वापि सशयाधीविपर्ययाः ।**

वादिप्रतिवादिनोरेकस्य द्वयोर्वा सशयाज्ञानविपर्यया यस्मिन् सोऽनिश्चितत्वादसिद्धोऽनेन व्युदस्यत इति ।

द्वयोर्विपर्ययासिद्धिमुदाहरति—

**शैत्यान्न दाहको बह्निश्चाक्षुषत्वादनित्यता ॥ ७६ ॥**
**शब्दस्येत्येवमादौ तु द्वयोः सिद्धो विपर्ययः ।**

अन्यतरस्य विपर्ययासिद्धिमुदाहरति—

**कृतकत्वगुणत्वादौ परोक्ते याज्ञिकं प्रति ॥ ७७ ॥**
**स्वोक्ते चैवम्प्रकारे स्यादसिद्धोऽन्यतरस्य तु ।**

शब्दानित्यत्वे हि यदेव **मीमांसकं** प्रति **वैशेषिकादिभि.** कृतकत्वगुणत्वादिकं हेतुत्वेनोच्यमान प्रतिवादिनोऽसिद्धम्, तदेव **मीमांसकेनो**च्यमान वाद्यसिद्धमिति ।

सन्दिग्धासिद्धमुदाहरति पादत्रयेण—

**बाष्पादिभावसन्दिग्धो द्वयोरन्यतरस्य वा ॥ ७८ ॥**
**धूमस्त्रिधाप्यसिद्धः स्यात्,**

**त्रिधापी**ति । वादिप्रतिवाद्युभयेषामिति । अज्ञानासिद्धिस्त्वप्रसिद्धार्थपदप्रयोगे दर्शयितव्येति ।

एवं तावत् स्वरूपतोऽसिद्धिमुक्तामुपसहरति—

**एवं तावत् स्वरूपतः ।**

आश्रयद्वारेणापि हेतोरसिद्धिः, एवमेवाज्ञानसंशयविपर्ययैर्वादिप्रतिवाद्युभयापेक्षैर्वक्तव्येत्याह—

**एत एव प्रकाराः स्युराश्रयासिद्धिकल्पने ॥ ७९ ॥**

कथं पुनर्धर्म्यसिद्धौ हेतोरसिद्धिः ? अत आह—

**ज्ञातेऽपि हि स्वरूपेण नातद्धर्मेऽस्ति हेतुता।**

पक्षसम्बन्धितारूपेण हि हेतुत्वम्, अज्ञाते च धर्मिणि न तद्धर्मत्वं ज्ञायत इति भवत्येव हेतोरसिद्धिरिति।

उदाहरणमाह—

**सर्वत्र दृष्टकार्यत्वादात्मा सर्वगतस्त्विति ॥ ८० ॥**

**बौद्धं प्रत्याश्रयासिद्धः, लौकिकादेस्तु संशयः[1]।**

बौद्धस्यात्माभावनिश्चयाद् विपर्ययासिद्धिः, पृथग्जनानां देहातिरिक्ते पुंसि संशयात्[2] तेषां सन्दिग्धाश्रयासिद्धिरिति।

ननु यद्यन्यतरासिद्धिर्दूषणं नतस्तिस्रोऽपि कथा समुच्छिद्येरन्, सर्वत्र हि स्वानभिमतार्थसाधनमसहमाना प्रतिवादिनो हेत्वसिद्धिमात्मनो ब्रूयुः, तावता च तस्य दूषणं सिध्येत्, तत्र "चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः, करणैर्जन्यमानत्वात्" ( श्लो० वा० २—१८४ ) इत्युक्ते शाक्यादयो वेदानामनाप्तप्रणीतत्वं मन्यमानाः हेत्वसिद्धिमुक्त्वैव कृतार्थाः स्युः, ततश्च **मीमांसकाः** पराजीयेरन्, अत आह द्वयेन—

**वाङ्मात्रासिद्धिमात्रेण व्यवहाराप्रकल्पनात् ॥ ८१ ॥**

**द्वाभ्यां योऽसत्त्वतो[3] ज्ञातस्तद्वचो दूषणं मतम्।**

**इतरत् साधनं तु स्याद् वादिना यदि साध्यते ॥ ८२ ॥**

**निराकरणसिद्धौ वा दूषणं प्रतिवादिनः।**

सत्यम्, वाङ्मात्रेणासिद्ध्युद्भावनेन दूषणव्यवहारो न प्रकल्पते, अत एव न तन्मात्रेण दूषणत्वं ब्रूमः, किन्तु यो हेतुः प्रतिवादिनासिद्धत्वेनोद्भावितोऽपि वादिप्रतिवादिभ्यां यथावन्निरूप्यमाणोऽसत्त्वेन सम्प्रतिपन्नो भवति तस्यैव वचनं दूषणम्। भवति च तत्त्वपरत्वे वादिप्रतिवादिनोः सम्प्रतिपत्तिः। यत्तु वादिनः प्रतिवादिनो वा कर्कशत्वान्न कथञ्चिदुभाभ्यां सत्त्वेन वासत्त्वेन वा सम्प्रतिपन्नं भवति, तद्यदि वादी प्राश्निकेभ्यः प्रतिपादयेत्, ततोऽसत्यामपि प्रतिवादिसम्प्रतिपत्तौ सम्यक् साधनं भवति। यदि तु प्रतिवाद्येवासिद्धिं तेभ्यः प्रतिपादयेत्, ततोऽसत्यामपि वादिसम्प्रतिपत्तौ दूषणमेव स्थितं भवतीति ॥ ८२ ॥

ज्ञातसम्बन्धपदव्यावर्त्तितावनैकान्तिकाविरुद्धाख्यौ संशयविपर्ययहेतू दर्शयति पादत्रयेण—

**सन्देहविपरीतत्वहेतू चात्र निराकृतौ ॥ ८३ ॥**

**ज्ञातसम्बन्धवचनात्,**

---

१. संश्रयः—३ पु०। २. देहातिरिक्तेषु तत्संशयादिति—२ पु०।

३. योऽतत्त्वतः—१ पु०।

उभयोरपि व्याप्त्यभावाद् व्याप्तिवचनेन ज्ञातसम्बन्धपदेन व्यावृत्तिरिति।

संशयहेतुस्त्रिविध इत्याह—

**त्रयः संशयहेतवः।**

तानेव दर्शयति—

**सन्[1] साध्ये तदभावे वा[2] द्वाभ्यां[3] व्यावृत्त एव च॥ ८४॥**

**द्वौ विरुद्धार्थसम्बद्धौ यावेकत्रैकदेशिनि।**

साध्यतदभावयोः सपक्षविपक्षयोर्वर्तमानः **साधारणानैकान्तिकः**, ताभ्यां सपक्षविपक्षाभ्यां व्यावृत्तः केवलपक्ष एव वर्त्तमानोऽ**साधारणः**, धर्म्यन्तरेषु विरुद्धार्थव्याप्य हेतुद्वयमेकत्रैकदेशिनि दृश्यमानं **विरुद्धाव्यभिचारी**ति।

साधारणमुदाहरति—

**प्रमेयानित्यतामूर्तिधर्माः साधारणा द्वयोः॥ ८५॥**

हेतुवर्गे द्विरनित्यता पठनीया, तेऽमी प्रमेयत्वादयश्चत्वारो यथाक्रमं नित्यत्वादिषु साध्येषु द्वयोः सपक्षविपक्षयोः साधारणाः। प्रमेयत्वं हि नित्येषु व्योमादिष्वनित्येषु घटादिषु विद्यते, अनित्यत्वं च यत्नोत्थेषु घटादिषु, अयत्नोत्थेषु विद्युदादिषु विद्यमानं द्वयोरन्यतरस्यापि साधनत्वेनोच्यमानम् उभयवर्त्तित्वात् साधारणम्। अमूर्त्तत्वमपि नित्येषु व्योमादिष्वनित्येषु कर्मादिषु भावात् साधारणम्। अतः साध्यतदभाववृत्तिभिर्हेतुभिरुभयोः संशयो भवति, नैकत्रापि निश्चय इति चतुर्ष्वपि साध्येषु शब्दो धर्मी[4]॥ ८५॥

असाधारणमुदाहरति—

**नित्यायत्नोत्थयत्नोत्थानित्येषु द्विरनित्यतः[5]।**

**नित्या भूर्गन्धवत्त्वेन स्यादसाधारणस्त्वयम्॥ ८६॥**

भूमावेव हि गन्धो नान्यत्र क्वचिन्नित्येष्वनित्येषु वा विद्यते, अतोऽसाधारणोऽयमिति॥ ८६॥

युक्तं तावत् साधारणो द्वाभ्यां सह दृष्टो द्वये स्मृतिं जनयन् संशयहेतुरिति, यश्चासाधारणः स केनापि सहादृष्टः क्वचिदपि बुद्धिमनादधत् कथं संशयहेतुः? अत आह—

**निश्चयैकाङ्गवैकल्यादेष संशयकारणम्[6]।**

सपक्षान्वयो विपक्षव्यतिरेकश्च द्वयं निश्चयाङ्गम्, तत्र साधारणस्य सपक्षान्वयोऽस्ति, विपक्षव्यतिरेकस्तु नास्ति, तत्रापि वृत्तेरसाधारणस्य विपक्षव्यति-

---

१. सत्—१ पु०। २. च—२ पु०। तदबाह्ये च—३ पु०।
३. ताभ्यामिति पाठा०। ४. धर्मीति। पक्ष इत्यर्थः।
५. नित्ये बुद्धिरनित्यत—३ पु०। ६. उभौ संशयकारणम्—२ पु०।

रेकोऽस्ति न सपक्षान्वयोऽस्ति। तेन निश्चयैकाङ्गवैकल्यात् साधारणवदसाधारणोऽपि संशये कारणमिति।

नन्वेकाङ्गविकलतामात्रेण क्वचिदपि द्वयोर्बुद्धिमनादधतः कथं संशयहेतुत्वम्? अत आह द्वयेन—

**साधारणो यथा दृष्टो बुद्धिद्वयनिमित्तकः॥ ८७॥**
**विरुद्धैकानवाप्तेश्च संशये कारणं मतम्।**
**अत्रासाधारणो[1] नास्ति तदभावमुखेन तु॥ ८८॥**
**द्वयासत्त्वविरोधाच्च मतः संशयकारणम्।**

न हि साधारणो द्वयोः स्मृतिजननात् संशयहेतुः, किन्तु द्वाभ्यां सह दृष्टः पक्षधर्मिणि दृश्यमानो द्वयमपि तत्रानुमापयति, द्वयोश्चैकत्र विरोधात् संशयो भवति। संशयनिमित्तानुमानबुद्धिद्वयं यस्य कार्यतया विद्यते स बुद्धिद्वयनिमित्तकः। एवमसाधारणोऽपि यत्र नित्येऽनित्ये वा नास्ति तयोरुभयोः पक्षधर्मिण्यभावमनुमापयन्नुभयाभावस्य त्वेकत्रासम्भवात् संशयहेतुरिति।

तदिदं **शाक्यमतेना**साधारणस्य संशयहेतुत्वमुक्तम्, स्वयं त्वस्य संशयहेतुत्वं प्रदेशान्तरे निरस्तम्। न हि साधारणो द्वयमनुमापयन् संशयनिदानम्, द्वयोरपि नियमाभावेनानुमानासम्भवात्, किन्तु द्वाभ्यां सहदृष्टिमात्रेण द्वयोः स्मरणं जनयति। यस्त्वसाधारणः क्वचिदप्यदृष्टो धर्मिवदेव न क्वचिद् भावे अभावे वा स्मृतिं जनयतीति नास्य संशयहेतुत्वमिति।

किं पुनरुदाहृतानां स्वाभाविकमेव संशयहेतुत्वम्? नेत्याह—

**सन्दिग्धहेतुता चैषां विषयापेक्षयोच्यते[2]॥ ८९॥**

कस्मात्? इत्यत आह पादत्रयेण—

**निर्णयस्यापि हेतुत्वं दृष्टं साध्यान्तरे यतः।**
**व्यवच्छेदान्वयौ लब्ध्वा,**

क्व दृष्टम्? इत्याह—

**निष्क्रियादावमूर्तिवत्॥ ९०॥**
**क्षित्येकदेशसिद्धत्वे गन्धवत्त्वस्य हेतुता।**

अमूर्त्तत्वं हि नित्यत्वे साध्ये कर्मादिष्वपि वर्त्तमानं विपक्षव्यवच्छेदाभावात् संशयहेतुः। निष्क्रियत्वे तु साध्ये तल्लाभान्निर्णयहेतुर्भवति, तथा गन्धवत्त्वमपि सर्वस्याः पृथिव्या नित्यत्वेन पक्षीकृतायाः पृथिवीव्यतिरेकेणान्यत्र क्वचिदप्यभावादलब्धसपक्षान्वयं संशयहेतुः। तदेव क्षित्येकदेशस्य सिद्धत्वेन तदेकदेशे साध्ये तदेकदेशान्तरे साध्यान्वयलाभान्निर्णयहेतुरिति।

विरुद्धाव्यभिचारित्वमुदाहरति—

---

१. यत्रासाधारणो—२ पु०। २. ०इष्यते—३ पु०।

**यत्राप्रत्यक्षता वायोररूपत्वेन साध्यते ॥ ९१ ॥**
**स्पर्शात् प्रत्यक्षता वासौ विरुद्धाव्यभिचारिता ।**

द्रव्यत्वे सत्यरूपत्वादिति, महत्त्वे सति स्पर्शवत्त्वादिति च । तामिमां विरुद्धाव्यभिचारितां **केचित्** साधारणासाधारणाभ्यां जात्यन्तरं वर्णयन्ति । **अपरे** तु द्वयमप्यंशेन सपक्षविपक्षयोर्वर्त्तमानं साधारणेऽन्तर्भावयन्ति । द्वयस्यापि मिलितस्यात्र क्वचिदप्यभावादसाधारणत्वमित्यन्ये । तदाह—

**केचिज्जात्यन्तरं चैनां वर्णयन्त्यपरे पुनः ॥ ९२ ॥**
**साधारणत्वमंशेन समस्तं वाप्यनन्वयम्[1] ।**

स्वयं तु जात्यन्तरत्वमेवात्राभिमतम्, 'त्रय संशयहेतव'' इत्युक्तत्वादिति ।

कथं पुनरेव साधनद्वयनिमित्ते संशये निर्णय' ? अत आह—

**प्रतिज्ञा यत्र बाध्येत पूर्वोक्तैर्यस्य साधनैः ॥ ९३ ॥**
**तत् पराजयतः कार्यो निर्णयो बाधवर्जनात् ।**

यस्य साधनस्य प्रतिज्ञा प्रत्यक्षादिना बाध्यते तस्य पराजय कृत्वेतरेण निर्णय., तस्य बाधाभवाद्यथा वागाविवापरीक्षानुभवेनाप्रत्यक्षानुमान बाध्यत इति ।

यत्तु **भिक्षुणा** "पक्षधर्मस्तदंशेन व्याप्तो हेतु " (प्र० वा० ३-१) इति एकस्यैव हेतुत्वविवक्षयानेकयोर्विरुद्धाव्यभिचारिणोराभासत्व दर्शितम्, तन्निराकरोति—

**क्वचित् संशयहेतू यौ प्रत्येकत्वेन लक्षितौ ॥ ९४ ॥**
**सङ्घाते निर्णयस्ताभ्यामूर्ध्वताकाकवत्त्ववत् ।**

न हि विरुद्धाव्यभिचारिणोरनेकत्वादनिर्णायकत्वम्, ऊर्ध्वत्वकाकनिलयनाभ्यां स्थाणुपुरुषस्थाणुस्थलसाधारणाभ्या प्रत्येक स्थाणुत्वनिर्णयासमर्थाभ्यामपि सहिताभ्या ताभ्यामेव स्थाणुत्वनिर्णयदर्शनादिति ।

तथा प्रत्येकमग्न्यनुमापकाभ्या गन्धविशेषधूमाभ्या सहिताभ्यामपि विरोधिभ्या तदनुमान दृश्यते, अतो नानेकत्वमहेतुत्वकारणमित्याह—

**प्रत्येकं संहतौ[3] वापि गमकावविरोधिनौ ॥ ९५ ॥**

तस्माद् विरुद्धार्थव्याप्तानेकहेतुसन्निपात एव संशयनिमित्तत्वेनोदाहर्त्तव्यः । नानेकत्वमात्रमिति एकत्वविवक्षाभिधानमनुपपन्नम्, तथा हि अविरुद्धस्याप्यनेकस्य निरास. स्यात्, स चायुक्त इत्युक्तम्, तदाह—

**तस्माद् भिन्नौ विरुद्धार्थौ[4] हेतू चात्र[5] निदर्शितौ ।**

प्रपञ्चितस्त्रिधा संशयहेतु., विपरीतहेतु प्रपञ्चयति—

**षोढा विरुद्धतामाहुश्चतुर्द्धा वैकधापि वा ॥ ९६ ॥**

---

१. असन्मयम्—२ पु० । २. बाध्य०—३ पु० । ३. संहितौ—३ पु० ।
४-५. विरुद्धार्थहेतू वात्र—३ पु० । विरुद्धौ वा०—२ पु० ।

धर्मधर्म्युभयेषां स्वरूपविशेषाभ्यां षड्विधत्वमुभयस्यैकैकानतिरेकात् चतुर्विधत्वम्, अवान्तरभेदस्यानुपयोगात्, प्रतिज्ञार्थबाधाविशेषादेकविधत्वमिति।

कीदृशे विषये विरुद्धता ? तां दर्शयति—

**श्रुत्यर्थोक्तस्य बाधायां प्रतिज्ञार्थस्य हेतुना।**

धर्मविशिष्टधर्मिवचनं प्रतिज्ञा, तेन श्रुत्युक्तस्य धर्मधर्मिस्वरूपस्यार्थाक्षिप्तस्य तद्विशेषस्य यत्र हेतुना बाधः तत्र विरुद्धतेति। सोऽयं प्रतिज्ञार्थं बाधमानो विरुद्धश्च बाधक इति वा विरोधीति वा वाच्यो न विरुद्ध इति, शाक्यपरिभाषया तु विरुद्धशब्द इति।

धर्मस्वरूपबाधमुदाहरति—

**नित्यत्वे कृतकत्वस्य धर्मबाधाद् विरुद्धता॥ ९७॥**

धर्मविशेषबाधमुदाहरति सार्द्धद्वयेन—

**बाधो धर्मविशेषस्य यदा त्वेवं प्रयुज्यते।**
**अर्थवच्छब्दरूपं स्यात् प्राक्सम्बन्धावधारणात्॥ ९८॥**
**विभक्तिमत्त्वात् पश्चाद्वत् स्वरूपेणेति चाश्रिते।**
**अस्वरूपार्थयोगस्तु पश्चाच्छब्दस्य दृश्यते[1]॥ ९९॥**
**तेन प्रागपि सम्बन्धादस्वरूपार्थता भवेत्।**

यो हि स्वरूपमेव शब्दानामभिधेयमित्याश्रित्य तत्सिद्ध्यर्थमेव प्रयुङ्क्ते; सम्बन्धग्रहणात् प्रागपि शब्दोऽर्थवान्, अर्थं बोधयतीति यावत्, विभक्तिमत्त्वात् पश्चाद्वदिति, सिद्धे चार्थबोधनेऽर्थान्तरबोधाभावात्स्वरूपार्थत्वं सिद्धं भवतीति; तं प्रत्युच्यते। सम्बन्धग्रहणात् पश्चात् स्वरूपातिरिक्तार्थबोधेन विभक्तिमत्त्वस्य व्याप्तिदर्शनाद् दृष्टान्तानुसारेण प्रागप्यस्वरूपार्थबोधनमेव साधयेत्, तच्च प्रमाणान्तरविरोधादशक्यं साधयितुम्। यत्तु शक्यं स्वरूपार्थत्वं तदनेनैव हेतुना बाध्यते। शक्यते हि प्रयोक्तुं प्राक् सम्बन्धान्न स्वरूपार्थत्वं विभक्तिमत्त्वात् पश्चाद्वदिति। यदा चार्थान्तरबोधनं दृश्यादर्शनेन स्वरूपार्थत्वं च हेतुनैव बाधितम्, तदा प्रकारान्तरासम्भवादर्थवत्त्वमेव प्रतिज्ञार्थो बाधितो भवतीति।

धर्मिस्वरूपतद्विशेषबाधोदाहरणमाह—

**इहप्रत्ययहेतुत्वाद् द्रव्यादेर्व्यतिरिच्यते॥ १००॥**
**समवायो[2] यथेहायं घट इत्यादिसङ्गतिः।**

सङ्गतिः=संयोग इति।

स्वरूपबाधं दर्शयति—

**अत्राप्यसमवायत्वं संयोगस्यैव सिध्यति॥ १०१॥**
**तेन धर्मिस्वरूपस्य वैपरीत्याद् विरुद्धता।**

१. दृश्यते—३ पु० २. समवायं— मु० पा०।

विशेषविरोधं दर्शयति--

**यच्च सत्तावदेकत्वं समवायस्य कल्पितम् ॥ १०२ ॥**
**तत्र संयोगवद्भेदात् स्याद् विशेषविरुद्धता ।**

संयोगे हि प्रतिद्रव्य भेदेन व्याप्तमिह प्रत्ययहेतुत्व समवायस्यापि भेदमापादयत् तस्य विशेषसत्तावदेकत्व **वैशेषिका**भिमत बाधेतेति ॥ १०२ ॥

उभयस्वरूपबाधमुदाहरति—

**नित्यमात्मास्तिता कैश्चिद् यदा सौत्रान्तिकं प्रति ॥ १०३ ॥**
**साध्यतेऽवयवाभावाद् व्योमवद् द्वयबाधनम् ।**

**सौत्रान्तिक**स्यावरणाभावमात्र व्योम, अभावस्य तुच्छत्वात् स्वरूपमेव नास्ति, नतरां नित्यत्वम्, अतस्तेनैव दृष्टान्तेनात्मनोऽपि स्वरूप नित्यता चानवयत्वं बाधेतेति ।

उभयविशेषबाधमुदाहरति—

**तदोभयविशेषस्य बाधोऽयं साध्यते यदा ॥ १०४ ॥**
**पारार्थ्यं चक्षुरादीनां सङ्घाताच्छयनादिवत् ।**

**सांख्या**ना प्रकृत्यनिरिक्तं पुमासं माधयतामय प्रयोग', सिद्धे पारार्थ्ये योऽसौ परः स पुमानित्यभिप्रायः । **सङ्घातात्** सत्त्वरजस्तमआत्मकत्वादित्यर्थ. ।

अत्र विशेषविरोध दर्शयति—

**शयने सङ्घपारार्थ्यं भौतिकव्याप्तहेतुके ॥ १०५ ॥**
**आत्मानं प्रति पारार्थ्यमसिद्धमिति बाधनम् ।**

शयनादिषु सङ्घात्मकशरीरपारार्थ्यन भौतिकत्वेन च व्याप्त. संहतत्वहेतुर्दृष्ट इति स चक्षुरादीनामपि संहतपारार्थ्यसाधनादिष्टमसंहतरूप प्राकृतै सत्त्वरजस्तमोभिरसम्पृक्तं चिन्मात्ररूपमात्मानं प्रति पारार्थ्यं धर्मविशेषं धर्मिणामपि चक्षुरादीनां धर्मविशेषमाहङ्कारिकत्वं बाधेतेति ।

एतदेव विवृणोति—

**असंहतपरार्थत्वे दृष्टे संहततापि च ॥ १०६ ॥**
**अनहङ्कारिकत्वं च चक्षुरादेः प्रसज्यते ।**

संहतरूपवस्त्वन्तरपारार्थ्यसाधनात् प्रकृत्यतिरिक्तात्मपारार्थ्यमभिमत न सिध्येत्, अतो न सिषाधयिषितात्मसिद्धिरिति ।

दर्शिता हेत्वाभासा' । सम्प्रति ज्ञातसम्बन्धपदव्यावर्त्तितानेव दृष्टान्तदोषान् दर्शयितु दृष्टान्तवचनमेव तावत् प्रस्तौति--

**गमकस्यैकदेशस्य व्याप्तिर्गम्येति[1] भाषितुम् ॥ १०७ ॥**
**साध्यसाधर्म्यवैधर्म्यदृष्टान्तः प्रतिपाद्यते ।**

---

१. व्याप्तं गम्येत—३ पु० ।

साध्यो धर्मविशिष्टो धर्मी, तत्साधर्म्येण साध्यधर्मवत्तया वैधर्म्येण च तद-भाववत्तया चावस्थितो यो दृष्टान्त स गमकस्य हेतोर्गम्येन व्याप्ति दर्शयितुं प्रतिपाद्यत इति ।

प्रतिपादनप्रकार दर्शयति—

**तत्र हेत्वर्थमुद्दिश्य साध्योपादानमिष्यते ॥ १०८ ॥**

हेतुः साधनवाक्यावयवः कृतकत्वादित्यादि·, तस्यार्थः कृतकत्वादिलिङ्गम्, तमुद्दिश्यानित्यत्वादे , साध्यस्योपादान कार्यम् ॥ १०८ ॥

कस्मात् ? इत्याह—

**उद्देश्यो व्याप्यते धर्मो व्यापकश्चेतरो मतः ।**

यदुद्देशेन हि यदुपादीयते तस्य तेन व्याप्ति· कथिता भवति, तेन लिङ्गस्य व्याप्यता लिङ्गिनश्च व्यापकता दर्शयता लिङ्गोद्देशेन लिङ्ग्युपादीयत इति ।

कीदृशः पुनरुद्देश ? कीदृश चोपादानम् ? तद्दर्शयति—

**यद्वृत्तयोगः प्राथम्यमित्याद्युद्देशलक्षणम्[1] ॥ १०९ ॥**
**तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ।**

कि यत्तद् वृत्तग्रहण तानेव विभक्त्यन्तान् डतरडतमान्ताश्च गृह्णाति यत्कृतकं तदनित्यमेवेति ।

ननु यथा वा तथा वा रचित वाक्य वक्तुर्विवक्षितं प्रतिपादयत्येवेति कि रचनाविशेषेण ? अत आह—

**वदत्यर्थं स्वशक्त्या च शब्दो वक्त्रनपेक्षया ॥ ११० ॥**

स्वशक्तिमनुरुध्यन्ते शब्दा , न वक्तुरभिप्रायम्, अतोऽवश्यमादर्त्तव्यो रचना-विशेष., तद्वचनमात्रेण साधुता भवति ॥ ११० ॥

किञ्च, अर्थद्वयमपेक्षितव्यम्, न हि लिङ्गलिङ्गिशून्य सपक्ष. समीचीनेनापि वाक्येन यत्तद्युक्ततया निर्दिश्यमान शक्नोति लिङ्गलिङ्गिनोर्व्याप्ति बोधयितुम्, अतो द्वययुक्त एव सपक्षो वक्तव्यो यो व्याप्ति बोधयितु शक्नुयात्, तादृशेनैव सा-ध्यसिद्धिरित्याह—

**साध्यहेतुत्वमर्थानां व्याप्तिशक्त्यनुरोधतः ।**

एवं साधर्म्यवचन स्वरूपतोऽर्थतश्च शोधयित्वा विपर्यये दोषान् दर्शयन् रचनादोषं तावद्दर्शयति त्रयेण—

**तत्राज्ञानाद् यदा वक्ता सहचारविवक्षया[2] ॥ १११ ॥**
**विपर्ययेण वा हेतौ[3] न व्याप्तत्वं विवक्षति ।**
**विवक्षन्नपि वा शब्दं तद्योग्यं न वदेद् यदि ॥ ११२ ॥**

---

१. उद्देश्यलक्षणम्—मु० पा० । २. सहभाव०—का० ।
३. हेतो·—२ पु० ।

**घटे कृतकनाशित्वे नाशिव्याप्तं कृतेन वा।**
**न तदेष्टस्य हेतुत्वम्, स्यादनिष्टस्य चैव तत् ॥ ११३ ॥**
**तस्माद् व्याप्यत्वरूपेण वाच्यो हेतुत्वसम्मतः।**

हेतोर्हि साध्येन नियम. साध्यसिद्धये वक्तव्य.—यत्कृतक तदनित्य घटादिवदिति। यदा त्वज्ञानात् साहित्यमात्र विवक्षन् हेतोरेव वा व्याप्ति विवक्षन्नपि प्रमादात् साहित्य वदति—घटे कृतकनाशित्वे सहदृष्टे इति, न तदा कृतकत्वस्य हेतुत्वमिष्ट सिध्यति। यदा वा साध्यस्य हेतुना व्याप्ति--यदनित्य तत्कृतकमिति, तदापि न परमिष्टस्य कृतकत्वस्य हेतुत्व न सिध्यतीति, किन्त्वनिष्टस्यैवानित्यत्वस्य हेतुत्वं स्यादिति।

सम्प्रत्यर्थान्यथात्वदोषमाह पादन्यूनेन द्वयेन—

**यदा सम्यक् प्रयुक्तेऽपि वाक्येऽर्थो न तथा भवेत् ॥ ११४ ॥**
**साध्यहेतूभयव्याप्तिशून्यत्वात् परमार्थतः।**
**नित्यो ध्वनिरमूर्त्तत्वात् कर्मवत् परमाणुवत् ॥ ११५ ॥**
**घटवद् व्योमवच्चापि,**

साध्यशून्यत्वादिना यथासख्य कर्मादीन्युदाहरणानि। **दृष्टान्ताभासतेति**। वक्ष्यमाणेन सम्बन्ध इति। **व्योमवदिति** च तदभाववादिन **सौत्रान्तिकं** प्रति धर्मसिद्धयापि तदाभासता स्यादित्याह—

**तदसद्वादिनं प्रति।**
**धर्म्यसिद्धावपि ह्येवं दृष्टान्ताभासता भवेत् ॥ ११६ ॥**

व्याप्तिशून्यता विवृणोति—

**तत् सद्भावेऽपि च व्योम्नि द्वययुक्तेऽपि कीर्तिते।**
**कर्माद्यालोचनाद् व्याप्तिर्हेतोर्नास्तीति वर्जनम् ॥ ११७ ॥**

यद्यपि व्योम्नः सद्भाव स्यात्, तच्च नित्यत्वामूर्त्तत्वयुक्तमेव दृष्टान्ततया कीर्तितम्, तथापि तन्निदर्शन निष्फलमेव, कर्माद्यालोचनेनामूर्त्तत्वस्यानित्येष्वपि वृत्तेरनैकान्तिकत्वात्। यद्यपि चाय हेतुदोषो नैकान्तिकत्व नाम, तथापि दृष्टान्तोऽपि व्याप्तिदर्शनार्थत्वात् तदसद्भावेऽनर्थक एव। ते चामी दृष्टान्तदोषा ज्ञातसम्बन्धपदेन व्यावर्त्तिता.। न हि साध्यशून्येषु दृष्टान्तेषु लिङ्गलिङ्गिनो. सम्बन्धज्ञान सम्भवतीति ॥ ११७ ॥

वैधर्म्यवचनमनुसन्धित्सुः प्रथमं तावदनावश्यकत्वं तस्य दर्शयति—

**व्याप्त्या साधर्म्य उक्ते च न वैधर्म्यमपेक्ष्यते।**

यथा व्याप्तिरवगम्यते तथेत्यर्थः।

कदा तर्हि तदपेक्षा ? इत्यत आह सार्द्धद्वयेन—

**सहभावित्वदृष्ट्या तु यदा व्याप्ति न लक्षयेत् ॥ ११८ ॥**

**परः साधर्म्यदृष्टान्तात् तच्च[1] नापेक्षते यदा।**
**वक्ता वा सहभावित्वं शुद्धं तेन वदेद् यदा॥ ११९॥**
**विपरीतान्वयं वापि[2] तत् समाधित्सया तदा।**
**पूर्वज्ञानोपमर्देन वैधर्म्येणेष्टसाधनम्॥ १२०॥**

वादिना सम्यगपि साधर्म्येऽभिहिते यदा प्रतिवादी मानसापचाराद् व्याप्तिमनवबुद्धय साहित्यमात्र साधर्म्यात् मन्यते, यदा वा प्रतिवादी साहित्यं स्वयमेवावगम्य विपक्षव्यतिरेकार्थं वैधर्म्यमेवापेक्षते न साधर्म्यम्, यदा वा वाद्येव साधर्म्य यथावदनुक्त्वा साहित्यमात्रं व्याप्तिविपर्ययं च पूर्ववद् वदेत् तदा तत्समाधित्सया साधर्म्योपजनितविपर्ययज्ञानोपमर्देनापि घटे व्याप्तिदर्शनाय वैधर्म्यं वाच्यमिति॥ १२०॥

तदा तर्हि किं कथितमपि साधर्म्यम् निष्फलमेव ? नेत्याह—

**साहित्यमात्रं पूर्वोक्तं हेतोस्तत्रोपयुज्यते।**

न ह्यसत्यन्वये व्यतिरेकमात्रादर्थः सिध्यति, तेन वैधर्म्येणापि दृष्टं साधयतो यथाकथञ्चिदप्युक्तेन साधर्म्येण यत् साहित्य सिद्ध तदुपयुज्यत इति।

लिङ्गलिङ्गिनोर्व्याप्तिकथनं वैधर्म्यम्, तत्रापि व्याप्यमेवाभावमुद्दिश्य व्यापकस्याभावस्योपादानम्, व्याप्यव्यापकभावस्त्वभावयोर्भावविपरीत इत्याह—

**व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते॥ १२१॥**
**तयोरभावयोस्तस्माद् विपरीतः प्रतीयते।**

ततश्च 'यत्र धूमस्तत्राग्नि' इति साधर्म्यम्, 'यत्राग्निर्नास्ति तत्र धूमो नास्ति' इति वैधर्म्यमिति।

विपर्यये प्रमाणमाह द्वयेन—

**धूमभावेऽग्निभावेन व्याप्तेऽनग्निस्ततश्च्युतः॥ १२२॥**
**अधूम एव विद्येतेत्येवं व्याप्यत्वमश्नुते।**
**तथानग्नावधूमेन व्याप्ते धूमस्ततच्युतः॥ १२३॥**
**अन्यत्रानवकाशत्वाद् व्याप्यते ध्रुवमग्निना।**

यो हि यत्रैव भवन् यद्देशकालौ नातिक्रामति स तद्व्याप्यः, व्यापकस्त्वाधिक्येऽप्यविरुद्धः। तत्र धूमस्याग्निदेशकालानतिक्रमात् सकलधूमदेशकालेऽग्निना व्याप्तेऽनग्निरग्न्यभावः, ततो धूमात् प्रच्युतो धूमाभाव एव भवन् धूमाभावदेशकालानतिक्रमाद् व्याप्यो भवति; एवमेवानग्नावप्यधूमेन व्याप्ते धूमस्ततोऽग्नेः स्वविरुद्धाद् धूमाभावात्[3] प्रच्युतोऽग्नावेव भवन्नग्निना व्याप्तो

---

१. तं च—मु० पा०। २. विपरीतान्वयत्वं वा—१ पु०।
३ धूमव्याप्तात्—मु० पा०।

श्लो० वा० : १८

भवति । तेन धूमेनाग्नि साधयता धूमस्याग्निव्याप्तिसिद्ध्यर्थमनग्नेरधूमेन व्याप्ति-वैधर्म्ये वक्तव्या ।

एतदुक्तं भवति—यत्र तावद् व्याप्यव्यापकयोः समदेशकालता, तत्र तदभावयोरपि समदेशकालत्वान्नासङ्कीर्णं व्याप्यव्यापकत्वं शक्य दर्शयितुम्; यत्र तु व्याप्यव्यापकयोर्न्यूनाधिकत्वं तत्र व्यापकस्य भावस्य न्यूनत्वात् तदभावोऽवश्यमधिको भवन् व्यापको भवति, व्यापकस्य व्याप्याधिकत्वात् तदभावो न्यूनतया व्याप्यो भवतीति युक्तो विपर्यय इति ।

तदेवं सति यथैव साधर्म्येऽग्निभावो धूमस्य व्यापकतयोक्तः, तथैव यदि वैधर्म्येऽप्यग्न्यभावो धूमाभावस्य व्यापकतयैवोच्येत तथा सति व्यापकस्याधिक्येऽप्यविरोधादधूमातिक्रमेणाप्यनग्नि. सम्भवन् धूमेऽपि सम्भावित. स्यात्, ततश्च व्याप्याद् धूमाद् विपक्षस्यानग्नेस्तेन सहापि सम्भवतो न प्रच्युतिस्ततः सिध्येत्, तत्प्रच्युतिकथनार्थम् च वैधर्म्यमनर्थकं स्यात्, अच्युते च तस्मिन् विपक्षेऽपि सम्भवन् धूमोऽग्निना व्याप्त्यभावान्नाग्नि गमयेदित्याह—

**व्यापकौ तु यदोच्येते भावाभावौ तदा ततः ॥ १२४ ॥**
**नैव व्याप्याद् विपक्षस्य प्रच्युतिः कथिता भवेत् ।**

उपसंहरति—

**तस्माद् धूमेन साध्यत्वमग्नेः प्रार्थ्यते यदा ॥ १२५ ॥**
**तदानग्निरधूमेन व्याप्तो[1] वाच्य,**
**न चान्यथा ।**

न साहित्यमात्रम्, नापि व्याप्तिविपर्यय इति ।

अन्यथावचने दोषमाह—

**अनग्न्यधूमसाहित्ये व्याप्तेर्वापि विपर्यये ॥ १२६ ॥**
**न प्रस्तुतोपकार. स्यादन्यद् वापि प्रसाध्यते ।**

साहित्ये साहित्यमात्रे प्रस्तुतस्य धूमव्याप्यत्वस्यानुपकारः, विपर्यये त्वन्यदेवाग्नेरेव व्याप्यत्व साधितं स्यादिति ।

न च वचनसम्यक्त्वमात्रेण[2] साध्यसिद्धि', अर्थतथात्वमप्यादर्त्तव्यमित्याह—

**यत्राप्यर्थस्य शून्यत्वं द्वाभ्यामेकेन वा भवेत् ॥ १२७ ॥**
**यदनित्यं तु तन्मूर्तमणुवद् बुद्धिवत् खवत् ।**

'तत्रापि न प्रस्तुतोपकारः स्यात्' इति सम्बन्धः । द्वाभ्यामभावाभ्यामेकेन वा 'नित्यः शब्दोऽमूर्त्तत्वात्', इत्यत्रानित्यत्वं साध्याभावस्तेन शून्यः परमाणु', मूर्त्तत्वं च साधनाभावस्तच्छून्या बुद्धि., उभयशून्यमाकाशमिति ।

१. व्याप्यो—१ पु० । २. वचना०—मु० पा० ।

साधर्म्यवदेव वैधर्म्यव्याप्तिशून्यन्यत्वस्य दूषणत्वमुदाहरणं च दर्शयति त्रयेण—

**साध्येन व्याप्तिसिद्ध्यैव व्यतिरेकोऽत्र कथ्यते ॥ १२८ ॥**
**यस्यायं नास्त्यसौ हेतुस्तेन साध्येन नाप्यते ।**
**तेन दृष्टेऽपि साहित्ये न सर्वो गम्य इष्यते ॥ १२९ ॥**
**सहदृष्टिर्न सम्बन्धो व्याप्तिर्नैव च तावता ।**
**मूर्तानित्यत्वयुक्तेऽपि तस्मादङ्गीकृते घटे ॥ १३० ॥**
**कर्मादौ व्याप्त्यभावेन न दृष्टान्तत्वमिष्यते ।**

साध्येन हेतोर्व्याप्तिं दर्शयितुं विपक्षात् साध्याभावाद्धेतोर्व्यतिरेको हेतोस्तत्राभावः कथ्यते यस्मान्मूर्त्तत्वस्य विपक्षैकदेशादपि बुद्ध्यादेरनित्याद् व्यतिरेको बुद्ध्यादावभावो नास्ति। नासावमूर्त्तत्वं हेतुस्तेन नित्यत्वसाध्येन व्याप्यते। व्याप्त्यसिद्धौ च यद्यपि क्वचिदमूर्त्तत्वनित्यत्वयोः साहित्यं दृष्टं व्योमादौ, तथापि न सर्वस्यामूर्त्तस्य नित्यताध्यवसातुं शक्यते। न हि साहित्यमात्रं लिङ्गलिङ्गिनोः सम्बन्धः, न च तन्मात्रेणाव्यभिचारमन्तरेण व्याप्तिः सिध्यति। तस्माद् यद्यपि वैधर्म्यवचने साधनाभावेन मूर्त्तत्वेन साध्याभावेन चानित्यत्वेन युक्तो घटादिर्निर्दिश्यते—'यदनित्यं तन्मूर्त्तं यथा घटः' इति, तथापि कर्मादिष्वनित्येष्वपि मूर्त्तत्वस्य व्याप्ते व्याप्तिसिद्ध्यर्थत्वाच्च दृष्टान्तत्वस्य तदसिद्धौ घटादेरपि न दृष्टान्तत्वमिति।

**शाक्यास्तु** वैधर्म्यवचनस्य पाक्षिकत्वमसहमाना वैधर्म्यमेव सर्वदा वक्तव्यं न साधर्म्यमित्याहुः। तदुपन्यस्य दूषयति सार्द्धेन—

**अशेषापेक्षितत्वाच्च सौकर्याच्चाप्यदर्शनात् ॥ १३१ ॥**
**साधने यद्यपीष्टोऽत्र व्यतिरेकोऽनुमां प्रति ।**
**तावता न ह्यनङ्गत्वं युक्तिः शाब्दे हि वक्ष्यते ॥ १३२ ॥**

ते किल मन्यन्ते—यस्यापि साध्यान्वयो लिङ्गस्यानुमानाङ्गम्, यस्य वा विपक्षव्यतिरेकः तयोरुभयोरपि तावदशेषापेक्षितत्वमविवादम्। तत्र यद्यन्वयोऽङ्गमिष्येत, ततोऽवश्यं सर्वेषामतीतानागतानामपि धूमानामग्निभिः सर्वैः समन्वयो ग्रहीतव्यः। न चासावीश्वरेणापि ग्रहीतुं शक्यते, न च केषाञ्चिदन्वये गृहीतेऽन्यैरगृहीतान्वयैरनुमानं सम्भवति। वह्निमत्त्वसामान्येन धूमवत्त्वसामान्यस्यान्वयो गृहीत इति चेत्? न, सामान्यस्य स्वलक्षणव्यतिरेकविकल्पसहनासम्भवात्। अस्तु वा सामान्यम्, तथापि तदीयाशेषदेशकालान्वयोऽग्नेर्दुर्ग्रह एव। विपक्षव्यतिरेकस्तु सुज्ञानः, स ह्यदर्शनमात्रगम्यः, सुकरं च सर्वधूमानामप्येकदेशस्थैनैवानग्निष्वदर्शनम्। तस्मात् अनग्निभ्यो व्यतिरिच्यमानो धूमोऽग्निव्यावृत्तिमुखेनाग्निं गमयति। अत एवातद्व्यावृत्तिविषयत्वं लिङ्गशब्दयोः। तस्माद् विपक्षव्यावृत्तिप्रदर्शनार्थं वैधर्म्यमेव वक्तव्यम्, न साधर्म्यमिति।

तान् प्रत्युच्यते—यद्यप्येवं व्यतिरेक एवानुमानाङ्गं **शाक्यानामिष्टम्**, तथाप्यन्वयोऽङ्गमेव, न तस्यानङ्गत्वं शक्यते वक्तुम्। अत्र च युक्तिर**पोहनिराकरणपर्वणि** वक्ष्यते—

न चादर्शनमात्रेण ताभ्यां प्रत्यायनं भवेत् ।

सर्वत्रैव ह्यदृष्टत्वात् प्रत्याय्य नावशिष्यते ॥ (श्लो० वा० अपो० ७५) इति ।

यदि ह्यनग्नाविवाग्नावपि धूमो न दृश्यते, ततोऽग्नेरनग्नेश्च द्वाभ्या व्यावृत्तो धूमो द्वयोर्व्यावृत्ति गमयन् गन्धवत्त्ववत् संशयहेतुः स्यात् । अतोऽन्वयोऽप्यङ्गमेव । यत्तु सर्वत्रान्वयो दुर्ग्रह इत्युक्तम्, तुल्यमिद व्यतिरेकेऽपि । न ह्यदर्शनमात्रात् सोऽपि सिध्यति, दृश्यादर्शनगम्यत्वादेकदेशेस्थस्य च सर्वत्र दृश्यादर्शनासम्भवात् । तस्मादनवगतेऽपि सर्वत्रान्वये सर्वतश्च व्यतिरेके बहुशः साहित्यावगममात्रादेव व्यभिचारादर्शनसनाथादनुमानोत्पत्तिरङ्गीकर्त्तव्या ।

**शाब्दे** शब्दार्थनिरूपणे । अपोहवादे इत्यर्थः । तत्र हि 'जातिः शब्दार्थो नापोहः' इति निरूपयिष्यते इति ॥ १३२ ॥

ननु सामान्यस्याभावाद् धूमभेदादेवाग्निभेदानामनुमानमङ्गीकर्त्तव्यम्, न च भेदानामदृष्टपूर्वाणामन्वयग्रहणमस्तीति कथमन्वयस्याङ्गत्वम् ? अत आह—

**बोधप्रसङ्गो भेदानां न चाव्याप्तेर्भविष्यति ।**

स्यादेव यदि भेदेनानुमानप्रसङ्ग. स्यात्, न त्वसावस्ति उक्तादेव व्याप्त्यभावादिति ।

कस्य तर्ह्यनुमानम्, केन चात्मना ? अत आह—

**अस्ति सामान्यवस्त्वेषु व्यापिता[1] तत्र गम्यताम् ॥ १३३ ॥**

केचित्तु साधर्म्यवद् वैधर्म्यमपि नियत मन्यन्ते, तदुपन्यस्यति—

**केचित् साधर्म्यदृष्टान्ते व्याप्त्यापि कथिते[2] पुनः ।**

**वैधर्म्योक्तिमपीच्छन्ति,**

कारणमाह—

**व्यावृत्तिनियमेच्छया ॥ १३४ ॥**

एतदेव विवृणोति—

**हेतौ साधर्म्यदृष्टान्तात् साध्येनैवावधारिते ।**

**व्यावृत्तिः सर्वतः प्राप्ता साध्याभावे नियम्यते ॥ १३५ ॥**

'यो धूमवान् सोऽग्निमानेव' इति साधर्म्यवचनाद्धूमोऽग्निना नियम्यमानोऽग्नि व्यतिरिक्तात् सर्वस्मादेव व्यावृत्तः प्रसज्यमानः पुनर्वैधर्म्येण यत्राग्निर्नास्ति त धूमो नास्तीति एवम् अग्न्यभावाद् व्यावृत्तिः क्रियते, कथ नाम वस्त्वन्तराद्व्या वृत्तिः परिसंख्यायेतेति नियम इति परिसख्यैवोच्यते—तत्र चान्यत्र च प्राप्तेरिति

---

१. व्याप्तता—पाठान्तरम् । २. कल्पिते—का० ।

दूषयति—

**तत्तु मन्दफलं यस्मात् पक्षेऽप्येवं निरूपितम् ।**
**व्यापकाभावमात्रं हि व्याप्यान्नित्यं निवर्तते ॥ १३६ ॥**

यथा खलु 'पर्वतोऽग्निमानेव' इत्यत्र पक्षवचनेऽग्न्यभावस्यैव निवृत्तिः, नान्यस्येत्युक्तम्, तत्रापि न हि 'अयग्निमानेव' इत्यस्यायमर्थः—अग्निरेवास्तीति, किन्त्वग्निरस्त्येवेति, तस्माददोष इति ।

एतदेव दृष्टान्तदर्शनेनोपसंहरति—

**तस्माद् यथैव शुक्लत्वे पटस्योक्ते विरोधिनाम् ।**
**निवृत्तिर्न तु दैर्घ्यादेस्तथात्रापि भविष्यति ॥ १३७ ॥**

"तत्तु द्विविध प्रत्यक्षतो दृष्टसम्बन्ध सामान्यतो दृष्टसम्बन्ध च । तत्र प्रत्यक्षतो दृष्टसम्बन्धं यथा—धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम् । सामान्यतोदृष्टसम्बन्धं यथा—देवदत्तस्य गतिपूर्विका देशान्तरप्राप्तिमुपलभ्याऽऽदित्ये गतिस्मरणम्" ( शा० भा० पृ. ४४ ) इति भाष्यम्, तदाक्षिपति—

**द्वैविध्यं नोपपन्नं तु यथैव ह्यग्निधूमयोः ।**
**प्रत्यक्षदृष्टः सम्बन्धो गतिप्राप्त्योस्तथैव हि ॥ १३८ ॥**

परस्परासङ्कीर्णे हि विधाद्वये द्वैविध्य भवति, इह च सामान्यतोदृष्टोदाहरणे गतिप्राप्तिसम्बन्धे प्रत्यक्षदृष्टत्वमप्यस्तीति द्वैविध्यानुपपत्तिरिति ॥ १३८ ॥

अथ पक्षधर्मिण्यादित्ये गतिप्राप्त्योः सम्बन्धो न प्रत्यक्षेणोपलभ्यत इत्युच्यते, सोऽधुनातनेऽपि पर्वतादौ देशेऽग्निधूमयोरपि न प्रत्यक्ष इति तुल्यत्वमित्याह—

**आदित्येऽनुपलब्धिश्चेन्न देशेऽप्यधुनातने ।**

यदि तु क्वचिन्महासादौ प्रत्यक्षोऽग्निसम्बन्ध इत्युच्यते, ततोऽत्रापि देवदत्तादौ गतिप्राप्त्योरपि सम्बन्ध प्रत्यक्ष एवेत्याह—

**क्वचित् तत्रोपलब्धिश्चेद् देवदत्तेऽपि दृश्यताम् ॥ १३९ ॥**

प्रत्यक्षेणैव हि दृष्टं कर्मस्वरूपम्, तदनन्तरं च देशान्तरप्राप्तिं देवदत्तादेरुपलभामहे, न हि नित्यानुमेयं कर्मस्वरूपम्, अपरोक्षेणैवावभासात् । नित्यानुमेयत्वे च देवदत्तेऽप्यनुमेयत्वाद् "देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्येऽपि गतिस्मरणम्" ( शा० भा० पृ. ४४ ) इति भाष्यमनुपपन्नं स्यात्, न च देशान्तरप्राप्त्यातीन्द्रियस्यापि कर्मणोऽनुमान सम्भवति, दृष्टैरेव प्रयत्नवदात्मसयोगादिभि· कर्मकारणत्वाभिमतैस्तदुपपत्तेरिति **शास्त्रदीपिकादौ** प्रपञ्चितमित्यास्तां तावत् ॥ १३९ ॥

एवं प्रत्यक्षतोदृष्टत्वं सङ्कीर्णमित्युक्तम्, इदानी सामान्यतोदृष्टत्वमपि सङ्कीर्णमित्याह पादत्रयेण—

**यदि धर्म्यन्तरापेक्षा तत्र सामान्यदृष्टता।**
**स्यादग्निधूमयोः सैव,**

न ह्यादित्यस्य देशान्तरप्राप्तिस्तदीयगत्यन्विता दृष्टा, किन्तु धर्म्यन्तरे देवदत्ते देशान्तरप्राप्तेर्गतिसमन्वयं दृष्ट्वाऽऽदित्येऽपि प्राप्तिसामान्येन गतिसामान्यमनुमीयत इति। एवमत्र सामान्यतोदृष्टत्वमभिमतं तदग्निधूमयोरपि धर्म्यन्तरेष्वेव सम्बन्धग्रहणात् तुल्यम्। अथ कार्यान्तरेष्वागन्तुककारणजन्यत्वं दृष्ट्वा प्राप्तेरपि कारणमागन्तुकं किञ्चिदस्तीत्येवं सामान्यमनुमीयते, तत्र त्वन्येषामसम्भवात् ततोऽन्यदवतिष्ठते, न त्वन्यरूपेणानुमीयते, अतः सामान्यतोदृष्टत्वम्। अग्न्यनुमाने त्वग्निरूपमेवानुमीयत इति ततः "गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्य" (शा० भा० पृ. ४४) इति भाष्य विरुध्येत; गतेरेव सम्बन्धग्रहणोपन्यासात्।

किञ्च—एव कारणसामान्यमनुमितं स्यात्, तस्मिंस्त्वनुमिते कारणान्तराणा प्रयत्नादीनामागन्तूनामपि करणत्व नानुमानेन निरस्तं स्यात्, प्रमाणान्तरेण तु तदसम्भवोऽवगम्यते। या पारिशेष्यात् कारणान्तरस्यातीन्द्रियत्वसिद्धि सा अर्थापत्तिरिति नानुमेयत्व कर्मण., यच्च तत्कारणसामान्य तदन्यत्र दृष्टमेवाग्निवत्, अतो द्वैविध्यानुपपत्तिरिति।

समाधत्ते बुध्यते इत्यन्तेन—

**तस्मादेवं प्रचक्षते ॥ १४० ॥**
**प्रत्यक्षदृष्टसम्बन्धं ययोरेव विशेषयोः।**
**गोमयेन्धनतज्जन्यविशेषादिमतिः कृता ॥ १४१ ॥**
**तद्देशस्थेन तेनैव गत्वा कालान्तरेऽपि तम्।**
**यदाग्निर्बुध्यते,**

यदा हि क्वचिद् देशे गोमयेन्धनजन्यमग्निविशेषं तज्जन्यं च धूमविशेषमुपलभ्य ईदृशो गोमयेन्धनोऽग्निः, ईदृशश्च तज्जन्यो धूम इत्येवमग्न्यन्तरधूमान्तरेभ्यो विलक्षणस्वरूपे मति कृत्वा देशान्तर गतः कियतापि विलम्बनेन तद्देशस्थेन तेनैव धूमविशेषेण तमेव गोमयेन्धनमग्निविशेषमनुमिमीते[1], तदा तद्विशेषतोदृष्टसम्बन्धमनुमान प्रत्यक्षदृष्टसम्बन्धमाचक्षत इति।

युक्त चैतत्, विशेष एव हि सामान्यस्य प्रतियोगी भवति न प्रत्यक्षम्, तद्धि प्रमाणान्तरस्य प्रतियोगी, न सामान्यस्य। सम्भवति हि सामान्ययोरपि प्रत्यक्षेण सम्बन्धग्रहणम्। तस्मात् प्रत्यक्षतोदृष्टसम्बन्धम्, सामान्यतोदृष्टसम्बन्धमितीदं द्वैविध्यं मिथोऽप्रतिपक्षत्वादनुपपन्नम्। अतो यत्र विशेषयोरेव प्रत्यक्षेण सम्बन्धो गृह्यते तत् प्रत्यक्षेण दृष्टसम्बन्धमित्युच्यते, यत्र सामान्ययोः प्रत्यक्षेण सम्बन्धो गृह्यते तत् सामान्यतोदृष्टमित्युच्यत इति।

---

१. अनुमीयते—२-३ पु०।

ननु प्रत्यक्षावगताग्निविशेषविषयस्यानुमानस्य कथं प्रामाण्यम् ? अत आह—

**तस्य पूर्वबोधात् पुनः पुनः ॥ १४२ ॥**

**सन्दिह्यमानसद्भाववस्तुबोधात्**[1] **प्रमाणता ।**

**पूर्वबोधात्** । कालान्तराधिक्येनेत्यर्थः ।

**विन्ध्यवासिना**पीदं विशेषदृष्टत्वेनोपवर्णितमिति युक्तमेव तदभिप्रायत्वं भाष्यस्येत्याह—

**विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना ॥ १४३ ॥**

यदि विशेषयोरेवानुमानं कथं "धूमाकृतिदर्शनात्" ( शा० भा० पृ. ४३ ) इत्याकृतिग्रहणं भाष्ये, धूमदर्शनादिति हि वक्तव्यम् ? अत आह—

**आकृत्योरेव चैषेष्टा व्यवच्छेदेन केनचित् ।**

**हेतुसाध्यव्यवस्थेति विशेषो नोपदर्शितः ॥ १४४ ॥**

यद्येवम्, इदमेव विशेषानवच्छिन्नं सामान्यतोदृष्टोदाहरणान्तरमस्ति, किमादित्योदाहरणेन ? अत आह—

**अग्निधूमान्तरत्वे च वाच्ये सामान्यतो मितौ**[2] **।**

**सामान्यदृष्टमेकान्तादत्रेत्यादित्य उच्यते ॥ १४५ ॥**

विशेषदृष्टासङ्कीर्णनि सन्दिग्धसामान्यदृष्टप्रदर्शनार्थमादित्योदाहरणमिति ।

कथं पुनः सामान्यतः सम्बन्धग्रहणम्, न ह्यगृहीतयोः सम्बन्धिनोः सम्बन्धग्रहणं सम्भवति, न च सामान्ययोः प्रत्यक्षेण ग्रहणम्, तस्य स्वलक्षणमात्रविषयत्वात्, अवस्तुभूतं च सामान्यं कथं प्रत्यक्षेण गृह्येत ? अत आह—

**प्रत्यक्षविषयत्वं च सामान्यस्य प्रसाधितम् ।**

**वस्तुत्वं च,**

प्रत्यक्षसूत्रे हि प्रत्यक्षत्वम्, अत एव च वस्तुत्वं सिद्धमिति अनुमानेनापि तस्य प्रत्यक्षत्वं वस्तुत्वं चावगम्यत इत्याह—

**अत्र हेतुर्वा द्वयस्याप्यभिधीयते ॥ १४६ ॥**

तमेव दर्शयति द्वयेन—

**धूमादग्न्यनुमानस्य वस्त्वालम्बनता भवेत् ।**

**अभावान्यप्रमाणत्वात् स्वार्थे श्रोत्रादिबुद्धिवत् ॥ १४७ ॥**

**सामान्यस्य च वस्तुत्वं प्रत्यक्षग्राह्यतापि च ।**

**अभावान्यप्रमेयत्वाद् असाधारणवस्तुवत् ॥ १४८ ॥**

स्वार्थस्तु स्वेन सन्निकृष्टस्तद्ग्रहणं भ्रान्तिव्यावृत्त्यर्थम् ॥ १४७-४८ ॥

१. वस्तुभेदात्—३ पु० ।

२. मितेः—३ पु० ।

ये तु **शाक्याः** सामान्यस्य प्रत्यक्षग्राह्यतामनिच्छन्तोऽनुमानैकगम्यत्वं मन्यन्ते, तन्मतेऽनुमानोच्छित्तिरेव स्यात्, पक्षधर्मतया हि लिङ्गमनुमितौ ग्रहीतव्यम्, सामान्यमेव च लिङ्गं न हि विशेषः, अनुगमाभावात्; अतो लिङ्गभूतसामान्यग्रहणाय पुनरन्योन्यापेक्षणादनवस्थापातान्न किञ्चिदप्यनुमानमात्मान लभत इत्याह पञ्चभिः—

**सामान्यं[1] नानुमानेन विना यस्य प्रतीयते[1]।**
**न च लिङ्गविनिर्मुक्तमनुमानं प्रवर्तते ॥ १४९ ॥**
**असामान्यस्य लिङ्गत्वं न च केनचिदिष्यते।**
**न चानवगतं लिङ्गं किञ्चिदस्ति प्रकाशकम् ॥ १५० ॥**
**तस्य वाप्यनुमानेन स्यादन्येन गतिः पुनः।**
**तदुत्पत्तिश्च लिङ्गात् स्यात् सामान्यज्ञानसंहितात्[2] ॥ १५१ ॥**
**तस्य चाप्यनुमानत्वात्[3] भवेल्लिङ्गेन चोद्भवः।**
**अनुमानान्तरादेव ज्ञानेनैवं च कल्पने[4] ॥ १५२ ॥**
**लिङ्गलिङ्ग्यनुमानानामानन्त्यादेकलिङ्गिनि ।**
**गतिर्युगसहस्रेषु बहुष्वपि न विद्यते[5] ॥ १५३ ॥**

शङ्कते—

**अथ सामान्यभूतेऽपि लिङ्गेऽन्यस्माद् गतिर्भवेत्।**

लिङ्गसामान्यमप्रत्यक्षमिति स्वलक्षणदर्शनप्रभवाद् विकल्परूपात् प्रत्यक्षाभासाज्ज्ञानान्तरादवगम्यते नानुमानात्, अतो नानवस्थेति।

तं दूषयितुं विकल्पयति—

**प्रमाणादप्रमाणाद् वा,**

प्रमाणत्वे दूषणमाह—

**तथा लिङ्गिगतिर्भवेत् ॥ १५४ ॥**

न तावत् प्रत्यक्षानुमानातिरिक्तं प्रमाण भवतामिष्टम्, उपेत्यापि ब्रूमः, तत् खलु प्रमाणमिन्द्रियसंयोगापेक्षम् चेत् प्रत्यक्षमेव स्यात्, नो चेल्लिङ्गसामान्यवल्लिङ्गिसामान्यस्यापि तेनैवावगतिः सिद्ध्यतामिति[6] ॥ १५४ ॥

ततः किम्? इत्याह—

**एवमप्यनुमानस्य नित्योच्छेदः प्रसज्यते।**

यथानवस्थायामनुमानोच्छित्तिः, तथात्रापीति।

---

१-१. सामान्यतोऽनुमानेन विनाशस्य प्रतीयते—३ पु०।
२. ०संहतात्—मु० पा०।
३. अनुमानत्वम्—३ पु०।
४. एवं प्रकल्पिते—२-३ पु०।
५. युज्यते—२ पु०।
६. दृष्यतामिति—३ पु०।

कथम् ? इत्याह—

**प्रमाणान्तरमेव स्यात् सामान्यस्यावबोधकम् ॥ १५५ ॥**

एतदेव हि प्रमाणान्तरं लिङ्गिसामान्यस्याप्यवबोधक्षममिति किमनुमानेनेति ॥ १५५ ॥

अथाप्रमाणम् ? तत्राह—

**अप्रमाणावबुद्धाद् वा लिङ्गाल्लिङ्गिनि या मतिः ।**
**सापि मिथ्या भवे[1]न्नित्यं [2]बाष्पजाताग्निबुद्धिवत् ॥ १५६ ॥**

ततश्चानुमानस्यापि प्रामाण्यं न स्यात् । ननु अप्रमाणमेवानुमानम्, अवस्तुभूतसामान्यविषयत्वात्, तथापि तु परम्परया वस्तुप्रभवम् । तथा हि वह्निस्वलक्षणाद् धूमस्वलक्षणम्, ततो धूमदर्शनम्, ततश्च धूमविकल्पः, तदूर्ध्वं चानुमानम्, परम्परया वस्तुप्रभवतया तत्प्रतिबन्धितत्प्रतिलम्भकतया व्यवहाराविसंवादित्वात् प्रमाणदशाया प्रमाणमित्युच्यते, बाष्पविषयधूमविकल्पोत्थं त्वग्निज्ञानं परम्परयाप्यग्निना न प्रतिबद्धम्, न हि बाष्पव्यवहारस्वलक्षणमग्निस्वलक्षणादुद्भवति, तेन तदवस्तुप्रतिलम्भक व्यवहारविसंवादादप्रमाणमिति ॥१५६॥

यद्येवम्, योऽप्येवं धूमदर्शनोत्थधूमविकल्पः, ये चान्ये गवादिस्वलक्षणदर्शनोत्था गवादिविकल्पाः, तेऽपि व्यवहाराविसंवादिनो व्यावहारिकं प्रमाणास्पदत्वमनुविदधानाः प्रामाण्यमश्नुवीरन्, ततश्च द्वयवादानुपपत्तिः; पारमार्थिकं हि प्रामाण्यम् एकस्यैव प्रत्यक्षस्य, व्यावहारिकं तु त्रयाणामिति कथं प्रमाणद्वयवाद इति।

तत्र चोदयति—

**नन्वप्रमाणभूतापि सम्बन्धस्मृतिरिष्यते ।**
**यथा लिङ्गिगतौ हेतुस्तथा लिङ्गगतिर्भवेत् ॥ १५७ ॥**

स्मर्यमाणनियम हि लिङ्गमनुमानस्य हेतुः, स्मृतेश्चाप्रामाण्यमविवादम्, अतस्तद्वदेव लिङ्गज्ञानमप्यप्रमाणमेव प्रमाणभूतस्यानुमानस्य करणं भविष्यतीति ॥ १५७ ॥

परिहरति—

**तत्र यत् पूर्वविज्ञानं तस्य प्रामाण्यमिष्यते ।**
**तदुपस्थान[3]मात्रेण स्मृतेः स्याच्चरितार्थता ॥ १५८ ॥**

स्मृतिर्हि गृहीतग्राहित्वमात्रेणाप्रमाणमित्युच्यते, न तु यथार्थतया; सा हि स्वातन्त्र्येणार्थपरिच्छेदासमर्थापि यथार्थविषयपूर्वानुभवप्रभवा[4] तद्विषयभूतं

---

१. सामिथ्यैवं भवेत्—२ पु० । २. व्याप्य—३ पु० ।
३. तदवस्थान—३ पु० । ४. यथार्थविषयकानुभव०—२ पु० ।

यथावस्थितमेवार्थमवस्थापयतीति युक्त तदुत्थस्यानुमानस्य यथार्थत्वम् । सति यथार्थत्वेऽनवगतविषयत्वात् प्रामाण्यमपि सिद्धयतीति ॥ १५८ ॥

तव तु लिङ्गसामान्यावगतौ प्रमाणान्तरमपि नास्ति, यतस्तत्प्रभवत्वेनाधुनातनं लिङ्गज्ञान तत्स्मृतित्वेन यथार्थं स्यादित्याह—

**न तु लिङ्गगतौ किञ्चित् प्रमाणमुपपद्यते ।**
**तदभावात्स्मृतिश्चात्र न कथञ्चित् प्रवर्तते ॥ १५९ ॥**

यद्युच्येत—धूमविकल्पोऽपि प्रत्यक्षावगतं स्वलक्षणमेव सामान्याकारेणाध्यवस्यंस्तदभिन्नविषयतया स्मृतिरेव, अत एवास्य व्यवहाराविसवादित्वेऽप्यप्रामाण्यम्, तदनुमानं त्वनवगतमेवाध्यवस्यत् प्रमाणमिति प्रमाणद्वयवादोऽपि युक्त इति; तदयुक्तम्, सामान्याभासो विकल्प. कथ स्वलक्षणविषयोऽपि स्यात् ॥१५९॥

यत्त्वाहुः—स्वप्रतिभासेन तत्त्वाध्यवसायेन प्रवृत्तेरिति, तदयुक्तम्, तदगृह्णतः कथं तदध्यवसायः, तद्यदि स्वलक्षण न विकल्पेन गृह्येत कथं तदध्यवसीयेत, उपेत्यापि ब्रूमः, तद्गोचरत्वेऽपि विकल्पस्य न स्मृतित्वम् । यद्यपि स्वलक्षणरूपमवगतम्, तथापि सामान्याकारोऽनवगत एवावगम्यत इति कथं स्मृतित्वम्, न ह्यनवगतस्य स्मरण सम्भवति, वन्ध्यासुतस्यापि प्रसङ्गादित्याह—

**स्मार्तमेतदभेदेन विज्ञानमिति यो वदेत् ।**
**तस्य वन्ध्यासुतेऽप्यस्ति नूनं स्मरणशक्तता ॥ १६० ॥**

ननु यद्यपि सामान्यांशस्य प्रमाणान्तरानवगतत्वादस्मर्यमाणस्य[1] विकल्पेन चाप्रमाणभूतेन ग्रहणादप्रमाणस्य मृषात्वम्, तथापि स्वलक्षणस्य प्रत्यक्षेणावगतत्वात् परमार्थत्वाच्च तस्मिन्नंशे विकल्पोऽपि स्मृतिरेव यथार्थश्चेति कथं तदुत्थितस्यानुमानस्य प्रामाण्यम्[2] ? अत आह—

**न चासाधारणोऽर्थात्मा सामान्यज्ञानकारणम् ।**
**यस्मान्नास्याविनाभावस्तेन दृष्टः कथञ्चन[3] ॥ १६१ ॥**

स्यादेव यदि स्वलक्षणं लिङ्ग स्यात्, न त्वेवम्; अनुगमाभावादिति ॥१६१॥ सम्बन्धग्रहणानुगमे वा सामान्यमेव स्यात्, कृतकत्ववदित्याह—

**स्याद्वा सम्बन्धदृष्टयासौ सामान्यं कृतकत्ववत्[4] ।**

कारणमाह—

**न ह्यसाधारणं वस्तु पूर्वत्रेह च विद्यते ॥ १६२ ॥**

मा भूत् पूर्वत्र, इह तु भवतु लिङ्गत्वम् ? अत आह—

**न चाप्यव्यपदेशस्य विकल्परहितस्य च ।**
**विना पूर्वानुसन्धानाल्लिङ्गत्वमुपपद्यते ॥ १६३ ॥**

---

१. प्रमाणान्तरावगत०— मु० पा० । २. अप्रामाण्यम्—मु० पा० ।
३. कदाचन—२ पु० । ४. इदमर्धं ३ पु० नास्ति ।

न स पक्षेषु साध्यसम्बन्धितया अननुसन्धीयमानस्य 'इह च स एवायं धूमः' इत्येवमविकल्प्यमानस्याव्यपदेशस्य स्वलक्षणस्य लिङ्गत्वं भवतीति ॥ १६३ ॥

किञ्च, येऽपि तावत् पर्वतनितम्बवर्त्तित्वादयो धर्मा विकल्पास्पदीभूतास्तेऽप्य-न्वयाभावान्न लिङ्गम्, किमङ्ग, पुनर्निर्विकल्पकमसाधारणमित्याह—

**कल्प्यन्ते च विशेषा ये तेऽप्यलिङ्गमनन्वयात् ।**

अथ धूमज्ञानमेव लिङ्गम् न धूमस्वलक्षण वा सामान्यं वा? तन्न, तस्याप्य-न्वयाभावादित्याह—

**एतस्मादेव हेतोः स्यात् तज्ज्ञानस्याप्यलिङ्गता ॥ १६४ ॥**

ततोऽवश्यं स्वलक्षणस्य तज्ज्ञानस्य वा लिङ्गत्वे सामान्यरूपत्वं कल्पनी-नीयमिति ॥ १६४ ॥

भवतु सामान्यरूपत्वमिति चेत्? अत आह—

**सामान्यरूपतायां वा तथैवानवधारणम् ।**

सामान्यस्य ह्यनुमानादन्यतः प्रवृत्त्यसम्भवादनुमानस्य चानवस्थापत्तेरेवा-सम्भवान्न कथञ्चिदप्यवसाधारणसिद्धिरिति ।

असाधारणत्वेऽपि स्वलक्षणानामेकस्मिन् गृहीतसम्बन्धेऽन्योऽगृहीतसम्बन्ध एवाग्नि प्रत्याययेत्, ततोऽतिप्रसङ्गः स्यादित्याह—

**क्वचिद् वा दृष्टसम्बन्धे सर्वः प्रत्यायको भवेत् ॥ १६५ ॥**

एवं तावत् पक्षधर्मत्वग्रहणे[1] लिङ्गसामान्यस्यानुमानापेक्षत्वादनवस्थितता दर्शिता, सैव सम्बन्धग्रहणसमयेऽपि दर्शयितव्या। न ह्यगृहीतयोर्लिङ्गलिङ्गि-सामान्ययो. सम्बन्धग्रहण सम्भवति । तयोश्च ग्राहक भवन्मतेऽनुमानमेव, तदपि चानुमानं सम्बन्धग्रहणसापेक्षमिति अपरापरापेक्षायामस्त्येवानवस्थेत्याह—

**सम्बन्धानुभवोऽवश्यमेषितव्यश्च लिङ्गिनः ।**
**अनुमानप्रवृत्तेस्तु प्राग् ज्ञानं तत्र नास्ति ते ॥ १६६ ॥**

यदि तु वासनामात्रादेव सम्बन्धसमये लिङ्गलिङ्गिनोरनुमानसमये च लिङ्गस्य ज्ञानं भवतीत्युच्यते ततोऽनुमानसमयेऽपि लिङ्गिज्ञान तत एव सम्भ-वन्न त्रिरूपलिङ्गजन्य स्यात्, तत्र सैवानुमानस्य नित्योच्छित्तिरित्याह—

**न चापि वासनामात्राल्लिङ्गज्ञानस्य सम्भवः ।**
**लिङ्गिज्ञानं च तद्वत् स्यात् त्रिरूपाल्लिङ्गतो न तत् ॥ १६७ ॥**

नन्वियमनवस्था मेघाभावेन वृष्ट्यभावानुमाने भवतोऽपि तुल्या, लिङ्ग-भूतस्य मेघाभावस्यानुपलब्धिगम्यत्वात्; अनुपलब्धिरप्युपलब्ध्यभावरूपत्वात् अनुपलब्ध्यन्तरमपेक्षते तदपि तथेत्यत आह—

---

१. प्रत्यक्षधर्मत्व०—२ पु० ।

**तत्राभावस्य लिङ्गत्वं न चासावानुमानिकः ।**
**प्रमाणान्तरगम्यत्वात् तत्र दोषो न जायते ॥ १६८ ॥**

एषाप्यनवस्था शाक्यानामेवानुपलब्धिलिङ्गानुमेयमभावं वदताम्, अस्माकं त्वनुपलब्धिः प्रमाणान्तरम्, सा च सत्तामात्रेणेन्द्रियवद् भावमभाव गमयतीति न क्वचिद् दोष इति ॥ १६८ ॥

एवं परपक्षेऽनवस्थामुक्त्वा प्रत्यक्षसामान्यवादिना तु नासावस्तीत्याह—

**प्रत्यक्षावगताल्लिङ्गाद् यस्य लिङ्गिगतिर्भवेत् ।**
**तस्य नातोऽधिकं किञ्चित् प्रार्थनीयं प्रसज्यते ॥ १६९ ॥**

यत्र तर्ह्यादित्यगत्या तत्कारणमनुमीयते तत्र लिङ्गस्यापि गतेरनुमेयत्वादनवस्था स्यादत आह—

**यत्राप्यनुमिताल्लिङ्गाल्लिङ्गिनि ग्रहणं भवेत्[1] ।**
**तत्रापि मौलिकं लिङ्गं प्रत्यक्षादेव गम्यते ॥ १७० ॥**

मूलानुमाने यल्लिङ्ग देशान्तरप्राप्ति तत्प्रत्यक्षसिद्धमिति नानवस्थेति ।

यत्र तर्हि कृतकत्वादनित्यत्वमनुमीयते तत्र कृतकत्वस्य प्रत्यक्षसिद्ध्यभावादनुमानापेक्षायामनवस्था स्यादत आह—

**लिङ्गत्वं कृतकत्वादौ क्रियायाः कारकस्य वा ।**
**प्रत्यक्षत्वं च तस्येष्टमिति दूरं न गम्यते ॥ १७१ ॥**

कृतकत्वे हि क्रियानन्तर्यं तद्विशिष्टकारकानन्तर्यम् वा लिङ्गम्, तच्चोभयमपि प्रत्यक्षमेवेति ॥ १७१ ॥

तदेवमनुमानस्यासति सामान्यस्य वस्तुप्रत्यक्षत्वे च दौस्स्थित्यमुक्तम्, एव शब्दादीनामपि सामान्यविषयतया सम्बन्धग्रहणाय च तद्ग्रहणापेक्षितया सामान्याश्रयत्वात् तदभावे तदप्रत्यक्षत्वे च दौस्स्थित्यं स्यादित्याह—

**एवं शब्दोपमानादौ सामान्याश्रयता यतः ।**
**तद्दौस्स्थित्येन दौस्स्थित्यं सर्वत्रातः प्रसज्यते ॥ १७२ ॥**

उपसहरति—

**तस्मात् प्रत्यक्षपूर्वत्वं प्रमाणान्तर इष्यते ।**
**प्रत्यक्षत्वं च सामान्ये नान्यथा हि गतिर्भवेत् ॥ १७३ ॥**

कथं च विशेषस्यैव प्रत्यक्षत्वम्, गवादिस्वलक्षणमपि हि अवयवित्वात् स्वावयवापेक्षया सामान्यमेव ? इत्याह—

**प्रत्यक्षालम्बनत्वं च विशेषस्य कथं भवेत् ।**
**यदा वस्त्वन्तरापेक्षः सामान्यांशः स कीर्त्यते ॥ १७४ ॥**

---

१. ग्रहणोद्भवः—३ पु० ।

यदि तु द्रव्यमपह्नुत्य रूपादीनामेव प्रत्यक्षत्वं वदेत् तदापि रूपं विशेषान्-नीलपीतादीनपेक्ष्य सामान्यमेव, नीलमपि[1] तापिच्छमधुकरादिनीलविशेषापेक्षया सामान्यम्, मधुकरनीलमपि स्वावयवापेक्षया, एवमा परमाणुभ्यः सामान्यरूपत्वम्, ततः प्राग् द्व्यणुकरूपमपि परमाणुद्वयसाधारणत्वात् सामान्यमेवेत्याह द्वयेन—

**रूपादयो हि सामान्यं सर्वे नीलाद्यपेक्षया।**
**स्वविशेषानपेक्ष्याथ नीलादीनां समानता॥ १७५॥**
**ते चापि तावत् सामान्यं यावत् स्यु परमाणवः।**
**द्व्यणुकस्यापि यद्रूपं तद्धि साधारणं द्वयोः[2]॥ १७६॥**

रूपपरमाणुरेव तर्ह्यसाधारण. प्रत्यक्षो भवतु ? अत आह—

**न चान्त्येन विशेषेण व्यवहारोऽस्ति कस्यचित्।**

व्यवहाराविसंवादितया प्रत्यक्षानुमानयो. प्रामाण्यम्, न चान्त्यैः परमाणुभिर्व्यवहारोऽस्तीति किं तेषां प्रत्यक्षविषयतया ! किमिदमन्त्येनेति ? अन्ते भवमन्त्यम्। कस्यान्ते ? परिमाणस्य। तस्य हि द्वावन्तौ—पारिमाण्डिल्यत्वम्, परममहत्त्वं च। तत्रात्यन्ताल्पत्वे वर्त्तमानः परमाणु', अत्यन्तमहत्त्वे च वर्त्तमानं व्योमादिकमन्त्यमित्युच्यत इति।

भवतु वान्त्येनापि कश्चिद्व्यवहारः, तथापि तस्यातीन्द्रियत्वादेकाकिनोऽन्यसहितस्य वा न प्रत्यक्षत्वमित्याह—

**न च प्रत्यक्षता तस्य सङ्घाते केवलस्य वा॥ १७७॥**

ननु न स्वरसतोऽतीन्द्रिया परमाणव', प्रत्येकमिन्द्रियैरगृह्यमाणानामपि साहित्ये प्रत्यक्षत्वोपपत्ते , दूरस्थानामिव सिकतादीनाम् ? अत आह—

**भेदेनागृह्यमाणस्य नाभेदो[3] ग्राह्यतां व्रजेत्।**

सिकतादयो हि समीपस्थितै. प्रत्येकमपि गृह्यन्त इति नैषां स्वारसिकम् अनैन्द्रियकत्वम्। सति चैन्द्रियकत्वे दूरत्वदोषात् प्रत्येकमगृहीतानामपि साहित्यसामान्य सुप्रत्यक्षम्। परमाणुभेदास्तु भेदरूपेण कदाचिदप्यगृह्यमाणाः कथं प्रत्यक्षग्राह्या स्युरिति।

ननु प्रत्येकमगृहीतानामपि तावत्सङ्घातग्रहणमुपपन्नम्, अत. परमाणव एवोत्तराधरभावेन निरन्तरावस्थिता गृह्यन्त इति युक्तम्, उभयवादिसिद्धत्वात्तेषाम्, अत आह—

**न च भिन्नेष्वभिन्नत्वबुद्धेर्ग्राह्यत्वसम्भवः॥ १७८॥**

---

१. नीलमेव—२ पु०। २. द्वयम्—३ पु०।
३. न भेदो—३ पु०।

एकस्थूलभासा धीः कथमनेकान् सूक्ष्मांश्चालम्बते संविद्विरोधादिति ॥१७८॥

ननु समुदायस्यैकत्वात् तदालम्बनकधीर्भविष्यति ? अत आह—

**समुदायो न वाप्यस्ति भवतां न च सर्वदा।**
**सर्वेषामसतार्थेन प्रत्ययोत्पत्तिसम्भवः ॥ १७९ ॥**

समुदायो हि समुदायिव्यतिरेकेण नास्त्येव, असश्च कथमबाधितबुद्धिविषयः स्यादिति ॥ १७९ ॥

किञ्च, एकजातीयानामेव समुदायः, न हि वृक्षतोयलोष्टादिषु समुदायबुद्धिरस्ति, अतः परमाणुसमुदायमङ्गीकुर्वतावश्यं परमाणुजातिरङ्गीकर्त्तव्या ? इत्याह—

**न चैकजातियोगेन विनास्ति समुदायता।**
**समुदायेऽपि चाणुत्वं नैतेषामपगच्छति ॥ १८० ॥**

नन्ववयविद्रव्ये न कस्यचित् सामान्यबुद्धिरस्ति, न च तदनेकेषु व्यासक्तमेकमिति गृह्यते, कथ सामान्यमित्युच्यते ? अत आह—

**सामान्यमित्यदृश्येऽपि तेन सामान्य एव नः।**
**व्यासङ्गिनी भवत्येषा धीर्विनाप्येककल्पनात् ॥ १८१ ॥**

अस्ति तस्यानेकावयवव्यासक्तस्य साधारणत्वमिति ॥ १८१ ॥

भवतु व्यासज्यवर्त्तिनोऽवयविसामान्यस्य प्रत्यक्षम्, न तु प्रत्येकवर्त्तिनो गोत्वादेरिति चेत् ? न, प्रतीत्यविशेषात् ? इत्याह—

**व्यासज्य वर्तमानस्य सामान्यस्य यथेन्द्रियैः।**
**ग्रहणं तद्वदेव स्यात् प्रतिव्यक्तिनिवेशिनः ॥ १८२ ॥**

यच्चोभयसिद्धत्वात् परमाणूनामेव ग्रहणमित्युक्तम्, तत्राह—

**मीमांसकैश्च नावश्यमिष्यन्ते परमाणवः।**
**यद्बलेनोपलब्धस्य मिथ्यात्वं कल्पयेद् भवान् ॥ १८३ ॥**

यदि परमाण्वभ्युपगमे दृश्यमानस्य स्थूलस्यापह्नवो भवति ततस्ते एवास्माभिर्नेष्यन्ते, न हि ते प्रत्यक्षेण गृह्यन्ते, स्थूलानुपपत्त्या तु ते कल्प्यन्ते, तद्यदि स्थूलमपह्नुतं ततस्ते कथमभ्युपेयेरन् इति ॥ १८३ ॥

दृष्टापह्नवेन चादृष्टमङ्गीकुर्वता शशमपह्नुत्य शशविषाणमङ्गीकर्त्तव्यम् ? इत्याह—

**समूहरूपं प्रत्यक्षमदृश्यैः परमाणुभिः।**
**योऽपह्नुते शशस्यापि सोऽभावं शृङ्गतो वदेत् ॥ १८४ ॥**

किमिदानी न सन्त्येव परमाणवः ? नेत्याह—

**समूहपरमार्थत्वे स्थिते तत्सिद्धिहेतुका।**
**यदि नामावगम्येत परमाण्वस्तिता पुनः ॥ १८५ ॥**

सिद्धे स्थूले तदनुपपत्त्या परमाणवोऽपि कल्प्यन्ते। स्थूलस्य हि परिमितत्वमसत्सु परमाणुप नोपपद्यते। अनन्तावयवत्वे हि मूर्त्तैरवयवैरन्योन्यावकाशमप्रयच्छद्भिरनन्ततद्देशव्याप्तेरेकेनैव सर्षपेण सर्वं जगत् पूर्येत, अतोऽन्ततोऽपि गत्वा केचिन्निरवयवा एवाङ्गीकर्त्तव्या इति स्थूलसिद्धौ तदनुपपत्त्या सिद्ध्यन्त्येव परमाणवः तदभावान्निष्प्रमाणकाः स्युरिति। तस्माद् यदेव किञ्चिदवयवि द्रव्यं गोत्वादिसामान्य वा साक्षात् प्रतीत्या गम्यते, तत्सर्वं परमार्थत एव तथाभूतं प्रत्यक्ष चेत्युपगन्तव्यमिति ॥ १८५ ॥

उपसहरति—

**तस्माद् यद् गृह्यते वस्तु येन रूपेण सर्वदा।**
**तत् तथैवाभ्युपेतव्यं सामान्यमथ वेतरत् ॥ १८६ ॥**

**सत्तादिसामान्यमपेक्ष्य सर्वं गोत्वादि साधारणतामुपैति।**

किञ्च, विशेषविषयत्वेऽपि प्रत्यक्षस्य न गोत्वादीनामप्रत्यक्षत्वम्, तेषामपि सत्ताद्यपेक्षया विशेषत्वादित्याह—

**तस्मादसाधारणमक्षगम्यं वदन्न सामान्यमपह्नुवीत ॥ १८७ ॥**

प्रत्यक्षेण वस्तु गृह्यमाणमपि गोत्वादिकं न सामान्यम् इत्येव गृह्यते, तत् कथं सामान्यविषयत्वं प्रत्यक्षस्य ? इति शङ्कते—

**सामान्यरूपेण न गृह्यते चेत्,**

परिहरति—

**किं वास्त्यसाधारणबुद्धिरत्र।**

एव ह्यसाधारणत्वेनाप्यनवगमादसाधारणविषयतापि न स्यादिति।

अथ यद् गृह्यते तद् वस्तुतोऽसाधारणमित्युच्यते, ततः सामान्यरूपत्वमपि वस्तुतोऽस्तीति द्विरूपमेव तत् प्रत्यक्षगृहीतमित्याह—

**यद्वस्तु लोकः प्रतिपद्यतेऽस्मिन् द्विधापि तच्छवयत एव वक्तुम् ॥ १८८ ॥**

इत्यनुमानपरिच्छेदः



## अथ शब्दपरिच्छेदः

"शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे ज्ञानम्" ( शा० भा० पृ. ४४ ) इति भाष्यम्, तदाक्षिपति—

**प्रत्यक्षादिषु वक्तव्यं शब्दमात्रस्य लक्षणम्।**
**तदतित्वरितेनेह किं शास्त्रादभिधीयते[1] ॥ १ ॥**

---

१. शास्त्रस्याभिधीयते—पाठान्तरम्। किं वा शास्त्रेऽभिधीयते—२ पु०।

प्रमाणावान्तरभेदेषूच्यमानेषु तद्भेदस्य शब्दस्य लक्षण वक्तव्यम्, न शास्त्रस्य; यद्यवश्यं तदपि वक्तव्यम्, ततः शब्दस्योक्त्वा पश्चाद् वक्तव्यम् । यत्तु तदनुक्त्वैवातित्वरया शास्त्रलक्षणमभिधीयते तन्न युक्तम् ॥ १ ॥

इतश्चायुक्तमित्याह—

**सामान्यलक्षणं त्यक्त्वा विशेषस्यैव लक्षणम् ।**
**न शक्यं केवलं वक्तुमितोऽप्यस्य न वाच्यता ॥ २ ॥**

अवगतसामान्यो हि सुखेन तद्विशेषमवधारयितुमलम् नान्य इति ॥ २ ॥

लक्षणमपि शब्दमात्रसाधारणत्वादतिव्यापकमित्याह—

**यच्चोक्तं शब्दविज्ञानादर्थे ज्ञानमितीदृशम् ।**
**अविशिष्टं विशिष्टस्य न तच्छास्त्रस्य लक्षणम् ॥ ३ ॥**

कीदृश तर्हि शास्त्रलक्षणम् ? तद्दर्शयति—

**प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।**
**पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥ ४ ॥**

ननु वस्तुस्वरूपकथनमपि शास्त्र दृश्यते 'वायुर्वै क्षेपिष्ठा देवता' इतिवत्, अतः कथं प्रवर्त्तकत्व शास्त्रलक्षणम् ? अत आह—

**स्वरूपकथनं यत्तु कस्यचित् तत्र दृश्यते ।**
**तदङ्गत्वेन तस्यापि शास्त्रत्वमवगम्यते ॥ ५ ॥**

**तदङ्गत्वेने**ति । विध्यङ्गत्वेनेत्यर्थ ॥ ५ ॥

ननु भवत्वेवम्, तथापि प्रवर्त्तकत्वाभावात् कथ शास्त्रत्वम्, प्रत्ययस्यैव हि प्रवर्त्तकत्वम्, अतः पदस्यापि शास्त्रत्व न सिध्यति, नतरां विध्युद्देशवर्त्तिना पदान्तराणाम्, नतमामर्थवादानाम् ? अत आह—

**भावनायां समस्तायां[1] वाक्यादेवोपजायते ।**
**प्रवृत्तिर्वा निवृत्तिर्वा तच्छास्त्रं न पदाद् यतः ॥ ६ ॥**

येन हि पुरुषः प्रवर्त्यते तत्प्रवर्त्तकम्, स च त्र्यंशपूरिताया सप्ररोचनाया भावनायां प्रवर्त्तते, तादृशी सार्थवादकविध्युदेशसमर्पणीयेति तद्युक्तस्यैव प्रत्ययस्य प्रवर्त्तकतया शास्त्रत्वं न प्रत्ययमात्रस्य, पदमात्रस्य वेति ॥ ६ ॥

एवमाक्षिप्य समाधत्ते—

**अपरीक्षामिषेणापि लक्षणानि वदन्नयम् ।**
**न स्वतन्त्रोपयोगित्वनिरपेक्षाणि जल्पति ॥ ७ ॥**

मिषेण=छलेन । स्वतन्त्रो वेदः ॥ ७ ॥

किमतो यद्येवम् ? अत आह—

**तत्र यल्लोकवाक्यस्थं कथयेच्छब्दलक्षणम्[2] ।**
**वेदं व्याख्यातुकामस्य तन्नातीवोपयुज्यते ॥ ८ ॥**

---

१. प्रशस्तायामिति पाठान्तरम् । २. कथञ्चिच्छब्द०—२ पु० ।

न हि लौकिकवाक्यस्याप्यव्यभिचारेण प्रामाण्यप्रतिपादनं वेदप्रामाण्ये तदर्थ-विचारे वोपयुज्यत इति ॥ ८ ॥

प्रत्यक्षादि वा किमुपयुज्यते ? सत्यमित्याह—

**प्रत्यक्षाद्युपयोगं तु वर्णमात्रादितः पुरः।**
**शास्त्रार्थज्ञानवेलायां मत्वा तल्लक्षणं कृतम् ॥ ९ ॥**

शास्त्रार्थविधारणाय यदि पुरैव वर्णमात्रादिरूपेण यथावत् शास्त्ररूपमव-धारयितुमस्ति प्रत्यक्षस्योपयोग, तथानुमानादेरपि प्रत्येकगृहीत[1]मन्त्रशेषस्य प्रवृत्तिविशेषस्य विश्वजिदादिफलस्याङ्गेयत्तायाश्चावधारणेऽस्त्युपयोग इति ॥९॥

नन्वस्त्वेव लौकिकस्य वाक्यस्योपयोग इति शास्त्रमात्रस्यैवाव्यभिचारार्थं कृतम् ? इत्याह—

**यत्तु गामानयेत्यादिवाक्यस्थं शब्दलक्षणम्।**
**तस्य नेहोपयोगोऽस्ति तस्माच्छास्त्रगतं कृतम् ॥ १० ॥**

ननु 'गामानय' इत्याद्यपि विधिवाक्यत्वात् शास्त्रमेव, तत् कथं शब्दमात्रे एव निक्षिप्यते ? न तच्छास्त्रम्, लोकप्रसिद्ध्यभावात्। यद्यपि 'शिष्यतेऽनेन' इत्येव शास्त्रशब्द. प्रवृत्त:, तथापि तन्मात्रे प्रयोगाभावात् पङ्कजादिवद् योगरूढ्यभ्युप-गमेन धर्माधर्मोपदेशीनि चतुर्दशाष्टादश वा विद्यास्थानानि शास्त्रशब्दाभिधानीयकं भजन्ते, नान्यदिति ॥ १० ॥

ननु शास्त्रस्यापि शब्दसामान्यप्रयुक्तयैव प्रामाण्यशक्ति, न हि शब्दविशेषस्य शास्त्रस्य शक्तिविशेषोऽस्ति, तेन शब्दसामान्यप्रयुक्तशक्त्युपजीवित्वाच्छास्त्रस्य सामान्यस्याव्यभिचाराय लक्षण वक्तव्यम्, वर्णित चैतत्—

इन्द्रियादिव्युदासेन शब्दो यावन्न साध्यते।
तावन्न तद्विशेषस्य युक्तो वावसरो भवेत् ॥ (श्लो० वा० २-८) इति।

अत आह—

**विशेषश्च न सामान्यमन्तरेणास्ति कश्चन।**
**तस्मात् तमप्युदाहृत्य सामान्यं लक्षयेत् सुखम् ॥ ११ ॥**

सत्यं वक्तव्यं सामान्यलक्षणम्, तदप्यनेनैवार्थात् सिध्यति, तेन साक्षान्न विवक्षितमित्यवधार्यते। यदा हि प्रवर्त्तक वाक्य शास्त्रमित्युक्तम्; तदार्थात् प्रवर्त्तक-विशेषणरहित वाक्यं शब्द इत्यर्थादुक्तं भवतीति ॥ ११ ॥

यत्तु 'अतिव्यापकं लक्षणम्' इत्युक्तम्, तत्राह—

**सामान्यरूपमप्येतदधिकाराद् विशिष्यते।**

शब्दशब्देन सामान्यवाचिना प्रवृत्तत्वाच्चोदनाभिधीयते, अर्थशब्देनापि धर्माधर्माविति।

---

१. 'इषे त्वा' इत्यत्र च्छिनत्तीति ब्राह्मणदर्शनेन च्छिनद्मीति मन्त्रशेषोऽनुमीयत इत्यर्थः। श्लो० वा० : १९

ननु चोदनाया प्रामाण्यं प्रतिज्ञातम्, तत् किं शास्त्रस्याव्यभिचारित्वमुच्यते ? अत आह—

**चोदना चोपदेशश्च शास्त्रमेवेत्युदाहृतम् ॥ १२ ॥**

सामान्यस्याधिकाराद् विशेषवृत्तौ दृष्टान्तमाह—

**यथा[1] च चोदनाशब्दो वैदिक्यामेव वर्तते ।**
**शब्दज्ञानार्थविज्ञानशब्दौ शास्त्रे तथा स्थितौ ॥ १३ ॥**

चोदनापद प्रवर्तनामात्रवचनमपि **चोदनासूत्रे** प्रथमसूत्रोक्तानन्तर्याक्षिप्तवेदाध्ययनाधिकाराद् वैदिक्यामेव वर्त्तते, तथेहापि शब्दशब्दार्थ ; शब्दश्च शास्त्ररूप शब्दे तदर्थयोश्च धर्माधर्मयोर्वर्तत इति ॥ १३ ॥

यदपि **वृत्तिकार**ग्रन्थे प्रत्यक्षादीनि प्रसिद्धानि प्रमाणानि तदन्तर्गतं च शास्त्रमिति शास्त्रस्यैवापरीक्ष्यत्वमुक्तम्, तदपि तस्यैव साक्षादुपयोगित्वादित्याह—

**प्रत्यक्षाद्यपरीक्ष्यत्वे तदन्तर्भावहेतुकम्[2] ।**
**शास्त्रस्याप्यपरीक्ष्यत्वमनयैव धियोदितम् ॥ १४ ॥**

तदिदं शब्दमनुमानान्तर्भूतं **शाक्यवैशेषिकाः** प्रतिपन्नाः । तथाहुः—

प्रत्यक्षमनुमान च प्रमाणे सदृशागमन ।
अप्रत्यक्षस्य सम्बन्धादन्यत प्रतिपत्तित ॥ इति ॥ १४ ॥

तथा **वैशेषिकाः** 'अस्येद कार्य कारण सम्बन्ध्येकार्थसमवायि विरोधि च इति लैङ्गिकम्' इत्युक्त्वा 'एतेन हि शब्द व्याख्यातम्' इति । तथाच सति लक्षणान्तरप्रणयनमनर्थकम्, अतस्तन्निराकरण प्रतिजानाति—

**तत्रानुमानमेवेदं बौद्धैर्वैशेषिकैः श्रितम् ।**

तन्निराकर्त्तव्यमिति शेषः ।

ननु **सांख्यादिभि**रेव भेदः समर्थित, अभेदश्च निराकृतः[3] ? अत आह—

**भेदः सांख्यादिभिस्त्विष्टो[4] न तूक्तं भेदकारणम् ॥ १५ ॥**

सत्यम्, न तु तैर्भेदकारण सम्यक् कथितमिति ॥ १५ ॥

कथम् ? इत्याह सार्द्धेन—

**पूर्वसंस्कारयुक्तान्त्यवर्णवाक्यादिकल्पना ।**
**विवक्षादि च धूमादौ नास्तीत्येतेन भिन्नता ॥ १६ ॥**
**यैरुक्ता तत्र वैधर्म्यविकल्पसमजातिता ।**

वाक्यं हि प्रमाणम्; तच्चानन्त्यं पदमन्त्यं वा, सर्वाणि वा, आख्यातं वा, पूर्ववर्णजनितसंस्कारसयुक्तोऽन्त्यो वा वर्णः—इत्येव बहुविधा कल्पना, विवक्षादिभिश्च तन्निष्पद्यते । न ह्येव बहुविधो विकल्पो विवक्षादिभिः फलनिष्पत्तिर्वा

१. यदा—३ पु० । २. कृतम्—२ पु० ।
३. निराकारः—१ पु० । ४. संख्यादि०—मु० पा० ।

न धूमादिष्वस्ति । तेन विलक्षणकारणजन्यत्वात् प्रमाणान्तरं शाब्दमित्येवं हि तैर्भिन्नत्वमुक्तमेव । तच्च जात्युत्तर वैधर्म्यसमा विकल्पसमा वेय जातिः शाब्द-मनुमानम्, अन्वयव्यतिरेकाधीनजन्मत्वाद् धूमादग्निज्ञानवदिति शाक्यादि-भिरभेदेऽनुमानेन साधिते[1] धूमादिक वाक्यविकल्परहितम् । शाब्दे तु तद्युक्तम्, तद्वै-धर्म्याद् नानुमानमिति वैधर्म्यसमा । तथा अन्वयव्यतिरेकाधीनजननमपि किञ्चिद् वाक्यविकल्पापादनरहितम्, तद्यथा—अग्निज्ञानं किञ्चित् तद्विकल्पयुक्तं यथा शाब्दम्, तथा किञ्चिदनुमान किञ्चिदननुमान[2] भविष्यतीति विकल्पसमा, तदिदं जात्युत्तरम् असाधनमिति ।

कथं न साधनम् ? इत्याह—

**धूमानित्यविषाण्यादिविशेषान्न हि भिन्नता ॥ १७ ॥**

अनुमानानामपि मिथोऽस्त्येव किञ्चिद् वैधर्म्यमपि, न तावतानुमानता सिध्य-तीति ॥ १७ ॥

कथं तर्हि तत्सिद्धिः ? अत आह—

**त्रैलक्षण्यपरित्यागो यावन्न प्रतिपाद्यते ।**
**तावद् विशेषमात्रेण वदतो जातिता भवेत् ॥ १८ ॥**

पक्षधर्मत्वम्, सपक्षान्वयः, विपक्षव्यतिरेकश्च त्रीणि लिङ्गस्य लक्षणानि भवन्ति, तादृशलिङ्गजत्वमनुमानलक्षणम् । अतः शब्दस्यानुमानतामनिच्छता शब्दस्य त्रैलक्षण्यपरित्याग एव प्रतिपादयितव्यः, तदप्रतिपादनेन यत्किञ्चिद् विशेषवचनं जातिरेवेति ।

यदप्युच्यते—शब्दो हि यत्रैव पुरुषेच्छया विनियुज्यते सङ्कीर्त्यते तदेव प्रत्या-ययति, न तथा धूमादयः—अतोऽनुमानाद् भेद इति ॥ १८ ॥

तदप्यनैकान्तिकम्, हस्ताद्यङ्गचेष्टाना लिङ्गानामपि यथेष्टविनियोगेन प्रत्यायकत्वदर्शनादित्याह—

**यथेष्टविनियोगेन प्रतीतिर्यापि शब्दतः ।**
**न धूमादेरितीहापि व्यभिचारोऽङ्गवृत्तिभिः ॥ १९ ॥**

एतदेव विवृणोति—

**हस्तसंज्ञादयो येऽपि यदर्थप्रतिपादने ।**
**भवेयुः कृतसङ्केतास्ते न लिङ्गमिति स्थितिः ॥ २० ॥**

यदपि धूमादयो येन केनापि पुरुषेण निष्पादिता दर्शिताश्चाग्न्यादिकं गम-यन्ति, शब्दस्तु प्रयोक्तुः पुरुषस्याप्तत्वमपेक्ष्यार्थं प्रत्याययन्नानुमानमिति; तस्यापि हस्तसंज्ञादिभिरेव व्यभिचारः । न ह्यनाप्तस्य हस्तसंज्ञाभिरर्थनिश्चयो भवति,

---

१. साधितं—मु० पा० । २. किञ्चिच्चानुमानं न—मु० पा० ।

स हि विप्रलिप्सया तथाभूतेऽप्यर्थेऽन्यादृशी हस्तचेष्टा वाक्यप्रणयनवत् करोतीत्याह—

**पुरुषाक्षिप्ततायां च तथैव व्यभिचारिता ।**

भागासिद्धश्चाय पुरुषाप्तत्व पुरुषापेक्षत्वं वा हेतुः, पदेषु वैदिकवाक्येषु चाव्याप्तेरित्याह—

**पदवैदिकवाक्यानां[1] न सत्यव्यापिता भवेत् ॥ २१ ॥**

शब्दार्थयो. सम्बन्धस्तु यत्पुरुषद्वारेण गृह्यते नैतावताननुमानत्वं सिध्यति, अन्यत्राप्यनुमानेषु सम्बन्धद्वाराणां विलक्षणत्वदर्शनादित्याह—

**सम्बन्धानुभवश्चायं सोऽन्यत्रापि विलक्षणः ।**

वैलक्षण्यमेव दर्शयति पादत्रयेण—

**एतस्मिन् पुरुषापेक्षा देशापेक्षाग्निधूमयोः[2] ॥ २२ ॥**

**कालाद्यपेक्षया चान्यः,**

एतस्मिश्च शब्दानुमाने पुरुषापेक्ष. शब्दार्थयो· सम्बन्ध , आप्तपुरुषप्रणीतशब्दस्यार्थाविसवादादिति । अग्निधूमयोर्देशद्वारा—यस्मिन् देशे धूमः तत्राग्निरिति, चन्द्रोदयसमुद्रवृद्धयोस्तु कालापेक्ष इति । प्रत्युत पुरुषापेक्षितयैव शब्दस्यानुमानादभिन्नता शाक्यादिभिरुक्ता, आप्तवादित्वाविसंवादित्वसामान्ययोर्व्याप्तिदर्शनात्, अत· कथमियमेव भेदहेतुत्वेनोच्यते ? इत्याह पादत्रयेण—

**उक्ता चान्यैरभिन्नता ।**

**आप्तवादाविसंवादसामान्याद् अनुमानतः ॥ २३ ॥**

ननु गृहीतसम्बन्ध लिङ्गं लिङ्ग्यनुमापकम् शब्दास्त्वपूर्वदेवतास्वर्गादियोऽगृहीतसम्बन्धा एवार्थं प्रत्याययन्तीति कथमनुमानम् ? अत आह—

**न चापूर्वादिशब्दानां भेदात् सर्वत्र भिन्नता[3] ।**

अपूर्वादयोऽल्पा ह्येके सम्बन्ध नापेक्षन्ते, न तावता सर्वशब्दाना भिन्नतेति । तेषामपि पदत्वात् सम्बन्धापेक्षेत्याह—

**न चेहाश्वादिशब्देभ्यो भेदस्तेषां प्रतीयते ॥ २४ ॥**

किमितो यत् पदम् ? अत आह—

**न चाप्यज्ञातसम्बन्धं पदं किञ्चित् प्रकाशकम् ।**

अत. सम्बन्धाननुभवाद् यद्येषामननुमानत्वं न तत्सिद्धयतीत्याह—

**सम्बन्धाननुभूत्यातो न स्यादननुमानता ॥ २५ ॥**

अपूर्वादिपदमप्यर्थापत्त्यादिसिद्धापूर्वाद्यर्थैर्गृहीतसम्बन्धमेव प्रत्यायकमिति ।

भेदकारणान्तरमुपन्यस्य निरस्यति—

---

१. यदवैदिकेति पाठान्तरम् । २. पुरुषापेक्षो देशापेक्ष०—२ पु० ।

३. भिन्नते—३ पु० पा० ।

**तुल्याकारतयाप्यत्र शब्दज्ञानार्थतद्धियाम् ।**
**अग्निधूमेष्वदृष्टत्वान्न भेदस्तन्निवारणात् ॥ २६ ॥**

निरस्तेयं तुल्याकारता प्रत्यक्षसूत्रे इति ॥ २६ ॥

अनैकान्तिकं च तुल्यत्वं लिङ्गेष्वपि सम्भवादित्याह पादत्रयेण—

**प्रतिबिम्बेष्वनैकान्तो बिम्बं यादृग्घि दर्पणे ।**
**तादृङ् मुखादि बुध्यन्ते,**

ननु दर्पणतेजःप्रतिहतेन नायनेन तेजसा संयुक्तं मुखं प्रत्यक्षेणैव गृह्यत इति नेदमनुमानम् ? अत आह—

**न चात्राननुमानता ॥ २७ ॥**

यद्यपि तदेव मुखमादर्शे गृह्यते, तथापि न प्रत्यक्षेण तदेवेति गम्यते, तत्त्वान्यत्वसाधारणं प्रत्यक्षम् । परीक्षकास्तु न्यायतस्तत्त्वमध्यवस्यन्ति, प्रतिपत्तारस्तु मुकुरे केवलं प्रतिबिम्बं पश्यन्तः प्रत्यक्षेष्वङ्गुल्यादिषु बिम्बप्रतिबिम्बयोः सारूप्यं गृहीत्वा मुखस्यापि प्रतिबिम्बसारूप्यमनुमिमते, इत्यनुमानमेवेदमिति ॥ २७ ॥

भवतु वा प्रत्यक्षम्, तथाप्यन्यदुदाहरणमस्तीत्याह—

**प्रत्यक्षता तदाप्यत्र तदान्यैर्व्यभिचारिता ।**
**यत्र पादादि बिम्बेन गतानामनुमीयते ॥ २८ ॥**

सिकतावस्थितेन पादबिम्बेन तादृगेव गताना पादोऽनुमीयत इति ॥ २८ ॥

भेदकारणान्तरमुपन्यस्य दूषयति—

**एकवाक्यात् सकृच्चोक्तान्नाप्यनेकस्य तल्लक्षणम्[1] ।**
**स्याद् विरुद्धाविरुद्धस्य बोधादेतस्य भिन्नता ॥ २९ ॥**

लिङ्गं ह्येकमेवार्थं बोधयति, वाक्यं त्वेकमेव सकृदेवानेकमर्थं विरुद्धमविरुद्धं च बोधयति, यथा—श्वेतो धावतीति, सारमेय इतो द्रुतं गच्छतीति, श्वेत. पुरुषो वस्त्राणि शोधयतीति । तथा विरुद्धमुत्पलद्वयमन्तरा कमलद्वयमिति । न हि ज्ञायते कमलयोर्मध्ये वोत्पले विपरीतं वोत्पलयोरिति, द्वयं च विरुद्धम् । अतोऽनुमानाद् भिन्नं शाब्दमिति एवमपि न भिन्नतेति ॥ २९ ॥

कथम् ? इत्यत आह—

**लिङ्गस्यापि हि ताद्रूप्यं दृष्टं हेतुविरुद्धयोः ।**

हेतुस्तावद्धूमादिरग्निमार्द्रेन्धनं तत्सम्बन्धम् औष्ण्यं चानेकं गमयतीति ।

तथा विरुद्ध. नित्य. शब्दः कृतकत्वादिति सहसा तावन्नित्यत्वं गमयति व्याप्तिबलेन च तद्विपरीतमपनित्यत्वमिति । शङ्कते पादतृतीयेन[2]—

---

1. लक्षणम्—२ पु० ।  2. पादत्रयेण—मु० पा० ।

**विरोधान्नानुमानं चेत्,**

ततो नित्यत्वप्रतीतिः नानुमानम्[1]; तद्विरुद्धस्य तद्गमकतायोगादिति।

परिहरति—

**स्यादनागमतापि ते ॥ ३० ॥**

शब्दोऽप्येकत्रैव गमको भवति, नोभयत्रेति ॥ ३० ॥

यदि चानेकार्थत्वमनुमानाद् भेदहेतुः, एकार्थानां न भेदः स्यादित्याह—

**यत्र चैकार्थता वाक्ये तत्र स्यादनुमानता।**

यदुक्तम्—एकत्रैव गमकत्व नोभयत्रेति, तदुपपादयति—

**सकृदुच्चरिते चास्मिन् विवक्षैकैव दृश्यते ॥ ३१ ॥**

तात्पर्ये हि शब्दा प्रमाणम्, सकृदुच्चरितस्यैकत्रैव तात्पर्यमिति ॥ ३१ ॥

यदि परमनिर्धारितार्थविशेषाणामनेकार्थविषयसशयमात्र स्यात्, तच्च लिङ्गेऽपि दूराद् धूमरेणुसङ्घातसशयेऽग्निवात्ययोः सशयात् तुल्यम्, अतो नानेकार्थत्वेनानुमानाद् भेदसिद्धिरित्याह—

**यस्त्वनिर्धारितार्थानाम् अनेकप्रतिभोद्भवः।**
**स लिङ्गेऽप्यस्फुटे दृष्टस्तस्मान्नैतेन भिद्यते ॥ ३२ ॥**

यदपि दृष्टान्तानभिधानादननुमानत्वम्, तदप्यनेकान्तिकमित्याह—

**दृष्टान्तानभिधानं च धूमादौ व्यभिचारितम्।**
**प्रसिद्धत्वाद्धि तत्रापि न दृष्टान्तोऽभिधीयते ॥ ३३ ॥**

असिद्धे तु दृष्टान्तवचन शब्देऽपि क्वचिदस्त्येवेति असिद्धो हेतुरित्याह—

**अनभ्यस्ते त्वपेक्षन्ते शब्दे सम्बन्धिनः स्मृतिम्।**

एतदेव दर्शयति—

**अत्र[2] प्रत्युक्त इत्येवं बुध्यन्ते हि चिरात् क्वचित् ॥ ३४ ॥**

तदेवं सांख्यादिभिर्भेदो न सम्यक् साधित इत्युक्तम् ॥ ३४ ॥

शाक्याद्युक्ताभेदहेतुनिराकरणमपि न सम्यक्कृतमित्याह—

**परोक्ता हेतवश्चात्र नाभेदस्य निवारिताः।**

तानेव दर्शयति सार्द्धद्वयेन—

**शब्दानुमानयोरैक्यं धूमादग्न्यनुमानवत् ॥ ३५ ॥**
**अन्वयव्यतिरेकाभ्याम् एकप्रत्यक्षदर्शनात्।**
**सम्बन्धपूर्वकत्वाच्च प्रतिपत्तिरितो यत ॥ ३६ ॥**
**प्रत्यक्षान्यप्रमाणत्वात् तददृष्टार्थबोधनात्।**
**सामान्यविषयत्वाच्च त्रैकाल्यविषयाश्रयात् ॥ ३७ ॥**

---

१. सानुमानं—मु० पा०।    २. यत्र—२ पु०।

एकदेशिमतेन निराचष्टे—

**कैश्चिन्मीमांसकैरुक्तो भेदोऽत्र विषयान्तरात् ।**

विषयात् कारणमाह—

**पूर्वाभ्यां ह्यपरिच्छिन्ने शास्त्रमर्थे प्रवर्तते ॥ ३८ ॥**

प्रत्यक्षानुमानागोचरत्व हि धर्माधर्मयो. स्थितम्, तच्च यदगोचरे प्रवर्त्तते तत् ततो भिद्यते, प्रत्यक्षादिवानुमानमिति ॥ ३८ ॥

तदिद स्वाभिप्रायेण तावत् सिद्धान्तवादी दूषयति—

**तत्रापि नागमत्वं स्यात् पुरुषोक्ते,**

शङ्कते—

**तथास्तु चेत् ।**

दूषयति—

**प्रत्ययः किन्निमित्तोऽर्थे,**

परः पुनराह—

**वक्तृबुद्धेः,**

वाक्याद् वक्तृबुद्धिरनुमीयते तया चार्थं इति ।

दूषयति—

**कुतो न्वसौ ॥ ३९ ॥**

वक्तृबुद्धिरेव न कुतश्चित् सिध्यति, कथ तथार्थसिद्धिरिति ॥ ३९ ॥

उभयासिद्धि दर्शयति—

**न शब्दार्थस्य सा लिङ्गं न शब्दोऽस्याः कथञ्चन ।**

कथम् ? इत्याह—

**विशेषो गम्यते ताभ्यां[1] न चैतस्यानुमेयता ॥ ४० ॥**

बुद्धिविशेषोऽर्थविशेषश्च नदीतीरादिवाक्योच्चारणे गम्यते । न विशेषस्यानुमानतः सिद्धि. । वाक्यमात्रेण हि बुद्धिमात्रमनुमीयते, ततश्चार्थमात्रमिति । तेनावश्यमनिरूपितावस्थ एव वक्तृज्ञाने पुरुषवाक्यमागमरूपेणैवार्थ प्रतिपादयतीत्यङ्गीकर्तव्यम् । तथा हि सत्यर्थविशेषप्रतिपादकवाक्यरचनया तदर्थविषया बुद्धिरनुमातु शक्या भवति, इतरथा तु वाक्यमात्रान्न विशेषानुमान सिद्धयतीत्याह—

**तेन वक्तुरभिप्राये प्रत्यक्षाद्यनिरूपिते ।**

**पुरुषोक्तिरपि श्रोतुरागमत्वं प्रपद्यते ॥ ४१ ॥**

यच्चान्यद् वक्तव्यं तत् सर्वं न्यायरत्नमालायामुक्तमिति ॥ ४१ ॥

सम्प्रति शाक्याभिप्रायेण दूषयति—

**न चाप्यननुमेयत्वमागमार्थस्य शक्यते ।**

---

१. ताभ्यामिति । शब्देन, वक्तृनिष्ठया बुद्धया चेति ज्ञेयम् ।

यदा हि शब्दस्यार्थे लिङ्गत्वं तदा वेदार्थोऽप्यनुमेयः स्यादिति ।

कथम् ? इत्याह—

**लिङ्गं हि शब्द एवास्य धूमोऽग्नेरिव कल्प्यते ॥ ४२ ॥**
**न चाप्यननुमेयत्वात् प्रमाणान्तरगम्यता ।**
**रूपस्याश्रावणत्वेन न ह्यप्रत्यक्षतेष्यते ॥ ४३ ॥**

वेदवाक्यमेव स्वार्थस्य लिङ्गमिति ॥ ४२-४३ ॥

तथाप्यर्थात्मकलिङ्गाभावान्नानुमेयत्वत्वमिति चेत् ? तत्राह—

**एवं सति स्वयूथ्या न केचिन्नातिप्रपञ्चिनः[1] ।**
**अनुमानविशेषोऽयमीदृग् धर्मस्य बोधकः ॥ ४४ ॥**

नन्वनुमानस्य भविष्यति प्रत्यक्षागोचरे धर्मे प्रमाणत्वं निराकृतम्, अतोऽनुमानत्वे वेदस्याप्रामाण्य धर्मे स्यादत आह—

**भविष्यत्यर्थरूपं तु लिङ्गं धर्मे निराकृतम् ।**

अर्थात्मकमेव लिङ्ग धर्मे न प्रवर्त्तते, शब्दात्मकं तु प्रवर्त्तत एवेति ।

दूषयति—

**संज्ञानुमानतेच्छा तु न दुष्येदागमेऽपि नः ॥ ४५ ॥**

यदि प्रमाणान्तरस्यैव पश्चान्मानसामान्याच्छब्दस्यानुमानसज्ञा क्रियते, साऽस्तु नाम इति ॥ ४५ ॥

लक्षणतस्तु शब्दस्यानुमानत्वे वेदस्य तल्लक्षणत्वाभावात् प्रमाणान्तरत्वानभ्युपगमाच्चाप्रामाण्यं स्यादित्याह—

**लक्षणेन त्वभिन्नत्वं यदि शब्दानुमानयोः ।**
**वेदज्ञानाप्रमाणत्वं स्यादतल्लक्षणत्वतः ॥ ४६ ॥**

कथम् ? इत्याह द्वयेन—

**आप्तवादाविसंवादसामान्यान् नृवचस्सु हि ।**
**लक्षणेनानुमानत्वात् प्रामाण्यं सिद्धिमृच्छति ॥ ४७ ॥**
**वेदे त्वाप्तनराभावात् सम्बन्धानुभवाद् ऋते ।**
**लक्षणं नानुमानस्येत्यप्रामाण्यं प्रसज्यते ॥ ४८ ॥**

न तावद् वक्तृविशेषबुद्धिमनादृत्य शब्देनैवाञ्जसाऽर्थोऽनुमातुं शक्यत इति वक्ष्यते, तेन लक्षणतोऽनुमानत्व वदता आप्तोक्तत्वस्याविसवादित्वव्याप्तेस्तेनास्यानुमानत्व वक्तव्यम्, इदं च नृवचस्स्वेव सम्भवति । वेदस्य तु गृहीताविसंवादनियमस्याप्तप्रत्ययाभावात् कथमनुमानत्वे प्रामाण्यम्, तद्भावे वा बलात् पौरुषेयत्वापत्तिरिति ॥ ४७-४८ ॥

---

१. नातिप्रयत्नतः—१ पु० ।

चोदयति—

**नन्वेकदेशसत्यत्वे तस्य स्यादनुमानता।**
**वेदत्वादग्निहोत्रादौ वायुक्षेपिष्ठवाक्यवत् ॥ ४९ ॥**

परिहरति—

**नादित्ययूपेऽनैकान्तात्,**

अत्र तावदिदमेव वक्तव्यम्, एवमप्यर्थप्रतिपत्तिर्नानुमानिकी सिद्ध्यति, प्रतिपन्नस्यार्थस्य[1] पश्चात् सत्यतामात्रानुमानमिदमुपन्यस्तम्, प्रतिपन्नस्य चार्थस्य सत्यत्वं स्वत. प्रामाण्यादेव सिद्धमिति किमनुमानेनेति। तदास्तां तावदादित्ययूपवाक्ये तावदनैकान्तिको हेतुरिति।

ननु तदपि गुणवृत्त्या स्तुतिं कुर्वत् प्रमाणमेव ? अत आह—

**तद्वद् वा गौणता भवेत्।**

प्रमाणान्तरसङ्गतार्थविषया हि सत्यता क्षेपिष्ठादिवाक्ये दृष्टेत्यग्निहोत्रादिवाक्यानामपि न स्वमहिम्ना प्रामाण्यं स्यात्, अतस्तान्यपि प्रमाणान्तरसिद्धं यं कञ्चिदर्थमादित्ययूपवाक्यवद् गुणवादेन वदेयुरिति।

सप्रतिसाधनश्चाय हेतु स्वर्गकामादिसम्बन्धविषया इत्यादिभिरप्रामाण्यं हेतुभिरित्याह—

**नातः प्रत्यनुमानानामेवं पूर्वोक्तया दिशा ॥ ५० ॥**

तस्माल्लोकवेदसाधारण्येनैव यदि शब्दमनुमानाल्लक्षणत एव प्रमाणान्तरं स्यात्, तत. सिद्ध्यति वेदप्रामाण्यम्, नान्यथेत्याह—

**तस्माल्लक्षणभेदेन यदि शब्दप्रमाणता।**
**समा लोके च वेदे च सिद्धा वेदप्रमाणता ॥ ५१ ॥**

यत एव लोकवेदसाधारण्येनेव लक्षण वक्तव्यम्, अत एव 'आप्तोपदेशः शब्दः' ( न्या० सू० १.१.७ ) इतीदमपि लक्षणमक्षपादोक्त नावकल्पत इत्याह—

**तेन चाप्तोपदेशत्वं न स्यादागमलक्षणम्।**

किमिति न स्यात् ? अत आह—

**नाप्तस्य सम्भवो वेदे,**

किञ्च, लोकेऽपि नाप्तप्रणीतत्वात् प्रामाण्यमित्याह—

**लोके नास्मात् प्रमाणता ॥ ५२ ॥**

कारण चात्र प्रागेवोक्तमित्याह—

**पुरस्ताद् वर्णितं ह्येतत्,**

तस्माद् भाष्योक्तमेव लक्षणमित्याह—

**तस्माच्छब्देन या मतिः।**

---

१. अर्थस्येति ३ पु० नास्ति।

**तस्याः स्वतः प्रमाणत्वं न चेत् स्याद्दोषदर्शनम् ॥ ५३ ॥**

"शब्दविज्ञानात्" इति च भाष्य न चेद्दोषदर्शनमित्युपस्कृत्य व्याख्येयमिति ।

ईदृशस्य शब्दस्यानुमानाद् भेद प्रतिजानाति—

**अनुमानेन चैतस्य प्रामाण्यं केवलं समम् ।**

द्विधा शाब्दम्—पदम्, वाक्य च । पदमभ्यधिकाभावादप्रमाणमसन्निकृष्टग्रहणेनैव व्यावर्त्तितमिति न तस्य भेदः प्रतिपादनीयः । तथापि परै. पद एवाभेदः प्रतिपादित इति वयमपि तत्रैव भेदं प्रतिपादयाम इत्याह—

**पदे तावत् कृतो यत्नः परैरित्यत्र वर्ण्यते ॥ ५४ ॥**

तदिदानी वर्णयति—

**विषयोऽन्यादृशस्तावद् दृश्यते लिङ्गशब्दयोः ।**

तदेव विवृणोति—

**सामान्यविषयत्वं च पदस्य स्थापयिष्यति ॥ ५५ ॥**

**धर्माधर्मविशिष्टश्च लिङ्गीत्येतच्च साधितम् ।**

ननु त्रैलक्षण्यपरित्यागो वाच्य. शब्दस्य, किं विशेषान्तराभिधानेनात आह—

**न तावदनुमानं हि यावत् तद्विषयं न तत् ॥ ५६ ॥**

विशिष्टविषयतापि ह्यनुमानस्य लक्षणमेव दर्शितम्—एकदेशान्तरे बुद्धिरिति, 'परैरप्युक्तम्—प्रसिद्धोऽयमप्रसिद्धविशेषणविशिष्टतया स्वय साध्यत्वेनेप्सितः पक्ष इति । तेन विशिष्टविषयत्वाभावादनुमानत्वमेव न भवतीति ॥ ५६ ॥

ननु विशिष्टविषयमपि पदं दृष्टम्, तथा लोके 'को याति' इति पृष्टे 'अश्व' इत्युक्ते केवलादश्वपदादश्वविशिष्टा क्रिया गम्यते, अत आह—

**सामान्यादतिरिक्तं तु शाब्दे वाक्यस्य गोचरः ।**

कथमश्रुते पदान्तरे वाक्यत्वम् ? अत आह—

**सामर्थ्यादनुमेयत्वादश्रुतेऽपि पदान्तरे ॥ ५७ ॥**

प्रश्नवाक्यगत क्रियापदमनुपपत्त्यानुषङ्गेण वाक्यशेष. कल्प्यते, द्वारमित्यादावप्यनुपपत्त्यैव 'सन्नियताम्' इत्यादिकमध्याह्रियत इति ॥ ५७ ॥

शङ्कते—

**संख्यादिमान् पदार्थश्चेत्,**

तेन पदमपि विशिष्टविषयमिति ।

परिहरति—

**न तावत् सोऽव्ययादिषु ।**

गवादिपदे तर्हि कथम् ? अत आह—

**यत्रापि ते प्रतीयन्ते तत्र व्यक्तेर्विशेषणम् ॥ ५८ ॥**

**पदान्तराभिधेयस्य तादर्थ्याच्च क्रियात्मनः ।**

जातिर्हि पदार्थो न तद्विशेषणं संख्यादयः, ते ह्यनुरञ्जनेन व्यक्तेर्विशेषणम्, तादर्थ्येन तु क्रियाः। ते हि प्रत्ययश्रुत्या कारकत्वमापन्ना. क्रियायां विनियुज्यन्त इति चतुर्थे वक्ष्यत इति।

यत्तर्हि गोमत्पाचकादिपद वाक्यार्थवृत्ति तद्विशिष्टविषयत्वादनुमानं स्यात्, अत आह—

**वाक्यार्थेऽपि पदं यत्र गोमदादि प्रयुज्यते ॥ ५९ ॥**

**सत्यप्यत्र विशिष्टत्वे सिद्धत्वान्नैव पक्षता।**

प्रमाणसिद्धो हि धर्मी धर्मविशिष्टतया अनुमानत. साधयितव्यः, अत्र प्राक् पदोच्चारणान्न किञ्चत् सिद्धम्, उच्चारिते तु विशिष्टमेव सिद्धमिति नानुमेयत्वमिति।

विशिष्टसिद्धिमेव दर्शयति—

**तावानेव हि तत्रार्थो यः पूर्वमवधारितः ॥ ६० ॥**

पूर्वपदोच्चारणाद् धर्मी सिद्धिमासादयन् यद्विशेषणविशिष्टोऽवधारित. तदुत्तरकालमपि न ततोऽधिक किञ्चिदनुमेयमस्तीति ॥ ६० ॥

किञ्च—अत्रापि भिन्नयो प्रकृतिप्रत्यययो पृथक्पृथग्विशेषणविशेष्यस्वरूपमेव वाच्यम्। विशिष्टता तु समभिव्याहारादेव पदार्थानामिव वाक्ये सिध्यतीति न शब्दस्य विशिष्टविषयत्वम्, अतो वैषम्यमनुमानादित्याह—

**भेदबुद्धेश्च वैषम्यं प्रकृतिप्रत्ययार्थयोः।**

किञ्च, स्वतन्त्रगृहीतो धर्मी स्वतन्त्रस्मृतेन धर्मेण विशिष्टोऽनुमानविषयः, न च शब्दे स्वातन्त्र्यग्रहणमस्तीत्याह—

**विशेषणविशेष्यार्थस्वातन्त्र्यग्रहणं न च ॥ ६१ ॥**

वैषम्यान्तरमाह—

**विशेष्यपूर्विका तत्र बुद्धिश्चात्र विपर्ययः।**

चोदयति—

**अथ शब्दोऽर्थवत्त्वेन पक्षः कस्मान्न कल्प्यते ॥ ६२ ॥**

शब्दमेव स्वतन्त्रगृहीतं पक्षीकृत्य स्वतन्त्रस्मृतेनार्थेन विशिष्टं साधयेदिति॥६२॥

परिहरति—

**प्रतिज्ञार्थैकदेशो हि हेतुस्तत्र प्रसज्यते।**

न हि धर्मिणः शब्दादन्योऽस्ति हेतुरिति।

ननु धूमे पक्षीकृते यथा स एव हेतुः तथा शब्देऽपि कि न भवति ? अत आह—

**पक्षे धूमविशेषे च सामान्यं हेतुरिष्यते ॥ ६३ ॥**

न त्वेवमिह सम्भवतीत्याह—

**शब्दत्वं[१] गमकं नात्र गोशब्दत्वं निषेत्स्यते।**

---

१. शब्दे च इति पाठान्तरम्।

**व्यक्तिरेव विशिष्यातो हेतुश्चैका प्रसज्यते ॥ ६४ ॥**

गोशब्द पक्षीकृत्य तस्मिन् सास्नादिमद्विशिष्टे साध्ये शब्दत्वमनैकान्तिकं गोशब्दत्वं च नान्योऽर्थो धर्मिणोऽस्तीति स्यादेव प्रतिज्ञार्थैकदेशतेति ॥ ६४ ॥

शङ्कते—

**भवेद् व्यञ्जकभेदाच्चेत्,**

व्यञ्जकभेदादस्त्येव गोशब्दव्यक्तीना भेदः, अतश्च सामान्यमस्तीति।

परिहरति—

**न त्वेवं प्रत्ययोऽस्ति नः।**

यथा च नास्ति भेदप्रत्ययः तथा च वक्ष्यत इति।

केन सम्बन्धेनार्थ. शब्दं विशिनष्टि ? न तावदेकदेशकालतया, युधिष्ठिर-शब्देदेशकालयोर्युधिष्ठिरस्याभावात् ? इत्याह—

**कथ चास्य विशिष्टत्वं न तावद् देशकालतः ॥ ६५ ॥**

शङ्कते—

**तत्प्रतीतिविशिष्टश्चेत्,**

दूषयति—

**परं किमनुमीयते।**

जातायामर्थप्रतीतौ पश्चात् तद्विशिष्टत्वानुमान सिद्धफलत्वादनर्थकम्, लिङ्गि-प्रतीतिरेव लिङ्गस्य फलमिति। अथ न प्रतीति साध्यते, कि तर्हि ? तच्छक्ति., सा कस्य ? यदि गोशब्दस्य, स एव तर्हि शक्तिविशिष्ट पक्ष स एव च हेतुरिति सैव प्रतिज्ञार्थकदेशता, न च सामान्यविशेषभेदो नास्तीत्युक्तम् ? उपेत्याप्याह—

**न प्रत्यायनशक्तिश्च विशेषस्यानुमीयते ॥ ६६ ॥**

यदि विशेषस्य पक्षस्य शक्तिविशिष्टतानुमीयते, तत. सामान्यहेतु. स्यात्, न तु सानुमातु शक्येति ॥ ६६ ॥

कथम् ? इत्याह—

**विशेषाणां न शक्तिर्हि सैकदेशेऽग्निजातिवत्।**

यदि हि महानसादिदेशविशेषान्वयिनीवाग्निजातिः एका व्यापिका शक्तिः पूर्वदृष्टगोशब्दविशेषान्वयिनी दृष्टा स्यात्, ततः सा अधुनातने विशेषे अग्नित्व-मिवानुमीयेत, न तु विशेषाणा शक्तिर्दृष्टेति।

कस्य तर्हि दृष्टा ? अत आह—

**सामान्यस्यैव शक्तत्वं पक्षो हेतुस्तदेव च ॥ ६७ ॥**

अग्नित्वस्य देशविशेषान्वय. प्रत्यक्षः, शक्तिस्त्वर्थापत्तिगम्या, आकृत्यधिक-रणन्यायेन वाच्यमिव वाचकशक्तिरपि सामान्यस्यैवावगता, अतः सामान्यमेव सपक्षः पक्षो हेतुश्चेति कथमिव सम्भवतीति ॥ ६७ ॥

उपसंहरति—

**तस्मादर्थविशिष्टस्य न शब्दस्यानुमेयता ।**

तदेवं विषयभेदमुक्त्वा इदानीं त्रैलक्षण्यं निराकुर्वन् पक्षधर्मत्वं निराकरोति—

**कथं च पक्षधर्मत्वं शब्दस्येह निरूप्यते ॥ ६८ ॥**

शब्दो हि लिङ्गम्, तस्य च स्वयं धर्मित्वायोगादर्थो धर्मी कर्त्तव्यः, तद्धर्मत्वं च शब्दस्य न सम्भवतीति ॥ ६८ ॥

कथम् ? इत्याह—

**न क्रियाकर्तृसम्बन्धाद् ऋते सम्बन्धनं क्वचित् ।**

क्रियाकारकसम्बन्धपूर्वोऽयं सम्बन्ध इति । एतदेवोदाहरणैर्दर्शयति द्वयेन—

**राजा भर्त्ता मनुष्यस्य तेन राज्ञः स उच्यते ॥ ६९ ॥**
**वृक्षस्तिष्ठति शाखासु ता वा तत्रेति तस्य ताः ।**
**देशोऽग्निमति धूमस्य कर्तृत्वं भवनं प्रति ॥ ७० ॥**
**कार्यकारणभावादौ क्रिया सर्वत्र विद्यते ।**

शब्दस्यार्थेन सह न कश्चित् सम्बन्धोऽवगम्यते, न चानवगतरूपं सम्बन्धमात्रमस्तीति शक्यं वक्तुमित्याह—

**न चानवगताकारः सम्बन्धोऽस्तीति गम्यते ॥ ७१ ॥**

तदभावे च पक्षस्य धर्म इति वा समासो नावकल्पत इत्याह—

**न चास्त्यसति सम्बन्धे षष्ठीतत्पुरुषोऽपि वा ।**

उपसंहरति—

**तस्मान्न पक्षधर्मोऽयमिति शक्या निरूपणा ॥ ७२ ॥**

केचित्तु 'शब्दोऽर्थविषय' इत्येव तस्य धर्मता मन्यन्ते, यथा अनुपलब्धिरभावविषयेति तदुपन्यस्यति—

**निवृत्तेऽन्यत्र सम्बन्धे येऽपि तद्विषयात्मना ।**
**वदेयुः पक्षधर्मत्वं शब्दस्यानुपलब्धिवत् ॥ ७३ ॥**

दूषयति—

**तैरप्येतन्निरूप्यं तु शब्दस्तद्विषयः कथम् ।**

कथं वा न भवति ? इत्यत आह—

**न तद्देशादिसद्भावो नाभिमुख्यादि तस्य वा ॥ ७४ ॥**

देशादिसम्बन्धाभावे चार्थबुद्धिजननेनैव तज्जननशक्त्या वा तद्विषयता वक्तव्येत्याह—

**तस्मादुत्पादयत्येष यतोऽर्थविषयां मतिम् ।**
**तेन तद्विषयः शब्द इति धर्मत्वकल्पना ॥ ७५ ॥**

भवत्वेवमिति चेत् ? तत्राह—

**तत्र वाचकतायां च सिद्धायां पक्षधर्मता।**
**न प्रतीत्यङ्गतां गच्छेन्न चैवमनुमानता ॥ ७६ ॥**

जननेन हि तद्धर्मत्वं प्रतीत्युत्तरकालत्वान्न प्रतीतेरङ्गं स्यात्, प्रतीतिरपि पक्षधर्मत्वानादरेणोपजाता नानुमानं स्यात्, वाचकता प्रतिपादकता तच्छक्तिर्वा, शक्त्यधीनेऽपि तद्धर्मत्वे तत प्रागेव शक्तिरङ्गीकर्त्तव्या, सत्या च स्वभावत. शक्तौ तत एव तत्प्रतीतिसिद्धे किं पक्षधर्मत्वेनेति ॥ ७६ ॥

तदेव सति यदि पक्षधर्मत्वादेव गमकत्वमिष्यते, अतः पक्षधर्मत्वमपि गमकत्वाधीनमिति तदितरेतराश्रय स्यात् ? इत्याह—

**गमकत्वाच्च धर्मत्वं धर्मत्वाद् गमको यदि।**
**स्यादन्योन्याश्रयत्वं हि तस्मान्नैषापि कल्पना ॥ ७७ ॥**

इतश्च न पक्षधर्मत्व शब्दस्येत्याह—

**न चागृहीतसम्बन्धा· स्वरूपव्यतिरेकतः।**
**शब्दं जानन्ति येनात्र पक्षधर्ममतिर्भवेत् ॥ ७८ ॥**

न ह्यगृहीतसम्बन्धा पुम्पा शब्दमर्थधर्मतया जानन्ति, यत पक्षधर्मत्व स्यादिति ॥ ७८ ॥

न च स्वरूपमात्रेण पक्षधर्मता भवति, धूमादिष्वदर्शनात् । तेषा हि पर्वतादिसम्बन्धितयैव तद्धर्मत्वम्, न धूममात्रेणेत्याह—

**न च स्वरूपमात्रेण धूमादेः पक्षधर्मता।**

ननु गृहीतसम्बन्धाना तावदर्थसम्बन्धितया शब्द प्रतिभासते, ततस्तद्धर्मता भविष्यति ? इत्यत आह मतिरन्तेन—

**न चापि पूर्वसम्बन्धमपेक्ष्यैषा प्रसज्यते ॥ ७९ ॥**
**धूमवानयमित्येवमपूर्वस्यापि जायते।**
**पक्षधर्ममतिः,**

योऽपि धूमस्याग्निनियमं[1] न[1] वेत्ति सोऽपि धूमस्य पर्वतसम्बन्धमवगच्छत्येति। येन चैव सर्वं पक्षधर्मत्वलक्षणं पूर्वसम्बन्धसपक्षान्वयलक्षण नापेक्षते तेनैवेदमुत्तरस्माल्लक्षणाद् भिद्यते, अन्यथा तदेव स्मर्यमाणमनुमानाङ्गमिति ततो भेदेन पक्षधर्मत्वम्, न लक्षणं हेतोः सिध्येदित्याह—

**तेन भिद्येतोत्तरलक्षणात् ॥ ८० ॥**

शब्दे तु नैवमस्तीत्याह—

**न त्वत्र पूर्वसम्बन्धादधिका पक्षधर्मता।**

---

१-१. नियमनं—मु० पा०।

पूर्वसम्बन्धापेक्षापि पक्षधर्मता प्रतीत्युत्तरकालमेवाधिका[1]वगम्यते इति नार्थः प्रतीत्यङ्गमित्याह—

**न चार्थप्रत्ययात् पूर्वमित्यनङ्गमियं भवेत् ॥ ८१ ॥**

इतश्च न पक्षधर्मत्वमित्याह—

**न च धर्मी गृहीतोऽत्र येन तद्धर्मता भवेत् ।**

**पर्वतादिर्यथा देशः प्राग्धर्मत्वावधारणात् ॥ ८२ ॥**

न ह्यत्रार्थातिरेकेण पर्वतादिवद् धर्मी कश्चिदस्ति, यद्धर्मता शब्दस्य स्यादिति ॥ ८२ ॥

यस्त्वर्थो धर्मी प्रमेयोऽपि स एवेत्याह—

**यश्चात्र कथ्यते धर्मी प्रमेयोऽस्य स एव नः ।**

ततः किम् ? इत्याह सार्धेन—

**न चानवधृते तस्मिंस्तद्धर्मत्वावधारणम्[2] ॥ ८३ ॥**

**प्राक् स चेत्[3] पक्षधर्मत्वाद् गृहीतः किं ततः परम् ।**

**पक्षधर्मादिभिर्ज्ञातैर्येन स्यादनुमानिता ॥ ८४ ॥**

निराकृतं पक्षधर्मत्वम् । सपक्षान्वयमिदानीं दूषयति—

**अन्वयो न च शब्दस्य प्रमेयेण निरूप्यते ।**

कथम् ? इत्याह—

**व्यापारेण हि सर्वत्र्रान्वयितत्वं प्रतीयते ॥ ८५ ॥**

तदेव दर्शयति—

**यत्र धूमोऽस्ति तत्राग्नेरस्तित्वेनान्वयः स्फुटः ।**

न त्वेवं शब्देऽस्तीत्याह—

**न त्वेवं यत्र शब्दोऽस्ति तत्रार्थोऽस्तीति निश्चयः ॥ ८६ ॥**

एतदेव विभज्य दर्शयति—

**न तावत् तत्र देशेऽसौ तत्काले वावगम्यते ।**

इदं च प्रागेव दर्शितमिति ।

शङ्कते—

**भवेन्नित्यविभुत्वाच्चेत्,**

परिहरति—

**सर्वार्थेषु च तत् समम् ॥ ८७ ॥**

ततः किम् ? इत्याह—

**तेन सर्वत्र दृष्टत्वाद् व्यतिरेकस्य चागतेः[4] ।**

**सर्वशब्दैरशेषार्थप्रतिपत्तिः प्रसज्यते ॥ ८८ ॥**

---

१. अधिकेति । भिन्नेत्यर्थः ।
२. ०वधारणात्—मु० पा० ।
३. प्राग् भवेत्—१ पु० ।
४. एतदर्धत्रयं त्रुटितं १ पु० ।

यथा हि गोत्वं नित्यं विभु च, तथाश्वत्वादीन्यपीति सर्वस्तैर्व्याप्तो गोशब्द सर्वाणि तानि बोधयेदिति ॥ ८८ ॥

शङ्कते—

**अथैवं देशकालाभ्यामसत्यत्वप्रकल्पने ।**
**वाचकप्रत्ययं कश्चिद् ब्रूयादर्थधियान्वितम् ॥ ८९ ॥**

शब्दज्ञानं हि स्वानन्तरभाविनैकार्थसमवायिनार्थज्ञानेन नियतमिति ॥ ८९ ॥

परिहरति—

**नैवमप्यस्ति दृष्टो हि विनाप्यर्थधिया क्वचित् ।**
**वाचकप्रत्ययोऽस्माभिरव्युत्पन्ननरान् प्रति ॥ ९० ॥**

पुन. शङ्कते—

**द्वितीयादिप्रयोगे च भवेदन्वयकल्पना ।**

परिहरति—

**शतकृत्वः प्रयुक्तेऽपि न च दृष्टार्थधीः क्वचित् ॥ ९१ ॥**

शतकृत्वोऽभ्यस्तादपि 'जर्भरीतुर्फरीतू' इत्येवमादेरध्येतॄणामर्थप्रतीतिर्न दृष्टेति ॥ ९१ ॥

चोदयति—

**ननु ये ज्ञातसम्बन्धास्तेषां दृष्टोऽन्वयः स्फुटः ?**

परिहरति—

**यद्येवमन्वयात् पूर्वं सम्बन्धः कोऽपि कल्पितः ॥ ९२ ॥**

**कोऽपीति** । शक्तिरूप ॥ ९२ ॥

तत किम् ? इत्याह—

**नाङ्गमर्थधियामेषा भवेदन्वयकल्पना ।**

तदपि कि मिथ्या ? इत्यत[1] आह—

**अन्वयाधीनजन्मत्वमनुमानस्य च स्थितम् ॥ ९३ ॥**

अनङ्गत्वमेवान्वयकल्पनायां विवृणोति—

**ज्ञाते प्रतीतिसामर्थ्ये तद्वशादेव जायते ।**
**पश्चादन्वय इत्येष कारणं कथमुच्यते ॥ ९४ ॥**

स्वाभाविके हि शब्दस्यार्थप्रत्यायनसामर्थ्ये ज्ञाते ततश्चार्थप्रतीतौ जाताया तद्वशेन पश्चादुपजायमानोऽन्वय. कथमर्थप्रतीतेरङ्ग स्यादिति ॥ ९४ ॥

तस्मादनपेक्षितान्वयस्यैव शब्दस्यार्थप्रत्यायनसामर्थ्यान्नानुमानत्वमित्याह—

**तस्मात् तन्निरपेक्षैव शब्दशक्तिः प्रतीयते ।**

---

१. वामतौ—३ पु० ।

नन्वन्वयव्यतिरेकवत एवार्थेन शब्दस्य तत्प्रत्यायनसामर्थ्यम्, अतस्तदधीनार्थप्रतीतिरन्वयाधीनैवेति कथ नानुमानम् ? अत आह--

**न च धूमान्वयात् पूर्वं शक्तत्वमवगम्यते ॥ ९५ ॥**

ननु प्रत्युदाहरणे विलक्षणा एव लिङ्गलिङ्गिनोः सम्बन्धा इत्युक्तम्--"एतस्मिन् पुरुषापेक्षोऽग्निधूमयो." इति, तेन धूमादावदृष्टोऽपि शक्तिरूप एव सम्बन्धोऽनुमानाङ्गं किं न भवति ? भवत्वय सम्बन्ध , न त्वनेनानुमानता सिध्यति । यस्य ह्यन्वयनिबन्धनैव प्रत्यायनशक्ति. तदेव लिङ्गम्, शब्दस्त्वन्वयानपेक्षः स्वरसादेव शक्तो लिङ्गविलक्षणत्वान्नानुमानाय कल्पते। किञ्च, येन हि यस्य यादृश. सम्बन्ध. तस्यानुमानकालेऽपि तादृश एव सम्बन्धोऽनुमीयते, यथा धूमवतामग्निसंयोगेऽवगते पर्वतस्याग्निसयोग एवानुमीयते। तदिह शब्दस्याप्यर्थप्रतिपादनशक्तावनवगतायामनुमानेनापि शक्तिरेवानुमीयेत, नार्थः, स त्ववगतशक्तिकाच्छब्दादसत्यामेव व्याप्ताववगम्येत इति सिद्धमर्थावगतेरननुमानत्वमिति ॥ ९५ ॥

व्यतिरेकमिदानी निराकरोति--

**व्यतिरेकोऽप्यविज्ञातादर्थाच्छब्दधियो यदि ।**
**सोऽपि पश्चात् स्थितत्वेन नार्थप्रत्ययसाधनम् ॥ ९६ ॥**

न तावदर्थाभावे शब्दाभाव , युधिष्ठराभावेऽपि तच्छब्दसद्भावात्। यदि पुनरर्थाज्ञानाद् व्यतिरेक शब्दज्ञानस्योच्येत, सोऽपि नास्ति, अव्युत्पन्नानामर्थज्ञानाभावेऽपि शब्दज्ञानदर्शनात्। गृहीतसम्बन्धानामिति चेत् न, प्रत्यायकत्वातिरिक्तसम्बन्धाभावात् तद्वशो व्यतिरकोऽर्थज्ञानोत्तरकालत्वादन्वयवदेवानङ्गमिति ।. ९६ ॥

यदि नार्थप्रतिपादनाङ्गमन्वयव्यतिरेकौ, क्व तर्हि तावङ्गम् ? अत आह--

**सम्बन्धं यं तु वक्ष्यामस्तस्य निर्णयकारणम् ।**
**स्यादन्वयोऽतिरेकश्च न त्वर्थाधिगमस्य तौ ॥ ९७ ॥**

शक्तिनिष्कर्षे तयोरङ्गत्वमिति ॥ ९७ ॥

तदिद त्रैलक्षण्याभावेन विषयभेदेन चोपपादितम् अननुमानत्वं प्रयोगेण दर्शयति--

**तस्मादननुमानत्वं शब्दे प्रत्यक्षवद् भवेत् ।**
**त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनात् ॥ ९८ ॥**

एव पदस्य प्रामाण्यमभ्युपेत्याननुमानत्वमुक्तम् ॥ ९८ ॥

अधुना प्रामाण्यमेव नास्तीत्याह--

**सति चास्य प्रमाणत्वे भेदाभेदनिरूपणा ।**
**युक्ता न तु पदज्ञानात् पदार्थोऽत्र प्रमीयते ॥ ९९ ॥**

कथम् ? इत्याह--

**पदं प्रयुज्यमानं हि चतुर्द्धार्थे प्रयुज्यते।**
**प्रत्यक्षे च परोक्षे च ज्ञातेऽज्ञातेऽपि वा पुरा॥ १००॥**

एतेष्वेवाप्रमाणत्व दर्शयति—

**तत्र यत् पूर्वविज्ञाते प्रत्यक्षे च प्रयुज्यते।**
**प्रमिते च प्रयुक्तत्वादनुवादोऽधिकाद् विना॥ १०१॥**

- अदृष्टपूर्वे सम्प्रति प्रत्यक्षे ज्ञानानुत्पत्ति, अथ वा 'अयं पनसः' इति प्रयुज्यमाने वाच्यवाचकलक्षणसम्बन्धप्रतीतिरित्याह—

**अदृष्टपूर्वे त्वज्ञानं सम्बन्धप्रत्ययोऽपि वा।**

सम्बन्ध एव तर्हि प्रामाण्यमस्तु? इत्यत आह—

**सम्बन्धो न च तस्यार्थः,**

यस्तु पदस्याभिधेय· स प्रत्यक्षावगत·, न प्रमेय इत्याह—

**योऽर्थः स त्वन्यगोचरः[1]॥ १०२॥**

यस्तु परोक्षोऽननुभूतश्च तत्र ज्ञानानुत्पत्तिरेवेत्याह—

**परोक्षेऽननुभूते च नाभिधेये मतिर्भवेत्।**

यस्तु शब्दवाच्यत्वेनावगतः सम्प्रति परोक्ष, तत्र पदात् स्मृतिरेवेत्याह—

**परोक्षश्चानुभूतश्च यस्तत्र स्मृतिरिष्यते॥ १०३॥**

स्मृतिर्वा कि न प्रमाणम्? सत्यमित्याह—

**प्रमिते च प्रवृत्तत्वात् स्मृतेर्नास्ति प्रमाणता।**

भवतु प्रमितप्रवृत्ति, तथापि किमित्यप्रामाण्यम्? अत आह—

**परिच्छेदफलत्वाद्धि प्रामाण्यमुपजायते[2]॥ १०४॥**

अगृहीतग्रहण **परिच्छेदः**, स स्मृतो नास्तीति॥ १०४॥

चोदयति—

**तादात्विकपरिच्छेदफलत्वेन प्रमाणता।**
**प्रत्यभिज्ञानवत् कस्मात् स्मृतेरपि न कल्प्यते॥ १०५॥**

परिहरति—

**यावान् पूर्वपरिच्छिन्नस्तावानेवावधार्यते।**
**स्मृत्या तदनुसारेण तदासत्त्वेऽस्य नैव धीः॥ १०६॥**

ननु सस्कारजन्या स्मृतिः, पदात् पदार्थप्रतीतिस्तु प्रत्युत्पन्नकारणिका कथं स्मृतिः? अत आह—

**पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते।**
**पदाधिक्यं भवेत् किञ्चित् तत्पदस्य न गोचरः॥ १०७॥**

---

१ अन्यतो गतः—२ पु०। २. उपपद्यते इति पाठान्तरम्।

**प्रमाणमनुमानं वा यद्यपि स्यात् पदान्मितिः[1]।**
**वाक्यार्थस्यागमार्थत्वाद् दोषो नागमवादिनाम् ॥ १०८ ॥**

यथा हि स्मारका सम्बन्धिदर्शनादयोऽनधिकविषया , तथैव पदमप्यनधिकविषयत्वतुल्यत्वादप्र ।णमिति ।

**पदाधिक्यमिति** । सन्नियतामित्याद्यध्याहागद् वाक्यमेव तत्, न पदमात्रमिति ॥ १०७-८ ॥

भवतु पदस्य प्रामाण्यमनुमानत्व च, तथापि वाक्यार्थस्यागमरूपप्रमाणान्तरगम्यत्वाद् युक्त**मागमवादिनां** प्रमाणान्तराङ्गीकरणमित्याह—

**वाक्यार्थे तु पदार्थेभ्यः सम्बन्धानुभवाद् ऋते ।**
**बुद्धिरुत्पद्यते तेन भिन्नाऽसावक्षबुद्धिवत् ॥ १०९ ॥**

सम्बन्धग्रहणापेक्षैव नास्ति, ततश्च प्रत्यक्षवदनुमानाद् भेद इति ॥ १०९ ॥

नन्वसिद्धो हेतु ; सम्बन्धापेक्षत्वात् ? इत्यत आह—

**वाक्याधिकरणे चास्य हेतोः सिद्धिर्भविष्यति ।**

ये त्वपरोक्ता. शब्दस्यानुमानत्वे हेतवस्ते हेतवो वाक्यजन्याया बुद्धावसिद्धा इत्याह—

**सर्वेषां च परोक्तानां वाक्यबुद्धावसिद्धता[3] ॥ ११० ॥**

अन्वयव्यतिरेकजत्व सम्बन्धपूर्वकत्व सामान्यविषत्वं चासिद्धम्, अन्यच्च हेतुचतुष्टयमुपमानादिभिरनैकान्तिकमिति ॥ ११० ॥

यत एवात्यन्तादृष्टवाक्यार्थतत्सम्बन्धमेव पुरुषाणा पदार्थज्ञानमात्रेण वाक्यार्थज्ञानमुत्पद्यते, तत एवागमस्यानुमानव्यतिकाद् बिभ्यतः **शाक्याः** पदस्यैवाभेदे चिक्लिशुरित्याह—

**वाक्येष्वदृष्टेष्वपि सार्थकेषु पदार्थविन्मात्रतया प्रतीतिम् ।**
**दृष्ट्वानुमानव्यतिरेकभीताः क्लिष्टाः पदाभेदविचारणायाम् ॥ १११ ॥**

इति शब्दपरिच्छेदः



## अथ उपमानपरिच्छेदः

"उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्य" ( शा० भा० पृ. ४४ ) इति भाष्यम्, तदिह **अक्षपादो**क्तलक्षणाल्लक्षणान्तर वर्णनकारणमाह द्वयेन—

**'कीदृग्गवय' इत्येवं पृष्टो नागरिकैर्यदि ।**
**ब्रवीत्यारण्यको वाक्यं 'यथा गौर्गवयस्तथा' ॥ १ ॥**

---

१. मतिरिति पाठान्तरम् ।
२. अपरोक्षा —मु० पा० ।
३. वाक्याद् बुद्ध्यवसायिता—२ पु० ।

**एतस्मिन्नुपमानत्वं प्रसिद्धं शाबरे पुनः ।**
**तस्यागमाबहिर्भावाद् अन्यथैवोपवर्णितम् ॥ २ ॥**

"प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्" ( न्या० सू० १.१.६ ) इति **अक्षपादे**नोक्तम्, 'कीदृशो गवय.' इत्येव नागरिकेण पृष्टो वन्य' प्रसिद्धेन गवा साधर्म्यादप्रसिद्धं गवय येन वाक्येन बोधयति यथा—'गौरिव गवयः' इति, तद्वाक्यम् उपमानमिति ।

यद्यप्येवं **नैयायिका**ना प्रसिद्धम्, तथापि तस्य शब्दज्ञानादर्थे ज्ञानमिती-दृशाच्छब्दभेदादन्यादृशं लक्षण भाष्ये वर्णितमिति ॥ २ ॥

**नैयायिको**क्तादपि "आप्तोपदेश शब्द" ( न्या० सू० १.१ ७ ) इति लक्षणा-दागमत्वमेवास्येत्याह—

**पुरुषप्रत्ययेनैव तत्रार्थः सम्प्रतीयते ।**
**तदीयवचनत्वेन तस्मादागम एव सः ॥ ३ ॥**

**भाष्यकारी**यमपि लक्षणमाक्षिपति—

**सदृशादुपजायेत या मतिः सदृशान्तरे ।**
**ध्यानादिस्मृतितुल्यत्वात् सा प्रमाणं कथ भवेत् ॥ ४ ॥**

गवयदर्शन गोस्मरणस्येति हि सादृश्यविशिष्टगवयदर्शन गवि स्मरणमुत्पा-दयति, तदुत्पादित च स्मरणमुपमानमित्युक्तम्, तच्च स्मरणत्वात् प्रमाणमेव न भवति । न हि ध्यानादिस्मृते सदृशदर्शनेच्छायाश्च कश्चिदप्रामाण्ये विशेष इति ॥४॥

न च प्रत्यभिज्ञावद् देशकालाधिक्यादपि प्रामाण्यम्, तदभावादित्याह—

**देशकालादिभेदेन यथान्यत्र विशिष्यते ।**
**प्रमेयं नैवमस्त्यत्र नगरस्थानुसारतः ॥ ५ ॥**

**नैयायिका**नामेव मतान्तरमुपन्यस्यति—

**श्रुतातिदेशवाक्यानामारण्ये गवये मतिः ।**
**या सोपमानं केषाञ्चिद् गोसादृश्यानुरञ्जिता ॥ ६ ॥**

'यथा गौर्गवयस्तथा' इत्यतिदेशवाक्यं श्रुत्वा वनं गतानाम् 'अय गोसदृशो गवयः' इति ज्ञान तदुपमानमिति ॥ ६ ॥

दूषयति—

**प्रत्यक्षो गवयस्तावत् सादृश्यस्मृतिरत्र तु ।**

चोदयति—

**ननु सादृश्ययुक्तेऽर्थे न स्मृतिर्नेन्द्रियाद् गतिः ॥ ७ ॥**

यद्यपि गोसदृश. कश्चिदिति सामान्यतोऽवगत स्मर्यते, तद्विशिष्टस्तु गवयो न प्रागवगतो न प्रत्यक्ष इति ॥ ७ ॥

परिहरति—

**पूर्ववाक्यार्थविज्ञानान्नाधिक्यं गवये यदि ।**
**स्मरणादविशिष्टत्वात् सङ्गतेर्न प्रमाणता ॥ ८ ॥**

प्रत्युत्पन्नकारणजन्य यदवगतविषय ज्ञान तत्सङ्गति. संवाद:, अनुवाद इति चोच्यते । तच्च स्मृतिवदेवानधिकविषयत्वादप्रमाणम्, अतोऽतिदेशवाक्यावगतं यदत्र गृह्यते तत्तावन्न प्रमेयम् ॥ ८ ॥

यत्त्वनवगत गवयस्वरूपं तस्य च सादृश्यविशिष्टत्वं तत् प्रत्यक्षमेवेत्याह—

**अथ त्वधिकता काचित् प्रत्यक्षादिवशाद्[1] भवेत् ।**

कथं पुनरुपलब्धगवयस्य स्मरणोत्तरकालं भवत् सादृश्यज्ञानं स्मरणान्तरितेन्द्रियव्यापार प्रत्यक्षम् ? अत आह--

**यावद्धीन्द्रियसम्बन्धस्तत् प्रत्यक्षमिति स्थितम् ॥ ९ ॥**

**प्रत्यक्षसूत्रे** 'न हि स्मरणतो यत् प्राक् तत् प्रत्यक्षम्' ( श्लो० वा० ४-२३४ ) इत्यत्र स्थितमिति ।

ननु गोसादृश्यज्ञान गवयाशे स्मरणं कथ प्रत्यक्षम् ? अत आह—

**स्मर्यमाणस्य चांशस्य विवेकेनाप्रमाणता ।**

इदमपि तत्रैव स्थितम्--'विविक्ता एव तेऽर्था हि' ( श्लो० वा० ४-२३० ) इति । अतश्च स्मर्यमाणविषयएव तस्याप्रामाण्य न गृह्यमाणविषयेऽपि । सम्भवति ह्येकस्यापि ज्ञानस्य विषयभेदेन प्रामाण्यमप्रामाण्य च । अतो विवेकेन स्मरणाशस्यैवाप्रामाण्यम्, न ग्रहणाशस्याप्रमाणतेति ।

'श्रुतातिदेशवाक्यानाम्' इति च विशेषणमनर्थकम्, अन्येषामपि गोसादृश्यविशिष्टगवयज्ञानोत्पत्तेरित्याह सार्द्धेन--

**श्रुतातिदेशवाक्यत्वं न चातीवोपयुज्यते ॥ १० ॥**
**येऽपि ह्यश्रुततद्वाक्यास्तेषामपि भवत्ययम् ।**
**प्रत्यक्षदृष्टगोत्वानां वने गवयदर्शिनाम् ॥ ११ ॥**

शङ्कते—

**अथ संज्ञानुसन्धानं तेषां नास्तीति वर्ण्यते ।**

परिहरति--

**न नाम वस्तु तत् तावत् सर्वथा तैः प्रतीयते ॥ १२ ॥**

उपमानप्रमेय गोसादृश्यविशिष्टं गवय तावद् विदन्ति मा नाम गवयसंज्ञां वेदिषुरिति ॥ ११२ ॥

ननु समाख्यासम्बन्ध एवोपमानस्य प्रमेय इष्यते **नैयायिकै.**, न चाश्रुतातिदेशवाक्यस्य तत्प्रतिपत्तिरस्तीति कथ विशेषणानर्थक्यम् ? अत आह—

**न च शब्दार्थसम्बन्धः प्रमेयोऽत्र तदेष्यते ।**

---

१. प्रत्यक्षादेव सा—२ पु० । २. गवाशे—मु० पा० ।

कारणमाह—

**सादृश्यावधृते वाक्ये वाक्यादवगतो ह्यसौ ॥ १३ ॥**

गोसादृश्येनोपलक्षितस्य गवयशब्दः सञ्ज्ञेत्यतिदेशवाक्यार्थः, तद्यावद् गोसदृशं न पश्यति तावत् किञ्चिद् गोसदृशं वस्तु यस्यानेन गवयसञ्ज्ञोक्तेति एवं वाक्यप्रतिपादितमेवार्थं यथावन्न विजानाति, दृष्टे तु गोसदृशे वस्तुनि तेनैव वाक्येन स्मृतेन गवयसञ्ज्ञा प्रतिपद्यत इति नोपमानापेक्षेति ॥ १३ ॥

वाक्यावगतमप्यर्थं पुनरुपमानेन प्रत्यभिजानातीति चेत् ? अत आह—

**न चास्य प्रत्यभिज्ञानं पुनरुत्पद्यते वने ।**

कारणमाह—

**शक्त्योरतीन्द्रियत्वेन स्मृतिरेव हि सेष्यते ॥ १४ ॥**

यावानेव हि वनस्थस्यास्य गवयशब्दः सञ्ज्ञेति वाक्यादर्थोऽवगतः तन्मात्रमेव तत्, न पुनरधिकं न्यूनं वा किञ्चित् । यस्त्वत्र वाच्यशक्तिः वाचकशक्तिश्च सा स्मर्यते, न हि वाच्यवाचकशक्तिरतीन्द्रिया प्रत्यभिज्ञायत इति । नन्वतीन्द्रियत्वान्मा नाम प्रत्यक्षेण प्रत्यभिज्ञायताम्, उपमानाख्येन तु प्रमाणान्तरेण प्रत्यभिज्ञायते ? स्यादेव यदि शक्तौ देशकालाधिक्यं स्यान्न तु तदस्ति, अतोऽनधिकार्थत्वात् शक्तिज्ञानं स्मृतिरेवेति ॥ १४ ॥

स्यान्मतम्, अश्रुतातिदेशवाक्यस्याशब्दज्ञानानुविद्धं सादृश्यविशिष्टगवयज्ञानं प्रत्यक्षं भवति, श्रुतवाक्यस्य तदनुविद्धमप्रत्यक्षं प्रमाणान्तरं सिद्ध्यतीति तदर्थं विशेषणोपादानमित्यत आह—

**शब्दानुविद्धबोधेऽपि प्रत्यक्षमुपपादितम् ।**

विशेषणेऽपि नास्य प्रत्यक्षता निवर्त्तत इति ।

तस्मादुपमानं प्रमाणमिच्छता सादृश्यविशिष्टोऽपूर्वः प्रत्यक्षानवगतोऽर्थः प्रमेयो वक्तव्यः, न चासावस्तीत्युपसंहरति—

**तस्मात् सादृश्ययुक्तार्थः प्रमेयोऽपूर्व उच्यताम् ॥ १५ ॥**

किञ्च, कल्पनापोढप्रत्यक्षवादिना[1] सादृश्यविशिष्टगवयज्ञानं मा भूत्प्रत्यक्षम्, व्यवसायात्मकप्रत्यक्षवादिना तु **नैयायिकानां** जात्यादिवत् किं न सादृश्यं प्रत्यक्षमित्याह—

**व्यवसायात्मकत्वं तु प्रत्यक्षस्य यदेष्यते ।**

**जात्यादिवत् तदा तेन सादृश्यं किं न मीयते ॥ १६ ॥**

निर्विकल्पकवादिना वा किं सिध्यति प्रमाणान्तरम् ? नेत्याह—

**प्रत्यक्षाभासमेतत् तु निर्विकल्पकवादिनाम् ।**

गवादिविकल्पवत् प्रत्यक्षाभासमिदं, न त्वस्य प्रामाण्यमिति **बौद्धानामभिमतिः** ।

---

१. कल्पनाऽपद—मु० पा० ।

अनभिमतौ कारणमाह—

**प्रमेयवस्त्वभावाच्च नाभिप्रेता प्रमाणता ॥ १७ ॥**

न हि सादृश्य नाम किञ्चिद् वस्तु धर्मिव्यतिरिक्तमव्यतिरिक्तं वा सम्भवति; व्यतिरेके पृथगुपलब्धिप्रसङ्गाद्, अव्यतिरिके तन्मात्रापातात्। किञ्च, पुर.स्थित-वस्तुगत सादृश्यमनवगतम् अगृहीतप्रतियोग्यपि जातिवद् गृह्णीयात् प्रतियोग्यपेक्षं सादृश्यमिति चेत्, किमुत्पत्तौ कि वा ज्ञप्तौ ? द्वेधापि न सम्भवति, मृतेऽपि देवदत्ते तत्सादृश्य यज्ञदत्तस्य निष्पद्यते, अवगम्यते च, अतो वासनानिर्मितमिदं सादृश्यं न वस्तुरूपमिति तज्ज्ञान प्रत्यक्षाभासमिति ॥ १७ ॥

यद्यनया युक्त्या तैराभासत्वमभिप्रेयेत, तथैव तर्हि तद्भवता वा कथ प्रत्यक्षत्वमुच्यते ? अत आह—

**सादृश्यस्यापि वस्तुत्वं न शक्यमपबाधितुम्।**

यद्यप्येव ते न मन्यन्ते, तथापि न सादृश्यस्यावस्तुत्व सर्वेषाम्, सर्वदा त्वबाधिता प्रत्यक्षबुद्धिर्जातिवत् सर्वविकल्पनिराकरणेन सादृश्यमुपस्थापयतीति।

यत्त्वगृहीतेऽपि प्रतियोगिनि तद्ग्रहणप्रसङ्ग इत्युक्तम्, तत्परिहाराय सादृश्य-स्वरूप कथयति—

**भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत् ॥ १८ ॥**

जात्यन्तरयोगिभिरवयवसामान्यैर्यो जात्यन्तरस्य योगः तत् सादृश्यम्। न चात्र स्वरूपमात्र योग., किन्तु जात्यन्तरसम्बन्धानुरक्तरूपेण यस्तेषा जात्य-न्तरेण योगस्तत् सादृश्यम्। न चागृहीते गवि सम्बन्धिता सामान्याना ग्रहीतुं शक्येति युक्तमगृहीतगोः सादृश्याग्रहणम्। **अवयवग्रहण** सम्बन्ध्युपलक्षणार्थम्, जातिग्रहणमपि वस्त्वन्तरोपलक्षणम्।

एतदुक्तं भवति—वस्त्वन्तरस्य स्वावयवेषु गुणेषु कर्मसु वा समवेतैर्यः सामान्यैर्येन प्रकारेण योग., तेनैव प्रकारेण वस्त्वन्तरस्य योगः सादृश्यम्, न त्ववस्तु, नापि तत्त्वान्तरम्, प्रमाणाभावात्। सर्वत्र सादृश्यबुद्धेरीदृशसामान्य-योगान्वयव्यतिरेकात्। किञ्च, सामान्याल्पभूयस्त्ववशेन सादृश्यस्याल्पभूयस्त्वदर्श-नात् तदेव सादृश्यम्, नान्यत्।

यत्तु 'उत्पत्तौ ज्ञप्तौ वा प्रतियोग्यपेक्षा न सम्भवति' इत्युक्तम्, नोभयत्रापि प्रतियोगी सत्तयोपकरोति, स्वसम्बन्धे सामान्ययोगितया तु स्मर्यमाणः प्रतियोगी सादृश्यावगतावुपयुज्यते। यदपि गुणयो सादृश्यम्, यथा केतकीगन्धस्य सर्प-गन्धस्य च, तत्राप्यवयविगुणानामवयवगुणसामान्ययोग. सादृश्यम्, कर्मणामपि स्वसम्बन्धिद्रव्यदेवतासामान्योग इति ॥ १८ ॥

यत्र तर्ह्यवयवयोः सादृश्य यथा पद्मदलस्याक्ष्णश्च, तत्र कथम् ? अत आह—

**सदृशावयवत्वं तु यत्र पद्मदलाक्षिवत् ।**
**तत् स्वावयवसामान्यभूम्ना तेषा भविष्यति ॥ १९ ॥**

तयोरपि स्वावयवसामान्ययोगः सादृश्यमिति ॥ १९ ॥

एवं जात्यादिसामान्यैर्व्यस्तै. समस्तैर्वा विचित्रं सादृश्यमित्याह—

**एवं जातिगुणद्रव्यक्रियाशक्तिस्वधर्मतः ।**
**एकैकद्वित्रिसामस्त्यभेदादेतस्य चित्रता ॥ २० ॥**

जातिः = जन्म, तत्सामान्यादग्निब्राह्मणयो सादृश्यम्, 'अग्निर्वै ब्राह्मण.' इति द्वयोरपि प्रजापतिमुखाज्जननम्, "प्रजापतिर्मुखतस्त्रिवृत छन्दसां निरमिमीत अग्नि देवाना ब्राह्मणं मनुष्याणाम्" इति श्रुते । गुणसामान्यं तु चित्रे दर्शयितव्यम् । द्रव्यसामान्य समानालङ्कारधारिणोर्गवादिधनवतोश्च । क्रियासामान्यं तु निपत्यादानसामान्याद् यागस्य श्येनेन सादृश्यम् । शक्ति. सिंहदेवदत्तयोः । स्वधर्मत. पञ्चावत्तनराशसद्वितीयप्रयाजादित्वादेरिति ॥ २० ॥

ननु धर्मास्त्यान्यवयवसामान्यानि तद्भूयस्त्व वा सादृश्यमित्येतावद् वक्तव्यम्, किं योगग्रहणेन ? अत आह—

**न धर्मा एव सादृश्यं भूयस्ता वा तदाश्रया ।**

कथम् ? इत्याह—

**भूयस्त्ववद्धि जात्यादि सदृशत्वेन दृश्यते ॥ २१ ॥**

सामान्यानि ह्यवयवसमवेतानि, भूयस्ता तु सामान्यसमवेता । अतस्तद्भूयस्त्व सादृश्यस्यावयव सामान्यानि बुद्ध्या गृह्येरन्, गोजातीयावयवसामान्ययुक्ता तु गवयजाति' सादृश्ययुक्ता गृह्यत इति योग एव सादृश्यमिति ॥ २१ ॥

चोदयति—

**यमयोः कथमेतच्चेद्,**

न हि तयोरवयवसामान्ययोगोऽस्तीति ।

परिहरति—

**दृष्टत्वात् किमिहोच्यते ।**

सत्यं दृष्टम्, न तत्सामान्यनिबन्धन सम्भवति, यमावतिक्रम्यापि तत्सादृश्यप्रसङ्गात्, सामान्याना नित्यत्वेनान्यत्रापि[1] सम्भवात् । विनापि तु सामान्येन सादृश्यावगमात् अवस्तुरूपमेतत् । अत आह—

**क्वचिद्धि भूयसामेतत् क्वचिदल्पीयसामपि ॥ २२ ॥**
**नैतावता विशेषेण वस्तुत्वं तस्य हीयते ।**

कथमल्पीयसा सादृश्यं सामान्यनिबन्धनं भविष्यति ? इत्यत आह—

---

१. अत्रापि—मु० पा० ।

**सामान्यान्यपि चैतानि नाशीन्याश्रयनाशतः ॥ २३ ॥**

ततश्च तन्मात्रावयवयोगीनि सामान्यानि नान्यत्र सादृश्यमुपकल्पयन्तीति ॥ २३ ॥

ननु न क्वचिदपि सामान्यानां नाशित्वं दृष्टम् ? अत आह—

**अनन्ताश्रययोगाच्च न नाशोऽन्यत्र विद्यते ।**

नन्वेव नित्य सामान्यमिति सिद्धान्तहानि स्यादित्यत आह—

**तेन सर्वं न सामान्यं नित्यत्वेन प्रकल्प्यते ॥ २४ ॥**

नायं सिद्धान्तः सार्वत्रिक इति ॥ २४ ॥

इद चातिशयेनोक्तम्, परमार्थतस्तु नास्त्येव सामान्यविनाश इत्याह—

**सामान्यानां न वा नाशः क्वचिदभ्युपगम्यते ।**

कथम् ? इत्यत आह—

**सर्वस्य ह्याश्रयः कश्चिदस्ति देशान्तरादिषु ॥ २५ ॥**

कथ तर्हि तेषा सादृश्यबुद्धिर्भवति[1] ? अत आह—

**तेषां भूयस्तया चेदं सादृश्यमतिरिच्यते ।**

**तानि व्यस्तानि सन्त्येवं प्रत्यक्षेऽपि क्वचित् क्वचित् ॥ २६ ॥**

भूयसा समुदिताना योगो यमयोरिति कृत्वा सादृश्यमात्रं वस्त्वन्तरेभ्यो यमयोरधिकम्, सामान्यानि तु प्रत्येकमन्यत्रापि सन्त्येवेति ॥ २६ ॥

पूर्वमवयवाना स्वावयवसामान्य सादृश्यमुक्तम्, तदवयवाना तर्हि कथम् ? अत आह—

**सदृशावयवत्वं तु यत्र नाम प्रतीयते ।**

**तदप्यवयवानां स्यात् समानावयवान्तरैः ॥ २७ ॥**

एवमा परमाणुभ्यो दर्शयितव्यमित्याह—

**एव तावद् यतो नास्ति पराभेदप्रकल्पना ।**

परमाणुषु सादृश्यवर्जित सामान्यमेव केवलमित्याह—

**ततः परं तु सामान्यं भवेत् सादृश्यवर्जितम् ॥ २८ ॥**

यदा च सम्बन्धिसामान्ययोगः सादृश्यम्, तदा लक्षण दूषयन्तः केचिदाहुः—'न सादृश्य सामान्यम्, कि तर्हि ? तदेव तत्, गोत्वादेरेकत्वात्' इति, तदस्मदीयलक्षणापरिज्ञानादेवेत्याह—

**प्रधानानां तु सामान्यं यत्रैकं सम्प्रतीयते ।**

**स एवेति भवेत् तत्र तद्भेदे सदृशत्वधीः ॥ २९ ॥**

न हि सामान्यं सादृश्यमस्माभिरुक्तम्, नापि सामान्ययोगमात्रम्; किन्तु

---

१. न भवति—मु० पा० ।

सम्बन्धिसामान्ययोगः। तेन यस्य येन सादृश्य तयोः प्रधानसामान्ययोर्यदेकं सामान्यं न तेन तद्योगेन वा तयोः सादृश्यम्, तत्तु स एवेति बुद्धेर्निबन्धन तद्भेदे प्रधानात् सामान्याद्भिन्नै सम्बन्धिसामान्यैर्योगात् सादृश्यबुद्धिरिति ॥ २९ ॥

चोदयति—

**चित्रादौ यत्र सादृश्यं सामान्यं तत्र किं भवेत्।**

न हि मनुष्यावयवगतानि हस्तत्वादीनि चित्रावयवेषु सन्तीति।

परिहरति—

**तत्रापि पृथिवीवर्णविशेषादिसमानता ॥ ३० ॥**

तत्रापि हि सस्थानपरिमाणवर्णसामान्यानि सन्तीत्येवेति ॥ ३० ॥

ननु गन्धरसादीना वैलक्षण्यात् कथ सादृश्यम्? अत आह—

**रूपगन्धरसानां च कस्यचित् तुल्यता क्वचित्।**
**नावश्यं सर्वसामान्यात् सादृश्यमुपजायते ॥ ३१ ॥**

कतिभिश्चिदेव सामान्ये सादृश्य भवति नावयवैरेव[1], नापि रूपादिभिरेवेति ॥ ३१ ॥

रूपगन्धादयोऽपि वा सन्त्येवेत्याह—

**पृथिव्यादिषु चैतेषां सतामेव स्वभावतः।**
**परिणामादिभि र्व्यक्तिर्यथादृष्टचवधार्यते ॥ ३२ ॥**

सर्वे हि रूपरसगन्धादयः पृथिव्यादिषु स्वभावत एव सर्वदा विद्यमाना अपि परिणामादेव चित्रकारक्रियया वा केचित् क्वचिदभिव्यज्यन्ते। अतः चित्रगन्धादीनि विद्यमानान्येवानभिव्यक्तत्वान्नोपलभ्यन्ते। रूपसस्थानादिकं त्वभिव्यक्तत्वादुपलभ्यते, यथादर्शनं हि तदभिव्यक्ति कस्यचिदङ्गीक्रियत इति ॥ ३२ ॥

विद्यमानत्वे कारणमाह—

**न हि शक्त्यात्मना किञ्चिदसज्जन्म प्रपद्यते।**

यद् यत् सूक्ष्मरूपेण न विद्यते न तदुत्पत्तुमर्हति शशविषाणवत्। अतः सर्वकार्याणि सूक्ष्मात्मना सूक्ष्मात्मना कारणेषु सन्त्येवेति। तदिद **सत्कार्यवादिनां** मतं, न स्वमतम्। न हि दृश्यादर्शननिरस्तः कारणावस्थाया कार्यसद्भावः शक्योऽभ्युपगन्तुम्। अतश्च सज्जन्म[3] नावश्यमभिव्यक्तावङ्गीकर्त्तव्यम्, तत्सत्त्वे कारकव्यापारानर्थक्यादित्यास्तां तावत्।

यत्तु सादृश्य भिन्नमभिन्न वेति विकल्पितम्, तत्राह—

---

१. नावयवैः—मु० पा०। २. परिमाणात्—१ पु०।
३. असज्जन्म—मु० पा०।

**धर्माणां न च नानात्वम्,**

नात्यन्तनानात्वं धर्माणां क्वचिदपि धर्मिणोऽस्तीति ।

नन्वभेदे तन्मात्रं स्यादत आह—

**अस्ति चावान्तरस्थितिः ॥ ३३ ॥**

अभेदोऽपि नात्यन्तिकः, किन्त्ववान्तरस्थितिर्भिन्नाभिन्नत्वमित्यर्थः ॥ ३३ ॥

तदेवं सादृश्यस्य वस्तुत्वे सति चक्षुःसन्निकृष्टस्यैकस्मिन् धर्मिणि द्वयोर्वा युगपदुपलभ्यमानयोः समवेतस्य प्रत्यक्षत्वोपपत्तेः न किञ्चिदुपमानस्य सन्निकृष्टे धर्मिणि विषये प्रमेयमस्तीत्याह—

**वस्तुत्वे सति चास्यैवं[1] सम्बन्धस्य च चक्षुषा ।**
**द्वयोरेकत्र वा दृष्टेः प्रत्यक्षत्वं[2] न वार्यते ॥ ३४ ॥**

युक्तं तावद् द्वयोः प्रत्यययोः प्रत्यक्षमेकैकत्र, कथम् ? न हि प्रतियोग्यपेक्षस्य तदग्रहे ग्रहणं सम्भवति, अत आह—

**सामान्यवच्च सादृश्यमेकैकत्र समाप्यते ।**
**प्रतियोगिन्यदृष्टेऽपि तस्मात् तदुपपद्यते[3] ॥ ३५ ॥**

स्यादेतत् यदि द्वयोर्व्यासक्तं तत्स्यात्, न तु प्रत्येकं जातिवद् वर्त्तते, अतो गवयेऽपि कृत्स्नस्य गोसादृश्यस्य समवायादगृह्यमाणेऽपि गवि स्मर्यमाणेऽपि युक्तं प्रत्यक्षमिति ॥ ३५ ॥

ननु गवयदर्शनोत्तरकालं गां स्मृत्वा पश्चाद् दृश्यमानं सादृश्यं स्मरणान्तरितेन्द्रियव्यापारं कथं प्रत्यक्षम् ? अत आह—

**तत्र यद्यपि गां स्मृत्वा तद्ज्ञानमुपजायते ।**
**सन्निधेर्गवयस्थत्वाद् भवेदिन्द्रियगोचरः ॥ ३६ ॥**

पश्चादपि नेन्द्रियव्यापारोपरतिः, अतो गवयस्थत्वेनेन्द्रियसन्निहितं सादृश्यं तद्गोचरतां नातिक्रामतीति ॥ ३६ ॥

एवं नैयायिकमतं दूषयित्वा भाष्योक्तमेव लक्षणं पूर्वाक्षिप्तं समर्थयते—

**तस्माद्यत्[4] स्मर्यते तत् स्यात् सादृश्येन विशेषितम् ।**
**प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥ ३७ ॥**

यस्मादेव प्रत्यक्षे गवये न किञ्चिदुपमानस्य प्रमेयमस्ति, तस्मात् स्मर्यमाणैव गौर्गवयसादृश्यविशिष्टा तद्विशिष्टं वा सादृश्यमुपमानस्य प्रमेयमिति ॥ ३७ ॥

ननु गवये सादृश्ये प्रत्यक्षं गृहीते गौः स्मर्यते किमन्यदुपमेयम् ? अत आह—

---

१. चाप्येवम्—२ पु० ।
२. प्रत्यक्षत्वात्—मु० पा० ।
३. तदुपलभ्यते—२ पु० ।
४. यदिति । गवादीत्यर्थः ।

**प्रत्यक्षेणावबुद्धेऽपि सादृश्ये गवि च स्मृते।**
**विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता[1] ॥ ३८ ॥**

तत्रैव दृष्टान्तमाह—

**प्रत्यक्षेऽपि यथा देशे स्मर्यमाणे च पावके।**
**विशिष्टविषयत्वेन नानुमानाप्रमाणता ॥ ३९ ॥**

नन्वग्निसामान्यमेवानुमीयते न विशेष, तेन युक्तमनुमानस्य विशिष्टविषयत्वम्, इह तु प्रत्यक्षगृहीताद् गवयसादृश्यादन्यदेव गोगत सादृश्यं तत्स्वरूपमपि प्रत्यक्षागृहीतमुपमानप्रमेय भवत्येव, अत. किमुच्यते—प्रत्यक्षेण गृहीतेऽपीति ? सादृश्यमात्राभिप्रायमिद न विशेष्याभिप्रायम्। विशेष्यस्य तु स्वरूपं तद्विशिष्टत्वं च गोरुपमेयमेव भवति, अस्य स्मर्यमाणस्यैव सादृश्यविशिष्टत्वमुपमेयमिति वदता सादृश्यविशिष्टगोविषयज्ञानमुपमानमेव, आदित्येऽपि गतिस्मरणमित्यत्रानुमानमिव गोरूपांशे स्मरणत्वात् स्मरणशब्देन **भाष्यकारेणो**क्तमिति व्याख्यातम्। तदय भाष्यार्थ·—यत्सादृश्य दृश्यमानमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति तदुपमान प्रमेयबुद्धिजनकमेव सादृश्यमिन्द्रियप्रत्यक्षमुपमान यथा गवयदर्शनमिति सादृश्यविशिष्टगवयदर्शन गोस्मरणस्य जनकमिति। यद्वा, सादृश्यमसन्निकृष्टेऽर्थे या बुद्धिमुत्पादयति सा उपमानम्, यथा गवयदर्शन यस्य गोस्मरणस्य जनक तदिति।

केचित्तु गोस्मरणस्येति पुरुषगर व्याचक्षते, तत्र नन्द्यादिपु[2] स्मरते पाठो मृगयितव्य । केचित्तु बहुव्रीहिमिच्छन्ति, तदपि वैयधिकरण्यादयुक्तम्, 'बहुव्रीहि: समानाधिकरणानाम्' इति स्मृने । अथ कर्मणि स्मरणशब्द व्युत्पाद्य सामानाधिकरण्यमुच्यते, गोर्विशेषणत्वात् स्मरणस्य पूर्वनिपात. स्यात्। अनुपात्तान्यपदार्थकत्व च बहुव्रीहेरनिच्छता सुतरामयुक्त बहुव्रीहित्वाङ्गीकरणत्वमिति ॥ ३९ ॥

कि पुनरुपमानाभास यत्सङ्करपरिहारार्थ लक्षणम् ? तद्दर्शयति—

**यत्र त्वसदृशादेव कल्पयित्वोपजायते।**
**सादृश्यप्रत्ययस्तत्र तदाभासत्वकल्पना[3] ॥ ४० ॥**

कि पुनस्तस्याभासत्वे प्रमाणम् ? अत आह—

**बाधकप्रत्ययाच्चैषा सादृश्याभासता मता।**

उदाहरणमाह—

**यथा पलालकूटस्य सादृश्यं कुञ्जरादिना ॥ ४१ ॥**

किमस्ति तत्र बाधकम् ? सत्यमित्याह—

---

१. अन्यतो लोके प्रसिद्धेऽनुपमानता—१ पु०।

२. नन्द्यादिष्विति। 'नन्दिग्रहिपचादिभ्य.' ( पा० सू० ३.१.१३४ ) इति सूत्रे नन्द्यादिगणे इत्यर्थः।

३. तद्भावासत्त्व०—पाठान्तरम्।

**समीपस्थोऽपि जानाति सादृश्यं नेति तत्र हि ।**

यत्तु समीपादावपि न बाध्यते तत्सम्यक् सादृश्यमिति तदुपजनितमुपमानं प्रमाणमेव नाभासमित्याह —

**न बाध्यते समीपादौ यद् तु सादृश्यमेव तत् ॥ ४२ ॥**

**उपमानस्यानुमानान्तर्भावखण्डनम्**

ये तु **शाक्याः** प्रमाणद्वयवादिनः, **सांख्या** वा प्रमाणत्रयवादिनोऽस्यानुमानान्तर्भावं मन्यन्ते, तान् प्रत्याह—

**न चैतस्यानुमानत्वं पक्षधर्माद्यसम्भवात् ।**

असम्भवमेव दर्शयति—

**प्राक् प्रमेयस्य सादृश्यं न धर्मत्वेन गृह्यते ॥ ४३ ॥**

प्रमेयो गौः तद्गतं तावत् सादृश्यं न लिङ्गम्, तस्य प्रागनुमानात्तद्धर्मत्वेनाग्रहणादिति ॥ ४३ ॥

गवयगतमपि सादृश्यं गवि प्रमेये न पक्षधर्म इत्याह—

**गवये गृह्यमाणं च न गवामनुमापकम् ।**

गोगतस्य च प्रतिज्ञार्थैकदेशत्वादपि न लिङ्गता, तदेव हि गोगतं प्रमेयमित्याह—

**प्रतिज्ञार्थैकदेशत्वाद् गोगतस्य न लिङ्गता ॥ ४४ ॥**

सादृश्यविशिष्टो गवयोऽपि पक्षधर्मत्वाभावादेव न लिङ्गमित्याह—

**गवयश्चाप्यसम्बन्धान्न गोर्लिङ्गत्वमृच्छति ।**

ननु तत्सम्बन्धितामात्रमेव तद्धर्मत्वं न संयोगसमवायावेवास्ति गवयस्य गोसम्बन्धः तस्यासौ सदृशः, तत्र कथमपक्षधर्मत्वम् ? अत आह—

**सादृश्यं न च सर्वेण पूर्वं दृष्टं तदन्वयि ॥ ४५ ॥**

भवतु कथञ्चित् पक्षधर्मता, न त्वन्वयोऽस्ति, न हि गवयगतं गोसादृश्यं गोगतेन गवयसादृश्येनान्वितं दृष्टम् । इदानीमेव गवयसादृश्यं गृह्यते । ननु युगपद् गवयं गां च पश्यतोऽन्यद्वा अर्थद्वयं परस्परसदृशं येन यत् सदृशं तदपि तेन सदृशमिति शक्यमेवान्वयग्रहणं कर्त्तुम्, अत उक्तम्—**सर्वेणेति** । सत्यं दृष्टम्, न तु सर्वेण गवयं दृष्ट्वा तत्सादृश्यं गृहीत्वैवमन्वयो गृहीतो भवतीति ॥ ४५ ॥

अस्ति चादृष्टसदृशद्वयस्याप्येकमेव गां दृष्ट्वैव वने द्वितीयं पश्यतस्तदैव सादृश्यविशिष्टे प्रत्यय इत्याह—

**एकस्मिन्नपि दृष्टेऽर्थे द्वितीयं पश्यतो वने ।**
**सादृश्येन सहैवास्मिंस्तदैवोत्पद्यते मतिः ॥ ४६ ॥**

शङ्कते—

**शृङ्गित्वादेरथोच्येत सम्बन्धाल्लिङ्गता गवि ?।**

गृहीतो हि शृङ्गित्वादीना गवान्वय[1] इति ।

निराकरोति—

**न;**

कारणमाह—

**तेषां गवयज्ञानव्यापारं प्रत्युपक्षयात् ॥ ४७ ॥**

शृङ्गित्वादिभिर्गवये गोसदृशतयावगते पश्चात् तत्सदृशी गौः प्रतीयत इति ॥ ४७ ॥

यदि तु तैरेव साक्षात् प्रतीयेत तत सादृश्यरहित गोमात्रं प्रतीयेतेत्याह—

**यदि तेभ्यः प्रतीतिः स्यान्निःसादृश्यैव सा भवेत् ।**

कारणमाह—

**न गौः शृङ्गादिसदृशी सदृशी गवयेन तु ॥ ४८ ॥**

तेनास्त्येव शृङ्गित्वादिज्ञानस्य गवयसदृशगोज्ञानस्य च 'गोसदृशो गवय.' इति ज्ञानेन व्यवधानमित्याह—

**सदृशप्रत्ययं दृष्ट्वा शृङ्गादिप्रत्ययात् परम् ।**
**गवयप्रत्ययादेव गोज्ञानमुपजायते ॥ ४९ ॥**

ननु गोऽवयवा, शृङ्गादयोऽपि मिथ मदृशा इति कथ नि सादृश्या प्रतीति. ? अत आह—

**सदृशावयवत्वे तु तेषामेवोपमा भवेत् ।**

शृङ्गादीनामेवोपमा स्यात्, गौस्तु नि सादृश्यैव गम्यत इति ।

भवतु नि सादृश्यम्, गोमात्रम् अनुमेयमिति चेत् ? तत्राह—

**न च शृङ्गादयो यत्र तत्र गौरनुमीयते ॥ ५० ॥**

गोस्वरूपमनुमीयमान यत्रेदानी शृङ्गादयो दृश्यन्ते गवये, तत्र वानुमीयते नगरे वा । तत्र तावन्न शक्यं दृश्यादर्शनविरोधादिति अनुमाने वा भ्रान्तिः स्यादित्याह—

**इत्थं चानुमिमानस्य भ्रान्तज्ञानं प्रसज्यते ।**

नापि नगर इत्याह—

**नगरस्थे[2] तु गोज्ञानं स्मरणान्नातिवर्तते ॥ ५१ ॥**

सादृश्यविशिष्टो हि गौः प्रतियोग्यग्रहणान्न गृहीत., गोस्वरूपं तु गृहीतमेव, तेन सादृश्यविशिष्टज्ञानमेव प्रमाणम्, तस्य च सिद्धं प्रमाणान्तरत्वमिति ॥५१॥

**उपमानस्य स्वतन्त्रोपयोगः**

कः पुनरस्य प्रमाणान्तरस्य स्वतन्त्रोपयोगः ? तद्दर्शयति—

---

१. गवयान्वयः—मु० पा० । २. नगरस्थं—मु० पा० ।

**भिन्नानुमानादुपमेयमुक्तम्, सौर्यादिवाक्यैरसहायि[1] दृष्टम् ।**
**सादृश्यतोऽग्न्यादियुतं कथं नु, प्रत्याययेदित्युपयुज्यते नः ॥ ५२ ॥**

न हि सौर्यतद्वाक्ययोराग्नेयतद्वाक्याभ्यामन्वयो गृहीत, येनानुमानं स्यात् । निर्वापो हि लोकवेदसाधारण, तद्धितनिर्देशादयोऽपि । प्रमाणान्तरेण तु उपमानेनाग्नेयवाक्यसदृशेन सौर्यवाक्येनोपमितम् अग्न्यादियुतमाग्नेयवाक्यं स्वार्थमुपस्थापयति, तस्य च त्र्यशस्य साध्यसाधनाशानपेक्षितत्वाद् भावना इत्यन्तिमांशोऽपेक्षावशात् सौर्यभावनया गृह्यत इति एवमस्योपयो ग इति ॥ ५२ ॥

प्रयोजनान्तरमाह पादत्रयेण—

**प्रतिनिधिरपि चैवं व्रीहिसादृश्ययोगाद्,**
**भवति तदपचारे यत्र नीवारजातौ ।**
**तदपि फलमभीष्टं लक्षणस्योपमायाः,**

एवं व्रीह्यपचारे सदृशतया नीवारेषु अवगतेषु तत्सदृशत्वेन च व्रीहिष्वयमिति व्रीह्यवयवसामान्यावगमात् तल्लाभाय तेषां प्रतिनिधि सिध्यतीति ।

प्रयोजनान्तरमाह पादत्रयेण—

**प्रतिकृतिरपि गौणैर्बोध्यते[2] यत्र चान्यैः ॥ ५३ ॥**
**यदि सुसदृशमन्यल्लभ्यते तत्र मिथ्या**
**भवति विसदृशत्वान्मन्दसादृश्ययुक्तम् ।**

उपमानेन हि कान्चित् प्रतिकृति सादृश्य गौणै सामान्यैरीपत्सदृश बोध्यते, अल्पैरित्यर्थ, किञ्चान्यैर्भूयोभि सुसदृशम्, तत श्रुतानामवयवाना भूयसां लाभाय सुसदृशस्योपादानं सिद्धयतीति । ईपत्सदृशोऽपि तु तदपेक्षया विसदृशत्वात् उपजातापि बुद्धिर्मिथ्या भवति, कार्यानुपयोगादिति ।

कारणान्तरमपि सुसदृशोपादाने दर्शयति—

**मतिरपि च तथैव द्रागिवोत्पद्यतेऽस्मि-**
**न्नितरविषयबोधेऽसत्यपीत्थं च बाधः ॥ ५४ ॥**

इत्युपमानपरिच्छेद

न केवल बह्ववयवलाभ, किन्तु मतिरपि सुसदृशे[3] शीघ्रमुत्पद्यते[3], तावतैव च नैराकाङ्क्ष्ये जाते पश्चादुपजातोऽपि मन्दसदृशबोधोनुष्ठानानौपयिकत्वाद् बाध्यत इति ॥ ५४ ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे उपमानपरिच्छेदः

१. सहायि—मु० पा० । २–२. प्रकृतिरपि च गौणैर्बाध्यते—मु० पा० ।
३–३. सुसदृशे शीघ्रदृष्टे श्रुते वा समुत्पद्यते—२ पु० ।

## अथ अर्थापत्तिपरिच्छेदः

"अर्थापत्तिरपि दृष्ट. श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना" (शा० भा० पृ. ४६) इति भाष्यम्, तस्यार्थमाह—

**प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत्।**
**अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता ॥ १ ॥**

दृष्टग्रहण चक्षुर्दृष्टे प्रत्यक्षावगते प्रमितमात्रे वा वर्त्तते, प्रथमद्वितीयकल्पयो-रनुमानादिपूर्विका नोक्ता स्यात्, तृतीये तु श्रुतग्रहणमतिरिच्यते, अत आह—

**दृष्टः पञ्चभिरपि,**

कारणमाह—

**अस्माद् भेदेनोक्ता श्रुतोद्भवा।**

दृष्टाद् भेदेन श्रुतापादानात् प्रमितमात्रवचनोऽपि दृष्टशब्दो गोबलीवर्दन्यायेन श्रुतातिरिक्तपञ्चकपरो भवतीति।

किं पुनः श्रुतस्य पृथगुपादाने प्रयोजनम् ? अत आह—

**प्रमाणग्राहिणीत्वेन यस्मात् पूर्वविलक्षणा ॥ २ ॥**

श्रुतार्थापत्ते. प्रमाणग्राहिणीत्वभेदेनैव दृष्टार्थापत्तितो वैलक्षण्य दर्शयितु पृथग्ग्रहणमिति ॥ २ ॥

प्रत्यक्षपूर्विकामुदाहरति—

**तत्र प्रत्यक्षतो ज्ञानाद् दाहाद् दहनशक्तता।**

अनुमानपूर्विकामुदाहरति—

**वह्नेरनुमितात्[1] सूर्ये यानात् तच्छक्तियोग्यता ॥ ३ ॥**

शब्दपूर्विकामुदाहरति—

**श्रुतार्थापत्तिरत्रैव परस्तादभिधास्यते।**

उपमानपूर्विकामुदाहरति—

**गवयोपमिता या गौस्तज्ज्ञानग्राह्यता मता ॥ ४ ॥**

अर्थापत्तिपूर्विकामुदाहरति—

**अभिधानप्रसिद्ध्यर्थम् अर्थापत्त्यावबोधितात्।**
**शब्दे बोधकसामर्थ्यात् तन्नित्यत्वप्रकल्पनम् ॥ ५ ॥**

अभिधानानुपपत्तिप्रभवयार्थापत्त्या शब्दस्य वाचकशक्ति कल्पयित्वा पुनस्तद-नुपपत्त्या नित्यत्वकल्पनेति ॥ ५ ॥

एतदेव विवृणोति साद्धेन—

---

१. ०रनुमिता—मु० पा०।

**अभिधा नान्यथा सिध्येदिति वाचकशक्तताम् ।**
**अर्थापत्त्यावगम्यैवं तदनन्यगतेः पुनः ॥ ६ ॥**
**अर्थापत्त्यन्तरेणैव शब्दनित्यत्वनिश्चयः ।**

एतच्च **शब्दाधिकरणे** ( जै० सू० १ १.१८ ) वक्ष्यत इत्याह—

**'दर्शनस्य परार्थत्वाद्' इत्यस्मिन्नभिधास्यते ॥ ७ ॥**

अभावपूर्विका तु **भाष्यकार** एवोदाहृतवान्—"जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना" ( शा० भा० पृ ४६ ) इत्याह सार्द्धेन—

**प्रमाणाभावनिर्णीतचैत्राभावविशेषितात् ।**
**गेहाच्चैत्रबहिर्भावसिद्धिर्या त्विह दर्शिता ॥ ८ ॥**
**तामभावोत्थितामन्याम् अर्थापत्तिमुदाहरेत् ।**

अर्थापत्त्यन्तराणामप्युदाहरणप्रपञ्च. पक्षदोषावसरे 'श्रोत्रादिनास्तितायाम्' इत्यादिना **बृहट्टीकायां** दर्शित इत्याह—

**पक्षदोषेषु चान्यासामुदाहरणविस्तरः ॥ ९ ॥**

ननु **भाष्यकारे**णाभावपूर्विकैवोदाहृता, तत् कथमुदाहरणप्रपञ्चः ? अत आह—

**अभावावगताच्चैत्राद् बहिर्भावस्य सूचनम् ।**

सर्वसूचनार्थमिद गृहाभावेन बहिर्भावकल्पनम्, न तन्मात्रपरमिति ।

नन्वनुमानमेवेदम् 'जीवन् देवदत्तो बहिरस्ति, विद्यमानत्वे सति गृहेऽभावात्, मद्वत्' इति ? अत आह—

**पक्षधर्माद्यनङ्गत्वाद् भिन्नैवाप्यनुमानतः ॥ १० ॥**

पक्षधर्मत्वं तावन्निराकरोति—

**बहिर्देशविशिष्टेऽर्थे देशे वा तद्विशेषिते ।**
**प्रमेये यो गृहाभावः पक्षधर्मस्त्वसौ कथम् ॥ ११ ॥**

गृहगतो ह्यभावो न देवदत्तस्य बहिर्देशस्य वा धर्म., अभावविशिष्टं तु गृहं न कस्यचिद् धर्म इत्याह—

**तदभावविशिष्टं तु गृहं धर्मो न कस्यचित् ।**

पक्षधर्मत्वमभावस्य नास्तीत्युक्तम्, तदपि न गम्यत इत्याह—

**गृहाभावविशिष्टस्तु तदासौ न प्रतीयते ॥ १२ ॥**

असौ देवदत्तो बहिर्देशो वेति कथम् ? इत्याह—

**गम्यते तु गृहं तत्र न च चैत्रः प्रतीयते ।**

चैत्रग्रहणमुपलक्षणम्, गृहमेव गम्यते न चैत्रो बहिर्देशो वा, न चानवगतस्य धर्मावगति. सम्भवतीति ।

यदि तु चैत्रादर्शन हेतुरित्युच्यते ? अत आह—

**न चात्रादर्शनं हेतुर्यथाभावेऽभिधास्यते ॥ १३ ॥**
**तेन वेश्मन्यदृष्टत्वादिति हेतुर्न कल्प्यते[1] ।**

यथा ह्यभावेऽनुमेये लिङ्गत्वमभावस्य न सम्भवति, तथात्रापि पक्षधर्मत्वाभावादेव। एतच्च हि अभाववादे 'प्रमाणानामनुत्पत्तेर्न चाभावस्य धर्मता' ( श्लो० वा० अभा० ५० ) इत्यत्राभिधास्यत इति ।

इतश्च नादर्शनस्य हेतुत्वमित्याह—

**अदर्शनादभावे च प्रमेयस्यावधारिते ॥ १४ ॥**
**बहिर्भावमतिर्नासौ तेनादर्शनहेतुका ।**

अदर्शनादभावेऽवगते पश्चादुपजायमाना बहिर्भावमतिर्नादर्शननिमित्ता भवितुमर्हतीति नाभावस्य लिङ्गत्वम्, न च तस्य पक्षधर्मतेत्याह—

**चैत्राभावस्य हेतुत्वं गेहेऽभावश्च संस्थितः ॥ १५ ॥**

न चानुमेयत्वमपि चैत्रस्य बहिर्देशस्य वा सम्भवतीत्याह—

**पूर्वं न चागृहीतस्य धर्मिणः स्यात् प्रमेयता ।**

ततः किम् ? इत्याह—

**न चात्र बाह्यदेशो वा चैत्रो वा गृह्यते पुरा ॥ १६ ॥**

चोदयति—

**नदीपूरेण या वृष्टिरुपरिष्टात् प्रतीयते ।**
**देशे कथमदृष्टे तु पक्षधर्मत्वसम्भवः ॥ १७ ॥**

अत्रत्यो हि नदीपूरो नोपरिष्टाद्देशस्य धर्म , तदनवगमाच्च तद्धर्मतया नावगम्यते, प्रागप्रतीतश्चोपरिदेशो न वृष्टिमत्तयानुमातु शक्यत इति ॥ १७ ॥

परिहरति पादत्रयेण—

**वृष्टिमत्परदेशत्वं नदीपूरवतोऽत्र तु ।**
**देशस्य प्रतिपद्यन्ते,**

नन्वत्रत्य एव नदीपूरो लिङ्गमुपरिवृष्टेरिति किमनेन प्रतिज्ञावचनविन्यासविशेषेण, न ह्यनेनार्थस्य कश्चिद्विशेष । यदि चैतावता निर्दोष भवति ततोऽत्रापि गृहस्यैव चैत्रवद् बहिर्देशत्वमनुमीयताम्, तदन्यदुत्तर वाच्यम्, अत आह—

**यद्वार्थापत्तिरेव सा ॥ १८ ॥**

इदमपि न युक्तम्; न हि साक्षात्सम्बन्धेनैव पक्षधर्मत्वम्, येन केनापि प्रकारेण साक्षात् परम्परया वा यस्य येन सम्बन्धो नियतस्तेन तत्प्रतीतिरनुमानमेव । प्रतीयते चाभावस्य देवदत्तसम्बन्ध , देवदत्ताभाव इति हि स प्रतीयते, न चागृहीतत्वादननुमेयत्वम्, स्मृतौ विपरिवर्त्तमानस्य बहिर्देशविशिष्टतयानु-

१. कस्यचित्—२ पु० ।

पपत्तेः। एवमुपरिदेशस्यापि वृष्टिसम्बन्धानुमान द्रष्टव्यम् । तस्मादनुमानमेवेदम्, वक्तव्यो वा हेतुः, अनेनानुमानात् भेदः सिद्धयतीति ॥ १८ ॥

किमेभिर्जात्युत्तरैः ? अत आह—

**जीवतश्च गृहाभावः पक्षधर्मोऽत्र कल्प्यते।**
**तत्संवित्तिर्बहिर्भावं न चाबुद्ध्वोपजायते ॥ १९ ॥**

जीवनेन विद्यमानत्वेन ससृष्टो गृहाभावो बहिर्भावस्य लिङ्गम् । अत. स एव पक्षीकृते चैत्रे धर्मतया ग्रहीतव्य.। न चासौ बहिर्भावबोधमन्तरेण शक्यते ग्रहीतुमिति ॥ १९ ॥

तत. किम् ? इत्याह—

**अग्निमत्तानपेक्षा तु धूमवत्ता प्रतीयते।**
**न तद्ग्रहणवेलायामग्न्यधीनं हि किञ्चन ॥ २० ॥**

लिङ्गज्ञानजन्य लिङ्गिविषय ज्ञानान्तरमनुमानम्, न तु लिङ्गज्ञानमेव लिङ्गि-विषयं भवितुमर्हति, यथा धूमज्ञानजन्यमग्निज्ञानम्, न ह्यग्निमज्ज्ञानानपेक्षमेव धूमवत्ताज्ञान जन्यते। न हि तत्र ज्ञानेऽग्निज्ञानमपेक्ष्यते, येन धूमज्ञानेनैवाग्निज्ञानं स्यात्, ततश्च ज्ञाते व्याप्ये पश्चाद्व्यापकज्ञानमिति ॥ २० ॥

तद्वदिहापि ज्ञात एव गृहाभावो बहिर्भाव गमयत्विति चेद् ? अत आह—

**गेहाभावस्तु यः शुद्धो विद्यमानत्ववर्जितः।**
**स मृतेष्वपि दृष्टत्वाद् बहिर्वृत्तेर्न साधकः ॥ २१ ॥**

विद्यमानत्वसंसृष्ट एव लिङ्गमस्त्विति चेद् ? अत आह—

**विद्यमानत्वसंसृष्टगृहाभावधियानया ।**
**गेहादुत्कालितश्चैत्रो विद्यते बहिरेव हि ॥ २२ ॥**

सत्त्वासत्त्वे ह्येकस्मिन् देवदत्ते देशभेदावनन्तर्भाव्य न शक्येते ससृज्य बोद्धुम्, अतो ययैव धिया ययोः ससर्गो गम्यते तयैवाभावाक्रान्ताद् गृहादुत्कालितश्चैत्रो बहिरेव विद्यते। विद्यमानत्व बहिरेवावगत भवतीत्यर्थ.। न हि गृहबहिर्देशसा-धारण्येनावगम्यमान सत्त्व गृहगतेनासत्त्वेन ससृज्यते, विरोधात्। न ह्येव सम्भ-वति—गृहे नास्त्येव चैत्र., किन्तु गृहे वा बहिर्वास्तीति। यदि स्वतन्त्र चैत्रानव-च्छिन्न सामान्यरूपेणैव न कश्चिदिह गृहेऽस्तीत्यभाव प्रतीयात् ॥ २२ ॥

ननु[1] शक्यतेऽनन्तर्भावितेऽपि चैत्रे गृहाभावो ग्रहीतुम् ? अत आह—

**गेहाभावत्वमात्रं तु यत् स्वतन्त्रं प्रतीयते।**
**न तावता बहिर्भावश्चैत्रस्यैवावधार्यते ॥ २३ ॥**

सत्य शक्यते, तद्वदेव तु बहिर्भावोऽपि सामान्येनैव गम्यते, न तु चैत्रस्यैवा-साधारणत्वेनेति ॥ २३ ॥

---

१. न हि—मु० पा०।

अतोऽवश्यमन्यत्र चैत्रसद्भावज्ञान सिद्ध कृत्वा गृहाभावः, ततश्चैकयैवैकान्तिकलिङ्गविषयया धिया गेहादुत्कालिता सत्ता बहिरेव व्यवस्थापिता भवतीति नानुमेयमवशिष्यत इत्याह—

**सिद्धे सद्भावविज्ञाने गेहाभावधियात्र तु ।**
**गेहादुत्कालिता सत्ता बहिरेवावतिष्ठते ॥ २४ ॥**

उक्तमेवार्थं संक्षिप्य दर्शयति—

**तेनास्य निरपेक्षस्य व्यभिचारो मृतादिना ।**
**यस्य त्वव्यभिचारित्वं न ततोऽन्यत् प्रतीयते ॥ २५ ॥**

कथं पुनस्ततोऽन्यन्न प्रतीयते, न हि विद्यमानत्वं गृहाभावो वा बहिर्भावः ? अत आह—

**तस्मात् प्रत्यक्षतो गेहे चैत्राभावे ह्यभावतः ।**
**ज्ञाते यत् सत्त्वविज्ञानं तदेवेदं बहिः स्थितम् ॥ २६ ॥**

यद्यप्यर्थान्तरं बहिर्भावः, तथापि तु यत्तद् विद्यमानत्वज्ञानं तदेव स्वविषयं विद्यमानत्वं बहिष्ठानवस्थाप्य गृहेऽसत्त्वेन समन्वेतुमशक्तं तत्संसर्गाय बहिः स्थितं भवति, बहिरेव विद्यमानत्वं स्थापयति, न तु तज्जन्यं ज्ञानान्तरमिति ॥ २६ ॥

तथापि कथमननुमानत्वम् ? अत आह—

**पक्षधर्मात्मलाभाय बहिर्भावः प्रवेशितः ।**
**तद्विशिष्टोऽनुमेयः स्यात् पक्षधर्मान्वयादिभिः ॥ २७ ॥**

येन बहिर्भावेन विशिष्टश्चैत्रोऽनुमानव्य , स पक्षीकृतजीवच्चैत्रधर्मतया गृहाभावस्यात्मलाभाय तत्प्रतीतिवेलायामेवानुप्रवेशित इति ॥ २७ ॥

तदेवं सत्यपि यद्यनुमानत्वमिष्येत तत् स्फुटमितरेतराश्रयमित्याह—

**पक्षधर्मादिविज्ञानं बहिः सम्बोधतो यदि ।**
**तैश्च तद्बोधतोऽवश्यमन्योन्याश्रयता भवेत् ॥ २८ ॥**

नन्वर्थापत्तावपि तुल्योऽयं दोषः, तत्रापि हि गृहाभावमात्रं मरणेनाप्युपपन्नं न बहिर्भावं कल्पयति, विद्यमानत्वसमृष्टस्तु कल्पयेत्, स त्वनवगते बहिर्भावे न शक्यतेऽवगन्तुम्, न चानवगतः कल्पको भवति, तदवगमे च प्रमेयाभावः स्यादत आह—

**अन्यथानुपपत्तौ तु प्रमेयानुप्रवेशिता ।**
**ताद्रूप्येणैव विज्ञानान्न दोषः प्रतिभाति नः ॥ २९ ॥**

अन्यथानुपपत्तिरूपे प्रमाणान्तरे योऽयं विद्यमानत्वसंसृष्टगेहाभावबुद्धावेव प्रमेयस्य बहिर्भावस्यानुप्रवेशः, स न दोषः, कस्मात् ? ताद्रूप्येणैव ज्ञानात्, ईदृग्रूपमेव ह्येतत् प्रमाणम्, यदर्थं च यस्यासत्यर्थान्तरे मिथः प्रतिघातेनासम्भवमालोच्यार्थां-

न्तरकल्पनया प्रतिघातं परिहृत्य सम्भवतीत्यत एव विलक्षणसामग्रीत्वेन प्रमाणान्तरत्वमनुपपत्तिरिति चावगतस्यार्थान्तरेण प्रतिघातश्चोच्यत इति ॥ २९ ॥

निरस्त पक्षधर्मत्वम्। अन्वयमिदानी निरस्यति—

**अविनाभाविता चात्र तदैव परिकल्प्यते।**
**न प्रागवधृतेत्येवं सत्यप्येषा न कारणम् ॥ ३० ॥**

यदैव ह्यार्थापत्त्या गृहाभावेन बहिर्भावः कल्प्यते, तदैव तयोरविनाभावो गम्यते। अतः प्रागर्थापत्तेः सन्नप्यविनाभावोऽनवगतत्वान्नानुमानस्य कारणं भवतीति ॥ ३० ॥

यस्तर्ह्यवगतसम्बन्धः तस्यानुमानं स्यादत आह—

**गृहाभावबहिर्भावौ न च दृष्टौ नियोगतः।**

योऽपि गृहाभावबहिर्भावौ सह न दृष्टवान् सोऽपि गृहाभावेन बहिर्भाव कल्पयत्येवेति तस्य तावत् प्रमाणान्तरत्व सिद्धमिति।

किञ्च, साहित्येऽपि तयोरर्थापत्तिरेव प्रमाणम्, नान्यदित्याह—

**साहित्येऽपि[1] प्रमाणं च तयोरन्यन्न विद्यते ॥ ३१ ॥**
**अन्यथानुपपत्त्यैव ह्येकेनान्यत् प्रतीयते।**

अर्थापत्त्या चान्यतरेणान्यतरस्याकल्पने[2] साहित्यमेव न सिध्यतीत्याह—

**तथा न कल्प्यते तच्चेत् साहित्यं न प्रतीयते ॥ ३२ ॥**

तत्सिद्ध साहित्यसिद्ध्यर्थमेवार्थापत्ते. प्रमाणान्तरत्वम्, तद्वशेन तु सम्बन्धे गृहीते पश्चाद् भवत्वनुमानमित्याह—

**तेन सम्बन्धवेलायां सम्बन्ध्यन्यतरो ध्रुवम्।**
**अर्थापत्त्यावगन्तव्यः पश्चादस्त्यनुमानता ॥ ३३ ॥**

यस्तु वदति--विनाप्यर्थापत्त्या गृहद्वारि स्थित्या गृहाभावबहिर्भावयो. साहित्य गृह्यत इति, स वक्तव्य.--यद्यप्येवमिह सम्भवति, तथापि यदेतदेकत्र विद्यमानस्य सर्वत्राविद्यमानत्व तत् साहित्यग्रहणाभावान्नानुमानं सिद्ध्यतीत्याह सार्द्धेन—

**गृहद्वारि स्थितो यस्तु बहिर्भावं प्रकल्पयेत्।**
**यदैकस्मिन्नयं देशे न तदान्यत्र विद्यते ॥ ३४ ॥**
**तदाप्यविद्यमानत्वं न सर्वत्र प्रतीयते।**

नन्वेकदेशस्थस्यान्यत्र तत्समीपे तावदभावो गम्यते, अत. सिध्यति सर्वत्राभावानुमानम्? अत आह—

**न चैकदेशे नास्तित्वाद् व्याप्तिर्हेतोर्भविष्यति ॥ ३५ ॥**

---

१. तु—मु० पा०। २. कल्पने—मु० पा०।

येन हि साहित्यं गृहीतं तदेवानुमातुं शक्यम्, अतः कथमेकदेशगतेनाविद्यमानत्वेन गृहीतसाहित्यं विद्यमानत्वं सर्वदेशवर्त्तिनमभावमनुमापयेदिति ॥ ३५ ॥

चोदयति—

**नन्वत्राविद्यमानत्वं गम्यतेऽनुपलब्धितः ।**
**सा चाप्रयत्नसाध्यत्वादेकस्थस्यैव सिध्यति ॥ ३६ ॥**

मा भूदनुमानम्, अनुपलब्ध्यैव समीपवदन्यत्रापि सर्वत्राभावावगमसिद्धेः किमर्थापत्त्येति ॥ ३६ ॥

परिहरति—

**नैतयानुपलब्ध्यात्र वस्त्वभावः प्रतीयते ।**
**तद्देशागमनात् सा हि दूरस्थेष्वस्ति सत्स्वपि ॥ ३७ ॥**

स्यादेवम्, यद्यत्र समीपदेशे इव सकलविशेषणविशिष्टयानुपलब्ध्याभावो गम्येत, न तु तदस्ति, सा हि सत्स्वपि दूरस्थेषु भावेषु तद्देशागमनादेव सम्भवन्ती नालमभाव गमयितुमिति ॥ ३७ ॥

कया तर्ह्यनुपलब्ध्याभावावगतिः ? अत आह—

**गत्वा गत्वा तु तान् देशान् यद्यर्थो नोपलभ्यते ।**
**ततोऽन्यकारणाभावाद् असन्नित्यवगम्यते ॥ ३८ ॥**

तत्र ह्यभावादेवानुपलब्धिः, दूरत्वादिकारणान्तराभावादिति ॥ ३८ ॥

चोदयति—

**ननु चाग्न्याद्यभावेऽपि धूमादिव्यतिरेकिणाम् ।**
**तद्देशागमनात् स्पष्टो व्यतिरेको न सिध्यति ॥ ३९ ॥**

सर्वत्रैव तावत् साध्याभावे हेतोर्व्यतिरेकोऽवगन्तव्यः, तद्यदि गत्यैवानुपलब्धेरभावसिद्धिः नानुपलब्धिमात्रात्, ततः सर्वानग्निदेशगमनासम्भवान्न तद्व्यतिरेकः सिध्येदिति ॥ ३९ ॥

परिहरति—

**यस्य वस्त्वन्तराभावः प्रमेयस्तस्य दुष्यति ।**
**मम त्वदृष्टमात्रेण गमकः सहचारिणः ॥ ४० ॥**

यः खलु वस्त्वन्तरेषु विपक्षेषु लिङ्गस्याभावावधारणमनुमानाय प्रार्थयते तस्यैव दोषः, वय तु द्वित्रिचतुरेषु अवगताग्निसाहचर्याद् धूमाद् विपक्षादर्शनमात्रेण सहचारिणमग्निम् अनुमिमाना न सर्वविपक्षेषु धूमाभावावधारण प्रार्थयामहे, नापि सर्वधूमवतामग्न्यन्वयमिति ॥ ४० ॥

चोदयति—

**नन्वेवमितरत्रापि सम्बन्धोऽनुपलब्धितः ।**
**चैत्राभावस्य भावेन दृष्टत्वादुपपद्यते ॥ ४१ ॥**

यद्यन्तरेणैव विपक्षाभाव साहचर्ये सति व्यभिचारानुपलब्धिमात्रेणानुमानं सिद्ध्यति, एवं सत्यत्रापि चैत्रभावेनैकदेशगतेनेरत्राभावस्य सहदृष्टत्वादेकदेशेऽपि तावद् भावाभावयोः साहचर्ये सिद्धे व्यभिचारानुपलम्भादेव भावाभावयोः सम्बन्धनियमसिद्धेरनुमानं भवतीति ॥ ४१ ॥

परिहरति—

**साहित्ये मितदेशत्वात् प्रसिद्धे चाग्निधूमयो. ।**
**व्यतिरेकस्य चादृष्टेर्गमकत्वं प्रकल्प्यते ॥ ४२ ॥**

वह्निधूमसामान्ययो' प्रतिव्यक्ति कृत्स्नसमवायित्वेन परिमितदेशयोः सम्भवति साहित्यावगमः, तस्मिंश्च सति व्यतिरेकादर्शनात् सिध्यत्यनुमापकत्वमिति ॥४२॥

न त्वेवमत्र सम्भवतीत्याह—

**इह साहित्यमेवेदमेकस्य सहभाविनः ।**
**अनन्तदेशवर्त्तित्वान्न तावदुपपद्यते ॥ ४३ ॥**

सम्बन्धग्रहणे, परस्पर हि साहित्यग्रहणे । इह च भावाभावौ सम्बन्धिनौ । तत्र भावः परिमितदेशकालत्वाच्छक्यते ग्रहीतुम्, अभावस्त्वन्तदेशवर्ती न कथञ्चिद् ग्रहीतु शक्यते, अत साहित्यस्यैवाग्रहणात् तन्नियमो दूरापास्त इति ॥४३॥

पुनश्चोदयति—

**ननु देशान्तरं शून्यं चैत्रेणैवं प्रतीयते ।**
**तद्देशव्यतिरिक्तत्वात्[1] समीपस्थितदेशवत् ॥ ४४ ॥**

न सर्वदेशगतेनाभावेन नियम ब्रूम., किन्तु चैत्राधिष्ठितदेशव्यतिरिक्तस्य समीपदेशस्य तच्छून्यत्वमनुमीयत इति ॥ ४४ ॥

परिहरति—

**विरुद्धाव्यभिचारित्वं तद्वदेव हि गम्यते ।**
**समीपदेशभिन्नत्वात् चैत्राधिष्ठितदेशवत् ॥ ४५ ॥**

**तद्वदिति** । चैत्रयुक्तमित्यर्थ. । एतदुक्त भवति—न तावद् देशान्तराणि चैत्रशून्यानि तत्सयुक्तदेशव्यतिरिक्तदेशत्वादिति हेतुः सम्भवति, सन्दिग्धत्वाद् । देशान्तराण्यपि तत्संयुक्तानि न वेत्येतावदेव विचार्यते । कथ तेषां तत्संयुक्तदेशाद्व्यतिरेकसिद्धि' । यदि परमेवमुच्यते, यमेवाधुना चैत्रोऽधिष्ठितोऽपवरकदेशं तद्व्यतिरिक्तत्वादिति, एवंविधश्चाप्रयोजको हेतुः, इतरथा हि शक्यते चैत्रयुक्तं देशान्तरं तत्समीपव्यतिरिक्तदेशत्वात् तदधिष्ठितदेशवदिति ॥ ४५ ॥

अर्थापत्त्या वा कथ सर्वत्राभावसिद्धिः ? अत आह—

**पुरुषस्य तु कार्त्स्न्येन यदेकत्रोपलम्भनम् ।**
**तस्यान्यथा न सिद्धिः स्यादित्यन्येष्वस्य नास्तिता ॥ ४६ ॥**

---

१. ०व्यतिरेकत्वात्—१ पु० ।

मूर्त्तस्य पदार्थस्य कार्त्स्न्येनैकत्रावस्थानुपपत्त्यान्यत्र सर्वत्राभावः कल्प्यते, कः पुनरत्र प्रतिघातः, यत्समाधित्सयान्यत्राभावः कल्प्यते ? उच्यते, अनुमानेन तावदेकस्य मूर्त्तस्य युगपदनेकदेशसंयोगो न सम्भवतीत्यवगतम्, स्वशरीरे तथावगमात्। स्वशरीरस्य ह्येकत्र सतस्तत्कालेऽन्यत्राभावो दृश्यादर्शनादेवावगतः, चैत्रस्यापि तद्वदेव युगपदनेकत्रानवस्थानमनुमानादवगतम्, प्रत्यक्ष सन्निहितदेशवर्त्तित्वम्। तदिदमुभयं सम्भावयितुमन्यत्राभावः कल्प्यते, स हि यद्यन्यत्रापि स्यादनुमानादवगतमनेकत्र युगपदनवस्थानं बाध्यते। यदि त्विमं देश हित्वा व्यवतिष्ठेत ततः प्रत्यक्षावगतमेतद्देशसम्बन्धित्वं बाध्येतेति ॥ ४६ ॥

तदवश्यमर्थापत्त्यैवान्यत्राभावः पूर्वं ग्रहीतव्यः, पश्चात्तु भवत्वनुमानमित्याह—

**तेनार्थापत्तिपूर्वत्वमत्र,**

शक्तिकल्पनाप्यर्थापत्तिरेवेत्याह—

**यत्र च कारणे।**
**कार्यादर्शनतः शक्तेरस्तित्वं सम्प्रतीयते ॥ ४७ ॥**

चोदयति—

**कार्यस्य ननु लिङ्गत्वम्,**

कारणवत्तया शक्तिः कल्प्यते कार्याच्च कारणबुद्धिरनुमानमिति।

निराकरोति—

**न,**

कारणमाह—

**सम्बन्धानपेक्षणात्।**

बीजे सत्यङ्कुरोत्पत्तिदर्शनाद् बीजकारणत्वमवगम्यते, सत्यपि तस्मिन्मूषिकाघ्रातेऽङ्कुरानुत्पत्तेरकारणत्वम्, तदिदं कारणाकारणत्वव्याघातपरिजिहीर्षया शक्तिकल्पन सम्बन्धज्ञानानपेक्षत्वान्नानुमानम्। यथा वानया युक्त्या शक्तिसिद्धिः, तथा **शास्त्रदीपिकाया** दर्शितमिति।

इतश्च नानुमानमित्याह सार्द्धेन—

**दृष्ट्वा सम्बन्धितां चैषा शक्तिर्गम्येत नान्यथा ॥ ४८ ॥**
**तद्दर्शने तदानीं च प्रत्यक्षादेरसम्भवात्।**
**अर्थापत्तेः प्रमाणत्वं त्रैलक्षण्याद् विना भवेत् ॥ ४९ ॥**

सम्बन्धिग्रहणपूर्वकं हि सम्बन्धग्रहणम्। न च शक्तेः प्रत्यक्षग्रहणं सम्भवति, अतोऽवश्य सम्बन्धग्रहणवेलाया शक्तिग्रहणमभ्युपगन्तव्यम्। अर्थापत्तिर्हि त्रैलक्षण्यवर्जिता शक्नोति ता ग्रहीतुमिति ॥ ४८-४९ ॥

वृत्त्यन्तरे सर्पनकुलयोरेकस्य जयमन्यस्य पराजयं दृष्ट्वा इतरत्र जयपराजयकल्पनमर्थापत्त्युदाहरणं दत्तम्, तत् किं **भाष्यकारेण** नोक्तम् ? अत आह—

**अनुमानादभिन्नत्वान्नोक्तौ जयपराजयौ।**
**वध्यघातकभावेन यौ सर्पनकुलादिषु ॥ ५० ॥**

श्रुतार्थापत्तिमुदाहरति—

**पीनो दिवा न भुङ्क्ते चेत्येवमादिवचः श्रुतौ।**
**रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ॥ ५१ ॥**

तस्याः प्रमाणाग्राहिणीत्वं दर्शयितुं विप्रतिपत्तिं दर्शयति—

**तामर्थगोचरां केचिद्, अपरे शब्दगोचराम्।**
**कल्पयन्ति,**

सर्वे चागमान्तर्भूतां तां मन्यन्ते, इत्याह—

**आगमाच्चैनामभिन्नां प्रतिजानते ॥ ५२ ॥**

तदन्तर्भावे प्रयोजनमाह—

**प्रायशश्चानया वेदे व्यवहारो व्यवस्थितः।**
**सोऽवैदिकः प्रसज्येत यद्येषा भिद्यते ततः ॥ ५३ ॥**

फलापूर्वविध्यन्तसिद्धेरेतदधीनागमानन्तर्भावे सत्यवैदिकी स्यादिति ॥ ५३ ॥

शब्दगोचरत्वेऽपि पुनरवान्तरविप्रतिपत्तिमुपन्यस्यति—

**वचनस्य श्रुतस्यैव सोऽप्यर्थः कैश्चिदाश्रितः।**
**तदर्थोपप्लुतस्यान्यैरिष्टो वाक्यान्तरस्य तु ॥ ५४ ॥**

श्रुतस्यैव शब्दस्य तत्प्रतिपादकत्वं केचित् कल्पयन्ति, अन्ये तु शब्दान्तरमेव तत्प्रतिपादकमिति, तत्रानन्तरपक्षं निराकरोति[1]—

**न तावच्छ्रूयमाणस्य वचसोऽर्थोऽयमिष्यते।**

कारणमाह—

**न ह्यनेकार्थता युक्ता वाक्ये,**

किञ्च, यदि वाक्यं वाचकं स्यात् स्यादप्यनेकार्थता, न तु वाक्यं वाचकमित्याह—

**वाचकता तथा ॥ ५५ ॥**

कथं तर्हि वाक्यार्थप्रतीतिः ? अत आह—

**पदार्थान्वयरूपेण वाक्यार्थो हि प्रतीयते।**

किमिति रात्रिभोजनं दिववाक्यस्यार्थो न भवति ? अत आह—

**न रात्र्यादिपदार्थश्च दिवावाक्येन गम्यते ॥ ५६ ॥**

१. निष्कर्षति—२ पु०।

न हि रात्र्यादिपदार्था दिवावाक्यपदैरभिधीयन्ते, ते कथमन्वितरूपतया तद्वाक्यार्थीभवेयुरिति ॥ ५६ ॥

यद्यपदार्थोऽपि रात्रिभोजनं दिवादिपदार्थानां संसर्गो भेदो वा स्यात्, ततोऽपि तस्यैव वाक्यस्यार्थः स्यान्न तु तदस्तीत्याह—

**न दिवादिपदार्थानां संसर्गो रात्रिभोजनम् ।**
**न भेदो[1] येन तद्वाक्यं तस्य स्यात् प्रतिपादकम् ॥ ५७ ॥**

यद्यपि चानेकार्थता, तथाप्येकस्मिन् प्रयोगे व्यापृतस्य नार्थान्तर सम्भवति इत्याह—

**अन्यार्थव्यापृतत्वाच्च न द्वितीयार्थकल्पना ।**

तस्माद् वाक्यान्तरस्यैव कल्पितस्यायमर्थ, न श्रुतस्येत्याह—

**तस्माद् वाक्यान्तरेणायं बुद्धिस्थेन प्रतीयते ॥ ५८ ॥**

तस्य तु वाक्यस्य कि प्रमाणमिति विचारणीयमित्याह—

**तस्य चागमिकत्वेऽपि यत् तद् वाक्यं प्रतीयते ।**
**प्रमाणं तस्य वक्तव्यं प्रत्यक्षादिषु यद् भवेत् ॥ ५९ ॥**

यच्च तदर्थान्तर तदा यद्यपि वाक्यार्थत्वादागमिक न निष्प्रमाणक तथापि तदेव वाक्य किंप्राणकमिति चिन्त्यमिति ॥ ५९ ॥

तत्रार्थापत्तिरेव प्रमाणमिति वक्तु पूर्वेषा तावदसम्भव दर्शयितुमाह—

**न ह्यनुच्चारिते वाक्ये प्रत्यक्षं तावदिष्यते ।**

नाप्यनुमानम्, श्रुतस्य वाक्यस्याश्रुतेन सम्वन्धाग्रहणात्, इत्याह—

**नानुमानं न चेदं हि दृष्टं तेन सह क्वचित् ॥ ६० ॥**

शङ्कते—

**यदि त्वनुपलब्धेऽपि सम्बन्धे लिङ्गतेष्यते ।**

निराकरोति—

**तदुच्चारणमात्रेण सर्ववाक्यमतिर्भवेत् ॥ ६१ ॥**

ननु यदा 'पीनो दिवा न भुङ्क्ते रात्रौ भुङ्क्ते' इति सहोच्चारित तदा सम्भवति साहित्यग्रहणम् ? अत आह—

**न चार्थापत्तिगम्यानि सर्वैः सर्ववचांसि हि ।**
**सम्बद्धान्युपलब्धानि येन तेष्वनुमा भवेत् ॥ ६२ ॥**

इतश्च नानुमेयत्वमित्याह—

**न च सत्तानुमानेन विशेषो वानुमीयते ।**

ततः किम्? इत्याह—

---

१. भेद इति । सौगतानामपोहः ।

**इह वाक्यविशेषस्य सत्तैव त्ववगम्यते ॥ ६३ ॥**

यस्त्वनुमानविषय' प्रसिद्धो धर्मी अप्रसिद्धविशेषणविशिष्टः सोऽत्र न सम्भवतीत्याह—

**पूर्वसिद्धः स्वतन्त्रोऽर्थः स्वतन्त्रेण विशेषितः ।**
**धर्माधर्मविशिष्टोऽत्र नानुमेयः प्रतीयते ॥ ६४ ॥**

शङ्कते—

**अथ श्रुतस्य वाक्यस्य मीयते तद्विशिष्टता ।**

निराकरोति—

**ततः पक्षोऽभ्युपेतः स्यादप्रसिद्धविशेषणः ॥ ६५ ॥**

श्रुतस्य च धर्मित्वे लिङ्गान्तराभावाद् यदि तदेव लिङ्ग तत. प्रतिज्ञार्थैकदेशत्वम्, यथा पदे पक्षीकृते दर्शितमित्याह—

**किञ्च, लिङ्गान्तराभावादेतस्य यदि लिङ्गता ।**
**प्रतिज्ञार्थैकदेशत्वं पदवत् ते प्रसज्यते ॥ ६६ ॥**

यदि तु यथा पदार्थस्य धर्मित्वं पदस्य तद्धर्मतया लिङ्गत्वमाशङ्कितम्, तथात्राप्यश्रुतस्य वाक्यस्य धर्मित्व श्रुतस्य धर्मत्वमुच्येत तद्वदेव निराकर्त्तव्यमित्याह—

**तद्वदेव निराकार्या वचसो धर्मधर्मिता ।**

तदेव दर्शयति—

**नागृहीते हि तद्धर्मो गृहीते नानुमेयता ॥ ६७ ॥**

अगृहीते रात्रिवाक्ये तद्धर्मत्वाद् दिवावाक्य ग्रहीतु न शक्य गृहीत चेत् किमनुमेयमिति ॥ ६७ ॥

तद्वदेव क्रियाकारकसम्बन्धाभावादिदमपि न श्रुतस्याश्रुतधर्मत्वमित्याह—

**क्रियाकारकसम्बन्धाद् ऋते नास्ति तु धर्मता ।**

यदि श्रुतस्याश्रुत विषय इति कृत्वा तद्धर्मत्वं श्रुतस्योच्येत ? अत आह—

**अवाचकतया चैतन्न धर्मो विषयात्मना ॥ ६८ ॥**

तत्प्रतिपादकता हि तद्विषयता, न चासाववाचकस्यास्तीति शङ्कते—

**प्रतीतेर्वाचकत्वं चेत्,**

निराकरोति—

**प्रसक्तानेकशक्तिता ।**

तदनुमापकतया तु तद्धर्मत्वमनुमानोत्तरकालत्वान्नानुमानाङ्गमित्याह—

**अनुमाविषयोत्थं तु धर्मत्वं निष्फलं भवेत् ॥ ६९ ॥**

तदेवं दिवावाक्य न रात्रिवाक्यस्यानुमापकमित्युक्तम् । एवं दिवादिपदार्थोऽपि नैव लिङ्गसम्बन्धाभावादेवेत्याह—

**पदार्थैरपि तद्वाक्यं नासम्बन्धात् प्रतीयते ।**

नन्वसम्बद्धैरपि पदार्थैर्यथा वाक्यार्थः प्रतीयते तथा रात्रिवाक्यमपि किं न प्रत्येष्यते? अत आह—

**सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि ॥ ७० ॥**

सामान्यं हि पदार्थः विशेषश्च वाक्यार्थः, सामान्यानि च विशेषमन्तरेणानुपपद्यमानानि युक्तं यत्तद् गमयन्तीति, न त्वेवमिहास्तीत्याह—

**न तु वाक्यान्तरेणैषां विना किञ्चिन्न सिध्यति ।**

न चापि तद्देशतत्कालत्वादिसम्बन्धो दिवावाक्यतत्पदार्थानां वा रात्रिवाक्येनास्तीत्याह—

**न चाप्यन्यः प्रकारोऽस्ति तेन वाक्येन सङ्गतौ ॥ ७१ ॥**

प्रत्यक्षानुमानगम्यत्वे निरस्ते शब्दगम्यत्वमाशङ्क्य निराकरोति सार्द्धेन—

**अथैतद् वाचि कल्प्येत वाक्यमन्यत् तथैव च ।**

**प्रसङ्गात् तत्र दूरेऽपि नासम्बन्धात् प्रमुच्यते ॥ ७२ ॥**

**ततश्च[1] प्रथमादेव वरं ज्ञातुमसङ्गतात् ।**

न तावद् दिवावाक्यस्य रात्रिवाक्यमर्थं, तत्र वाक्यान्तरं रात्रिवाक्यवाचकं कल्पनीयम्, तदपि चाप्रत्यक्षम्, दिवावाक्येन च सम्बन्धादननुमेयमिति पुनरपरापरवाक्यकल्पनायामनवस्था स्यात्, तत्रान्ततो गत्वाप्यवश्यं किञ्चिद्वाक्यमसत्येव सम्बन्धेऽर्थापत्त्यैव दिवावाक्येन ज्ञातव्यम्, तद्वरं दिवावाक्येन रात्रिवाक्यमेव कल्पितम्। एवशब्दो भिन्नक्रमः। प्राथम्याद् रात्रिवाक्यमेव वरं ज्ञातुमिति।

सम्प्रत्यनुमानमेवोपसंक्रम्यान्वयव्यतिरेकौ निराकरोति—

**अन्वयव्यतिरेकौ च प्रतिषेध्यौ पदे यथा ॥ ७३ ॥**

देशकालद्वारान्वयव्यतिरेकाभावाज्ज्ञानद्वारयोश्च ज्ञानोत्तरकालत्वेनानुपयोगादिति पदवदेव दर्शयितव्यमिति ॥ ७३ ॥

सम्प्रत्युपमानगम्यत्वं निराकरोति पादत्रयेण—

**श्रुतवाक्येन सादृश्यं नाश्रुतस्यास्ति किञ्चन ।**

**तस्मादनुपमानत्वम्,**

उपमीयते येन तदुपमानमिति दिवावाक्यवत् तदर्थोऽपि नोपमानमित्याह—

**अर्थस्याप्यनया दिशा ॥ ७४ ॥**

रात्रिवाक्यवत् तदर्थेऽपि दिवावाक्यतदर्थयोर्लिङ्गत्वोपमानत्वे निराकार्ये इत्याह पादत्रयेण—

**उपमानत्वलिङ्गत्वे[2] वाक्यं प्रति निवारिते ।**

**अर्थेऽपि चैवमेव स्यात्,**

---

१. अतश्च—१ पु०। २. न तज्ज्ञातु०—१ पु०। ३. ०लिङ्गेन—मु० पा०।

उपसंहरति—

**तस्मात् पूर्वेष्वसम्भवः ॥ ७५ ॥**

पारिशेष्यादर्थापत्तिरेव रात्रिवाक्ये प्रमाणमित्याह—

**अतः श्रुतस्य वाक्यस्य यदर्थप्रतिपादनम् ।**
**तदात्मलाभ एव स्याद् विना नेत्येतदिष्यते ॥ ७६ ॥**

पीनत्वभोजनप्रतिषेधयोरेकवाक्यत्वानुपपत्त्या तदुपपादनाय तच्छेषत्वेन रात्रि-वाक्य कल्प्यत इति ॥ ७६ ॥

अर्थकल्पनावादी चोदयति—

**एतदर्थाद् विना नायमित्यर्थः किं न कल्प्यते ।**

न हि रात्रिभोजनवाक्यं पीनत्वस्योपपादकं किन्तु रात्रिभोजनमेव, अतः किं शब्दकल्पनयेति ।

स्यादेतत्, विश्वजिदादिषु फलादेः शाब्दत्वसिद्ध्यर्थं शब्दकल्पनमिति, तत्राह—

**वाक्यार्थवच्च किं नायमागमार्थः प्रतीयते ॥ ७७ ॥**

यथा शब्दाभिहितपदार्थगम्योऽपि वाक्यार्थः शब्दमूलतया शाब्दः, तथा वाक्यार्थानुपपत्तिगम्योऽप्यर्थो वाक्यमूलतया शाब्दो भविष्यतीति ॥ ७७ ॥

परिहरति—

**सविकल्पकविज्ञानैः शब्दः पूर्वं प्रतीयते ।**

ततश्च प्रथमावगतेन शब्देनैवानुपपत्तिपरिक्षयान्नार्थं यावदर्थापत्तिर्गन्तु-मर्हति ।

नन्वेवं प्रत्यक्षानुमानादिविकल्पानामपि शब्दपूर्वकत्वात्तेषामपि शब्दविषयता स्यात्? न, इन्द्रियलिङ्गयोरर्थे व्यापके च क्लृप्तसामर्थ्ययोः शब्दविषये सामर्थ्या-भावात् । अर्थापत्तिस्तूपपादकमात्रेण सन्तुष्टा शब्दस्याप्युपपादकत्वात् तत्रैव प्रथमावगते पर्यवस्यति । दृष्टार्थापत्तिरपि तर्हि व्युत्पन्नाना शब्द एव पर्यवस्ये-न्नानुपपादकत्वाद् बहिर्भाव एव गृहाभावस्योपपादको न तच्छब्दोऽपि। नन्वस्यापि तर्हि रात्रिभोजनमेवोपपादक न तच्छब्द ? सत्यम्, वाक्यानुपपत्तिस्तु शब्देनापि शाम्यति । यथैव ह्यर्थस्यानुपपत्ति एव वाक्यस्यापि यथाश्रुतस्य परिपूर्णार्थप्रति-पादकत्वानुपपत्तेरस्त्याकाङ्क्षा । तत्र प्रथमावगतेन शब्देन तदुपपत्तौ नार्थं यावद् गन्तव्यम् । किञ्च शब्दावगतोऽर्थस्तदेकवाक्यभूतशब्दान्तरप्रतिपादितेनैवार्थेन सह वाक्यार्थीभवति न प्रत्यक्षावगतेनेत्यसकृदुक्तम्, एव चोभावपि सिद्ध्यतः, अन्यथा नेत्येतदपि तत्र तत्र प्रतिपादितमिति ।

यदपि वाक्यार्थवदागमार्थत्वमुक्तम्, तत्राह—

**लब्धप्रयोजने वाक्ये परं नागमिकं च नः ॥ ७८ ॥**

यावद्ध्यकृतार्थं वाक्यं तावद् यत् कल्प्यते तत् सर्वं शाब्दं भवति, पदार्थाना चावगतत्वेनाप्रयोजनत्वात्तेष्वकृतार्थं वाक्यं तत्तद्द्वाराऽप्रतिपन्नवाक्यार्थावसायीति युक्तं वाक्यार्थस्यागमार्थत्वम्। तत. पर तु पदार्थान्तरम्, तत' प्रागेव वाक्यस्य कृतार्थत्वान्न तस्यागमार्थत्वम्। अथाकृतार्थत्वम्? तत शब्द एव कल्पयितव्य, अन्येन वाक्यस्याकाङ्क्षापूरणाभावादिति ॥ ७८ ॥

चोदयति—

**ननु चासति सम्बन्धे सति वानवधारिते।**
**गम्यज्ञानमिदं वाक्यं[1] प्रसज्येताप्रमाणकम् ॥ ७९ ॥**

परिहरति—

**सम्बन्धस्य प्रमाणत्वं स्थितं किञ्चेश्वगाज्ञया।**

सम्बन्धप्रामाण्ये च प्रत्यक्षमप्रमाण स्यादित्याह—

**प्रत्यक्षस्य प्रमाणत्वं कथं वा सङ्गतेर्विना ॥ ८० ॥**

शङ्कते—

**अस्तीन्द्रियार्थसम्बन्धस्तत्र चेत्,**

निराकरोति—

**नानपेक्षणात्।**

सन्नपि सम्बन्धोऽनवगतत्वादसत्तुल्य इति।

एतदेव दर्शयति—

**न हि प्रत्यक्षवेलायां सर्वणासौ निरूप्यते ॥ ८१ ॥**

यस्तर्हि निरुपाय.[2], न तस्याङ्ग स्यादत आह—

**येनापि तु निरूप्येत पश्चादनुभवादसौ।**
**न स्यादेव प्रमाणाङ्गमसता तुल्य एव सः ॥ ८२ ॥**

ननु नायमसत्तुल्यः, सत्तया ह्यसौ प्रत्यक्षज्ञानस्य कारणमेव? अत आह—

**अप्राप्यकारिणी येषां चक्षुःश्रोत्रे च ते यथा।**
**तज्ज्ञानस्य प्रमाणत्वमिच्छन्त्येवं भविष्यति ॥ ८३ ॥**

सत्य कारणमेवम्[3], तथापि शाक्यास्तावत्सम्बन्ध नैव चक्षु श्रोत्रयोरिच्छन्ति, ते यथैव प्रत्यक्षस्य प्रामाण्यं मन्यन्ते तथा चेयमर्थापत्तिरिति ॥ ८३ ॥

कथमसति सम्बन्धे प्रामाण्यमिति इमामाशङ्कामपनुदन्नुपसहरति—

**तस्मादसत्त्वे सत्त्वे वा सम्बन्धस्य यदेव नः।**
**जायेताभङ्गुरं[4] ज्ञानं तस्यैव स्यात् प्रमाणता ॥ ८४ ॥**

---

१. इदं कल्पितं रात्रिवाक्यमित्यर्थ.।
२. निरुपपत्तिः—२ पु०।
३. एकं—मु० पा०।
४. अभङ्गुरमिति। अबाधितमित्यर्थः।

बाधविरहः प्रामाण्ये कारणम्, न सम्बन्ध इति ॥ ८४ ॥

निर्विवादं चार्थापत्तेः प्रामाण्यम्। अनुमानात्तु भेदाभेदयोर्विवादः, तत्र च निर्णयोऽस्माभिः प्रागेव दर्शित इत्याह—

**न चाप्यस्याः प्रमाणत्वे कश्चिद् विप्रतिपद्यते।**
**भेदाभेदे विसंवादः कृतस्तत्र च निर्णयः ॥ ८५ ॥**

नन्वेवमनुमानेऽपि किं सम्बन्धेन ? अत आह—

**कृते[1] यत्र च सम्बन्धाद् बुद्धिरेव न जायते।**
**तत्र किं क्रियताम्,**

तत्रापि बुद्ध्युत्पादे एव सम्बन्धोपयोगः, न प्रामाण्ये, तच्चोत्पन्नाया बुद्धेः स्वारसिकमेवेत्याह—

**सोऽपि प्रामाण्ये नैव कारणम् ॥ ८६ ॥**

अर्थापत्तेः स्वतन्त्रोपयोगः

कः पुनरर्थापत्तेरनुमानाद् भेदस्य स्वतन्त्रोपयोगः, तं दर्शयति सार्धेन—

**स्मृत्या श्रुतिर्या परिकल्प्यतेऽस्मिन्**
**लिङ्गादिभिर्या विनियोजिका च।**
**फलादिभिर्यत् परिपूरणं च**
**सम्बन्धदृक् तत्र न काचिदस्ति ॥ ८७ ॥**
**तत् सर्वमित्याद्यसमञ्जसं स्या-**
**न्न चेदियं स्यादनुमानतोऽन्या।**

यदि तु विलक्षणरूपापि पश्चान्मानसाम्याद्[2] अनुमानशब्देन वक्तुमिष्यते, तदस्तु यथाकाममित्याह—

**एवंस्वभावाप्यनुमानशब्दं**
**लभेत चेदस्ति यथेप्सितं नः ॥ ८८ ॥**

इत्यर्थापत्तिपरिच्छेदः



## अथाभावप्रामाण्यवादः

"अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्यासन्निकृष्टस्य" (शा० भा० पृ० ४७) इति भाष्यम्, तदयुक्तम्, न हि प्रमाणाभावः प्रमाणलक्षणं सम्भवति, विपरीतत्वादत आह—

**प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।**
**वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ १ ॥**

---

१. ज्ञाते—१ पु० । ऋते इत्युचितः पाठः । २. पश्चान्मानात्—३ पु० ।

पूर्वोक्तसदुपलम्भकप्रमाणपञ्चकाभिप्रायोऽयं प्रमाणशब्द, तदभावश्च षष्ठस्य युक्तमेव लक्षणम्, तेनेदृशं वस्तुसत्तावबोधार्थं यत् प्रमाणपञ्चकं तद् यत्र घटादौ वस्तुरूपे सत्यामेव प्रसक्तौ न जायते तत्र घटादावभावस्य प्रामाण्यमिति ॥ १ ॥

नन्वप्रमीयमाणे घटे कथमभावस्य प्रामाण्यमिति, न ह्यप्रमीयमाणस्य प्रमेयता सम्भवति, तत्रोत्तर भाष्यकारेणोक्तम्—"नास्तीत्यस्यर्थस्यासन्निकृष्टस्य" इति; तद् व्याचष्टे—

**वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यसमाश्रया ।**

प्रत्यक्षादिभि सद्रूपेणाप्रमीयमाणमपि घटादिकमसद्रूपेणाभावस्य प्रमेयम्, असङ्करोऽसद्रूपमभाव इति यावत् । वस्त्वसङ्करमेव विवृणोति सार्द्धद्वयेन—

**क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते ॥ २ ॥**
**नास्तिता पयसो दध्नि प्रध्वंसाभाव[1] इष्यते[1] ।**
**गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते ॥ ३ ॥**
**शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ।**
**शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते ॥ ४ ॥**

शशशृङ्गादिरूपेणेति । शृङ्गस्य यदसद्रूप शशमूर्द्धावयवसमवेत सोऽत्यन्ताभावइत्यर्थ. ॥ ४ ॥

सोऽयं वस्त्वसङ्करोऽसत्यभावप्रामाण्ये न सिद्ध्यतीत्यभिप्रायेणाह द्वयेन—

**क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः ।**
**शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्तिरात्मनि ॥ ५ ॥**
**अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह ।**
**व्योम्नि संस्पर्शिता ते च न चेदस्य प्रमाणता ॥ ६ ॥**

ये निःस्वभावमभावमवस्तुस्वरूप तुच्छ मन्यन्ते, तान् प्रत्याह—

**न च स्याद् व्यवहारोऽयं कारणादिविभागतः ।**
**प्रागभावादिभेदेन नाभावो भिद्यते[2] यदि ॥ ७ ॥**

यत् खलु दधिरूप प्रागभूत्वा भवति तदुपादेयं कार्यम्, यच्च प्रागवस्थित क्षीर रूप पश्चान्न भवति तदुपादानकारणम्—सोऽय कार्यकारणविभागः। तथा गौरश्वो न भवति, अश्वो न भवति गौ', विषाणशून्यः शशः—इत्यादिव्यवहारोऽसत्यभावस्य प्रागभावादिरूपभेदैर्नोपपद्यत इति ॥ ७ ॥

तथापि कथं वस्तुत्वम् ? अत आह—

**न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता ।**

इतश्च वस्तुत्वमित्याह—

---

१-१. ध्वंसाभावस्य लक्षणम्—३ पु० । २. विद्यते इति पाठा० ।

**कार्यादीनामभावः को योऽभावः कारणादितः ॥ ८ ॥**

क्षीरमेव दध्यभावः, तद्धर्मत्वाद्, धर्मधर्मिणोश्चानतिभेदात् । तदयं वस्तुधर्मः सन् कथमवस्तुधर्मः स्यादिति ॥ ८ ॥

इतश्चैवमित्याह पादत्रयेण--

**यद्वानुवृत्तिव्यावृत्तिबुद्धिग्राह्यो यतस्त्वयम् ।**

**तस्माद् गवादिवद् वस्तु,**

अस्ति ह्यभावस्य प्रागभावादिस्वरूपेण व्यावृत्तिरभावरूपेण चानुवृत्तिरिति ।

तत्रैव हेत्वन्तरमाह--

**प्रमेयत्वाच्च गम्यते ॥ ९ ॥**

दर्शित तस्य प्रमेयत्वम्, यस्तु प्रमेयाभावादप्रामाण्य मन्यते, स प्रत्यक्षस्यापि वदेत्, तत्प्रमेयस्यापि घटादे प्रमाणान्तरत सिद्ध्यभावात् । प्रत्यक्षादेव तत्सिद्धिरिति चेत् ? सा अभावस्यापि स्वप्रमाणादविशिष्टेति ॥ ९ ॥

सत्यमस्त्यनुवृत्तिबुद्धि , सा तु मृषेवौपचारिकत्वात् भ्रान्तित्वाद् ? अत आह--

**न चौपचारिकत्व वा भ्रान्तिर्वापि यदृच्छया ।**

**भवत्यतो न सामान्यविशेषात्मकता मृषा ॥ १० ॥**

यदृच्छया विना कारणेनौपचारिकत्व भ्रान्तित्व वा न युक्तम्, अतो न मृषार्थत्वम् ॥ १० ॥

प्रमाणशब्द. पञ्चकपर इति व्याख्यातम् । अभावशब्दमिदानी व्याचष्टे--

**प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।**

तामेव द्विधा विभजते--

**सात्मनः परिणामो वा विज्ञानं वान्यवस्तुनि ॥ ११ ॥**

योऽयमात्मनो घटादिविषय प्रत्यक्षादिज्ञानस्वरूप. परिणाम· तदभावमात्रमेव अनुत्पत्ति , अभाव इति बोध्यते । तच्च घटाद्यभावविषयं नास्ति, बुद्धिजनकतया इन्द्रियादिवत् प्रमाण नास्तीति ।

बुद्धिश्च फलम् । सैव या बुद्धिर्घटाद्यभावरूपे वस्तुनि जायमाना लक्षणयानुत्पत्त्यभावशब्दाभ्यामुच्यते । तत्प्रामाण्ये च हानादिधी फलम् । तदेष भाष्यार्थः-- प्रत्यक्षाद्यभावो यो नास्तीत्यस्यार्थस्य बोधक सोऽभावो नाम प्रमाणमिति ॥११॥

ननु भूतलादिभावातिरेकेणाभावाख्य न किञ्चिद् वस्तूपलभामहे, भवतापि चोक्तम्--"भावान्तरमभावोऽन्यो न कश्चित्" इति, भावश्च प्रत्यक्षादिगोचर एवेति न प्रमाणान्तरस्यावकाश ? इत्यत आह--

**स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।**

**वस्तुनि ज्ञायते कैश्चिद् रूपं किञ्चित् कदाचन ॥ १२ ॥**

सर्वं हि वस्तु स्वरूपतः सद्रूपं पररूपतश्चासद्रूपम्, यथा घटो घटरूपेण सन् पटरूपेणासन्, पटोऽप्यसद्रूपेण भावान्तरे घटादौ समवेतः तस्मिन् स्वीयासद्रूपाकारां बुद्धिं जनयति—योऽयं घट. पटो न भवतीति। तथेह घटो नास्तीति घटसंयोगाभावात्मना भूतलादिबुद्धिर्दर्शयितव्या।

यस्तु **माध्यमिक**वादमनुशीलयन् भूतलबुद्धिव्यतिरेकेण नास्तीति बुद्धिमपह्नुते, स तन्निराकरणेन 'स्वरूपपररूपाभ्याम्' इत्यनेनैव निराकर्त्तव्य·। नास्तीति व्यवहारश्च किंनिबन्धनः स्यात्। न ह्यसौ भूतलोपलम्भनिबन्धन, घटवत्यपि प्रसङ्गात्, दृश्ये घट इति चेत्? स एव प्रसङ्ग। दृश्यमानो हि घट., दृश्य एव तन्मात्रोपलब्धिरिति चेत्? मात्रशब्दो यद्यनर्थक·, स एव प्रसङ्ग.। भूतलादनर्थान्तरवचनत्वेऽपि स एव दोषः। वैयर्थ्यं च पुनरुक्तत्वात्, अर्थान्तरवचनत्वे सिद्ध प्रमेयान्तरम्।

यस्तु वदति—यदेवाभाववादिनोऽभावज्ञानस्य कारण तदेवास्माक व्यवहारस्य भवत्विति, स घटादिव्यवहाराणामपि तज्ज्ञानकारणादेव सिद्धिमङ्गीकृत्य तज्ज्ञानान्यपह्नुवीत। किञ्च, एववादिना न भाष्यमालोचितम्, प्रमाणाभावो हि प्रमेयाभावज्ञानस्य कारणम्, न च सर्वाभावापह्नववादिन प्रमाणाभावोऽस्ति, तदङ्गीकरणे वा घटाद्यभावेन किमपराद्धमित्यास्ता तावत्। तदेव सदसदात्मना द्विरूपे वस्तुनि किञ्चिद् रूप कदाचिद् केनचिद् गृह्यते किञ्चिच्च कदाचिदित्यस्ति प्रमाणान्तरस्यावकाश इति ॥ १२ ॥

कस्य कदा ज्ञान कस्य वा न? इत्यत आह—

**यस्य यत्र यदोद्भूतिर्जिघृक्षा वोपजायते।**
**वेद्यतेऽनुभवस्तस्य तेन च व्यपदिश्यते ॥ १३ ॥**

**तेन च व्यपदिश्यत इति**। घटज्ञानमभावज्ञानमिति।

इतरस्त्वशस्तस्यैव गृह्यमाणस्योपकारकत्वेन लीनो भूत्वावतिष्ठत इत्याह—

**तस्योपकारकत्वेन वर्त्ततेऽशस्तदेतरः।**

अथ वा अस्त्येवान्यतरग्रहणेऽप्यन्यतरस्य विशेषणत्वेन ग्रहणमित्याह—

**उभयोरपि संवित्तावुभयानुगमोऽस्ति हि ॥ १४ ॥**

तत्र भावग्रहणे तावदभावस्य विशेषणत्वेनानुवृत्ति कदाचिदस्तीत्याह—

**अयमेवेति यो ह्येष भावे भवति निर्णयः।**
**नैष वस्त्वन्तराभावसंवित्त्यनुगमादृते ॥ १५ ॥**

योऽयम् 'देवदत्त एवात्र गृहे नान्य.', 'स्थाणुरेवाय न पुरुषः' इति सावधारणो निर्णयः, स वस्त्वन्तराभावानुविद्धः।

नन्वेव प्रत्यक्षादीनामप्रामाण्यं स्यात्, निर्णयफलत्व हि प्रमाणाना तत्त्वम्,

निर्णयश्च 'अयमेव' इति ज्ञानम्, तच्चाभावानुविद्धम्, अभावश्च प्रमाणान्तरगम्य इति तदपेक्षतया प्रत्यक्षादीनामनपेक्षत्वलक्षण प्रामाण्यं न स्यात् ? नैष दोषः; न ह्यभावानुविद्धबोधो निर्णयलक्षणम्, तद्भावेऽपि सशयदर्शनात्, तदभावे च निश्चयदर्शनात्। कि देवदत्त एवास्मिन् गृहे कि वान्योऽपीति वस्त्वन्तराभावानुविद्धोऽपि देवदत्त. प्रकाशमानः सन्देहमारोहति । तथा किमस्तीह चैत्रः किं वा नास्तीति भावाभावौ सन्दिह्यमानौ प्रकाशेते, तद्यद्यभावप्रकाशो निर्णयलक्षणम्, नाभावे सन्देहः स्यात्, तथा किञ्चिन्मात्ररूप एवात्मा कि सुखदु·खरूपोऽपीति विनैवाभावप्रकाशेन निर्णयो दृश्यते। तस्मान्नाभावावभासतदभावात्मानौ निर्णयानिर्णयौ ।

कीदृश पुनर्निर्णय. ? ज्ञानविशेष· सर्वजनीन, नायमित्थम्भावेनोपाख्यातुं शक्यते। कथ तर्हि वस्त्वन्तराभावसवित्त्यनुगमादनेन निर्णय इत्युच्यते ? केन वेदमुच्यते ! यस्तु 'अयमेव' इत्येवविधो निर्णय स वस्त्वन्तराभावानुविद्ध इति ब्रूम, न सर्वे निर्णयास्तदनुविद्धा इति ।। १५ ।।

'नास्ति' इति ज्ञान तु सर्वमेव भावानुविद्धमित्याह--

**नास्तीत्यपि च संवित्तिर्न वस्त्वनुगमाद् ऋते।**

एतदेव व्यनक्ति--

**ज्ञानं न जायते किञ्चिदुपष्टम्भनवर्जितम् ॥ १६ ॥**

सर्वमेवाभावज्ञानम् 'इदमिह नास्ति, इदमिदं न भवति' इति वा भावोपष्टब्धमेव, न तच्छून्य किञ्चिदस्तीति ।। १६ ।।

दर्शित सदसदात्मकत्व समस्तस्य वस्तुन । तत्र सदशस्य प्रत्यक्षादिगम्यत्वम्, असदशस्य चाभावगम्यत्व दर्शयितुमाह--

**प्रत्यक्षाद्यवतारस्तु भावांशो गृह्यते यदा।**
**व्यापारस्तदनुत्पत्तेरभावांशे[1] जिघृक्षिते ॥ १७ ॥**

**तदनुत्पत्तिः** । प्रत्यक्षाद्यभाव इति ।। १७ ।।

तत्र प्रत्यक्षगम्यत्व **नैयायिका** मन्यन्ते, तद्धि "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम्" ( न्या० सू० १.१.४ ) । षड्विधश्च सन्निकर्ष --सयोगाद् द्रव्यग्रहणम्, सयुक्तसमवायाद् गुणग्रहणम्, सयुक्तसमवेतसमवायाद् गुणत्वग्रहणम्, समवायाच्छब्दग्रहणम्, समवेतसमवायाच्छब्दत्वग्रहणम्, सयुक्तविशेषणत्वादभावग्रहणम्, अफलवती शाखेति । तान् प्रत्याह—

**न तावदिन्द्रियैरेषा नास्तीत्युत्पद्यते मतिः ।**

---

१. ०नुत्पत्तिर०--मु० पा० ।

कारणमाह—

**भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि ॥ १८ ॥**

मा भूत् सयोगतः, सयुक्तविशेषणत्वाद् गृह्यतामिति चेत्? न, असति सम्बन्धे विशेषणत्वायोगात्। अस्त्येव सम्बन्ध इति चेत्, कोऽसौ? न तावत् सयोग, अद्रव्यत्वात्, न समवायः, तदनभ्युपगमात्। अभ्युपगमे वा सयुक्तसमवायादेव ग्रहणात् तद्विशेषणत्वमवक्तव्य स्यात्। तन्न तावद्भवतामस्ति सन्निकर्ष, अस्माक त्वस्ति सयुक्तसमवाय, तथापि तु नैन्द्रियकत्वमिति अत्रैव वक्ष्याम इति ॥ १८ ॥

चोदयति—

**ननु भावादभिन्नत्वात् सम्प्रयोगोऽस्ति तेन च।**

परिहरति—

**न ह्यत्यन्तमभेदोऽस्ति रूपादिवदिहापि नः ॥ १९ ॥**

एतदेव दर्शयति—

**धर्मयोर्भेद इष्टो[1] हि धर्म्यभेदेऽपि नः स्थिते।**

यदाप्येकमेव भावाभावात्मक वस्त्विति कृत्वा आत्मानात्माशयोरैक्यम्, तथापि रूपादिवत् स्वरूपतोऽस्त्येव भेद इति।

प्रमाणमाह—

**उद्भवाभिभवात्मत्वाद् ग्रहणं चावतिष्ठते ॥ २० ॥**

न ह्यसति भेदे ग्रहणाग्रहणव्यवस्थासम्भव इति ॥ २० ॥

इतश्चास्ति भेद इत्याह—

**इदमेव निमित्तं[2] च विवेकस्य प्रतीयते।**
**भावाभावधियोरक्षैः सम्बन्धोऽक्षानपेक्षणम् ॥ २१ ॥**

अक्षानपेक्षत्व चाभावधियो वक्ष्यत इति ॥ २१ ॥

अपरमपि भेदे कारणमेकेषा मते दर्शयति—

**रूपादेरपि भेदं च केचिद् ग्राहकभेदतः।**
**वर्णयन्ति यथैकस्य पुंसः पुत्रादिरूपताम् ॥ २२ ॥**

पितृत्वादिक हि प्रतियोगिभेदात् भिद्यते, प्रतियोग्येव ग्राहकमित्युच्यते, तदधीनत्वात् पितृत्वादिग्रहणस्य। तथा रूपादीनामपि चक्षुरादिग्राहकभेदाद् भेद, तद्वद् भावाभावयोरपि तत एव भेदोऽस्त्विति ॥ २२ ॥

अस्मन्मते तु बुद्धिभेदादेव रूपादीना भेद, सोऽपि भावाभावयोरस्त्येव इत्याह—

**बुद्धिमात्रकृतो भेदो रूपादौ नित्यमेव हि।**

---

१. इष्ट इति पाठान्तरम्। २ निमित्तत्वमिति पाठान्तरम्।

नन्वेव भेद एव रूपादीनां भावाभावयोश्च स्यात्, एकबुद्धिस्तु देशाभेदात् वनादिवत् समुदायनिबन्धनैव स्यात्, न हि नानारूप एको धर्मी संभवति यद्रूपेणाभेदः स्यात्; नानात्वैकत्वयोर्विरोधात् ? तत्राह—

**न च देशाद्यभिन्नानां समुदायावकल्पना ॥ २३ ॥**

दर्शितो हि धर्मी **प्रत्यक्षसूत्र** इति ॥ २३ ॥

न च विरोधः, अपेक्षाभेदादित्याह—

**सद्गुणद्रव्यरूपेण रूपादेरेकतेष्यते ।**
**स्वरूपापेक्षया चैषां परस्परविभिन्नता ॥ २४ ॥**

एतच्च **आकृतिवादे** समर्थयिष्यते ॥ २४ ॥

तथा भावाभावयोरपि स्वरूपेण धर्मिरूपेण च भेदाभेदौ वेदितव्यौ। न ह्यन्यथैकाधिकरणं सदसद्रूप बुद्धिद्वय जायत इत्याह—

**यदि तद्वदपेक्षात्र न स्याद् भेदोऽत्र नैव हि ।**
**सदसद्रूपता बुद्धेर्भवेदन्यतरत्र नः ॥ २५ ॥**

अस्ति त्वेकत्रैव वस्तुनि सदशे सद्रूपत्वम्, असदशे चासद्रूपत्व बुद्धेरित्याह—

**तत्सम्बन्धे सदित्येवं तद्रूपत्वं प्रतीयते ।**
**नास्त्यत्रेदमितीदं तु तदसंयोगहेतुकम् ॥ २६ ॥**

भूतलरूप हीन्द्रियसयुक्तं सद्रूपं प्रकाशते, तदेव घटसयुक्तात्मतया इन्द्रियेणासयुक्तमसद्रूपतया—घटशून्य भूतलमिति, तथा घटोऽपि यदा यत्रेन्द्रिसन्निकृष्ट तदा तत्र सद्रूपतया प्रतीयते—अस्ति घट इति, यदा यत्रासत्तया प्रतीयते—नास्तीह घट इति, तत्र भूतलसयोगाभावात्मना घट एव प्रतीयते न भूतलम्, घटशून्यतया भूतलस्य सप्तम्या परविशेषणत्वात्। यदा तदेव विशेष्यते तदा घटशून्यं भूतलमिति प्रतीति, घटसंयोगित्वेनाविद्यमानमित्यर्थः। सोऽय घटसयोगो यदानुत्पन्नः तदा प्रागभावः, यदा उत्पद्य विनष्टः तदा प्रध्वसाभावः। शशस्य तु विषाणवत्त्वेनाविद्यमानत्वं सार्वकालिकम् इति सोऽत्यन्ताभावः। तस्मिन्नभावत्रयेऽप्यन्यस्यान्यसम्बन्धित्वनिषेधः, इतरेतराभावेऽन्यस्यान्यतादात्म्यनिषेधः, गौर्न भवत्यश्व इति गवात्मत्वमश्वस्य न विद्यत इत्यर्थः।

नन्वविद्यमानत्वमभाव, एतच्च क्व समवेतम् ? यत्र विद्यते तत्रेति चेत् ? न, अविद्यमानस्याश्रयत्वायोगात्; भूतल इति चेत् ? तदेव तर्हि न विद्यत इत्यापद्येत; घटसंयोगात्मना न विद्यत एवेति चेत् ? तस्याविद्यमानस्याश्रयत्वानुपपत्तिरिति स एव दोषः। ननु सद्रूपमेव भूतलं घटशून्यतया प्रतीयते, किमिदं तच्छून्यत्वमन्यदतो घटसम्बन्धित्वेनाविद्यमानत्वाद्, अतस्तदवस्थमविद्यमानाश्रयत्वम्, नैष दोषः ? अर्थान्तराणि हि विद्यमानमाश्रयन्ते, यत्त्वविद्यमानत्व तत्कथ विद्यमानमाश्रयेत् ।

अतोऽस्याविद्यमानाश्रयत्वं भूषणमेव, न दूषणम्। न केवलमात्मीय[1]मेवाविद्यमानत्वमविद्यमानमाश्रयते, वस्त्वन्तराभावोऽप्यविद्यमानाश्रयो दृष्टः, यथा शशविषाणे दैर्घ्यतैक्ष्ण्याद्यभावः, न दीर्घं न तीक्ष्णं वा, तथा च वक्ष्यति—

अवस्तुत्वेन साध्यत्वान्निषेधाद्धेतुसाध्ययो.।
सपक्षेऽन्यतरासिद्धिर्न दोषायात्र जायते ॥ ( श्लो० वा० स्फो० ३३ ) इति।

येन च सम्बन्धित्व तादात्म्य वान्यस्य निषिध्यते तत् प्रतियोगीत्युच्यते, यस्य निषिध्यते स आश्रय इति ॥ २६ ॥

नन्वस्त्वसद्रूपस्य भेद, तदपि त्विन्द्रियेणैवावगम्यते, रूपादिवदुन्मीलिताक्ष एव घटो नास्तीति बुध्यते न निर्मिलिताक्षोऽन्धो वा, तथा चापरोक्षावभासो विशिष्टप्रतीतिश्चोपपन्ना भवति, इतरथा हि भूतलमात्रविषयत्वादिन्द्रियस्यानुपलब्धेश्चाभावमात्रविषयत्वान्निर्निबन्धनो विशिष्टबोध· स्यात् ? अत आह—

**गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।**
**मानसं नास्तिताज्ञान जायतेऽक्षानपेक्षणात्[2] ॥ २७ ॥**

दृश्यादर्शनमभावे प्रमाण नादर्शनमात्रम्। येन चाश्रयभूत भूतलादिक वस्तु गृहीत तस्यैव घटो दृश्यो भवति, नान्यस्योन्मीलिताक्षस्यैव च तद्ग्रहणमिति तत्सिद्धयेऽक्षापेक्षा, नाभावग्रहणाथ। गृहीते चाश्रये प्रतियोगिनि च स्मृतेऽस्थानीयेन दृश्यादर्शनसहायेन मनसैवाभावज्ञानजन्मोपपत्तेर्नेन्द्रियस्याभावे शक्ति शक्या कल्पयितुम्। आपरोक्ष्य तु भावाश एव नाभावांशे तदस्ति। विशिष्टबोधोऽपि कारणसमाहारादेवोपपद्यते प्रत्यभिज्ञायामिव भूतवर्त्तमानकालसम्बन्ध.। दृश्यादर्शनमक्ष च सहितम् अभावविशिष्ट भाव बोधयति। तत्र भावाशेऽक्षस्य व्यापार, अभावाशतत्सम्बन्धयो[3]स्त्वनुपलब्धिर्व्याप्रियते, यथा क्षीरादिद्रव्ये जिह्वागते द्रव्यरूप त्वचा माधुर्यमस्य च द्रव्यसम्बन्धो[4] रसनेनेत्युभाभ्या माधुर्यविशिष्टक्षीरबुद्धिः। कथ तर्हीदमुक्तम् "न हि भिन्नेन्द्रियग्राह्यं किञ्चिदस्त्यनुरागकृत्" ( श्लो० वा० ४–२१२ ) इति सम्बन्धग्रहणविशिष्ट[5] तत्। चक्षुषा[6] हि गवादिस्वरूपमेव गृह्यते, न तस्य शब्दसम्बन्ध। श्रोत्रेणापि शब्दरूपमेव गृह्यते न तस्यार्थेन सम्बन्धः। तेनायुक्त शब्दानुरक्तार्थग्रहणस्यैन्द्रियकत्वम्। यत्र हि विशेषणविशेष्यसम्बन्ध. प्रत्यक्षः तत्रैव विशिष्टस्वरूपस्य प्रत्यक्षत्वम्, अन्यत्र तु येनैव प्रमाणेन सम्बन्धग्रहणम्, तदेव विशिष्टस्वरूपस्य प्रमाणम्। तथा चाग्निसम्बन्धस्यानुमानिकत्वाद् विशिष्टरूपमानुमानिकमित्युक्तम्। अत्राप्यभाव सम्बन्ध-

---

१. अभावोयमिति पाठान्तरम्।
२. अक्षानपेक्षया—३ पु०।
३. अभावांशे तत्सम्बन्धयोः—१—पु०।
४. द्रव्य सम्बन्धो—मु० पा०।
५. विषयमिति पाठान्तरम्।
६. तच्चक्षुषा—मु० पा०।

स्याभावप्रमाणगम्यत्वादभावविशिष्टभूतलादिबोधोऽभावप्रमाणक एव, शब्दानुविद्धबोधस्य प्रत्यक्षत्वमर्थस्वरूपापेक्षया, न शब्दानुविद्धरूपापेक्षयेति ॥ २७ ॥

ननु कल्प्यतामिन्द्रियस्य शक्तिः, दृश्यादर्शनस्यापि सा कल्पनीयैव, तत्राह—

**स्वरूपमात्रं दृष्ट्वापि पश्चात् किञ्चित् स्मरन्नपि ।**
**तत्रान्यनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥ २८ ॥**

यदा हि कश्चित् प्रातःकाले कञ्चिद्देशमध्यासीनस्तत्र व्याघ्रादिकमदृष्ट्वा तदस्मरणाच्च तदभावमप्यगृहीत्वा देशमात्रं दृष्ट्वा देशान्तरगतो मध्यन्दिने पृच्छ्यते 'कश्चित् तस्मिन्देशे प्रातःकाले व्याघ्रो गजः सिंहः पार्थिवो वा समागतः' इति, स तदा तं देशमवगतत्वात् स्मरन्नपि तत्र देशेऽन्येषां व्याघ्रादीनामभावं प्रागगृहीतं तदैव गृह्णाति । न च मध्यन्दिने समये प्रातःकालिकस्याभावस्यानिन्द्रियसंनिकृष्टस्य सम्भवति प्रत्यक्षेण ग्रहणम्, तस्येन्द्रियसन्निकृष्टवर्त्तमानविषयत्वात् । ननु योग्यानुपलब्धिरपि तदानीं नास्ति । नहि मध्यन्दिने प्रातस्तनस्य अर्थस्योपलब्धियोग्यतास्ति ? सत्यं प्रत्यक्षयोग्यता नास्ति, स्मृतियोग्यता त्वस्त्येव । अवश्यं ह्यनेकसहस्रजनाधिष्ठितामपि सभामध्यसीनैस्तत्रागतः सिंहः पार्थिवो वा तदैव ग्रहीतव्यो मध्यन्दिने च सत्यां सुस्मूर्षायां स्मर्त्तव्यः । तदिदं स्मर्त्तव्यत्वेऽसत्यस्मरणं मध्यन्दिनवेलायां विद्यमानं प्रातस्तनमभावं बोधयति ।

ननु "प्रमाणाभावः प्रमाणम्" इति भाष्यम्, तत् कथं स्मरणाभावस्य प्रामाण्यम्, स्मरणाभावोऽपि फलतः प्रमाणाभाव एव, स्मरणस्य प्रमाणफलत्वात् । ननु प्रागेवाभावग्रहणात् स्वरूपमात्रदर्शनाभिधानम् तदेव दृश्ये प्रतियोगिनि व्यवहारकारणमित्यापद्येत ? तदिदमुक्तोत्तरम् । मात्रशब्दोऽयं ज्ञानाभाववचनः, देशमात्रस्य तदा ज्ञानम्, न सिंहस्य तदभावस्य वेत्यर्थः । तव तु ज्ञानाभावानङ्गीकरणादिदमपि दुर्वचनम्, तदङ्गीकरणे च ज्ञेयाभावोऽप्यङ्गीकर्त्तव्यः, अविशेषादिति ॥ २८ ॥

निरस्तं प्रत्यक्षत्वम् । अनुमेयत्वं निराकरोति—

**न चाप्यत्रानुमानत्वं लिङ्गाभावात् प्रतीयते ।**

चोदयति—

**भावांशो ननु लिङ्गं स्यात्,**

तदिदं विकल्प्य निराकरोति—

**तदानीं नाजिघृक्षणात् ॥ २९ ॥**

न तावद् घटभावस्य लिङ्गत्वम्, तस्य तदानीमगृहीतस्य लिङ्गत्वायोगादिति ॥ २९ ॥

तदग्रहणमेव दर्शयति—

**अभावावगतेर्जन्म भावांशे ह्यजिघृक्षिते ।**

कथम् ? इत्याह—

**तस्मिन् प्रतीयमाने तु नाभावे जायते मतिः ॥ ३० ॥**

न हि सदसद्रूपे वस्तुनी युगपदेकत्रावतिष्ठेते ॥ ३० ॥

अथ य एव पुर.स्थितो भूतलभावः स एव लिङ्गम्, तत्राह—

**न चैष पक्षधर्मत्वं पदवत् प्रतिपद्यते ।**

यथा पदस्य पदार्थधर्मता निराकृता तथा भूतलमपि नागृहीते अभावे तद्धर्मतया गृह्यते, गृहीते च अनुमानस्य मेयाभाव इति ।

अन्वयोऽपि भूतलस्य सर्वैरभावैर्नावगम्यत इत्याह—

**सह सर्वैरभावैश्च भावो नैकान्ततो गतः[1] ॥ ३१ ॥**

इतश्च नानुमानिकमित्याह—

**क्वचिद् भावेऽपि सद्भावो ज्ञातो यस्य कदाचन ।**
**तस्याभावोऽपि तत्रैव कदाचिदवगम्यते ॥ ३२ ॥**

न चैतदनुमानत्र सम्भवति, कथं हि घटेनापि सहदृष्टं भूतलमनैकान्तिकत्वात् तदभावमनुमापयेदिति ॥ ३२ ॥

अन्वयाग्रहणं विवृणोति —

**यत्राप्यदृष्टपूर्वत्वं यदभावस्य तत्र च ।**
**तदभावमतिर्दृष्टा सम्बन्धेऽक्षानपेक्षया ॥ ३३ ॥**

शङ्कते दर्शनमन्तेन—

**कस्यचिद् यदि भावस्य स्यादभावेन केनचित् ।**
**सम्बन्धदर्शनम्,**

अभावसामान्येन सम्बन्धग्रहणादन्येषामप्यभावानामनुमानमिति ।

दूषयति—

**तत्र सर्वमानं प्रसज्यते[2] ॥ ३४ ॥**

न त्वेतदस्तीत्याह—

**गृहीतेऽपि च भावांशे नैवाभावेऽन्यवस्तुनः ।**
**सर्वत्र[3] मतिरित्येवं व्यभिचारादलिङ्गता ॥ ३५ ॥**

यदपि भूतलं कतिभिरभावैर्गृहीतसहभावम्, तदपि न सर्वेषामभावानां गमकम्, भावानामपि केषाञ्चित्तत्र दर्शनात्, अत. पूर्ववद्व्यभिचारात् सत्यपि केनचिदभावेन साहचर्यग्रहणे न सर्वाभावलिङ्गता भूतलस्येति ॥ ३५ ॥

---

१. नैकान्तिको मत.—१ पु० । २. प्रशस्यते—३ पु० ।
३. सर्वस्य—१ पु० ।

न च केनचिदपि शक्य साहचर्यग्रहणमित्याह--

**सम्बन्धे गृह्यमाणे च सम्बन्धिग्रहणं ध्रुवम्।**
**तत्राभावमतिः केन प्रमाणेनोपजायते ॥ ३६ ॥**

अनुमानेनेति चेत्? तत्राह—

**तदानीं न हि लिङ्गेन सम्बन्धिग्रहणं भवेत्।**

सम्बन्धग्रहणोत्तरकालमनुमानम्, तत् कथमनेन गृहीत्वा सम्बन्धिन सम्बन्धो गृह्येतेति।

तेन प्रमाणान्तरेणैव सम्बन्धग्रहणसमये सम्न्धिनोऽभावस्य ग्रहणमङ्गी-कर्त्तव्यम् इत्याह—

**तत्रावश्यमभावस्य प्रमाणान्तरतो गतिः ॥ ३७ ॥**

सम्प्रत्यनुपलब्धिलिङ्गवादी **सौगतश्चोदयति—**

**प्रत्यक्षादेरनुत्पत्तिर्न तु लिङ्गं भविष्यति।**

दृश्य सद् यद्यत्र नोपलभ्यते तत्तत्र नास्ति, यथा बुद्धिरात्त्वे पुरुष, न दृश्यते चात्र देशे दृश्यो घट इति इति स्वभावहेतु। तथा यैवैकज्ञानसरागिणोरन्यतरो-पलब्धि सैवेतरस्यानुपलब्धि, न नूपलब्ध्यभावो नाम कश्चिदुपलब्धिव्यतिरेकेणा-नुपलब्धिसज्ञोऽस्ति, यतस्तस्यानुपलब्ध्यन्तरापेक्षयानवस्था स्यात्। या चासा-वन्यतरोपलब्धि' सा स्वसवेद्येवेनि नानवस्था। तस्याश्चोत्पत्तिरक्षादेव घटो नास्तीत्यादिव्यवहारयोग्यतया, तादात्म्यमेव सम्बन्ध। सैव च योग्यता घटा-द्यभाव, न तु तत्त्वान्तरम्। अतोऽनुपलब्धिसमाख्या प्रत्यक्षाद्यनुत्पत्तिरभावस्य लिङ्गम्।

वीतहेतुर्वायम्, दृश्यस्य सत्ता दर्शनव्याप्ता तद् दर्शनव्यापक निवर्त्तमानं दृश्यस्य सत्ता व्याप्या निवर्त्तयतीति।

दूषयति सार्द्धेन—

**न विशेषणसम्बन्धस्तस्याः सामान्यतो भवेत् ॥ ३८ ॥**
**न चाप्यभावसामान्ये प्रमाणमुपजायते।**
**व्यभिचाराद् विशेषास्तु प्रतीयेरन् कथं तया ॥ ३९ ॥**

न ह्यनुपलब्धिमात्राद् घटाभावानुमान सम्भवति, सामान्यमात्र चानुमीयेत, न चाभावसामान्येऽस्ति बुद्धिः, स्वविशेषे तु बुद्धि। न चासावनुपलब्धिमात्रा-च्छक्यतेऽनुमातुम्, व्यभिचारात्। सत्यपि घटेऽनुपलब्धिमात्र सम्भवत्येवेति। घटा-नुपलब्धिस्तर्हि लिङ्गमस्तु, मा भूदनुपलब्धिमात्रम्, केय घटानुपलब्धिः, यदि भूत-लोपलब्धि', सा तर्हि साधारण्येव। किञ्च, असौ सत्यपि घटादौ भावे सम्भवन्ती नाभावमात्रमपि गमयति, नतरा तद्विशेषम्। अन्यतरोपलब्धिरिति चेन्न, किं

द्वयोपलम्भेऽन्यतरोपलब्धिर्नास्ति । 'तन्मात्रोपलब्धि.' इत्यादि वदतामेकदेशिवदेव **सौगता**नामपि निराकरणम् । अथ घटोपलब्ध्यभावोऽनुपलब्धि. ? तस्याप्यभाव-स्यानुमानवेलायामन्वयग्रहणवेलाया चानुपलब्ध्यन्तरापेक्षा, तस्यामपि तथेत्य-नुपलब्ध्यानन्त्यादनवस्था, तथान्वयवेलाया लिङ्गाभावेऽपि ॥ ३९ ॥

एव चावीतहेतुरपि निराकर्त्तव्य. । दर्शननिवृत्त्या हि दृश्यनिवृत्तिरनुमा-तव्या, दर्शननिवृत्तिरप्यभावरूपत्वान्निवृत्त्यन्तरेणानुमातव्या—इत्यनवस्था । तस्मादवश्य प्रत्यक्षाद्यनुत्पत्तेस्तल्लिङ्गत्वरहिताया एव प्रमाणान्तरतयैव क्वचिद-भावप्रमाणत्वमभ्युपगन्तव्यम् । पश्चात्तु भवत्वनुमानमित्याह—

**न चानवगतं लिङ्गं गृह्यते चेदसावपि ।**
**अभावत्वादभावेन गृह्येतान्येन हेतुना ॥ ४० ॥**
**स चान्येन ग्रहीतव्यो नागृहीते हि लिङ्गता ।**
**तद्गृहीतिर्हि लिङ्गेन स्यादन्येनेत्यनन्तता ॥ ४१ ॥**
**लिङ्गाभावे तथैव स्यादनवस्थेयमित्यतः ।**
**क्वाप्यस्य स्यात् प्रमाणत्व लिङ्गत्वेन विना ध्रुवम् ॥ ४२ ॥**

हेतुनेति । लिङ्गभूतेनेत्यर्थ ॥ ४२ ॥

यदि चाभावबुद्धिरेव प्रमाण स्यात्, तत स्यादपि कथञ्चिदनुमानाशङ्का । यदा तु नास्तीति धी प्रत्यक्षाद्यनुत्पत्ते फल तदनन्तरप्रवृत्त्या चाभावानुत्पत्तिरेव प्रमाणम्, तदा भवदीयात् "त्रिरूपाल्लिङ्गतोऽर्थदृगनुमानम्" ( प्र० समु० २-१ ) इत्यनुमानलक्षणान्नानुमानत्वम् । न ह्यनुत्पत्तिरुत्पत्तिप्रागभावरूपा, कारणा नपेक्षत्वात् त्रिलक्षणहेतुजन्या, नाप्यर्थदर्शनात्मिका, अतो नानुमानत्वमित्याह द्वयेन—

**नास्तीति धीः फलं चैषा प्रत्यक्षादेरजन्मनः ।**
**तस्यैव च प्रमाणत्वमानन्तर्यात् प्रतीयते ॥ ४३ ॥**
**त्रिलक्षणेन या बुद्धिर्जन्यते सानुमेष्यते ।**
**न चानुत्पत्तिरूपस्य कारणापेक्षिता क्वचित् ॥ ४४ ॥**

शङ्कते—

**मानं कथमभावश्चेत्,**

तुच्छरूपानुत्पत्तिः कथ प्रमाणमिति ।

परिहरति—

**प्रमेयं चास्य कीदृशम् ।**
**मेयो यद्वदभावो हि मानमप्येवमिष्यताम् ॥ ४५ ॥**

प्रमेयानुरूप्यं हि प्रमाणस्योचितमेवेति ॥ ४५ ॥

प्रत्युत भावरूपत्वमेवास्यानुचितमित्याह—

**भावात्मके यथा मेये नाभावस्य प्रमाणता।**
**तथाभावप्रमेयेऽपि न भावस्य प्रमाणता ॥ ४६ ॥**

ननु सर्वत्र भावरूपत्वमेव प्रमाणस्य दृष्टम्, तत् कथमभावस्य प्रामाण्यं स्यात्, तत्राह—

**भावात्मकस्य मानत्वं न च राजाज्ञया स्थितम्[1]।**
**परिच्छेदफलत्वाद्धि प्रामाण्यं स्याद् द्वयोरपि ॥ ४७ ॥**

यदि त्वन्यत्र भावस्यैव कारणत्व दृष्ट नाभावस्येति कृत्वा इहापि नाभावस्येष्येत, ततो लिङ्गत्वप्रमेयत्वे अपि न स्याताम्, अन्यत्रादर्शनादित्याह सार्द्धेन–

**यदि चास्य प्रमाणत्वमभावत्वेन नेष्यते।**
**वस्तुनः कारणत्वं हि दृष्टमित्यभिमानिता[2] ॥ ४८ ॥**
**न लिङ्गत्वप्रमेयत्वे भवेतां तद्वदेव हि।**

मा भूतामिति चेत् ? तत्राह—

**तथा सति च पूर्वोक्तो व्यवहारो न सिध्यति ॥ ४९ ॥**

"न च स्याद्व्यवहारोयम्" (श्लो० वा० अभा० ७) इत्यादिना दर्शितः, तेनावश्य वस्त्वेवाभावो न तुच्छ इत्यभ्युपगन्तव्यम्, ततश्च युक्त प्रामाण्यमिति ॥४९॥

पूर्वमनवस्थाप्रसङ्गेनानुत्पत्तिलिङ्गत्व निराकृतम्, अधुना अपक्षधर्मत्वाभावादपीत्याह[3] —

**प्रमाणानामनुत्पत्तेर्नाभावस्यापि धर्मता[4]।**

यदि तावत् प्रमेय एवाभाव पक्षीक्रियत ततस्तद्धर्मत्वेन प्रत्यक्षानुत्पत्तिः सम्भवति, तद्देशतत्कालत्वादिसम्बन्धाभावात्। अगृहीते चाभावे न तद्धर्मतयानुत्पत्तिः शक्यते ग्रहीतुम्, अवगते चानुमेयताभाव इति।

अथ यत्राभावो भूतले साध्यते तदेव पक्षीक्रियते, ततस्तद्धर्मताप्यनुत्पत्तेर्नास्त्येव[5] भूतले प्रत्यक्षोत्पत्तिः ? इत्याह—

**यत्राभावोऽस्ति तेनास्याः सम्बन्धो नैव विद्यते ॥ ५० ॥**

अथ घटस्य यत् सद्रूपम् इहासन्निहित तदेव पक्ष, तत्र ह्यस्ति प्रत्यक्षानुत्पत्तिरिति, तदनुभाष्य परिहरति—

**यो न सन्निहितस्तत्र तस्य धर्मो भवेदियम्।**
**न च तस्य प्रमेयत्वं धर्मधर्मित्ववर्जनात् ॥ ५१ ॥**

न हि सद्रूपमसद्रूपस्य धर्मितया प्रमेयम्, सद्रूपस्य तद्विरुद्धस्य तद्धर्मित्वायो-

---

१. कृतम्—३ पु०। २. अभिमानत—३ पु०।
३. ०अपक्षधर्मत्वाद०—मु० पा०। ४. अनुत्पत्त्या भावस्यापि च धर्मता—१ पु०।
५. ०धर्मतो०—मु० पा०।

गात्; नापि तद्धर्मतया, तत्र तस्याभावादिति। ननु यत् सदसद्रूपसाधारण घटरूपं तदेव पक्षीकृत्यासद्रूपता भूतले साध्यते, प्रत्यक्षानुपलब्धिश्च लिङ्गम्—घटो भूतले नास्ति दृश्यत्वे सत्यनुपलभ्यमानत्वादिति न भविष्यत्यपक्षधर्मत्वम्। उक्तमेव त्वत्र दूषणम्—अनुपलब्धेरप्यनुपलब्ध्यन्तरापेक्षत्वादनवस्थेति ॥ ५१ ॥

यदि त्वभाव एव पक्षीक्रियते, अनुत्पत्तेश्च तद्विषयतया तद्धर्मत्वमुच्यते, तद्विषया हि सा, तया तस्य ज्ञानादत आह—

**अभावेन तु सम्बन्धो भवेत् तद्विषयत्वतः।**
**तज्ज्ञानाद् विषयत्वं च ज्ञाने मेयं न विद्यते ॥ ५२ ॥**

ज्ञानोत्तरकालो हि तद्विषयत्वसम्बन्धो न ज्ञानाङ्ग स्यादिति ॥ ५२ ॥

न चान्योऽपि संयोगादिसम्बन्धोऽनुपलब्धेरभावेन विद्यते ? इत्याह—

**संयोगसमवायादिसम्बन्धो नैव विद्यते।**

यद्यपि स्यात्, तथापि नाभावग्रहणात् प्राग्ग्रहीतुं शक्यते, गृहीते च प्रमेयाभाव इत्याह—

**नागृहीते हि धर्मत्वं गृहीते सिद्धसाधनम् ॥ ५३ ॥**

एवमुपपादितं भेदं प्रयोगद्वयेन दर्शयित्वोपसंहरति द्वयेन—

**अभावशब्दवाच्यत्वात् प्रत्यक्षादेश्च भिद्यते।**
**प्रमाणानामभावो हि प्रमेयाणामभाववत् ॥ ५४ ॥**
**अभावो वा प्रमाणेन स्वानुरूपेण मीयते।**
**प्रमेयत्वाद् यथा भावस्तस्माद् भावात्मकात् पृथक् ॥ ५५ ॥**

### अभावस्य स्वतन्त्रोपयोगः

स्वतन्त्रोपयोगमभावस्य दर्शयति—

**कर्माणि सर्वाणि फलैः समस्तैः सर्वैर्यथावच्च यदङ्गकाण्डैः।**
**न सङ्गतानीह परस्परं च[1] नाङ्गं तदेतत् प्रभवं क्रतूनाम् ॥ ५६ ॥**

सर्वप्रकारोऽपि वस्त्वसंकरोऽभावप्रमाणक एव। न हि दर्शादेः श्रुत्यादि चोदिताङ्गातिरेकेणाङ्गान्तराभावे फलान्तराभावे चान्यदागमाभावात् प्रमाणमस्तीति ॥ ५६ ॥

### सम्भवादीनां प्रामाण्यखण्डनम्

ननु सम्भवैतिह्याख्यमपि प्रमाणद्वयं कैश्चिदिष्टम्, तत्किमिति **भाष्यकारेण** न लक्षितम् ? अत आह—

**युक्त्यागमाभ्यामिति तर्कितोऽयं प्रमाणषट्कं प्रविभज्य भाष्ये।**
**ततोऽधिकं यद् द्वयमिष्टमन्यैर्भेदो न तस्येत्यपि सिद्धमेतत् ॥ ५७ ॥**

१. हि—१ पु०।

प्रमाणषट्क एव युक्त्युपेतो **व्यासादिमहर्षिवचनपरया** चावगत इति स एव निरूपितः, तदधिकं तु द्वयमत्रैवान्तर्भावान्न पृथक् लक्षितमिति ॥ ५७ ॥

अन्तर्भावमेव दर्शयति—

**इह भवति शतादौ सम्भवाद्यासहस्रा-**
**न्मतिरवियुतभावात् सानुमानादभिन्ना ।**
**जगति बहु न तथ्यं नित्यमैतिह्यमुक्तं**
**भवति तु यदि सत्यं नागमाद् भिद्यते तत् ॥ ५८ ॥**

इत्यभावप्रामाण्यवाद.

महासख्यया महापरिमाणेन वा यदवान्तरसख्यापरिमाणयोर्ज्ञानम्, सहस्रेण शते, प्रस्थेन कुडवे, तत् सम्भव इत्युच्यते । तच्चाविनाभावनिवन्धनत्वादनुमानमेव ।

पुरुषवचनपरम्परा = **ऐतिह्यम्,** वटेवटे वैश्रवण इत्यादिः । तच्चानिर्णायकत्वात् प्रमाणमेव न भवति, तद्भावेऽप्यागमान्तर्भावात् ।

पृथग्वक्तव्यं प्रातिभ तु **प्रत्यक्षसूत्रे** एव निराकृतम् ।

लोकप्रसिद्धिरपि प्रत्यक्षादिष्वेवान्तर्भूतेत्यौ**त्पत्तिकसूत्रे** निराकृतम् ।

तस्मात् षडेव प्रमाणानि, न न्यूनानि नाधिकानि वेति ॥ ५८ ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे अभावाख्यं प्रमाणं समाप्तम्

## अथ चित्राक्षेपवादः

"प्रत्यक्षादीन्यन्यानि भवन्तु प्रमाणानि, शब्दस्तु न प्रमाणम्, कुतः ? अनिमित्तं विद्यमानोपलम्भनत्वात्" (शा० भा० पृ. ४७) इति भाष्यम्, तस्य "न त्वतथाभूतम्" इत्यादिना पौनरुक्त्यमाशङ्क्याह—

**परलोकफलाः पूर्वमाक्षिप्ताश्चोदनाः परैः ।**
**इदानीमैहिकाक्षेपः,**

आक्षेपहेतुभेदोऽत्र विषयभेदेन दर्शित. । तत्र हि प्रमाणान्तरपरतन्त्रः शब्दो न स्वातन्त्र्येण प्रमाणमित्याक्षेपः, स चायं प्रमाणान्तरागोचरार्थासु चोदनासु परलोकफलासु सम्भवति, ऐहिकफलासु तु यद्यनन्तरं फलं दृश्यते ततः प्रमाणान्तरसङ्गतार्थत्वान्नायथार्थत्वमिति । यदि न दृश्यते, ततस्तद्विपर्ययादेव सुखमप्रामाण्यसिद्धेः किं शब्दपारतन्त्र्यप्रतिपादनव्यसनेन ! अतः स तावत् परलोकविषय, अत्र तु प्रत्यक्षादिविसवादेनाक्षेपः । स चैहिकविषय एव, प्रमाणान्तरयोग्यार्थं हि वचस्तदरावादविसवादाभ्यामप्रमाणम्, तदगोचरार्थे त्वविश्वासमा-

त्रमेव[1] स्वप्नदृष्टद्वीपान्तरार्थवचनवन्न विपर्यासावगतिसम्भव । तस्मादैहिक-विषयोऽयमिति ।

परिहारान्तरमाह—

**सूत्रकारेण चोद्यते ॥ १ ॥**

स्वमतेन हि सूत्राणि व्याचक्षाणस्तत्सूत्रोक्तमेवाक्षेप दर्शितवान्, इदानी तु **वृत्तिकार**मतेन सूत्रार्थतयाक्षेप दर्शयति । तेन यद्यपि स एवायमाक्षेप स्यात् तथापि **सूत्रकार**स्यात्रैव प्रथमाभिधानान्नास्ति पौनरुक्त्यम् । **सूत्रकारेणापि** "विद्यमानोपलम्भनत्वात्" ( जै० सू० १ १.४ ) इति वदता प्रत्यक्षाद्यसत्त्व-संवादाभ्यामेवात्र प्रमाण्यमाक्षिप्यते, न तु पूर्वोक्तशब्दपारतन्त्र्येणेति विस्पष्ट-मपौनरुक्त्यमिति ॥ १ ॥

सूत्रोक्त प्रत्यक्षानुपलब्धिविरोधादप्रामाण्य प्रयोगेण दर्शयति द्वयेन—

**चित्रापशुफलत्वादिविषयाश्चोदना मृषा ।**
**प्रत्यक्षाद्यधिकारेऽपि तैरर्थासङ्गतिर्यतः ॥ २ ॥**
**यदीदृक् तन्मृषा दृष्टं विप्रलिप्सोर्यथा वचः ।**
**नदीतीरे फलानीति तत्रादृश्यानि तानि चेत् ॥ ३ ॥**

चित्रैव वा निष्फलतया प्रयोगद्वयेन साधनीयेत्याह सार्द्धेन—

**न वा पशुफला चित्रा स्वकाले तददानतः ।**
**स्नानभुज्यादिवत् तेऽपि तत्साध्या न भवन्ति वा ॥ ४ ॥**
**तदुत्पत्तावसद्भावात् स्वर्गे तृप्तिसुखादिवत् ।**

योऽस्या फलदानाय प्राप्त कालस्तस्मिन्नदानात् स ह्यनन्तरकाल इत्यभि-प्रायः । भोजनादितृप्तिजे सुखमिति ।

तत्र च प्रयोगद्वये भाष्योक्तं मर्दनं तत्सुखं च वैधर्म्योदाहरणमित्याह—

**वैधर्म्येणोभयत्रापि भवेतां सुखमर्दने[3] ॥ ५ ॥**

यद् यस्य साधनं तत्स्वकाल एव तत् साधयति, यथा मर्दनम् । तथा यद् यस्य साध्यं तत्तदुत्पत्तौ भवति, यथा मर्दनसुखमिति ॥ ५ ॥

शङ्कते—

**आनन्तर्यमयुक्तं चेत्,**

यदि कर्मानन्तर्यं फलस्योक्तं स्यात् ततः प्रत्यक्षयोग्यता तदनुपलब्ध्या बाधः स्यात्, तदनन्तरमेव फलदानकाल स्यान्न तु तद्युक्तम् । अतः प्रत्यक्षाधिकारेऽपि तदसङ्गतिः स्वकाले च फलादानमसिद्धमिति ।

---

१. तदगोचरार्थत्व०—मु० पा० ।
२. ते साध्या—३ पु० ।
३. सुखदर्शने—१ पु० ।

परिहरति—

**न सामर्थ्याविबोधनात् ।**

सामर्थ्यसिद्धमानन्तर्यम्, विनष्टस्य कारणत्वायोगात्; अपूर्वद्वारेण स्यादिति चेत् ? न, शास्त्रार्थावधारणवेलाया स्वर्गकामवचनवत् कर्मफलकालवियोगज्ञान-कारणाभावात् पश्वादीनामनन्तरकालेऽपि सम्भवात् । अतोऽनन्तर्भावितापूर्वमेव कर्म फलसाधनत्वेन बोधितमित्यानन्तर्यमेव सामर्थ्यत सिध्यतीति ।

नन्वेवमप्यानन्तर्य बोधयत सामर्थ्यस्यैवानुपलब्ध्या बाध[1], न, स्वविशेषप्रवृत्ते[2] शब्दस्य ? अत आह—

**शब्दैकदेशभूतेन तेन तत् प्रतिपादितम् ॥ ६ ॥**

न हि सामर्थ्य नाम प्रमाणान्तरम्, शब्दैकदेशो हि तदित्युक्तम् । "अर्थाद् वा कल्पनैकदेशत्वात्" ( जै० सू० ९.४.३० ) इति । अतस्तद्बाधे शब्दस्यापि बाध इति ।

न स्यादपि सामर्थ्यसिद्धमानन्तर्य शब्दस्य विशेषणं यदि तद्विरुद्धं कालान्तर श्रुत्युपात्त स्यात्, तदा हि तद्बलेनापूर्वमन्तर्भाव्येत, न तु तदस्तीत्याह—

**कालान्तरानुपादानात् कर्मस्वाभाव्यतोऽपि च ।**
**चोद्यमानस्य चित्रादेरानन्तर्यं विशेषणम् ॥ ७ ॥**

"दृष्टविरुद्धमपि भवति किञ्चिद् वैदिक वचनम्—स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्ग लोक याति" ( शा० भा० पृ० ४९ ) इति भाष्यम्, तस्य चित्रोदाहरणाद् विशेष दर्शयति—

**अत्र तावदसंवादो विरोधश्चोत्तरस्य[3] तु ।**

अत्र ह्यनुपलब्धिरस्ति तद्विरुद्धमप्यर्थान्तर दृश्यत इति विशेषः, त दर्शयति—

**स्वर्गयानविरुद्धो हि भस्मीभावोऽत्र दृश्यते ॥ ८ ॥**

अत्रैव प्रयोगमाह—

**यज्ञायुधिवचो मिथ्या प्रत्यक्षेण विरोधतः ।**
**साधर्म्येण शिलावाक्यं वैधर्म्येणाप्रभाषितम् ॥ ९ ॥**

भाष्योक्तम् "ग्रावाणः प्लवन्ते" ( शा० भा० ५० ) इति शिलावाक्यमिति ।

नन्वात्मन. स्वर्गगमने कथ प्रत्यक्षविरोध ? अत आह—

**शरीराद् यदि चान्यः स्यान्नासौ यज्ञायुधी भवेत् ।**
**न चास्य यजमानत्वं सद्भावोऽपि च दुर्लभः ॥ १० ॥**

न हि सतोऽप्यात्मनो यज्ञायुधसम्प्रयोगोऽस्ति, नापि यजमानत्वम्, विभोः

---

१. ०लब्धिबाध.—मु० पा० । २. अविशेष०—मु० पा० ।

३. उत्तरत्र—१ पु० ।

कर्तृत्वासम्भवात् । सत्तापि निष्प्रमाणिकैव, अत शरीरस्यैवेदं स्वर्गगमनमुच्यते, अतोऽस्ति प्रत्यक्षविरोध इति ॥ १० ॥

"न चैष यातीति विधिशब्दः" (शा० भा० पृ ५०) इति भाष्ये विधिनिराकरणं व्यर्थमत आह—

**यदि स्याद् विधिशब्दोऽत्र नैवादर्शनतो भवेत् ।**
**विशेषोऽस्येति भेदेन नोपात्तं स्यादिदं ततः ॥ ११ ॥**

चित्रोदाहरणाद् विशेषप्रदर्शनार्थमिदम् । सति हि विधौ सवाद एवात्रापि स्यात्, न विसवाद., अतो नेद भेदेनोपादेय स्यादिति ॥ ११ ॥

कथम् ? इत्याह—

**विधिशब्दे भविष्यत्त्वं फलस्य परिकल्प्य हि ।**
**विरोधपरिहारः स्याद् वर्तमानेऽपि नास्त्यसौ ॥ १२ ॥**

विधौ हि भविष्यत्तापि फलस्य स्यात्, ततश्च न साक्षात् प्रत्यक्षविरोध. स्यात्, चित्रवाक्यवदेव तु सामर्थ्यसिद्धमानन्तर्यमगवादेन बाध्येत । वर्त्तमानापदेशे तु तस्मिन् काले स्वर्गगमन विरुद्धम्, भस्मीभावदर्शनाद् विसवाद स्फुटो भवेदिति ॥ १२॥

ननु सत्यपि विधौ प्रत्यक्षावगतभस्मीभावविरोधोऽस्त्येव, कथ हि भस्मीभूतः कालान्तरे फल भुञ्जीत ? तदिदमनुज्ञयैव परिहरति —

**फलं च न भवेदेवं भस्मीभावाद् विधावपि ।**
**तत्सामर्थ्येन या चान्या[1] कल्पना तां निषेधति ॥ १३ ॥**

सति हि विधौ तत्प्रामाण्यादेव शरीरादन्यमात्मान कल्पयित्वापि विरोध परिह्रियते । अनुवादस्तु स्वार्थेऽप्यप्रमाण नार्थान्तर कल्पयितु शक्नुयात्, तत्र शरीरस्यैव स्वर्गगमनवचनाद् विरोध स्यादिति ।

प्रायेण च "अदितिर्द्यौरदितिरन्तरिक्षं वनस्पतय सत्रमासत" इत्येवमादयो मन्त्रार्थवादा प्रमाणान्तरविरुद्धार्था एव, अत. सर्वे पक्षीकृत्याप्रमाणतया साधनीया इत्याह—

**प्रायश्चैवम्प्रकारत्वमर्थवादेषु दृश्यते ।**
**मन्त्रेषु चेति ते सर्व पक्षीकार्याः प्रयत्नतः ॥ १४ ॥**

तत्सामान्यादग्निहोत्रादिचोदनास्वप्यनाश्वास इति भाष्योक्त प्रयोग दर्शयति—

**एवं सत्यग्निहोत्रादिवाक्येष्वपि मृषार्थता ।**
**वेदवाक्यैकदेशत्वाच् चित्रादिवचनेष्वपि[2] ॥ १५ ॥**

**इति चित्रापेक्षवादः**

---

1. याऽन्याऽपि—२ पु० ।
2. वचनेष्विव—१ पु० ।

## अथ सम्बन्धाक्षेपवादः

अत्रानन्तरम् "औत्पत्तिकस्तु" ( शा० भा० पृ ५० ) इत्यादिना सिद्धान्तवादी स्वपक्षं साधयति, तच्चायुक्तम्, पूर्वोक्ताक्षेपासमाधानात्, अत आह—

**स्वपक्षसाधनं तावत्,**

स्थिते हि प्रामाण्ये तद्बलेनैव सर्वाक्षेपपरिहारः सुकर इत्यभिप्रायः।

तदेव प्रयोगद्वयेन दर्शयति एवान्तेन—

**न मृषा वैदिकं वचः।**
**स्वार्थे वक्त्रनपेक्षत्वात् पदार्थपदबुद्धिवत् ॥ १ ॥**
**तत्कृतः प्रत्ययः सम्यङ् नित्यवाक्योद्भवत्वतः।**
**वाक्यबुद्धिवदेव,**

प्रथमप्रयोगे सत्यतामात्र साध्यते, तत्सिद्धौ चानधिगतार्थत्वात् तत्र सिद्धमेव प्रामाण्यमिति पूर्वोक्ता अपि "दोषवर्जितैः। करणैर्जन्यमानत्वात्" ( श्लो० वा० २-१८४ ) इत्यादयो हेतवो वक्तव्या इत्याह—

**अत्र पूर्वोक्ताश्चापि हेतवः ॥ २ ॥**

"स्यादेतत्, नैव शब्दस्यार्थेनास्ति सम्बन्धः, कुतोऽस्य पौरुषेयता अपौरुषेयता वा" इति ( शा० भा० पृ ५२ ) भाष्यम्, तस्य तात्पर्यमाह सार्द्धेन—

**नित्यान् शब्दार्थसम्बन्धानाश्रित्योक्तेन हेतुना।**
**स्वतः प्रामाण्यसिद्धयर्थमप्रामाण्ये निराकृते ॥ ३ ॥**
**असम्बन्धोद्भवत्वेन परो मिथ्यात्वमब्रवीत्।**

सम्बन्धौत्पत्तिकत्वाश्रयणादेवार्थात् सम्बन्धिनोरपि तदाश्रित भवति, तेषा च नित्यतया दोषाभावेनापवादभूताप्रामाण्यनिराकरणेन प्रागुक्ते स्वतः प्रामाण्ये स्थापिते सम्बन्धाभावादप्रामाण्यं पूर्वपक्षी वदति। न ह्यसम्बद्धान्यनिदर्शनेनान्यकल्पना सम्भवति, अतिप्रसङ्गात्। न च शब्दस्यार्थेन सम्बन्धोऽस्ति, अतोऽनियतनिमित्तमप्रमाणमेव वेदार्थज्ञानमिति ॥ ३ ॥

एतदेव विवृणोति—

**सम्बन्धोऽस्ति च नित्यश्चेत्युक्तमौत्पत्तिकादिना ॥ ४ ॥**
**मिथ्यात्वस्य निरासार्थं तत्परैर्नेष्यते द्वयम्।**

तत्रेह तावत् पदसत्त्वविचारः, पश्चात् 'कृतको नित्यो वा' इति विचारयिष्यत इत्याह—

**नैव चास्त्यत्र सम्बन्धः कृतको वेति वक्ष्यते ॥ ५ ॥**

"स्याच्चेदर्थेन सम्बन्धः, क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्" ( शा० भा० पृ. ५२ ) इति भाष्यमयुक्तम्, न हि सम्बन्धिशब्देन समानदेशतया भवितव्यम्, पितापुत्रादिषु व्यभिचारात्, अत आह सपादेन—

**असम्भवेन शेषाणां संश्लेषः परिशिष्यते ।**
**अस्मिन्नेव[1] च सम्बन्धे प्रतीतिर्लौकिकी ध्रुवा ॥ ६ ॥**
**तन्निषेधमतः प्राह,**

यदा हि सम्बन्धान्तराणामसम्भव. उपरितने भाष्ये वक्ष्यते तदा सश्लेष एवावशिष्यते, तथा च गौरिति संश्लेषमेव शब्दार्थसम्बन्ध लौकिका मन्यन्ते, अतस्तन्निषेधार्थमिदमुक्तमिति ।

तन्निषेधमेव प्रयोगेण दर्शयति सपादेन—

**न शब्दोऽर्थेन सङ्गतः ।**
**तद्देशानन्तरादृष्टेर्विन्ध्यो[2] हिमवता यथा ॥ ७ ॥**
**एवमर्थो द्वयं वापि साधनीयमसङ्गतम् ।**

यस्तु हेतोरसिद्धि मन्यते, स क्षुरमोदकभाष्येण बोधयितव्य इत्याह—

**क्षुरेत्यादि च सिद्धयर्थं हेतोरुक्तम्,**

"योऽत्र व्यपदेश्य· सम्बन्ध" ( शा० भा० पृ ५२ ) इत्यादिसिद्धान्तभाष्यार्थमाह आहान्तेन—

**अथापरः ॥ ८ ॥**

**शक्तिरूपं गृहीत्वाह,**

परोक्त साधन विकल्प्य दूषयति हीनतान्तेन—

**संश्लेषो यदि वार्यते ।**
**सम्बन्धसिद्धसाध्यत्वमथ[3] सम्बन्धमात्रकम् ॥ ९ ॥**
**पितापुत्रादिसम्बन्धैरनेकान्तः प्रसज्यते ।**
**एकभूम्यादिसम्बन्धाद् दृष्टान्ते साध्यहीनता ॥ १० ॥**

यदि प्रत्याय्यप्रत्यायकत्वमेव निषिध्यते, ततो लोकविरोध[4] इत्याह—

**वाच्यवाचकसम्बन्धनिषेधे लोकबाधनम् ।**

दोषान्तरमाह—

**विरोधश्च स्ववाक्येन न हि सम्बन्धवर्जितैः ॥ ११ ॥**
**प्रतिज्ञार्थं पदैः शक्यः प्रतिपादयितुं परः ।**

न ह्यप्रत्यायकेन प्रतिज्ञावचनेन प्रतिज्ञार्थ· प्रत्याययितुं शक्यते । अत· शब्देन प्रतिज्ञार्थं प्रत्याययता प्रतिज्ञार्थाप्रत्यायकत्वं विरुध्यत इति ।

किं पुनरिदं वाच्यत्व वाचकत्व च ? तद् दर्शयति—

**अभिधानक्रियायां हि कर्मत्वं वाच्यसंश्रितम् ॥ १२ ॥**
**शब्दानां करणत्वं वा कर्तृत्वं वा निरूपितम् ।**

---

१. तस्मिन्—१ पु० । २. दृष्टो विन्ध्य—१ पु० ।
३. सम्बन्धा०—मु० पा० । ४. ०विरुद्ध—३ पु० ।

अर्थप्रतिपत्तिफलः शब्दव्यापारोऽभिधानक्रिया, तच्च शब्दज्ञानमेव, तदेव ह्यर्थ-प्रतिपत्तिफलतया निरूप्यमाणमभिधानक्रियेत्युच्यते। तस्यां च तादृश्या प्रतिप-त्याख्यक्रियाफलभागितया यदर्थस्य कर्मत्वं तद् वाच्यत्वम्, शब्दस्य च विवक्षा-वशेन यत् कर्तृत्वं कारणत्वं वा तद् वाचकत्वमिति।

नन्वेवमेकक्रियान्वयित्वमेव स्यान्न मिथः सम्बन्ध', न ह्येकसंमार्गान्वयिनां ग्रहाणा मिथः सम्बन्ध. समस्ति ? अत आह—

**प्रतिपत्तावुपादानात् साहित्ये च विवक्षिते ॥ १३ ॥**
**नियम्यते यदेकस्यां सम्बन्धः सोऽर्थशब्दयोः।**

उद्देश्या ह्यन्योन्यमनपेक्ष्य क्रियां वशीकुर्वन्तो युक्त यन्मिथो न सम्बन्ध्यन्त इति, ये तूपादेयास्तेषा क्रियया वशीकृत्य सहन्यमानाना तद्द्वारेणास्ति परस्पर-नियम. सम्बन्ध.। [1]तथोद्देश्योपादेययोरप्यस्ति साहित्यम्, उद्देश्य हि क्रियामाकर्ष-ति, सा च स्वाशभूतमुपादेय गृहीत्वैव स्वप्रधानं याति, क्रय इवारुणादियुक्तः सोमम्। तदिहार्थ. प्रधानभूत. स्वप्रतिपत्तिसिद्धयेऽभिधाव्यापारमुपादत्ते, स च स्वाशभूत शब्दम्—इत्यस्ति शब्दार्थयोरेकक्रियानियमात् सम्बन्ध'।

किमिद नियम इति ? यस्यामभिधानक्रियाया गोशब्द. करणम्, तस्यां सास्नादिमान् कर्म, यस्या चासौ कर्म तस्या गोशब्द करणम् इति। एवं नियमे-ऽवगते यदि प्रमाणान्तरेणैकस्यैव शब्दस्यार्थान्तरमभिधेयम्, अर्थस्य वा शब्दान्त-रमभिधायक गम्यते, तत्रावगतोऽपि नियमो व्रीह्यादिनियम इव यवादिविधिना बाध्यते। अत एवानेकशब्दत्वमनेकार्थत्व चान्याय्यमिति वक्ष्यते, अवगतनियम-बाधप्रसङ्गात्।

अत एव गुणवत्संज्ञापि भेत्री भवति। यथा ह्युत्पत्त्यवगतस्य गुणस्य पाक्षिक-बाधम्, अष्टदोषदुष्ट च विकल्पं परिहर्तुं गुणान्तर वाजिनादि कर्मान्तर कल्पयति, तथा सज्ञापि। तत्रापि ह्यस्त्येव पाक्षिको बाधो विकल्पोऽपि, कदाचित् कस्यचि-च्छब्दस्योपादानादिति।

नन्वस्त्वेकस्यां क्रियाया नियमः, तथापि कारकाणा परस्परासम्बद्धाना क्रिय-यैव सम्बन्धात् कथ शब्दार्थयोः सम्बन्ध' ? अत आह सार्द्धेन—

**तत्र यद्यप्यसम्बन्धः कारकाणां परस्परम् ॥ १४ ॥**
**तथापि यत्क्रिया तस्यामुपकार्योपकारिता।**
**स क्रियासङ्गतेः पश्चात् सम्बन्धः कीर्त्यते तयोः ॥ १५ ॥**

नन्वेवमपि कारकाणा क्रियायामेव कर्मत्वं कर्तृत्वं चोक्तं स्यात्, न मिथः सम्बन्ध ? सत्यम्, न क्वचित् कारकाणां साक्षात्सम्बन्ध , क्रियान्वितानां तु तद्द्वा-

---

[1] तथोद्देशोपा०—मु० पा०।

रकोऽस्त्येव पश्चात्सम्बन्धः, सोऽनेनोच्यते। यथैकभावनान्वितयोः साध्यसाधनयोः साधनेतिकर्त्तव्यतयोश्च यागः स्वर्गस्योपकारकः, तथा तस्यापीतिकर्त्तव्यता। तथा अर्थस्य व्यवहारोपयोगिनं प्रतिपत्त्याख्यं संस्कारं कुर्वन् शब्द उपकारको भवति, अर्थश्चोपकार्य इत्यस्त्यभिधानक्रियाद्वारकः शब्दार्थयोरुपकार्योपकारकलक्षणो वाच्यवाचकभावो नियमादिपर्याय सम्बन्ध इति॥ १४-१५॥

नन्वेव नियमजन्यत्वादनुमानमेव शाब्दं स्याद्? अत आह—

**न चात्राप्यविनाभाव उपयोगीति साधितम्।**

प्रतीत्युत्तरकालोऽयं नियमः, न प्रतीत्युपयोगीत्युक्तमिति।

चोदयति सपादद्वयेन—

**संज्ञेति गमकत्वं चेन्न तदङ्गमियं भवेत्॥ १६॥**
**गमयन्तीं श्रुतिं दृष्ट्वा कल्प्यते व्यवहारतः।**
**न चैषा गमयत्यर्थं सम्बन्धेऽनवधारिते॥ १७॥**
**तस्माद् गमकता पश्चाद् धूमादेरिव जायते।**
**सानङ्गं तद्वदेव स्याद्,**

गमकत्वमेव हि सञ्ज्ञात्वम्, तच्चावगत्युत्तरकालभावित्वावगत्यङ्गम्, अतः सम्बन्धान्तरं वक्तव्यम्। न ह्यसति सम्बन्धे सञ्ज्ञा सञ्ज्ञिनं गमयति, गमकता तु पश्चादुपजायमाना धूमादिलिङ्गस्येव वाचकत्वस्याप्यनङ्गमेवेति।

परिहरति—

**नेयं धूमादिभिः समा॥ १८॥**

वैषम्यमेव दर्शयति सार्द्धेन द्वयेन—

**निरूपितेऽविनाभावे तत्र तत्कारिता ह्यसौ।**
**गमकत्वेन पूर्वं च तत्र नोत्पद्यते मतिः॥ १९॥**
**इह वाचकतायाः प्राङ् नाविनाभाविताम्मतिः।**
**यदैव चेह सम्बन्धं वृद्धेभ्यः प्रतिपद्यते॥ २०॥**
**तदैव गमकोऽस्यायमिति नान्यस्वरूपतः।**

धूमादौ देशकालादिद्वारा सम्बन्धनियमेऽवगते तत्सम्बन्धेनैव गमकता, न तु सैव प्रथमं गृह्यते, शब्दस्य तु प्रथमं गमकत्व वृद्धेभ्यो गृह्यते, न सम्बन्धान्तरम्, तद्ग्रहणादेव च गमकता भवति। न चात्माश्रयता, पूर्वपूर्ववृद्धेषु गमकत्वग्रहणादुत्तरोत्तरेषा गमकतोपपत्तेरिति।

वृद्धेभ्यः प्रतिपत्तिमेव त्रिधा दर्शयति त्रयेण—

**कथयन्ति क्वचित् तावद् बोद्धव्योऽस्मादयं त्विति॥ २१॥**
**क्वचिद् वाचक इत्येवं वाच्योऽयमिति चोच्यते।**
**क्वचिदुच्चरिताच्छब्दाद् दृष्ट्वार्थविषयां क्रियाम्॥ २२॥**

**केषाञ्चित् तत्र बोद्धृत्वमनुमानात् प्रतीयते।**
**एतेनास्माद् यतः शब्दादर्थोऽयमवधारितः ॥ २३ ॥**
**तेन नूनमिमौ सिद्धौ वाच्यवाचकशक्तिकौ[1]।**

ननु वृद्धव्यवहारे[2] वाक्यानन्तर वाक्यार्थे प्रतीतिदर्शनात् तयोरेव वाच्य-वाचकता स्यात्, न पदपदार्थयो. ? अत आह—

**इत्थं वाचकता सिद्धा सङ्कीर्णापि ततः परम् ॥ २४ ॥**
**अन्वयव्यतिरेकाभ्यां निष्कृष्टेऽर्थे नियम्यते[3]।**

गोशब्दस्य गोत्वमात्रे निष्कृष्टे वाचकत्वनिर्णय इति।

नन्वनेकजातिव्यक्त्यात्मकमेव लोको गोशब्दाद्यर्थं मन्यते, ततः कथं जातेरेव निष्कृष्टायाः शब्दार्थत्वम् ? अत आह सार्द्धेन—

**बहुजातिगुणद्रव्यकर्मभेदावलम्बिनः ॥ २५ ॥**
**प्रत्ययात् सहसा जाता श्रौतलाक्षणिकात्मकात्।**
**न लोकः कारणाभावान्निर्धारयितुमिच्छति ॥ २६ ॥**

सम्मूर्च्छितानेकार्थसन्निधाने शब्द' प्रयुक्त. कियत्यप्यर्थजाते प्रत्यय करोति, तेन चाविविक्ताभिधेयलाक्षणिकांशेनापि दृष्टार्थव्यवहारसिद्धेन लोक प्रयोजना-भावान्निर्धारयेत्, न तावता निर्धारण नास्तीति मन्तव्यमिति ॥ २६ ॥

भवता वा कि तद्विवेके प्रयोजनम् ? अत आह—

**बलाबलादिसिद्धयर्थं वाक्यज्ञास्तु विविञ्चते।**

एतदेव विवृणोति द्वयेन—

**कक्षान्तरितसामान्यविशेषेषु हि दुर्बलः ॥ २७ ॥**
**सामान्यवचनः शब्दो जायते लक्षणाबलात्।**
**तेनावश्यं विवेक्तव्यं जायते लक्षणाबलात् ॥ २८ ॥**
**कियद् वा नित्यसम्बन्धादभिधेयेन लक्ष्यते[4]।**

पर सामान्य वस्तुत्वम्, द्रव्यत्वपृथिवीत्वप्राणित्वगोत्वपशुत्वादीनि अपरसामा-न्यानि। तत्र द्रव्यत्व वस्तुत्वापेक्षया विशेष., पृथिवीत्वाद्यपेक्षया च सामान्यम्। एव पृथिवीत्वादिकमपि पूर्वपूर्वापेक्षया विशेष., उत्तरोत्तरापेक्षया च सामान्यम्। तत्र यस्य सामान्यस्य य. शब्दो वाचक. स तद्विशेषे स्वाभिधेयसामान्यस्य विशेषे स्वाभिधेयसामान्यरूपकक्षान्तरिते लक्षणया वर्त्तमानो दुर्बलो भवति, यथा आह-वनीये जुहोतीत्यत्र होमसामान्यवचनो जुहोतिशब्द स्वाभिधेयसामान्ये बुद्धिमा-धाय पश्चात् तदन्तरितेषु विशेषेषु पत्नीसयाजेषु बुद्धिमादधल्लाक्षणिकत्वाद् दुर्बलो

---

१. लोके वाचक०—मु० पा०। २. वृद्धेति ३ पु० नास्ति।
३ अवधारिते—१ पु०। ४. गम्यते—३ पु०।

भवति। गार्हपत्ये पत्नीसयाजानिति तु पत्नीसंयाजानेव विशेषान् श्रुत्याभिदधच्छीघ्रत्वात् प्रबलो भवतीति तेष्वाहवनीयो गार्हपत्येन बाध्यते। वाच्यगम्यमानाशाविवेके तु नेद बलाबलं सिध्येत्। अतो विवेक्तव्यम्--किमभिधेयम्, किमभिधेयसम्बन्धात् लक्ष्यते ? इति।

कः पुनर्विवेकोपाय. ? अन्वयव्यतिरेकावित्युक्तम्, तौ दर्शयति द्वयेन—

**तत्र प्रयोगबाहुल्यात् तद्विशेषे'ष्वसत्स्वपि ॥ २९ ॥**
**प्रयोगात् परसामान्ये सति वाच्यप्रयोगतः।**
**सास्नाद्येकार्थसम्बन्धिगोत्वमात्रस्य वाचकः ॥ ३० ॥**
**गोशब्द इति विज्ञानमन्वयव्यतिरेकजम्।**

तत्र गोत्वे भूयः प्रयोगात् तद्विशेषेषु शाबलेयादिष्वसत्स्वपि बाहुलेयादिषु प्रयोगाद् गोत्वान्वये गोशब्दस्यान्वयात् परसामान्ये द्रव्यत्वादौ सत्यपि गोत्वाभावेऽश्वादावप्रयोगाद् गोत्वव्यतिरेके गोशब्दस्य व्यतिरेकात् तदेव तस्य वाच्यमिति तेन गमकत्वमेव विविच्यते न सम्बन्धान्तरमित्युपसंहरति—

**तस्माद् गमकतैवादौ,**

एवमपि कथमभिधायकत्वम् ? अत आह—

**अभिधायकता पुनः ॥ ३१ ॥**
**तन्निमित्तेति सम्बन्धः संज्ञासंज्ञित्वलक्षणः।**

गमकतामात्रेऽवधारिते तत एव तद्विशेषोऽभिधायकत्वमपि सिद्ध्यति, गमकविशेषा ह्येते, इन्द्रिय लिङ्गमभिधायकमिति, यत्सत्तामात्रेण स्वसन्निकृष्टमर्थ गमयति तदिन्द्रियम्, यत्तु व्याप्यतया ज्ञायमान व्यापक गमयति तल्लिङ्गम्, यत्तु गमकत्वावगमादेव गमयति तदभिधायकम्; तदिह गमकत्वे गृहीते पश्चात् तन्मात्रैणैवासत्यपि सम्बन्धान्तरे शब्दार्थं प्रतिपद्यमानो लिङ्गादिविलक्षणमभिधायकत्वरूपं गमकत्वं सज्ञापरपर्यायमध्यवस्यतीति सज्ञासंज्ञित्वमेव सम्बन्ध इति।

नन्वन्वयव्यतिरेकौ वदताऽविनाभावोऽङ्गीकृत इति कथं न सम्बन्धान्तरमस्तीत्युच्यते ? अत आह—

**सम्बन्धनियमोऽयं तु याऽविनाभाविताेच्यते ॥ ३२ ॥**

गमकत्वस्यैव सम्बन्धस्य सङ्कीर्णरूपेणावगतस्य विषयनियमोऽन्वयव्यतिरेकाभ्यामवगम्यते—अस्यायं गमकोऽस्यायमिति, अतः स एव सम्बन्ध.। न हि शब्दार्थस्वरूपयोर्देशतः कालतो वान्वयव्यतिरेकौ विद्यते इति हि दर्शितम्। तेन न तौ प्रतीत्यङ्गम्, किन्तु गमकत्वविवेकाङ्गम्, गमकत्व तु प्रतीत्यङ्गमिति ॥ ३२ ॥

"यदि प्रत्यायकः शब्दः, प्रथमश्रुतः किं न प्रत्याययति" (शा० भा० पृ. ५३) इति भाष्यार्थं प्रयोगेण दर्शयति—

---

१. तत्प्रयोगेष्व०--मु० पा०।

**सम्बन्धग्रहणात् पूर्वं यस्मान्न गमयत्यतः।**
**गवादेर्नाभिधाशक्तिर्देवदत्तपदे यथा[1] ॥ ३३ ॥**

देवदत्तादिशब्दो हि यत्र सङ्केत्यते तदेव गमयति, तेनास्य न क्वचित् स्वभावशक्तिरिति ॥ ३३ ॥

"सर्वत्र नो दर्शन प्रमाणम्" ( शा० भा० पृ. ५३ ) इति परिहारभाष्यार्थमाह—

**यथैव गमकः शब्दो व्यवहारात् प्रतीयते।**
**तथैव शक्तिविज्ञानं तस्योपायोऽवगम्यते ॥ ३४ ॥**

उपाय.=अङ्गम्, इतिकर्त्तव्यता, न हि तदपेक्षया शक्तिविघातो भवति ॥ ३४ ॥

एतदेव दृष्टान्तेन दर्शयति—

**स्वरूपग्रहणं चास्य यथा व्याप्रियते फले।**
**तथा सम्बन्धिविज्ञानं नाशक्तिस्तत्कृता भवेत् ॥ ३५ ॥**

न केवलं शब्दस्य, अन्यस्यापि करणस्यानुग्राहकापेक्षा नाशक्तिमापादयतीत्याह—

**यत्साधकतमत्वेन कस्यचित् किञ्चिदुच्यते।**
**तस्यानुग्राहकापेक्षा न स्वशक्तिविघातिनी ॥ ३६ ॥**

कथम् ? इत्याह—

**न हि तत् कारणं लोके वेदे वा किञ्चिदीदृशम्।**
**इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥ ३७ ॥**

सर्वत्र चक्षुरादौ प्रदीपाद्यर्थित्वदर्शनादैकान्तिक सहायापेक्षण नाशक्तिमापादयति, प्रत्युतेतिकर्त्तव्यतयैव करणत्वम्, तदभावे एव तन्न सिध्यति, प्रतिकरणं तदपेक्षाया नियतत्वादित्याह—

**प्रत्यात्मनियतत्वाच्च यथैव करणं भवेत्।**

कथ पुन साधनत्वाविशेषे करणेतिकर्तव्यताविभागः ? अत आह—

**बाह्यान्तरविभागेन,**

यत्फलस्य प्रत्यासन्न चक्षुरादिक तत्करण, बाह्यं तु दीपादिकमितिकर्त्तव्यतेति।

क्वचिद् बाह्यस्यापि विवक्षातः करणत्वमस्त्येवेत्याह—

**क्वचित् स्याद् वा विवक्षया ॥ ३८ ॥**

अत्रैवोदाहरणमाह—

**उद्विग्नो ह्यन्धकारेण कश्चिदेव ब्रवीत्यपि।**
**किं चक्षुषा ममैतेन दृष्टं दीपेन यन्मया ॥ ३९ ॥**

---

१. यदा—१ पु०।

स्वरसतस्त्वान्तरस्यैव करणत्वमित्याह—

**नित्यवृत्तौ तु नान्धानां दृष्टिर्दीपशतैरपि ।**
**रूपादिदर्शने यस्मात् तस्माच्चक्षुः प्रकाशकम् ॥ ४० ॥**

नित्यत्वं स्वारसिकमिति । यस्मान्नान्धानां दृष्टिर्दर्शनं तस्माद् रूपदर्शने चक्षुरेव करणमित्यन्वय इति ॥ ४० ॥

नन्वात्ममनःसंयोगः शरीरात्मसंयोगश्च ज्ञानाख्यस्य फलस्य एकार्थसमवायित्वादत्यन्तप्रत्यसन्नौ, तत् कथं चक्षुषः करणत्वम् ? अत आह—

**शरीरात्ममनोयोगाद् असाधारणाताबलात् ।**
**विज्ञानासत्तिभावाच्च चक्षुः कारणमिष्यते ॥ ४१ ॥**

आत्ममनःसंयोगो हि सर्वज्ञानसाधारणः चक्षुरूपज्ञानस्यासाधारणत्वात् तदपेक्षयाभ्यर्हितत्वात् करण दीपापेक्षया त्वासत्तेरिति ॥ ४१ ॥

प्रकृतेऽपि शब्द. प्रत्यासत्ते. करणं सम्बन्धज्ञान त्वङ्गम्, तथैव लोकप्रसिद्धेरित्याह—

**तथैवेहापि सम्बन्धज्ञानमङ्गं प्रसिद्धितः ।**

यदि तु कुतश्चित् कारणात् तत्रैव गौरव मत्वा करणत्व विवक्ष्यते तन्न निवारयाम इत्याह—

**गौरवात् करणत्वेन मतं चेत् केन वार्यते ॥ ४२ ॥**

"यथा चक्षु." ( शा० भा० पृ. ५३ ) इत्यादिभाष्यार्थमाह—

**यथा चक्षुरितीदं तु व्यभिचारित्वमुच्यते ।**

दृष्टान्तोऽपि साध्यविकल इत्याह—

**देवदत्तेऽपि चाव्यक्तां शक्तिमिच्छन्ति युक्तितः ॥ ४३ ॥**

दर्शि-मिदं **प्रत्यक्षसूत्र** इति ॥ ४३ ॥

केन पुनर्विशेषेण चक्षुष एव द्रव्यप्रकाशकत्वं बाह्यप्रकाशस्य सहायक **भाष्यकारेणो**क्तम् ? अत आह—

**प्रकाशेऽवस्थिते बाह्ये नान्धो[1] रूपं प्रतीयते ।**
**फलानन्तर्यतश्चापि चक्षुः करणमिष्यते ॥ ४४ ॥**

दर्शितमेवैतदिदानीं[2] भाष्यसमर्थनार्थमुक्तमिति न पौनरुक्त्यमिति ॥ ४४ ॥

दर्शितः सम्बन्धसद्भावः । स तु 'कृतको नित्यो वा' इति विचारयन् **भाष्यकारः** पूर्वपक्षमाह—"यदि प्रथमश्रुतो न प्रत्याययति" ( शा० भा० पृ. ५४ ) इत्यादिना, तस्यार्थमाह—

**पुरुषाधीनविज्ञानस्तेभ्यः प्रागनिरूपितः ।**
**यः संज्ञासंज्ञिसम्बन्धः स चेष्टश्चेद् ध्रुवं कृतः ॥ ४५ ॥**

---

१. नान्धै—मु० पा० ।　　२. एतदिति ३ पु० नास्ति ।

संज्ञात्वं हि पुरुषेभ्यो गम्यते इत्युक्तम्, तेनेद देवदत्तादिशब्दवदस्येयं संज्ञा इति वदद्भिः पुरुषैरेव कृत स्यादिति। यदि सज्ञात्वातिरिक्तं किञ्चित् सम्बन्धान्तरं स्यात् स्यादपि नित्यता, न तु तदस्तीत्युक्तम्—"स्वभावतो ह्यसम्बन्धावेतौ" ( शा० भा० पृ. ५४ ) इत्यादिना भाष्येण, तद् व्याचष्टे—

**भिन्नदेशाद्यधिष्ठानाद् यथा रज्जुघटादिषु।**
**समं नास्त्यनयोः किञ्चित् तेनासङ्गतता स्वतः॥ ४६॥**

इति सम्बन्धाक्षेपवादः

सर्वस्य हि केनचिदभिन्नेन सम्बन्धो भवति, न चानयोर्देश कालं वा एवरूपमुपलभामहे[1], भिन्नदेशाद्यधिष्ठानात्। दर्शितमिदम् "मुखे हि शब्दम्" ( शा० भा० पृ. ५४ ) इत्यादिना। अतः पृथग्भूतयोस्त्वनयो स्वतोऽसङ्गतयो. पश्चात् पुरुषेभ्यो जायमानोऽयं सज्ञासञ्ज्ञिसम्बन्धो रज्जुघटवत् पुरुषकृत इति।

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे सम्बन्धाक्षेपवादः

## अथ स्फोटवादः

"अथ गौरित्यत्र क शब्द" ( शा० भा० पृ. ५४ ) इति सम्बन्धानित्यत्वसाधनावसरे केन प्रयोजनेन कया वा सङ्गत्या शब्दस्वरूपनिरूपण क्रियते? अत आह—

**आधारात्मनि विज्ञाते सुखमाधेयबोधनम्।**
**तस्यैव तावत् प्रस्तावादथ गौरित्यतोऽब्रवीत्॥ १॥**

सम्बन्धिद्वयाधारो हि सम्बन्धो नानिरूपितयोस्तयोर्निरूपयितुं शक्यते। न हि वर्णातिरिक्तस्य शब्दस्य शशविषाणायमानस्य सम्बन्ध एव सम्भवति, नतरां नित्यत्वम्। अत, प्रयोजनवद्वर्णाना शब्दत्वप्रतिपादनम्, सम्बन्धप्रस्तावादेव च नाप्रसक्तं क्रियते। "अथ गौ." ( शा० भा० पृ. ५४ ) इति तु सिद्धान्तवादिवचनम्। आस्ता तावत् सम्बन्ध, शब्दस्वरूपमेव तावत् कीदृशमिति निरूपयाम इति॥ १॥

"गकारौकारविसर्जनीया इति भगवानुपवर्ष" ( शा० भा० पृ. ५४ ) इत्युपवर्षग्रहण कि परमतत्त्वज्ञापनाय? नेत्याश्रित्यार्थान्तरमाह—

**प्रत्यक्षेऽपि विसंवादो येषा क स्वयमुत्तरम्।**
**तेभ्यो दद्यादिति ज्ञात्वा वृद्धानां मतमब्रवीत्॥ २॥**

य. खलु वैयाकरणः सर्वजनप्रत्यक्षेऽपि वस्तुनि विसवदते, तमनेन वृद्धमतोपन्यासेनोपालभत इति॥ २॥

---

१. देशं कालमन्यद्वा किञ्चिदुपलभामहे—३ पु०।

श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्द. प्रसिद्धः, ते च श्रोत्रग्रहणा इति प्रत्यक्ष-बलेन वर्णा एव शब्द इति परीक्षितम्, पश्चाच्चार्थप्रत्ययद्वारेण। तदयुक्तम्, अर्थ-प्रत्ययद्वारेणैव हि **वैयाकरणै**र्वर्णातिरिक्त. शब्दः साधित, अतस्तथैव निरूपणं कर्त्तव्यम्, किं प्रत्यक्षपरीक्षया ? अत आह—

**तत्रार्थप्रत्ययद्वारं कृतं शब्दनिरूपणम्।**
**यैरासतां तु ते तावत् प्रत्यक्षेण परीक्ष्यते॥ ३॥**

किमित्येव क्रियते ? अत आह—

**प्रत्यक्षं नासमर्थं नस्तेन चार्थेऽवधारिते।**
**न हेतुर्बलवानन्यः परीक्ष्येत यतस्ततः॥ ४॥**

यदि प्रत्यक्षमत्रासमर्थं स्याद्, यदि वा कारणान्तरम्, ततो बलवत् ततः कारणान्तरेण परीक्ष्येत, न तु तदस्तीति॥ ४॥

उपसंहरति—

**तस्माच्छ्रोत्रपरिच्छिन्नो यद्यर्थं गमयेन्न वा।**
**सर्वथा तस्य शब्दत्वं लोकसिद्धं न हीयते॥ ५॥**

श्रोत्रग्राह्यत्वमेव शब्दत्वजातीयलक्षणं न तु प्रत्यायकत्वमिति॥ ५॥

ततश्च यद्यपि श्रोत्रग्राह्यस्यार्थप्रत्यायनासामर्थ्याद् वस्त्वन्तरं कल्प्यते तथापि न तस्य शब्दशब्दवाच्यता, प्रसिद्धिविरहादित्याह—

**यदि त्वर्थगतौ शक्तिर्न स्यादस्य ततः पुनः।**
**वस्त्वन्तरं प्रकल्प्येत विना शब्दप्रसिद्धितः॥ ६॥**

यस्त्वर्थप्रत्यायनमेव शब्दलक्षणं वक्ति, तस्याव्याप्त्यतिव्याप्ती स्याता-मित्याह—

**अग्न्यादीन् गमयन्तोऽपि शब्दा धूमादयो न हि।**
**न वाऽप्रत्यायकत्वात् स्यादेकवर्णेष्वशब्दता॥ ७॥**

किञ्च, एवं सत्येकस्यैवानुष्ठातृभोक्तृत्ववदेकस्यैव कदाचित् शब्दत्वमशब्दत्वं च स्यात्, न त्वेव लोकप्रसिद्धिरस्तीत्याह—

**न च प्रागर्थविज्ञानाच्छ्रोत्रग्राह्ये न शब्दधीः।**
**न चार्थज्ञानतः पश्चादश्रौत्रेऽपि च शब्दता॥ ८॥**

तामिदानीं प्रत्यक्षपरीक्षां प्रारभते—

**परस्परानपेक्षाश्च श्रोत्रबुद्ध्या स्वरूपतः।**
**वर्णा एवावगम्यन्ते न पूर्वापरवस्तुनी॥ ९॥**

"ते च श्रोत्रग्रहणा." ( शा० भा० पृ. ५४ ) इति भाष्ये गकारादीनामेव श्रौत्रत्ववचनात् पूर्वापरवस्तुनोः श्रौत्रत्वं निराकृतम्, पूर्वशब्देन वर्णकारणभूतास्त-

द्वयवा निराकृता:, अपरशब्देन गत्वमत्वमवयवी, गोशब्दत्वं समुदाय: स्फोट-श्चेति ॥ ९ ॥

पूर्ववस्तुनि तावत् प्रत्यक्ष प्रमाण नास्तीत्याह—

**अल्पीयसापि यत्नेन शब्दमुच्चरितं मतिः।**
**यदि वा गृह्णाति वर्णं^ यदि वा सकलं स्फुटम् ॥ १० ॥**

साकल्यवैकल्यग्रहणे हि स्यादवयवसिद्धि., न तु तदस्तीति ॥ १० ॥

न चावयवानामपि वर्णानुस्यूतानां पृथगवस्थितानां वास्ति ग्रहणमित्याह—

**पृथङ् न चोपलभ्यन्ते वर्णस्यावयवाः क्वचित्।**
**न च वर्णेष्वनुस्यूता दृश्यन्ते तन्तुवत् पटे ॥ ११ ॥**

न चानुमानमपि सम्भवति, प्रत्यक्षागृहीतैस्तै. कस्यचिल्लिङ्गस्य सम्बन्ध ग्रहणासम्भवादित्याह—

**तेषामनुपलब्धेश्च न ज्ञाता लिङ्गसङ्गतिः।**

न चागमेनोपमानेन वा तत्सिद्धिरित्याह—

**नागमस्तत्परश्चास्ति नादृष्टे चोपमा क्वचित् ॥ १२ ॥**

नाप्यर्थापत्ति, परमाणुवदेवानवयवत्वेऽपि वर्णानामुपपत्तेरित्याह—

**न चाप्यनुपपत्तिः स्याद् वर्णस्यावयवैर्विना।**
**यथान्यावयवानां हि विनाप्यवयवान्तरैः ॥ १३ ॥**

मा भूद् वर्णावयवैरनुपलब्धैर्विशेषत. सम्बन्धदर्शनम्, सामान्यतोदृष्टं तु सम्भ-वति, प्रत्यक्षत्वस्य घटादौ सावयवत्वेन व्याप्ते. ? अत आह—

**प्रत्यक्षेणावबुद्धश्च वर्णोऽवयववर्जितः।**
**किं न स्याद्,**

निरवयवत्वेऽपि गुणादिषु प्रत्यक्षत्वदर्शनादिति ।

निरवयवत्वमनुमानेन गम्यत इत्याह—

**व्योमवच्चात्र लिङ्गं तद्रहिता मतिः ॥ १४ ॥**

सम्प्रति परवस्तु पराभिमतत्व[1] निराकर्तुं व्यक्तिभेदाभावमाह—

**तद्वच्चास्यैकबुद्धित्वाद् देशभेदेऽप्यभिन्नता।**

व्योमवत् प्रत्यभिज्ञानादेक एव गकार इति कि गान्तरेणेति ।

चोदयति—

**ननु भेदमतिर्न स्यात्,**

द्रुतो विलम्बितो मध्यम इति बुद्धिभेदोऽसति गकारभेदे न स्यादिति।

सिद्धान्तवादी त्वाह—

---

१. परवस्तु गत्वमिति १।

**तत्राप्येकत्वधीः कुतः ॥ १५ ॥**

परः पुनराह—

**सामान्येषु ममैका धीस्तद्वयक्तिषु च भेदधीः ।**

अस्ति हि ममोभयमित्याह—

**न ह्येष्टं भेदमात्रं हि न स्यादेकत्वधीर्यतः ॥ १६ ॥**

दूषयति—

**व्यक्तेस्तावन्न सामान्यं भिन्नरूपं प्रतीयते ।**
**वर्णेष्वन्यत्र शब्दत्वान्नान्यच्चेद् वर्ण एव सः ॥ १७ ॥**

मा भूत् जातिः, सादृश्यरूपं तु सामान्यं किं न भवति ? अत आह—

**स एवेति मतिर्नापि सादृश्यम्,**

विशेषतश्च न वर्णेषु सादृश्यं सम्भवतीत्याह—

**न च तत् क्वचित् ।**
**विनावयवसामान्याद् वर्णेष्ववयवा न च ॥ १८ ॥**

निरवयवत्वं च प्रागेव दर्शितमिति ॥ १८ ॥

प्रत्यक्षत्वाच्चैकबुद्धेर्नाभावात्मकापोहसामान्यविषयत्वं सम्भवतीत्याह—

**प्रत्यक्षविषयत्वाच्च नान्यापोहोऽपि युज्यते ।**

यत्तु अपोहस्य प्रमाणं वाचको लिङ्गं वा तत् गकारोपलब्धिवेलायां नास्तीत्याह—

**वाचकश्चात्र लिङ्गं वा न तदानीं प्रतीयते ॥ १९ ॥**

शङ्कते—

**गकारादिषु सामान्यं शब्दत्वं कल्प्यते यथा ।**
**गोत्वं च शाबलेयादौ तथैतत् किं न कल्प्यते ॥ २० ॥**

सर्वसामान्यापह्नववादिनां **सौगतानाम्** इह व्यतिरेकाव्यतिरेकविकल्पेन तन्निराकरणं युज्यते, तव तु शब्दत्वगोत्वादिवत् गत्वादीनामपि सम्भवात् किं विकल्पेनेति ॥ २० ॥

परिहरति सार्द्धद्वयेन—

**शाबलेयगकारादीन् निष्पन्नान् व्यक्तिरूपतः ।**
**सामान्यधीर्न गृह्णातीत्यतो जातिरपीष्यते ॥ २१ ॥**
**न तु द्रुतादिभेदेऽपि निष्पन्ना सम्प्रतीयते ।**
**गव्यक्त्यन्तरव्यावृत्ता[1] गव्यक्तिरपरा स्फुटा ॥ २२ ॥**
**तेनैकत्वेन वर्णस्य बुद्धिरेकोपजायते ।**

---

१. ०रविच्छिन्ना—मु० पा० ।

न विकल्पेन सामान्यं निवारयामः, किन्तु शब्दत्वात् व्यतिरिक्तं गत्वादिकं न प्रतीयत इति। भिन्नेषु हि गकारादिषु अयमपि शब्दोऽयमपि शब्द इति। तथा शाबलेयादिषु अयमपि गौरयमपि गौरिति समान्यधीर्नान्तरेण सामान्यं सिद्ध्यतीति युक्तस्तदभ्युपगमः। द्रुतादिषु तु गकारव्यक्तिभेदाभावात् तदेकत्वादेवैकबुद्धिरिति, न सामान्यसिद्धिरिति।

कथमसति व्यक्तिभेदे द्रुतो गकारो मध्यमो विलम्बित इति च भेदबुद्धिः ? अत आह—

**विशेषबुद्धिसद्भावो भवेद् व्यञ्जकभेदतः ॥ २३ ॥**

न ह्यत्र 'अयं गौः, अयमपि गौः' इतिवद् 'अयं गकारो द्रुतः, अयं मध्यमः' इति व्यक्तिभेदः प्रतीयते, किन्तु 'गकारोऽनेन द्रुतमुच्चरितोऽनेन मध्यमः' इति एक एव गकारो देवदत्तवत् शौर्यादिभेदभिन्नोऽवस्थाभेदभिन्नः प्रतीयते। अवस्थाभेदश्च व्यञ्जकध्वनिभेदनिबन्धन इति ॥ २३ ॥

किमिति पुनर्विशेषबुद्धिवशेन व्यक्तिभेद एव नाभ्युपगम्यते ? अत आह—

**यथैव तव गत्वादि गम्यमानं द्रुतादिभिः।**
**विशेषैरपि नानेकमेवं वर्णोऽपि नो भवेत् ॥ २४ ॥**

गत्वमपि हि तव द्रुतादिभिन्नं भासते अथ च न भिद्यते, तथा गकारोऽपि न भेत्स्यत इति ॥ २४ ॥

एतावांस्तु विशेषः—तव व्यञ्जकव्यक्तिभेदात् सामान्ये भेदावभासः, मम तु व्यञ्जकनादभेदाद् वर्णे भेदावभास इत्याह—

**त्वयापि व्यञ्जकव्यक्तिभेदाद् भेदोऽभ्युपेयते।**
**ममापि व्यञ्जकैर्नादैर्भेदबुद्धिर्भविष्यति ॥ २५ ॥**

उपसंहरति—

**तेन यत् प्रार्थ्यते जातेः तद् वर्णादेव लभ्यते।**
**व्यक्तिलभ्यं च नादेभ्य इति गत्वादिधीर्यथा ॥ २६ ॥**

गत्वाद्यङ्गीकरणे च कल्पनागौरवमपि स्यादित्याह—

**कल्पयित्वापि तत्पश्चाद् विभुत्वैकत्वनित्यताः।**
**प्रत्येकवृत्तिता चास्य भवेयुर्महतः श्रमात् ॥ २७ ॥**

ननु तवापि गव्यक्तौ सर्वमिदं कल्पनीयमेव ? अत आह—

**द्वयसिद्धस्तु वर्णात्मा नित्यत्वादि यथैव च।**
**कल्पितस्येष्यते तद्वत् सिद्धस्यैवाभ्युपेयताम् ॥ ॥ २८ ॥**

धर्मिकल्पनातो लघीयसी धर्ममात्रकल्पनेति ॥ २८ ॥

---

१. अव्यञ्जक०—१ पु०। २. ज्ञाने—१ मु० पा०।

धर्मोऽपि प्रत्येकसमवायी नास्माकं कल्पनीय इत्याह—

**प्रत्येकसमवाये च क्लेशो नैव भविष्यति।**

किञ्च, व्यञ्जनेषु तु धीभेदोऽपि मध्यमादिरूपो नास्ति, केवलद्रुतावभासात्, अतोऽसति व्यक्तिभेदे निर्निबन्धनमेव तत्र सामान्यमित्याह नामान्तेन—

**व्यञ्जनेषु च धीभेदो नैव तादृक् प्रतीयते॥ २९॥**

**दृश्यतेऽजनुरागेण भेदो यो नाम,**

कथमयं विवेक ? अजनुरागरहितानामदर्शनात्, तदाह—

**तत्र नः।**

**विवेकोऽस्त्येव न ह्येष केवलानां प्रतीयते॥ ३०॥**

एवं चाक्ष्वपि शक्यविवेकमपरोपाधिकत्वमनुमातुमित्याह—

**अक्ष्वप्येवं परोपाधिर्द्रुतादिप्रत्ययो मृथा।**

**वर्णाऽऽश्रितत्वाद् वर्णत्वव्यञ्जनप्रत्ययो यथा॥ ३१॥**

वर्णत्वादिसामान्ये व्यञ्जनेषु च यो द्रुतादिप्रत्ययस्तद्वदिति॥ ३१॥

जात्यभावे प्रयोगमाह—

**गकारोऽत्यन्तनिष्कृष्टगत्वाधारो न गम्यते।**

**गान्यबुद्ध्यनिरूप्यत्वात् परैः कल्पितगत्ववत्॥ ३२॥**

**अन्यबुद्धिः** विपरीतबुद्धि॥ ३२॥

ननु वादिनो **मीमांसकस्या**सिद्ध गत्वं कथ रापक्षो भवति ? अत आह—

**अवस्तुत्वेन साध्यत्वान्निषेधाद्धेतुसाध्ययोः।**

**सपक्षेऽन्यतरासिद्धिर्न दोषायात्र जायते॥ ३३॥**

"गत्वाधारो न गम्यते" इति च "अनिरूप्यत्वात्" इति च निषेधात् नञ्प्रयोगात् गत्वाधारत्वमन्यबुद्धिनिरूप्यत्व वा वस्तुत्वेनाविद्यमानत्वेन सपक्षेऽस्माभिः साध्यं दर्शयितव्यम्, शक्यते चाविद्यमाने वस्त्वन्तराभावो दर्शयितुम्, शशविषाणइव तैक्ष्ण्यस्य। अतो वाद्यसिद्धिः सपक्षस्यात्र न दोषः, तदपि गत्व गत्वाधारो गान्यबुद्धिनिरूप्यं च न भवत्येवेति॥ ३३॥

प्रयोगान्तरमाह—

**वर्णत्वाच्चापि साध्योऽयं यकारादिवदेव च।**

ननु दृष्टविरुद्धमिदम्, एकाकारावगमात् गोत्वाद्यभावानुमानवत् ? अत आह—

**व्यतिरेकस्य[1] चादृष्टेर्नात्र दृष्टं निवर्तकम्॥ ३४॥**

उक्तमिदं व्यक्तिरेकत्रैका, न व्यतिरक्तं सामान्यं दृश्यत इति॥ ३४॥

---

१. व्यतिरिक्तस्य—३ पु०।

'शावलेयादयो गोत्वाधारा न भवन्ति व्यक्तित्वात् ककारादिवत्' इति वदतां दृष्टविरोध· स्यादित्याह—

**गोत्वादिवारणे त्वेव दृष्टबाधः स्फुटो भवेत् ।**

कथम् ? इत्याह—

**नान्यथा हि मतिस्तत्र स्यात् सामान्यविशेषयोः ॥ ३५ ॥**

तत्रापि व्यक्तयेकत्वादेकबुद्धि , भेदबुद्धिस्तु व्यञ्जकभेदादिति चेत् ? तत्राह—

**न चाप्यत्रैकवस्तुत्वे भेदो व्यञ्जकभेदतः ।**

कारणमाह—

**न पिण्डव्यतिरेकेण व्यञ्जकोऽत्र ध्वनिर्यथा ॥ ३६ ॥**

**पिण्डव्यङ्ग्यचैव गोत्वादिर्जातिर्नित्यं प्रतीयते ।**

उपसहरति—

**तेन भिन्नेषु पिण्डेषु जातिरेका प्रतीयते ॥ ३७ ॥**

चोदयति—

**ननु यस्य द्वयं श्रोत्रं तस्य बुद्धिद्वयं भवेत् ।**

**भवतोऽतीन्द्रियत्वात् तु कथ नादैर्विशेषधीः ॥ ३८ ॥**

श्रौत्री ह्येयमनुवृत्तिव्यावृत्तिबुद्धि , तस्या. श्रौत्रेणैव विषयेण भवितव्यम् । मम तु गत्व तद्व्यक्तिश्च द्वय श्रौत्रम्, तव तु ध्वनीना वायवीयानामश्रौत्रत्वात् न तन्निबन्धना विशेषबुद्धि सिद्ध्यतीति ॥ ३८ ॥

परिहरति—

**नादेन संस्कृताच्छ्रोत्राद् यदा शब्दः प्रतीयते ।**

**तदुपश्लेषतस्तस्य बोधं केचित् प्रचक्षते ॥ ३९ ॥**

न वाय्वात्मा तत्संयोगविभागात्मा वा नाद , किन्तु वायुगुण शब्दविशेषो नादो ध्वनिरिति चोच्यते । द्विविधो हि शब्द —वर्ण·, ध्वनिश्च । द्वयोरनुगत शब्दत्वम्, वर्णत्व ध्वनित्व च तदवान्तरसामान्ये, वर्णविशेषा गकारपकारादय·, ध्वनिविशेषा· शङ्खघोषादय । ध्वन्यात्मकश्च शब्दो वायुगुणः, स एव च वर्णात्मकाना गकारादीनामभिव्यञ्जक , प्रभारूपमिव भावान्तराणाम् । स च वायौ कर्णविवर प्राप्ते सयुक्तसमवायेन श्रोत्र सस्कृत्य तेन गृह्यमाणः कदाचित् वर्णरहितः केवलो गृह्यते शङ्खघोषादिषु, कदाचित् वर्णानभिव्यञ्जन् तदुपश्लिष्टः प्रतीयते प्रभारूपवदेव । अस्ति हि वर्णोच्चारणे ध्वन्युपलब्धिः, दूरादिभिन्नेषु वर्णरहितध्वन्युपलम्भदर्शनात् । अतो युक्त बुद्धिद्वयमिति ॥ ३९ ॥

परिहारान्तरमाह—

**नैव वा ग्रहणं तेषां शब्दे बुद्धिस्तु तद्वशात् ।**

यदि ध्वनिवशात् शब्दबुद्धिः, तत. किम् ? इत्यत आह—

**संस्कारानुकृतेः सोऽपि महत्त्वाद्यवबुध्यते ॥ ४० ॥**

यो हि **वैशेषिको** गकारादिषु व्यक्तिजातिभेदमिच्छति सोऽपि शब्देषु महत्त्वाल्पत्वयोर्गुणतां नाभ्युपैति, निर्गुणत्वाद् गुणानाम्, शाब्दस्य च गुणत्वात्। अतो यथा तस्याविद्यमानमेव शब्दे महत्त्वादिक ध्वनिसंस्कारानुसारिण्या बुद्ध्या गृह्यते, तथा द्रुतादिकमपि ध्वनिषु श्रोत्र प्राप्यैव क्षिप्रमन्यत. प्रयातेषु तत्संयोगसंस्कारस्य श्रोत्रेऽल्पकालमवस्थानाच्छब्दोऽपि क्षण एवाविर्भूय तिरोभवन् द्रुत इति गृह्यते, तथा मध्यमो विलम्बित इति युक्तो व्यञ्जकधर्माणा द्रुतादीना व्यङ्ग्ये शब्दे भ्रान्त्या समारोप इति ॥ ४० ॥

कथमनवगतेषु भ्रमहेतुषु नादेषु तद्धर्मप्राप्तिर्व्यङ्ग्येषु ? अत आह चतुर्भि —

**मधुरं तिक्तरूपेण श्वेतं पीततया तथा।**
**गृह्णन्ति पित्तदोषेण विषयं भ्रान्तचेतसः ॥ ४१ ॥**
**तथा वेगेन धावन्तो नाव्यारूढाश्च गच्छतः।**
**पर्वतादीन् विजानन्ति भ्रमेण भ्रमतश्च तान् ॥ ४२ ॥**
**मण्डूकवसयाक्ताक्षा वंशानुरगबुद्धिभिः।**
**अव्यक्त्यल्पत्वमहत्त्वाभ्यां सामान्यं च तदाश्रयम् ॥ ४३ ॥**
**गृह्णन्ति यद्वदेतानि निमित्तग्रहणाद्[1] विना[1]।**
**व्यञ्जकस्थमबुध्वैव[2] व्यङ्ग्ये भ्रान्तिर्भविष्यति ॥ ४४ ॥**

वेगधावनादिक व्यक्त्यल्पत्वमहत्त्व च गृह्यमाणमपि भ्रान्तिनिमित्तत्वेनाग्रहणादुदाहृतमिति ॥ ४१ ४४ ॥

निरस्तं गत्वम्। अत्वमिदानी दर्शयितु व्यक्तिभेदमाह—

**वर्णान्तरत्वमेवाहुः केचिद् दीर्घप्लुप्तादिषु।**

कारणमाह—

**न हि द्रुतादिवत् तत्र प्रयोगो नान्तरीयकः ॥ ४५ ॥**

नान्तरीयको हि द्रुतादिभेदो युज्येताप्यपरमार्थः, ह्रस्वदीर्घादिभेदस्तु अर्थविशेषे प्रतीत्यौपयिकतया विवक्षितप्रयोग. कथं भ्रान्ति. स्यात्! तद्भ्रान्तित्वे हि तन्निबन्धनार्थविशेषबुद्धिरपि अगमनमागमनमित्यादौ भ्रान्ति स्यात्, बाष्पजाताग्निबुद्धिवत्। अत पारमार्थिक एव ह्रस्वदीर्घादिषु वर्णभेद इति ॥ ४५ ॥

सति च तद्भेदे तदनुवृत्तमत्वसामान्य केचिदिच्छन्तीत्याह—

**तथा च सति सामान्यं त्रिष्वत्वं कैश्चिदिष्यते।**

अन्ये तु सत्यपि वर्णभेदे सामान्यकल्पना नेच्छन्तीत्याह—

**सामान्यकल्पना त्वन्यैर्न युक्तेत्यभिधीयते ॥ ४६ ॥**

---

१–१. ग्रहणादिना— २ पु०। २. एवम्— ३ पु०।

कारणमाह द्वयेन—

**अत्वमित्युच्यमानं हि न दीर्घप्लुतयोर्भवेत् ।**
**आत्वं न ह्रस्वप्लुतयोस्त्रैमात्र्यं[1] न च पूर्वयोः ॥ ४७ ॥**
**सर्वसाधारणत्वेन तद् विज्ञातुं न शक्यते ।**
**प्रत्येकं शाबलेयादिरूपे गोत्वं यथा स्फुटम् ॥ ४८ ॥**

साधारणरूपं हि सामान्यं शाबलेयादिष्विव गोत्वम्, न च तदिहास्तीति ॥

कथ तर्ह्यवर्णकुलमिति व्यवहार, कुलशब्दो हि समुदायवचन. समानजातीयेषु दृष्टो ब्राह्मणकुलमित्यादौ ? अत आह—

**अवर्णकुलशब्दोऽपि स्थानसाम्याद् वनादिवत् ।**
**समुदायार्थवाचीति न जातिवचनो भवेत् ॥ ४९ ॥**

समुदायो हि वनादिवद् देशादिक यत्किञ्चिदेकमुपाधिमाश्रित्य भवति, नावश्य जातिमेवेति ॥ ४९ ॥

तदेव सत्यपि वर्णभेदे सामान्यं नास्तीत्युक्तम्, इदानी स्वमतेन वर्णभेदं निराकरोति—

**स्वतो ह्रस्वादिभेदस्तु नित्यवादे विरुध्यते ।**

कारणमाह—

**सर्वदा यस्य सद्भावः स कथं मात्रिकः स्वयम् ॥ ५० ॥**

कस्य तर्हि मात्रिकत्वम् ? अत आह—

**तस्मादुच्चारणं तस्य मात्राकालं प्रतीयते ।**
**द्विमात्रं वा त्रिमात्रं वा न वर्णो मात्रिकः स्वयम् ॥ ५१ ॥**

उच्चारणधर्मोऽपि मात्रिकत्वं भ्रान्त्या वर्णे गम्यत इति ॥ ५१ ॥

चोदयति—

**दीर्घादेर्नन्वनङ्गत्वं[2] वाचकाधर्मतो भवेत् ।**

द्रुतादिवदित्यभिप्रायः ।

परिहरति—

**इत्थं प्रतीयमाना स्युर्वर्णा न प्रतिपादकाः ॥ ५२ ॥**

उच्चारणधर्मोऽपि मात्रिकत्व भ्रान्त्या शब्दधर्मतया गम्यमानमङ्गमिति ॥५२॥

कथम् ? इत्याह—

**यादृशात् पूर्वदृष्टोऽसावर्थो गम्यते तादृशात् ।**

तथाविधस्यैव वृद्धव्यवहारादर्थेन सम्बन्धग्रहणादिति ।

परः स्वाशयमाविष्करोति—

**भ्रान्त्या कथं प्रतीतिश्चेत्,**

---

१. त्रिमात्रम्—३ पु. ।　　२. ०त्वनङ्गत्व—मु० पा० ।

परिहरति--

**नासावर्थमिति प्रति ॥ ५३ ॥**

भ्रान्तिरप्यसौ, शब्द एव पर्यवस्यति, न तु वाष्पधूमभ्रान्तिवदर्थप्रतीतौ संक्रामति। यथा ह्यरूपेण स्फटिकेन भ्रान्त्याऽवगतेनापि जपाकुसुमसन्निध्यनुमान न भ्रान्ति, तथाविधस्यैव सम्बन्धग्रहणात्, तथेहापि मात्रिकादिरूपेण प्रतीयमानस्यार्थेन सम्बन्धग्रहणम्, न वस्तुतो मात्रिकस्य। धूमस्य तु वस्तुत एव तादृशस्य सम्बन्धग्रहणमन्यादृशाद् वाष्पादग्निप्रतीतिर्भ्रान्तिरिति विशेषः। प्रत्यभिज्ञायते च ह्रस्वदीर्घादावेकं वर्णरूपम्। य एव ह्रस्वोच्चारणप्रयत्न. स एवानुपरमेण द्वयोर्मात्रयोरनुवर्त्तमानो दीर्घमभिव्यनक्ति। यद्यप्यसौ ह्रस्वादिरूपपरिहारेण न शक्यते दर्शयितुम्, तथापि तेपु व्यावर्त्तमानेष्वनुवर्त्तमान तदुपसहारेण मनसा हेमेव पारिहार्यादिभेदसहारेण सामान्य वा व्यक्तिपरिहारेण विवेकिभिर्निरूप्यते। तेनैक एव वर्णो मात्राकालेनोच्चारणेन तत्काले एवोपलभ्यमान. स्वयमपि तत्काल इव गम्यते, तथावगम्यमानश्चार्थविशेष प्रतिपादयतीति ॥ ५३ ॥

न च वाच्यम्--कथमन्यधर्मो मात्रिकत्वादिक शब्दस्यार्थविशेषप्रतिपादनेऽङ्गमिति, तथान्यत्रापि दर्शनादित्याह—

**यथाश्वादिजवः पुसा कार्याङ्गत्वं प्रकल्पयेत्।**
**परधर्मोऽपि वर्णानां ध्वनिधर्मा[1]स्तथैव नः ॥ ५४ ॥**

चोदयति—

**ननु दीर्घाद्यनित्यत्वाद् अनित्यो वाचको भवेत्।**

दैर्घ्यादिरुच्चारणधर्मत्वादनित्य', तद्युक्तस्य वर्णस्य वाचकत्वे वाचकरूपमनित्यं स्यादिति।

परिहरति—

**आनुपूर्वीवदेवास्य परिहारो भविष्यति ॥ ५५ ॥**

उदात्तादिभेदोऽप्यर्थविशेषौपयिकोऽपि दीर्घादिवदेव ध्वनिधर्मः, न वर्णधर्म इत्याह—

**तथोदात्तादिभेदानां संस्कारवशगा मतिः।**

दीर्घादिषु स्यादपि कदाचिद् भेदाशङ्का, न त्वत्रेत्याह—

**तेषां दीर्घादिवद् भेदो न कदाचित् प्रतीयते[2] ॥ ५६ ॥**

नन्वस्त्युदात्तोऽनुदात्त इति भेदबुद्धि ? अत आह—

**तत्रैकवर्णरूपत्वे भेदोऽपि स्याद् द्रुतादिवत्।**

नन्ववश्य द्रुतादिह्रस्वाद्युदात्तादिभेदार्थम् अकारैकारादिषु भिन्नजातीया ध्वनयः कल्पनीया, तद्वर्णभेदकल्पने को दोष' ? अत आह—

१. ०धर्म०—२ पु०। २. प्रतीयताम्—३ पु०।

**नात्र वर्णान्तरव्यक्तिरिव ध्वन्यन्तरोद्भवः ॥ ५७ ॥**

**त एव मृदुतीव्रत्वशीघ्रत्वादिसमन्विताः ।**

एकस्य वर्णस्यैकजातीया एव ध्वनय , तैरेव तु मृदुतीव्रत्वादिसमन्वितैर्द्रुतादिभेदसिद्धेर्न वर्णान्तराभिव्यक्ताविव ध्वन्यन्तरं कल्पनीयमिति ।

कथ पुनस्तैरेव ध्वनिभि. स एव वर्णो द्विविधमभिव्यज्यते ? अत आह—

**अभेदे चापि वर्णस्य ध्वनीनां द्विप्रकारता ॥ ५८ ॥**

तावेव प्रकारौ दर्शयति—

**केचित् स्वरूपबोधार्थाः केचिद् बोधानुवर्तिनः ।**

किन्निबन्धन. पुनरय विभाग. ? अत आह—

**युगपत्क्रमरूपेण संस्कारोत्पादहेतवः ॥ ५९ ॥**

युगपच्छ्रोत्रं संस्कुर्वन्तो वर्णस्वरूप बोधयन्ति, क्रमेण तु सस्कुर्वन्तो बोधमनुवर्त्तयन्तीति ॥ ५९ ॥

दीर्घादिबोधोपायत्वमिदानी विभज्य दर्शयति—

**तत्र दीर्घादिबोधः स्यात् पूर्वेषां प्रचयो यदा ।**

ननु द्वयोर्मात्रयो सस्कारानुवृत्तौ दीर्घबोधस्तेन बोधानुवृत्तिः, अतोऽयं कथ स्वरूपबोधार्थैर्जन्यत इत्युच्यते ? अत आह—

**वर्णात्मैव हि कालेन तावता तैः प्रतीयते ॥ ६० ॥**

सत्यम्, तत्र क्रमवर्त्तिनो ध्वनय क्रमेण सस्कार जनयन्तो बोधमनुवर्त्तयन्ति, तथापि तावता दीर्घेणापि कालेन वर्णात्मैत्र प्रतीयते । यादृश ह्यर्थप्रतीत्यौपयिकं तादृश वर्णस्वरूपत्वेन विवक्ष्यते, तावतैव कालेन दीर्घरूप प्रतीयते, प्रथमक्षणे तद्रूप प्रतिपन्नमेव पश्चादनुसन्धीयते, ततस्तावद्भिर्ध्वनिभिरपि वर्णस्वरूप बोध्यत इति युक्तम्—स्वरूपबोधार्थैर्दीर्घादिबोध इति ॥ ६० ॥

ते च क्रमवर्त्तिनोऽपि वर्णरूपोपलब्धिकालस्य सर्वस्यैकत्वेन विवक्षितत्वाद्युगपत्सस्कारहेतुत्वेनोक्ता इति तैरेव युगपत्प्रचितैरुदात्तादिबुद्धिर्बहुभिरुदात्त , अल्पै. स्वरित , अल्पतरैरनुदात्त इत्याह—

**युगपत्प्रचितैस्तैश्च स्यादुदात्तादिकल्पना ।**

बोधानुवृत्तिप्रचयेन द्रुतादिवृत्तिबोध इत्याह—

**प्रचये त्वितरेषां स्याद् वृत्तिभेदो द्रुतादिकः ॥ ६१ ॥**

अत्र द्रुतादिशब्देनातद्गुणसंविज्ञानबहुव्रीहिणा मध्यमविलम्बितयोरेव ग्रहणम् । न हि द्रुते बोधानुवृत्तिरस्ति, शीघ्रैर्ध्वनिभिः क्षणमात्र एव तद्बोधजननादिति ॥ ६१ ॥

---

१. व्यक्तिशक्तध्वन्य०—३ पु० ।

कथं बोधानुवृत्तिः, न हि क्षणिकस्य बोधस्यानुवृत्तिसम्भवः ? इत्यत आह उत्पादयन्त्यन्तेन—

**वर्णात्मन्यवबुद्धेऽपि तद्रूपामेव ते मतिम् ।**
**शनैरुत्पादयन्ति,**

सत्यम्, नैकस्य बोधस्यानुवृत्तिः, तथापि ह्रस्वरूपे वा वर्णात्मन्यवबुद्धे तादृशीमेव मतिमविच्छेदेन शनैः शनैरुत्तरोत्तरे ध्वनयो जनयन्तो बोधानुवर्त्तिन इत्युच्यन्त इति ।

उपसहरति—

**इति नान्यो वर्णः प्रतीयते ॥ ६२ ॥**

वर्णान्यत्वाभावे निष्प्रमाणकम् अत्वादिकमिति ॥ ६२ ॥

तत्रैतत् स्यात्, त्वया **मीमांसकेन** स्वपक्षानुरागादिदं व्यक्त्येकत्वं जातिनिराकरणं च क्रियते, न त्वेतत् न्याय्यम्, अत आह—

**व्यक्त्याकृतिकृतो भेदो यद्यप्येकान्ततो भवेत् ।**
**वर्णेषु जैमिनेः पक्षस्तथापि न विरुध्यते[1] ॥ ६३ ॥**

अतोऽन्याय्यत्वादेवेदमुच्यते, न स्वसिद्धान्ताभिनिवेशादिति ॥ ६३ ॥

कथमविरोध ? अत आह—

**नित्यत्वयत्नः सर्वोऽपि गत्वादिषु भविष्यति ।**

"गकारौकारविसर्जनीयाः" ( शा० भा० पृ. ५४ ) इति भाष्यमपि गत्वाद्यभिप्रायकं शक्य व्याख्यातुमित्याह—

**गकारादिवचश्चैतत् तेष्वेव न विरोत्स्यते ॥ ६४ ॥**

गोशब्दावयविनमिदानी निराकरोति—

**विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यैः सर्वगतैरपि ।**
**व्यतिरिक्तपदारम्भो वर्णैर्नात्रोपपद्यते ॥ ६५ ॥**

युगपदवस्थितैरेवावयवैरवयवी आरब्धव्यः, न च वर्णानामुपलब्धितो यौगपद्यम्, विच्छिन्नयत्नव्यङ्ग्यत्वात्, सत्तायौगपद्येन त्वारम्भे नित्यत्वाद्विभुत्वाच्च सर्वे सर्वमारभेरन् । किञ्च, अवयवाधिकपरिमाणेनावयविना भवितव्यम्, न च विभुभ्यः कस्यचिदाधिक्यं सम्भवतीति न वर्णैरवयव्यारम्भ इति ॥ ६५ ॥

तदनारम्भे च तत्समवेतं गोशब्दत्वं दूरापास्तमित्याह—

**अनारब्धे च गोशब्दे गोशब्दत्वं कथं भवेत् ।**

सत्यप्यवयविनि निष्प्रमाणकमेव गोशब्दत्वम् गवादिवदित्याह—

**वर्णसामान्यवच्चापि न तत्कल्पनमर्हति ॥ ६६ ॥**

---

१. विरोत्स्यते—३ पु० ।

ननु गव्यक्त्येकत्वात् तत्सामान्यबुद्धिर्युक्ता, गोशब्दावयवी तु प्रत्युच्चारणमन्यो-ऽन्यश्चेति कथमसति सामान्ये तुल्यबुद्धि. ? अत आह—

**वर्णात्मनामभेदाच्च सिद्धा सामान्यधीरपि।**

ते एव वर्णास्तेनैव क्रमेण ह्यस्तनाद्यतनगोशब्दयोरवस्थिता इति तदुपाधि-कृताभेदबुद्धिरिति।

समुदायोऽपि वर्णातिरिक्तोऽवयविवदेव निवार्यत इत्याह—

**समुदायोऽपि तेभ्योऽन्यो वारणीयोऽनया दिशा॥ ६७॥**

वर्णा एव त्वेकमर्थप्रतिपत्तिलक्षण कार्य कुर्वन्तस्तेनैवोपाधिना समुदायशब्दे-नोच्यन्ते, न ततो भिन्नं समुदायान्तरमिति चेत् ? तदिष्टमेवेत्याह—

**अभेदसमुदायस्तु तेषां धर्मो न दुष्यति।**

कथं न दुष्यति ? अत आह—

**तेषामस्ति हि सामर्थ्यमर्थप्रत्यायनं प्रति॥ ६८॥**

वर्णानां ह्यस्त्यर्थप्रत्यायनसामर्थ्यम्, अतस्तेषा तदुपाधिकृता समुदायापत्ति-र्युक्तेति॥ ६८॥

कथं पुनस्तेषा प्रत्यायनसामर्थ्यम्, ते हि प्रत्याययन्त सर्वे सर्वार्थान् प्रत्याय-येयुः, वर्णत्वाविशेषात्। किञ्च, प्रत्येक वा वर्णा. प्रत्याययेयुः, संहृत्य वा। न तावत् प्रत्येकमर्थप्रतीतिर्दृश्यते, साहित्यं तु क्रमवर्त्तिनामसम्भवनीयमेव। तथा न्यूनाधिकत्वे क्रमभेदे कर्तृभेदे च वर्णरूपाविशेषादर्थप्रतीति. स्यात् ? अत आह—

**यावन्तो यादृशा ये च यदर्थप्रतिपादने।**
**वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥ ६९॥**

व्यवहारावगम्य हि वाचकत्वं नास्मदिच्छाधीनम्, अतो यथादर्शन तदभ्युप-गमान्न काचिदतिप्रसक्तिरिति॥ ६९॥

कीदृशानां पुनः सामर्थ्यं दृष्टम् ? तद् दर्शयति—

**तेषां तु गुणभूतानामर्थप्रत्यायनं प्रति।**
**साहित्यमेककर्त्रादिक्रमश्चापि विवक्षितः॥ ७०॥**

गुणभूता ह्यर्थप्रत्यायने वर्णाः, तेनैषा साहित्यमेककर्तृत्वमादिशब्दोपात्त चा-न्यूनाधिकत्व क्रमविशेष इति सर्वं विशेषण विवक्षितम्॥ ७०॥

कि पुनः क्रमविवक्षाया तद्विशेषे वा प्रमाणम् ? तद्दर्शयति—

**कर्त्रैकत्वे निमित्ते च क्रमे सति नियामकम्।**
**प्रयुञ्जानस्य यत् पूर्वं वृद्धेभ्यः क्रमदर्शनम्॥ ७१॥**

न ह्येको वक्ता युगपदनेकवर्णोच्चारणक्षम इत्यवश्यम्भावी तावत् क्रमः, तेन य एव वृद्धव्यवहारे दृष्टः स एव नियम्यते, तस्यैवार्थप्रतीतावङ्गत्वावगमादिति॥७१॥

ननु साहित्यं क्रमश्च परस्परमेकत्र विरूद्धम्, अतः साहित्यसिद्धयर्थं यौगपद्य-मेवाश्रीयताम् ? अत आह—

**यौगपद्यं त्वशक्यत्वान्नैव तेषामिहाश्रितम् ।**

सत्यम्, तत्त्वशक्यमिति त्यक्तमिति ।

शक्यत्वे वा कर्तृभेदः स्यात् ? इत्याह—

**कर्तृभेदश्च तत्र स्यात्,**

तत को दोष. ? अत आह—

**न चैवं दृश्यतेऽभिधा ॥ ७२ ॥**

वक्त्रैकत्वमपि हि अभिधानेऽङ्गम्, अनेककर्तृप्रयुक्तेभ्योऽभिधानादर्शनात् । नन्वनवधारयन्तोऽपि वक्त्रेकत्वमर्थमवधारयन्त कलकले दृश्यन्ते, अत· कथं तस्या-ङ्गत्वम् ? एकस्मिन् वक्तरि वर्णाना नैरन्तर्यविशेष. स्वरविशेषश्च निष्पद्यते, तच्चा-र्थप्रतीत्यङ्गम्, तन्निष्पत्त्युपयोगि वक्त्रेकत्व न साक्षादर्थप्रत्यायनेऽङ्गम् । न हि तन्निष्पत्ति कथञ्चिदपि वक्तृभेदे सम्भवति, तादृश च रूप कलकलेऽप्यवगम्यते एवेति न कश्चिद्दोष ॥ ७२ ॥

किञ्च, यद्यप्येकस्मिन्नपि वक्तरि यौगपद्य शक्य स्यात्, तथापि क्रमविशेष-शालिनामेव वर्णाना व्यवहारेऽर्थप्रत्यायनक्तिदर्शनान्न यौगपद्ये शक्तिः स्यात्, युग-पदुच्चाधारणसमर्थानामिव ग्राव्णा क्रमे, तदाह—

**युगपद् दृश्यसामर्थ्या[1] नैव शक्ताः क्रमे यथा ।**
**भावास्तथा क्रमे शक्ता यौगपद्ये न शक्नुयुः ॥ ७३ ॥**

नन्वेव सहृत्यकारित्व विरुध्यते ? अत आह—

**दृष्टश्च पूर्णमासादेः क्रमः संहृत्यकारिणः ।**
**अभ्यासाना च लोकेऽपि स्वाध्यायग्रहणादिषु ॥ ७४ ॥**

न केवलमाग्नेयादिसाधानषट्कस्यैव क्रमवर्त्तिनः सहृत्यकारित्वम्, किन्तु साध्यसाधनेतिकर्त्तव्यताना त्रयाणामप्ययुगपद्भुवामेवैककाले व्यापार सर्वत्र वेदे लोके चास्ति, यदैव स्वर्गस्तदपूर्व वा भवने व्याप्रियते तदैव करणं तद्भाव-यति, इतिकर्त्तव्यता च करणमुपकरोति, अतो नेह वर्णेषु सहृत्यकारित्ववशेन क्रमोपालम्भो युक्त इत्याह—

**साधनादित्रयाणां च व्यापारस्यैककालता ।**
**सर्वत्रास्तीति नेह स्यादुपालम्भः क्रमं प्रति ॥ ७५ ॥**

ननु तत्रापूर्वाख्यावान्तरव्यापारद्वारेण युक्त साहित्यम्, वर्णानां तु न तादृग् व्यापारो दृश्यते ? अत आह—

**निष्पन्ना एव दृश्यन्ते व्यापाराः सर्व एव हि ।**
**सूक्ष्मा व्यापारभेदास्तु दृश्यते न कदाचन ॥ ७६ ॥**

१. दृष्ट०—३ पु० ।

फलापवर्गित्वात् क्रियाणा तन्निष्पत्त्या निष्पत्तिवाचोयुक्ति.। **निष्पन्ना.** कृतकार्या इत्यर्थ.। येऽपि ह्यन्येऽवान्तरव्यापारा यथानुभवतैलपानादिजन्याः सस्कारास्तेऽपि फलनिष्पत्त्यैव कल्प्यन्ते, न तत प्राक् स्वरूपेण दृश्यन्ते, सूक्ष्मत्वाद्, अतीन्द्रियत्वादित्यर्थ.। तथा वर्णावान्तरव्यापाराणामप्यर्थप्रतिपत्तिलक्षणकार्यकल्प्यत्वात् स्वरूपादर्शनमदोष इति ॥ ७६ ॥

नन्वाग्नेयादीनामेव स्वरूपसाहित्य कि नेष्यते ? अत आह द्वयेन—

**एकसाधनसंस्थाश्च व्यापारावयवा यदा।**
**स्वरूपतो निरीक्ष्यन्ते यौगपद्यमसत् तदा ॥ ७७ ॥**
**किं पुनर्बहवो भिन्ना भिन्नसाधनसंश्रिताः।**
**भवेयुर्यौगपद्येन व्यापाराः क्रमवर्तिनः ॥ ७८ ॥**

एकस्यापि साधनस्य यागस्य होमस्य वा ये व्यापारावयवा·—उद्देश:, त्याग', प्रक्षेपश्च, तेषामपि तावत् स्वरूपयौगपद्य नास्ति। तत्रावश्य पूर्वपूर्वैरवयवै किञ्चिददृष्ट जन्यते, तत्सहितश्चान्तिमोऽवयव कार्यमारभत इत्यङ्गीकर्त्तव्यम्, कि पुनर्भिन्नानामाग्नेयाग्नीषामीयादीना स्वरूपयौगपद्य स्यादिति ॥ ७७-७८ ॥

कथ तर्ह्ययुगपद्भुवा वतमानापदेशो दर्शो वर्त्तते ? इत्यत आह—

**यदा त्वाद्यपरिस्पन्दाद् प्रभृत्या फललाभतः।**
**क्रिया पूर्वापरीभूता लक्ष्यते वर्त्तते तदा ॥ ७९ ॥**

न घटादिवन्निष्पन्नाऽविनष्टतया व्यापारेषु वर्त्तमानापदेश:, किन्त्वेकफलावच्छिन्ना बह्ववयवात्मिका क्रिया, तस्याम् आद्यपरिस्पन्दात् प्रभृत्या फलनिष्पत्तेः पूर्वापरीभावेन लक्ष्यमाणाया वर्त्तमानत्वापदेश इति ॥ ७९ ॥

इममेव वर्त्तमानप्रकार वर्णव्यापारेऽप्यभिधाने दर्शयति—

**तेनात्रापि विवक्षातः प्रभृत्याऽर्थावबोधनात्।**
**साकल्येनेक्ष्यमाणे स्याद् व्यापारे वर्त्तमानता ॥ ८० ॥**

ननु फलानुमेयोऽभिधाव्यापार. तत प्रागनुपलभ्यमान. कथ वर्तमानतया व्यपदिश्यते—गामभिधत्ते देवदत्त इति ? अत आह—

**प्रत्येकं ये पुनस्तत्र व्यापारास्तन्निरूपणम्।**
**फलानिष्पत्तितो न स्यान्नास्तित्वं न च तावता ॥ ८१ ॥**

प्रागपि हि फलादस्त्येव व्यापार इति ॥ ८१ ॥

सतोऽपि कथमज्ञातस्य वर्त्तमानापदेश', फलनिष्पत्तिसमये तु सोऽतीतः ? अत आह—

**फलानुमेयतायां च व्यापारस्य फलं प्रति।**
**कारकाणां यथास्थानं व्यापारे वर्तमानता ॥ ८२ ॥**

यद्यपि फलानुमेयोऽयम्, तथापि यथावस्थितेभ्यो वर्णेभ्योऽर्थप्रतीति दृष्ट्वा

वर्णानां व्यापारं प्रागनुमितवान्, तथावस्थानं पुनर्दृष्ट्वा शक्यमेव व्यापारे वर्त्तमानतामनुमातुं यथास्थानं स्थानानुरूपेणेत्यर्थः ॥ ८२ ॥

ननु सर्वेषां प्रत्यायकत्वे सिद्धे स्यात् संस्कारकल्पनम्, तत्त्वन्तिमस्यैव-आनन्तर्यविशेषात् ? अत आह—

**अवश्यम्भाविनी नित्यं[1] प्रत्यासत्तिश्च कस्यचित् ।**
**न तावता व्यपेतत्वात्[2] इतरेषामनङ्गता ॥ ८३ ॥**

अवर्जनीयं बहुषु कस्यचिदानन्तर्यम्, इतरेषां व्यवधानम् । न तावता व्यवहितानामङ्गत्वम्, तदनङ्गत्वे हि तद्रहितन्तिममात्रादर्थप्रतीतिः स्यादिति ॥८३॥

अथ वा नावर्जनीयत्वमात्रेण पूर्वेषा व्यवधानम्, किन्तु विवक्षितमेव, तथाविधानामेव सामर्थ्यादित्याह—

**द्व्यन्तरैकान्तरत्वेन गकारौकारयोर्ध्रुवम् ।**
**अर्थप्रत्यायने शक्तिस्तत्रस्थौ गमकौ यतः ॥ ८४ ॥**

एतदेव दृष्टान्तेनोपपादयति—

**यथा विसर्जनीयस्य व्यवधाने न शक्तता ।**
**तथैवेतरयोः[3] शक्तिरानन्तर्ये न विद्यते ॥ ८५ ॥**

ननु प्रत्येक तावद् वर्णानामर्थप्रतीतौ नास्ति शक्ति., सहृता अपि त एवेति कथ शक्ता भवन्ति ? अत आह—

**न च यत्रैकशोऽशक्तिस्तत्र सर्वेष्वशक्तता ।**
**तथा ह्यङ्गानि दृश्यन्ते शाल्यादिवहनादिषु ॥ ८६ ॥**

सहितेष्वित्यर्थ. ॥ ८६ ॥

चोदयति द्वयेन—

**शक्तिस्तत्रास्ति काचिद्धि वंहने सा समृद्ध्यते ।**
**सङ्घाते(न) तु वर्णानां प्रत्येकं काचिदीक्ष्यते ॥ ८७ ॥**
**न ह्यर्थावयवः कश्चित् प्रत्येकं तैः प्रतीयते[3] ।**
**समस्तस्याथ वा कश्चिद् बोधलेशोऽत्र जायते ॥ ८८ ॥**

प्रत्येकमपि रथाङ्गानामस्त्येव कियत्यपि वहने शक्तिः, संहृताना तु सा समुच्चीयते, वर्णाना तु प्रत्येकं न काचिदर्थैकदेशो बोधैकदेशो वा शक्तिरस्ति, या सङ्घाते समुच्चीयेतेति ॥ ८८ ॥

परिहरति—

**रथस्यापि तु यत् कार्यं शाल्यादिवहनं न तत् ।**

---

१. तत्र—२ पु० । २. व्यवेतत्वात्—२ पु० ।

३–३. तथैवेत्याद्यर्धषट्कं त्रुटितं दृश्यते का०, सं०, २ पुस्तकेषु ।

**प्रत्येकं दृश्यते किञ्चिन्मनागपि यथेहितम्[1] ॥ ८९ ॥**

रथकार्ये तावदङ्गानां नास्त्येव शक्तिरिति ॥ ८९ ॥

अथ यत्किञ्चिद् वहनसामर्थ्यमुच्येत, वर्णानामपि यत्किञ्चिद् बोधसामर्थ्यमस्त्येव, स्वात्मप्रत्ययहेतुत्वात्, विषयोऽपि हि कारणम् प्रत्यक्षप्रतीतेरर्थेऽपि क्वचिदस्त्येव, केषाञ्चित् प्रत्येकमेव शक्ति. ककारस्येव परस्यां देवतायाम् ? इत्याह—

**अथ यत्किञ्चिदुच्येत वहने तदिहापि नः ।**
**स्वात्मप्रत्ययहेतुत्वं वर्णेष्वर्थेऽपि वा क्वचित् ॥ ९० ॥**

यच्च वर्णानामर्थप्रत्यायने चोद्यम्, तत् सर्वं स्फोटवादिनोऽपि ध्वनीनां वर्णानां वा तदभिव्यक्तौ तुल्यमेवेत्याह—

**यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः ।**
**सोऽपि पर्यनुयोगेन नैवैतेन विमुच्यते ॥ ९१ ॥**

वर्णग्रहणमनास्थयोक्तम्, ध्वनीनामेव व्यञ्जकत्वस्य परैरिष्टत्वात् ॥९१॥

तुल्यत्वमेव दर्शयति—

**तत्रापि प्रतिवर्णं हि पदस्फोटो न गम्यते ।**
**न चावयवशो व्यक्तिस्तदभावान्न चात्र धीः ॥ ९२ ॥**
**प्रत्येकं चाप्यशक्तानां समुदायेऽप्यशक्तता ।**
**तत्र यः परिहारस्ते स नोऽत्रापि भविष्यति ॥ ९३ ॥**

ध्वनीनामपि साहित्यम्, एककर्तृत्व क्रमश्च विवक्षित., क्रमवर्त्तिनां च स्वरूपसाहित्यासम्भवात् संस्कारकल्पनापि तुल्यैव । तदुक्त **भाष्यकारेण** "शब्दकल्पनायां सा च शब्दकल्पना च" ( शा० भा० पृ. ५८ ) इति । यच्च प्रत्येकाशक्तौ समुदायेऽप्यशक्तिरिति ? तदपि तुल्यम्, न हि ध्वनय[2] प्रत्येकं स्फोटान् व्यञ्जयन्ति, तथा सत्युत्तरनादवैयर्थ्यात्; पूर्वैरस्फुटाभिव्यक्ति. परैः स्पष्टोऽभिव्यज्यत इति चेत् ? एवं तर्हि य एव स्पष्टाभिव्यञ्जकास्तैरेव भवितव्यम्, अल पूर्वै. । अथ न कुतश्चिदप्यन्यानपेक्षा स्फुटाभिव्यक्तिः, किन्तु पूर्वजनितास्फुटप्रकाशाहितसस्कारसहितैरुत्तरोत्तरै स्फुटाभिव्यक्तिरिति चेत्, एवं तर्हि तैरेव नादैरावर्त्यमानैः शब्दस्फुटाभिव्यक्तिसिद्धेर्विजातीयनादाश्रयणवैयर्थ्यम्, व्युत्क्रमेऽपीदृशाभिव्यक्तिसिद्धेः क्रमविशेषादरोऽनर्थक. स्यात् । तस्मान्नैकैकश. शक्तिरिति दोषे तुल्यत्वम् । तत्रावश्य सहतानामभिव्यञ्जकत्वं सस्काराश्रयण चावर्जनीयम्, तदर्थप्रतीतावेव वरमाश्रितम्, कि स्फोटाभ्युपगमेनेति ॥ ९२-९३ ॥

यदि तुल्यत्वम्, कः स्फोटाभ्युपगमे दोषः ? अत आह—

---

१. यथेप्सितम्—३ पु० ।

२. नाद इति । स्फोट इत्यर्थः ।

**सद्भावव्यतिरेकौ च तथावयववर्जनम् ।**
**तत्राधिकं भवेत् तस्माद् यत्नोऽसावर्थबुद्धिषु ॥ ९४ ॥**

स्फोटसद्भावो वर्णेभ्यश्च व्यतिरेकः सावयवे पदे गम्यमाने तद्विपरीतं निरवयवत्वं कल्पनीयम् । तस्माद् योऽवश्याश्रयितव्यः संस्कारादिकल्पनांशः सोऽर्थबुद्धावेवाश्रयितव्यः, न स्फोटाभिव्यक्ताविति ॥ ९४ ॥

अथ वा, सस्कारोऽपि न कल्पनीयः, तदभावेऽप्यर्थप्रतीत्युपपत्तेरित्याह—

**नान्यथानुपपत्तिश्च भवेदर्थमतिं प्रति ।**

किं पुनरसति सस्कारेऽर्थप्रतीतेर्निमित्तम् ? अत आह—

**तदेवास्या निमित्तं स्याज्जायते यदनन्तरम् ॥ ९५ ॥**

तदेव दर्शयति—

**सा च वर्णद्वयज्ञानेऽतीतेऽन्त्यज्ञानतः परा ।**
**भवतीतीदृगेवास्या निमित्तमवकल्पते[1] ॥ ९६ ॥**

कथमसति सस्कारेऽतीतस्य निमित्तत्वम् ? अत आह—

**विना संस्कारकल्पेन तदनन्तरवृत्तितः ।**
**कृतानुग्रहसामर्थ्यो वर्णोऽन्त्यः[2] प्रतिपादकः ॥ ९७ ॥**

पूर्ववर्णैरुत्तरस्यानन्तरवृत्तत्वेन दृष्टेनैवानुग्रहाख्यं सामर्थ्यं कृतमिति किमत्रादृष्टसस्कारकल्पनया भाष्योक्त्या समाश्रितयेति ॥ ९७ ॥

केचित् पुनर्भाष्येऽपि सस्कारशब्देनानन्तरवृत्तित्वमेवाच्यतइति प्राहुरित्याह—

**एष एव तु संस्कार इति केचित् प्रचक्षते ।**

कारणमाह—

**अदृष्टकल्पनातीतं तावन्मात्रं हि दृश्यते ॥ ९८ ॥**

अयं तु द्विविधोऽपि सस्कारानाश्रयणपक्षोऽनुपपन्न इति मत्वा सस्कारकल्पनामपि परिहरन् पक्षान्तरमाह संस्कारोऽन्तेन—

**अथ वा वासनैवास्तु संस्कारः,**

स च सर्वत्र सर्ववादिनामविवादसिद्धः, नात्रैवास्माकं विशेषतः कल्प्य इत्याह—

**सर्व एव हि ।**
**दृढज्ञानगृहीतेऽर्थे संस्कारोऽस्तीति मन्वते ॥ ९९ ॥**

यथाहुः—'वस्तुधर्मो ह्येष यदनुभवः पटीयान् स्मृतिबीजमाधत्ते' इति ॥९९॥

तस्य तु सम्प्रतिपन्नस्वरूपस्यार्थप्रतीतिहेतुत्वमात्रे विवादः । तत्र च स्मृताविव तद्भावभावादेवार्थप्रतीतावपि तस्य सुकल्पमेव सामर्थ्यमित्याह—

---

१. ०कल्प्यते—३ पु० ।   २. वर्णेभ्यः—१ पु० ।

**तस्यार्थबुद्धिहेतुत्वे विसंवादोऽस्य निर्णये ।**
**तद्भावभाविताहेतुरन्यत्रैव[1] प्रतीयते ॥ १०० ॥**

संस्कारानाश्रयणे दोषमाह—

**संस्कारे निष्प्रमाणे तु पूर्ववृत्तत्वकल्पनम् ।**
**निष्प्रमाणकमेवेति नानुग्रहफलं भवेत् ॥ १०१ ॥**

न हि विनष्टस्यासतोऽनारब्धावान्तरव्यापारस्योत्तरानुग्राहकत्वं सम्भवति । असति च तदनुग्राहकत्वे पूर्ववृत्तत्वं निष्फलमप्रमाणकं स्यादिति ॥ १०१ ॥

ननु स्मृतिहेतो. कथ कार्यान्तरे सामर्थ्यम् ? अत आह—

**यद्यपि स्मृतिहेतुत्वं संस्कारस्य व्यवस्थितम् ।**
**कार्यान्तरेषु[2] सामर्थ्यं न तस्य प्रतिषिध्यते ॥ १०२ ॥**

सम्भवति ह्येकस्याप्यनेकत्र सामर्थ्यम्[3], कर्मवत्सयोगविभागयोरिति ॥१०२॥

उपसहरति—

**तेन संस्कारसद्भावो नानेनैवं प्रकल्प्यते[4] ।**
**तस्यार्थबुद्धिहेतुत्वमदृष्टं केवलं कृतम् ॥ १०३ ॥**

नन्वेवमप्यस्त्येवादृष्टकल्पना ? अत आह—

**शब्दपक्षेऽपि तच्चैतददृष्टत्वान्न मुच्यते ।**

स्फोटशब्दपक्षे ह्यवश्य सस्कारान्तर स्मृतिहेतोरेव वा तदभिव्यक्तिसामर्थ्यमदृष्टमेव कल्प्यम्, तच्चास्माभिरर्थप्रतीतावेव कल्पितमिति ।

किञ्च, यदस्माभिः सस्कारस्यार्थप्रतीतिसामर्थ्यं कल्प्यते, तद्भवतापि स्फोटस्यावश्य कल्पनीयमेव, संस्कारस्य तु स्फोटाभिव्यञ्जकत्वमधिकमित्याह—

**कार्यबोधनशक्तत्वं तुल्यं संस्कारशब्दयोः ॥ १०४ ॥**

तदेव त्वत्पक्षेऽपि प्रथमसंस्कारपक्षस्यावश्यम्भावित्वात् तेनैवोपपन्नार्थप्रतीतिर्न स्फोटकल्पनायालमित्याह—

**क्षीणार्थापत्तिरेवं च न स्फोट परिकल्पयेत् ।**
**संस्कारकल्पना पूर्वमवश्यम्भाविनी हि ते ॥ १०५ ॥**

ननु यदि स्फोटाभिव्यञ्जकैरेवार्थप्रतीतिमङ्गीकृत्य स्फोटोऽयं परिह्रियते, ततो वर्णाभिव्यञ्जकैर्ध्वनिभिरेवार्थप्रत्ययोपपत्तेर्वर्णैरपि किमभ्युपगतैः ? अत आह—

**ध्वनिभ्योऽप्यपरस्तावन्नेष्येतार्थमतिं प्रति ।**
**ते वा यद्युपलभ्येरन् वर्णाः प्रत्यक्षतो न च ॥ १०६ ॥**

स्यादेवम्, यदि वर्णवद् ध्वनयः प्रत्यक्षाः स्युः, यदि वा वर्णाः स्फोटवद-

---

१. अन्यत्रैव—मु० पा० ।
२. कार्यान्तरेऽपि—३ पु० ।
३. अनेकत्वसामर्थ्यम्—३ पु० ।
४. प्रकल्पिते—३ पु० ।

तदनभ्युपगमे दोषमाह—

**न चेत् तदाभ्युपेयेत[1] क्रमदृष्टेषु नैव हि ।**
**शतादिरूपं जायेत तत्समुच्चयदर्शनम् ॥ ११४ ॥**

उपसहरति—

**तेन श्रोत्रमनोभ्यां स्यात् क्रमाद् वर्णेषु यद्यपि ।**
**पूर्वज्ञानं परस्तात् तु[2] युगपत् स्मरणं भवेत् ॥ ११५ ॥**

क्रमोच्चारिताश्च वर्णाः स्वयमक्रमा अप्युपलब्धिक्रमारोपेण क्रमवन्त इव प्रतीयन्ते, तत. पश्चाच्च युगपत्स्मर्यमाणा अपि तत्क्रमतः स्मर्यमाणा अर्थप्रत्यायका इति न व्युत्क्रमोच्चारणेऽर्थप्रतीतिप्रसङ्ग इति ॥ ११५ ॥

अस्मिश्च पक्षे 'शब्दादर्थं प्रतिपद्यामहे' इति लौकिकं वचनमुपपन्नतरम्, स्मृत्यारूढाना शब्दानामव्यवधानेनैवार्थप्रतीतिहेतुत्वादित्याह—

**तदारूढास्ततो वर्णा न दूरेऽर्थावबोधनात् ।**
**शब्दादर्थमतिस्तेन लौकिकैरभिधीयते ॥ ११६ ॥**

**वैयाकरणास्तु** "गौरित्येव गकारादिविलक्षण शब्दान्तर प्रत्यक्षमवगम्यते" इत्याहु, तेषा च भ्रान्तिरेव, भ्रान्तौ चेयमेव चित्रा बुद्धिर्निमित्तम्, एकैकज्ञानविलक्षणेयमन्त्यवर्णांशे च प्रत्यक्षा, तावतैव प्रत्यक्ष· स्फोट इति विभ्रमः । तदिदमाह—

**चित्रबुद्ध्यानया भ्रान्त्या वर्णेभ्यो व्यतिरेकतः ।**
**पश्चाद् गौरिति विज्ञानं प्रत्यक्षं कैश्चिदिष्यते ॥ ११७ ॥**

कथ पुनरय भ्रमः, नन्वेवमस्त्येवास्यैकैकज्ञानाद् वैलक्षण्यम् ? अत आह—

**वैलक्षण्यं तु तस्येष्टमेकैकज्ञानतः स्फुटम् ।**
**वर्णरूपावबोधात् तु न तदर्थान्तरं भवेत् ॥ ११८ ॥**

सत्यमस्ति ज्ञानस्य वैलक्षण्यम्, कथमसत्यर्थान्तरे ज्ञानवैलक्षण्यम् ? अत आह—

**यदि चार्थान्तरत्वं स्यादेकैकस्माद् त्रयस्य तत् ।**
**वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते ॥ ११९ ॥**

तुष्यतु भवान्, अस्त्यर्थान्तरम्, तत्तु वर्णत्रयमेकैकस्मादर्थान्तरम्, तत्परित्यागेन त्वर्थान्तरमनुपलब्धिनिरस्तमिति ॥ ११९ ॥

कथं पुनरसति शब्दान्तरे नानाभूतेषु वर्णेषु गोशब्द इत्येकशब्दावभासः ? अत आह—

**गौरित्येकमतित्वं तु नैवास्माभिर्निवार्यते ।**
**तद्ग्राह्यैकार्थताभ्यां[3] च शब्दे स्यादेकतामतिः ॥ १२० ॥**

---

१. तदभ्यवेयेत—३ पु० । २. न—मु० पा० । ३. एकार्थतायाश्च—३ पु० ।

एकबुद्धिविषयत्वादेकार्थत्वाद् वा एकत्वव्यपदेश इति ॥ १२० ॥

ननु न व्यपदेशमात्रम्, गौरित्येकपिण्डविषया मतिरेवोपजायते ? अत आह—

**शैघ्र्यादल्पान्तरत्वाच्च गोशब्दे सा भवेदपि ।**

**देवदत्तादिशब्देषु स्फुटो भेदः प्रतीयते ॥ १२१ ॥**

गोशब्दस्याज्झलोः सश्लेषादेकताभ्रान्ति , न हि तत्र वर्णभेदमपि प्रतिपत्तारो मन्यन्ते, अतो निर्विवादमस्या भ्रान्तित्वम्, यत्र देवदत्तादिशब्दे वर्णभेदावसायः न तत्रास्त्येकशब्दावगतिरिति ॥ १२१ ॥

अत्र भाष्यम् "गौण एष शब्द इति चेत्, न गोणोऽक्षरेपु निमित्तभाव." (शा० भा० पृ ५८ ) इति, तत्र 'गौण ' इति विच्छिद्य पूर्वेण योजयति—

**न गौणः शब्द इत्येवं ग्रन्थसम्बन्धनं भवेत् ।**

शब्दे हि चोदित गौणत्वं तत् तत्रैव परिहर्तुं युक्तम्, निमित्तभावे तु तत्परिहारोऽसङ्गतः स्यादित्यभिप्राय. ।

अक्षरेषु निमित्तभाव इति तस्यैव हेतु इत्याह—

**अस्त्यक्षरेषु हेतुत्वं तत्परं वचनं हि तत् ॥ १२२ ॥**

हेतुत्वपरमेव लोकिकं वचनमिति ॥ १२२ ॥

कथम् ? इत्याह—

**शब्दादिति च हेतुत्वं पञ्चम्यात्राभिधीयते ।**

व्यवहितस्याप्यस्त्येव हेतुत्वमिति ।

स्फोटपक्षेऽप्यस्त्येव व्यवधानमित्याह—

**भवत्पक्षेऽपि चैकान्ताज्ज्ञानेन व्यवधिर्भवेत् ॥ १२३ ॥**

तदेव व्यवहितस्यापि हेतुत्वसम्भवाच्च गौणत्वमित्युक्तम् ॥ १२३ ॥

इदानी व्यवधानमेव नास्तीत्याह द्वयेन—

**गौणोऽन्यथा प्रसिद्धो वा प्रयुज्येतान्यथा यदि ।**

**न चान्यादृङ्निमित्तत्वं कस्यचित् सम्प्रतीयते ॥ १२४ ॥**

**स्वव्यापारव्यवायो हि सर्वस्मिन्नेव कारके ।**

**दृष्टो व्यापार ईदृक् तु शब्दस्येत्यव्यवेतता[1] ॥ १२५ ॥**

यादृशं हि शब्दस्यार्थप्रतिपत्तिहेतुत्वम्, ततोऽन्यादृशं न कस्यचिदप्यस्ति, स्वव्यापारव्यवायस्य सर्वत्र नियतत्वात् । संस्कारश्च शब्दस्य व्यापार एव, तेनेदृशं व्यवधानमव्यवधानमेवेति स्फोटं प्रति 'शब्दादर्थं प्रतिपद्यामहे' ( शा० भा० पृ. ५६ ) इति वचनस्यानुपपत्तिरित्याह—

**गकारादेर्यदा चान्यो न लोके शब्द उच्यते ।**

**तदा तस्मात् प्रतीतेऽर्थे शब्दादिति कथं भवेत् ॥ १२६ ॥**

१. अव्यपेतता—१. पु० ।

यदि शब्दज्ञानजनितसंस्काराभिव्यक्तस्फोटजन्योऽर्थप्रत्यय' शब्दजन्य इत्युच्यते ततोऽनेकव्यवधानादिति गौणत्वं स्यादित्याह—

**शब्दज्ञानादिसंस्कारव्यक्तस्फोटकृतेऽथ वा ।**
**प्रत्यये शब्दजन्यत्वमिति गौणं प्रसज्यते ॥ १२७ ॥**

नन्वस्तु व्यवहितस्यापि तज्जन्यत्वव्यपदेशः, सस्कारस्यापि त्वव्यवहितस्य शब्दजन्यत्वं किमिति लोके न व्यपदिश्यते ? अत आह सार्द्धेन—

**संस्कारजननार्थं च न शब्दोच्चारणं मतम् ।**
**अर्थप्रतीतिमुद्दिश्य प्रयुक्तस्य क्रमादयम्[1] ॥ १२८ ॥**
**तस्मात् तादर्थ्यतः शब्दः फलेन व्यपदिश्यते ।**

समुच्चयज्ञानपक्षे तु नास्त्येव व्यवधानमित्युक्तमेवेत्याह—

**समुच्चयावबोधे तु व्यवधानं न केनचित् ॥ १२९ ॥**

**भाष्यकारीये**ऽपि पक्षे शक्यमेवाव्यवधानम्, एकवचनस्य च मुख्यत्व वक्तुम् इत्याह—

**यदि चापूर्व[2]संस्कार इतिकर्तव्यतेष्यते ।**
**वर्णोऽन्त्यो गमकस्तस्य शब्दत्वान्मुख्यता भवेत् ॥ १३० ॥**

एवमुपपादित स्फोटाभाव प्रयोगेण दर्शयति द्वयेन—

**वर्णा वा ध्वनयो वापि स्फोटं न पदवाक्ययोः ।**
**व्यञ्जन्ति व्यञ्जकत्वेन यथा दीपप्रभादयः ॥ १३१ ॥**
**सत्त्वाद् घटादिवच्चेति साधनानि यथारुचि ।**
**लौकिकव्यतिरेकेण कल्पितेऽर्थे भवन्ति हि ॥ १३२ ॥**

ध्वनिमात्रोपादाने शङ्खादिध्वनीना स्फोटाभिव्यञ्जकत्वस्य परैरनिष्टत्वादंशे सिद्धसाध्यत्व स्यात्, तन्मा भूदिति **पदवाक्ययो**रिति विशेषणम् । पदवाक्ययोर्वर्त्तमाना वर्णा ध्वनयो वा स्फोट नाभिव्यञ्जन्तीत्यन्वय ॥ १३२ ॥

वाचकत्वाभावेऽपि स्फोटस्य प्रयोगमाह वदन्तेन—

**नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः ।**
**घटादिवत्,**

न च दृष्टविरोध', स्फोटस्यासिद्धत्वेन वाचकत्वादृष्टेरित्याह—

**न दृष्टेन विरोधो धर्मसिद्धितः ॥ १३३ ॥**

नन्वसिद्धत्वेन धर्मिणः पक्षोऽप्यप्रसिद्धविशेष्यः स्यात् ? उक्तोत्तरमिदम् 'अवस्तुत्वेन साध्यत्वात्' ( श्लो० वा० स्फो० ३३ ) इत्यत्र, शक्यो ह्यविद्यमानेऽपि वाचकत्वाभावो दर्शयितुम् । ननु बुद्धावनारूढस्य कथमभावेनापि विशेष्यता ?

---

१. क्रमस्त्वयम्—३ पु० ।

२. अपूर्व इति । विलक्षण इत्यर्थः ।

नायमत्यन्तानारूढः, किं तर्हि ? शक्यते वर्णातिरिक्तो योऽर्थस्य वाचकतयेतरैः कल्पितः इत्येवं बुद्धावारोहयितुम् । एवमन्यत्रापि 'निर्विशेष न सामान्य भवेत् शशविषाणवत्' ( श्लो० वा० आकृ० १० ) इत्यादावूहनीयमिति ॥ १३३ ॥

यस्तु वर्णानपि वाचकतया निषेधेत्—सत्त्वाद् घटवदिति, तस्य दृष्टविरोध., वर्णज्ञानानन्तरमर्थप्रत्ययोद्भवदर्शनादित्याह—

**प्रतिषेधेत् तु यो वर्णान् तज्ज्ञानानन्तरोद्भवान् ।**
**दृष्टबाधो भवेत् तस्य शशिचन्द्रनिषेधवत् ॥ १३४ ॥**

वर्णजन्यत्वेऽर्थप्रत्ययस्य प्रयोगमाह—

**वर्णोत्था वार्थधीरेषा तज्ज्ञानानन्तरोद्भवा ।**
**येदृशी सा तदुत्था हि धूमादेरिव वह्निधीः ॥ १३५ ॥**

वर्णानेव वा पक्षीकृत्यार्थप्रतिपादकत्व साधनीयमित्याह पादत्रयेण—

**दीपवद्वा गकारादिर्गवादेः प्रतिपादकः ।**
**ध्रुवं प्रतीयमानत्वात्,**

वर्णानन्तरमर्थस्य प्रतीयमानत्वादित्यर्थ ।

हेत्वन्तरमाह—

**तत्पूर्वं प्रतिपादनात् ॥ १३६ ॥**

यत्पूर्व हि यत् प्रतिपद्यते तत्तस्य प्रतिपादकम्, यथा दीपारोपण प्रतिपद्यमानस्य घटस्य प्रतिपादकम् । वर्णोच्चारणपूर्वोऽर्थ प्रतिपाद्यते, अतो वर्ण. प्रतिपादक इति ॥ १३६ ॥

चोदयति—

**वर्णातिरिक्तः[1] प्रतिषिध्यमानः पदेषु मन्दं फलमादधाति ।**

परिहृति—

**कार्याणि वाक्यावयवाश्रयाणि सत्यानि कर्तुं कृत एष यत्नः ॥ १३७ ॥**

इति स्फोटवाद.

स्फोटपक्षे हि निरवयव वाक्य निरवयवस्य वाक्यार्थस्य वाचकम्, अवयवास्तु पदात्मका वर्णात्मकाश्च मृषाभूताः, ततश्च पदतदवयवाश्रितस्योहादेर्महावाक्यावयवान्तरवाक्यार्थप्रयाजाद्याश्रितस्य प्रसङ्गतन्त्रादेः कार्यस्य मृषात्व स्यात्, अतस्तत्सत्यतासिद्ध्यर्थं स्फोटनिराकरण न निष्फलमिति ॥ १३७ ॥

**इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे स्फोटवादस्थानकम्**

---

१. वर्णातिरेकः—२ पु० ।

## अथ आकृतिवादः

वाचकनिरूपणवदेव वाच्यनिरूपणस्यापि सङ्गतिः। प्रयोजनं त्वाकृतिवाच्यत्वस्य दर्शयति—

**आकृतिव्यतिरिक्तेऽर्थे सम्बन्धो नित्यतास्य च।**
**न सिध्येतामिति ज्ञात्वा तद् वाच्यत्वमिहोच्यते॥ १॥**

यदि ह्याकृतिव्यतिरिक्ता व्यक्तय एव सर्वत्र शब्दार्थाः स्युः, ततस्ताभिर्व्यभिचारात् सम्बन्ध एव शब्दस्य न सिध्यति, नतरा नित्यत्वम्। आकृतिवाच्यत्वे तु क्वचित् तयैव क्वचित् तद्विशिष्टेनार्थान्तरेण सिध्यति शब्दस्य सम्बन्धो नित्यता चेति प्रयोजनवत् तद्वाच्यत्वप्रतिपादनमिति॥ १॥

**सूत्रकारेणैव** 'आकृतिस्तु क्रियार्थत्वात्' ( जै० सू० १. ३. ३२ ) इत्याकृतेरभिधेयत्व स्थापयिष्यते, किं पृथक् प्रयासेन ? अत आह—

**तत्सद्भावप्रसिद्ध्यर्थमत्र तावत् प्रयत्यते।**
**वाच्यत्वे वक्ष्यते युक्तिर्व्यक्त्या सह बलाबले॥ २॥**

द्वेधा ह्याकृतेरनभिधेयत्वम्—अभावात्, भावेऽपि च क्रियायामनुपयोगाद् वा। तदिह सद्भावप्रतिपादनेन प्रथमपक्षनिराकरणम्, द्वितीयं तूपरिष्टात् सूत्रकारो निराकरिष्यति—**व्यक्त्या सह बलाबले** इति। तत्सिद्ध्यर्थमित्यर्थः। जातिवाच्यत्वे हि जातिव्यक्तिशास्त्रयोर्बलाबल सिद्ध्यति, व्यक्तिवाच्यत्वे तुल्यबलमुभय स्यादित्युक्तम्—'कक्षान्तरितसामान्य' (श्लो० वा० सम्ब० २७) इत्यत्रेति॥ २॥

ननु संस्थानम्=आकृतिः, तच्च प्रतिपिण्डमन्यदन्यच्चेति तदभिधेयत्वेऽपि सम्बन्धतन्नित्यत्वे न सिध्यतामेव ? अत आह—

**जातिमेवाकृतिं प्राहुर्व्यक्तिराक्रियते यया।**

**आक्रियते** निरूप्यत इत्यर्थः। तया हि द्रव्यं निरूप्यते—गौरयमिति।

ततः किम्? इत्यत आह—

**सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम्॥ ३॥**

भिन्नेषु पिण्डेषु एकबुद्ध्यालम्बन सामान्यं जातिः, न प्रतिपिण्डं भिद्यत इति॥ ३॥

तथापि कथं तस्याः शब्दार्थत्वम् ? अत आह—

**तन्निमित्तं च यत्किञ्चित् सामान्यं शब्दगोचरम्।**
**सर्व एवेच्छतीत्येवमविरोधोऽत्र वादिनाम्॥ ४॥**

एकबुद्धिनिमित्तं यत् सामान्यं जातिरूपं सारूप्यरूपमपोहरूपम्, तस्य शब्दवाच्यत्वं सर्ववादिनामविवादम्, तत्स्वरूपे तु विवाद इति॥ ४॥

जातिसद्भावः प्रतिपाद्यते इत्युक्तम्, तमिदानी प्रतिपादयति—

**सर्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका ।**
**जायते द्व्यात्मत्वेन विना सा च न सिद्ध्यति ॥ ५ ॥**

कथं न सिध्यति ? अत आह—

**विशेषमात्र इष्टे च[1] न सामान्यमतिर्भवेत् ।**
**सामान्यमात्रबोधे तु निर्निमित्ता विशेषधीः ॥ ६ ॥**

यदि तावदसाधारण स्वलक्षणमेव वस्तु स्यान्न सामान्यम्, यथा **सौगतै**रुच्यते, ततः 'अयं गौरयमपि' इति सामान्यबुद्धिर्न स्यात् । यदि तु गोत्वादिशाबलेयादिविशेषाननुवृत्तव्यावृत्तात्मनोऽपह्नुत्य महासामान्यं सन्मात्रमेव वस्त्वङ्गीक्रियते, यथा **वेदान्तवादिभि**रुच्यते, तत[2] 'गौरयम्' 'अश्वोऽयम्', 'शाबलेयोऽयम्' इति विशेपबुद्धिर्न स्यात् । यद्यपि सामान्यसद्भावः प्रतिपादयितुमुपक्रान्त., तथापि न्यायतुल्यत्वाद् विप्रतिपत्तिसम्भवाच्च विशेषप्रतिपादनमपि कृतमिति ॥ ६ ॥

नन्वेकस्य सामान्यविशेषात्मकत्वविरोधादन्यतररूप भ्रान्तमौपचारिक वा अत आह—

**न चाप्यन्यतरा भ्रान्तिरुपचारेण चेष्यते ।**

अभ्रान्तित्वे कारणमाह—

**दृढत्वात् सर्वदा बुद्धेर्भ्रान्तिस्तद्भ्रान्तिवादिनाम् ॥ ७ ॥**

न चौपचारिकम्, मुख्यस्य सामान्यस्य विशेषस्य च क्वचिदप्यदर्शनात्, मुख्यरूपत्वाच्चोपचारस्य । एकरूपार्थक्रियानिबन्धनोक्तिर्हि विलक्षणानामपि स्वलक्षणानामेकत्वोपचारोऽभिमत । न चार्थक्रियाणामप्येकरूपत्व भवन्मतेऽस्ति, तासामपि व्यावृत्तस्वभावत्वात् सामान्यानभ्युपगमाच्च, क्रियैव तावद् भवता नास्तीति दूरापास्तं तत् सामान्यम्, तस्मान्नौपचारिकमित्याह—

**मुख्ययोश्चाप्यदृष्टत्वान्नोपचारेण कल्पना ।**

अथाऽसतोरपि बहिःसामान्यविशेषयोर्ज्ञानाकारयोः सद्भावात् तन्निबन्धन बुद्धिद्वयम्, तत्राह—

**बाह्यार्थविषयत्वं च बुद्धीनां प्रतिपादितम् ॥ ८ ॥**

किञ्च, अन्यतररूपाभ्युपगमे तदाक्षेपादेवेतरदपि रूपं सिध्यतीत्याह—

**अन्योन्यापेक्षिता नित्यं स्यात् सामान्यविशेषयोः ।**

कथम् ? इत्याह—

**विशेषाणां च सामान्यं ते च तस्य भवन्ति हि ॥ ९ ॥**

समानानां हि भावः सामान्यम्, तत् कथमसत्सु बहुषु विशेषेषु स्यात् ।

---

१. मात्रदृष्टे च—का० सं० २ पु० ।   २. तथा—२ पु० ।

इदं च विशेषाणां विशेषत्वम् यत् समानात्मनो भावात् विशिषन्ति, तेनान्यतरेण विनेतरस्यात्मलाभाभावात् तस्यापि सिद्धिरिति ॥ ९ ॥

तदेदमुपपादितं द्व्याकारत्वं प्रयोगेण दर्शयति—

**निर्विशेषं न सामान्यं भवेच्छशविषाणवत् ।**
**सामान्यरहितत्वाच्च विशेषास्तद्वदेव हि ॥ १० ॥**

निर्विशेष परकल्पितं सामान्यं धर्मि नास्तीति साध्यम्, तथा निःसामान्या विशेषा न सन्तीति विशेषरहितत्वात्, सामान्यरहितत्वादिति हेतुद्वयम् । इमावेव हेतू विशेषानात्मकत्वात् सामान्यानात्मकत्वादित्येवरूपेण वक्तव्यावपीत्याह—

**तदनात्मकरूपेण हेतू वाच्याविमौ पुनः ।**

किं पुनरेववचने प्रयोजनम् ? अत आह—

**तेन नात्यन्तभेदोऽपि स्यात् सामान्यविशेषयोः ॥ ११ ॥**

ये ह्यङ्गीकृत्यैव सामान्यविशेषावत्यन्तभिन्नौ सङ्गिरन्ते, तान्निराकर्त्तुमेवं वचनम् । यदा हि सामान्यविशेषानात्मकस्याविद्यमानत्वं साधित भवति, तदा अवश्य विद्यमानस्य तदात्मकत्वेन भवितव्यमिति ॥ ११ ॥

**शाक्यास्त्वाहु**—अवश्य तावदङ्गीकृत्यापि सामान्य तस्य तुल्याकारबुद्धि-जननशक्तिरङ्गीकर्तव्या, तद्वर विशेषाणामेवोभयसिद्धाना सा शक्तिराश्रिता, किं सामान्येनेति, तदुपन्यस्यति अन्तरादन्तेन—

**सामान्यबुद्धिशक्तत्वं विशेषेष्वेव यो वदेत् ।**
**विना वस्त्वन्तरात्,**

तदिदं विकल्पयति—

**तेन वाच्या[1] शक्तिस्तु कीदृशी ॥ १२ ॥**
**ग्राह्या किं वाप्यसम्बोधा भिन्नैका[2] वा तथैव च ।**

प्रतिव्यक्ति भिन्ना सर्वासु वैकेति । अथवा व्यक्तिभ्योऽन्यथानन्या वेति ।

अत्र दूषणमाह—

**गृह्यते यदि सैका च जातिरेवान्यशब्दिका ॥ १३ ॥**

सर्वव्यक्तिष्वेकेत्यर्थः ॥ १३ ॥

अग्राह्यत्वे दूषणमाह—

**भवेन्निर्विषया बुद्धिर्यदि शक्तिर्न गृह्यते ।**

कथम् ? इत्याह—

**न हि सद्भावमात्रेण विषयः कश्चिदिष्यते ॥ १४ ॥**

प्रतीयमानतयैव हि विषयत्वम्, न सत्तामात्रेणेति ॥ १४ ॥

---

१. वाच्य०—मु० पा० । २. संवेद्या—३ पु० ।

ननु न शक्तेर्विषयत्वं ब्रूमः, कस्तर्हि विषयः? स्वलक्षणान्येव; न तेषा तु नानाभूतानामेकबुद्धिजननशक्तिकल्पनया विषयत्वं समर्थ्यते, न तु सैव विषय इत्यत आह—

**परस्परविभिन्नत्वाद् विशेषा नैकबुद्धिभिः।**
**गृह्यन्ते विषयासत्त्वाच्छक्तिश्चैषां न विद्यते॥ १५॥**

विषयासत्त्वान्न हि भिन्नानामेकबुद्धिविषयत्व सम्भवति, विषयत्वे वा भिन्नत्वं न स्यात्। कथ ह्यवाधितया प्रत्यक्षबुद्ध्यैकत्वेनावगम्यमानं भिन्नं स्यात्! शक्तिस्तु विद्यमानाऽप्यगृह्यमाणा विषयत्वेन न विद्यत एवेति॥ १५॥

अथ गृह्यत एव शक्ति, सा तु प्रतिव्यक्ति भिन्ना? तत्राह—

**भिन्नत्वे वापि शक्तीनामेकबुद्धिर्न लभ्यते।**

व्यक्त्यनन्यत्वे शक्तेरयमेव दोष इत्याह—

**विशेषशक्त्यभेदे च तावन्मात्रमतिर्भवेत्॥ १६॥**

उपसंहरति—

**भिन्ना विशेषशक्तिभ्यः सर्वत्रानुगतापि च।**
**प्रत्येकं समवेता च तस्माज्जातिरपीष्यताम्॥ १७॥**

व्यवहारस्तु यथारुचि क्रियताम्॥ १७॥

अस्ति तावत् स्वलक्षणादनतिभिन्न सामान्यरूप वस्त्वित्याह—

**तेनात्मधर्मो भेदानामेकधीविषयोऽस्ति नः[1]।**
**सामान्यमाकृतिर्जातिः शक्तिर्वा सोऽभिधीयताम्॥ १८॥**

चोदयति—

**ननु भिन्नेऽपि सत्तादौ सामान्यमिति जायते।**
**बुद्धिर्विनापि सामान्यादन्यस्मात् सा कथं भवेत्॥ १९॥**

न हि सामान्येऽप्यपर सामान्यमस्ति, अनवस्थाप्रसङ्गात्। अतोऽवश्य गोत्वादिषु सामान्यं सामान्यमित्येकबुद्धिर्भ्रान्तिरित्यङ्गीकर्त्तव्यम्, तद्वद् गोत्वादिबुद्धिरप्यस्त्विति॥ १९॥

परिहरति—

**वनोपन्यासतुल्योऽयमुपन्यासः कृतस्त्वया।**

कथम्? इत्याह—

**भ्रान्तित्वेन हि नैतस्या भ्रान्तिर्गोत्वादिधीरपि॥ २०॥**

यथा हि वनबुद्धेर्मिथ्यात्वात् वृक्षबुद्धेर्गोत्वादिबुद्धेर्वा न मिथ्यात्वम्, निरस्तत्वात् **माहायानिक**पक्षस्य, तथा सामान्यबुद्धेर्मिथ्यात्वेऽपि गोत्वादिबुद्धेर्न मिथ्यात्वमिति॥ २०॥

---

१. वा—३.पु०।

किञ्च, शब्दैक्यनिबन्धनैव सामान्येष्वेकबुद्धिः, न ह्यशाब्दज्ञस्य गोत्वं दृष्ट्वाश्वत्वमुपलभमानस्यापि प्रत्यभिज्ञानम् । न च प्रमाणादृष्टे पदप्रामाण्यं सम्भवतीति युक्तं भ्रान्तित्वम् । अस्ति तु शाबलेयादावेकरूपं प्रत्यभिज्ञानम्, तदाह—

**शब्दात् पूर्वं हि सर्वेषु[1] गवादाविव नैकधीः ।**

केचित्तु—अस्त्येव सामान्येष्वपि वस्तुत्वं नाम सामान्यमित्याहुः, तदाह—

**वस्तुत्वं चात्र सामान्यं धर्मं केचित् प्रचक्षते ॥ २१ ॥**

निराकरोति—

**एवं तु कल्प्यमाने स्यात् सामान्यानामनन्तता ।**

कथम् ? इत्याह—

**पुनस्तेन सहान्येषु सामान्यमतिरस्ति हि ॥ २२ ॥**

तदेवं विशेषेभ्यो व्यावृत्तं गोत्वादिषु चानुगत सामान्य नास्तीत्युक्तम् ॥२२॥

यदि तु यदेवेद द्रव्यगुणकर्मावान्तरसामान्येष्वनुगत महासामान्य वस्तुत्व नाम तन्निबन्धनैव गोत्वादिष्वेकसामान्यबुद्धिरित्युच्यते, तत्राह—

**विशेषेष्वपि वस्तुत्वात् सामान्यमिति धीर्भवेत् ।**

**सत्तादिष्विव,**

उपसहरति—

**तेनैतत् सामान्यं नोपपद्यते ॥ २३ ॥**

कथ तर्ह्यसति सामान्ये भिन्नेषु गोत्वादिष्वेकसामान्यशब्दप्रवृत्तिः ? अत आह—

**तस्मादेकस्य भिन्नेषु या वृत्तिस्तन्निबन्धनः ।**

**सामान्यशब्दः सत्तादावेकधीकरणेन वा ॥ २४ ॥**

तत्पुनरिदं सामान्य केचित् सर्वगतमिच्छन्ति, केचित् पिण्डमात्रगतम्, अत्र निर्णयमाह—

**पिण्डेष्वेव च सामान्यम्,**

कथम् ? इत्याह—

**नान्तरा गृह्यते यतः ।**

इतश्चैवमित्याह—

**न ह्याकाशवदिच्छन्ति सामान्यं नाम किञ्चन ॥ २५ ॥**

न व्योमादिवत् स्वतन्त्रं किमपि तत्त्वं सामान्यं नाम, पिण्डस्वरूपं हि तत् कथं रूपिणं विहाय तिष्ठेदिति ॥ २५ ॥

शक्यं वा वैशेषिकाभिमतं सर्वगतत्वं समर्थयितुमित्याह—

**यद्वा सर्वगतत्वेऽपि व्यक्तिः शक्त्यनुरोधतः ।**

---

१. सर्वेषाम्—३. पु० पा० ।

'नान्तरा गृह्यते' इति सम्बन्धः। सर्वगतमपि सामान्यम् अभिव्यक्तशक्तिमतीषु व्यक्तिष्वेव गृह्यते नान्तरेति।

कथं व्यक्तीनामेव शक्तिरवगम्यते? अत आह—

**शक्तिः कार्यानुमेया हि व्यक्तिदर्शनहेतुका ॥ २६ ॥**

अभिव्यक्त्याख्यकार्यदर्शनानुमेया हि शक्तिः, अतो यत्रैवाभिव्यक्तिर्दृश्यते तदेव शक्तमिति ॥ २६ ॥

सम्बद्धं सर्वगतमपि हि शक्त्यनुरोधादेव चान्तरात्ववत् कर्म्यादिष्वपि न प्रतीयत इत्याह—

**तेन यत्रैव दृश्येत व्यक्तिः शक्तं तदेव तु।**
**तेनैव च न सर्वासु व्यक्तिष्वेतत् प्रतीयते ॥ २७ ॥**

एतदेव विवृणोति—

**भिन्नत्वेऽपि हि कासाञ्चिच्छक्तिः काश्चिदशक्तिकाः।**

यद्यपि सर्वेभ्यः सामान्येभ्यः सर्वा व्यक्तयो भिन्नाः, तथापि काश्चिदेव कस्यचिदभिव्यक्तौ शक्ताः, न सर्वाः सर्वेषामिति।

शक्तिव्यवस्थैव किन्निबन्धना? इत्यत आह—

**न च पर्यनुयोगोऽस्ति वस्तुशक्तेः कदाचन ॥ २८ ॥**

अत्रैव दृष्टान्तमाह—

**वह्निर्दहति नाकाशं कोऽत्र पर्यनुयुज्यताम्।**

शब्दशक्तिर्वा किमिति न पर्यनुयुज्यते, न हि युक्त्या विना 'अग्निरेव दहति नाकाशम्' इति शक्यमभ्युपगन्तुम्, अत आह—

**न चान्या मृग्यते युक्तिर्यथा सन्दृश्यते[1] तथा ॥ २९ ॥**

दर्शनासिद्धे वस्तुनि युक्तिरन्वेषणीयेति ॥ २९ ॥

कथम्? इत्याह—

**न हि युक्त्यन्तरं नास्तीत्येतज्ज्ञानमनर्थकम्।**

दर्शितं हि **चोदनासूत्रे** स्वतःप्रामाण्यवादे "न चानुमानतः साध्या शब्दादीनां प्रमाणता" (श्लो० वा० २-८१) इति। **अनर्थकम्**, अप्रमाणकमित्यर्थः।

भवतु कासाञ्चिच्छक्तिः, कथं तु ज्ञायते—एवंधर्मिकया व्यक्त्येद सामान्य व्यज्यत इति? तत्राह—

**धर्मश्चाव्यभिचार्यस्य न मृग्य उपलक्षणे ॥ ३० ॥**
**नानुमानावगम्यं तत्, प्रत्यक्षे लक्षणेन किम्।**

यद्यनुमानगम्यं सामान्यं स्यात् ततोऽव्यभिचारि लिङ्गं स्वोपलक्षणायापेक्षेत, तत्तु प्रत्यक्षम्, किं लक्षणेनेति[2]।

---

१. तद् दृश्यते—३ पु०। २. किमुपलक्षणेन—१ पु०।

ननु सर्वगताया अपि जातेर्व्यक्तिविशेषसम्बन्धो दृश्यते, अतोऽवश्यं सम्बन्ध-हेतुना भवितव्यम्; न च व्यक्तयो नानारूपत्वादेकरूपस्य सम्बन्धकारणं भव-न्तीति सामान्यान्तरं कल्पनीयम्, तस्यासम्बद्धस्य हेतुत्वानुपपत्तेस्तत्सम्बन्धार्थं सामान्यान्तरं कल्प्यमिति अनवस्था स्यात् ? अत आह सार्द्धेन—

**स्वाभाविकश्च सम्बन्धो जातिव्यक्त्योर्न हेतुमान्॥ ३१ ॥**
**तेनैतस्य प्रसिद्ध्यर्थं नान्यत् सामान्यमिष्यते ।**
**शक्तिसिद्धिवदेतस्य स्वभावोऽत्र न वार्यते ॥ ३२ ॥**

यथा ह्यभिव्यक्तिशक्तिः स्वाभाविकी तथा सम्बन्धस्यापि स्वभाव एव हेतुः, काश्चिद्व्यक्तयः किञ्चित् सामान्यं स्वभावादेवात्मना सम्बध्नन्तीति ॥ ३१-३२ ॥

कथं पुनः कादाचित्कस्य निमित्तमन्तरेण सिद्धिः ? अत आह—

**यद्वा नैमित्तिकत्वेऽपि तावन्मात्रप्रतीक्षणात् ।**
**विशेषेष्वेव लब्धेषु केषुचिन्नान्यवाञ्छनम् ॥ ३३ ॥**

सम्बन्धस्य निमित्तमात्रमपेक्षितम्, तच्च विशेषा एव केचिद्भवन्तीति ॥३३॥

चोदयति—

**न व्यञ्जन्त्यपरे कस्माद्,**

व्यञ्जन्तीति चाभिव्यक्तिहेतुः सम्बन्धो लक्ष्यते, व्यक्तिरूपाविशेषात् कर्का-दयो[1]ऽपि गोत्वसम्बन्धे निमित्तं स्युरिति ।

परिहरति—

**यतस्तेषु न दृश्यते ।**

येनैव हेतुना सर्वगतमपि गोत्वं कर्कादिषु[2] न दृश्यते तेनैव न तेषु वर्तत इति । तमेव हेतु दर्शयति—

**तेभ्योऽपि न निवृत्त्यर्थं मृग्यो हेतुः स्वभावतः ॥ ३४ ॥**

अनभिव्यञ्जकत्वेऽपि स्वभाव एव हेतुः, एवं तेभ्यो निवृत्त्यर्थमपि स्वभाव-तोऽन्यो हेतुर्न मृग्यः। तेभ्यो निवृत्तिस्तैरसम्बन्धित्व न तु तत्राभावः, सर्वगतत्वा-भ्युपगमात्। सर्वगतमपि हि सामान्यं केषुचिद् विशेषेषु समवेतं तेष्वेवाभिव्य-ज्यते इति हि **वैशेषिकं दर्शन**मिति ॥ ३४ ॥

चोदयति—

**सामान्यं नान्यदिष्टं चेत् तस्य वृत्तेर्नियामकम् ।**
**गोत्वेनापि विना कस्माद् गोबुद्धिर्न नियम्यते ॥ ३५ ॥**

तदेव विवृणोति—

---

१. कर्मादयोऽपि—१ पु० ।

२. कर्मादिष्वपि—१ पु० ।

**यथा तुल्येऽपि भिन्नत्वे केषुचिद् वृत्त्यपेक्षिता[1] ।**
**गोत्वादेरनिमित्तेऽपि तथा बुद्धिर्भविष्यति ॥ ३६ ॥**

परिहरति—

**विषयेण हि बुद्धीनां विना नोत्पत्तिरिष्यते ।**
**विशेषादन्यदिच्छन्ति सामान्यं तेन[2] तद् ध्रुवम् ॥ ३७ ॥**

ननु यथैव विशेषाणां वृत्तौ कारणत्वम्, एवं बुद्धिविषयत्वं किं न भवति ? अत आह—

**ता हि तेन विनोत्पन्ना मिथ्याः स्युर्विषयाद् ऋते ।**
**न त्वन्येन विना वृत्तिः सामान्यस्येह दुष्यति ॥ ३८ ॥**

कारणत्वं हि विलक्षणानामप्येकत्र युक्तम्, एकरोगशान्ताविव भेषजभेदानाम्, अतो विनापि सामान्यान्तरेण गोत्वादिवृत्तिर्न दुष्यति, विषयत्वं तु प्रतिभाससमानतया । न च नानात्मनामेकतया प्रतिभासः सम्भवति, सम्भवे वा भ्रान्तित्वम्; तच्च हेतुद्वयाभावादयुक्तमिति ॥ ३८ ॥

न केवल तासा मिथ्यात्वम्, शब्दानुमानयोरपि स्यादित्याह—

**अनिष्यमाणे सामान्ये वृत्तिः शब्दानुमानयोः ।**
**नैव स्यात्,**

कारणमाह—

**न हि सम्बन्धो भेदैरानन्त्यतो भवेत् ॥ ३९ ॥**

नन्वनन्तत्वादेव विशेषाणा जात्यापि सम्बन्धो न शक्यते ग्रहीतुम्, अतः कथं ते जातिमभिव्यञ्जन्ति ? इत्यत आह—

**अनुभूततया ह्यासौ पुरुषस्योपयुज्यते ।**
**जातिव्यक्त्योस्तु सम्बन्धे नानुभूत्या प्रयोजनम् ॥ ४० ॥**

शब्दार्थयोर्लिङ्गलिङ्गिनोः सम्बन्धो ज्ञाततया कारणम्, जातेस्तु प्रत्यक्षाया व्यक्तिसम्बन्धः सत्तामात्रेण कारणमिति ॥ ४० ॥

यदि विलक्षणानामप्येकसामान्यानुवर्त्तनशक्तिरस्ति, तर्हि सैवैकबुद्धेर्निमित्त भवति, अत आह सार्द्धेन—

**सिद्धे विषयरूपे च गोत्वादाविन्द्रियैः पुनः ।**
**अर्थापत्त्युपलब्धा स्याच्छक्तिरेका नियामिका ॥ ४१ ॥**
**न चात्महेतुमेवासौ सिद्धं[3] बाधितुमर्हति ।**

सत्यामपि तावच्छक्तौ निर्विषयबुद्ध्ययोगाद् विषयभूतं सामान्यमङ्गीकर्त्तव्यमेव, तत्सत्तैव तु सामान्यसिद्ध्यधीना तदभावे दुर्लभेति ।

---

१. वृत्त्यवृत्तिता—३ पु० ।
२. सामान्यत्वेन—१ पु० ।
३. सिद्धाम्—१ पु० ।

अथ विषयत्वमपि शक्तेरेवोच्यताम् ? अत आह—

**शक्तिश्च नैतया बुद्ध्या,**

'गृह्यते' इति सम्बन्ध इति।

कारणमाह—

**नेन्द्रियैः सा हि गृह्यते ॥ ४२ ॥**

किञ्च, येय सम्बन्धहेतुसामान्यान्तरापेक्षयामनवस्था आपाद्यते, किं तया भवतश्चिकीर्षितम् ? सामान्यविनाश इति चेत् ? न, अनवस्थासहस्रेणापि प्रत्यक्षदृष्टस्य तस्य विनाशासम्भवादित्याह—

**सामान्यान्तरयोगानामनिष्ठा[1] या च वर्ण्यते[1]।**
**तया सामान्यनाशः स्यात् स च दृष्टेन बाध्यते ॥ ४३ ॥**

स्यादप्ययं सामान्यनाशः, यदि सम्बन्धतद्धेतुग्रहणापेक्षं सामान्यग्रहणं स्यात्, न तु तदस्तीत्याह—

**सम्बन्धस्तस्य हेतुर्वा तद्ग्रहे न च कारणम्।**

कारणमाह—

**स्वरूपतो गृहीतेऽर्थे पश्चादेतद् विकल्प्यते ॥ ४४ ॥**

ननु 'सास्नादिविशिष्टा आकृतिः' इति वदता सास्नात्वादिसामान्यान्तरग्रहणापेक्षं गोत्वादिसामान्यग्रहणमित्युक्तम्, 'नागृहीतविशेषणा विशेष्ये बुद्धिः' इति न्यायात्, अतः कथमनपेक्षं गोत्वग्रहणम् ? इत्यत आह—

**सास्नाद्येकार्थसम्बन्धि गोत्वमित्युपलक्षणम्।**

'को गोशब्दस्यार्थ' इति पृष्टे तदुपलक्षणमात्रतया तदेकार्थसम्बन्धिसास्नाद्युपादानम्, न तु तद्विशिष्टमेव गोत्वरूपमनेन दर्शितम्, यतस्तद्ग्रहणापेक्षं ग्रहणं स्यादिति।

कथं पुनर्गोत्वाद्यसमवेतं सास्नादि तदुपलक्षणम् ? अत आह—

**न च स्वसमवाय्येव केवलं [2]चिह्नमिष्यते ॥ ४५ ॥**

सम्बन्धमात्रनिमित्तमुपलक्षणमित्यभेदाश्रयणेन वा पिण्डात्मनां सास्नादीनां तदात्मिकया जात्यास्त्येव तादात्म्यमित्याह—

**सास्नादिभ्यस्तु पिण्डस्य भेदो नात्यन्ततो[3] यदा।**
**सामान्यस्य च पिण्डेभ्यस्तदा स्यादेतदुत्तरम् ॥ ४६ ॥**

---

१–१. अनिष्टेयं च वर्ण्यते—३ पु०। सामान्यान्तरयोगेनाप्रतिष्ठा०—३ पु०। अनिष्ठेति। अनवस्थेत्यर्थः।

२. चिह्नमत्र उपलक्षणम्।

३. नात्यन्तिको—३ पु०।

एवं भाष्यसमर्थनाय स्वपक्षमेव तादात्म्यमुपक्रम्य यदुक्तम्—'कः सामान्यविशेषयोः सम्बन्धहेतुः' इति, तदपि स्वमतेनैव परिहरति—

**कस्मात्[1] सास्नादिमत्स्वेव गोत्वं यस्मात् तदात्मकम् ।**

अस्मिन् प्रश्नेऽपि[2] या तदेकार्थसम्बन्धिता तस्यां तादात्म्यमेवोत्तर देयमिति ।

तदेव कस्मादिति पृच्छतः सम्बन्धवदेव स्वाभाविकत्वमुत्तरमित्याह—

**तादात्म्यमस्य कस्माच्चेत् स्वभावादिति गम्यताम् ॥ ४७ ॥**

काश्चिद्व्यक्तयः स्वकारणैर्जातिविशेषात्मिका एव जायन्ते, किमत्र प्रमाणम् ? तद् दर्शयति—

**उपलब्ध्यनुसारेण व्यवस्थासिद्धिरीदृशी ।**

केचित् त्वङ्गीकृत्यैव सामान्यविशेषभेद सामान्येष्ववान्तरभेदमपलपन्ति, वस्तुत्वमेवैकं व्यञ्जकभेदाद् गोत्वहस्तित्वात्मना भिन्नमाभासते, मुखमिवादर्शादिभेदाद्, वर्णवद् वा ध्वनिभेदादिति, तान् प्रत्याह—

**स्वतो गोत्वादिभेदस्तु न तु व्यञ्जकभेदतः ॥ ४८ ॥**

कारणमाह—

**मा भूद् द्रुतादिवन्मिथ्या,**

मिथ्यात्वं चायुक्तम्, हेतुद्वयाभावादिति ।

किञ्च, व्यञ्जकस्य शाबलेयादिपिण्डस्य हस्त्यादिपिण्डेभ्यो भद्रमन्द्रादिभ्यः किन्निबन्धनो भेद इति वाच्यम् ? इत्याह पादद्वयेन—

**व्यञ्जकस्य तु किंकृतः ।**

**भेदो हस्त्यादिपिण्डेभ्यः,**

शङ्कते—

**स्वतश्चेत्,**

निराकरोति—

**इह तत्समम् ॥ ४९ ॥**

इहापि शाबलेयादिष्वप्यस्त्येव मिथो भेदः । यद्यपि पिण्डभेदमात्रात् शाबलेये भद्रे मन्द्रे च वस्तुत्वमेक गोत्वहस्तित्वरूपेण नाना दृश्यते, ततः शाबलेयबाहुलेययोरपि मिथो भेदात् तयोरपि जातिनानात्वं दृश्येत, ततो हस्त्यादिपिण्डेभ्यो वैलक्षण्य[3] शाबलेयादिष्वनुवृत्तं वक्तव्यमिति सिद्धयत्यवान्तरसामान्यमिति ॥ ४९ ॥

अत्र किञ्चिदाशङ्कते—

---

१. तस्मात्—२ पु० । २. पक्षेऽपि—२ पु० ।

३. विलक्षणम्—१ पु० ।

**व्यङ्ग्यजातिविशेषाच्चेत्,**

दूषयति—

**प्राप्तमन्योन्यसंश्रयम् ।**

उपसंहरति--

**तस्मात् स्वाभाविको भेदो जातिव्यक्त्योः प्रतीयते ॥ ५० ॥**

चोदयति--

**अनेकानन्यवृत्तित्वान्न सामान्यविशेषयोः ।**
**एकवस्त्वात्मता युक्ता वरं[1] तेनौपचारिकम् ॥ ५१ ॥**

न तावद् वैशेषिकादिवज्जातिव्यक्त्योर्भिन्नयोः समवायसम्भवः, प्रतीत्यननुगुणत्वात् । न हि 'इह गोत्वम्' इति कस्यचित् कदाचिदवगतिः, 'अय गौः' इत्यपर्यायबुद्धिद्वयसामानाधिकरण्यदर्शनात् । एकं वस्तु द्विरूपं भवद्भिरङ्गीकृतम्, न च तथा सम्भवति, विरोधात् । अनेकवृत्ति सामान्यम्, अनन्यवृत्तिर्विशेषः, कथमेकमनेकवृत्ति अनन्यवृत्ति च स्यात् । तस्माज्ज्ञानाकारं सामान्यमलीकं वा स्वलक्षणं वा भासमानमनुभासते, शब्दमिव प्रतिशब्दः, वरं[2] पूर्वोक्तौ भ्रान्त्युपचारावेवाश्रिताविति ॥ ५१ ॥

किञ्चाभिन्नत्वे रूपद्वयस्यापि हानिरिति प्रयोगेण दर्शयति--

**भिन्नेभ्यश्चाप्यभिन्नत्वाद् भेदस्तत् स्वात्मवद् भवेत् ।**
**एकस्माद् वाप्यभिन्नत्वाद् व्यक्त्येकत्वं प्रतीयते[3] ॥ ५२ ॥**

सामान्यं प्रतिपिण्डं भिन्नं भिन्नेभ्योऽनन्यत्वात् पिण्डस्वरूपवत् । एवं च सामान्यरूपमेवापहारितम्, तस्यानुगतस्वरूपत्वात्[4] । तथा व्यक्तयः सर्वत्रैकरूपाः सामान्यादनन्यत्वात् सामान्यरूपवत् । एवं च विशेषरूपस्यैवापहारः, तस्य प्रतिपिण्डं भिन्नरूपत्वादिति ॥ ५२ ॥

एवं विरोधान्तराणि दर्शयति—

**एकानेकत्वमेकस्य तथान्यानन्यता कथम् ।**
**तत् सामान्यं विशेषश्चेत्येवमादि च दुष्करम् ॥ ५३ ॥**

परिहरति—

**विरोधस्तावदेकान्ताद् वक्तुमत्र न युज्यते[5] ।**

कथम् ? इत्याह—

**सामान्यानन्यविज्ञाते विशेषे नैकवृत्तिता[6] ॥ ५४ ॥**
**सामान्यानन्यवृत्तित्वं विशेषात्मैकभावतः ।**

---

१. किञ्चित्—मु० पा० ।
२. वरमिति नास्ति २ पु० ।
३. प्रसज्यते—३ पु० ।
४. ०नुगतरूप—१ पु० ।
५. शक्यते--३ पु० ।
६. अनेकवृत्तिता--२ पु० ।

त्वया तावदपर्यायं बुद्धिद्वयं सामानाधिकरण्यमित्युक्तम्, तदपर्यायत्वात्तद्विषयस्य। नानात्वं सामानाधिकरण्य चैकत्व प्रतीतिसिद्धमबाधितं न शक्यमन्यथाकर्त्तुम्। अत एव विरोधोऽपि नास्ति। यदि ह्यनेकवृत्त्येव सामान्य स्यात्, अनन्यवृत्तय एव विशेषाः, तयोरेकत्व विरुध्यते। यदा तु विशेषा अपि सामान्यात्मनाऽनेकवृत्तयः, सामान्य च विशेषात्मनानन्यवृत्ति, तदा को विरोध इति।

यत्तु 'अन्यानन्यतैव कथमेकस्य' इत्युक्तम्, तत्राह—

**एवञ्च परिहर्तव्या भिन्नाभिन्नत्वकल्पना ॥ ५५ ॥**

एतदेव दर्शयति—

**केनचिद्ध्यात्मनैकत्वं नानात्वं चास्य केनचित्।**

गोत्वं हि शाबलेयात्मना बाहुलेयाद् भिद्यते, स्वरूपेण च न भिद्यते। तथा व्यक्तिरपि गुणकर्मजात्यन्तरात्मना गोत्वाद् भिद्यते, स्वरूपेण च न भिद्यते। तथा व्यक्त्यन्तरादपि व्यक्तिः जात्यात्मना न भिद्यते, स्वरूपेण च भिद्यते इति। अपेक्षाभेदादविरोध.। समाविशन्ति हि विरुद्धान्यपि एकत्वादीनि[1], अपेक्षाभेदात्[1]; एकमपि हि किञ्चिदपेक्ष्य दीर्घम्। तथैकोऽपि चैत्रो द्वित्वापेक्षया भिन्नोऽपि स्वात्मापेक्षया न भिद्यते। अनेनैकानेकत्वमपि परिहर्तव्यम्, तदेव हि वस्तु स्वरूपेण सर्वत्र सर्वदा चैकमपि शाबलेयादिरूपेणानेक भवतीति न विरोध इति।

यत्तु सामान्यस्य भेदे विशेषाणां चैकत्वे प्रयोगद्वयमुक्तम्, तत्र सिद्धसाधनमित्याह—

**सामान्यस्य तु यो भेदं ब्रूते तस्य विशेषतः ॥ ५६ ॥**

**दर्शयित्वाभ्युपेतव्यम्, विशेषैक्यं च जातितः।**

एतदेव दृष्टान्तेनोपपादयति—

**यथा कल्माषवर्णस्य यथेष्टं वर्णनिग्रहः ॥ ५७ ॥**

**चित्रत्वाद् वस्तुनोऽप्येवं भेदाभेदावधारणम्[2]।**

नानावर्णे हि वस्तुनि य एव वर्णो निष्कृष्य दर्शयितुमिष्यते स एव शक्यो दर्शयितुम्। एव नानारूपे वस्तुनि सर्वस्य भेदाभेदादे. सम्भव इति।

यस्तु सामान्यांशं निष्कृष्य भेद साधयेत्, तस्य 'भिन्नेभ्योऽभिन्नत्वात्' इति हेतुरसिद्धः स्यात्, सिद्धत्वे वा तदेव सिद्धसाधन स्यादित्याह—

**सामान्यांशे तु निष्कृष्य भेदो येन प्रसाध्यते ॥ ५८ ॥**

**तस्य हेतोरसिद्धत्वं सिद्धश्चेत् सिद्धसाधनम्[3]।**

कि पुनरनुवृत्तिव्यावृत्तिभेदाभेदादिभिर्नानारूप वस्तु सर्वदैव तथा गृह्यते ? नेत्याह—

---

१–१. एकत्वापेक्षा०—मु० पा०।

२. ०वधारणा—३ पु०।

३. सिद्धसाध्यता—३ पु०।

**भेदेभ्योऽनन्यरूपेण सामान्यं गृह्यते यदा ॥ ५९ ॥**
**तदा विशेषमात्रेण वस्तु प्रत्यवभासते ।**

अथ व्यावृत्त्यात्मसु विशेषेषूद्भूतेषु तद्रूपे वस्तुनि गृह्यमाणेऽनुवृत्तिरूपं सामान्य किमवस्थं भवति ? अत आह—

**तदुद्भूत्या च सामान्यं तद्भावानुगुणं स्थितम् ॥ ६० ॥**

तदानुगुण्येन लीन स्थित भवतीति ॥ ६० ॥

न तु तावतानुवृत्तिर्नास्तीत्याह—

**सदप्यग्राह्यरूपत्वादसद्वत् प्रतिभाति नः ।**

कदाचित्तु सामान्यमेवोद्भूत गृह्यत इत्याह--

**विशेषानपि सामान्याद् यदा भेदेन बुद्ध्यते ॥ ६१ ॥**
**तदा सामान्यमात्रत्वमेवमेव प्रतीयते ।**

**सामान्यमात्रत्वम्** अनुवृत्तिमात्रत्वमित्यर्थ. ।

एतच्च सविकल्पकवेलायामुक्तम्, निर्विकल्पकवेलाया तु सर्वाकारं वस्तु अन्यानन्यभेदाभेदादिविकल्पशून्यं सम्मुग्धं गृह्यत इत्याह—

**यदा तु शबलं वस्तु युगपत् प्रतिपद्यते ॥ ६२ ॥**
**तदान्यानन्यभेदादि सर्वमेव प्रलीयते ।**

यद्येकमेव वस्त्वनेकाकारम्, तर्हि तादृगेव शब्दोऽभिदधत् सामान्यमात्राभिधायी न स्यात् ? अत आह--

**न च तत् तादृशं कश्चिच्छब्द. शक्नोति भाषितुम् ॥ ६३ ॥**

कीदृश तु भाषते ? अत आह--

**सामान्यांशानपोद्धृत्य पदं सर्व प्रवर्त्तते ।**

अत एव केचित् शब्दस्यार्थासस्पर्शित्व मन्यन्त इत्याह--

**समस्तवस्त्वपेक्षा च पदार्थानामपोद्धृतिम् ॥ ६४ ॥**
**केचिदाहुरसद्रूपम्,**

नानारूपे वस्तुन्येकरूपावावापोद्धारौ, मृषैवापोद्धृताभिधायी च शब्दः, तेनासौ न वस्तुमस्पर्शीति ।

निराकरोति—

**अंशत्वं तु न वार्यते ।**

अपोद्ध्रियमाणमपि सामान्य वस्त्वंश एवेति ।

एवं स्वमतेन जातिरूपं सामान्य साधयित्वा परमते सारूप्यं निराकर्तुं पृच्छति—

**सारूप्यमेव सामान्यं पिण्डानां येन कल्प्यते ॥ ६५ ॥**
**तेन सारूप्यशब्देन किं पुनः प्रतिपद्यते ।**

सामान्यमेकरूपत्वं चेत् ? तदिष्टमेवेत्याह—

**समानरूपभावश्चेज्जातिः सास्माभिरिष्यते ॥ ६६ ॥**

सादृश्यं तु नास्त्येवेत्याह रूपतोऽन्तेन—

**सादृश्यमथ सारूप्यं कस्य केनेति कथ्यताम् ।**
**न तावच्छाबलेयेन बाहुलेयादयः समाः ॥ ६७ ॥**
**विशेषरूपतः,**

नन्वस्ति तावत् तेषा किञ्चित् सस्थानादिसामान्यम् ? अत आह—

**येऽपि तत्संस्थानादिभिः समाः ।**

यदि तु भ्रान्तिरियमित्युच्यते, अत आह—

**शाबलेय इवेति स्यात् तत्र बुद्धिर्न गौरिव ॥ ६८ ॥**
**शाबलेयोऽयमिति वा भ्रान्त्या गौरिति नास्ति धीः[1] ।**

ननु 'शाबलेयो गौ', अत शाबलेयोऽयम्' इति भ्राम्यतो युक्तैव गौरिति भ्रान्तिः ? अत आह—

**शाबलेयस्वरूपं च न गौरित्यवतिष्ठते ॥ ६९ ॥**

सत्यं यः शाबलेय. स गौ , न तु शाबलेयरूपमेव गोरूपमिति ॥ ६९ ॥

कारणमाह—

**तदन्येषु हि गोबुद्धिर्न स्यात् सुसदृशेष्वपि[2] ।**
**दृश्यते सा न चान्यत्र गोरूपं तत्र विद्यते ॥ ७० ॥**

यदि हि शाबलेयरूपमेव गोरूप स्यात्, ततोऽन्ये ये शाबलेयेन सुसदृशा पिण्डा. तेष्वभ्रान्ताना यथा शाबलेयबुद्धिर्नास्ति, 'नेमे शाबलेयाः' इति प्रतीते., तथा गोबुद्धिरपि न स्यात्, दृश्यते चासौ, न च भवतः शाबलेयादिरूपातिरिक्त तदन्येष्वनुगत गोरूप्यमस्तीति ॥ ७० ॥

यदि तु गौरित्येवरूप एकः कश्चित् पिण्डोऽस्ति, तत्सादृश्याच्चान्येषु तत्त्वभ्रान्त्या गोबुद्धिरित्यत आह—

**न चान्यो गौः प्रसिद्धोऽस्ति[3] तत्सादृश्येन धीर्भवेत्[4] ।**

भ्रान्तित्वमप्ययुक्तमित्याह—

**न चापि स इति ज्ञानं सदृशेष्वस्ति सर्वदा ॥ ७१ ॥**

तदभावे[5] च भ्रान्तित्वेऽतिप्रसङ्ग इत्याह—

---

१. तु—१-२ पु० ।
२. विसदृशेष्वपि—३ पु० ।
३. प्रसिद्धस्ते—३ पु० ।
४. गौर्भवेत्—२ पु० ।
५. तदभावेन—२ पु० ।

**सर्वपुंसामतो भ्रान्तिर्नैषा बाधकवर्जनात् ।**
**सर्वज्ञानानि मिथ्या च प्रसज्यन्तेऽत्र कल्पने ॥ ७२ ॥**

किञ्च, कोऽसावेको गोरूपः पिण्ड इति न निर्धार्यते, सर्वेषु शाबलेयादिविशेषस्य[1] गोरूपस्य सामान्यस्य[2] प्रतीतेः ? इत्याह—

**विशेषग्रहणाभावादेव गौः कश्च कथ्यताम् ।**

यदि तु जगदादावेको गोरूप पिण्ड प्रजापतिना सृष्टः, तत्सादृश्याच्चाद्यतनेषु तत्त्वभ्रान्त्या गौरित्युच्यते ? अत आह—

**बभूव यद्यसौ पूर्वमस्मदादेस्तदग्रहात् ॥ ७३ ॥**
**सादृश्यावधृतिर्नास्तीत्यतो गोधीर्न लभ्यते ।**

न हि तदग्रहणे तत्सदृशेषु तत्त्वभ्रान्तिः सम्भवतीति ।

जात्यनङ्गीकारे च सादृश्यमपि दुर्लभमित्याह—

**न चावयवसामान्यैर्विना सादृश्यकल्पना ॥ ७४ ॥**

अथासत्येवावयवसामान्येऽवयवा एव सामान्यबुद्धया गृह्यमाणाः सादृश्यमुपकल्पयिष्यन्ति ? अत आह—

**सामान्यप्रत्ययोत्पादो न विशेषेषु जायते ।**

न हि भिन्नानामेकबुद्धिविषयत्वं सम्भवतीति दर्शितम् ।

ननु तत्त्वान्तरमेव सादृश्यम्, नावयवसामान्यानि ? इत्यत आह—

**व्यक्तितश्चातिरेकोऽस्य स्यान्न वेति विचारिते ॥ ७५ ॥**
**सामान्यमेव सादृश्यं भवेद् वा व्यक्तिमात्रकम् ।**

सामान्यमेव हि व्यक्त्यतिरिक्त दृश्यते, न तत्त्वान्तरमिति **विन्ध्यवासिमत**मपि न तत्त्वतोऽवगतमित्याह—

**तेन नात्यन्तभिन्नोऽर्थः सारूप्यमिति वर्णितम् ॥**
**ग्रन्थे[3] विन्ध्यनिवासेन[3] भ्रान्तेः सादृश्यमुच्यते ॥ ७६ ॥**

इत्याकृतिवार्त्तिकम्

समानाना रूपं सामान्यम्, न त्वत्यन्तभिन्नमिति ॥ ७६ ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे आकृतिवादः समाप्तः



१. रूपविशेषेषु इति पाठान्तरम् ।

२. सामान्यप्रतीतेः—२ पु० ।

३–३. स्वग्रन्थे विन्ध्यवासेन—३ पु० ।

## अथ अपोहवादः

**सौगत**समयसिद्धमपोहरूपं सामान्यं निराकरोति—

**अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम्।**
**गोत्वं वस्त्वेव तैरुक्तमगोऽपोहगिरा स्फुटम्॥ १॥**

ये त्वाहु —न तावद्व्यावृत्तरूपाणामत्यन्तविलक्षणानां स्वलक्षणानामनुवृत्त कश्चिदात्मा सम्भवति, न च स्वलक्षणान्यविकल्पत्वादानन्त्यव्यभिचाराभ्या शब्दाभिधानीयकं लभन्ते; अतोऽतद्व्यावृत्तिरेव सर्वानुगता शब्दार्थ इति। यथा शाबलेयस्यागोव्यावृत्तिरेवं बाहुलेयस्यापीति। यथाहु —

यद्रूप शाबलेयस्य बाहुलेयस्य नास्ति तत्।
अतद्रूपपरावृत्तिर्द्वयोरपि च विद्यते[1]॥ (प्र० वा० ३—१३९-४०) इति।

एष च प्रयोग —यदत्यन्तविलक्षणाना सादृश्यापादकं तदन्यव्यावृत्तिरूप दृष्टम्, यथा गवाश्वकुञ्जराणामनुष्ट्रत्वम्, तथा गौरयमिति विकल्पाकारो विलक्षणाना शाबलेयादीना सादृश्यमापादयतीति स्वभावहेतुः, तस्मादगोनिवृत्तिरेव सामान्य शब्दवाच्यमिति।

तैर्गोत्व वस्त्वेव शब्दान्तरेणाभिहितम्, नार्थान्तरम्। अय च वक्ष्यमाणानेकयुक्तिसक्षेपश्लोक इति॥ १॥

कथम्? इत्याह—

**भावान्तरमभावो हि पुरस्तात् प्रतिपादितः।**

न चागोनिवृत्तिरूपस्याभावस्याश्रयभूतं भावान्तर भवन्मते सम्भवतीत्याह—

**तत्राश्वादिनिवृत्त्यात्मा भावः क इति कथ्यताम्॥ २॥**

न तावदसाधारणम्; तस्य निर्विकल्पकस्य वस्तुरूपेणापि सामान्येन विकल्पयितुमशक्यस्य कथमवस्तुरूपया निवृत्त्या विकल्पनम्? इत्याह—

**नेष्टोऽसाधारणस्तावद् विषयो निर्विकल्पनात्।**

येऽप्यमी शाबलेयादयोऽवान्तरविशेषा, तेऽपि नागोनिवृत्त्यात्मनो गोविकल्पस्यावलम्बनमित्याह—

**तथा च शाबलेयादेः,**

कारणमाह—

**असामान्यप्रसङ्गतः॥ ३॥**

एतदेव विवृणोति—

**शाबलेयादिरूपं हि न सामान्यं परस्परम्।**
**न वैकमितरेषां वस्तत्रानन्तार्थता भवेत्॥ ४॥**

सकलशाबलेयबाहुलेयाद्यनुगतं सामान्यं गोशब्दवाच्यम्, न च शाबलेयबाहु-

---

[1] न विद्यते—मु० पा०।

लेयरूपाणीतरेतरत्रानुवर्त्तन्ते, नाप्येषामन्यतमं शाबलेयं बाहुलेयं वेतरेष्वनुवर्त्तते। तत्र बहूनां शाबलेयादिरूपाणामभिधानादनेकार्थता शब्दस्येति ॥ ४ ॥

इतश्च न शाबलेयादिरूपम् अगोव्यावृत्त्यात्मना गोशब्दस्याभिधेयमित्याह—

**न च साक्षाद् विशेषस्य तेऽपोह्या इति युक्तिमत्।**

एवं शाबलेयादिविशेषरूपस्यैवागावोऽश्वादयोऽपोह्याः स्युः, न तु तत्तथेति।

कथम्? इत्याह—

**न शाबलेयविज्ञानम् अगोव्यावृत्तिबन्धनम् ॥ ५ ॥**

तर्हि किं व्यावृत्तिनिबन्धनं तत्? अत आह—

**निवृत्त्या बाहुलेयादेस्तद्विज्ञानं प्रवर्तते।**

एवमप्यगोपोहे को दोषः? अत आह—

**कुर्यादगोनिर्वृत्तिं चेन्नापोहेतात्मवद्धि तान् ॥ ६ ॥**

शाबलेयस्तावदशाबलेयरूपबाहुलेयाद्यपोहेन प्रतीयते। यदि त्वगोपोहेन प्रतीयेत, ततो बाहुलेयादीन् गोरूपानात्मवदेव नापोहेदिति ॥ ६ ॥

यदि तु गोरूपेण बाहुलेय नापोहतेऽशाबलेयत्वरूपेण त्वपोहते इत्युच्यते, तन्न, शाबलेयरूपमेव त्वगोव्यावृत्त्यापि गृह्यते भवताम्, न हि तत्रापर गोरूपमस्ति, तेनैकेनैव शाबलेयेन बाहुलेयस्याक्षेपात् संग्रहाद् वारणाच्च विरोधः स्यात्? तदाह—

**तेनांशेनानपोहश्च स्वरूपेणाप्यपोहनम्।**
**कल्प्यते चेद् विरोधः स्यात् सममाक्षेपवारणे ॥ ७ ॥**

उपसहरति—

**तस्मात् प्रात्यात्मिकै रूपैरगोऽपोहो न युज्यते[१]।**

**प्रात्यात्मिकैः** शाबलेयादिरूपैरिति।

अथ शाबलेयादिसमुदायोऽगोव्यावृत्त्यात्मना गोविकल्पावलम्बनमत आह—

**समुदायेऽपि नैतेषामगोव्यावृत्तिसम्भवः[२] ॥ ८ ॥**

कारणमाह पादत्रयेण—

**सर्वोपलब्धौ तद्बुद्धिर्व्यासज्यैवं प्रवर्तते[३]।**
**न प्रत्येकं भवेदेषा,**

प्रतिपिण्ड भवन् गोविकल्पः कथं समुदायालम्बनं स्यादिति।

अशक्यश्चानेकपिण्डसमुदायो ग्रहीतुमित्याह—

**न समस्तेष्वशक्तितः ॥ ९ ॥**

---

१. न कल्पते इति पाठान्तरम्। २. ०बन्धनम्—१ पु०।
३. प्रसज्यते—३ पु०।

उपसहरति—

**तस्मात् सर्वेषु यद् रूपं प्रत्येकं परिनिष्ठितम् ।**
**गोबुद्धिस्तन्निमित्ता स्याद् गोत्वादन्यच्च नास्ति तत् ॥ १० ॥**

चोदयति—

**ननु च प्रागभावादौ सामान्यं वस्तु नेष्यते ।**

प्रागभावादिचतुष्टये ह्यभावत्वमेव सामान्यम्, न वस्तुरूपं सामान्यमस्ति यद् भावात्मना गृह्येतेति ।

परिहरति—

**सत्तैव ह्यत्र सामान्यमनुत्पत्त्यादिरूषिता ॥ ११ ॥**

सर्वो ह्यभावो भावाश्रित एव, अतस्तत्रापि भावत्वसामान्यमेवानुत्पत्त्यादि-पर्यायप्रागभावादिरूषित वस्तुरूपं सामान्यमिति ॥ ११ ॥

कथमभावबुद्धेर्भावालम्बनत्वम्, विपरीतत्वात् ? अत आह—

**तामुत्पत्त्याद्यनुस्यूतां सत्तेति प्रतिजानते ।**
**अन्यापोहानुविद्धा तु सैवाभावः प्रतीयते ॥ १२ ॥**

'स्वरूपपररूपाभ्या सदसदात्मक वस्तु' इति दर्शितम्, अत. क्षीरसत्तैव या क्षीरस्योत्पत्तिप्रभृतिक्रिया', प्राग्विनाशात् ताभिरनुस्यूता सत्तेति प्रतीयते, दध्या-द्यपोहेनानुविद्धा सैवाभावबुद्धया गृह्यते इति ॥ १२ ॥

एवमभावसामान्यबुद्धेः सत्तालम्बनत्वमुक्तम्, अभावविशेषबुद्धेरपि सैवा-लम्बनमित्याह—

**अनित्यत्वं विनाशाख्यक्रियासामान्यमुच्यते[1] ।**

अनित्यत्वं प्रध्वसाभावः, तच्च विनाशाख्य क्रियासामान्यम्, तदनुविद्धा सत्तेत्यर्थः । बुद्धिध्वंसविशिष्टात्मसत्तैव बुद्धे. प्रागभाव इति । अगोपोहनादितरा-भावेनानुविद्धा सत्तैव शाबलेयाद्यनुगता निवृत्तिरिति चेत् ? न, भवन्मते सत्तापि वस्तुरूपा नास्ति, तद्भावे वा गोत्वेन किमपराद्धमिति ।

चोदयति—

**अब्राह्मणत्वं किन्तु स्याद् भिन्नेषु क्षत्त्रियादिषु ॥ १३ ॥**

त्रिष्वप्यस्त्येव 'अब्राह्मण.' इति सामान्यबुद्धि. । न च तेष्वस्ति वस्तुरूपं सामान्यमिति ॥ १३ ॥

पुरुषत्वावलम्बने ब्राह्मणोऽप्यब्राह्मणबुद्धया गृह्यतेत्याह—

**पुरुषत्वं चतुःसंस्थम्[2],**

क्षत्त्रियत्वादिकं तु विशेषरूप नालम्बनम्, त्रयसाधारणत्वात्तद्बुद्धेरित्याह—

---

१. इष्यते—३ पु० ।  २. चतुष्टं हि—३ पु० । चतुष्के हि—१, ४ पु० ।

**विशेषेषु च नास्तिधीः।**

न च त्रयसमुदायालम्बनत्वमेकैकविषयत्वादब्राह्मणबुद्धेरित्याह—

**सामान्यप्रत्ययश्चैषु प्रत्येकमुपजायते ॥ १४ ॥**

उपसंहरति—

**तेनात्र ब्राह्मणाभावः सामान्यं स्यादवस्तु तत्।**

एव गवादावप्यभावात्मकमेव सामान्यमस्तु सामान्यबुद्धेरालम्बनमित्याह—

**गोत्वादावपि तेनैव सामान्यप्रत्ययो भवेत् ॥ १५ ॥**

तदेकेषा मतेन समाधत्ते स्यान्तेन—

**केश्चित् त्वत्रैकशब्दत्वमक्षादाविव कल्पितम्।**

**जातित्रयस्य,**

नेयं सामान्यालम्बना बुद्धि, क्षत्रियादिविशेषालम्बनैवेयम्। शब्द एवात्र साधारणः, नार्थ इति।

इदं तु प्रतीतिविरुद्धम् अघटादिषु न सम्भवतीत्याह—

**नैवं[1] तु[1] सम्भवत्यघटादिषु ॥ १६ ॥**

कथम्? इत्याह—

**नात्र ह्यनन्तके भेदे साधारण्यं निरूप्यते।**

परिमितेषु क्षत्रियादिषु शक्येतापि साधारणशब्दत्वम्, वृक्षादिष्वनन्तेष्वघटादिशब्दस्य साधारणत्व दुरधिगममिति।

तस्मादेवं वाच्यमित्याह—

**तस्मात् क्रियागुणाः केचिद्धेतवोऽनन्यवर्तिनः ॥ १७ ॥**

इदमपि अघटादिषु अव्यापकमेव। यथा ब्राह्मणावर्त्तिनः क्षत्रियादिष्वनुगताः शस्त्रधारणादय सन्ति, न तथा घटादिभ्यो व्यावृत्ता वृक्षादिष्वनुगताः केचिद् भवन्ति ॥ १७ ॥

तस्मादेव वक्तव्यमित्याह—

**पुरुषत्वं नञा चैतद् ब्राह्मणेभ्यो निवर्तितम्।**

**चातुर्वर्ण्यप्रसक्तं सद् गम्यतेऽर्थादिभिर्यथा ॥ १८ ॥**

चतुस्संस्थमपि पुरुषत्वम्, यथा पुरुषमानय सुरा विवोढुमित्यस्माच्छूद्रः प्रतीयते तथात्र नञ्सामर्थ्याद् ब्राह्मणेभ्यो व्यावृत्तं क्षत्रियादित्रयाविषयं प्रतीयते इति ॥ १८ ॥

एतदेव विवृणोति—

**यद्यप्यवान्तरा नास्ति त्रिषु जातिर्व्यवस्थिता।**

**नञ्सामर्थ्यान्नरत्वं तु[2] त्र्याधारं सम्प्रतीयते ॥ १९ ॥**

---

१-१. नैतत्तु—१ पु०। २. ०सामर्थ्यान्नर०—मु० पा०। नञामर्थान्तरत्वं तु—१ पु०।

ननु सत्यपि नञि यदि पुंस्त्वमेव प्रतीयते ततः पुंशब्दादिवाब्राह्मणशब्दादपि चतुर्षु वर्णेषु तन्मतिः स्यात्, कथ मतिभेदः ? अत आह—

**शब्दसामर्थ्यभेदेन वर्णेषु मतिभिन्नता।**
**पुंस्त्वे त्रिचतुराधारे पर्युदासस्वरूपतः॥ २०॥**

अब्राह्मणशब्देन नञ्सामर्थ्यात् ब्राह्मणपर्युदासेन त्र्याधारे पुंशब्देन स्वरूपतश्चतुराधारे पुंस्त्वे प्रतिपाद्यमाने युक्तो वर्णेषु मतिभेद इति॥ २०॥

न च वाच्यम्—कथमेकस्मिन्नेव पुंस्त्वे कस्यचिच्चतुराधारे शक्तिः, कस्यचित् त्र्याधारे इति; गृध्रवायसचक्षुषोरेकस्मिन्नेव रूपे शक्तिवैषम्यदर्शनादित्याह—

**दूरान्तिके क्षणे शक्तिर्गृध्रवायसचक्षुषोः।**
**यथा रूपे तथा पुंस्त्वे पुमब्राह्मणशब्दयोः[1]॥ २१॥**

कथ पुनरेकमेवाब्राह्मणपद ब्राह्मण पर्युदस्यति, पुंस्त्वं च प्रतिपादयति, अत आह—

**ब्राह्मणव्यतिरिक्तार्थवृत्ति पुंस्त्वमितीदृशम्।**
**वाक्यं यत्र प्रवर्तेत तत्राब्राह्मणधीपदे[2]॥ २२॥**

शक्नोति हि समासपद सावयवत्वाद् विग्रहवाक्यार्थे वर्त्तितुम्, अतो ब्राह्मणपदसमभिव्याहृतेन नञा तदभाव प्रतिपादयता तत्सम्बद्ध पुंस्त्वं लक्षणया प्रतिपाद्यते, यावदुक्तं भवति—ब्राह्मण्याभावयुक्तः पुमानिति, तावद्—अब्राह्मण इति; एवमघटादावपि घटत्वाद्यभावयुक्त पार्थिवत्वादिक प्रतिपाद्यत इत्याह—

**पार्थिवत्वादिसामान्यम् एवमेवाघटादिषु।**
**घटत्वादिविनिर्मुक्तं विषयः सम्प्रतीयते॥ २३॥**

किं पुनर्ब्राह्मण्याभावयुक्तं पुंस्त्वमेव लक्ष्यते, न पुनर्वस्तुमात्रम् ? अत आह—

**असाधारणभावाच्च नञा शब्दो विशेषितः।**
**तावन्मात्रेण रहिते सामान्ये व्यवतिष्ठते॥ २४॥**

ब्राह्मणशब्देन हि श्रुत्या ब्राह्मण्यमभिधीयते, तदविनाभावेन पुंस्त्वप्राणित्वादयः प्रतीयन्ते, तदस्य यदसाधारणमभिधेयं ब्राह्मण्यं तदभावे नञा प्रतिपादिते तद्विशेषितं ब्राह्मपदं तन्मात्ररहिते सामान्येऽवतिष्ठते, ब्राह्मण्यमेव नञो बलेन हातव्यम्, अन्यच्च सर्वं पुंस्त्वादिकं प्रतिपन्नं न हातव्यम्, क्षत्रियादिग्रहणेन च ब्राह्मण्यातिरिक्त सर्वं गृहीत भवति। वस्तुत्वादिग्रहणे तु पुंस्त्वादिकमगृहीतं स्यात्, न तद् युक्तमिति॥ २४॥

इतश्च क्षत्रियादिग्रहणमेव युक्तम्, न वस्तुमात्रग्रहणमित्याह—

---

१. पुनर्ब्राह्मण०—३ पु०। २. तत्र ब्राह्मणधीः पदे—१ पु०।

**विशेषे प्रतिषिद्धे हि सामान्यं यदनन्तरम्।**
**सामान्याकाङ्क्षिणं शब्दं निरुणद्धि तदात्मनि ॥ २५ ॥**

कक्षाभेदेन हि सत्त्व-द्रव्यत्व-पार्थिवत्व-प्राणित्व-पुंस्त्व-ब्राह्मणत्वादि-सामान्यानि वर्त्तन्ते पूर्वपूर्वापेक्षयोत्तरोत्तरो विशेषो भवति। तदिह पुंस्त्वविशेषे ब्राह्मण्ये नञा पर्युदस्ते तदभावयुक्तसामान्यापेक्ष. शब्दस्तदनन्तरेण पुंस्त्वेनानुरुध्यते, तस्यैव प्रथम प्रतीतेरिति ॥ २५ ॥

भवतु प्रथमं प्रतीतिः, तथापि किमिति तत्रैवावतिष्ठते ? अत आह—

**प्रथमातिक्रमे तस्य कारणं नैव विद्यते।**

तेन ब्राह्मण्यान्निवृत्तं नरत्वमेवाब्राह्मणपदस्य प्रतिपाद्यमवशिष्यत इत्याह—

**ब्राह्मणत्वादतोऽपेतं नरत्वमवशिष्यते ॥ २६ ॥**

ननु श्रुत्यवगतमिव ब्राह्मण्यमर्थावगतमपि पुस्त्व कि नञा न प्रतिषिध्यते ? अत आह—

**व्युदस्य ब्राह्मणत्वं च[1] नञि जाते विशेषणे।**
**नरत्वोदसनं यत्तु कल्पेताश्रुतमेव तत् ॥ २७ ॥**

न हि श्रौतं ब्राह्मण्यं प्रतिषिध्य पुनर्लाक्षणिक पुंस्त्वं नञा शक्य निषेद्धुम्, सकृदुच्चरितस्य द्विरभिधानासम्भवात्। **अश्रुतम्**, अशब्दमित्यर्थः ॥ २७ ॥

उपसंहरति पादत्रयेण—

**तस्माद् यस्यैव ते भेदा निषिद्धयेरंस्तदर्थतः।**
**भेदान्तरस्थं सामान्यम्,**

यस्य पुंस्त्वस्य विशेषो ब्राह्मण्यं नञा निषिध्यते तदेव पुंस्त्वं प्रतीयते। तच्च प्रतीयमानं निर्विशेषावस्थानासम्भवात् अर्थात् क्षत्रियादिभेदान्तरस्थ प्रतीयत इति।

लोकेऽप्यब्राह्मणपदात् क्षत्रियादिष्वेव प्रतीतिः, न वस्तुमात्र इत्याह—

**लोकेऽप्येवं प्रतीयते ॥ २८ ॥**

किमिति पुनर्भेदान्तरस्थमेव प्रतीयते, न पुनर्ब्राह्मणस्थमपि, निषेधादिति चेत् ? न; नञोऽत्र पर्युदासवृत्तित्वेन निषेधकत्वाभावात् ? अत आह—

**प्रसज्जिन्यां च तद्बुद्धौ निषेधोऽर्थादपीष्यते।**

पर्युदासवृत्तिरपि नञ् अर्थतः प्रतिषेधफल एव, न हि ब्राह्मण्याभावयुक्त्वं ब्राह्मणे भवतीति।

इतश्च क्षत्रियादिष्वेव वृत्तिर्न वस्तुमात्र इत्याह—

**तन्मात्ररहिते चार्थे सादृश्यात् तन्मतिर्भवेत् ॥ २९ ॥**

---

१. न—मु० पा०।

ब्राह्मण्यमात्ररहितवस्त्वन्तरापेक्षाया सादृश्यात् क्षत्रियादिष्वेव मतिः शीघ्रं भवतीति ॥ २९ ॥

एवं तावदभाववाचित्वेऽपि नञोऽतिप्रसङ्गनिराकरणेन क्षत्रियादिष्वेव प्रवृत्तिः समर्थिता। यदि त्वेवमप्यतिप्रसङ्गः स्यात् ततोऽब्राह्मणपदाल्लोके क्षत्रियादिष्वेव प्रतीतेरभाववत् सादृश्यमपि वाच्यमङ्गीक्रियताम्, अब्राह्मणो ब्राह्मणसदृश इत्यर्थ.। तदिदमाह—

**सादृश्यमेव वा वाच्यमिष्टमब्राह्मणादिषु।**

किमस्ति ब्राह्मणसादृश्यमितरेषाम् ? बाढमित्याह—

**तच्चावयवसामान्याद्,**

सादृश्यमित्यर्थः।

नन्वघटादिषु न घटावयवसामान्ययोग शरावादेरस्ति ? अत आह—

**विनाप्येतेन लक्ष्यते ॥ ३० ॥**

विनाप्यवयवसामान्येन सम्बन्धिसामान्यमात्रेणापि सादृश्य दृश्यत इत्युक्तम् **उपमाने**। अस्ति च मार्त्तिकत्वादिना घटसादृश्य शरावादेरिति ॥ ३० ॥

यत्र तर्हि 'नेक्षेत' इत्यादौ नास्त्येव सादृश्यम्, तत्र कथम् ? अत आह—

**क्वचिद् विनापि सादृश्यात् साहचर्यादिहेतुका।**
**नञ्युक्तशब्दवृत्तिः स्याद् यथा वक्ष्यत्यनीक्षणे ॥ ३१ ॥**

न चायं नियम.—सर्वत्र सादृश्यादेव नञि उक्तशब्दवृत्तिरिति, विनापि तेन साहचर्यादिनापि सा सम्भवत्येव। तत्र हीक्षणसमभिव्याहृतेन नञा तदभावं प्रतिपाद्य तत्सहचरितस्तद्धेतुभूतसङ्कल्पो नेक्ष्य इत्येवविधो लक्ष्यते, न ह्ययमीक्षण-प्रतिषेधः, किन्त्वनीक्षणविधिः, व्रतप्रक्रमादिति वक्ष्यत इति ॥ ३१ ॥

एतदेव विवृणोति—

**ईक्षणव्यतिरिक्ता हि क्रिया तत्राप्यपेक्षिता।**
**प्रत्यासत्तेर्न सङ्कल्पमतिक्रम्य प्रतीयते ॥ ३२ ॥**

ननु प्रतिषेधवाचिनो नञः कथमर्थान्तरे वृत्तिः ? अत आह—

**नामधात्वर्थयोगी च नैव नञ् प्रतिषेधकः।**

न सर्वत्रास्य निषेधवचनत्वम्। आख्यातयोगी अयं प्रतिषेधमभिधत्ते, न नामयोगी, धात्वर्थयोगी वेति। तद्योगिनस्तर्हि किमभिधेयम् ? अत आह—

**वदतोऽब्राह्मणाधर्मावन्यमात्रविरोधिनौ ॥ ३३ ॥**

सम्भवति चाभाववचनस्यापि लक्षणयान्यमात्रे विरुद्धे च प्रवृत्तिरिति ॥३३॥

यत्र तर्हि 'न पिबेत्' इत्यादावाख्यातमात्रयोगी नञ्, तत्र प्रतिषेधमात्रपर्य-वसानान्न वस्त्वालम्बनत्वम् ? अत आह—

**यत्राप्याख्यातसम्बन्धात् प्रतिषेधः प्रतीयते ।**
**तत्रौदासीन्यवस्त्वेव प्रतिपत्ताऽवलम्बते ॥ ३४ ॥**

औदासीन्यं क्रियारहितमात्मस्वरूपमेव, तच्च वस्त्विति ॥ ३४ ॥

उपसहरति—

**तस्माद् वस्तुन्यपोहा. स्युः,**

यदाभावबुद्धेरभावविशिष्ट वस्त्वेवालम्बन नाभावमात्रम्, तदावश्यम-साधारणशाबलेयादेरालम्बनत्वानुपपत्तेरन्यद् गोत्व वस्त्वेवालम्बनमापद्यत इति ।

दूषणान्तरमाह—

**अपि चावस्तुकल्पने ।**
**प्रागन्त्येभ्यो विशेषेभ्यो न किञ्चिद्वस्तु लभ्यते ॥ ३५ ॥**

सर्वं सामान्यमवस्त्वात्मकमिति कल्पने प्राक् परमाणुभ्यो न किञ्चिद् वस्तु लभ्यते, द्व्यणुकस्यापि द्वयो. सामान्यरूपत्वादिति ॥ ३५ ॥

तत. किम् ? इत्यत आह—

**न चान्त्यै[1]र्व्यवहारोऽस्ति,**

न ह्यप्रत्यक्षैर्व्यवहार. सम्भवतीति ।

किञ्च, स्थूलानुपपत्तिकल्प्या. परमाणव., तदभावे तेऽपि दुर्निरूपा इत्याह—

**शक्यं नैषां निरूपणम् ।**

एवं च सौत्रान्तिकैरपि शून्यतैवापोहवाचोयुक्त्या समाश्रिता स्यात् ? इत्याह—

**अपोहशब्दवाच्याथ शून्यतान्यप्रकारिका[2] ॥ ३६ ॥**

ततः किम् ? इत्यत आह—

**तस्यां चाश्वादिबुद्धीनां(ना)मांशग्रहणं भवेत् ।**

तथापि किम् ? इत्यत आह—

**तत्रान्यापोहवाच्यत्वं मुधैवाभ्युपगम्यते ॥ ३७ ॥**

कथं मुधा ? इत्यत आह—

**सामान्यं वस्तुरूपं हि बुद्ध्याकारो भविष्यति ।**
**शब्दार्थोऽर्थानपेक्षो हि वृथापोहः प्रकल्पितः ॥ ३८ ॥**

भवतु बाह्यार्थाऽनपेक्षो बुद्ध्याकार एव शब्दार्थ., सोऽपि त्वपोह एव भवतु, कथं वस्तुरूपः ? अत आह—

**वस्तुरूपा च सा बुद्धिः शब्दार्थेषूपजायते ।**
**तेन वस्त्वेव कल्पेत[3] वाच्यं बुद्ध्यनपोहकम् ॥ ३९ ॥**

---

१. अन्यै०—का० सं० । २. ०प्रकाशिका—४ पु० ।
३. कल्प्येत—३ पु० ।

बाह्यस्य हि वस्तुरूपस्य सामान्यस्य व्यतिरेकाव्यतिरेकादिविकल्पासहत्वाद-भ्युपेत्याप्यपोहकल्पनाम्, बुद्धिमात्रकल्पितस्य तु शब्दार्थत्वे बुद्धेर्गौरित्येववस्तुरूप-त्वात् यथाभासं वस्त्वात्मकमेव बुद्धिरूपं बुद्ध्यन्तरानपोहात्मकं बाच्य युक्तम्, नापोहरूपमिति ॥ ३९ ॥

तत्रैव दृष्टान्तमाह—

**असत्यपि च बाह्येऽर्थे वाक्यार्थप्रतिभा यथा ।**
**पदार्थेऽपि तथैव स्यात् किमपोहः प्रकल्प्यते ॥ ४० ॥**

वाक्यार्थो हि यथा बाह्यार्थासम्भवाद् बुद्ध्याकारः कल्पितो नापोहरूपः, तथा पदार्थोऽपीति ॥ ४० ॥

स्यादपि पदार्थस्यापोहरूपत्व यदि, शब्दादुपजायमाना बुद्धिः 'अगौर्न भवति' इत्येवमगवात्मकबुद्धिव्यवच्छेदरूपा जायेत, सा तु 'गौः' इत्येवस्वरूपेणैवोत्पद्यते, न त्वन्यापोह बिभर्त्तीत्याह—

**बुद्ध्यन्तराद् व्यवच्छेदो न च बुद्धेः प्रतीयते ।**
**स्वरूपोत्पादमात्राच्च नान्यमंशं बिभर्ति सा ॥ ४१ ॥**

दूषणान्तरमाह—

**भिन्नसामान्यवचना विशेषवचनाश्च ये ।**
**सर्वे भवेयुः पर्याया यद्यपोहस्य वाच्यता ॥ ४२ ॥**

चोदयति—

**ननु भेदादपोहानां प्रसङ्गोऽयं न युज्यते ।**

अथापोहत्वेनैकत्वात् पर्यायत्वम्, तद् वस्तुत्वेन जातीनामेकत्वात् तवापि तुल्यम् ? इत्याह—

**सामान्यापोहक्लृप्त्या चेद् वस्तुमात्रे समं तव ॥ ४३ ॥**

परिहरति द्वयेन—

**भिद्यन्ते मम वस्तुत्वात् सामान्यानि परस्परम् ।**
**असङ्कीर्णस्वभावानि न चैकत्वं वितन्वते[1] ॥ ४४ ॥**
**संसृष्टैकत्वनानात्वविकल्परहितात्मनाम् ।**
**अवस्तुत्वादपोहानां तव स्याद् भिन्नता कथम् ॥ ४५ ॥**

वस्तुधर्मो हि भेदः, कथं तुच्छस्य[2] सर्वोपाख्यारहितस्याभावस्य स्यादिति ।

भेदे वा बलाद् वस्तुत्वं स्यादित्याह—

**यदि वा भिद्यमानत्वाद् वस्त्वसाधारणांशवत् ।**

अवस्तुत्वे तु तदवस्थं पर्यायत्वमित्याह—

---

१. बितन्यते—१ पु० ।    २. तु कथं असौ—२ पु० ।

**अवस्तुत्वे त्वनानात्वात् पर्यायत्वान्न मुच्यते ॥ ४६ ॥**

चोदयति—

**ननु चापोह्यभेदेन भेदोऽपोहस्य सेत्स्यति ।**

उक्तं च परैः—

तस्माद्यतो यतोऽर्थाना व्यावृत्तिस्तन्निबन्धना ।
जातिभेदा प्रकल्प्यन्ते तद्विशेषावगाहिनः ॥ ( प्र० वा० ४-४१ ) इति ।

दूषयति—

**न विशेषः स्वतस्तस्य परतश्चौपचारिकः ॥ ४७ ॥**

न चौपचारिकोऽपर्यायतामापादयति, न ह्यभिन्नस्य सम्बन्धिभेदाद् वास्तवो भेदो भवति । अत एवाधारभेदादपि भेदो न भवतीत्याह—

**तेनैवाधारभेदेनाप्यस्य भेदो न युज्यते ।**

एतदेव दृष्टान्तेनोपपादयति सार्द्धेन—

**न हि सम्बन्धिभेदेन भेदो वस्तुन्यपीष्यते ॥ ४८ ॥**
**किमुतावस्त्वसंसृष्टम् अन्यतश्चानिर्वतितम् ।**
**अनवाप्तविशेषांशं यत् किमप्यनिरूपितम्[1] ॥ ४९ ॥**

यत् खलु केनचिदपि रूपेणानिरूप्यमवस्तु, तस्यान्यससर्गो व्यावृत्तिर्वा नास्ति, नतरा तन्निबन्धना विशेषावाप्तिरिति ॥ ४९ ॥

उपसंहरति—

**तस्माद् यथैव भेदेऽपि पिण्डानां नैव भिद्यते[1] ।**
**तथैवापोह्यभेदेऽपि नानेकोऽयं भविष्यति ॥ ५० ॥**

भेदे वा पिण्डभेदादपि भेद. स्यत्, ततश्च सामान्यरूपता हीयेतेत्याह—

**भेदे वा प्रतिपिण्डं स्यादगोऽपोहः, तथा सति ।**
**सामान्यं शाबलेयादेरिति नेष्टं प्रसिध्यति ॥ ५१ ॥**

यदि त्वपोह्यभेदादेव भेदो नाधारभेदादित्युच्यते, तत्राह—

**संसर्गिणोऽपि चाधारा यं न भिन्दन्ति रूपतः ।**
**अपोह्यैः स बहिर्भूतैर्भिद्येतेत्यतिकल्पना ॥ ५२ ॥**

भवतु वापोह्यभेदाद् भेदः, अपोह्यभेदोऽपि नास्तीत्याह द्वयेन—

**अगव्यश्वातिरेकः स्यादनश्वश्च गवाधिकः ।**
**शेषं हस्त्याद्यपोह्यं तु द्वयोरपि न भिद्यते ॥ ५३ ॥**
**तत्रैकभेदाद् भेदोऽस्तु बह्वभेदादभिन्नता ।**
**भूयसां स्यात् सधर्मत्वमित्यभेदः प्रसज्यते ॥ ५४ ॥**

---

१. विद्यते—मु० पा० ।

गवाश्वयोर्हि बहवोऽपि हस्तिसिंहादयोऽपोह्या भिद्यन्ते, अश्वमात्रमेव तु गोरपोह्येष्वगोष्वश्वापोह्यादनश्वादधिकम्, अनश्वे गोमात्रम्, अतो बहूनामपोह्यनामभेदादभेद एव गवाश्वयो. स्यादिति ॥ ५३ ५४ ॥

गवाश्वमात्रमपि वा नाधिकमित्याह—

**गौश्च हस्त्याद्यपोहेन नाश्वरूपाद् विशेष्यते।**
**करोति तदपोहं चेदैकरूप्यं विरुध्यते ॥ ५५ ॥**

अपोह्यैकत्वनिबन्धनमेव हि शाबलेयादीनाम् एकजातीयत्वम्, नान्यद्, गवाश्वयोरपि हस्त्यादिकमेकमपोह्यम्; ततश्च गौरश्वेनाविशिष्टः समानजातीय· सम्पद्यते, तद्यदि गौरश्वमपोहेत समानजातीयत्व विरुध्येत; अतो गौर्गवान्तरमिवाश्वमपि नापोहेत, अश्वोऽपि न गाम्। अतो गवाश्वयोर्न कश्चिदपि अपोह्योऽधिकोऽस्तीति ॥ ५५ ॥

चोदयति—

**सर्वशब्देषु चैकैकम् अपोह्यमतिरिच्यते।**
**तत्रासाधारणत्वेन[1] तन्मात्रापोह्यता भवेत् ॥ ५६ ॥**

सर्वशब्देषु शब्दान्तर प्रतियोगिन गृहीत्वालोच्यमानेष्वेकैकमपोह्य प्रतियोग्यपोह्यात् स्वापोह्येऽतिरिच्यते, यथा गव्यश्वन सहालोच्यमाने गोरपोह्येऽश्वापोह्यादश्वमात्रमतिरिच्यते, अश्वापोह्ये च गोमात्रम्। हस्त्यादिक तु द्वयोः साधारणम्, असाधारणेन च व्यपदेशो भवति, अश्व एव च गोरसाधारण इति स एव गोरपोह्योऽर्थो न हस्त्यादि.। अश्वस्य गौरेवापोह्यो न हस्त्यादिरिति। ततश्चापोह्यभेदात् सिध्यति गवाश्वापोहयोर्भेद इति ॥ ५६ ॥

परिहरति—

**ततोऽश्वापोहरूपत्वात् सिंहादिः सर्व एव ते।**
**तन्निमित्तमगोऽपोहं बिभ्रदुच्येत गौरिति ॥ ५७ ॥**

यद्यश्व एवागौः, ततो येषामश्वोऽपोह्यः ते सर्वेऽप्यश्वापोहनिमित्तम् अगवापोहं बिभ्रतो गावः स्युः, सिंहस्यापि गोवदेवाश्वेन सहालोच्यमानस्याश्व एवापोह्यः स्यात्। ततश्चागोरूपमश्वमपोहमानः सिंहोऽपि गौः स्यात्, तथा गौरप्यसिंहरूपमश्वमपोहमानः सिंहः स्यात्। असाधारणापोह्य एव हि गोः सिंहस्य वाश्वः, तस्य चैकत्वेन कथ गोसिंहयोर्भेदः स्यादिति ॥ ५७ ॥

शङ्कते—

**सर्वापोहो यदीष्येत,**

नासाधारणमश्वमात्रं गोरपोह्यम्, किन्तु सर्वमेवागोरूप सिंहादिकं गोरपोह्यम्,

---

१. तत्र साधा०—मु० पा०।

अश्वस्यापि सर्वमश्वातिरिक्तम्। तत्र यद्यप्युभयोरप्यपोह्ययोर्हस्त्यादिकमभिन्नम्, तथाप्येकत्र गवाशस्येतरत्र चाश्वाशस्याधिक्यात् तावतैव सङ्घातयोर्भेदो भवतीति अपोह्यभेदादपोहभेदः सिद्धयतीति।

तद् विकल्पयति—

**स वक्तव्यः कथं पुनः।**

प्रत्येकापोहे तावद् बह्वो दोषा. स्युरित्याह सार्द्धद्वयेन—

**यदि प्रत्येकरूपेण नापोह्यानन्तता भवेत्॥ ५८॥**
**भिन्नत्वाच्चाप्यपोह्यानां भिन्नोऽपोहः प्रसज्यते।**
**तत्रैकस्मिन् भवेत् पिण्डेऽनन्तजातिसमन्वयः॥ ५९॥**
**ततो गौरिति सामान्यं वाच्यमेकं न सिध्यति।**
**जात्यन्तरमतिश्चैषु भवेज्जात्यन्तरेष्विव॥ ६०॥**

**जात्यन्तरेषु** गवादिष्विवेति॥ ५८-६०॥

ननु समुदायरूपेणापोह्यत्वमस्माभिरुच्यते, किमनभ्युपगतारोपेण दूषणमुच्यते? अत आह—

**समुदायात्मना नापि भवेदेषामपोह्यता।**

कारणमाह—

**समुदायो हि नैकेन विना धर्मेण जायते॥ ६१॥**

ततः किम्? इत्याह—

**नाप्येकदेशता तेषामस्ति नाप्येककालता।**

किञ्च, समुदायोऽपि समुदायिव्यतिरिक्तो भवता नास्त्येव, अव्यतिरेके तदवस्थमानन्त्य स्यात्? इत्याह—

**व्यतिरिक्तश्च सङ्घातस्तेषां कश्चिन्न विद्यते॥ ६२॥**

शङ्कते—

**यदि त्वव्यतिरिक्तः स्यादानन्त्यं तदवस्थितम्।**

अपोह्यते तेन सर्वसामान्य[1] ह्यत्रागोत्व तेन रूपेणापोह्यते, न प्रत्येकं नापि समुदायात्मनेति।

दूषयति—

**यदि सामान्यरूपेण तेऽपोह्यन्ते[2], न वस्तुता॥ ६३॥**

सामान्य हि भवतामवस्त्विति॥ ६३॥

ततः किम्? इत्याह—

**कथं वा वस्त्वपोह्येत,**

---

१. असर्वं०—मु० पा०। २. अपोह्यं ते—मु० पा०।

कथं वा नापोह्यते ? अत आह—

**नाभावो भावमृच्छति।**

योऽभावः सोऽपोह्यः। न चाभावस्यापोहोऽस्ति, नापि अपोह्यमिति[1]। यत्र त्वभावस्यापोहः, यथा इह भूतले घटो नास्तीति नेति, तत्र तदपोहेन भाव प्रतीयते। घटोऽस्तीत्येव तत्रार्थं, न त्वभावान्तरम्। तदिहाभावापोहेन प्रतीयमानं गोत्वं वस्तुरूपमेव स्यात्। यथोक्तम्—'गोत्वं वस्त्वेव तैरुक्तमगोपोहगिरा स्फुटम्' (श्लो० वा० अभा० १) इति। तदाह—

**अपोह्यमाने चाभावे भाव एवावशिष्यते॥ ६४॥**

अभावापोहे चापोह्यभेदोऽपि नावकल्पते, अभावभेदाभावादित्याह—

**अपोह्यभेदक्लृप्तिश्च नाभावाभेदतो भवेत्।**

शङ्कते—

**तद्भेदोऽपोहभेदाच्चेत्,**

दूषयति—

**प्राप्तमन्योन्यसंश्रयम्॥ ६५॥**

तदेव दर्शयति—

**गोसामान्यस्य भिन्नत्वादगौरित्येष भिद्यते।**
**अगौरित्यस्य भेदेन गोसामान्यं च भिद्यते॥ ६६॥**

सम्प्रत्येकापोहेऽप्यवस्तुत्वमपोह्यस्यास्त्येव ? इत्याह अपोह्यमन्तेन—

**अगावोऽश्वादयश्च स्युस्तेऽप्यभावात्मकाः पुनः[2]।**
**कर्काद्यपेक्षया[3] तेऽपि तथेत्येवं न गम्यते॥ ६७॥**
**किमपोह्यम्,**

अश्वसिंहादयोऽपि व्यक्त्यपेक्षया सामान्यरूपाः, व्यक्तयोऽपि स्वविशेषापेक्षया, स्वविशेषा अपि स्वावयवापेक्षया, ततश्चापरमाणु[4] सर्वं सामान्यरूपम्, न किञ्चिद् वस्तुरूप[5]मपोह्यमस्तीति।

तथापोहाधारोऽपि वस्तुरूपो नास्तीत्याह—

**क्व चापोहः,**

कारणमाह—

**गोपिण्डेष्वेवमेव च।**

ततश्चापोह्यत्वमपोहाधारत्वं च द्वयं परमाणु स्यात्, न त्वेद् युक्तमित्याह—

---

१. अपोह्यत्वम्—मु० पा०। २. शुभा—१ पु०।
३. कर्माद्यपेक्षया—१ पु०। ४. आपरमाणुभ्यः—२ पु०।
५. ०रूपमेव०—२ पु०।

**तत्र[1] स्याद् द्वयमप्येतदन्त्येषु परमाणुषु ॥ ६८ ॥**
**न चान्त्येषु द्वयोरस्ति व्यवहारो भिदां प्रति ।**

न ह्याभिधानिके व्यवहारे परमाण्वन्तरापोहेन परमाण्वन्तराणि प्रतीयन्ते इति ।

अतश्च न परमाणुषु द्वयम्, सजातीयविजातीयविभागासम्भवादित्याह सार्धेन—

**गवाश्वपरमाणूनां विशेषश्च न विद्यते ॥ ६९ ॥**
**स्वरूपजातिसंस्थानपरिमाणादिलक्षणः ।**
**किमपोह्यं क्व चापोहस्तत्रापि न विशिष्यते ॥ ७० ॥**

न ह्यसति विशेषे केचिद्भिन्नजातीयत्वेनापोह्या केचित् समानजातित्वेनानपोहाधारा इति ग्रहीतु शक्यत इति ॥ ७० ॥

न केवलं परमाणुष्वेवाय दोषः, सत्स्वपि स्थूलेष्ववयविद्रव्येषु विधिरूपसामान्यानभ्युपगमेऽपोह्यापोहकव्यवस्था न सिध्यत्येवेत्याह द्वयेन—

**न चाप्रसिद्धसारूप्यानपोहविषयात्मना ।**
**शक्तः कश्चिदपि ज्ञातुं गवादीनविशेषतः ॥ ७१ ॥**
**अपोह्यानपि चाश्वादीनेकधर्मान्वयाद् ऋते ।**
**न निरूपयितुं शक्तिस्तत्रापोहो न सिद्धयति ॥ ७२ ॥**

सर्वेषां हि सजातीयविजातीयपिण्डानामविशिष्ट. परस्परभेदः । तत्रासत्या केषुचिदेकस्य धर्मस्यानुवृत्तौ केऽपोहाधारा समानजातीया, केऽपोह्या विजातीया. ? इति कथं ज्ञायेरन्, तदज्ञाने च कथमपोहसिद्धिरिति ॥ ७१-७२ ॥

ननु जातिवदपोह एव केषाञ्चित्पिण्डानामेक रूपमस्तु, कि रूपान्तरेण ? अत आह द्वयेन—

**न चान्वयविनिर्मुक्ते[2] प्रवृत्तिर्लिङ्गशब्दयोः ।**
**ताभ्यां च न विनापोहो न चासाधारणेऽन्वयः ॥ ७३ ॥**
**अपोहश्चाप्यनिष्पन्नः साहचर्यं क्व दृश्यताम् ।**
**तस्मिन्नदृश्यमाने च न तयोः स्यात् प्रमाणता ॥ ७४ ॥**

जातिर्हि प्रत्यक्षा, सा येषु दृश्यते ते समानजातीया., येषु तु न दृश्यते, ते विजातीयाः, इति शक्यं विवेक्तुम् । अपोहस्त्वप्रत्यक्षः केवलं शब्दलिङ्गावसेयः, शब्दलिङ्गयोश्चान्वयाधीना प्रवृत्तिः । न चान्वयग्रहणमसाधारणेन सम्भवति, तस्यातद्विषयत्वात् । तेन चान्वयाग्रहणेऽपोहः कथमनुमीयेत, न चापोहेनान्वयग्रहण सम्भवति, तस्य प्रागन्वयग्रहणादनिष्पन्नत्वात् । अन्वयिग्रहणाधीनत्वात्

---

१. तस्य—१ पु० । २. नान्वयविनिर्मुक्ता—३ पु० ।

अन्वयदर्शनस्य अदृष्टे चान्वये कथ तयोः प्रामाण्यम्! अतोऽपोहस्यादृष्टत्वात् तन्निबन्धनः सजातीयविजातीयविभागो न सम्भवति ॥ ७३-७४ ॥

ननु विपक्षादर्शनमात्रेणातद्व्यावृत्ति तौ गमयत., किमन्वयग्रहणेन ? अत आह—

**न चादर्शनमात्रेण ताभ्यां प्रत्यायनं भवेत्।**

कारणमाह—

**सर्वत्रैव ह्यदृष्टत्वात् प्रत्याय्यं नावशिष्यते ॥ ७५ ॥**

अदृष्टे ह्यन्वये विपक्षवते सपक्षेऽप्यदृष्टौ लिङ्गशब्दौ कथमिव साध्यं प्रतिपादयेयाताम्! यथैव हि गोशब्दोऽश्वादिष्वगोषु अदृष्टस्तद्व्यावृत्ति गमयति, एवं गव्यप्यदृष्ट[1] इति तामपि व्यावर्त्तयन्न किञ्चित् प्रतिपादयेदिति ॥ ७५ ॥

अथादृष्टेऽपि केषाञ्चिदैकरूप्ये केषाञ्चिदपोह्यत्व केषाञ्चिदपोहाधारत्वं कल्पयेत्, ततो व्यवस्था न स्यात्? इत्याह—

**अथासत्यपि सारूप्ये स्यादपोहस्य कल्पना।**
**गवाश्वयोरयं कस्मादगोऽपोहो न कल्प्यते ॥ ७६ ॥**

तदेव **शाक्यमते** तावदपोहस्य केनचिदप्यदृष्टत्वान्न तन्निबन्धन सजातीयविजातीयत्वकल्पन[2]मित्युक्तम् ॥ ७६ ॥

यद्यपि चास्मन्मताश्रयणेनानुपलब्ध्याख्यप्रमाणान्तरगम्योऽपोहो न सम्बन्धग्रहणापेक्षः, तथापि विधिरूपसामान्याभावे सजातीयविजातीयव्यवस्था न सिद्ध्यत्येवेत्याह—

**शाबलेयाच्च भिन्नत्वं बाहुलेयाश्वयोः समम्।**
**सामान्यं नान्यदिष्टं चेत् क्वागोऽपोहः प्रवर्तताम् ॥ ७७ ॥**

इतरेतराभावो ह्यपोह सर्वेषा शाबलेयबाहुलेयकर्कादीनामविशिष्टः। न च शाबलेयादिष्वनुगत कर्कादिभ्यश्च व्यावृत्तमस्ति किञ्चिद् वस्तुरूपं सामान्यम्, तत्र यथैव शाबलेयबाहुलेययोः कर्कव्यावृत्ति समानेति तन्निबन्धनं समानजातीयत्वम्, तथा शाबलेयकर्कयोः बाहुलेयाद् व्यावृत्तिः समानेति केन विशेषेण कचिदपोहमवस्थाप्यान्यानपोह्यपक्षे स्थापयाम.। व्यावृत्तिमात्रेण साम्ये त्वत्यन्तविलक्षणानामपि सर्षपवृक्षसिहादीनामप्यश्वादिव्यावृत्तिसामान्यात् सजातीयत्वं स्यादिति ॥ ७७ ॥

तदेवं प्रयुक्तोऽपि शब्दोऽगृहीतसम्बन्धत्वान्नापोहं गमयतीत्युक्तम्। प्रयोगोऽपि तस्य न सम्भवतीत्याह—

---

१. अदृष्ट एव—३ पु०। २. विजातीयत्वं सुकरम्—२ पु०।

**इन्द्रियैर्नाप्यगोऽपोहः प्रथमं व्यवसीयते ।**
**नान्यत्र शब्दवृत्तिश्च किं दृष्ट्वा स प्रयुज्यताम् ॥ ७८ ॥**

दृष्ट्वा ह्यर्थं प्रयोक्तारः शब्दं प्रयुञ्जते, न चेन्द्रियैरपोहो दृश्यते, यस्त्वपोहादन्योऽसाधारणः न तत्र शब्दप्रवृत्तिः, अतः कथं शब्दः प्रयुज्येतेति ॥ ७८ ॥

अनुमानादवगम्य प्रयुज्यत इति चेत् ? तत्राह—

**पूर्वोक्तेन प्रबन्धेन नानुमाप्यत्र विद्यते ।**

दृश्यादर्शनं लिङ्गम्, तदपि हि दर्शनाभावरूपत्वाद् दर्शनान्तराभावापेक्षमित्यनवस्था **अभाववादे** दर्शितेति ।

प्रत्यक्षानुमानानवगम्यत्वेनैव सम्बन्धग्रहणमपि तेन सह शब्दस्य न सम्भवति इत्याह—

**सम्बन्धानुभवोऽप्यस्य तेन नैवोपपद्यते ॥ ७९ ॥**

किञ्च, यदाश्वादीनां प्रत्येकम् अपोह्यत्वमानन्त्यान्न भवति तदावश्यमगोरूपेण तेषामपोह्यत्वं वक्तव्यम्, गोनिवृत्त्यात्मकं चागोरूपम्, निवृत्तिश्चाप्रत्यक्षा शब्देनैवावगन्तव्या ? तत्र येषां निवृत्तिवाचिनो नञादयो न प्रसिद्धाः, तेषामगोरसिद्धत्वान्न तद्व्यावृत्तिरूपो गोशब्दार्थः प्रतिभासेत । तेषामपि तु प्रतिभासते, अतो न शक्यं वस्तुरूपसामान्यनिराकरणमित्याह—

**निवृत्तिवाचिनः शब्दा न प्रसिद्धाश्च यान् प्रति ।**
**तेषामगोरसिद्धत्वान्न सामान्यनिराक्रिया ॥ ८० ॥**

किञ्च, कोऽयमगौः, यस्यापोहो दृश्यते, यो गोशब्दस्यानभिधेयः सोऽगौः स्यात्, कस्य तदनभिधेयत्वमिति न ज्ञायते ? इत्याह -

**अगोशब्दाभिधेयत्वं गम्यतां च कथं पुनः ।**

इतर आह—

**न दृष्टो यत्र गोशब्दः सम्बन्धानुभवक्षणे ॥ ८१ ॥**

दूषयति—

**एकस्मात् तर्हि गोपिण्डाद् यदन्यत् सर्वमेव तत् ।**
**भवेदपोह्यमित्येवं न सामान्यस्य वाच्यता[1] ॥ ८२ ॥**

अथ यो गोरन्यः सोऽगौः ? तत्राह द्वयेन—

**सिद्धश्चागौरपोह्येत गोनिषेधात्मकश्च सः ।**
**तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ॥ ८३ ॥**
**स चेदगोनिवृत्त्यात्मा भवेदन्योन्यसंश्रयः ।**

यदि त्वगोसिद्ध्यर्थं विधिरूपो गौरङ्गीक्रियते तत्र वृथापोहवागित्याह—

---

१. बाध्यता—का० ।

**सिद्धश्चेद् गौरपोह्यार्थं वृथापोहप्रकल्पना ॥ ८४ ॥**

इतरेतराश्रय विवृणोति—

**गव्यसिद्धे त्वगौर्नास्ति तदभावे च गौः कुतः[1] ।**

गोशब्देनाप्यगामनभिधाय तन्निवृत्तिमभिधातुमशक्नुवता अवश्यमगौरभिधातव्यः। स च गोनिषेधात्मा, नानभिधाय गामभिधातुं शक्यत इति प्रथम विधिरूपगौरभिधातव्य., तदिदमुक्तम् 'गोत्व वस्त्वेव तैरुक्तम्' ( श्लो० वा० अपो० १ ) मिति।

अत्र **भिक्षुणा** जातिमात्रस्य जातिमत्सम्बन्धस्य जातिमतो वाभिधाने दूषणानि दर्शितानि, तान्यपोहवादिनोऽपि तुल्यानीति पश्चाद् वक्ष्यति, सम्प्रत्यपोहवद भिधानेऽधिकमपि दूषणमपोहवादिनो दर्शयति—

**नाधाराधेयवृत्त्यादिसम्बन्धश्चाप्यभावयोः ॥ ८५ ॥**

जातिवादिनो हि सम्भवति जातिविशिष्टा व्यक्तिरभिधेया, सा[2] परं गौरवा न्नाभिधीयते। भवतस्त्वपोहविशिष्ट न किञ्चिदभिधेयं सम्भवति। न तावदपोहा न्तरम्, अवस्तुनोराधाराधेयादिसम्बन्धाभावेन मिथो विशेषणविशेष्यत्वानुप पत्तेरिति ॥ ८५ ॥

न चासाधारणमपोहविशिष्टमभिधेयम्, तस्य शब्दादप्रतीतेरित्याह—

**न चासाधारणं वस्तु गम्यतेऽपोहवत्तया ।**

न चासाधारणस्यापोहेन सम्बन्धो भवतीत्याह—

**कथं वा परिकल्प्येत सम्बन्धो वस्त्ववस्तुनोः ॥ ८६ ॥**

अथानवगम्यमानस्य किमिति विशेष्यत्व न भवति ? अत आह—

**स्वरूपसत्त्वमात्रेण न च किञ्चिद् विशेषणम् ।**

न हि सत्तामात्रावस्थितस्य किञ्चिद् विशेषणं सम्भवतीति।

कीदृशस्य विशेषणम् ? अत आह—

**स्वबुद्धया रज्यते येन विशेष्यं तद् विशेषणम् ॥ ८७ ॥**

विशेषणानुरक्ततया बुध्यमानस्य विशेषणम्, न सन्मात्रावस्थितस्येति ॥८७॥

न चापोहस्य विशेषणत्वमपि सम्भवतीत्याह—

**न चाप्यश्वादिशब्देभ्यो जायतेऽपोहबोधनम् ।**

वस्त्वाकारा हि गवादिशब्दात् प्रतीति., नापोहरूपेति।

ततः किम् ? इत्याह—

**विशिष्टबुद्धिरिष्टेह[3] न चाज्ञातविशेषणा ॥ ८८ ॥**

१. इदमर्धत्रयं १ पु० नास्ति। २. सा यदि—मु० पा०।

३. विशेष्य०—मु० पा०।

किञ्च, अभावस्य विशेषणत्वे तदनुरूपमवस्त्वात्मकमेव विशेष्यज्ञानं स्यात्, तन्नास्तीत्याह—

**न चान्यरूपमन्यादृक् कुर्याज्ज्ञानं विशेषणम् ।**

भावरूपविशेष्यज्ञाने[1] कथमभावस्य विशेषणत्वम्? इत्याह—

**कथं चान्यादृशे ज्ञाते तदुच्येत विशेषणम् ॥ ८९ ॥**

अथ वस्तुरूपे विशेष्ये गम्यमानेऽप्यवस्त्वेव विशेषणम्, ततोऽप्यस्ति अतिप्रतिसङ्गः? इत्याह—

**अथान्यथा विशेष्येऽपि स्याद् विशेषणकल्पना ।**
**तथा सति हि यत्किञ्चित् प्रसज्येत विशेषणम् ॥ ९० ॥**

सति चाभावस्य विशेषणत्वे तदनुरूपमसाधारणमप्यवस्त्वेव स्यादित्याह—

**अभावरूपगम्ये च न विशेष्येऽस्ति वस्तुता ।**

उपसहरति—

**विशेषितमपोहेन वस्तु वाच्यं न तेऽस्त्यतः ॥ ९१ ॥**

एव च वस्तुरूपमेव विशेषणमिति ॥ ९१ ॥

या चेय बौद्धस्य क्लिष्टाशा—वस्तुरूप हि निर्विभाग सकल प्रत्यक्षगृहीतम्, न तत्र लिङ्गशब्दयोरपि प्रवृत्तिर्युक्ता, पुनरुक्तत्वात् । अतो बलादपोहविशिष्टतयैव वस्तुनो विषयत्वमेषितव्यम्, यथाहुः—

"एकस्यार्थस्वभावस्य प्रत्यक्षस्य सत. स्वयम् ।
कोन्यो न दृष्टो भाग. स्याद्य प्रमाणै परीक्ष्यते" ॥ (प्र० वा० ३-४३) इति ।

तत्राह—

**यद्यप्यपोहनिर्मुक्ते न वृत्तिः शब्दलिङ्गयोः ।**
**युक्ता तथापि बुद्धिस्तु ज्ञातुर्वस्त्ववलम्बते ॥ ९२ ॥**

यद्यपि पौनरुक्त्याद् वस्तुरूपे वृत्तिरयुक्ता, तथापि प्रतीतिस्तावत् पौनरुक्त्यमपौनरुक्त्यं वानादृत्य वस्त्वेवालम्बते, तत् पौनरुक्त्यमपि सोढ्वा यथाप्रतीति वस्तुरूपमेवालम्बनमङ्गीकुर्म इति ॥ ९२ ॥

स्यादेतत्, अपोहविशिष्टसाधारण शब्दस्याभिधेयम्, तच्च वस्तुरूपमिति तत्ससर्गादपोहोऽपि वस्तुवदवभासत इति? तत्राह—

**न चासाधारणं वस्तु बुद्धौ विपरिवर्त्तते ।**

अनुवृत्तं हि रूप बुद्धौ शब्दाद् भासते, नासाधारण रूपमिति ।

न चाभिधेयत्वमपि तस्य युक्तमित्याह—

**न चापि निर्विकल्पत्वात् तस्य युक्ता विशेष्यता ॥ ९३ ॥**

---

१. भावरूपे विशे०—मु० पा० ।

अनवगम्यमानमपि तदेवापोहविशिष्ट शब्दाभिधेयमिति चेत् ? तत्राह--

**शब्देनागम्यमानं च विशेष्यमिति साहसम् ।**

तदवश्य गवादिबुद्धे शब्दस्य च वस्तुरूपमेव सामान्य विषय इत्याह--

**तेन सामान्यमेष्टव्यं विषयो बुद्धिशब्दयोः ॥ ९४ ॥**

इतश्च सामान्यस्य वस्तुत्वमित्याह—

**यदा चाशब्दवाच्यत्वान्न व्यक्तीनामपोह्यता ।**
**तदापोह्येत सामान्यं तस्यापोहाच्च वस्तुता ॥ ९५ ॥**

न हि व्यक्तीनामपोह्यत्वम् । अपोह्यं हि विकल्पबुद्धावारोपितम्, शब्दाभिलापसंसर्गयोग्यश्च विकल्पविषय., न च स्वलक्षणा व्यक्तयस्तद्योग्या । तेन सामान्यमेवाश्वत्वादिकमपोह्यम्, तस्य चापोह्यत्वादेव वस्तुत्वमापद्यत इति ॥९५॥

कथमपोह्यत्वाद् वस्तुत्वापत्ति ? अत आह—

**नापोह्यत्वमभावानाम् अभावाभाववर्जनात् ।**

तत्सिद्धमपोह्यगोचरत्वे सामान्यस्य वस्तुत्वमित्याह—

**व्यक्तोऽपोहान्तरेऽपोहस्तस्मात् सामान्यवस्तुनः ॥ ९६ ॥**

अगोनिवृत्त्यात्मकं यदपोहान्तर तस्मिन् गृहीतव्ये वस्तुरूपस्यैवाश्वादिसामान्यस्यापोह, अपोह्यत्वमित्यर्थ । ततश्च सर्वत्र सामान्यान्तरेणापोह्यत्वाद् वस्तुरूपत्वमिति ॥ ९६ ॥

यदि त्वपोह्यमपि स्वभावरूपमिष्यते ततस्तद्व्यावृत्तिरूप गोत्व ततो विलक्षणं चेद् वस्तुरूपमेव स्यात्, अविलक्षणत्वेऽत्यन्तविपरीतस्वभावयोरपोह्यापोहयो. सङ्कर. समाश्रित. स्यात्, इत्याह—

**अभावस्य च योऽभावः स चेत् तस्माद्विलक्षणः ।**
**भाव एव भवेन्नो चेद् गौरगौस्ते प्रसज्यते ॥ ९७ ॥**

यद्यपि कथञ्चिद् गवादिशब्देष्वश्वादीनामपोह्याना भावत्वं स्यात्, सच्छब्दे त्वसद्रूपस्यापोह्यत्वादवर्जनीयमभावत्वम्, अतस्तत्प्रतिज्ञात्मक सत्त्व वस्त्वेव ? इत्याह—

**यद्यप्यन्येषु शब्देषु वस्तुनः स्यादपोह्यता ।**
**सच्छब्दस्य [1]त्वभावाख्यान्नापोह्यं भिन्नमिष्यते ॥ ९८ ॥**

यद्यसतोऽपि भावत्वमुच्येत ततो भावाभावयोरैक्यात् क्लेशः स्यादित्याह—

**तत्रासतोऽपि भावत्वमिति क्लेशो महान् भवेत् ।**

किञ्च, असन्निवृत्तिरूपा सत्ता, सा सिद्धायामसत्तायां सिध्येत्; असत्तापि

---

१. भावाख्याद्—१ पु० ।

सन्निषेधात्मनाऽभावरूपा, अतो नासिद्धायां सत्ताया सिद्ध्येत्, इति इतरेतराश्रयत्व स्यादित्याह—

**तदसिद्धौ[1] न सत्तास्ति न चासत्ता प्रसिध्यति ॥ ९९ ॥**

**शाक्यास्त्वाहुः**—नागोनिवृत्ति असन्निवृत्तिरित्येवरूप शब्दार्थावभास ब्रूमः, येनेतरेतराश्रय. स्यात्, किन्तु वस्तुरूपतयैव शब्दार्थो भासते । परीक्षकास्तु व्यावृत्तेष्वनुवृत्त वस्तुरूपमसम्भावयन्तोऽतद्व्यावृत्तिरूपमाचक्षते। अनादिकालवासनावशाच्च व्यावृत्तिरूपमपि सद्रूपमिव भिन्नमिवावभासते, अतो न पर्यायत्वम्, नेतरेतराश्रयत्वमिति । तत्राह पादत्रयेण—

**न चापि वासनाभेदाद् भेदः सद्रूपतापि वा ।**
**अपोहानां प्रकल्प्येत,**

कारणमाह—

**न ह्यवस्तुनि वासना ॥ १०० ॥**

अनुभवजन्या हि वासना, वस्तुविषयश्चानुभवोऽसाधारणमेव वस्त्विति कथमवस्तुनि गोत्वादौ तद्भेदे वा वासना स्यादिति ॥ १०० ॥

स्मृतिमात्रनिबन्धनत्वाच्च वासनाया न वासनापोहेष्वभिन्नेष्ववस्तुरूपेषु वस्तुरूपा भेदावभासिनी च मति. सम्भवतीत्याह—

**स्मृतिं मुक्त्वा न चास्त्यस्याः शक्तियोगः क्रियान्तरे ।**
**तस्मान्नान्यादृशे सार्थे करोत्यन्यादृशीं मतिम् ॥ १०१ ॥**

वाच्याद् वाचकानामपि न वासनानिमित्तो भेद सिध्यतीत्याह--

**भवद्भिः शब्दभेदोऽपि तन्निमित्तो न लभ्यते ।**

स्वाभाविक एव शब्दभेद इति चेत् ? न, वस्तुधर्मत्वाद् भेदस्य, वस्तुनश्चासाधारणशब्दस्वलक्षणस्यागृहीतसम्बन्धस्यानभिधायकत्वादित्याह—

**न ह्यसाधारणः शब्दो वाचकः प्रागदृष्टितः ॥ १०२ ॥**

तेन वासनानिमित्त एव भेदो वक्तव्य , न च तथा सम्भवतीत्याह—

**भिन्नत्वाच्चापि नैवैका वासना तैः प्रकल्प्यते ।**

न हि प्रतिक्षण भिन्नै. शब्दस्वलक्षणै भिन्ना सामान्याकारा वासना सम्भवति, यतस्तन्निमित्त सामान्य तद्भेदो वा स्यादिति ।

न च वः सर्वानुगत वस्तुरूप गोशब्दत्वसामान्यमस्ति, यतः सामान्याकारा वासना स्यादित्याह--

**न चास्ति शब्दवस्त्वेकं वासनां यत् करिष्यति ॥ १०३ ॥**

ततश्चागोशब्दापोहात्मनि सामान्ये वाचकतया कल्प्यमाने वाच्यवदेव भेदानवक्लृप्तिरित्याह—

---

१. वृत्तिसिद्धौ—३ पु० ।

**तत्र शब्दान्तरापोहे सामान्ये परिकल्पिते[1]।**
**तथैवावस्तुरूपत्वाच्छब्दभेदो न कल्प्यते ॥ १०४ ॥**

वाच्यवाचकयोर्मिथो भेदोऽप्येवमेव निराकार्य इत्याह--

**वाचकानां यथा चैवं वाच्यवाचकयोर्मिथः।**

अपोह्यभेदाद् भेद इति चेत् ? न, निराकृतत्वादित्याह—

**न चाप्यपोह्यभेदेन भेदोऽस्तीत्युपपादितम् ॥ १०५ ॥**

न च वाचकत्वमपि शब्दापोहस्य सम्भवतीत्याह सपादेन—

**नागृहीतश्च गमकः शब्दापोहः कथञ्चन।**
**प्रत्यक्षं न च तच्छक्तं न च स्तो लिङ्गवाचकौ ॥ १०६ ॥**
**यतः स्याद् ग्रहणं तस्य,**

सतोरपि लिङ्गशब्दयोरपोहरूपत्वादपरापरलिङ्गशब्दापेक्षायाम् अनवस्था वक्तव्या, न हि कस्यचिदपि लिङ्गस्य शब्दस्य वा प्रत्यक्षं मूलमस्तीत्याह—

**लिङ्गादीनां च कल्पने[1]।**
**न व्यवस्थेति वाच्यैवं विना प्रत्यक्षमूलतः ॥ १०७ ॥**

'व्यवस्था नेत्येवं वाच्या' इत्यन्वय इति ॥ १०७ ॥

एवमुपपादितमवस्तुनो गम्यगमकत्वाभावं प्रयोगेण दर्शयति--

**न गम्यगमकत्वं स्यादवस्तुत्वादपोहयोः।**
**भवत्पक्षे, यथा लोके खपुष्पशशशृङ्गयोः ॥ १०८ ॥**

शङ्कते--

**वृष्टिमेघासतोर्दृष्ट्वा यद्यनैकान्तिकं वदेत्।**

परिहरति--

**वस्त्वेवात्रापि मत्पक्षे भवत्पक्षेऽप्यदः कुतः ॥ १०९ ॥**

वस्त्वेवास्माकमभावः, भवतस्तु तुच्छाभाववादित्वात् क वस्तुसिद्धिरिति ॥

वाच्यवदेव वाचकेऽपि विधिरूपेऽनङ्गीकृते परस्पराश्रयापत्तिरित्याह—

**विधिरूपश्च शब्दार्थो येन नाभ्युपगम्यते।**
**न भवेद् व्यतिरेकोऽपि तस्य तत्पूर्वको ह्यसौ ॥ ११० ॥**

विधिरूपगोशब्दसिद्धौ तद्व्यतिरेकोऽगोशब्दसिद्धिः, तदभावे त्वगोशब्दासिद्धौ तदपोहात्मकगोशब्दासिद्धिः, तत्सिद्धौ च गोशब्दसिद्धिः—इतीतरेतराश्रयः स्यात्। **शब्दार्थः** इति। शब्दरूपोऽर्थः इति ॥ ११० ॥

अर्थापोहवदेव शब्दापोहस्यापि निराश्रयस्यावगमानुपपत्तेरसाधारणस्य चाविकल्पस्याश्रयत्वायोगाद् विधिरूपं सामान्यमाश्रयभूतमङ्गीकर्त्तव्यमित्याह—

---

१. कल्प्यते--२ पु०।

**निषेधद्वययोगित्वादसतो याप्यभावता।**
**सवस्तुके भवेत् सापि न तुच्छे बुद्ध्यसम्भवात् ॥ १११ ॥**

'अगौर्न भवति' इति नञ्द्वयेनाभावाभावो य. कथ्यते सोऽपि सवस्तुके वस्तुरूप-सामान्यस्य सद्भावे सति प्रतिपत्तु शक्यते, न तुच्छम्, निराश्रयस्याभावस्य-बुद्ध्यसम्भवादिति। यथा अर्थापोहे वर्णितम्--'अपोह्यमाने चाभावे भाव एवाव-शिष्यते' ( श्लो० वा० अपो० ६४ ) इति, एतदपि शब्दापोहे तुल्यमित्युच्यते। अभावाभावता हि वस्तुन एव भवति, न तुच्छस्वभावस्य, न ह्यभावाभावबुद्धिर-भावे सम्भवतीति ॥ १११ ॥

चोदयति—

**ननु युक्त्यानयैवायं वस्तुनापि न भिद्यते।**
**अपोहस्तेन दोषोऽत्र पूर्वोक्तो न भविष्यति ॥ ११२ ॥**

अवस्तुत्वादपोहोऽपोहान्तरान्न भिद्यत इत्यनयैव युक्त्या वस्तुनोऽप्यपोहो न भिद्यते, वस्तूनि चासाधारण्याद् भिन्नानीति तदभिन्नस्यापोहस्यापि भेदान्न पर्या-यत्वादिदोष इति ॥ ११२ ॥

परिहरति—

**सिद्धमेवं मदिष्टं स्यात्,**

वस्तुधर्मो ह्यभाव , न ततोऽत्यन्त भिद्यत इत्यङ्गीक्रियमाणे अस्मदिष्टं वस्तु-रूपमेव सामान्यं सिद्धं स्यादिति।

कथम् ? इत्याह--

**नैवान्या गतिरस्ति हि।**

न हि वस्तुरूपसामान्याङ्गीकरण मुक्त्वान्या गतिरस्ति, ययापोहस्यावस्त्वा-त्मकत्व स्यात्। न ह्यसाधारणभेदमाश्रित्यापोहाना मिथो भेद शक्यते समर्थ-यितुम्, अतिप्रसङ्गात्। एव हि तद्वदेव प्रतिपिण्डमप्यपोहो भिद्येत, तत्र सामान्य-रूपता न सिध्येदिति। तदेवमसाधारणाश्रयत्वाभावे सत्येतावानेवावयोर्विवादो-ऽवशिष्यते, किमभावात्मके सामान्ये भ्रान्त्या वस्तुबुद्धिः, कि वा वस्तुरूपे सामा-न्ये 'अश्वो न भवति' इत्याद्यभावबुद्धिरिति।

तदिदमाह—

**अभावे वस्तुबुद्धिर्वा यद्वा वस्तुन्यभावधीः ॥ ११३ ॥**

तत्र निर्णयमाह—

**तत्राभावात्मकत्वे स्यान्निर्निमित्तैव वस्तुधीः।**
**वस्तुन्यभावबोधस्तु सिध्यत्यन्यमपेक्ष्य तु ॥ ११४ ॥**

न हि निर्निमित्ता भ्रान्तिः सम्भवति, वासनायाश्च निमित्तत्व निराकृतम्,

वस्तुनि त्वन्यापेक्षया युक्तैवाभावबुद्धिः, वस्तूनामितरेतराभावात्मकत्वात्। अतो विधिरूपमेव गोत्वादिसामान्यमिति ॥ ११४ ॥

यत्तु **भिक्षुणा** जातिशब्दाना भेदवाचित्वमानन्त्यव्यभिचाराभ्यां निराकृत्य यदा योगस्य जातिमत्सम्बन्धस्य जातिमात्रस्य वा वाचकत्वम्, तदापि विशेषणवचनैर्नीलादिशब्दैरुत्पलादीना विशेष्यत्वस्य तथाऽपृथक्श्रुतैः सामानाधिकरण्यस्य चानुपपत्तिरुक्ता—

न जातिशब्दो भेदानामानन्त्यव्यभिचारत ।
वाचको योगजात्योर्वा भेदार्थैरपृथक्श्रुतैः ॥ इति ।

तदपोहमात्राभिधानेऽपि तुल्यमित्याह सिद्धिरन्तेन—

**अपोहमात्रवाच्यत्वं यदि चाभ्युपगम्यते ।**
**नीलोत्पलादिशब्देषु शबलार्थाभिधायिषु ॥ ११५ ॥**
**विशेषणविशेष्यत्वसामानाधिकरण्ययोः ।**
**न सिद्धिः,**

तत्र विशेपणविशेष्यत्वाभावे कारणमाह—

**न ह्यनीलत्वव्युदासेऽनुत्पलच्युतिः ॥ ११६ ॥**
**नापि तत्रेतरस्तस्मान्न विशेष्यविशेषणे ।**

न ह्यनीलापोहानुत्पलापोहयोरितरेतरत्र समवाय., यतो विशेषणविशेष्यत्व स्यादिति।

न चार्थानपेक्षयो शब्दयोरेव तत् सम्भवति, अर्थद्वारत्वाच्छब्दसम्बन्धस्येत्याह—

**शब्दयोर्नापि ते स्यातामभिधेयानपेक्षयोः ॥ ११७ ॥**

सामानाधिकरण्य त्वेकार्थवृत्तित्वाद् भिन्नापोहमात्रार्थावसायिनो दूरापास्तमित्याह—

**सामानाधिकरण्यं च न भिन्नत्वादपोहयोः ।**

शब्दवाच्यार्थयोरेकाधिकरण्यात् तद्द्वारं शब्दयो. सामानाधिकरण्यमित्याशङ्क्याह—

**अर्थतश्चैतदिष्येत कीदृश्याधेयता तयोः ॥ ११८ ॥**

तुच्छयोराधेयत्वासम्भव इति ॥ ११८ ॥

कश्चासावर्थो योऽपोहयोराधारः ? न तावदसाधारण:, तस्याविकल्पकस्य शब्दादनवगतेः, वस्त्वन्तर तु सामान्य भवता नास्त्येवेत्याह—

**न चासाधारणं वस्तु गम्यतेऽन्यच्च[1] नास्ति ते ।**

---

१. अन्यस्य—३ पु० ।

नन्वनवगम्यमानोऽप्यस्ति तावदेकोऽसाधारणोऽपोह्ययोराधार इति स्यादेव सामानाधिकरण्यम्? अ त आह—

**अगम्यमानमैकार्थ्यं शब्दयोः क्वोपयुज्यते ॥ ११९ ॥**

श्रुत्या लक्षणया वैकमर्थमवगमयतोरेव शब्दयो सामानाधिकरण्यम्, वस्तुस्थित्यैकाधिकरणार्थद्वयाभिधान न सामानाधिकरण्योपयोगि, रूपरसादीनामपि सामानाधिकरण्यप्रसङ्गात्, अस्मत्पक्षे त्वर्थस्य विकल्पक्षमत्वात्। जातिगुणानां च वस्तुरूपाणा तादात्म्यादेकमर्थं जातिरूपेण गुणरूपेण च स्वतात्पर्यमवगमयतोर्नीलोत्पलशब्दयोर्युक्तं सामानाधिकरण्यम्, रूपरसादीनां तु स्वाभिधेयमात्रपराणा तद्रूपैकार्थपरत्वाभावान्न सामानाधिकरण्यमिति ॥ ११९ ॥

जातिमदभिधानेऽपि 'तद्वतो नास्वतन्त्रत्वात्' इत्यादिना सामानाधिकरण्यानुपपत्तिर्भिक्षुणा दर्शिता, साऽपोहवदभिधानेऽपि तुल्येति दर्शयति—

**अथान्यापोहवद् वस्तु वाच्यमित्यभिधीयते।**
**तत्रापि परतन्त्रत्वाद् व्याप्तिः शब्देन दुर्बला ॥ १२० ॥**

यदि हि स्वतन्त्र एव शब्दो द्रव्यस्वरूपमभिदध्यात्, ततो यदेव सच्छब्देनाभिहितं द्रव्यं तदेवान्यूनानधिक घटशब्देनाभिधीयत इति युक्तमेकार्थवृत्तित्वात्सामानाधिकरण्यम्। यदा त्वपोह्यभेदनिबन्धनभिन्नापोहपरतन्त्र शब्दस्तद्रूपावच्छिन्न द्रव्यमभिधत्ते, तदा सच्छब्देनासद्व्यावृत्त्यवच्छिन्न द्रव्यमभिदधता नाघटादिव्यावृत्त्यंशोऽनभिधीयमानत्वाद् व्याप्यते, तथा घटशब्देनाप्यसद्व्यावृत्यंशो न व्याप्यते इति एकार्थवृत्तित्वाभावान्न सामानाधिकरण्यमिति ॥ १२० ॥

सत्यप्यभिधानप्रकारभेदे द्रव्यस्वरूपैक्यादेव सामानाधिकरण्यं सिध्यतीति चेन्न, अतिप्रसङ्गात्। एव हि जातिगुणशब्दयोरिव गुणशब्दयोरपि अनपेक्षितजातिशब्दयोरेव सामानाधिकरण्य स्यात्। ततश्च यथा मधुर. खण्ड इति, यथा च शुक्लः खण्ड इति, तथा शुक्लो मधुर इत्यपि स्यात्, न चैवमस्ति, न तथा सन् घट इत्यपि स्यादित्याह द्वयेन—

**खण्डे भिन्नव्यपोह्यत्वाद् यथैव मधुरादिभिः।**
**शुक्लादिव्याप्त्यभावेन नाक्षेपो न विशेषणम् ॥ १२१ ॥**
**तथैवासद्व्युदासांशावच्छिन्नार्थावधारणे[1] ।**
**नाघटादिनिवृत्त्यंशव्याप्तिः शब्दात् प्रतीयते ॥ १२२ ॥**

व्याप्ति.=अभिधानम्, तदभावान्नाक्षेपो न प्रतीतिः। अत एव न विशेषणविशेष्यत्वम्, नापि सामानाधिकरण्यम्। यस्तु कदाचित् तिक्तो मधुर इत्यपि प्रयोगः, स प्रकरणादिलब्धखण्डाद्यपक्षेयैव, तदनादरेणाप्रयोगादिति ॥ १२२ ॥

---

१. ०साशविच्छ०—मु० पा।

अथासत्यपि गुणशब्दयोरीदृशे सामानाधिकरण्ये जातिशब्दयोर्जातिगुणशब्दयोश्चासत्यामप्यभिधानतः परस्परार्थव्याप्तावर्थव्याप्तिमात्रेण सामानाधिकरण्यं भवति, यो ह्यसद्रूपापोहविशिष्टोऽर्थः सच्छब्दाभिहितः सोऽघटापोहमपि व्याप्नोति इत्युच्यते, तज्जातिपक्षेऽपि समानमित्याह—

**व्याप्तिश्चेदर्थरूपेण सत्तयैवं हि सा भवेत् ।**

तामेव दर्शयति—

**न घटत्वादिमानर्थः कश्चिन्न व्याप्यते तया ॥ १२३ ॥**

**तयेति** । सत्ताविशिष्टेनार्थेनेत्यर्थः ॥ १२३ ॥

यदि परमेवमुच्येत—वस्तुरूपा तव सत्ता, मम त्वपोहरूपेति, तच्च न किञ्चिदित्याह—

**न च वस्तुतया व्याप्तिस्तया शब्दस्य वार्यते ।**

तया सत्तया द्वारभूतया याऽसच्छब्दस्य घटाद्यशव्याप्तिः सा वस्तुतया वस्तुत्वेनापराधेन न निवार्यत इति ।

प्रतीतस्तु व्याप्तिः पक्षद्वयेऽपि तुल्येत्याह—

**प्रतीतिं प्रति तुल्यस्तु व्यापारो वस्त्ववस्तुनोः ॥ १२४ ॥**

प्रतीतिं प्रति यः शब्दस्य व्यापारः स यदि वस्तुरूपा सत्ता यदि वाऽवस्तुरूपा द्वेधा तुल्य एव, न हि सच्छब्दजन्या प्रतीतिः पक्षद्वयेऽपि घटशब्दार्थं व्याप्नोतीति ॥ १२४ ॥

ननु तव सभागं वस्तु, तस्यैकस्मिन् भागे प्रतीतेऽपि भागान्तरमप्रतीतं भवति, मम तु निर्भागत्वादसदपोहेनापि प्रतीतं सर्वात्मना प्रतीतमेवेति कथं प्रतीतेस्तुल्यत्वम् ? अत आह—

**निर्भागोऽपि हि वस्त्वात्मा शब्दैर्भागेन गम्यते ।**

कारणमाह—

**न हि सच्छब्दविज्ञानाद् घटाद्यर्थः प्रतीयते ॥ १२५ ॥**

उपसहरति—

**तेनानाक्षेपदोषोऽस्ति,**

**अनाक्षेपः** अप्रतीतिरिति ।

यदपि जातिमदभिधाने जातेरेव प्रथमाभिधानान्मुख्यत्वम्, तद्वास्तु भाक्तः स्यादित्युक्तम्, तदपि तुल्यमित्याह—

**भाक्तदोषश्च विद्यते ।**

तदेव विवृणोति—

**विशेषणत्वान्मुख्यत्वमपोहस्य हि जातिवत् ॥ १२६ ॥**

**तस्मात् तद्वति गौणत्वान्नाभिधेयत्वसम्भवः ।**

शङ्कते—

**अवस्तुत्वान्न मुख्यश्चेत्,**

ततश्च तद्वानेव मुख्यो भवतीति ।

निराकरोति—

**न स्यादेवं विशेषणम् ॥ १२७ ॥**

तत्र तद्विशिष्टाभिधानं दूरापास्तमिति ॥ १२७ ॥

यदपि भिक्षुणोक्तम्—'तद्वास्तु भेद एवेष्टः स तु पूर्वं निराकृतः' इति, तदपि तुल्यमित्याह पादत्रयेण—

**भेदाश्चापोहवन्तः स्युस्तेषां चावाच्यतोदिता ।**

**आनन्त्यव्यभिचाराभ्याम्,**

न ह्यनन्तै सम्बन्धग्रहण सम्भवति, अगृहीतसम्बन्धस्य च प्रत्यायकत्वे सर्वत्र प्रतीतिप्रसङ्ग इति ।

न च सकलभेदानुगतोऽपोहवान्नाम कश्चिदस्ति, य शब्दार्थः स्यादित्याह—

**अन्यो नास्ति त्वपोहवान् ॥ १२८ ॥**

यदि त्वपोहवत्त्वसामान्य शब्दार्थ., न भेदा., तत्राह—

**नापोहवत्त्वमन्यद्धि भेदापोहान्तरेऽस्ति ते ।**

न हि भेदानामपोहस्य चान्तरे मध्येऽपोहवत्त्वं नाम सामान्यमस्तीति ।

उपेत्याप्याह—

**तच्चापि कल्प्यमानं स्यादभावो भाव एव वा ॥ १२९ ॥**

**वस्तु चेज्जातिरेव स्यादवस्तुत्वेऽपि पूर्ववत् ।**

**पूर्ववदिति** । अपोहमात्राभिधानवदित्यर्थ. । अथ वा अपोहवत्व नामापोहापोहवतो. सम्बन्ध., "कृत्तद्धितसमासेषु सम्बन्धाभिधान भावप्रत्ययेन" इति स्मरणात् ।

सम्बन्धस्य सामानाधिकरण्यानुपपत्त्या भवद्भिरेव वाच्यत्व निराकृतमित्याह—

**सम्बन्धो वैष कल्प्येत तस्य चेष्टा न वाच्यता ॥ १३० ॥**

एवं च यद् भिक्षुणोक्तम्—

"तद्वन्मात्रेऽपि सम्बन्ध' सत्ता वेति विचारितम्" इति ।

तत् तस्यापि तुल्यमिति दर्शितमिति ॥ १३० ॥

यद्युच्येत—न सर्वेऽपोहवन्तः शब्दार्था, किन्त्वेक एव सदादिरपोहवान्

शब्दार्थः, अतो नानन्त्यव्यभिचाराविति, ततस्तस्य सर्वेषु घटादिषु अभावात् तत्र सदादिशब्दाना वृत्तिर्न स्यात्, दृश्यते चासौ, इत्याह—

**न चैकोऽपोहवानर्थो वर्ततेऽर्थान्तरे क्वचित् ।**

यस्मादेव चान्यत्रावृत्तिरतस्मात् सामान्यवाच्यता न स्यात्, नापि घटादि-शब्दैर्विशेषणत्व सिद्ध्येदित्याह—

**तस्मादपि न सामान्य वाच्यं न च विशेषणम् ॥ १३१ ॥**

तदनेन यद् **भिक्षुणोक्तम्**—

"तद्वानर्थो घटादिश्चेन्न घटादिषु वर्त्तते ।

सामान्यमर्थं स कथमिति तद्वदवाच्यता" ॥ इति;

तदपि तस्यापि तुल्यमिति दर्शितमिति ॥ १३१ ॥

अत्र **भिक्षुणा** शङ्कितम्—"मा भूदन्यत्र वृत्तिरेकत्र' तावद् वर्तमानस्य सच्छ-ब्दस्य तद्गतविशेषाकाङ्क्षायामवान्तरजातिवचनैर्गवादिशब्दैर्विशेषण भविष्यत्ति, यथा नीलादिगुणस्य प्रकर्षादिभिर्नीलतरो नीलतम इति, तदुक्तम्—

"मा भूदर्थान्तरे वृत्तिर्यद्येकत्रासितादिवत् ।

प्रकर्षादिविशिष्टत्वम्" इति ।

एव चाशङ्क्य दूषितम्—'नेव जातेरजातित ' इति ।

नीलस्य ह्यस्ति प्रकर्षादिसम्बन्ध । जातेस्तु जात्यन्तरेणासम्बन्धान्न तया विशेषणम्, न हि जात्यन्तरविशिष्टरूपत्व जात्यन्तरे वर्त्तते, द्रव्यस्वरूपमात्रवर्त्ति-त्वात्" इति, तदपि तुल्यमित्याह—

**नात्मन्यविद्यमानत्वाद् विशेषोऽपोहसूचक. ।**

**तस्मान्न तैर्विशेष्यत्वं प्रकृष्टत्वेन नीलवत् ॥ १३२ ॥**

न ह्यसदपोह स्वात्मन्यविद्यमानानघटाद्यपोहान्[२] सूचयति । न ह्येकापोह-विशिष्टोऽपोहान्तरे वर्त्तते, यतस्तेः विशेष्येत प्रकर्षेणेव नीलादिरिति ॥ १३२ ॥

तत्र पुनरसत्यपि साक्षाज्जात्या सम्बन्धेऽस्ति तावदेकार्थसमवायसम्बन्ध., तावता चार्थात् पटत्वादिकमाक्षिपन्ती सत्ता तन विशेष्यत इत्याशङ्क्य दूषितम्—'अर्थाक्षेपेऽप्यनेकान्त.' इति, तदपि समानमित्याह—

**अर्थाक्षेपोऽपि नास्त्येव सन्देहाल्लिङ्गलिङ्गिवत् ।**

**लिङ्गलिङ्गिव**दिति वैधर्म्योपन्यास. ।

एतदेव दर्शयति—

**न सामान्यात्मनापोहस्तैर्विना न च सिद्ध्यति ॥ १३३ ॥**

---

१. रेकस्य—मु० पा० ।

२. ०मानाघटाद्य०—मु पा० ।

न ह्यसदपोहोऽघटापोहेन[1] विना न सिद्ध्यति, घटादावपि सम्भवात् । अतः सन्देहमात्रमेव घटे स्यादिति ॥ १३३ ॥

तदेवमपोहवदभिधानेऽपोहान्तरास्यानाक्षेपः, अपोहमात्राभिधाने त्वाधारभूतस्य वस्तुनोऽप्यनाक्षेपः, किमुतापोहान्तरस्येत्याह—

**एवमेव त्वनाक्षेपः स्यादपोहेन वस्तुनः ।**
**यतः शशविषाणेऽपि तदपोहस्य सम्भवः ॥ १३४ ॥**

वस्तुमात्र तावज्जातिराक्षिपति, तुच्छस्त्वपोहस्तदपि नाक्षिपति, शशविषाणेऽपि सम्भवादिति ॥ १३४ ॥

एवमपोहस्यार्थान्तरसामान्यैर्नीलादिभिश्च विशेषणत्वादि निरस्तम् । लिङ्गसख्यादिसम्बन्धमपि निराकरोति—

**लिङ्गसंख्यादिसम्बन्धो न चापोहस्य विद्यते ।**

न च व्यक्तिविशेषणत्वं तयो सम्भवति, व्यक्तेरशब्दार्थत्वादित्याह—

**व्यक्तेरव्यपदेश्यत्वात् तद्द्वारेणापि नास्त्यसौ ॥ १३५ ॥**

ननु च शब्दानभिधेयापि व्यक्तिरपोहेनार्थाद् गम्यमाना लिङ्गसंख्याभ्यां विशेष्यते, तवेव जातिवत्[2] ? अत आह—

**न ह्यसाधारणत्वेन सापोहेनापि गम्यते ।**

मम हि विकल्पक्षमा व्यक्तिर्जात्यात्मकतया विकल्पाक्षिप्ता युक्तं यल्लिङ्गसंख्याभ्या विशेष्यते, भवतस्तु सर्वविकल्पशून्या व्यक्ति. कथमिवापोहेनापि गम्येत ! सा ह्याक्षिप्यमाणा विकल्पिता स्यात् । न चासाधारणत्वादसावभिलापससर्गयोग्या, नापि विकल्पगोचरेति ।

अथ शब्देनापोहेन वा अनवगतापि किमिति न लिङ्गादिना विशेष्यते ? अत आह—

**न चाप्यगम्यमानस्य वस्तुनः स्याद् विशेष्यता ॥ १३६ ॥**

उक्तमेवार्थ संक्षिप्य दर्शयति—

**लिङ्गसंख्याद्यपोहानां नोपकारः स्वरूपतः ।**
**वस्तुनश्चोपकार्यत्वं कथं शब्दैः प्रतीयते ॥ १३७ ॥**

गोत्वाद्यपोहानां च[3] तद्वता विशेषणत्व[3] वस्तुनश्चासाधारणस्य तैर्विशेष्यत्वं न शब्देनावगन्तु शक्यमिति ॥ १३७ ॥

किञ्च, अपोहात्मकत्वे गोत्वादेरनुपलब्धिवेद्यता स्यात्, न चासावस्ति, प्रत्यक्षावगमादित्याह—

---

१. घटापोहेन—मु० पा० ।  २. तवेव जात्याक्षिप्त—१ पु० ।
३-३. न तावद्विशेष्यत्वम्—१ पु० ।

**न विनानुपलब्ध्या च स्यादभावमतिः क्वचित् ।**
**न चाभावप्रमेयत्वं गोत्वादेरिह गम्यते ॥ १३८ ॥**

पचत्यादिषु चान्यव्यावृत्तिरसम्भावनीयैवेत्याह—

**आख्यातेषु च नान्यस्य निवृत्तिः सम्प्रतीयते ।**

कथम्? इत्याह—

**न पर्युदासरूपं हि निषेध्यं तत्र विद्यते ॥ १३९ ॥**

निषेध्यमपोह्य[1] भवतीत्येव[1] पर्युदासरूप न गम्यते । नामयोगी हि नञ् पर्युदासवृत्तिर्भवति, आख्यातयोगी प्रतिषेधमात्रपर्यवसायीति ॥ १३९ ॥

यदि तु प्रतिषेधमेवापोहेत? तत्राह—

**न नेति ह्युच्यमानेऽपि निषेधस्य निषेधनम् ।**
**पचतीत्यनिषिद्धं तु स्वरूपेणावतिष्ठते ॥ १४० ॥**

यदा हि 'न पचति' इति पाकाभावमात्र प्रतिपादित नागौरितिवदर्थान्तरमश्वदिकम्, तदा द्वितीयेन नञा आ[3]नञर्थस्य[3] प्रतिषेधात् अप्रतिषिद्ध पचत्यर्थो विधिरूपेणावतिष्ठत इति ॥ १४० ॥

साध्यादिप्रत्ययश्चाख्यातादावनुपपन्न इत्याह—

**साध्यत्वप्रत्ययश्चात्र तथाभूतादिरूपणम् ।**
**निष्पन्नत्वादपोहस्य निर्निमित्तं प्रसज्यते ॥ १४१ ॥**

उदाहरणान्तरमाह—

**विध्यादावर्थराशौ च नान्यापोहनिदर्शनम् ।**

निमन्त्रणादीना विभक्त्यर्थाना च कर्मादीनामादिशब्देन ग्रहणमिति ।

उदाहरणान्तराणि दर्शयति सार्धद्वयेन—

**नञश्चापि नञा युक्तादपोहः कीदृशो भवेत् ॥ १४२ ॥**
**चादीनामपि नञ्योगो नैवास्तीत्यनपोहनम् ।**
**वाक्यार्थोऽन्यनिवृत्तिश्च व्यपदेष्टुं न शक्यते ॥ १४३ ॥**
**अनन्यापोहशब्दादौ वाच्यं न च निरूप्यते ।**
**प्रमेयज्ञेयशब्दादेरपोह्यं कुत एव तु ॥ १४४ ॥**

यत्त्वत्र दिङ्नागेनोक्तम्—'अज्ञेयं कल्पितं कृत्वा ज्ञेयशब्दः प्रवर्त्तते' इति, तत्राह—

**अपोह्यकल्पनायां तु वरं वस्त्वेव कल्पितम् ।**

---

१-१. अपोह्यमपचति—१ पु० । २. स्वरूपेणैव तिष्ठति—१ पु० ।
३. प्रतिषेधस्य—२ पु० ।

विधिरूपमेव सामान्यं काल्पनिकमभिधेयमस्तु, प्रतीत्यानुगुण्यादिति नापोह्यं कल्पयामः।

नन्वपचत्याकारो ज्ञानमेवापोह्यम्, तदपोहात्मकं च ज्ञानमेव पचत्यादेरभिधेयमिति चेत्, तत्राह तान्तेन—

**ज्ञानाकारनिषेधाच्च नान्तरार्थाभिधेयता ॥ १४५ ॥**

**न चाप्यपोह्यता,**

उपसंहरति—

**तस्मान्नापोहस्तेषु सिध्यति।**

उदाहरणान्तरमाह—

**एवमित्यादिशब्दानां न चापोह्यं निरूप्यते ॥ १४६ ॥**

न ह्यनेव नामेति किञ्चिदस्ति, प्रकारवचनत्वादेवशब्दस्य, सर्वस्य च प्रकारभावत्वेनैवभावायोगादिति ॥ १४६ ॥

अत्र हि **भिक्षुणा** भेदशब्दानां शिंशपापलाशादीनां मिथः सामानाधिकरण्याभावमुपपादयतोक्तम्—"भेदो भेदान्तरार्थं तु विरोधित्वादपोहते" इति, भेदशब्दा ह्येकं वृक्षत्वसामान्यं विशिषन्त इतरेतरमपोद्धृत्य व्रीहियवाविव यागं स्वात्मनि स्थापयन्तः परस्परविरोधिनो भवन्ति, विरोधाच्चान्योन्यापोहेन वर्त्तन्ते, इतरेतराभावश्चापोहः, कथं चेतरेतराभावात्मकार्थद्वयाभिधायिनोः सामानाधिकरण्यम्" इति, तद् दूषयति—

**विरोधित्वेन भेदानामपोहो यदि कल्प्यते।**

**विरोधोऽपोहतस्तत्र विरोधाच्चाप्यपोहनम् ॥ १४७ ॥**

विरोधादपोहं ब्रुवाणस्येतरेतराश्रयम्, विरोधस्यैवापोहाधीनत्वादिति ॥१४७॥

नन्वेकसामान्यापहाराद् विरोधः, नापोहत आह—

**न सामान्यापहारित्वं विधिरूपेण तत्र ते।**

**पलाशादीनपोह्यातो वृक्षं हरति शिंशपा ॥ १४८ ॥**

सत्यम्, सामान्यापहाराद्विरोधः, अपहारस्त्वपोहपूर्वकः। न हि शिंशपाशब्दोऽपि विधिरूपं शिंशपात्वमभिधाय तेन वृक्षं विशिषन् पलाशादिभ्यः परिहरति—शिंशपायं वृक्ष इति, किन्त्वशिंशपारूपान् पलाशादीनपोह्य। अतः पलाशादेर्वृक्षत्वमपहरति। स ह्यपोहवचनस्तेनैव वृक्षं विशिनष्टि—नायं वृक्षः शिंशपेति, तेनापोहपूर्वकः सामान्यापहारस्तन्निबन्धनश्च विरोधः। तदेवं सति यदि विरोधादपोहः कल्प्येत, व्यक्तमितरेतराश्रयत्वमिति ॥ १४८ ॥

यदपि सामान्यविशेषशब्दानां शिंशपावृक्षादीनां पर्यायाणां च तरुवृक्षादीनामविरोधेनानपोहकत्वमुक्तम्—'अन्यत्वेऽपि न सामान्यभेदपर्यायवाचिनः' इति, तदपि दूषयति—

**सामान्याद्यनपोहश्च नाविरोधेन कल्प्यते ।**

कथम् ? इत्याह—

**न हि शब्दस्वरूपाणां स्याद् विरुद्धाविरुद्धता ॥ १४९ ॥**

न ह्यर्थानपेक्षाणां विरोधाविरोधौ, यतः कश्चित् किञ्चिदपोहेत किञ्चिन्नेति ॥ १४९ ॥

मा भूदेवम्, वस्तुनिबन्धनौ भविष्यतः, ययोरेकत्र वृत्तिसम्भवः तयोरविरोधः, यथा तरुवृक्षशब्दयोः वृक्षशिंशपाशब्दयोश्च, ययोश्च न सम्भवति यथा शिंशपापलाशशब्दयोः, तयोर्विरोध इति चेत् ? तत्राह—

**न च वस्तुस्वरूपेण तस्य शब्दैरसङ्गतेः ।**

न ह्यसाधारणं वस्तु शब्दाः स्पृशन्ति, येन व्यवस्था स्यादिति ।

अर्थापोहानामेव वृक्षशिंशपादीनामविरोधः शिंशपापलाशादीनां च विरोधः, तन्निमित्तं शब्दानां विरुद्धाविरुद्धत्वमुच्यते, तत्राह—

**प्राक् शब्दव्यापृतेर्नापि सापोहानां प्रतीयते ॥ १५० ॥**

न हि शब्दात् प्रागपोहस्वरूपमपि गम्यते, नतरां विरुद्धाविरुद्धतेति ॥ १५० ॥

शब्देनैवावगम्यत इति चेत् ? न, अगृहीतसम्बन्धेन तेन तदवगमासम्भवात् । स्वरूपानवगमादेव चापोहानाम्—'अयं सामान्यापोहः, अयं विशेषापोहः' इत्यपि न ज्ञायत इत्याह—

**अन्येनानवबुद्धेऽर्थे सदा शब्दः प्रवर्तते ।**

**सामान्यात्मकता तस्य केन रूपेण गम्यते ॥ १५१ ॥**

तदेवमर्थद्वारविरोधावगमासम्भवे यदि शब्दस्वरूपभेदानुसारेणैव शिंशपापलाशादेरपोहः, स तरुवृक्षादेरपि स्यादित्याह—

**शब्दानुरूपतश्चेत् स्यादन्यापोहनिरूपणम् ।**

**भिन्नत्वाद् वृक्षतर्वादेरपोहः केन वार्यते ॥ १५२ ॥**

स्यादेतत्, प्रागेव शब्दादनुमानेनैवापोहस्वरूपं तस्य सामान्यविशेषात्मकत्वं विरुद्धाविरुद्धत्वं चावगम्यते, तदनुरूपं शब्दानां सामानाधिकरण्यवस्थानमिति ? तत्राह—

**शब्दस्पृष्टेर्विनापोहो न च लिङ्गेन गम्यते[1] ।**

**न विरुद्धाविरुद्धत्वं तस्य लिङ्गाच्च सिध्यति ॥ १५३ ॥**

शब्दवदेव लिङ्गमपि गृहीतसाध्यान्वयमेव साध्यं गमयति, न चानवगतेनापोहेनान्वयग्रहणं सम्भवतीति ॥ १५३ ॥

---

१. इदमर्धत्रयं का० पुस्तके त्रुटितम् ।

यदपि भेदानामपोहे कारणान्तरमुक्तम् 'अदृष्टत्वाद्व्युदासो वा भेदानामितरेतरम्' इति शिशपाशब्द पलाशादावदृष्ट तस्यापोहं करोतीति, तत्राह—

**अदृष्टत्वाद् व्युदासस्तु पुरस्तादेव वारितः।**

'सर्वत्रैव ह्यदृष्टत्वात् प्रत्याख्य नावशिष्यते' ( श्लो० वा० अपो० ७५ ) इत्यत्रैतदुक्तम्, अगृहीतान्वयो हि पलाशवदेव शिशपामप्यपोहेतेति, तत्र **भिक्षुणा** चोदितम्—'सामान्य स्याद् विशेषापोहात्' इति, सामान्यशब्दो हि वृक्षादिः शिशपाविशेषस्यावाचकत्वात् तत्रादृष्ट एवेति तमप्यपोहेदिति, तत् तावद् दर्शयति पादत्रयेण—

**सामान्यशब्दो भेदेन नेष्यते वाचकात्मना ॥ १५४ ॥**

**व्युदासस्तत्र दुर्वारः,**

यत्त्वत्रोक्तम्—'नान्ययुक्तस्य दृष्टत्वात्' इति, तदयुक्तमित्याह—

**कथञ्चिद् दृष्टता पुनः।**

**ब्राह्मणे क्षत्रियस्यापि पर्युदासः प्रसज्यते ॥ १५५ ॥**

जघन्यरूपा हि प्रकरणादिसहायस्य सामान्यशब्दस्य विशेषे वृत्तिर्न मुख्यरूपा, वाचकत्वाभावात्। तादृशी च वृत्ति शौर्यादिशालिनि ब्राह्मणे क्षत्रियशब्दस्यापि दृष्टेति सोऽपि ब्राह्मण नापोहेत, मुख्यरूपेण त्वदर्शन सामान्यशब्दस्यापि विशेषेऽस्त्येवेति सोऽपि तमपोहेतेति ॥ १५५ ॥

अथ सामान्य य कञ्चन विशेषमपेक्षमाणं सर्वरेव विशेषै. सम्बध्यते, न चापोह्यते, यथाहु —"तन्मात्राकाङ्क्षणाद् भेदस्तत्सामान्येन नोज्झित.' (        ) इति, तत्राह—

**आकाङ्क्षणादथात्यागस्तुल्यो द्रव्यक्रियादिषु।**

**वृक्षेणातोऽनपोहः स्यात् तिष्ठत्यादेरसंशयम् ॥ १५६ ॥**

क्रियाकारकयोरप्यस्ति मिथोऽपेक्षा, तेन वृक्षे तिष्ठतीत्यधिकरणभूतस्य वृक्षस्य क्रियापेक्षत्वात् क्रियायाश्चाधिकरणापेक्षत्वान्नान्यापोह सिध्येत्। न च नास्तीति वक्तव्यम्, तथा सति वृक्षस्तिष्ठतीति सामानाधिकरण्य स्यात्, वृक्षे तिष्ठतीति वैयधिकरण्य न सिद्धयेदिति ॥ १५६ ॥

एवं सर्वेष्वपि व्यधिकरणगतेषु विशेषणविशेष्यत्वानुपपत्ति', सामानाधिकरण्यप्रसक्तिर्वा दर्शयितव्येत्याह—

**पुरुषस्य तथा राज्ञो व्युदासे न विशेष्यता।**

**अव्युदासत्वपक्षे च स्यान्नीलोत्पलतुल्यता ॥ १५७ ॥**

आकाङ्क्षणादन्याङ्गं वदत 'राज्ञः पुरुष' इत्यत्र षष्ठ्यन्तो राजा यदि पुरुषमपोहेत तदवश्यमाकाङ्क्षा नास्तीत्यङ्गीकर्त्तव्यम्, ततश्च विशेष्यत्वमपि पुरुषस्य न स्यात्, न ह्यनाकाङ्क्षितस्य विशेष्यत्वं सिद्धयति, अथ नापोहेत तथा

सत्येकार्थवृत्तित्वात् सामानाधिकरण्य स्यात्, राज्ञः पुरुष इति वैयधिकरण्यं न सिध्येदिति ॥ १५७ ॥

यत्तु **भिक्षुणा** "विधौ वस्तुस्वरूपशब्दार्थत्वपक्षे वस्तुनो निर्भागत्वात् सर्वैः शब्दैः सर्वात्मकार्थग्रहणं स्यात्, यथैव वृक्षपार्थिवद्रव्यसज्ज्ञेयशब्देषु पूर्वपूर्वै. शब्दैरुत्तरोत्तरार्थेषु निर्णयो भवति तथोत्तरोत्तरै पूर्वनिर्णय स्यात्, न चैवमस्ति, ज्ञेयशब्दात् प्रभृति प्रातिलोम्येन चतुस्त्रिद्व्येकेषु सन्देहादानुलोम्येनैव वृक्षशब्दात् प्रभृति चतुरादिषु निर्णयात्, अतो न वस्तुवचना शब्दा " इत्युक्तम्, यथा—

"वृक्षत्वपार्थिवद्रव्यसज्ज्ञेया. प्रातिलोम्यत ।
चतुस्त्रिद्व्येकसन्देहे निमित्त निश्चयेऽन्यथा" ॥ इति,

तदनुभाष्य परिहरति सार्धेन—

**वृक्षत्वपार्थिवद्रव्यसज्ज्ञेयेषु[1] यदुच्यते ।**
**प्रातिलोम्यानुलोम्येन विधौ सर्वार्थबोधनम् ॥ १५८ ॥**
**तदयुक्तम्, न सर्वो हि शब्दः सर्वत्र दृश्यते ।**

स्यादेवम्, यदि निर्भागं वस्तु स्यात्, तत्तु सभागमिति तत्र तत्र प्रतिपादितम्, तत्रैकभागाभिधायिना भागान्तरानवगतिर्युक्तैवेति ।

नन्वेकदेशस्थत्वाद् भागानामेकत्र वर्त्तमान शब्द कथमन्यत्र न वर्त्तेत ? अत आह—

**देशाविभागतो वृत्तिर्नेत्रस्यापि रसादिषु ॥ १५९ ॥**
**ग्राहकत्वेन वृत्तिस्तु प्रतिजाति व्यवस्थिता ।**

अथ तत्राग्रहणशक्तिवशाद् व्यवस्था, सा इहापि तुल्यैव, चक्षुरादिवदेव प्रतिजाति व्यवस्थितैव शब्दानामपि शक्ति , अतो न सङ्करापत्तिरित्याह—

**चक्षुरादिवदेवात्र सङ्करो न भविष्यति ॥ १६० ॥**

यद्येवम्, आनुलोम्येनापि तर्हि वृक्षादिशब्देनोत्तरोत्तरानिर्णयः स्यादत आह—

**निवृत्तचेष्टे शब्दे च व्याप्त्यव्याप्तिकृतं पुनः ।**
**सत्त्वादेर्बोधकत्वं स्यादेकन्यूनातिरेकतः ॥ १६१ ॥**

प्रत्युतापोहवादिन एवायं दोष इत्याह शब्दोऽन्तेन—

**तवैव दोषः स्यादेव विशेषे यस्य वर्त्तते ।**
**सामान्यशब्दः,**

स्वलक्षण एव हि भवन्मते शब्दाना वृत्ति., तच्चैकरूपमिति सर्वैरेकरूपैव प्रतीतिः स्यादिति ।

नन्वव्यपदेश्यं स्वलक्षणम्, व्यावृत्तयस्त्वभिधेयाः, ताश्च भिन्नाः, कथमैकार्थ्यं शब्दानाम् ? अत आह—

1. °सज्ज्ञेयेषु—मु० पा० ।

**वाच्यानां भेदो नाप्यस्ति वस्तुतः[1] ॥ १६२ ॥**

न हि वस्तुनः स्वलक्षणाख्यस्य व्यावृत्तिर्नाम कथञ्चिदस्ति, व्यावृत्त्यभाव-व्यावृत्त्यभ्युपगमात्, सा न, वस्तुनो व्यावृत्तीना भेदाभावः प्रागेव दर्शित इति ।

योऽपि जातिधर्मातिदेशोऽपोहे कृतः 'जातिधर्मव्यवस्थिते.' इति, सोऽयुक्त इत्याह—

**अपि चैकत्वनित्यत्वप्रत्येकसमवायिताः ।**
**निरुपाख्येष्वपोहेषु कुर्वतोऽसूत्रकः पटः ॥ १६३ ॥**

उपसंहरति—

**तस्माद् येष्वेव शब्देषु नञ्योगस्तेषु केवलम् ।**
**भवेदन्यनिवृत्त्यंशः स्वात्मैवान्यत्र गम्यते ॥ १६४ ॥**

अब्राह्मणब्देष्वेवापोहाशस्य वाच्यत्वावगतिः, गवादिशब्दैस्तु रूपमेव लोके गम्यत इति तस्यैवाभिधेयत्वमिति ॥ १६४ ॥

**नैयायिकास्त्वनुमानेन** गवादिशब्दानामपोहाभिधानं निराकुर्वन्ति, तदुपन्यस्य निरस्यति—

**ज्ञेयार्थान्यानपोहत्वं प्रमाङ्गत्वात् त्वगादिवत् ।**
**येनोक्तं तस्य नञ्युक्तैः शब्दैः स्याद् व्यभिचारिता ॥ १६५ ॥**

यदि तु नञ्योगिनोऽपि पक्षीकुर्यात्, तत्राह—

**पक्षीकुर्याद् यदा सर्वांस्तदाथावीतहेतुभिः ।**
**अनैकान्तो विरोधश्च सर्वलोकप्रसिद्धितः ॥ १६६ ॥**

अवीता हेतवो नाम विपक्षव्यावृत्तिमुखेन ये साध्यं गमयन्ति, यथा प्राणादयः, ते हि निरात्मकेभ्यो घटादिभ्यो व्यावृत्ता जीवच्छरीरस्य निरात्मकत्वापोहेन सात्मकत्वं गमयन्ति । लोकविरुद्ध च नञ्योगिनामनपोहकत्वमिति ॥ १६६ ॥

'ज्ञेयार्थान्यानपोहत्वम्' इति च साध्यं विकल्पनीयम् । यदि तावत् कारण-निषेधः, ततः सिद्धसाध्यत्वम् । ज्ञापकोऽप्यपोहस्य शब्दो न कारकम्, अथ केवलं निराश्रयमपोहं न बोधयति, तथापि सिद्धसाधनम्, वस्त्वाश्रयत्वात् तस्येत्याह—

**नापोहत इतीदं च कारकत्वेन चेद् भवेत् ।**
**केवलापोहबुद्धेर्वा ततः स्यात् सिद्धसाध्यता ॥ १६७ ॥**

पक्षान्तरमाशङ्क्य निराकरोति—

**अथान्यापोहवत्यर्थे वृत्तिर्नास्तीति साध्यते ।**
**ततः प्राक् पक्षबाधः स्याद् गोत्वेऽथाश्वाद्यभावतः ॥ १६८ ॥**

भवताभ्युपगतो गोत्वेऽश्वत्वादीनामभाव इति दृष्टान्तश्च साध्यविकलः, चक्षु-रादीनामप्यपोहमनवगमयतामपि तद्वति वृत्तेरविवाद इत्याह—

---

१. वस्तुनः—मु० पा० । २. स्वलक्षणाख्यसंख्यावृत्तिर्नाम—१-३ पु० ।

**साध्यहीनश्च दृष्टान्तश्चक्षुराद्यपि तस्य हि।**
**वर्त्ततेऽपोहवत्येव[1] तं यद्यपि न बुध्यते ॥ १६९ ॥**

पक्षान्तरमाशङ्क्य निराकरोति—

**अथान्यापोहनिर्भासा न बुद्धिः सिद्धसाधनम्।**

कथम् ? इत्याह—

**अपोहरूपमप्येतद् वस्त्वित्येव हि गम्यते ॥ १७० ॥**

अभावात्मकमपि सामान्यं वासनाबलाद् वस्त्वाकारेणैवावगम्यत इति **सौगता**नामपि मतिरिति ॥ १७० ॥

पुनरप्यन्यदाशङ्क्य निराकरोति—

**अथापोहनिमित्तास्य वृत्तिरर्थे निषिध्यते।**
**व्यतिरेकाङ्गतेष्टत्वात् पुनः प्राक् पक्षबाधनम्[2] ॥ १७१ ॥**

**अपोहः**=अन्यस्माद् व्यावृत्तिः। सा निमित्तमेव शब्दस्य स्वार्थाभिधाने, अन्वयव्यतिरेकयोस्तदङ्गत्वादिति ॥ १७१ ॥

हेतुश्चानैकान्तिक इत्याह—

**अनुमाने तथा चैतदित्यनैकान्तिको भवेत्।**

लिङ्गस्यापि विपक्षव्यतिरेकोऽङ्गमेवेति।

यच्चेदम् 'स्थाणुर्वा पुरुषो वा' इति सन्दिहानस्य प्रत्यासीदतोऽनुपलब्धिसहायेन्द्रियेण 'स्थाणुरेवायं न पुरुषः' इति सन्देहबाधेन प्रत्यक्षज्ञानं जायते, तेनाप्यनैकान्तिक इत्याह—

**सन्देहबाधजातेन प्रत्यक्षेणापि चेतसा[3] ॥ १७२ ॥**

विरुद्धश्च हेतुरित्याह—

**विरुद्धता च हेतोः स्यात्,**

कथम् ? इत्याह—

**शब्दः श्रोत्रादिवद् यतः।**
**आत्मान्तःकरणाकाशैः स्ववाचित्वं[4] जहाति वः ॥ १७३ ॥**

यो हि लोकमनादृत्य नव्योगिनामप्यपोहवाचित्व निषेधति तं प्रत्यात्मादिशब्दानामप्यात्मादिवाचित्वनिषेधेनायं हेतुरिष्टविघातकारीति ॥ १७३ ॥

सप्रतिसाधनत्वं च दर्शयति—

**विधिरूपप्रवृत्तिर्वा शब्दोऽपोहेन वर्त्तते।**
**अनुमानाङ्गभूतत्वाद् यथैव प्रतिषेधकः ॥ १७४ ॥**

भवतो यो विविधरूपाभिधायित्वेनाभिमतः सोऽपोहमुखेन स्वप्रत्यये वर्तते, अनुमानाङ्गत्वादवीतहेतुवत्। तस्य हि दर्शिता अपोहमुखेन वृत्तिरिति ॥१७४॥

---

१. अपोहवत्यर्थे—२ पु०। २. पक्षसाधनम्—मु० पा०।
३. चेतसेति। ज्ञानेनेत्यर्थः। ४. ०काशस्ववा०—१ पु०।

विरुद्धत्वमेव प्रकारान्तरेण दर्शयति—

**जातिं वा न ब्रवीत्येष व्यक्तिं वा तद्विशेषिताम्[1] ।**
**प्रमायामङ्गभूतत्वात् त्वक्श्रोत्रादि यथैव च ॥ १७५ ॥**

अभिधायकत्वनिषेधाच्च न साध्यविकलता दृष्टान्तस्येति ॥ १७५ ॥

तस्माल्लोकावगत्यनुसारेण गवादिशब्दाना वस्त्वभिधेयत्वसिद्धिः, नानुमानादित्याह—

**एवं साधनमार्गेण वाच्यावाच्यनिरूपणा ।**
**नावतिष्ठत इत्यत्र कथ्यते लोकवर्त्मना ॥ १७६ ॥**

इत्यपोहवादः

## अथ वनवादः

"सास्नादिविशिष्टा आकृति" (शा० भा० पृ. ६०) इति भाष्यमाक्षिपति—

**सास्नादिभिर्विशिष्टत्वमाकृतेरुच्यते कथम् ।**
**यदावयविसम्बन्धि गोत्वं नावयवे स्थितम् ॥ १ ॥**

समाधत्ते—

**एकावयविसम्बन्धस्तेषां गोत्वेन विद्यते ।**
**तेनासाधारणत्वात् ते स्युर्गोत्वस्योपलक्षणम् ॥ २ ॥**

गोशब्दाभिधेया जातिमुपलक्षयितुं सास्नाद्युपादानम् । अस्ति हि तेषामेकावयविसम्बन्धो जात्यन्तरेभ्योऽसाधारण्य गोत्वेन, अतस्ते शक्नुवन्ति तदुपलक्षयितुमिति ॥ २ ॥

किं पुनरुपलक्षणोपादाने प्रयोजनम् ? अत आह—

**पिण्डे सत्तादिजातीनां बह्वीनां समवेतता ।**
**ताभ्यो विशिष्यते गोत्वं सास्नादिभिरसंशयम् ॥ ३ ॥**

समुच्चितानेकसामान्यसन्निधानात् पिण्डे कथं विनोपलक्षणेन गोशब्दवाच्य विविच्य निर्दिश्येतेति ॥ ३ ॥

**काश्यपीयास्तु**[२] सास्नालाङ्गूलादि गोत्वे लिङ्गमिति पठन्तो व्यञ्जकत्वमेव सास्नादीनां मन्यन्ते, केचित्तु यथाश्रुतेन भाष्येण विशेषणत्वम्; तदुभयमयुक्तमित्याह—

**न चैते व्यञ्जकास्तस्य गुणवद् वा विशेषणम् ।**

---

१. ०विशेषितम्—१ पु० । ४. काश्यपीया इति । काणादा इत्यर्थः ।

कारणमाह—

**तथा हि[1] नागृहीतेषु तेषु स्याद् गोत्वबोधनम् ॥ ४ ॥**

गृह्यते च दूरस्थैरगृहीतष्वपि तेषु गोत्वम्, अतो नेमे नीलादिवदद्रव्यस्य गोत्वस्य विशेषणमिति ॥ ४ ॥

सास्नादिसामान्यापेक्षत्वे च गोत्वस्य तेषामपि व्यञ्जकभूतसामान्यान्तरापेक्षणादनवस्थेत्याह—

**तेषां च व्यञ्जकैः स्वैः स्यात् पुनर्ग्रहणकल्पना ।**

**तथा सत्यनवस्था[2] स्यात् न स्याद्[2] गोत्वावधारणम् ॥ ५ ॥**

इतश्च न तेषा व्यञ्जकत्वमित्याह—

**सर्वेषु च गृहीतेषु सास्नादिषु भवेन्मतिः ।**

**गोत्वे, न चैषु सर्वेषु युगपद् बुद्धिसम्भवः ॥ ६ ॥**

तस्माद् यथा सत्तामात्रावस्थितैरेवावयवैरवयविनि महत्त्वं बोध्यते, तथावयविस्वरूपे तत्समवेते च गोत्वादौ ग्रहणम्, न तु तद्ग्रहणापेक्षम्, अन्यथा परमाणुग्रहणापेक्षमवयविग्रहण स्यादित्याह—

**तस्मात् सद्भावमात्रेण महत्त्वादौ[3] यथैव[3] धीः ।**

**क्रियतेऽवयवैः पिण्डे तथा जातिगुणादिषु ॥ ७ ॥**

चोदयति—

**यद्येवमगृहीतेषु तेषु किं सा न जायते ।**

यद्यपि सर्वे अवयवा न गृह्यन्ते, केचित् तावद् दूरस्थैरपि गृह्यन्ते, तदनभिव्यङ्ग्यत्वे कञ्चिदप्यवयवमगृहीत्वा गोत्वधीर्जायेतेति ।

परिहरति—

**तद्देशव्यतिरेकेण ग्राह्यं येन न विद्यते ॥ ८ ॥**

तदेव विवृणोति—

**गृह्यमाणे तु गोत्वादौ नान्तरीयकहेतुकः ।**

**सास्नादेः कस्यचिद् बोधस्तद्देशत्वेन जायते ॥ ९ ॥**

समानदेशानि ह्यवयवावयवितत्सामान्यानि, तेन गृह्यमाणे गोत्वे तत्तुल्योपलम्भयोग्यस्य कस्यचिदवयवस्य तत्सामान्यस्य वा नान्तरीयक ग्रहण भवतीति ॥९॥

यद्वा, न व्यवच्छेदमात्रेणोपलक्षणपरोऽयं विशेषणशब्दः, किन्तु यथाश्रुतोऽपि शक्यते व्याख्यातुमित्याह—

**तदनत्यन्तभेदाद् वा तद्विशिष्टेति कीर्त्यते ।**

---

१. तथापि—१ पु० । २–२. अनवस्थानात्तस्मात्—१ पु० ।

३–३. प्रकृत्यादेः०—१ पु० पा० । महत्त्वादिवदेव०—२ पु० पा० ।

न चात्र 'सास्नाद्येकार्थसम्बन्धि' इत्यादिना पौनरुक्त्यमाशङ्कितव्यम्। इदमेव च भाष्यव्याख्यास्थानम्, इहत्यमेव तु तत्रानवस्थापरिहाराय नीतमिति।

"न प्रत्यक्षा सती साध्या भवितुमर्हति, रुचकः स्वस्तिको वर्द्धमानक इति हि प्रत्यक्षं दृश्यते" (शा० भा० पृ० ६०) इति भाष्यार्थमाह—

**बाधः परानुमानस्य न प्रत्यक्षेति बोध्यते[1] ॥ १० ॥**

यत् परै—"नन्वाकृति साध्यास्ति वा न वा" इत्यनेनाकृत्यभावेऽनुमानमन्तर्णीतम्, तस्यानेन प्रत्यक्षविरोधोऽभिधीयत इति ॥ १० ॥

किं पुनस्तदनुमानम् ? तद् दर्शयति—

**परेषां साधनं ह्यत्र नाकृतिः पिण्डतः पृथक्।**
**तद्धोहानावविज्ञानात् पङ्क्तियूथवनादिवत् ॥ ११ ॥**

किं पुन स्वय साधनमभिधाय दूषणमेवोच्यते ? अत आह—

**सर्वत्र लोकसिद्धत्वान्न वाच्यं साधनं स्वयम्।**
**निषेधतां परेषां तु विरोधं लोकतो वदेत् ॥ १२ ॥**

लोकप्रसिद्धपदार्थव्यवहारिणामस्माक न क्वचिदपि पदार्थ. साधयितव्यः, प्रसिद्धं तु तर्काभासैरपह्नुवानेभ्यो लोकप्रसिद्धप्रत्यक्षेण विरोध एव वक्तव्य इति ॥ १२ ॥

चोदयति—

**विसंवादो न दृश्येत यदि प्रत्यक्षताकृतेः।**

दृश्यते तु विसवाद', अतो नूनमप्रत्यक्षेयमिति।

परिहरति—

**प्रमाणेऽपि विसंवादात् तार्किकेषु कुतो न्वियम्[2] ॥ १३ ॥**

सर्वप्राणिप्रसिद्धेऽपि प्रत्यक्षादिप्रमाणेऽस्त्येव तार्किकाणा विसंवादः, तद्यथा निरालम्बनवादिना प्रत्यक्षगम्यरूपादेरपह्नवात्। अतः कुतस्तदीयविसंवादस्यादरणम्! अनादरणीय एव हि स इति ॥ १३ ॥

तदेव दर्शयति दोऽन्तेन—

**रूपादावपि तेषां हि प्रत्यक्षत्वेन सम्मते।**
**विवादः,**

महाजनस्य तु नास्त्येव जातौ विप्रतिपत्तिरित्याह—

**नैव लोकस्तु जातौ विप्रतिपद्यते ॥ १४ ॥**

कथमवगम्यते ? इत्याह—

**व्यवहारा हि दृश्यन्ते सामान्यार्थनिबन्धनाः।**
**दधितक्रादिदानादौ कौण्डिन्यब्राह्मणादिषु ॥ १५ ॥**

१. चोच्यते—१ पु०। २. न्विदम्—२ पु०।

विशेषेण हि सामान्यस्य बाधमाश्रयन्तो ब्राह्मणशब्दस्य सामान्यवाचित्व मन्यन्ते, केचिच्च रुचकाद्युदाहरणादाकृति सस्थान मन्यन्ते तदेव सामान्यमिति मन्वाना.। तान् प्रत्याह—

**आकृतिर्जातिरेवात्र संस्थानं न प्रकल्प्यते।**

कारणमाह—

**न हि वाय्वग्निशब्दादौ किञ्चित् संस्थानमिष्यते ॥ १६ ॥**

नानासस्थानपरिणामेषु वाय्वादिष्वस्ति वायुत्वादिप्रत्यभिज्ञा, या सस्थान-व्यतिरेक जाते. साधयतीति ॥ १६ ॥

शाबलेयादौ च प्रतिपिण्डं भिन्न सस्थानम्, तत् कथ सामान्य स्यात्? इत्याह—

**अन्यदन्यच्च संस्थानं प्रतिपिण्डं प्रतीयते।**

इतश्च न तत् सामान्यमित्याह—

**संयोगात्मकतायां तु विभागेषु विनश्यति ॥ १७ ॥**

शङ्कते—

**अथ संस्थानसामान्यम्,**

निराकरोति—

**अश्वादावपि तत्समम्।**

अथ सत्तावान्तरसामान्यमुच्यते, न तद् गोत्वजातेरस्तीत्याह—

**न गोत्वेन विना ह्येतद् व्यवच्छिन्नं प्रतीयते ॥ १८ ॥**

चित्रेऽपि मनुष्यगवादिसंस्थानसद्भावात् तत्रापि गोत्वादिप्रतीति. स्यादि-त्याह पादत्रयेण—

**सर्वप्रतिकृतीनां च संस्थाने सत्यपीदृशे।**

**न गोत्वादिमतिर्दृष्टा,**

उपसहरति—

**तस्माज्जातिः पृथक् ततः ॥ १९ ॥**

सस्थानात् पृथग्भूता जातिरेवाकृतिरिति ॥ १९ ॥

इद च जातिपरत्वमाकृतिशब्दस्योपक्रमेऽप्युक्तम् इदानीमुपपादितम्, **भाष्य-कारोऽपि आकृत्यधिकरणे** दर्शयिष्यति—"द्रव्यगुणकर्मणा सामान्यमात्रमाकृति:" इति। न हि गुणकर्मसु सस्थान सम्भवतीति।

रुचकाद्युदाहरणमपि सस्थानातिरिक्तसामान्याभिप्रायमेवेत्याह—

**रुचकादिषु सामान्यं रुचकत्वाद्युदाहृतम्।**

त्रयानुगतसुवर्णत्वाभिप्रायं वेदमित्याह—

**भिन्नेषु चैषु सामान्यं सुवर्णत्वं प्रतीयते ॥ २० ॥**

एवं च संस्थानाभिप्रायत्व दूरापास्तम्, न हि भिन्नेषु रुचकादिसस्थानेष्वनु-वर्त्तमानं सुवर्णत्व सस्थान भवतीति ॥ २० ॥

सुवर्णत्वमेव रुचकत्वादिविशेषानुगतमुपपादयति सार्द्धेन—

**वर्धमानकभङ्गे च रुचकः क्रियते यदा।**
**तदा पूर्वार्थिनः शोकः प्रीतिश्चाप्युत्तरार्थिनः॥ २१ ॥**
**हेमार्थिनस्तु माध्यस्थं तस्माद् वस्तु त्रयात्मकम्।**

**त्रयात्मकम्**, उत्पत्ति-स्थिति-विनाशधर्मात्मकमित्यर्थः।

तदेवोपपादयति—

**नोत्पादस्थितिभङ्गानामभावे स्यान्मतित्रयम्॥ २२ ॥**

एतेदेव विवृणोति पादत्रयेण—

**न नाशेन विना शोको नोत्पादेन विना सुखम्।**
**स्थित्या विना न माध्यस्थ्यम्,**

यतश्च सस्थानस्य उत्पत्तिनाशयोरपि न सामान्यस्यापि नाशोत्पत्ती, न च हेत्वन्तरं तस्य विनाशकमुत्पादक वास्ति, अत एव नित्यतापि सामान्यस्य सिद्धेत्याह—

**तेन सामान्यनित्यता॥ २३ ॥**

इतश्च न[१] सामान्य सस्थानमित्याह—

**मुद्गमाषतिलादौ च यत्र भेदो न लक्ष्यते।**
**तत्रैकबुद्धिनिर्ग्राह्या जातिरिन्द्रियगोचरः[२] ॥ २४ ॥**

संहतस्थापितेषु मुद्गादिषु सस्थानभेदमनुपलक्षयन्तोऽपि दूरस्था पुरुषा मुद्गत्वादिकमेवैकबुद्धिगोचरमिन्द्रियेण बुद्ध्यन्त इति ॥ २४ ॥

इतश्च प्रत्यक्ष सामान्यमित्याह—

**आराद् दृष्टे च पुरुषे सन्देहो ब्राह्मणादिषु।**
**न स्याद् यदि न गृह्येत सामान्यं चक्षुरादिना॥ २५ ॥**

वस्तुमात्रनिबन्धनो हि सन्देहो न ब्राह्मणादिष्वेवावतिष्ठेत, अतो गोत्वादिभ्यो व्यावृत्तं ब्राह्मणादिषु चानुवृत्त नरत्वं नाम सामान्यम्, यत् प्रत्यक्षवतामय सन्देह इति ॥ २५ ॥

यदि प्रत्यक्षा जातिः, किमिति तर्हि नरत्वादिवद् ब्राह्मणत्वादिकमपि सहसैव न गम्यते ? अत आह चतुर्भिः—

**तस्योपलक्षणं चापि क्वचित् केनचिदिष्यते।**
**रूपादीनां[३] विशेषेण देशकालाद्यपेक्षया॥ २६ ॥**

१. मु० पुस्तके नास्ति। २. ०गोचरा—का०। ३. रूपादिना—का०।

**सुवर्णं भिद्यते[1] रूपात् ताम्रत्वादेरसंशयम् ।**
**तैलाद् घृतं विलीनं च गन्धेन च रसेन च ॥ २७ ॥**
**भस्मप्रच्छादितो वह्निः स्पर्शनेनोपलभ्यते ।**
**अश्वत्वादौ[2] च दूरस्थे निश्चयो जायते स्वनैः[3] ॥ २८ ॥**
**संस्थानेन घटत्वादि ब्राह्मणत्वादि योनितः ।**
**क्वचिदाचारतश्चापि सम्यग् राजानुपालितात् ॥ २९ ॥**

**योनितो** मातापितृसम्बन्धात्, यथा च मातापितृज्ञानापेक्षं ब्राह्मण्यादे. प्रत्यक्ष· त्व तथा **अर्थवादाधिकरणे** स्वयमेव वक्ष्यति। क्वचिच्च देशे सम्यग् राज्ञानुपालितादपि **आचाराद्** ब्राह्मण्यादिनिर्णय. स च देशापेक्ष. । यस्तु वसन्ताधानादिना ब्राह्मण्यादिनिश्चयः स कालापेक्ष. । सर्वत्र रूपाद्यपेक्षैरिन्द्रियैरेव सुवर्णत्वादिनिश्चयः, अपरोक्षाभासादिति ॥ २६–२९ ॥

किं पुनरियं जातिः प्रत्येक पिण्डेषु वर्त्तते, व्यासज्य वा ? न तावदेका प्रत्येकमनेकत्र युगपदल वर्त्तितुम्; व्यासज्यवृत्तिर्नाम परस्परसापेक्षेषु वृत्ति., सा कथमतीतानागतवर्त्तमानेषु अनन्तेषु पिण्डेषु सम्भवेत्, प्रत्येक च गोबुद्धिर्न स्यात् ? अत आह—

**प्रत्येकसमवेतत्वं दृष्टत्वान्न विरोत्स्यते ।**

दृश्यते हि प्रतिपिण्ड जाति.—'इयं गौ., इयमपि' इति ।

न चैतावता एकत्वहानिः ? इत्याह—

**तथा सत्यपि नानात्वं नैकबुद्धेर्भविष्यति ॥ ३० ॥**
**नहि सम्बन्धिभेदेन स्वरूपैकत्वबाधनम् ।**

किमियं विभु. प्रादेशिकी वा ? तथा सावयवा निरवयवा वा ? इति बुभुत्सायामाह—

**विभुत्वावयवाभावौ प्रतिपाद्यौ च शब्दवत् ॥ ३१ ॥**

शब्दस्य च विभुत्वं **शब्दाधिकरणे,** अनवयवत्वं च **स्फोटे** प्रतिपादितम् । तद्वज्जातावपि, विभुत्वं च देशानवच्छेदो न सर्वगतत्वमिति सम्बन्धिभेदान्न भेद इति ॥ ३१ ॥

एतदेव दृष्टान्तेनोपपादयति—

**यथा च व्यतिरेकैव दृश्यमाना पुनः पुनः ।**
**कालभेदेऽप्यभिन्नैवं जातिर्भिन्नाश्रया सती ॥ ३२ ॥**

यदप्यपरं पृष्टम्—किं कात्स्न्येंन सैकैकत्र वर्त्तते भूतकण्ठगुणवत्, स्रक्सूत्रवद्वा अवयवश इति ? सोऽय प्रश्नानवसर एव जाताविल्याह—

**कात्स्न्यावयवशो वृत्तिः प्रष्टुं जातौ न युज्यते ।**

---

१. व्यज्यते—मु० पा० । २. अश्वत्थादौ—१ पु० । ३. ध्वनेः—१ पु० ।

कथम् ? इत्याह—

**न हि भेदविनिर्मुक्ते कात्स्न्र्यभागविकल्पनम् ॥ ३३ ॥**

यत्र हि स्वरूपतोऽवयवशो वा भेद , तत्रैतद् युक्तम्, भेदापेक्षो हि कृत्स्न-शब्दः, तदिदं द्वयमप्यनवयवायामेकस्या जातौ अनवसरमेवेति ॥ ३३ ॥

यदि न द्वेधापि वर्त्तते, कथ तर्हि वर्त्तते ? अत आह—

**तस्माद् व्यक्तिषु जातीनां वृत्ति[1]रस्तीति गम्यते ।**
**विशेषावसराभावात् तन्मात्रैवावतिष्ठते ॥ ३४ ॥**

वृत्तिरेवात्र प्रमाणवती, न विशेष इति ॥ ३४ ॥

कथं पुनः स्रक्सूत्रादिषु दृष्टो विशेषो जातौ नाङ्गीक्रियते ? अत आह द्वयेन—

**या चावयवशो वृत्तिः स्रक्सूत्रादिषु दृश्यते ।**
**भूतकण्ठगुणादे[2]श्च प्रतिपिण्डं समाप्तिः ॥ ३५ ॥**
**तत्रावयवयोगित्वमविभुत्वं च कारणम् ।**
**आकृतेस्तदभावेन न प्रसक्तमदो द्वयम् ॥ ३६ ॥**

**कण्ठगुणः,** कण्ठभूषण हारादि, **प्रतिपिण्डं समाप्तिः** कात्स्न्र्यम्, एकत्र वृत्त-स्यान्यत्रावृत्ति, सा चाविभूना हारादीनाम् । जातिस्तु विभु, सा एकत्राविकलापि वृत्तान्यत्राप्यविकला आश्रयान्तरानपेक्षैव वर्त्तते, तथा दर्शनात्, इदमेव हि विभुत्वमिति ॥ ३५-३६ ॥

ननु द्वैविध्यव्याप्ता वृत्तिः व्यापकनिवृत्त्या जातेर्निवर्तेत ? अत आह—

**न च द्वैविध्यमेवेति वृत्तेरस्ति नियामकम् ।**
**त्रिविधापि हि दृष्टत्वात् सम्भवेद् द्विविधा[3] यथा ॥ ३७ ॥**

व्याप्तिरेवात्र नास्ति, प्रकारान्तरस्यापि प्रत्यक्षेण जातौ दृष्टत्वाद् द्वैविध्यवदेव तस्य सम्भव इति ॥ ३७ ॥

अथ जातेरन्यत्र प्रकारान्तरं न दृष्टमिति चेत् ? तत् तुल्यं स्रगादिष्वपीत्याह—

**इतरत्र न दृष्टं चेत् स्रगादिष्वपि तत्समम् ।**

तदेव विवृणोति—

**नैव ह्यन्योन्यतुल्यत्वं[4] तयोर्नाप्यनया सह ॥ ३८ ॥**

न चैकत्र दृष्टस्यान्यत्रादर्शनादभावो भवति, अनैकान्तिकत्वादित्याह—

**न ह्यन्यस्मिन्नदृष्टत्वाद् वह्नेरौष्ण्यं प्रणश्यति[5] ।**

स्यादप्यत्र निदर्शनाकाङ्क्षा यद्यनुमानगम्येय वृत्तिः स्यात्, न त्वेतदस्ति ? इत्याह—

---

१. व्यक्ति—१ पु० ।
२. गणादेः—का० ।
३. दृष्टत्वासम्भवे द्विविध —का० ।
४. अन्येऽन्यतुल्यत्वम्—१ पु० ।
५. विनश्यति—१ पु० ।

**न चानुमानगम्येयं वाञ्छेद् येन निदर्शनम् ॥ ३९ ॥**

सा तु प्रत्यक्षगम्येति ॥ ३९ ॥

नन्वात्मीयेनासाधारणरूपेण प्रत्यक्षदृष्टाया वृत्तेर्वृत्त्यन्तररूपादर्शनेन निराकरण युक्तम्, तस्मादस्याप्यविशेषात् ? इत्याह—

**स्वरूपतश्च दृष्टाया वृत्तेर्न पररूपतः ।**
**निराक्रियोपपद्येत तद्विशेषमपश्यताम् ॥ ४० ॥**

ततश्चायुक्तमिदमित्याह वान्तेन—

**अङ्गाङ्गासम्भवाच्चापि या प्रधाननिराक्रिया ।**
**साऽयुक्तैव,**

जातेरङ्ग[1] वृत्ति, तदङ्ग च कात्स्न्यादिप्रकार तदसम्भवात् यज्जातिनिराकरणं तन्न युक्तमिति ॥ ४१ ॥

कारणमाह[2]—

**अनुमानेन प्रत्यक्षज्ञानबाधनात्[3] ॥ ४१ ॥**

उपसंहरति -

**तस्मादसम्भवो यस्य[4] तन्मात्रस्यैव बाधनम् ।**
**युक्तं न तावतान्योऽपि सम्भवन् बाधमर्हति ॥ ४२ ॥**

एव स्वमतेन व्यक्तिदेशमेव सामान्यमाश्रित्य दूषण समाहितम् ॥ ४२ ॥

यदा तु वैशेषिकपक्षेण सर्वगतत्व जातेः, तदाप्यदोष इत्याह—

**तेन वैशेषिकोक्तापि जातिः सर्वगता सती ।**
**व्यज्यते यत्र पिण्डेन वर्णवत् तत्र गृह्यते ॥ ४३ ॥**

येनैव दर्शनबलेन प्रकारान्तर वृत्तेराश्रितम्, तेनैव सर्वगताया अपि जातेः केषुचित् पिण्डेषु प्रत्येकसमवायवृत्त्याभिव्यक्ति कात्स्न्यभागविकल्पशून्यत्वमाश्रित्य[5] क्वचिद् ग्रहणं समर्थ्यत इति ॥ ४३ ॥

तदेवमुपपादिता जाति प्रयोगेण दर्शयति—

**तस्मात् पिण्डेषु गोबुद्धिरेकगोत्वनिबन्धना ।**
**गवाभासैकरूप्याभ्याम् एकगोपिण्डबुद्धिवत् ॥ ४४ ॥**

एकालम्बनत्वमेव साध्यम्, गोत्वग्रहण चानुवादः, गवाभासत्वाद्, एकरूपत्वादिति च हेतुद्वयम् । यत् खलु गवाभासमेकरूप वा ज्ञान तदेकालम्बनम्, यथैकपिण्डे गोबुद्धिरिति ॥ ४४ ॥

प्रयोगान्तरमाह—

---

१. जातेरङ्गे—मु० पा० । २. मु० पु० नास्ति ।
३. ०बाधनम्—का० । ४. यत्र—का० । ५. ०शून्यामा०—मु० पा० ।

**न शाबलेयाद् गोबुद्धिस्ततोऽन्यालम्बनापि वा ।**
**तदभावेऽपि सद्भावाद् घटे पार्थिवबुद्धिवत् ॥ ४५ ॥**

प्रत्येकसमवायेऽपि प्रयोगमाह—

**प्रत्येकसमवेतार्थविषया वापि गोमतिः ।**
**प्रत्येकं कृत्स्नबुद्धित्वात् प्रत्येकव्यक्तिबुद्धिवत् ॥ ४६ ॥**

'तथा सत्यपि नानात्व न' इत्यत्र प्रयोगमाह—

**प्रत्येकसमवेतापि जातिरेकैकबुद्धितः ।**
**नञ्युक्तेष्वपि वाक्येषु ब्रह्मणादिनिवर्तनम् ॥ ४७ ॥**

यच्च सादृश्यरूपत्व सामान्ये निराकृतम्, तत्रापि प्रयोगमाह—

**न च सादृश्यविषया गोधोस्ताद्रूप्यजन्मतः ।**
**प्रामाण्ये सति यद्बुद्धि[1] प्रत्यभिज्ञैकवस्तुनि ॥ ४८ ॥**

**प्रामाण्ये सती**ति हेतुविशेषण सादृश्यनिमित्तभ्रान्त्या व्यभिचारो मा भूदिति । व्यामोह इति चेत् ? नासति प्रत्ययविपर्यासे व्यामोह इति ॥ ४८ ॥

भाष्यार्थमाह—

**नैकरूपमतिर्गोत्वे मिथ्या वक्तुं च शक्यते ।**
**नात्र कारणदोषोऽस्ति बाधकप्रत्ययोऽपि वा ॥ ४९ ॥**

"असत्यर्थान्तरे एवञ्जातीयके भवति प्रत्यय —पङ्क्तिर्यूथं वनमिति यथेति चेत्" ( शा० भा० पृ ६० ) इति चोद्यस्योत्तरभाष्यम्—"असम्बद्धमिदं वचनमुपन्यस्तम्" ( शा० भा० पृ. ६१ ) इति, तदाक्षिपति—

**यदा व्यक्त्यतिरेकेण ग्राह्यत्वादन्यताकृतेः ।**
**वनवन्नास्त्यनैकान्तात् तत्रासम्बद्धता[3] कथम् ॥ ५० ॥**

यत् खलु व्यक्त्यतिरेकेण ग्रहणं जातिसद्भावे साधनं सिद्धान्तिनोक्तं तस्यानैकान्तिकत्वमतो नोच्यते, वनस्य वृक्षव्यतिरेकेण गृह्यमाणस्याप्यसत्त्वात्, तत् कथमसम्बद्धत्वमिति ? ॥ ५० ॥

समाधत्ते—

**साधनं चेन्मयोच्येत युज्येत व्यभिचारिता ।**
**दूषणत्वधिया त्वेतद् असम्बद्धत्वमुच्यते ॥ ५१ ॥**

न ह्यस्माभि साधनमुक्तम्, कि तु प्रत्ययविरोधाख्यं दूषणम्, तस्य व्यभिचारोपन्यासोऽसम्बद्ध एव, न हि प्रत्यक्षमव्यभिचारापेक्षमिति ॥ ५१ ॥

कस्य पुनरिद दूषणम् ? अत आह—

---

१. यद्बिद्धि—१ पु० ।
२. ०वस्तु—३ पु० ।
३. असम्बन्धता—३ पु० ।

शङ्कते—

**नानेकस्यैकशब्द्यं चेद्,**

न हि सकृदुच्चरितेन प्रातिपदिकेनानेकेषामभिधान सम्भवतीति ।

परिहरति—

**एकशेषवदिष्यताम्** ।

ये ह्यनेकार्था अक्षादिशब्दा॰, ते कृतैकशेषा युगपदपि बहूनर्थानभिदधत्येवेति ।

पुन: शङ्कते—

**तत्र संख्याविवृद्धिश्चेद्,**

अनेकार्थवचनाद् द्विवचन वा दृष्टमेकशेषे, तत् कथमेकवचनं वनशब्दादिति ।

परिहरति—

**अस्तु तन्मात्रवर्जनम्** ॥ ६४ ॥

एकत्वाभिधाय्येकवचनम्, इह तदसम्भवात् तद्वर्जन ग्रहाद्येकवचनवत् प्रातिपदिकप्रयोगासम्भवात् साधुत्वमात्रार्थं भविष्यति ॥ ६४ ॥

यद्वा वृक्षेष्वप्येकत्वम् अस्त्येवेत्याह्—

**तस्मात् सामान्यदृष्टेन सिद्धैकत्वस्य सङ्गतिः ।**

तस्मादेकवचनाल्लिङ्गादेव सामान्यतोदृष्टेन वृक्षेष्वप्येकत्वसङ्गतिः सिद्ध्यति, एकार्थवचनादेकवचन दृष्टम्, वनशब्दादप्येकवचन दृश्यते, अतस्तदभिधेयेऽस्त्येकत्वमिति ।

न च वाच्यम्—कथ केवलेन सामान्यदृष्टतोऽर्थसिद्धिरिति, सूर्यगत्यादिषु दर्शनादित्याह—

**तेनान्यानवगम्यापि सख्या स्यात् सूर्ययानवत्** ॥ ६५ ॥

**तेनेति** । सामान्यदृष्टेनेत्यर्थ. ॥ ६५ ॥

न त्विद युक्तम्, न हि वृक्षेष्वेकत्व शक्यमनुमातुम्, प्रत्यक्षविरोधात्, अत पक्षान्तरमाह—

**केचिद् बहुत्वसामान्यमाहुर्वृक्षस्थितं वनम्** ।

यथेष्ट चात्र विशेषणविशेष्यत्वम्—वृक्षाश्रय वा बहुत्वम्, बह्वाश्रयं वा वृक्षत्वमिति ।

तस्य च एकत्वमस्ति इत्येकवचनोपपत्तिरित्याह—

**तत्र चैकत्वमस्त्येव,**

यद्वास्त्येव वृक्षेष्वेकदेशस्थेषु वनत्वमित्येकवचनोपपत्तिरित्याह—

**वनत्वं वापि विद्यते** ॥ ६६ ॥

नन्वेकाश्रयमन्तरेण कथ वनशब्दसामान्यम् ? अत आह—

---

१. अस्त्येवेति नास्ति १ पु० ।

**विनाप्येकाश्रयत्वेन यथैवावयवी तथा ।**

ननु सयुक्तेष्ववयवेषु सम्भवति अवयवी[1] वृक्षेष्वसंयुक्तेषु कथ वनत्व नाम सामान्य वर्त्तेत ? अत आह—

**असंयुक्तैरभिव्यक्तिर्दृष्टत्वान्न विरोत्स्यते ॥ ६७ ॥**

किं पुनः प्रमाण वनत्वसामान्यस्य सद्भावे ? अत आह—

**अन्यत्रापि च तद्बुद्धेः सामान्यं तद् भविष्यति ।**

अस्ति हि सर्वेषु वनेषु वनं वनमिति प्रत्यभिज्ञेति । दृष्टा चासयुक्तेष्वपि बहुषु सामान्यस्य वृत्तिरित्याह—

**यथा च भ्रमणत्वादिभङ्गिष्ववयवेष्वपि ॥ ६८ ॥**

**व्यक्तं नानाश्रयत्वेऽपि गृह्यते वनता तथा ।**

भङ्गिष्वयुगपद्भूतेष्वपि तत् सामान्यमभिव्यज्यते, किमुताभङ्गिष्विति ।

यस्तु मन्यते—एकदेशस्थबहुवृक्षोपाधिकृतैवेय वनमिति बुद्धिरतो निष्प्रमाणकं वनत्वमिति, त प्रति पक्षान्तरमाह—

**यद्वैककार्यहेतुत्वाद् एकगोशब्दवद् वनम् ॥ ६९ ॥**

यथा ह्येकमर्थप्रतिपत्तिलक्षण कार्य संहृत्य कुर्वन्तो गकारादयो वर्णा सङ्घात-वाचिना गोपदेनाभिधीयन्ते, सङ्घातत्वाच्चैकवचन पदमिति, यथा वृक्षा संहृत्य स्वविषयमेकं ज्ञानाख्यं कार्यं कुर्वन्त सङ्घातवाचिना वनशब्देनैकवचनान्तेनाभि-धीयन्ते । एककार्यहेतुत्व चोपलक्षणार्थम् । एककार्यकरणेनैकदेशकालावस्थानेन वा समुदायमापन्ना. समुदायवचनेन वनादिशब्देनैकवचनान्तेनाभिधीयन्ते । अस्ति हि समुदायिष्वेकोपाधिवशीकृतेष्वेकबुद्ध्युपारूढेषु समुदायो नाम व्यासज्यवर्त्ती गुणविशेष इति ॥ ६९ ॥

युक्तं चैतदित्याह—

**नित्यं ये व्यस्तविज्ञाता[3] वृक्षा नेष्टा हि ते वनम् ।**

ये व्यस्तविज्ञाता[4] अनेकज्ञानहेतव., नाप्येकस्मिन् देशे काले वावस्थिताः, ते वनमिति नोच्यन्त इति ।

पक्षान्तरमाह—

**यद्वा लक्षणयैकत्वं देशकालक्रियादिभिः ॥ ७० ॥**

**द्रव्यैकत्वाद् विनापीष्टं पङ्क्तियूथवनादिषु ।**

पूर्वं समुदायवचनत्वमाश्रित्य तदेकत्वादेकवचनं समर्थितम्, इदानी समुदायि-वचनमङ्गीकृत्य तेषां बहुत्वेऽपि यदेषां समुदायोत्पत्तिकारणं देशकालक्रियादिकं

---

१. अवयवित्वम्—१ पु० । २. यथा—का० ।
३. ०विज्ञाना—का० । ४. व्यस्ता—३ पु० ।

तल्लक्षितं[1] तदेकत्वादेकं[1] वनमित्युच्यते, तेनान्तरेण द्रव्यैकत्व लक्षणयैकवचनो-पपत्ति.। आदिशब्देन वृक्षत्वसामान्योपादानमिति।

तदेवं वनस्य सत्यत्वात् तत्दृष्टान्तेनाकृतेर्मिथ्यात्वमित्ययुक्तम्[2]। यदि परमेव-मुच्यते, वनबुद्धिवद् गोबुद्धिरपि पिण्डसमुदायालम्बना भवतु, किं जात्येति ? तत्राह—

**वृक्षाणां समुदाये च वनधीर्जायते यथा ॥ ७१ ॥**
**नैवं गोसमुदायेऽपि गोत्वधीरुपजायते ।**

कथम् ? इत्याह—

**यादृशी वृक्षधीस्तत्र गोत्वधीरपि तादृशी ॥ ७२ ॥**
**वनवन्नापृथक्सिद्धेः[3] समुदायत्वकल्पना[4] ।**

वनबुद्धिर्हि अपृथग्भूतेषु सिध्यन्ती युक्त समुदायालम्बना भवति, गोबुद्धिस्तु नैवमिति।

अथ सास्नादिसमुदायालम्बनेत्युच्यते ? अत आह—

**न च सास्नादिसङ्घातस्तद्बुद्ध्यालम्बनं भवेत् ॥ ७३ ॥**

कारणमाह—

**क्षीणेषु पिण्डबुद्ध्यैषु तत्सामान्ये हि[5] गोत्वधीः ।**

सास्नादयो हि समुदिताः पिण्डबुद्धिमेव जनयन्ति, गोबुद्धिस्त्वनेकपिण्डानुवृत्तं सामान्यमेवालम्बत इति।

तेन यद्यवश्य समुदायालम्बनत्व वक्तव्यम्, अत पिण्डबुद्धिमेवाश्रित्यावयव्ये-वापह्नूयताम्, सामान्य त्वनेकसमुदायानुगतं ततो व्यतिरिच्यत एवेत्याह—

**तेनावयव्यभावेऽपि सामान्यं व्यतिरिच्यते ॥ ७४ ॥**

परमार्थतस्त्ववयव्यपह्नवनमपि न सम्भवतीत्याह—

**पूर्वोक्तादेव तु न्यायात् सिध्येदत्रा[6]वयव्यपि ।**

यथैव भिन्नेष्वेकबुद्धिसद्भावात् सामान्य सिध्यति, तथावयवेषु भिन्नेषु देव-दत्तोऽयं घटोऽयमित्येकद्रव्यावभासाद् अस्त्येवावयवेभ्यो भिन्नोऽवयवीति।

किमत्यन्तभिन्नोऽवयवी ? नेत्याह—

**तस्याप्यत्यन्तभिन्नत्वं न स्यादवयवैः सह ॥ ७५ ॥**

कस्मात् ? इत्याह—

**व्यक्तिभ्यो जातिवच्चैष न निष्कृष्टः[7] प्रतीयते ।**

---

१–१. तल्लक्षितं तदेकवचनम्—१ पु० ।
२. ०मित्युक्तम्—मु० पा० ।
३. ०सिद्धैः—३ पु० ।
४. ०प्रकल्पिता—३ पु० ।
५ सामान्येषु—३ पु० ।
६. तत्र—३ पु० ।
७. निकृष्ट—मु० पा० ।

तन्तव एव हि संयोगविशेषवशेन एकद्रव्यत्वमापन्नाः 'पटोऽयम्' इत्येकाकारया बुद्धया गृह्यन्ते। अतोऽवस्थामात्रादेवावयवेभ्योऽवयविनो भेदः, न त्वत्यन्तभेद इति।

ये चैकान्तिकं भेदमभेदं वावयविनः समाश्रयन्ते तैरेवायमनेकान्तवादः साधित इत्याह सार्द्धेन—

**कैश्चिदव्यतिरिक्तत्वं कैश्चिच्च व्यतिरिक्तता ॥ ७६ ॥**
**दूषिता साधिता वापि न[1] च[1] तत्र बलाबलम्।**
**कदाचिन्निश्चितं कैश्चित् तस्मान्मध्यस्थता वरम् ॥ ७७ ॥**

उभयोक्तयुक्तिबलादेवोभयसिद्धिरिति ॥ ७७ ॥

यतश्चान्यत्वमनन्यत्वं च द्वय सदसत्तया न शक्य दर्शयितुम्, अतश्चित्रवद-नेकरूपत्वादत्रैकरूपाभ्युपगमो मृषेत्याह—

**ततोऽन्यानन्यते ह्यस्य स्तो न स्तश्चेति कीर्त्यते।**
**तस्माच्चित्र[2]वदेवास्य[3] मृषा[4] स्यादेकरूपता[4] ॥ ७८ ॥**

नन्वेवमन्यानन्यत्ववादिनामन्यतमस्यानवधारणात् 'स्थाणुर्वा पुरुषो वा' इतिवत् सन्देहान्न[5] किञ्चिदप्यन्यानन्यत्वादिकं[5] बाधितं किं सिध्येत्? अत आह सार्द्धेन—

**वस्त्वनेकत्ववादाच्च[6] न सन्दिग्धाप्रमाणता।**
**ज्ञानं सन्दिह्यते यत्र तत्र न स्यात् प्रमाणता ॥ ७९ ॥**
**इहानैकान्तिकं वस्त्वित्येवं ज्ञानं सुनिश्चितम्।**

वस्तुविषयो ह्यस्माकमनेकान्तवाद, नैकाकार वस्त्विति। तत्र तु ज्ञानमेवा वस्तुरूपमनेकमवभासते—किमयं स्थाणु किं वा पुरुष इति, तत्र सशयादप्रामाण्य भवति; इह त्वनेकरूपमेव वस्त्विति निर्णयात् कुतोऽप्रामाण्यमिति।

यत्त्वभेदवादिभिरुक्तम्—"यदा ह्येकैकशस्तन्त्वादयोऽवयवा बुद्धया निष्कृष्यन्ते तदावयवी नाम न कश्चित् प्रतीयते, तस्मान्नास्यावयवेभ्यो भेदः" इति, तदयुक्तम्, भेदपक्षेऽपि इयमवयवेषु निष्कृष्टेष्ववयव्यप्रतीतिरुपपन्नैव, सयुक्तानेकावयवव्यासङ्गी ह्यसौ, तेषु निष्कृष्यमाणेषु तस्यापि विनाशो बुद्धिस्थो भवति, तदाह—

**निष्कृष्यावयवान् बुद्धया यावयव्यप्रतीतता[7] ॥ ८० ॥**
**बुद्धिस्थत्वाद् विनाशस्य सौलूक्यस्यापि युज्यते।**

---

१–१. भवेत्—३ पु०। २. चित्रवित्—का० सं०। ३. अत्र—पु०।
४–४. तत्र स्यादप्रमाणतेति पाठान्तरम्। स्यान्न प्रमाणता—का० सं० पु०।
५–५. सदेहात् किं चिदप्यन्यत्वादिकम्—१ पु०।
६. अनेकान्तवादात्—३ पु०। ७. अप्रतीतिता—३ पु०।

वृत्तिविकल्पं परिहरति—

**वृत्तिश्चावयवेष्वस्य व्यासज्यैव प्रतीयते[1] ॥ ८१ ॥**

सापेक्षेष्वनेकेषु वृत्तिर्व्यासज्यवृत्तिरिति ॥ ८१ ॥

यदपि विकल्पान्तरम्—किं कार्त्स्न्येनैकैकत्र वृत्तिः ? किं वावयवश ? इति, तज्जातिवदेवात्रापि अनवकाशमेव, "न हि भेदविनिर्मुक्ते कार्त्स्न्यभागविकल्पनम्" ( श्लो० वा० वन० ३३ ) इति ह्युक्तम्, न ह्यवयविनोऽप्यवयवेषु वर्त्तितुमवयवान्तराणि सन्ति, तदाह—

**ततः कार्त्स्न्यादिसम्प्रश्नः प्रत्याख्येयोऽत्र जातिवत् ।**

पुनर्जातिप्रतीतिवेवोपसक्रम्य सास्नादिसमुदायालम्बनत्वे दोषमाह—

**सास्नादिगुण[2]हेतुश्चेन्नान्यस्मिन् गोत्वधीर्भवेत् ॥ ८२ ॥**

कारणमाह—

**भिन्न एव हि सास्नादिः पिण्डात् पिण्डान्तरे यतः ।**

अथ सास्नादित्वाद्यवयवसामान्यानां यः समुदायः तदालम्बनमेवेयम्, अतोऽन्यत्रापि भवतीत्युच्यते, तत्राह—

**न चावयवसामान्यं परेषामुपपद्यते ॥ ८३ ॥**

उपसहरति—

**तस्मात् सास्नादितोऽन्येन गोत्वधीरुपजन्यते ।**

वनबुद्धिरपि तर्हि वनान्तरेष्वपि सम्भवन्ती न समुदायालम्बना स्यात् ? अत आह—

**वनान्तरेषु या बुद्धिर्वनमित्युपजायते ॥ ८४ ॥**

**तस्यास्तदेव वृक्षत्वं ग्राह्यं बह्वाश्रयं विदुः ।**

अस्ति ह्यस्माकं वृक्षत्वं बहुत्वसामान्य समुदायसामान्यं च, अतः सर्वेषु वनेषु वृक्षगतबहुत्वोपाधिकृता वृक्षसमुदायकृता वा वनबुद्धिर्युक्तेति ।

स्यादप्येवं वृक्षस्थितबहुत्वाभिधाने बह्वाश्रय वृक्षत्वाभिधाने तत्समुदायाभिधाने च 'वनम्' इत्येकवचनम्, यदा हि वृक्षा हि बहवो वनमिति पक्षः, तदा किमनुपपन्नमेव एकवचनम् ? नेत्याह—

**एकत्वेऽप्याकृतेर्यद्वद् बहुत्वं व्यक्त्यपेक्षया ॥ ८५ ॥**

**बहुत्वे हि तथा व्यक्तेरेकत्वं जात्यपेक्षया ।**

यथा हि जातेर्व्यक्त्यात्मना बहुत्वम्, एवं व्यक्तीनामप्यस्ति जात्यात्मनैकत्वम् । जातिग्रहण देशादीनामपि उपलक्षणार्थमिति ।

भवत्वेवम्, बहुवचनमपि तु स्वसंख्यावशेन किमिति न भवति, ततश्चैकस्मिन्नपि वृक्षसमुदाये 'वनानि' इत्यपि प्रयोगः स्यात् ? अत आह—

---

१. प्रसज्यते—३ पु० । २. ०गुण०—का० सं० ।

**एकानेकाभिधाने च शब्दा नियतशक्तयः ॥ ८६ ॥**

नियतशक्तयो हि शब्दाः, केचिदेकत्वेनैवावच्छिन्नमर्थं वदन्ति, केचित्तु बहुत्वेनैव, केचिदुभयथापि प्रयोगभेदेन वदन्तीति, तत्रोदाहरणानि दर्शयति त्रयेण—

**केचिद् व्यक्तिं त्वसंख्याकां गमयन्त्यम्बरादिषु ।**
**'एको व्रीहिः सुनिष्पन्नः' इति जातिं त्वसंख्यया[1] ॥ ८७ ॥**
**पत्नीसन्नहनादौ तु व्यक्तिमाकृतिसंख्यया ।**
**कपिञ्जलादिजातेस्तु प्रतीतिर्व्यक्तिसंख्यया[2] ॥ ८८ ॥**
**व्यक्तिजाती वदन्त्यन्ये द्रव्यावयवसंख्यया ।**
**अस्मानिति यथैकस्मिन् पाशानदितिरित्यपि ॥ ८९ ॥**

व्रीहिशब्दश्चान्येषामपि जातिशब्दाना वृक्षादीनामुपलक्षणार्थः। पत्नीशब्दोऽप्यौपाधिको यज्ञस्वामिन्या प्रवर्तमानो व्यक्तिवचनः, स चाकृतिसख्यया व्यक्तिमवच्छिनत्ति, 'पत्नी[3] सनह्य' इति अस्मिन्मन्त्रे द्वयोर्बहुषु वैकवचनस्यैव[4] प्रयोगात् आकृतिसख्यावाचिना शब्देन प्रवृत्तिनिमित्त यज्ञस्वामित्वमेवोच्यते, न हि पत्नीत्व नामाकृतिरस्ति। अस्मानिति व्यक्तिमवयवसख्यया, 'अदिति पाशान्' इत्यत्र मन्त्रे जातिवचनः पाशशब्द एकस्मिन् पाशे बहुवचनान्त. प्रयुज्यमानो जाति द्रव्यावयवसख्यया वक्ति । यद्यपि चाय प्रयोगसमवेतपाशव्यक्तिपरः न तु कपिञ्जलवज्जातिमात्रपरः, तथापि जात्यभिधायीति कृत्वा जाति द्रव्यावयवसख्यया वक्ति, इत्युक्तमिति ॥ ८७-८९ ॥

ये चैते व्रीह्यादिशब्दास्ते प्रयोगभेदेन यथारुचि सख्यान्तर भजन्त इत्याह—

**तत्र व्रीह्यादिशब्दानां संख्यायोगो यथारुचि ।**

वनदारादिशब्दास्तु व्यवस्थितसंख्यावचना इत्याह—

**वनदारादिशब्दास्तु प्रवर्तन्ते व्यवस्थया ॥ ९० ॥**

एतदेव दृष्टान्तेनोपपादयति—

**जङ्गमे स्थावरे चार्थे यथा यूथवनादयः ।**

कीदृशी पुनर्दारादिशब्दाना व्यवस्था ? ता दर्शयति—

**तत्र व्यक्तौ च जातौ च दारादिश्चेत् प्रयुज्यते ॥ ९१ ॥**
**व्यक्तेरवयवानां च संख्यामादाय वर्तते ।**

दारशब्दो हि सर्वदा बहुवचनान्तः सन् यदैकव्यक्त्यभिप्रायेण प्रयुज्यते तदावयवसख्यया व्यक्तेर्भेदमाचष्टे, यदा त्वविवक्षितव्यक्तिभेदो दारमात्रपरः तदा व्यक्तिभेद इति ।

---

१. त्वसंखया—३ पु० । २. इदमर्धत्रयं का० सं० पु० त्रुटितम् ।
३. पत्नीः—मु० पा० । ४. बहुत्वैक०—मु० पा० ।

वनशब्दस्य त्वेकसंख्यैव व्यवस्थितेत्याह—

**वनशब्दः पुनर्व्यक्तोर्जातिसंख्याविशेषिताः[1] ॥ ९२ ॥**
**बह्वीराहाथ वा जातिं बहुव्यक्तिसमाश्रयाम्[2] ।**

जातिग्रहण बहुत्वदेशसमुदायानामुपलक्षणार्थम् । यस्तु भिन्नेषु वनेषु 'वनानि' इति प्रयोग:, स देशबहुत्वं जातावुपचर्य क्रियते, द्रव्यसमुदायवचनत्वे लक्षित-देशाद्यभिप्रायत्वे वा वनस्य तद्भेदादेव युक्त बहुवचनमिति ।

वनन्यायमेव पङ्क्तावतिदिशति—

**एवं पङ्क्त्यादिशब्दानां संयोगादि विशेषणम् ॥ ९३ ॥**
**सर्वेषां किञ्चिदस्तीति न निरालम्बनैकधीः ।**

संयुक्तेषु परिगृहीतविततिविशेषेषु पङ्क्तिबुद्धिरिति तादृगुपाध्येकत्वात् पङ्क्त्योरेकपङ्क्तिबुद्धिरिति ।

उक्तमेवार्थं संक्षिप्य भाष्यारूढ करोति—

**तुल्यं[3] प्रत्यक्षयाऽऽकृत्या वने यत् तदसद् यदि ॥ ९४ ॥**
**वृक्षास्तत्र तया तुल्या इति शून्यत्ववादिता ।**

सोऽयम् "किमसति वने" इत्यादे. "माहायानिक· पक्ष " (शा० भा० पृ. ६१) इत्यन्तस्य भाष्यस्यार्थ ।

"यदि वनेऽन्येन हेतुना" इत्यादेः "वैषम्यम्" (शा० भा० पृ. ६१) इत्यन्तस्य भाष्यस्यार्थमाह--

**प्रत्यक्षाभासगम्यत्वाद् वृक्षेभ्योऽन्यत् तु तद्वनम् ॥ ९५ ॥**
**नाऽऽकृत्या सह तस्यास्ति स्पर्द्धा प्रत्यक्षगम्यया ।**

"अथ किमाकृतिसद्भाववादी" इत्यादे. "नास्तीत्यवगम्यते" (शा० भा० पृ. ६१ ) इत्यन्तस्य भाष्यस्यार्थमाह—

**अथाऽऽकृत्या वनं तुल्यं सद्भावेन[4] प्रसज्यते ।**
**जातिपक्षविमोकेन वनसिद्धान्तदूषणम् ॥ ९६ ॥**

पूर्वं वृक्षातिरिक्तस्य वनस्य बाधकप्रत्ययादसत्त्वमुपपाद्य पुनरपि "वनादिषु नैव प्रत्ययविपर्यास " इत्यादिना भाष्येण सत्त्वमुपगतम्, तस्याभिप्रायमाह—

**इति निगदितमेतल्लोकसिद्धैः पदार्थै-**
**र्व्यवहृतिरिह शास्त्रे न स्वतन्त्राभ्युपेतैः ।**
**भवति च जनदृष्ट्या जातिपङ्क्त्यादिभेदो**
**यदि तु न घटतेऽसौ नैव बाधोऽस्ति कश्चित् ॥ ९७ ॥**

इति वनवादः समाप्तः

---

१. ०संस्था०—१ पु० । २. ०समाश्रिताम्—३ पु० ।
३. अलम्—२ पु० । ४. तद्भावेन—का० स० ।

त्रिलोकप्रसिद्धपदार्थव्यवहारिणो **मीमांसकाः**। नैषां पृथिव्यादिवत् स्वतन्त्राभ्युपेताः पदार्थाः सन्ति, न च वनादयो भवन्ति लोकदृष्टाः। जातेः पङ्क्त्यादीनां च सत्यमिथ्यात्वरूपो विशेष इति 'पूर्वं यदि वनेऽन्येन' इत्यादिनोक्तम्। यदि तु नायं विशेषो घटत इति कश्चिदभिविनिविशेत, तं प्रतीदं भाष्यम् "अथ वनादिषु" ( शा० भा० पृ. ६१ ) इति वनस्य सद्भावेऽपि न काचिदस्माकं क्षतिरिति ॥ ९७ ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे वनवादः समाप्तः

## अथ सम्बन्धाक्षेपपरिहारः

"अथ सम्बन्धः कः" (शा० भा० पृ. ६२) इति भाष्यम्, तस्यार्थमाह—

**भवेतां नाम शब्दार्थौ यावेतावुदितौ त्वया।**
**यदर्थस्तु प्रयासोऽयं स सम्बन्धो निरूप्यताम् ॥ १ ॥**

एतदेव विवरीतु पृच्छति—

**पूर्वमेवोपदिष्टः सन् सम्बन्धः किन्नु पृच्छ्यते।**

संज्ञासंज्ञिलक्षणः सम्बन्धः कथित एवेति।

यदपि यच्छब्दे विज्ञातेऽर्थो विज्ञायत इत्युक्तम्, तदप्ययुक्तमित्याह—

**स्वरूपाकथनाच्चैतद् उत्तरं नोपपद्यते ॥ २ ॥**

येन सम्बन्धेन शब्दे विज्ञातेऽर्थो विज्ञायते स कीदृग्रूपः? इति प्रश्नस्य नेदमुत्तरं युक्तम्—येन शब्दे विज्ञातेऽर्थो विज्ञायते स सम्बन्ध इति, न ह्यनेन स्वरूपं कथितं भवति ॥ २ ॥

अत्रैव दृष्टान्तमाह—

**किमौषधं ज्वरस्येति पृष्टो यदि वदेदिदम्।**
**येनासौ नश्यतीत्येवं किं तेन कथितं भवेत् ॥ ३ ॥**

तत्र केषाञ्चिन्मतेन प्रश्नाभिप्रायमाह—

**तत्र केचिद् वदन्त्येव पूर्वत्रापरितोषतः।**
**प्रश्नः पुनरुपक्रान्तः सम्बन्धान्तर मिच्छता ॥ ४ ॥**

किमित्यपरितोषः? अत्राह—

**यः संज्ञासंज्ञिसम्बन्धः स प्रतीत्युत्तरो यतः।**
**सा चान्यपूर्विका तस्मान्नास्य प्रत्यायनाङ्गता ॥ ५ ॥**

---

१. सम्बन्धोत्तरम्—का०।

सम्बन्धग्रहणपूर्विका हि प्रतीतिः, संज्ञात्वं तु प्रतीत्युत्तरकालभावि न प्रतीत्यङ्गमिति ॥ ५ ॥

उत्तरकालमेव संज्ञात्वस्य दर्शयति—

**अजानानोऽपि संज्ञात्वं सम्बन्धान्तरदर्शनात् ।**
**बुध्यतेऽर्थं ततः पश्चात् कश्चित् संज्ञेति मन्यते[1] ॥ ६ ॥**

**कश्चित्**, जिज्ञासुः । अन्यस्तु पश्चादपि न बुध्यते, अतोऽनुपयोग्येव संज्ञात्वमिति ॥ ६ ॥

किं पुनस्तत् सम्बन्धान्तरं यदभिधित्सया प्रश्नान्तरम् ? अत आह—

**तमेवान्योऽविनाभावमत्र सम्बन्धमिच्छति ।**

कथं पुनरसावनेन भाष्येणोक्तो भवति ? इत्यत आह—

**न हि तस्माद् विना शब्दे ज्ञाते स्यादर्थबोधनम् ॥ ७ ॥**

यतः शब्दे ज्ञातेऽर्थो ज्ञायते स सम्बन्ध इत्युक्तम्, न चाविनाभावाद् विना वस्त्वन्तरेऽवगते वस्त्वन्तरं ज्ञायत इति ॥ ७ ॥

तदिदं दूषयति—

**तत्त्वयुक्तम्, न भाष्येऽस्ति तादृक्सम्बन्धकीर्तनम् ।**

न हि भाष्ये अविनाभावकीर्त्तनमस्ति ।

यदि तु यच्छब्दे विज्ञात इत्येतावतैवासावुक्तः स्यात् तत एव तावतापि विना असावुक्त इति किमिति नोच्यते, न ह्यप्रतिपादकस्य सदसद्भावयोः कश्चिद्विशेषः ? इत्याह—

**यदि ह्येतावतोच्येत किं नानुक्तः प्रतीयते ॥ ८ ॥**

यदि ह्यविनाभावादिह प्रतीतिः सम्भवेत्, यदि संज्ञात्वं प्रतीतेः प्रागनवगतं स्यान्न प्रतीत्यङ्गं स्यात्, ततोऽस्यानेनैवाविनाभाव उक्तः स्यात्, तदभिधित्सया पुनः प्रश्नः स्यात्, न तु तदुभयमस्तीत्याह—

**प्रयुक्तश्चाविनाभावसंज्ञा[2] लोकात् तु गम्यते ।**

यत्तूक्तम्—'अजानानोऽपि संज्ञात्वम्' इति, तत्राह—

**संज्ञेत्यगम्यमानेऽपि गमकत्वं प्रतीयते ॥ ९ ॥**

यद्यपि संज्ञेत्येव विकल्प्य न गृह्यते, तथापि गमकत्वं प्रागेव प्रतीतेर्वृद्धव्यवहारेऽवगम्यते । गमकत्वमेव चेन्द्रियादिविलक्षणं संज्ञात्वमिति संज्ञात्वमेवावगतं भवति, अतः संज्ञैव प्रतीत्यङ्गमिति नापरितोषः । ततो न सम्बन्धान्तराभिधित्सया पुनः प्रश्नः, नाप्यविनाभावसम्बन्धोऽनेनोच्यते इति ॥ ९ ॥

---

१. गम्यते—३ पु० ।
२. अपि नामावम्०—का० सं० । अविनाभावं०—मु० पा० ।

किमर्थं तर्हि पुनः प्रश्नोत्तरम् ? अत आह—

**तस्मात् स एव शब्दार्थचिन्ताव्यवहितोऽधुना ।**
**नित्यानित्यविचारार्थं सम्बन्धः स्मार्यते[1] पुनः ॥ १० ॥**

यत्तु स्वरूपाकथनान्नोत्तरं युक्तमिति ? तत्राह—

**यच्छब्दे ज्ञात इत्येवं शक्तिरेवात्र कीर्त्यते ।**

शक्तिस्वरूपमेव दर्शयति—

**कर्तृत्वं करणत्वं[2] वा यत् तस्यार्थाभिधां प्रति ॥ ११ ॥**

यदेवाभिधानक्रियां प्रति कर्तृत्वं करणत्वं वा तदेव शक्तिसञ्ज्ञागमकत्वादि-पर्यायमनेन भाष्येणोक्तम्। अयं च भाष्यार्थः यच्छब्दज्ञानादर्थज्ञानम्, अयं सम्बन्धश्च ज्ञाप्यज्ञापकत्वमेव सम्बन्ध इत्यर्थः स तु कृतक इति पूर्वमुपपादितम्, इति चानुभाषणात् स एवाय सम्बन्ध इति गम्यते। न हि सम्बन्धान्तरस्य कृतकत्वं पूर्वमुक्तमिति ॥ ११ ॥

अनुभाषणभाष्यार्थमाह—

**स्वतो नैवास्ति शक्तत्वं वाच्यवाचकयोर्मिथः ।**
**प्रतीतिः समयात् पुंसां भवेदक्षिनिकोचवत् ॥ १२ ॥**

तमिम समयं निराकर्तुं विकल्पयति—

**समयः प्रतिमर्त्यं वा प्रत्युच्चारणमेव वा ।**
**क्रियते जगदादौ वा सकृदेकेन केनचित् ॥ १३ ॥**

प्रतिमर्त्यपक्षमपि विकल्पयति—

**प्रत्येकं वापि सम्बन्धो भिद्येतैकोऽथ वा भवेत् ।**

एकत्वे तावत् कृतकतैव न स्यात्, न ह्येकस्य बहुभिः क्रिया सम्भवतीत्याह—

**एकत्वे कृतको न स्याद्,**

भेदस्तु संविद्विरुद्ध इत्याह—

**भिन्नश्चेद् भेदधीर्भवेत् ॥ १४ ॥**

भिन्नत्वे च तेषामर्थप्रतीतिकारणत्वादनेकशक्तिकल्पना स्यादित्याह—

**भिन्नत्वे प्रतिसम्बन्धं शक्तिः कल्प्याभिधां प्रति ।**

किञ्च, यस्य केनचिद् वक्त्रा सम्बन्धः कृत. स वक्त्रन्तरप्रयुक्तात् शब्दादर्थं न प्रतिपद्येत, न ह्यन्यस्मिन् सम्बन्धे ज्ञातशक्तावन्यस्मादज्ञातशक्तिकादर्थप्रतीतिः सम्भवतीत्याह—

**एकस्मिन् ज्ञातशक्तौ वा नान्येनार्थमतिर्भवेत् ॥ १५ ॥**

शङ्कते—

---

१. स्मर्यते—३ पु० । २. कारणत्वम्—का० सं० ।

**अथ यो यस्य पुंसः स्यात् स तेन प्रतिपद्यते ? ।**

वक्त्रन्तरेणापि प्रयुक्ते शब्दे स्वसम्बन्धानुसारेणार्थं श्रोता बुध्यत इति ?

निराकरोति—

**यस्यानेकेन सम्बन्धः कृतस्तस्य कथं भवेत् ! ॥ १६ ॥**

यस्यानेकैः पुरुषैरनेके सम्बन्धा नानार्थविषयाः कृताः, तस्य सकेतः सम्बन्धेन प्रतिपद्येत ॥ १६ ॥

शङ्कते—

**एकार्थानां विकल्पश्चेत्,**

एकशब्दविषया अपि सम्बन्धा विकल्पन्त इति ?

निराकरोति—

**नेतरात्यन्तबाधनात् ।**

यत्र ह्येकस्य शब्दस्यानेकैराप्तैरनाप्तैश्च नानार्थसम्बन्धः कथ्यते, यथा पीलुशब्दस्यार्यैर्वृक्षसम्बन्धो म्लेच्छैश्च हस्तिसम्बन्धः, तत्र म्लेच्छोक्तस्यात्यन्तबाधः क्रियते । विकल्पे हि वृक्षो वा हस्ती वाभिधेय इति गम्येतेति ।

नापि समुच्चय इत्याह—

**समुच्चयोऽपि नैतेषां व्यवहारेऽवगम्यते ॥ १७ ॥**

समुच्चयेऽप्युभावर्थाविति गम्येत, न चैवमस्तीति ॥ १७ ॥

कथम् ? इत्याह—

**किञ्चिदेवैकमादाय व्यवहारो हि दृश्यते ।**

न चायं नियमः कृतकत्वपक्षे उपपन्न इत्याह—

**बहुभिः कृतसम्बन्धे न चैको गमको भवेत् ॥ १८ ॥**

यथावस्थितसम्बन्धकथनेन ह्याप्तानाप्तविभाग उपयुज्यते, स्वयमपूर्वसम्बन्धे बहुभिः कृते न कश्चिदाप्तानाप्तयोर्विशेष इति न नियमेनैकस्यैव गमकत्वं सिद्ध्येदिति ॥ १८ ॥

संविद्विरुद्धश्च विकल्प इत्याह—

**शब्दार्थयोरभेदेऽपि पुम्बहुत्वेऽपि कर्त्तरि ।**
**नायं वेति मतिर्दृष्टा विकल्पोऽतो न युज्यते ॥ १९ ॥**

यत्र हि तस्यैव शब्दस्य तेनैवार्थेन बहुभिः पुरुषैर्बहवः सम्बन्धाः कृताः, तत्र व्यवहारकाले कर्त्तरि प्रतिपत्तेरिति व्रीहियवादिवदयं वा सम्बन्ध उपादेयोऽयं वेति विमर्शो भवेत्, स च न दृष्ट इति ॥ १९ ॥

इतश्च न विकल्प इत्याह—

**गोशब्दे सकृदुक्ते च भिन्नेषु प्रतिपत्तृषु ।**
**विकल्प्यमाने सम्बन्धे कश्चिद् बुध्येत नेतरे[1] ॥ २० ॥**

---

१. नेतरः—का० सं० ।

शङ्कते—

**समुच्चयो नृभेदाच्चेत्,**

एकपुरुषगामिना ह्येकार्थत्वाद् विकल्पः, भिन्नपुरुषगामिनां तु तत्प्रतिपत्तिकार्यभेदात् समुच्चय एव भवतीति ?

परिहरति—

**न, वक्त्रैक्यादसम्भवात् ।**

वक्ता ह्येकमेव सम्बन्धं मनसि निधाय शब्दं प्रयुङ्क्ते, स यस्यानुगुणः स एव प्रतिपद्येत, अन्ये तु कथं तेन प्रतिपद्येरन्निति ।

यदि त्वेकस्मिन्नपि सम्बन्धे वक्तुर्बुद्धिस्थे श्रोतारः स्वीयैरेव सम्बन्धैर्बुध्यन्त इत्युच्यते, तथा सति वक्तृश्रोत्रोः सम्बन्धबुद्धिभेदादार्यम्लेच्छयोरिव न सव्यवहारः सिध्येदित्याह—

**वक्तृश्रोतृधियोर्भेदाद् व्यवहारश्च दुष्यति ॥ २१ ॥**

एतदेव दर्शयति—

**वक्तुरन्यो हि सम्बन्धो बुद्धौ श्रोतुस्तथापरः ।**

सत्यपि सम्बन्धभेदे अर्थाभेदाददोष इति चेत् ? न, प्रमाणाभावात् । न हि स्वतन्त्रेषु सम्बन्धेषु प्रमाणमर्थैक्येऽस्ति, पारतन्त्र्ये चापौरुषेयत्व स्यादिति ।

अतश्च न प्रतिमर्त्यं सम्बन्धकरणमित्याह सार्द्धेन—

**श्रोतुः कर्तुं च सम्बन्धं वक्ता कं प्रतिपद्यताम् ॥ २२ ॥**
**पूर्वदृष्टो हि यस्तेन श्रोतुर्नैव[1] करोति तम्[1] ।**
**यं करोति नवं सोऽपि न दृष्टः प्रतिपादकः ॥ २३ ॥**

शङ्कते—

**सर्वथा श्रोतृसिद्धिश्चेद्,**

येन केनापि पूर्वदृष्टेनाभिनवेन वा श्रोतुरर्थप्रतीतिसिद्धेः किं विकल्पेनेति ?

परिहरति—

**असिद्धं नेतरो वदेत् ।**

बुद्धिपूर्वकारी हि सम्बन्धकर्त्ता नाज्ञातसामर्थ्यमभिनवं करोति, न पूर्वदृष्टम्; कृतस्य कारणायोगादिति ।

चोदयति—

**घटादावपि तुल्यं चेत् ?**

परिहरति—

**न, सामान्यप्रसिद्धितः ॥ २४ ॥**

---

१–१. न श्रोतुंन करोत्यसौ—३ पु. ।

एतदेव चोद्यं विवरणपूर्वकं विवृणोति सार्द्धेन—

**यद्यपि ज्ञातसामर्थ्या व्यक्तिः कर्तुं न शक्यते ।**
**क्रियते या न तस्याश्च शक्तिः कार्येऽवधारिता ॥ २५ ॥**
**तथाप्याकृतितः सिद्धा[1] शक्तिरुत्पादनादिषु[2] ।**

एवञ्जातीयकमीदृक्कार्यक्रममिति ज्ञात्वा तादृशकार्यार्थिनस्तज्जातीयपदार्थ-करणं नानुपपन्नमिति ।

न च आकृते. प्राक् कथ सामर्थ्यसिद्धिरिति वाच्यम्, आकृतेरनादित्वादि-त्याह—

**तस्या न चादिमत्तास्ति,**

न चेयं विधा सम्बन्धे सम्भवति, तस्यादिमत्ताभ्युपगमात्, इत्याह—

**सम्बन्धस्त्वादिमांस्तव ॥ २६ ॥**

शङ्कते—

**यदि तत्रापि[3] सामान्यं नित्यमभ्युपगम्यते ।**

परिहरति—

**तथाप्यस्मन्मतं सिद्धम्,**

सामान्यमेव हि सर्वत्राव्यभिचाराच्छब्दार्थावगमोपायः स्यात्, तच्चापौरुषेय-मिति सिद्ध न. समीहितमिति । किमयमेव पक्ष ? नेत्याह—

**न तु द्व्याकारसम्भवः[4] ॥ २७ ॥**

कथम् ? इत्याह—

**शक्तिरेव हि सम्बन्धो भेदश्चास्या न विद्यते[5] ।**

कथ न विद्यते ? अत आह—

**सा हि कार्यानुमेयत्वात् तद्भेदमनुवर्तते[6] ॥ २८ ॥**

इतश्चैवमित्याह—

**अन्यथानुपपत्त्या च शक्तिसद्भावकल्पनम् ।**
**न चैकयैव सिद्धेऽर्थे बह्वीनां कल्पनेष्यते[7] ॥ २९ ॥**

इतश्च न सम्बन्धस्य कृतकतेत्याह सार्द्धेन—

**सम्बन्धाख्यानकाले च गोशब्दादावुदीरिते ।**
**केचित् सम्बन्धबुद्ध्यार्थं बुद्ध्यन्ते नापरे तथा ॥ ३० ॥**
**तत्र सम्बन्धनास्तित्वे सर्वोऽर्थं नावधारयेत् ।**

---

१. सिद्ध.—१ पु० । २. ०रुच्चारणा०—मु० पा० ।
३. तस्यापि—३ पु० । ४. न बुद्ध्याकारसंभवः—१ पु० ।
५. दृश्यते—३ पु० । ६. त्वद्भेद०—मु० पा० ।
७. सा हीत्याद्यर्धत्रयं का० सं० १ पु० त्रुटितम् ।

शङ्कते—

**अस्तित्वे सर्वबोधश्चेत्,**

परिहरति—

**न कैश्चिदनुपग्रहात् ॥ ३१ ॥**

नन्वगृहीतोऽपि तावदस्तीति किं नार्थं प्रत्याययति ? अत आह—

**ज्ञापकत्वाद्धि सम्बन्धः स्वात्मज्ञानमपेक्षते ।**
**तेनासौ विद्यमानोऽपि नागृहीतः प्रकाशकः ॥ ३२ ॥**

ज्ञापकस्य हि ज्ञातापेक्षापि लिङ्गादौ दृष्टा, तेन विद्यमानस्यापि युक्तमप्रकाशकत्वमिति ॥ ३२ ॥

नन्वग्रहणमेव विद्यमानस्य कथम् ? अत आह—

**विद्यमानस्य चार्थस्य दृष्टमग्रहणं क्वचित् ।**

ननु यथा कैश्चिद् गृह्यमाणत्वात् सत्त्वम्, एवमसत्त्वमपि सम्बन्धस्यागृह्यमाणत्वात् किं न स्यात् ? अत आह—

**न त्वत्यन्तासतोऽस्तित्वं कांश्चित् प्रत्युपपद्यते ॥ ३३ ॥**

कारणमाह—

**विरुद्धौ सदसद्भावौ न स्यातामेकवस्तुनि ।**

चोदयति—

**ननु तुल्यं विरोधित्वं ज्ञाताज्ञातत्वयोरपि ॥ ३४ ॥**

परिहरति—

**ज्ञानं हि पुरुषाधारं तद्भेदान्न विरोत्स्यते ।**

सापेक्षं ज्ञाताज्ञातत्वम्, तदेकस्यापि भिन्नपुरुषापेक्षया ज्ञातत्वमज्ञातत्वं वा विरुद्धम् । न ह्येकपुरुषगत ज्ञानम् इतरगतेनाज्ञानेन विरुध्यते, नाप्यज्ञान ज्ञानेन विरुध्यत इत्याह—

**पुरुषान्तरसंस्थं च नाज्ञानं तेन बाध्यते ॥ ३५ ॥**

सदसत्त्वयोस्त्वेकसम्बन्धाधारत्वादापेक्षिकत्वाभावाच्चास्ति विरोध इत्याह—

**सम्बन्धाधारतायां च विरोधः सदसत्त्वयोः ।**

अथ सम्बन्धस्यापि प्रतिपुरुषं भेदादविरोध इत्युच्यते ? अत आह—

**प्रत्युक्तत्वाच्च भेदस्य तद्वशान्नाविरोधिता ॥ ३६ ॥**

'शक्तिरेव हि सम्बन्धो भेदश्चास्या न विद्यते' ( श्लो० वा० स० प० २८ ) इत्यत्र निराकृत इति ॥ ३६ ॥

अत्रैव दृष्टान्तमाह सार्द्धेन—

**अन्धानन्धसमीपस्थः शुक्लोऽन्धैर्नावगम्यते ।**
**गम्यते चेतरैस्तस्य सदसत्त्वेन तावता ॥ ३७ ॥**

**शक्त्यशक्त्योर्नराणां तु भेदात् तत्राविरोधिता ।**

अन्धानन्धभेदाद् ग्रहणशक्त्यशक्त्योरविरोधित्वमिति ।

मा भूता सम्बन्धस्य सत्त्वासत्त्वे, कैश्चिदग्रहणादसत्त्वमेव कि न भवति ? अत आह—

**न ह्यन्यो दर्शनस्यास्ति सम्बन्धाद्धेतुरत्र[1] हि ॥ ३८ ॥**

असतोऽपि ग्रहणं निर्हेतुक स्यात्, अग्रहणं तु सत्त्वेऽप्युपपन्नमित्युक्तमिति ॥३८॥

ननु शुक्लस्य ग्रहणोपायश्चक्षुस्तदभावादन्धस्याग्रहण युक्तम्, सम्बन्धस्य तु को ग्रहणोपायो यदभावादसौ कैश्चिन्न गृह्यते ? अत आह—

**एवमेवेन्द्रियैस्तुल्यं व्यवहारोपलम्भनम् ।**
**येषां[2] स्यात् तेऽवभोत्स्यन्ते ततोऽर्थं नेतरेऽन्धवत्[3] ॥ ३९ ॥**

नन्वेवमर्थप्रतिपत्त्यङ्ग सम्बन्धग्रहण प्रतिप्रयोगमावर्त्तनीयं स्यादत आह—

**आधानवत् सकृच्चैतत् तन्त्रेणोपकरिष्यति ।**

इदमपि ह्याधानवदकर्मकालत्वादगृह्यमाणविशेषतन्त्रमिति ।

नन्वेव विस्मृतसम्बन्धोऽप्यर्थं प्रतीयात् ? अत आह—

**स्मरणं भेत्स्यते चास्य वह्निप्रणयनादिवत् ॥ ४० ॥**

तत् खलु कर्मकाले प्रणयनवदावर्त्तनीयमिति ॥ ४० ॥

यदा चाद्यत्वेऽनभिज्ञान् प्रति सम्बन्धे कथ्यमानेऽभिज्ञाना सम्बन्धबुद्ध्या अर्थबुद्धिः, एव तेषामपि यदानभिज्ञता तदापि ततः पूर्वेषा प्रसिद्धिरस्तीति पूर्वसिद्ध एव सम्बन्धो गम्यते । न हि सिद्धस्य कारण सम्भवतीत्येवमनादिरेव सम्बन्ध इत्याह—

**सर्वेषामनभिज्ञानां[4] पूर्वपूर्वप्रसिद्धितः ।**
**सिद्धः सम्बन्ध इत्येवं सम्बन्धादिर्न विद्यते ॥ ४१ ॥**

प्रत्युच्चारणं तु सम्बन्धस्य निर्वृत्ति· शब्दाधिकरणे भाष्यकारेणैव "नैकेनोच्चारणयत्नेन स्वार्थसम्बन्धः सव्यवहारश्च शक्यते कर्तुम्" इति वदता निराकृतेत्याह—

**प्रत्युच्चारणनिर्वृत्तिर्भाष्य एव निराकृता ।**

जगदादिपक्षस्त्ववशिष्यते, स एव पूर्वपक्षो भाष्यकारेणोपन्यस्तः "केनापि पुरुषेण शब्दानामर्थैः सह सम्बन्ध कृत्वा संव्यवहारार्थं वेदाः प्रणीताः" ( शा० भा० पृ० ६२ ) इति ।

इतरौ तु पक्षावतिमन्दावपि सम्भावनामात्रेणोपन्यस्य निरस्तौ, तमिदानी निराकरोति—

---

१. तत्सत्त्वाद्०—१ पु० ।
२. ततो ऽर्थानन्तरे ऽन्धवत्—१ पु० ।

१. तेषाम्—का. सं० पु. ।
३. अनभिज्ञानम्—३ पु० ।

**सर्गादौ च क्रिया नास्ति,**

कारणमाह—

**तादृक्कालो हि नेष्यते ॥ ४२ ॥**

चोदयति सार्द्धेन—

**यदि त्वादौ जगत् सृष्ट्वा धर्माधर्मौससाधनौ।**
**यथा शब्दार्थसम्बन्धान् वेदान् कश्चित् प्रवर्तयेत् ॥ ४३ ॥**
**जगद्धिताय वेदस्य तथा किञ्चिन्न दुष्यति।**

एवमपि वैशेषिकादिवद् वेदप्रामाण्यसिद्धेस्तन्निराकरणं व्यर्थम्, अयं च 'प्रजापतिर्वा इदमेक एवाग्र आसीत् प्रजापतिर्वेदानसृजत' इत्याद्यर्थवादेषु पुराणेषु केषुचिदुपवर्णितः सृष्टिप्रकारोऽत्रानुकीर्तितः। अत्र च परमाण्वाकाशादीनामप्यस्ति सृष्टिरिति।

परिहरति—

**सर्वज्ञवत् तु दुस्साधमित्यत्रैतन्न संश्रितम् ॥ ४४ ॥**

यदा हि सर्वस्य ज्ञाता न सम्भवति ज्ञानकारणाभावात्, तथा कर्त्तापि; क्रियाकारणासम्भवात्, असम्भवश्च सर्वाभावाभ्युपगमादिति ॥ ४४ ॥

एतदेव प्रपञ्चयितुमारभते—

**यदा सर्वमिदं नासीत् क्वावस्था तत्र गम्यताम्।**

सा खलु तादृशी जगदवस्था न कथञ्चिद् बुद्धावारोपयितुमपि शक्यते, नतरां निर्णेतुमिति।

यश्चाय समस्तस्य स्रष्टा प्रजापतिः, स तदा क्वावतिष्ठते। नापि तस्याधारः सम्भवति, पृथिव्यादीनामसम्भवात्। किमाकृतिश्चासौ? न तावदशरीरः, तथा सति सिसृक्षया प्रयत्नादेरसम्भवात्। नापि शरीरी, तस्य भौतिकत्वात्, भूतादीनां च तदानीमभावादित्याह—

**प्रजापतेः क्व वा स्थानं किं रूपं च प्रतीयताम् ॥ ४५ ॥**

सर्वाभावे च न किञ्चिदप्यस्य स्रष्टुः सर्गस्य वा ज्ञाता सम्भवति; योऽन्येभ्यः कथयेदित्याह—

**ज्ञाता च कस्तदा तस्य यो जनान् बोधयिष्यति।**

मा ज्ञायीति चेत्? तत्राह—

**उपलब्धेर्विना चैतत् कथमध्यवसीयताम् ॥ ४६ ॥**

सर्वाभावे च निःसाधनस्य प्रवृत्तिराद्या न सम्भवतीत्याह—

**प्रवृत्तिः कथमाद्या च जगतः सम्प्रतीयते।**

इच्छामात्रेण भगवतो जगन्निष्पत्तिः किं प्रवृत्त्येति चेत्? नाशरीरस्येच्छाऽपि सम्भवतीत्याह—

**शरीरादेर्विना चास्य कथमिच्छापि सर्जने[1] ॥ ४७ ॥**

शङ्कते—

**शरीराद्यथ तस्य स्यात्,**

निराकरोति—

**तस्योत्पत्तिर्न तत्कृता ।**

न ह्यशरीरस्य शरीरोत्पादनेऽपीच्छा प्रीतिर्वा सम्भवतीति ।

तदुत्पत्त्यर्थं च शरीरान्तराभ्युपगमेऽनवस्थेत्याह—

**तद्वदन्यप्रसङ्गोऽपि,**

शङ्कते—

**नित्यं यदि तदिष्यते ॥ ४८ ॥**

नित्यत्वं तावन्न सम्भवतीति वक्ष्यति, तदुपेत्याप्याह—

**पृथिव्यादावनुत्पन्ने किम्मयं तत्पुनर्भवेत् ।**

किञ्च, दुःखप्रायं जगद् दृश्यते, न चैवप्रायदुःखापि सिसृक्षा हितकामस्य सम्भवति, तस्मादीदृशमेवेद सर्वदा जगत्, न तु केनचिद् बुद्धिपूर्वकारिणा निर्मितमित्याह—

**प्राणिनां प्रायदुःखा च सिसृक्षास्य न युज्यते ॥ ४९ ॥**

तदेवमिच्छापि न सम्भवतीत्युक्तम्, सम्भवन्त्यामपि न तन्मात्रेण कार्यारम्भः सम्भवति, सम्प्रत्यसम्भवात्, न च तदा साधनान्तरमस्ति, क्षेत्रज्ञगतौ धर्माधर्मौ साधनमिति चेन्न, तयोरपि प्राक् सृष्टेरभावात् । उक्तं हि "यदि त्वादौ जगत् सृष्ट्वा धर्माधर्मौ ससाधनौ" इति, तत्राह—

**साधनं चास्य धर्मादि तदा किञ्चन्न विद्यते ।**

किञ्च, धर्माधर्ममात्रेणापि न कार्यसृष्टिः सम्भवति, दृष्टमपि मृत्तन्त्वादिकमुपादाय घटादिषु प्रवर्त्तते, प्रजापतिस्तु दृष्टसाधनरहितः कथं सृष्टौ प्रवर्त्तेत ? इत्याह—

**न च निस्साधनः कर्ता कश्चित् सृजति किञ्चन ॥ ५० ॥**

नन्वसाधनस्याप्यूर्णनाभेः कोशसृष्टिर्दृष्टा ? अत आह—

**नाधारेण विना सृष्टिरूर्णनाभेरपीष्यते ।**

उपादानमपि तस्यास्त्येवेत्याह—

**प्राणिनां भक्षणाच्चापि तस्य लाला प्रवर्त्तते ॥ ५१ ॥**

किञ्च, अनुकम्पानिमित्तास्य सृष्टिरिष्यते, दुःखदर्शननिमित्ता चानुकम्पा, न चाशरीरिणामात्मना मुक्तात्मनामिव किञ्चिद् दुःखमस्ति येनानुकम्प्येरन्, अतोऽनुकम्प्याभावाद् नानुकम्पा सम्भवति ? इत्याह—

---

1. वर्जने—का० सं० ।

**अभावाच्चानुकम्प्यानां नानुकम्पास्य जायते ।**

अथासत्यपि दुःखे सुखस्याप्यभावात् तन्निमित्तानुकम्पा, तया तर्हि तादृश्या सुखमेवैकं सृजेदित्याह—

**सृजेच्च शुभं[1] मेवैकमनुकम्पाप्रयोजितः[2] ॥ ५२ ॥**

शङ्कते—

**अथाशुभाद् विना सृष्टिः स्थितिर्वा नोपपद्यते ।**

निराकरोति—

**आत्माधीनाभ्युपाये हि भवेत् किं नाम दुष्करम् ॥ ५३ ॥**

अथ दुष्करैवास्य दुःखेन विना सुखसृष्टिरित्यपेक्षत एव दुःखम्, ततः स्वातन्त्र्यस्य हानिः ? इत्याह—

**तथा चापेक्षमाणस्य स्वातन्त्र्यं प्रतिहन्यते ।**

जगत्सर्गे चास्य प्रयोजनमपि नास्तीत्याह—

**जगच्चासृजतस्तस्य किं नामेष्टं न सिध्यति ॥ ५४ ॥**

मा भूदिति चेत् ? तत्राह—

**प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।**

तद्रहितप्रवृत्तौ वा बुद्धिमत्त्वहानिरित्याह—

**एवमेव प्रवृत्तिश्चेच्चैतन्येनास्य किं भवेत् ॥ ५५ ॥**

क्रीडार्था प्रवृत्तिरिति चेत् ? तत्राह—

**क्रीडार्थायां प्रवृत्तौ च विहन्येत कृतार्थता ।**

क्रीडा हि विनोदजसुखार्थैव नराणाम्, न चासावाप्तसुखस्य सम्भवति, तदनवाप्तौ कृतार्थतालक्षणमैश्वर्यं न सिद्ध्येदिति ।

क्रीडा चाल्पीयसो रमयति, समस्तभूधरादिविषयस्तु महाव्यापारोऽतिक्लेशरूपः क्रीडार्थ इति न चित्तमनुरञ्जयतीत्याह—

**बहुव्यापारतायां च क्लेशो बहुतरो भवेत् ॥ ५६ ॥**

यदि चानुकम्पानिमित्ता सिसृक्षा, सञ्जिहीर्षा तर्हि किंनिमित्ता स्यात् ? साऽप्यनुकम्पाधीनेति चेन्न, विरुद्धयोः सिसृक्षाजिहीर्षयोरेकहेतुकत्वापत्तेरित्याह—

**संहारेच्छापि चैतस्य भवेदप्रत्ययात् पुनः ।**

"ज्ञाता च कस्तदा तस्य" (श्लो० ४६) इत्यत्र सृष्टिकाले सर्वस्याभावान्नास्य ज्ञाता सम्भवतीत्युक्तम्, उत्तरकालेऽपि न स्रष्टुः कैश्चिदपि कदाचिदप्यवगतिः सम्भवतीत्याह—

**न च कैश्चिदसौ ज्ञातुं कदाचिदपि शक्यते ॥ ५७ ॥**

ननु पुरुषान्तरवत् स्रष्टाऽपि शक्यते एव ज्ञातुम् ? अत आह—

---

१. अशुभम्—१ पु० ।    २. प्रयोजनः—१ पु० ।

**स्वरूपेणोपलब्धेऽपि स्रष्टृत्वं नावगम्यते।**

यद्यप्यद्यतनैः स्रष्टृत्वं नावगम्यते, सृष्टयाद्यैस्तु गम्यत इति चेत् ? तत्राह—

**सृष्ट्याद्याः प्राणिनो ये च बुध्यन्तां[1] किं नु ते तदा[1] ॥ ५८ ॥**

न किञ्चिद् बुध्यन्त इति ॥ ५८ ॥

एतदेव दर्शयति—

**'कुतो वयमिहोत्पन्नाः' इति तावन्न जानते[2]।**

आत्मन एव तावत् प्रजापतेरुद्भूत्र न जानन्ति, नतरा जगत इति।

कथम् ? इत्याह—

**प्रागवस्थां च जगतः स्रष्टृत्वं च प्रजापतेः ॥ ५९ ॥**

यदि हि प्रागसदवस्थ जगत् दृष्ट्वा प्रजापतेर्व्यापारानन्तरं च तदुत्पत्ति पश्ये-युः, तदावगच्छेयु. स्रष्टत्वम्, न च सृष्टयुत्तरकालैस्तै. प्रागवस्था शक्यते ज्ञातुम्, तदज्ञानाच्च स्रष्टृत्वेऽप्यज्ञानमेवेति ॥ ५९ ॥

प्रजापतिवचनादवगच्छन्तीति चेत् ? न, हेतुदर्शनादित्याह—

**न च तद्वचनेनैषां प्रतिपत्तिः सुनिश्चिता।**

**असृष्ट्वा[3]ऽपि ह्यसौ ब्रूयादात्मैश्वर्यप्रकाशनात् ॥ ६० ॥**

वेदवचनात् तर्ह्यवगच्छाम, प्रजापतिर्वा इदमेक एवासीत् सोऽकामयत प्रजाः पशून् सृजेयेत्युपक्रम्य तनो वै स प्रजा पशूनसृजतेति श्रुतेः ॥ ६० ॥

अत्राह पादत्रयेण—

**एवं वेदोऽपि तत्पूर्वस्तत्सद्भावादिबोधने।**

**साशङ्को न प्रमाणं स्यात्,**

वेदोऽपि प्रजापतिकृतश्चेत् पूर्ववदेवानाश्वास इति।

नित्यत्वे भूतप्रजासर्गव्यापारो न सम्भवति ? इत्याह—

**नित्यस्य व्यापृतिः कुतः ॥ ६१ ॥**

कथं न व्यापार. ? अत आह—

**यदि प्रागप्यसौ तस्मादर्थादासीन्न तेन सः।**

**सम्बद्ध[4] इति तस्यान्यस्तदर्थोऽन्यप्ररोचना[5] ॥ ६२ ॥**

कथ हि सृष्टे. प्राग्विद्यमानस्यासृजतेत्यन्तस्य यथाश्रुतेनार्थन सम्बन्धः स्यात्; तस्मादन्य एव विध्यन्तरप्ररोचनारूपस्तस्यार्थ इति ॥ ६२ ॥

ननु सर्वलोकप्रसिद्धिविरुद्धोऽयं सृष्टयपलापः ? अत आह—

---

१.-१. बुध्यन्ते किंनुते सदा—१ पु० । २. जायते—३ पु० ।
३. सृष्ट्वा—मु० । ४. सम्बन्ध—३ पु० ।
५. तदार्थान्य प्ररोचनं—का० सं० पु० ।

**स्तुतिवाक्यकृतश्चैष जनानां मतिविभ्रमः**[1] ।

प्रमाणमूला हि प्रसिद्धिरबाधिता स्यात्, इयं त्वन्यपराद् वाक्यादुपजाता भ्रान्तिरेवेति ।

भवति च पौर्वापर्यापरामृष्टाच्छब्दाद् भ्रान्तिरित्याह—

**पौर्वापर्यापरामृष्टः शब्दोऽन्यां कुरुते मतिम् ॥ ६३ ॥**

इद चापरं लोके भ्रान्तिकारणमित्याह—

**उपाख्यानादिरूपेण वृत्तिर्वेदवदेव नः**[2] ।

**धर्मादौ भारतादीनां भ्रान्तिस्तेभ्योऽप्यतो भवेत् ॥ ६४ ॥**

धर्मविधावधर्मनिषेधे च सृष्ट्याद्युपादानक्रमेण वेदवत् प्रवृत्तिर्भारतादीनामिति ॥ ६४ ॥

किमिति पुनरिय भ्रान्तिः, कि स्वार्थपरत्व तेषा न सम्भवति ? अत आह—

**आख्यानानुपयोगित्वात् तेषु सर्वेषु विद्यते ।**

**स्तुतिनिन्दाश्रयः कश्चिद् वेदस्तच्चोदितोऽपि वा ॥ ६५ ॥**

तेष्वपि ह्यस्त्येवाध्ययनविधिस्थानीयो विधि, यथा तावद् **भारते**—"श्रावयेच्चतुरो वर्णान्" इति, अतोऽवश्य प्रयोजनवदर्थपरत्वादुपाख्यानमात्रस्यानुपयोगादन्यस्तुत्यर्थत्वमङ्गीकर्त्तव्यम् । तत्र क्वचिद् **वैदिका** एव विधयोऽग्निहोत्रादयो **भारतादिषु** श्रूयन्ते, क्वचिद् **भारतादिचोदिताः** स्मार्त्तविधय, तेनान्यपरा एव तत्रापि सृष्ट्यादिवादा इति ॥ ६५ ॥

इतश्चादिप्रवृत्तौ सत्या न वेदस्यानादित्व सम्भवतीत्याह—

**वेदस्यादि**[3]**प्रवृत्तौ च नाकृतत्वमतिर्भवेत् ।**

ननु प्रजापति प्रागप्यासीदेव, अतस्तस्मिन् वेदोऽवतिष्ठताम्, कथमनित्यत्वम् ? अत आह—

**प्रलयेषु स्थिति**[4]**श्चास्य साशङ्का स्यात् प्रजापतौ ॥ ६६ ॥**

उक्त हि **चोदनासूत्रे** सर्वज्ञनिराकरणानन्तरम् 'न हि तत्रापि विश्रम्भः' ( श्लो० वा० २-१४३ ) इति ।

**वैशेषिकास्**त्वाहुः—अनादिरय सृष्टिप्रलयप्रवाह, ब्राह्ममानेन वर्षशतान्ते भगवतो महेश्वरस्य समस्तजगत्संहारेच्छा भवति, तदिच्छावदीश्वरात्मसंयोगात् परमाणुषु विभागकर्माण्युत्पद्यन्ते, तैश्च सर्वेषु मिथो विभक्तेषु यावद् द्व्यणुकं सर्वावयविनाशाद् परमाणव एव केवलाः पार्थिवाप्यतैजसवायवीया व्योमकालदिगात्ममनांसि चावतिष्ठन्ते, धर्माधर्माश्च तावन्तं कालमीश्वरेच्छाप्रतिबद्धाः फलमप्रयच्छन्तस्तेषु तेष्वात्मस्ववतिष्ठन्ते, पुनस्तावति काले गते तस्यैव भगवतः कर्मो-

---

१. जनानामतिविभ्रम.—का० सं० १ पु० ।
२. च—१ पु० ।
३. वेदस्यापि०—३ पु० ।
४. स्थित०—१ पु० ।

पभोगशून्यानात्मनो दृष्ट्वा अनुकम्पापरवशस्य सिसृक्षा भवति, ततः सिसृक्षावदीश्वरात्मसंयोगात् परमाणुषु कर्मोत्पत्तेस्तद्वशान्मिथः संयुक्तैस्तैर्द्व्यणुकादिक्रमेण पृथिव्यादय आरभ्यन्ते, ततस्तदिच्छावशादेवापगलप्रतिबन्धैरभिव्यक्तसामर्थ्यैर्विविधैः कर्मभिर्विविधानेकनरपश्वादिभेदभिन्नं भूतजातमारभ्यते, ततः स एव महेश्वरो धर्माधर्मप्रतिपादनाय वेदान् सृजति। तदेव प्रतिसर्गमन्येऽन्ये च वेदाः, प्रवाहतस्तु वेदाः सृष्टिप्रलयाश्चानादयः, कर्त्ता च महेश्वरोऽनादिरेव, इह च परमाणूनामुपादानत्वान्नानुपादानत्व सृष्टेरिति ॥ ६६ ॥

तदिदमाशङ्कते—

**कर्तृसर्गविनाशानाम् अथानादित्वकल्पना ।**

निराकरोति—

**सैवं युक्ता यथेदानीं भूतानां दृश्यते क्रमात् ॥ ६७ ॥**

एवं हि दृष्टानुगुण्यं भवति। समस्तस्य तु युगपत् सृष्टिविनाशः कल्प्यमानो न दृष्टानुगुणो भवति इति ॥ ६७ ॥

सृष्टिवदेव प्रलयेऽपि न किञ्चित् प्रमाणं सम्भवतीत्याह—

**प्रलयेऽपि प्रमाणं नः सर्वोच्छेदात्मके[1] न हि ।**

न तावत् तद्वचनम्, अनाश्वासात्, न वेदवचनम्, तस्यापि तत्कृतत्वादिति ।

सर्गवच्च संहारोऽपि निष्प्रयोजनत्वान्न बुद्धिपूर्वकारिणः सम्भवतीत्याह—

**न च प्रयोजनं तेन स्यात् प्रजापतिकर्मणा ॥ ६८ ॥**

इतश्च सर्गप्रलयावनुपपन्नावित्याह—

**न च कर्मवतां युक्ता स्थितिस्तद्भोगवर्जिता ।**

यत्तूक्तम्—ईश्वरेच्छाप्रतिबद्धत्वात् कर्माणि न फलन्तीति ? तत्राह —

**कर्मान्तरनिरुद्धं[2] हि फलं न स्यात् क्रियान्तरात् ॥ ६९ ॥**

**सर्वेषां तु फलापेतं न स्थानमुपपद्यते ।**

कर्मान्तरेण हि प्रवृत्तफलेनावरुद्धं कर्मान्तर फलं न ददात्यपि। सर्वकर्मणा तु फलमददतामीश्वरेच्छामात्रेण प्रतिबद्धानामवस्थानमप्रमाणकमिति ।

न च सर्वफलानुपभोग कस्यचित् कर्मण. फलम्, यत्प्रतिबन्धादन्यानि फलं न दद्युरित्याह—

**न चाप्यनुपभोगोऽसौ कस्यचित् कर्मणः फलम् ॥ ७० ॥**

अथ सर्वाण्येव सर्वेषां कर्माणि विनष्टानीत्युच्यते, ततः पुनःसृष्टिरयुक्ता स्यात् ? इत्याह—

**अशेषकर्मनाशे वा पुनः सृष्टिर्न युज्यते ।**

---

१. सर्वोच्छेदात्मनः—३ पु० । २. निबद्धं—३ पु० ।

यदपि कर्मभिरभिव्यक्तैर्भूतानि सृज्यन्ते इत्युक्तम् ? तत्राह—

**कर्मणां वाप्यभिव्यक्तौ किं[1] निमित्तं तदा भवेत् ॥ ७१ ॥**

शङ्कते—

**ईश्वरेच्छा यदीष्येत,**

निराकरोति—

**सैव स्याल्लोककारणम् ।**

एतदेवोपपादयति—

**ईश्वरेच्छावशित्वे हि निष्फला कर्मकल्पना ॥ ७२ ॥**

यदा हीश्वरेच्छा वशिनी, तद्वश्य सर्वम्, तत सैव भूतसृष्टेर्निमित्तमस्तु, किमन्तर्गडुना कर्मणेति । ॥ ७२ ॥

अपि च, ईश्वरेच्छापि कार्या चेन्नानपेक्षितनिमित्तान्तरा सम्भवति, ईश्वरमात्रस्य प्रागपि भावेन व्यभिचारादहेतुत्वात्, कर्मणा चेश्वरेच्छातः प्राक् प्रतिबद्धानामहेतुत्वात्, तद्धेतुत्वे चेतरेतराश्रयप्रसङ्गात्, इत्यभिप्रायेणाह—

**न चानिमित्तया युक्तमुत्पत्तुं हीश्वरेच्छया ।**

यदि त्वस्ति किञ्चिदिच्छाया निमित्तमित्युच्यते, तर्हि नित्यमनित्य वा ? नित्यत्वे प्रागपि सृष्टिप्रसङ्ग, इतरथा तस्यापरापरहेत्विच्छायामनवस्था, अस्तु वा कश्चिदिच्छाया हेतु ? स एव तु भूताना कारण भविष्यतीति किमान्तरालिक्येच्छया तया ? इत्याह—

**यद्वा तस्या निमित्तं यत्तद् भूतानां भविष्यति ॥ ७३ ॥**

सम्प्रति परेषा प्रत्यवस्थानमनुभाषते—

**सन्निवेशविशिष्टानामुत्पत्तिं यो गृहादिवत् ।**

**साधयेच्चेतनाधिष्ठां[2] देहानां तस्य चोत्तरम् ॥ ७४ ॥**

भूधरदेहदूर्वाङ्कुरादयो येऽपि विप्रतिपन्नचेतनकर्तृकास्ते सर्वे चेतनाधिष्ठानोत्पत्तयः, सन्निवेशविशिष्टत्वात्, सावयवत्वादित्यर्थ. । गृहघटादिवत् । अत्र च प्रसिद्धोत्पत्तीना देहादीना चेतनाधिष्ठानमात्र साध्यम्, अप्रसिद्धोत्पत्तीना तु भूधरादीनामुत्पत्तिरेव चेतनाधिष्ठानविशेषिता साध्यते । यत्तु प्रसिद्धोत्पत्तिक्रमसन्निवेशविशिष्ट कर्मादि, तस्याप्युत्पत्तिवृत्तिमत्त्वादेव घटाद्युत्पत्तिवत् चेतनाधिष्ठितता साध्यते । तत्सिद्ध सर्वज्ञेश्वरकर्तृत्व विश्वस्य—इति यो वदति, तस्य वक्ष्यमाणमुत्तरमिति ॥ ७४ ॥

तदिदानीमुत्तरमाह—

**कस्यचिद्धेतुमात्रत्वं यद्यधिष्ठातृतेष्यते ।**

**कर्मभिः सर्वजीवानां तत्सिद्धेः सिद्धसाधनम् ॥ ७५ ॥**

---

१. क्व—१ पु० । २. चेतनाधिष्ठा—का० सं० ।

यदि हेतुत्वमात्रमधिष्ठातृत्वं ततः सर्वेषां जीवानां क्षेत्रज्ञाना कर्मभिर्द्वारभूतै-रस्त्येव सर्वं कार्यजात प्रति हेतुत्वम्, कर्मनिमित्त हि सर्वं कार्यजातम्, सिद्धं च पृथिव्यादेरपि खननपूरणादिभि. कथञ्चिन्नाशोत्पादवत्त्वम्, अतोऽनेनानुमानेन कृत्स्नस्यैकेन सर्वज्ञेन निष्पत्ति., नापि युगपत्सिध्यतीति ॥ ७५ ॥

अथ चेतनेच्छापूर्वकत्व तदधिष्ठातृत्वम्, तथापि सिद्धसाधनमित्यनुषङ्गेणाह--

**इच्छापूर्वकपक्षेऽपि,**

कथम् ? इत्याह--

**तत्पूर्वत्वेन कर्मणाम् ।**

अथ चेतनेच्छानन्तर्यम्, तत. साध्यहीनो दृष्टान्त , न हि गृहादीनामिच्छा-नन्तरं निष्पत्तिरस्तीत्याह--

**इच्छानन्तरसिद्धिस्तु दृष्टान्तेऽपि न विद्यते ॥ ७६ ॥**

किञ्च, अयमीश्वर सशरीरो वा स्यादशरीरो वा ? सशरीरत्वे तावत् ततः शरीरेणैव हेतुरनैकान्तिक , न हि तच्चेतनाधिष्ठितम्, चेतनान्तरस्याधिष्ठातुरभावा-दित्याह--

**अनेकान्तश्च हेतुस्ते तच्छरीरादिना भवेत् ।**

सविशेषणोऽस्य हेतु 'उत्पत्तिमत्त्वे सति सन्निवेशविशिष्टत्वात्' इति ।

न चेश्वरशरीरमुत्पत्तिमदिति नानेकान्तिकत्वमिति चेन्न, तस्यापि भवदुक्ते-नैव सन्निवेशविशिष्टत्वेन भूधरादिवदुत्पत्तिसिद्धे , विशेषतश्च शरीरादीत्याह--

**उत्पत्तिमांश्च तद्देहो देहत्वादस्मदादिवत् ॥ ७७ ॥**

शङ्कते--

**अथ तस्याप्यधिष्ठानं तेनैवेत्यविपक्षता ।**

विपक्षे वर्त्तमानो हेतुरनैकान्तिको भवेत्, न चेश्वरशरीरं विपक्ष., तस्यापि ईश्वराधिष्ठितत्वादिति ।

निराकरोति--

**अशरीरो ह्यधिष्ठाता नात्मा[1] मुक्तात्मवद् भवेत् ॥ ७८ ॥**

स्वशरीरमधितिष्ठन्नसो अशरीर सन्नधितिष्ठेत्, शरीरान्तराभावात् । न चाशरीरस्य मुक्तात्मवदधिष्ठातृत्व सम्भवति, ततश्चास्मदादिदेहदूर्वाङ्कुरादिष्वपि नाशरीरस्याधिष्ठातृत्व सम्भवति, प्रयत्नवशेन हि कुम्भकारादीनां घटादिष्वधिष्ठा-तृत्वं दृश्यते । न चाशरीरस्य प्रयत्नः सम्भवति, शरीरसंयोगापेक्षत्वात् प्रयत्नस्य सर्वगतानामप्यात्मनां शरीरप्रदेश एव प्रयत्नदर्शनात् । नित्योऽस्य प्रयत्न इति चेत्, न, अस्मदादिप्रयत्नवदनित्यत्वानुमानात् । तदयं प्रयोगः--देहादयो न चेतनकर्तृकाः शरीरकर्तृकत्वविरहात् व्योमवत् । तथा त एव नाशरीर्यधिष्ठातृका , न नित्य-

---

१. नासौ--१ पु० ।

प्रयत्नाधिष्ठातृका वा, वस्तुत्वाद् व्योमवदिति। तेनावश्यमीश्वरस्याधिष्ठातृत्वे शरीरमङ्गीकर्त्तव्यम्, शरीर च दूर्वाङ्कुरादिषु दृश्यादर्शननिरस्तम्। अतः सशरीरोऽशरीरो वा नाधिष्ठाता देहादिषु चेतन. शक्योऽनुमातुमिति।

दृष्टान्तोऽपि विकल्पनीयः—कि घटस्य कुम्भकाराधिष्ठितत्वाभिप्रायेण चेतनाधिष्ठितत्वमुच्यते ? कि वेश्वराधिष्ठितत्वाभिप्रायेण ? प्रथमपक्षे देहादीनामपि घटवन्नेश्वरकर्तृत्व सिद्ध्येदित्याह—

**कुम्भकाराद्यधिष्ठानं घटादौ यदि चेष्यते।**
**नेश्वराधिष्ठितत्वं स्याद्,**

उत्तरत्र तु साध्यहीनो दृष्टान्तः, न हि नो घटादावीश्वराधिष्ठानं सिद्धमित्याह—

**अस्ति चेत् साध्यहीनता ॥ ७९ ॥**

अथेश्वरानीश्वरसाधारण्येन चेतनाधिष्ठानमात्र साध्यते, तत्र च घटो दृष्टान्तो भवत्येव, अस्ति तस्यानीश्वराधिष्ठितस्यापि चेतनाधिष्ठितत्वमिति ? तत्राप्याह—

**यथासिद्धे च दृष्टान्ते भवेद्धेतोर्विरुद्धता।**

एवमपि यथासिद्धस्यैव दृष्टान्तस्याङ्गीकरणाद् विरुद्धता स्यादिति।

विरोधमेव दर्शयति—

**अनीश्वरविनाश्यादिकर्तृमत्त्वं प्रसज्यते ॥ ८० ॥**

शक्यते हि वक्तुम्—देहादिकं नेश्वरकर्तृकम्, चेतनोपादानत्वाद्, घटादिवदिति। अथ घटस्याप्यस्त्येवेश्वरकर्तृत्वम्, एव सति तद्वदेव देहादीनामप्यनेकचेतनाधिष्ठानानुमानान्नेश्वरैक्यं सिद्ध्येदिति ॥ ८० ॥

दूषणान्तरमाह—

**कुलालवच्च नैतस्य व्यापारो यदि कल्पते[१]।**
**अचेतनः कथं भावस्तदिच्छामनुरुध्यते ॥ ८१ ॥**

यदा हि शरीरी दृश्यादर्शननिरस्तस्तदावश्यमशरीरस्यैवाधिष्ठातृत्वम्। न चाशरीरस्य प्रयत्नः सम्भवतीत्युक्तम्, अप्रयत्नश्च कथमधितिष्ठेत् ! इच्छामात्रेणेति चेत् ? न; इच्छाप्यशरीरे सम्भवतीत्युक्त मुक्तात्मवत्। उपेत्यापि ब्रूमः—कथमचेतना. परमाणवश्चेतनेच्छामात्रेण प्रवर्त्तेरन्, चेतनो हि भृत्यो राजेच्छामात्रेणापि प्रवर्त्तत इति।

उपसंहरति—

**तस्मान्न परमाण्वादेरारम्भः स्यात् तदिच्छया।**

१. कल्प्यते—३ पु०।

अन्यन्मतम्—आत्मैवैको जगदादौ तिष्ठति, स एव स्वेच्छया व्योमानिलानलजलभूमिरूपेण परिणमन् विश्वं प्रपञ्चमारभत इति। तदपि निराकरोति—

**पुरुषस्य च शुद्धस्य नाशुद्धा विकृतिर्भवेत् ॥ ८२ ॥**

ज्ञानानन्दस्वभावः कथमिव विना कारणेन जडरूपं दुःखात्मकं च विकारमनुभवति ? धर्माधर्मपारवश्यादिति चेत् ? तत्राह—

**स्वाधीनत्वाच्च धर्मादेस्तेन क्लेशो न युज्यते ।**

सर्वशक्तिः पुमानत्यन्तस्वतन्त्रः कथं धर्माधर्मवशः स्यात्, तावेव हि तदधीनौ, अतो न तद्वशेन क्लेशानुभवः सम्भवतीति ।

किञ्च, आत्मैवैको जगदादौ तद्व्यतिरिक्तं न किञ्चित्। अतो धर्माधर्मावपि नेदानीं न विद्येते, कथं ताभ्यां क्लेशः, तत्सद्भावे वा व्यतिरेकापत्तिरित्याह—

**तद्वशेन प्रवृत्तौ वा व्यतिरेकः प्रसज्यते ॥ ८३ ॥**

ये त्वाहुः—नैव परिणामं ब्रूमः, किं त्वपरिणत एवासावविद्यावशेन परिणतमिव प्रपञ्चरूपेणात्मानं स्वप्नवत् पश्यतीति, तान् प्रत्याह—

**स्वयं च शुद्धरूपत्वादसत्त्वाच्चान्यवस्तुनः ।**

**स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता ॥ ८४ ॥**

भ्रान्तिर्ह्यविद्या, सा च कारणाधीना । न च शुद्धविद्यास्वभावः पुमांस्तस्याः कारणम् । वस्त्वन्तरं च नास्त्येवेति नाविद्यायाः प्रवृत्तिः सम्भवति, यन्निबन्धना सृष्टिर्भवेत् ॥ ८४ ॥

वस्त्वन्तरोपप्लवे चाद्वैतापत्तिरित्याह—

**अन्येनोपप्लवे[1]ऽभीष्टे द्वैतवादः प्रसज्यते ।**

स्वाभाविकी तस्याविद्या अनादिश्च, अतो न कारणापेक्षेति चेत् ? तत्राह—

**स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चिदर्हति ॥ ८५ ॥**

अत्र तावदिदमेव वक्तव्यम्—विद्यास्वभावं ब्रह्म कथमविद्यास्वभावं स्यात्, न ह्येकस्य विरुद्धोभयस्वभावत्वं सम्भवतीति । यदि च स्वाभाविक्यविद्या, नासौ केनचिदुच्छेद्येत, तत्रानिर्मोक्षप्रसङ्ग इति ॥ ८५ ॥

यदि स्वाभाविक्यप्यविद्या, श्यामतेव पार्थिवाणूनामग्निसंयोगेन ध्यानादिनोच्छेद्येत ? अत आह—

**विलक्षणोपपाते हि नश्येत् स्वाभाविकी क्वचित् ।**

**न त्वेकात्माभ्युपायानां हेतुरस्ति विलक्षणः ॥ ८६ ॥**

---

१. अन्यो नोपप्लवे—का० सं० पु० ।

न ह्यग्निसंयोगवद् ध्यानाद्युपायान्तरमात्माद्वैतवादिनामस्ति, यदविद्यामुच्छिन्द्यात्, निरस्तश्चाय पक्षो **निरालम्बनवादेन ।**

**सांख्यास्त्वाहुः**—पुरुषो न कस्यचित् कर्त्ता, भोक्ता तु केवलम्, गुणास्तु सत्त्वरजस्तमा स अव्यक्तप्रधानप्रकृत्यादिमहदादिरूपेण परिणता महाभूतान्तं प्रपञ्चमारभन्त इति, तदुपन्यस्य दूषयति भवेदन्तेन—

**पुमानकर्ता येषां तु तेषामपि गुणैः क्रिया ।**
**कथमादौ भवेत्,**

न हि प्रागविकृताना सृष्टिकाले विना कारण विकारः सम्भवतीति ।

अस्ति कारणान्तर धर्माधर्मावविद्या रागद्वेषौ चेति चेद् ? तेषा तदानीमभावात्, इत्याह—

**तत्र कर्म तावन्न विद्यते ॥ ८७ ॥**
**मिथ्याज्ञानं न तत्रास्ति रागद्वेषादयोऽपि वा**[1] **।**

अभावं दर्शयति—

**मनोवृत्तिर्हि सर्वेषां न चोत्पन्नं तदा मनः ॥ ८८ ॥**

मन.सज्ञकस्य ह्यन्त करणस्य वृत्तिविशेषाः सर्वे पूर्वोक्ता. कर्मादयः **सांख्यै**रिष्यन्ते, न च तदानी मनोऽस्ति, तद्ध्याहङ्कारिकम्, इन्द्रियाणा तन्मात्राणां चाहङ्कारविकारत्वात्, अहङ्कारश्च महतो विकारः, महाश्च आद्यः प्राकृतो विकारः, तेन यदा प्रकृतिर्महदादिविकार नारभते तदा न सन्त्येव धर्मादय. । वर्त्तन्ते अत्रेति **वृत्तिः,** मनो हि तेषा वृत्तिः स्थानमित्यर्थ ॥ ८८ ॥

ननु कर्म स्थूलरूपेणाविद्यमानमपि शक्त्यात्मना विद्यमान गुणाना क्रियोत्पत्तौ निमित्त भविष्यति, शक्त्यभिप्रायमेव तु 'अधिकारो बन्धहेतुः' इत्येतदपि वचन केचिन्मन्यन्ते, तदनुभाष्य दूषयति—

**कर्मणां शक्त्यवस्थानां यैरुक्ता बन्धहेतुता ।**
**सा न युक्ता न कार्यं हि शक्तिस्थात् कारणाद् भवेत् ॥ ८९ ॥**

कथ न शक्त्यवस्थ स्वकारण स्वकार्यं करोति ? अत आह—

**दधिशक्तिर्न हि क्षीरे दाधिकारम्भमर्हति**[2] **।**
**दध्यारम्भस्य सा**[3] **हेतुस्ततोऽन्या**[3] **दाधिकस्य तु ॥ ९० ॥**

क्षीरे ह्यस्ति दधिशक्तिः, सर्वकार्याणां शक्त्यात्मना कारणावस्थानाभ्युपगमात् । न च सा दाधिक तत्रारभते, स्थूलरूपदध्यारम्भस्यैव सा हेतुः । तत्रान्या दध्यवस्थिता दाधिकशक्तिरेव दाधिकस्य हेतुरिति ॥ ९० ॥

---

१. च—१ पु० । २. दधिकारम्भम्—का० सं० पु० ।
३-३ हेतु. स्यात् तत्रान्या—३ पु० ।

शक्त्यवस्थस्य कारणस्य कार्यारम्भहेतुत्वेऽयमपि दोषः स्यादित्याह—

**कारणाच्छक्त्यवस्थाच्च यदि कार्यं प्रजायते।**
**बन्धः पुनः प्रसज्येत फले दत्तेऽपि कर्मणा ॥ ९१ ॥**

कथम्? इत्याह—

**शक्त्यवस्थत्वमेवेष्टं विनाशेऽपि हि कर्मणाम्।**

**सत्कार्यवादिनो** हि अनुत्पन्नानामिव विनष्टानामपि शक्त्यात्मनावस्थान-मेवेष्टम्, न त्वत्यन्ताविद्यमानत्वमिति।

अयं चापरो दोष इत्याह—

**प्राक्चापि शक्तिसद्भावादनुष्ठानं वृथा भवेत् ॥ ९२ ॥**

किञ्च, रागादयोऽपि बन्धकारणत्वेन दृश्यन्ते, ते च सृष्टिकाले शक्त्यात्मना विद्यन्त इति ॥ ९२ ॥

केन विशेषेणाधिकारो बन्धहेतु, कर्मशक्तिरेव हि सर्गनिमित्तमित्युच्यते, तदाह—

**शक्त्यवस्थं च रागादि किं नेष्टं बन्धकारणम्।**

शङ्कते—

**कर्मादत्तफलत्वाच्चेत्,**

कर्म खलु पूर्वसृष्टावनुष्ठितमदत्तफलमवस्थितम्, अतस्तदेव बन्धनहेतुरिति?

निराकरोति—

**नाव्यक्तिमपि तद् व्रजेत्[1] ॥ ९३ ॥**

नानुष्ठितस्याव्यक्ति फलदान[2] वा सम्भवतीत्युक्तमेवेति न दत्तफलस्यैव[3] शक्त्यवस्था बन्धहेतुर्वक्तव्या, सा च रागादीनामप्यविशिष्टेति ॥ ९३ ॥

शक्त्यवस्थस्य बन्धहेतुत्वे प्रकृतिपुरुषविवेकज्ञान न मोक्षसाधनं स्यात्? इत्याह—

**तच्छक्त्यप्रतियोगित्वान्न ज्ञानं मोक्षकारणम्।**

कर्मशक्तेरप्रतियोगि ज्ञानमविनाशकमित्यर्थः। तदेव दर्शयति—

**कर्मशक्त्या न हि ज्ञानं विरोधमुपगच्छति ॥ ९४ ॥**

ननु रागादीनामिव कर्मणामप्यज्ञानमेव निदानम्, अतो निष्पन्ने ज्ञाने कर्म-निरोधान्मोक्षः सिद्ध्यत्येव? अत आह—

**यद्यप्यज्ञानजन्यत्वं कर्मणामवगम्यते।**
**रागादिवत् तथाप्येषां न ज्ञानेन निराक्रिया ॥ ९५ ॥**

---

१. भवेत्—२ पु०। २. फलादानं—मु० पा०।
३. नादत्त०—मु० पा०।

यद्यपि निष्पन्ने ज्ञाने न कर्मानुष्ठीयेत, तथापि शक्त्यवस्थानां कर्मणां ज्ञाने-नानिराकरणाद् बन्धः स्यादेवेति ॥ ९५ ॥

अथ शक्त्यवस्थमपि कर्म ज्ञानेन क्षीयत इत्युच्यते, न तत्र प्रमाणमस्ति ? इत्याह—

**कर्मक्षयो हि विज्ञानादित्येतच्चाप्रमाणवत्[1] ।**

न हि ज्ञानमपि वस्तुस्वभावान्यथाकरणक्षमम्, अय च वस्तूना विनाशो यच्छक्त्यात्मनावस्थानम् । न ह्यन्यादृशो विनाशः क्वचिदपि सम्भवति, स कथं ज्ञानेन क्रियते ! "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा" (भ० गी० ४-३७) इति वचनं तु स्थूलकर्मविनाशाभिप्रायमिति ।

यदप्युच्यते—ज्ञानिन कर्माण्यल्पमेव फलं दत्वा निवर्तन्ते, यथा राजपुत्रस्या-पराधे दण्डोऽल्पो भवतीति, शक्तिस्थस्य फलदायित्व निष्प्रमाणकमेव, न ह्यल्पे फले दत्तेऽपि[2] शक्त्यवस्थानं नश्यतीत्याह—

**फलस्याल्पस्य वा दानं राजपुत्रापराधवत् ॥ ९६ ॥**

यद्यद्यत्वेऽपि कर्मण. शक्त्यवस्थस्य बन्धहेतुत्व स्यात्, ततः प्रधानकालेऽपि तस्य बन्धहेतुत्वं स्यात्, न तु तदस्ति ? इत्याह—

**अद्यत्वेऽपि हि शक्तिस्थं यदि स्यात् कर्म कारणम् ।**
**ततः प्रधानकालेऽपि युज्यते कारणाभिधा ॥ ९७ ॥**

यदा प्रधानावस्थागत जगत् तदैवेत्यर्थः ॥ ९७ ॥

कस्य तर्हीदानी बन्धहेतुत्वम् ? तद् दर्शयति—

**मनोवृत्तिरिदानीं तु हेतुर्नास्ति च सा तदा ।**

मनोवृत्तिर्यागानुष्ठानजन्यापूर्वस्थानीया सम्प्रति बन्धहेतु., न चासौ तदस्ति; मनसोऽभावादिति ।

सन्तु वा तदापि मनासि, तानि तु सङ्कीर्णानि, न तान्यात्मभिर्निष्कर्मभिर्निः-शरीरैर्विविच्य स्वीकृतानि, तेन मनोगतान्यपि कर्माणि सङ्कीर्येरन् । अतश्च सर्वाणि सर्वान् पुसः पूर्वसृष्टौ मुक्तान् बद्धांश्चाविशेषेण बध्नीयुरित्याह—

**मनसां सङ्कराच्चापि तदा स्यात् कर्मसङ्करः ॥ ९८ ॥**

तस्मान्न शक्त्यवस्थाधिकारशब्दवाच्या बन्धहेतुरित्याह—

**तस्मान्नैषोऽधिकाराख्यो बन्धहेतुः प्रकल्पते[3] ।**

अन्ये तु—"अधिकारो बन्धहेतुः" इत्यत्राधिकारशब्देन योग्यत्वमभिधीयत इत्याहुः, तत्रापि मोक्षानुपपत्तिरित्याह—

**योग्यत्वेऽप्यधिकाराख्ये[4] विप्रयोगो न युज्यते ॥ ९९ ॥**

---

१. निष्प्रमाणकम्—३ पु० पा० । २. दत्ते इति १ पु० नास्ति ।
३. प्रकल्प्यते—२ पु० । ४. ०धिकाराख्यो—मु० पा० ।

कथं न युज्यते ? अत आह--

**चैतन्यं योग्यता पुंसः प्रकृतेस्तदनात्मता।**
**भोक्तृभोग्यत्वयोस्ते च न ताभ्यामपगच्छतः॥ १००॥**

पुंसो हीदमेव योग्यत्व भोक्तृत्वे यच्चैतन्यम्। तच्च पुसो न कदाचिदपगच्छति, तदेव हि पुंसो रूपम्, इदमेव प्रकृतेर्भोग्यत्वयोग्यत्व यच्चैतन्यम्। तदपि न तस्याः कदाचिदपगच्छति। तेन तयोर्भोग्यत्वभोक्तृत्वसम्बन्धानपायात् कथं वियोग इति॥ १००॥

एव च यदुच्यते-कर्मनिमित्तो बन्ध , कर्मत्वज्ञाननिमित्तम्, उत्पन्ने तु प्रकृति-पुरुषविवेकज्ञाने कारणाभावात् कर्मानुत्पत्तौ बन्धाभावान्मोक्षसिद्धिरिति, तदप्य-युक्तमित्याह--

**उत्पत्तौ कर्मणां चेष्टमज्ञानं कारणं यदि।**
**तन्नाशात् स्यादनुत्पत्तिस्तेषां न फलवर्जनम्॥ १०१॥**

कर्मानुत्पत्तिरेव हि ज्ञानात् स्यात्, न तु फलवर्जन न बन्धाभाव इत्यर्थ.। कर्मनिमित्ता हि बन्ध. कर्मनिवृत्तौ नश्येत्, योग्यतामात्रनिबन्धनस्त बन्ध', तस्य विज्ञाने सत्यपि योग्यत्वानपायात् न निवर्त्ततेति।

नन्वेव ज्ञानस्य मोक्षनिमित्ततैव न स्यात्, अतस्तद्बलात् सत्यपि योग्यत्वे मोक्षसिद्धि. कल्प्यते ? सत्यम्; अत एव योग्यत्व न[1] बन्धहेतु', सत्यपि तस्मिन्ना-त्मज्ञस्य बन्धाभावात्, अत कर्मैव बन्धहेतुरिति॥ १०१॥

यदपि विवेकज्ञानस्य मोक्षनिमित्तत्व सांख्यैरुक्तम्, तदपि निष्प्रमाणक-मित्याह—

**ज्ञानं मोक्षनिमित्तं च गम्यते नेन्द्रियादिना।**

वेदात् तत् स्यादिति चेत् ? अ। आह—

**न च साङ्ख्यादिविज्ञानान्मोक्षो[2] वेदेन चोद्यते॥ १०२॥**

द्विविधं ह्यात्मज्ञानमुपनिषत्सूपदिश्यते—देहाद् विवेकज्ञानम्—"अविनाशी वा अरेऽयमात्मा" इत्यादि, अथ 'आत्मानमुपासीत' इति प्राणायामाद्यङ्गोपेतमुपास-नात्मकं ज्ञानम्। तत्र यत् सांख्यादिभिर्मोक्षसाधनत्वेनाश्रित विवेकज्ञान तद्वेदेन मोक्षार्थं न चोदितमिति॥ १०२॥

ननु 'आत्मा ज्ञातव्यः' इति विवेकज्ञानविधावप्यपुनरावृत्तिर्वाक्यशेषे श्रूयते, अत आह—

**आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम्।**

कथम् ? इत्यत आह—

---

१. मु० पुस्तके नास्ति। २. विज्ञानं मोक्षे—१ पु०।

**कर्मप्रवृत्तिहेतुत्वम् आत्मज्ञानस्य लक्ष्यते ॥ १०३ ॥**

विवेकज्ञानस्य पारलौकिकफलेषु ज्योतिष्टोमादिषु प्रवृत्तिरध्ययनस्येव[1] प्रयोजनं दृष्टमेवेति नादृष्टफलापेक्षेति ॥ १०३ ॥

निर्ज्ञाते च ज्ञानस्य कर्मप्रवृत्तिहेतुतया कर्मफलस्वर्गाद्यर्थत्वे वाक्यशेषस्था फलश्रुतिः पर्णमयीन्यायेनार्थवादमात्रं स्यात्, न फलान्तरमलं बोधयितुमित्याह—

**विज्ञाते चास्य पारार्थ्ये यापि नाम फलश्रुतिः ।**
**सार्थवादो भवेदेव न स्वर्गादेः फलान्तरम् ॥ १०४ ॥**

उपासनात्मकस्य तु ज्ञानस्य कर्मणि पुरुषे च दृष्टप्रयोजनाभावात् अदृष्टापेक्षाया श्रुत्याद्यभावेन क्रत्वर्थत्वाभावाद् वाक्यशेषोपनीताभ्युदयनिःश्रेयसफलतया रात्रिसत्रवत् पुरुषार्थत्वमेवेति **व्याकरणाधिकरणे** वक्ष्यतीति ॥ १०४ ॥

मोक्षसाधनत्वं साङ्ख्यज्ञानस्य निराकृतम्, प्रसङ्गान्मोक्षरूपमपि साङ्ख्याभिमतं निराकरोति—

**सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते ।**
**स्वर्ग एव भवेदेष पर्यायेण, क्षयी च सः ॥ १०५ ॥**

कथम् ? इत्याह—

**न हि कारणवत् किञ्चिदक्षयित्वेन गम्यते ।**

भावरूपं सर्वमुत्पत्तिधर्मकं घटादि क्षयधर्मकमेव, अतो न सुखात्मिका मुक्तिरात्मज्ञानेन क्रियते इति ।

कुतस्तर्हि मुक्तिः ? किंरूपा च ? अत आह—

**तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यते ॥ १०६ ॥**

शरीरसम्बन्धो बन्धः, तदभावो मोक्षः, तेन निष्पन्नानां देहानां यः प्रध्वंसाभावः यश्चानुत्पन्नानां प्रागभावः स मोक्षः, कर्मनिमित्तश्च बन्धः कर्मक्षयादेव न भवतीति ॥ १०६ ॥

सिध्यति चाभावात्मकत्वे मोक्षस्य नित्यता, न त्वानन्दात्मकत्वे, इत्याह—

**न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ।**

यदि त्वभावरूपस्यापि मोक्षस्य ज्ञानमेव साधनमित्युच्यते, अत आह—

**न च क्रियायाः कस्याश्चिदभावः फलमिष्यते ॥ १०७ ॥**

यदि च न क्रियाफलमभावः, कुतस्तर्हि तत्सिद्धिः ? ननु कर्मक्षयादेव ? सत्यम्, स एव तु कुतः सिद्ध्यति ? अत आह—

**तत्र ज्ञातात्मतत्त्वानां भोगात् पूर्वक्रियाक्षये ।**
**उत्तरप्रचया[2]सत्त्वाद् देहो नोत्पद्यते पुनः ॥ १०८ ॥**

---

१. वृत्ति०—मु० पा० ।    २. ०प्रवय०—का० सं० पु० ।

यो हि देहाद् विविक्तमनन्तमजरममरमदुःखमात्मानं जानाति, तस्य देहसम्प्रयोगविरक्तस्य पूर्वकृतानां कर्मणां फलोपभोगेन क्षयात् तन्निमित्ते शरीरे पतितेऽनागतानां च कर्मणामननुष्ठानादेवासत्त्वाद् देहान्तरानुत्पत्तेरत्यन्तासम्बन्धः शरीरेण भवति ॥ १०८ ॥

नन्वसत्यपि कर्मणि मातापितृसंयोगादेव शरीरनिष्पत्तेर्न मोक्षसिद्धिः? अत आह—

**कर्मजन्योपभोगार्थं शरीरं न[1] प्रवर्तते ।**
**तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते ॥ १०९ ॥**

धर्माधर्मसहितो मातापितृसंयोगः शरीरहेतुर्न तन्मात्रमिति ॥ १०९ ॥

तेन मोक्षार्थिभिर्न विवेकज्ञानमात्रेण कृतार्थंमन्यमानैः स्थातव्यम्, किन्त्वेवं कर्त्तव्यमित्याह—

**मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।**
**नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥ ११० ॥**

काम्यनिषिद्धे हि स्वफलयोरभ्युदयप्रत्यवाययोरुपभोगाय शरीरमारभेते, न शरीरारम्भं परिजिहीर्षता तेन कर्त्तव्ये, नित्यनैमित्तिके च पूर्वकृताधर्मक्षयाय कर्त्तव्ये, तदेव चात्मोपासनस्यापि पूर्वकृतकर्मक्षयद्वारेणैव मोक्षसाधनत्वम् । उपासनाभिप्रायमेव च—

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ।" ( भ० गी० ४-३७ )

इति **भगवद्वासुदेव**वचनम्, न विवेकज्ञानाभिप्रायमिति ॥ ११० ॥

ननु नित्यान्येवाग्निहोत्रादीनि स्वर्गार्थान्यपीति तानि कुर्वतः कथं मोक्षः? अत आह—

**प्रार्थ्यमानं फलं ज्ञातं न चानिच्छोर्भविष्यति ।**

सत्यम्, तानि तु फलाभिसन्धिकृतानि स्वफलदानेन पुरुषं बध्नन्ति, न त्वनभिसन्धिकृतानिति । तथा च भगवान् **श्रीवासुदेवः**—

"अनाश्रितः कर्मफलं कार्यं कर्म करोति यः" ( भ० गी० ६-१ ) इति ।

यत्तु विवेकज्ञाने विधिवाक्यशेषेऽपुनरावृत्तिश्रवणम्, तदर्थवादमात्रमित्युक्तम् । अर्थवादस्यालम्बनं दर्शयति—

**आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपयुज्यते ॥ १११ ॥**

देहविविक्तात्मज्ञ एव हि देहसम्बन्धे वैराग्याद् यथोक्तमोक्षोपायानुष्ठानेन मुक्तो भवतीति तदालम्बनोऽर्थवाद इति ॥ १११ ॥

---

१. नः—१ पु० ।

यथा आत्मज्ञानस्य मोक्षार्थत्ववचनमर्थवादमात्रम्, एव समस्तजगदाश्रयं सृष्टिप्रलयवचनमपीति प्रागेवोक्तम्, तत्र कारणमाह—

**सर्गप्रलयविज्ञानं समस्तजगदाश्रयम् ।**
**स्वशरीरविदां पुंसां नाधिक्येनोपयुज्यते ॥ ११२ ॥**

स्वशरीरानित्यताज्ञानमात्रेण[1] स्वर्गमोक्षार्थप्रवृत्तिसिद्धेर्व्यर्थं समस्तजगदाश्रयं सर्गप्रलयविज्ञानम् । अवश्य च स्वाध्यायविध्यध्यापितस्योपनिषद्भागस्य प्रयोजनवदर्थपरता वक्तव्या । तेन दैवप्रभावकथनार्थोऽयं सृष्टिप्रलयवादः । समस्तपुरुषकाराभावेऽपि सृष्टिकाले दैववशेनैव सर्वं प्रवर्त्तते, प्रलयकाले च सत्यपि पुरुषकारे दैवोपरमादेवोपरमति, तस्माद् 'धर्मानुष्ठान एव यतितव्यम्' इत्येतत्पर सृष्टिप्रलयवचनमिति ॥ ११२ ॥

उपसहरति—

**तस्मादद्यवदेवात्र सर्गप्रलयकल्पना ।**
**समस्तक्षयजन्मभ्यां न सिध्यत्यप्रमाणिका ॥ ११३ ॥**

यथा च **बुद्धादेः** सर्वज्ञत्व पुरुषत्वादस्मदादिवन्निषिद्धम्, एव प्रजापतेरपि स्रष्टृत्व निषेध्यमित्याह—

**सर्वज्ञवन्निषेध्या च स्रष्टुः सद्भावकल्पना ।**

सतोरपि सृष्टिप्रलययो पदपदार्थसम्बन्धस्य वेदाना च न कृत्रिमत्वमित्याह द्वयेन—

**न च धर्मादृते तस्य भवेल्लोकाद् विशिष्टता[3] ॥ ११४ ॥**
**न चाननुष्ठितो धर्मो नानुष्ठानम् ऋते मतेः[4] ।**
**न च वेदादृते सा स्याद् वेदो न च पदादिभिः ॥ ११५ ॥**
**तस्मात् प्रागपि सर्वऽमी[5] स्रष्टुरासन् पदादयः ।**

न हि स्रष्टुरस्मदादिभ्योऽतिशय सहज सम्भवति पुरुषत्वादस्मदादिवदेव, अतो धर्मनिमित्तो वक्तव्य , न चाननुष्ठितो धर्म कार्य करोति, न चासति ज्ञानेऽनुष्ठान सम्भवति, न च वेदादृते ज्ञानम्, न च वेद पदपदार्थसम्बन्धैर्विना शक्नोत्यर्थमवबोधयितुम्, अत प्रागपि सृष्टे सन्त्येव पदादय , यथा **मनु**.—

सर्वेषा च नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् सस्थाश्च निर्ममे ॥ इति ।

ततः स्रष्टुर्वेदपूर्वत्वमित्याह—

**स्यात् तत्पूर्वकता चास्य चैतन्यादस्मदादिवत् ॥ ११६ ॥**

---

१. स्वशरीराणि०—मु० पा० । २. ०प्रकृति०—मु० पा० ।
३. लोकविशिष्टता—३ पु० । ४. मितेरिति पाठान्तरम् ।
५. सर्वे वा—का० सं० पु० ।

एवं स्रष्टुर्वेदपूर्वत्वं साधयता न किञ्चिदुत्तर भवति, तेन सत्यपि सर्गे सुप्त-प्रतिबुद्धन्यायेनानादिरेव वेदव्यवहार इत्याह—

**एवं ये युक्तिभिः प्राहुस्तेषां दुर्लभमुत्तरम् ।**
**अन्वेष्यो व्यवहारोऽयमनादिर्वेदवादिभिः ॥ ११७ ॥**

एवं सम्बन्धरि प्रत्यक्षादिषु निराकृतेषु पुनरनुमानान्तरमुपन्यस्यति—

**प्रत्यक्षादावुपक्षीणे योऽनुमानेन डित्थवत् ।**
**सम्बन्धित्वान्नियोक्तारं गवादावपि कल्पयेत् ॥ ११८ ॥**

दूषयति—

**गवादिशब्दसम्बन्धं सर्वोऽन्यस्मात् प्रपद्यते ।**
**मद्वत् तद्व्यवहारित्वात्[1] तस्यैतत् प्रतिसाधनम् ॥ ११९ ॥**

चोदयति स्यान्तेन—

**देवदत्तादिशब्देऽपि प्रसक्तैवमनादिता ।**
**सम्बन्धस्य,**

परिहरति—

**बलीयस्त्वाद् दृष्टबाधान्निवर्तते ॥ १२० ॥**

यद्वा, तत्रापि नित्यैव शक्ति प्रयोगमात्रमनित्यम्, तदनित्यतया च शक्ताव-नित्यत्वभ्रान्तिर्भवति, परमार्थतस्तु नित्यैव सा, अत. सिद्धसाधनमिति ॥ १२० ॥

परमतेनाह—

**तत्रापि शक्तिनित्यत्वम्, नियोगस्य त्वनित्यता ।**
**तद्गताच्चाप्यनित्यत्वाच्छक्तौ भ्रान्तिः प्रवर्तते ॥ १२१ ॥**

गवादिषु भ्रान्तिरपि नास्ति, प्रयोगस्याप्यनादित्वादित्याह—

**गवादिषु तु न भ्रान्तिर्नियोगानादिता यतः ।**

कथमनादि· ? अतो अत्राह—

**यो यो गृहीत. सर्वस्मात् पूर्वं सम्बन्धदर्शनात् ॥ १२२ ॥**
**सिद्धः सम्बन्ध इत्येवं सम्बन्धादिर्न विद्यते ।**

अत्र **भाष्यकारेण** सम्बन्धरि प्रत्यक्षं प्रमाण नास्ति इत्युक्त्वा चिरवृत्तत्वात् प्रत्यक्षाविषयत्वमाशङ्क्य "चिरवृत्त सन् न स्मर्येत" (शा० भा० पृ. ६३) इत्युक्तम्, तस्यार्थमाह—

**यदा चाप्तप्रणीतत्वा[2]च्छब्दोऽर्थं प्रतिपादयेत्[3] ॥ १२३ ॥**
**न स्वशक्त्या तदाप्तत्वं मितौ[4] न स्मर्यते कथम् ।**

---

१. महत्तद्व्यवहारित्वात्—का० सं० पु० । २. ०प्रतीतत्वात्—३ पु० ।
३. इदमर्धं त्रुटितं ३ पु० । ४. आप्तत्वमितः इति पाठान्तरम् ।

यदा हि कश्चित् पदपदार्थसम्बन्ध कृत्वा धर्माधर्मप्रतिपादनाय वेदवाक्यानि कृतवान् तदावश्यमसौ सम्बन्धस्य कर्त्ता। स एव च तैः पदैर्वेदवाक्यरचनात्मकं व्यवहारं करोतीति समयव्यवहारयोरेककर्तृत्व प्रतिपत्तृभिः स्मर्त्तव्यम्, तदधीनत्वादर्थनिश्चयस्य। न च वेदादर्थं प्रतिपद्यमाना समयकर्त्तार तेन सह वेदकर्तुरेकत्वं तस्य चाप्तत्वं स्मरन्तो दृश्यन्त इति।

कर्त्तुराप्तत्व स्मर्त्तव्यमित्यत्र दृष्टान्तमाह—

**यथा बौद्धादयो यावद् बुद्धाद्युक्तं न जानते ॥ १२४ ॥**

**न तावत् प्रतिपद्यन्ते बोधे वाक्येन सत्यपि।**

समयव्यवहारयोरेककर्तृत्वस्मरणे **भाष्यकारेण** "न हि विस्मृते 'वृद्धिरादैच्' (पा० सू० १ १.१) इति सूत्रस्य कर्त्तरि 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' ( पा० सू० १. १. ७३ ) किञ्चित् प्रतिपद्यते" (शा० भा० पृ ६५) इति दृष्टान्तो दर्शितः, इति तमाक्षिपति—

**समये कथ्यमानेऽन्यैरस्मरन्तोऽपि[1] पाणिनिम् ॥ १२५ ॥**

**आदैचः[2] प्रतिपद्यन्ते वृद्धिं कर्तुः स्मृतिर्वृथा।**

"वृद्धिरादैच्" इति समयानुसारेण "वृद्धिर्यस्याचामादि" इति व्यवहार इति केनचित् कथिते **पाणिनि**मस्मरन्तोऽपि वृद्धिमादैच प्रतिपद्यन्त इति ?

समाधत्ते—

**सूत्रस्थः पाणिनिस्तत्र स्वसंज्ञां प्रतिपादयेत् ॥ १२६ ॥**

यद्यपि **पाणिनि**रित्येव न स्मर्यते तथापि यः समयस्य कर्त्ता स एव व्यवहर्तेत्येव स्मर्यत एवेति ॥ १२६ ॥

न त्वेवं गवादिशब्देष्वस्ति, न हि सास्नादिमती गौरित्येव समयवाक्यमस्ति, यदनुसारित्वम् 'गामानय' 'गामालभेत' इति लोकवेदव्यवहाराणां स्मर्येतेत्याह—

**गौः सास्नादिमतीत्येवं वाक्यं त्वत्र न विद्यते।**

किञ्च, सर्वशब्दानामर्थसम्बन्धाभावात् समयोऽपि न सम्भवति, न ह्यप्रसिद्धे सास्नादिशब्दार्थे 'सास्नादिमती गौ' इति वाक्यवचन सम्भवतीत्याह—

**असम्बन्धाच्च सर्वेषामेवं कर्तुमसम्भवः ॥ १२७ ॥**

प्रकृत कर्तृस्मरणमुपसहरति—

**तस्मान्न प्रतिपत्तिः स्यात् कथञ्चित् कर्तृवर्जिता।**

किञ्च, दृष्टार्थेषु सज्ञापरिभाषार्थेषु "वृद्धिर्यस्याचामादिस्तद् वृद्धम्" इत्येवमादिषु व्यवहारेषु यद्यपि विना समयव्यवहारयोरेककर्तृत्वस्मरणेनाप्तत्वस्मरणेन चार्थप्रतिपत्तिः सिध्येत्, तथापि यो धर्माय शब्दनियमः स न विना **पाणिनि**स्मरणेन सिध्यतीत्याह—

---

१. ०रसमन्तोऽपि—का० सं० पु०। २. आदैवः—का० सं० पु०।

**दृष्टार्थव्यवहारत्वाद् वृद्ध्यादौ सम्भवेदपि ॥ १२८ ॥**
**धर्माय नियमोऽत्रापि न विना पाणिनेर्भवेत् ।**

नियमोदाहरणमाह—

**आकारानुगमो यो हि वृद्ध्या स्यादाश्वलायने ॥ १२९ ॥**
**नासावपाणिनीयत्वे साधुरित्यवगम्यते ।**

यो हि "किति च" (पा० सू० ७ २ ११८) इत्यादिवृद्धिविधानादाश्वलायनादिषु पदेष्वचामादेरकारस्याकारानुगमो नासावसति पाणिनीयत्वस्मरणे साधुरिति निश्चीयत इति ।

एवं 'गामानय' इत्यादिषु मा नाम समयकर्त्तुर्व्यवहारकर्त्तुश्च सम्प्रतिपत्तिर्भूत्, वेदेऽपि प्रतिपत्तिमात्र विनापि सम्प्रतिपत्त्या सिद्ध्यतु नाम, व्यवहारस्तु योऽग्निहोत्राद्यनुष्ठानात्मकः सोऽदृष्टार्थो वाक्यैकप्रमाणको नासति वाक्यकारासत्वस्मरणे सिद्ध्येत् । तदवश्य स्मर्त्तव्यस्य वेदाना सम्बन्धाना च कर्त्तुरस्मरणाद् योग्यानुपलम्भनादभावेऽवधारिते सिद्ध वेदाना सम्बन्धाना च नित्यत्वमित्याह—

**दृष्टे भवतु मा वा भूत् कर्तृसम्प्रतिपन्नता ॥ १३० ॥**
**वैदिको व्यवहारस्तु न कर्तृस्मरणाद् ऋते ।**

**अव्यतिरेकश्च** (जै० सू० १. १. ५) इति सूत्रं **वृत्तिकारेण** द्विधा व्याख्यातम्—देशाव्यतिरेके, कालाव्यतिरेके च । तत्र प्रथमव्याख्यान दूषयति—

**दुर्गेषु गवि गोशब्दप्रयोगो गम्यते[1] कथम् ॥ १३१ ॥**

शङ्कते—

**गत्वा चेत् केनचिद् दृष्टः,**

दूषयति—

**सम्बन्द्धा[2] किं न गच्छति ।**

विशेषतश्चाष्टगुणैश्वर्य्यसम्पन्नस्य सम्बन्धुरप्रतिगतित्वात् सम्भवति दुर्गगमनमित्याह—

**ईश्वरत्वाद् गतिश्चास्य न क्वचित् प्रतिबध्यते[3] ॥ १३२ ॥**

यदप्युक्तम्—'बहव. सम्बन्धारः कथ सगस्यन्ते' इति, तदप्याक्षिपति—

**बहूनां कार्यतश्चापि सङ्ज्ञानं[4] केन वार्यते ।**

सर्वत्रैकरूपशब्दार्थव्यवहारदर्शनात् सङ्ज्ञानमनुकल्पमिति ।

मा भूद् वा सर्वदुर्गगमनं बहूना वा सम्प्रतिपत्ति , तथापि सम्भवत्यैकरूप्यमित्याह वदन्तेन—

१. कल्प्यते—१, का०, सं० । २. सम्बन्ध–मु० पा० । सम्बन्द्धा इति । सम्बन्धकर्तेत्यर्थः । ३. प्रतिहन्यते—२ पु० । ४. सङ्ज्ञानेकेन—का० सं० पु० ।

**एकत्र कथितं[1] चापि लोकेनान्यत्र नीयते ॥ १३३ ॥**

**वृद्ध्यादिवद्,**

तस्माद् द्वितीयैव व्याख्या सम्मतेत्याह—

**अतो व्याख्या द्वितीयैवात्र शोभना ।**

**भाष्यकारेण** सर्वेषामप्रसिद्धत्वे सम्बन्धक्रियैव नोपपद्यत इत्युक्तम्, तत्र किञ्चिदाशङ्कते करणमन्तेन—

**कांश्चित् प्रसिद्धसम्बन्धानभ्युपेत्य वदेद् यदि[2] ॥ १३४ ॥**

**सम्बन्धकरणम्,**

तद् विकल्प्य दूषयति—

**तत्र के सिद्धा इति दुर्वदम् ।**

न तावदद्यतनेभ्यो गवादिभ्योऽन्ये शब्दाः प्रागासन्, तैश्च तेषां सम्बन्धकरणमयुक्तम्, शब्दान्तरसद्भावे प्रमाणाभावादित्याह—

**न तावदन्य एवासन् शब्दा[3] इति हि युक्तिमत् ॥ १३५ ॥**

अथ त्वद्यतनेष्वेव काश्चित् प्रसिद्धसम्बन्धानङ्गीकृत्य तैरितरेषा सम्बन्धकरणमुच्येत, तदपि 'इमे प्रसिद्धसम्बन्धा , नेमे' इति विशेषाग्रहणादयुक्तमित्याह—

**विशेषोऽद्यतनानां च गवादीनां न दृश्यते ।**

इतश्च नित्य. सम्बन्ध इत्याह अन्यदन्तेन—

**शब्दार्थानादितां मुक्त्वा सम्बन्धानादिकारणम् ॥ १३६ ॥**

**न स्यादन्यद्,**

यदा हि शब्दार्थयोरनादित्व **शब्दाधिकरणाकृतिवादयोः** सिद्धं तदैवानर्थकस्य शब्दस्य प्रयोगासम्भवात् सम्बन्धानादितापि सिद्धैवेति ।

उपसहरति—

**अतो वेदे सम्बन्धादिर्न विद्यते ।**

**वेद** इति । वैदिकानां गवादीनाम्, न तु गाव्यादीना देवदत्तादीनां चेति ।

"स्यादेतत्, असिद्धसम्बन्धा बाला वृद्धेभ्य. कथ प्रतिपद्यन्ते" (शा० भा० पृ ६९ ) इति चोद्यभाष्यम्, तस्यैवोत्तरम् "न हि दृष्टेऽनुपपन्नं नाम" (शा० भा० पृ. ६९) इति, तद् व्याचष्टे—

**उपायरहितत्वेन सम्बन्धकरणानुमा[4] ॥ १३७ ॥**

**अनाख्यानानुमानं[5] तु दृष्टेनैव विरुद्ध्यते ।**

---

१. कथितश्चापि—१ पु० ।
२. भवेद्यदि—१ पु० ।
३. एवासच्छब्दा—१ प० ।
४. सम्बन्धकरणानुमा—१ पु० ।
५. अनाख्यातानुमानम्—३ पु० ।

नाप्रसिद्धार्थैः सम्बन्धकरणाय वाक्यरचना सम्बन्धकारस्य सम्भवति, प्रसिद्धैः सम्बन्धाख्यानाय[1] तु सम्भवत्येव कथयितु· प्रसिद्धत्वाद् वाक्यरचना, यदि प्रतिपत्तॄणामप्रसिद्धसमस्तशब्दार्थानां न कथञ्चन वाक्यादर्थप्रतीतिः सम्भवतीत्युच्येत, तच्च दृष्टविरुद्धमिति।

अप्रसिद्धश्चावगतेरुपायाभावः, तर्ह्यवश्यं कथनवाक्येनैव सम्बन्धग्रहणं व्यवहारानुमितापि शब्दानन्तरभाविन्यर्थप्रतिपत्तिः पुनः पुनर्दृश्यमाना सम्भवत्येव शब्दार्थसम्बन्धावगतेरुपाय इत्याह—

**वृद्धानां दृश्यमाना च प्रतिपत्तिः पुनः पुनः ॥ १३८ ॥**
**उपाय इति तद्धानिरसिद्धावगतिं प्रति।**

ननु सम्बन्धकरणस्यापि न वाक्यमेवोपायः, हस्तनिर्देशादेरप्युपायस्य सम्भवात् ? अत आह—

**हस्तसंज्ञाद्युपायो हि सिद्धो नाद्यक्रियासु नः ॥ १३९ ॥**

हस्तसज्ञादयोऽपि हि प्रसिद्धसम्बन्धा एवार्थं प्रतिपादयेयुरिति ॥ १३९ ॥

न च सर्गकाले तेऽपि प्रसिद्धसम्बन्धा इति। कथम् ? इत्याह—

**न ह्यसौ ज्ञातसामर्थ्यो विनान्यैर्व्यवहर्तृभिः।**

यदा हि कस्यचिद्धस्तचेष्टाविशेषादनन्तरमन्यार्थविशेषविषयो व्यवहारो दृश्यते तदा सम्बन्धो गृह्यते, न च जगदादौ व्यवहर्त्तारः केचित् सन्ति, तत्र कथमसिद्धार्थसम्बन्धान् हस्तसज्ञाविशेषानर्थविशेषप्रतिपत्त्यर्थमीश्वरः प्रयुञ्जीत, प्रतिपत्तारो वा ततोऽर्थं प्रतिपद्येरन्निति।

केन पुनः प्रमाणेन वृद्धव्यवहारे सम्बन्धग्रहणम् ? अत आह सार्द्धेन—

**शब्दवृद्धाभिधेयाश्च प्रत्यक्षेणात्र पश्यति ॥ १४० ॥**
**श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया।**
**अन्यथाऽनुपपत्त्या च बुध्येच्छक्तिं द्वयाश्रिताम्[2]।**

तदेवं प्रमाणत्रयाधीन सम्बन्धमर्थापत्त्या साक्षाद् बुध्यन्ते, प्रत्यक्षानुमाने तु तदुत्पादे नोपयुज्येते इत्याह—

**अर्थापत्त्यावबुद्ध्यन्ते सम्बन्धं त्रिप्रमाणकम् ॥ १४१ ॥**

इति सम्बन्धाक्षेपपरिहारः

तदेवमकृत्रिमः शब्दार्थयोः संज्ञासंज्ञिलक्षणः सम्बन्धः ॥ १४१ ॥

**इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे सम्बन्धपरिहारः समाप्तः**



१. प्रसिद्धसम्ब०—मु० पा०।
२. द्वयात्मिकामिति पाठान्तरम्।

## अथ चित्राक्षेपपरिहारः

स्वपक्षं साधयित्वाधुना पूर्वोक्तमाक्षेपमनुभाष्य परिहरति—

**चित्रादिनिष्फलत्वेऽपि[1] यदुक्तं साधनद्वयम् ।**
**तत्र हेतोरसिद्धत्वमानन्तर्यं ह्यचोदितम् ॥ १ ॥**

साधनत्रय पूर्वमुक्तम्—चित्रादिचोदनानामप्रामाण्यार्थम् एकम्, चित्रादिनिष्फलत्वार्थं द्वयम्—न वा पशुफला चित्रा, तेऽपि तत्साध्या न भवन्तीति । तदस्मिन् द्वये हेतोरसिद्धत्वमानन्तर्ये फलदानकालत्वेन चोदिते स्वकाले फलादानं सिध्येत्, तदा च कालान्तरे फलस्याप्रमाणकत्वात् तदुत्पत्तावसद्भावोऽपि सिध्येत्, आनन्तर्याचोदने तु कालान्तरेऽपि फलदानसम्भवात् स्वकाले अदाने तदुत्पत्तावसद्भावश्चासिद्ध इति ॥ १ ॥

यत्तु 'सामर्थ्याद् आनन्तर्यं चोदितम्' इत्युक्तम्, तत्राह—

**आनन्तर्यश्रुतिश्चात्र सामर्थ्यादपि नेष्यते ।**

कारणमाह—

**नाविशेषा फलोत्पत्तिः कर्मणा नोपपद्यते ॥ २ ॥**

भवति हि कृष्यादिवत् कालान्तरेऽपि फलमिति ॥ २ ॥

नन्वानन्तर्येऽचोदितेऽपि पाकादिवत् सम्भवात् किमित्यनन्तरं पशवो न भवन्ति ? अत आह सार्द्धेन—

**कर्मणां चापि वैचित्र्याद् देशकालाद्यपेक्षणात् ।**
**कस्यचिच्चार्द्धभुक्तत्वात् कर्मान्यत् प्रतिबध्यते ॥ ३ ॥**
**तेनानन्तर्यनिष्पत्तिः फलस्येहाप्रमाणिका ।**

कानिचित् स्वत एव विप्रकृष्टफलानि कृष्यादिवत्, कानिचिद् देशकालापेक्षत्वाद् विलम्बन्ते, कानिचिद् विरुद्धफलेन कर्मान्तरेण लब्धवृत्तिनार्धभुक्तेन प्रतिबन्धात् स्वफलमददत्यवतिष्ठन्ते, तेनानन्तर्यं नावश्यम्भावीति ।

यत्तु प्रत्यक्षादिविसवादाच्चित्रादिचोदनानामप्रामाण्यमुक्तम्, तत्परिहरति—

**प्रत्यक्षादिविसंवादो न शब्दे दोषमासजेत् ॥ ४ ॥**

कथम् ? इत्याह—

**आनन्तर्यविसंवादो नाविशेषप्रवर्त्तिनीम् ।**
**चोदनां बाधितुं शक्तः स्फुटाद् विषयभेदतः ॥ ५ ॥**

आनन्तर्यविषयो हि प्रत्यक्षविसंवादः, नासावविशेषप्रवर्त्तनी चोदनां बाधते, विषयभेदात् । एवं च यत्साधनमुक्तम्—'प्रत्यक्षाद्यधिकारेऽपि तैरर्थासङ्गतिर्यतः' इति, तदप्यसिद्धम्; चोदनार्थे प्रत्यक्षादेरनधिकारात् । यदि त्वनन्तरफलत्वमेव

१. साधनत्वेन—का० पा० ३ पु० ।

चित्रायाः साध्यते, न निष्फलत्वम्, तत् प्रत्यक्षानुपलब्ध्या समानविषयया बाध्यत इत्याह—

**या तु मर्दनसाधर्म्यादानन्तर्याऽनुमा कृता।**
**बाध्यतेऽनुपलब्ध्यासौ समानविषया यतः॥ ६॥**

कर्मान्तरप्रतिबन्धात् फलविलम्बस्योदाहरणमाह—

**दृष्टार्थस्यापि सेवादेरायातमपि सत्फलम्।**
**उत्पद्यते चिरेणैव प्रतिबन्धेन केनचित्॥ ७॥**

स्वामिप्रसादादुपनतमपि दृष्टेनादृष्टेन वा प्रतिबन्धान्न सहसा निष्पद्यत इति॥ ७॥

कर्मवैचित्र्याद् विलम्बनस्योदाहरणमाह—

**उप्तमात्रे न हि व्रीहौ फलमुत्पद्यते क्वचित्।**

शङ्कते—

**अथाङ्कुरोऽपि तत्र स्यात्,**

परिहरति—

**स्वर्गोऽप्यस्तीति गम्यताम्॥ ८॥**

स्वर्गग्रहणमनास्थया पश्वादिविषयत्वादाक्षेपसमाधानयो। अस्ति हि चित्रादिष्वपि पश्वादिफलस्याङ्कुरस्थानीयमपूर्वं शास्त्रार्थविधारणवेलायामेव तदवगम्यते, अनेकाङ्गप्रधानाना विनापूर्वेण साहित्यासम्भवात्। शक्यते चानन्तरफलानुपलम्भादेव प्रागनन्तर्भावितमपूर्वं पश्चादन्तर्भावयितुमिति॥ ८॥

यद्यङ्कुरात्मना निष्पन्न फलम्, किमिति तर्हि तदैव न भुज्यते? अत आह—

**स्थूलीभूतश्चिरेणैव भोग्यत्वं प्रतिपद्यते।**

ननूत्पद्यमान तत् सहसैव स्थूलात्मना कि नोत्पद्यते? अत आह—

**सर्वस्योत्पद्यमानस्य क्रमः स्वाभाविकः स्थितः॥ ९॥**

दृष्टा हि वृक्षादीनां सूक्ष्माङ्कुरादिक्रमेणोत्पत्तिरिति॥ ९॥

यत्त्वनन्तरफलानुपलम्भाच्चित्रादीनामन्तरफलाभावमात्रं साध्यते, ततः सिद्धसाधनत्वमित्याह—

**अनन्तरफलत्वं तु चित्रादेर्यदि साध्यते।**
**ततः स्यात् सिद्धसाध्यत्वमन्यदा न फलं भवेत्॥ १०॥**

यच्च "कालान्तरे फलस्यान्यत् प्रत्यक्षं कारणमस्ति" (शा० भा० पृ० ७१) इति चोद्यस्योत्तरं भाष्यम्—"तच्चैव हि तत्र कारणं शब्दश्च" (शा० भा० पृ० ७१) इति, तदुपपादयति द्वयेन—

**व्यभिचाराच्च सेवादेः पश्वादेः साधनान्तरम्।**
**किमप्यदृष्टमस्त्येव तत्रान्यन्निष्प्रमाणकम्॥ ११॥**

**ईश्वरेच्छाधिकारादिशब्दलिङ्गादिवर्जनात् ।**
**कृतं कदाचिच्चित्रादिशब्देन त्ववगम्यते ॥ १२ ॥**

अधिकारः **सांख्यैरुक्तः**, अधिकारो बन्धहेतुरिति ॥ १२ ॥

ये त्वाहुः—स्वाभाविक्येव सर्वोत्पत्तिमतामुत्पत्तिः, किमत्र दृष्टेनादृष्टेन वा कारणेनेति । तान् प्रत्याह—

**निर्निमित्ता न चोत्पत्तिः,**

कारणमाह—

**न हि सर्वाप्रमाणता ।**

सर्वाणि हि प्रमाणानि कार्यकारणभावं बोधयन्ति, मर्दनसुखादीनां कार्यकारणत्वं प्रत्यक्षेणावगम्यते, अन्येषामनुमानादिभिः, न च तेषामप्रामाण्यम्, अतो निर्निमित्तोत्पत्तिः स्यादिति ।

भवत्वनन्तरभाविना प्रतिग्रहादीना पश्वादिकारणत्वम्, प्रत्यक्षाद्यवगमात्, चित्रादीना तु कथम् ? अत आह—

**बोधयन् न च शब्दोऽत्र प्रामाण्यादतिवर्त्तते**[1] ॥ १३ ॥

शब्दप्रामाण्यात् तेषामपि कारणत्वमिति ॥ १३ ॥

एवं तावदानन्तर्याभावेऽपि चित्रादीना पश्वादिफलत्वं समर्थितम् । इदं तु चिन्त्यम्, किमिहैव जन्मनि चित्रादीना फलम् ? उतेह वा जन्मान्तरे वेति ? **भर्तृमित्रादयस्त्विहैवेति** मन्यन्ते । तथा च **योगसिद्ध्यधिकरणे** वक्ष्यत इति । तान् प्रत्याह—

**येषां त्विहफलान्येव चित्रादीनीति कल्पना ।**
**निर्निमित्तं फलं तेषां स्यादिहाकृतकर्मणाम् ॥ १४ ॥**

कथं निर्निमित्तम् ? इत्याह—

**चित्रादीनां फलं तावत् क्षीणं तत्रैव**[2] **जन्मनि ।**

नन्वामुष्मिकस्वर्गफलज्योतिष्टोमादिकर्मशेषेणेहाकृतकर्मणामपि पश्वादिफलं सिद्ध्यति, तथा च **गौतमः**—'स्वधर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टजात्यादिमन्तो जन्म प्रतिपद्यन्ते' इति, अत आह—

**न च स्वर्गफलस्येह कश्चिदंशोऽनुवर्तते ॥ १५ ॥**

कथम् ? इत्याह—

**नैव ह्यन्यफलं कर्म साधयेन्नः फलान्तरम् ।**

कथं तर्हि **गौतमवचनम्** ? अत आह—

---

१. अनिवर्तते—का० सं० । २. तत्रत्य०—१ पु० ।

**गौतमीयेऽपि[1] तच्छेषस्तस्माच्चित्राद्यपेक्षया ॥ १६ ॥**

ततो निर्निमित्तमेवेह अकृतकर्मणा पश्वादिकं स्यादिति ॥ १६ ॥

ततः को दोषः ? अत आह—

**स्वाभाविकत्वे सिद्धे च कर्मानन्तरभाव्यपि ।**
**फलं क्रियानिमित्तत्वं न कथञ्चित् प्रपद्यते ॥ १७ ॥**

अनन्तरभाविनोऽपि फलस्य स्वाभाविकत्वसम्भवादानन्तर्यं काकतालीयं स्यादिति ॥ १७ ॥

ततश्च वेदाप्रामाण्यं स्यादित्याह—

**तत्र म्लेच्छादिवत् सर्वे कर्माकृत्वापि वैदिकम् ।**
**फलं लभन्त इत्येवं नष्टा वेदप्रमाणता ॥ १८ ॥**

दोषान्तरमप्यैहिकत्वे दर्शयति—

**अनन्तरं नियोगेन पश्वादि च[2] भवेद् यदि ।**
**प्रत्यक्षफलतैव स्यात् त्रिवृत्पानविरेकवत्[3] ॥ १९ ॥**

इहैव जन्मनीत्यर्थ. ॥ १९ ॥

एवं च सूत्रभाष्यविरोध. स्यादित्याह—

**जन्मान्तरानुभूतं च न स्मर्यत इतीदृशम् ।**
**न भाष्यं न च सूत्रं स्यादप्राप्ते शास्त्रमर्थवत्[4] ॥ २० ॥**

**स्मृत्यधिकरणे** 'जन्मान्तरानुभूत च न स्मर्यते' इति च वदन् **भाष्यकारो** नैवजातीयकानामैहिकफलत्वनियमोऽस्तीति दर्शयति। **जैमिनिरपि** प्रमाणान्तराप्राप्ते शास्त्रमर्थवदिति दर्शयतीति ।

तस्माद् यथाचोदनमविशेषितकालमेव फलम्, न त्विहैवेति कालाधिक्यं प्रमाणवदित्याह—

**तस्मात् कालाविशेषेण चोदनार्थो यथा स्थितः ।**
**स तथैवानुगन्तव्यो नाधिको निष्प्रमाणकः[5] ॥ २१ ॥**

येऽप्यक्षपादीयाश्चित्रादीनामैहिकफलत्वमेवाभ्युपयन्तः किमिति तर्हि तत्कारिणा सर्वेषामनन्तरमेव फल न भवतीति चोद्यं वैगुण्येन समादधत, तन्मतेऽपि पूर्ववदिहाकृतकर्मणा फलं स्वाभाविकमेवोपपद्यते ? इत्याह—

**सर्वेषां कर्मवैगुण्यात् फलाभावं वदन्ति ये ।**
**आनन्तर्यमुपेत्यैव ते स्वाभाविकवादिनः ॥ २२ ॥**

नन्वेवं स्वर्गस्यापि कालाविशेषाश्रवणादनियमः स्यात् ? अत आह—

**स्वर्गस्यामुष्मिकत्वं तु षष्ठाद्ये स्थापयिष्यते[6] ।**

---

१. गौतमेऽपि च—का० स० । २. पश्वादिव—का० सं० ।
३. त्रिवृत्या न विरेकवत्—का० सं० । ४. सूत्रं च स्यादप्राप्तेऽत्र शास्त्रवत्—का० सं० ।
५. न प्रमाणकः—का० सं० । ६. साधयिष्यते—१ पु० ।

ननु पश्वादीनामप्यैहिकत्वं **योगसिद्धयधिकरणे** वक्ष्यते, अत आह—

**पश्वादेर्नियमाभावो योगसिद्धिरितीह तु ॥ २३ ॥**

एतदेव विवृणोति—

**यदा कदाचिद् भवदेतदिष्यते फलं हि पश्वादि न साम्परायिकम् ।**

तत्र हि पश्वादीना साम्परायिकपर्यायामुष्मिकत्वमेवेति पूर्वपक्षं विधाय, ऐहिकत्वमप्यस्तीति सिद्धान्तितम् । यद्यपि शब्दो न श्रूयते न सांपरायिकत्वनियमनिराकरणेन यदाकदाचिद्भवत्वेनानियम एव पश्वादीना वक्ष्यते, न त्वैहिकत्वमेवेति[1] । यस्त्वत्यन्त त्वरितोऽद्यैव मे पशवो भूयासुरिति कामयते तस्यैव वा किं तदैव फलं भवति ? नेत्याह—

**तथा[2] स्थितस्यैव हि तस्य साधनं विधीयते योऽपि भृशं त्वरान्वितः ॥ २४ ॥**

यदा कदाचिद् भवतः साधनं नातित्वरितापेक्षयान्यादृश भवतीति ॥ २४ ॥

किमेष एवोत्सर्गः, स्वर्गादन्यदिह वामुत्र वेति ? नेत्याह—

**साधारणं यत्तु फलं बहूनां स्वभावतस्तादृशमेव चेष्टम् ।**
**सर्वस्य वाऽऽसन्नतयैव काम्यं वृष्ट्यादि तच्चैहिकमेव युक्तम् ॥ २५ ॥**

यत्खलु वृष्ट्यादिक स्वभावत एव बहुसाधारण तद्यथैव सर्वेषामिष्टं तथैवेष्यते, सर्वेषा चासन्नतयैवेष्टम् । न हि यदा कदाचिद्भवन्ती वृष्टिः केनचित्प्रार्थ्यते, तस्मात् तदैहिकमेवेति ॥ २५ ॥

ननु चित्रादिवदेवात्रापि कमिपदमविशिष्टमेव श्रूयते, न हि 'अनन्तरवृष्टिकामः' इति श्रुतिरस्ति ? अत आह—

**कमिपद[3]मविशिष्टं यद्यपि श्रूयते वा[4] भवति फलविशेषो नान्यथा काम्यते हि[5] ।**

यथास्थितफलकामनानुवादेन हि साधन विधीयते, सर्वश्च प्रत्यासन्नमेव वृष्टयादिकं कामयते । पश्वादिक तु न कामनास्वभावेन शक्य नियन्तुम्, अविशेषेण तत्कामनासम्भवात्, अतस्तदनियतवृष्ट्यभिचारराष्ट्रोपद्रवशमनादिकं त्वैहिकमेवेति ।

किमिति तर्हि सर्वथैव कृताया कारीर्य्या वृष्टिर्नानन्तरमेवोत्पद्यते ? अत आह—

**फलति यदि न सर्वं तत् कदाचित्तदैव ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते॥२६॥**

इति चित्राक्षेपपरिहारः

---

१. ०हिकत्वमिति—मु० पा० ।
२. यथा—१ पु० ।
३. किमपदम्—का० सं० ।
४. श्रूयतेऽर्थात्—का० स० ।
५. काम्यतेष्टेति पाठान्तरम् ।

वृष्टिविरुद्धफलेन शास्त्रप्रतिषिद्धेन केनचित् प्रबलेन कर्मणा जन्मान्तरानुष्ठितेन प्रतिबन्धस्तदा कल्प्यते, न प्रतिबन्धादसाधयतः साधनत्वहानिरिति न शास्त्राप्रामाण्यम्। एवं च नियमेनानन्तरफलानुत्पत्तेर्न त्रिवृत्पानविरेकवदन्वयव्यतिरेकावगम्यं फलमिति न शास्त्रप्रामाण्यव्याघातः। सर्वेषां चैहिकत्वे स्वर्गातिरिक्तानां प्रतिबन्धस्याप्यैहिकफलत्वात् जन्मान्तरानुष्ठितस्येह जन्मनि प्रतिबन्धकत्वासम्भवान्नियमेनानन्तरफलनिष्पत्तेरशितपीतविरेकतुल्यत्वं स्यादिति दोषः।

कथं तर्हीहाकृतकारीर्यादिकर्मणां वृष्टिनिष्पत्तिः? कर्मान्तरादिति ब्रूमः। यत्खल्वन्नादिफलं कर्म जन्मान्तरानुष्ठितं तत्स्वफलोत्पादनाय शरीरमिव वृष्ट्यादिकमारभत इति ॥ २६ ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे चित्राक्षेपपरिहारः समाप्तः



## अथ आत्मवादः

"यत्तु दृष्टविरुद्ध वचनमुपन्यस्त तत्—स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं यातीति प्रत्यक्ष शरीरकमुपदिशतीति? उच्यते, शरीरसम्बन्धाद् यस्य तच्छरीरं सोऽपि तैर्यज्ञायुधैर्यज्ञायुधी" ( शा० भा० पृ० ७२ ) इति भाष्यार्थमाह—

**साक्षाद् यद्यपि सम्बन्धो नात्मनो यज्ञसाधनैः।**
**तथापि लक्षणावृत्त्या शरीरद्वारको भवेत् ॥ १ ॥**

यज्ञायुधिशब्देन स्वाभिधेयशरीरद्वारेण तद्वानात्मा लक्ष्यत इति न प्रत्यक्षविरोध इति ॥ १ ॥

एष इति शब्देनोक्तमपि प्रत्यक्षं देहस्थमेवात्मन्युपचर्यत इत्याह—

**प्रत्यक्षत्वं च देहस्थं भाक्तमात्मनि कल्पितम्।**

यद्वा, एष-यज्ञायुधिशब्दौ श्रुतिवृत्तावेव, स्वर्गयान त्वात्मगतम्, यजमानत्वं च शरीरे उपचर्यत इत्याह—

**आत्मनः स्वर्गयानं वा शरीरस्योपचर्यते ॥ २ ॥**

**भाष्यकारेण** "कोऽसावन्यः" ( शा० भा० पृ० ७२ ) इत्यादिना ज्ञानदेहातिरिक्तात्मप्रतिपादनं कृतम्, तत्किमर्थम्, यज्ञायुधिवाक्यं ह्यादित्ययूपादिवाक्यवदर्थवादतया नेतु शक्यम्? अत आह—

**नैरात्म्येनात्र चाक्षिप्ताः सर्वा एव हि चोदनाः।**

कथम् ? इत्याह—

**साध्यसाधनसम्बन्धस्तद्युक्तो न हि सिद्धयति ॥ ३ ॥**

तदेव कथम् ? इत्याह—

**ता हि कर्तुः फलेनाहुः[1] सम्बन्धं क्वापि जन्मनि ।**

स्वर्गकामचोदनादिभिर्हि स्वर्गस्यामुष्मिकत्वात् क्वापि जन्मनि फलोपभोगो बोध्यते, सोऽपि कर्तुर्नान्यस्येति ।

तथापि किम् ? इत्याह सार्द्धेन—

**न च विज्ञानमात्रत्वे भोक्तृकर्तृत्वसम्भवः ॥ ४ ॥**

**शरीरविनिपाताच्च परं नान्यद् यदेष्यते ।**

**अदत्तफलइष्ट्यादौ तदा तद्वचनं मृषा ॥ ५ ॥**

ज्ञानमात्रत्वे तावत् तेषां क्षणिकत्वात् कर्तृभोक्तृत्वे एव तावदनुपपन्ने, किं पुनः कर्तुरेव भोक्तृत्वम्, शरीरचैतन्ये तावत् तद्विनिपातादूर्ध्वमन्यस्य कस्यचिद्भोक्तुरसम्भवादिष्ट्यादेश्चादत्तफलत्वात् तद्वचनस्याप्रामाण्यं स्यादिति ॥ ५ ॥

उपसहरति—

**तस्माद् वेदप्रमाणार्थमात्मात्र प्रतिपाद्यते ।**

**यद्यपि प्रकृतं वाक्यं व्याख्यायेतार्थवादतः ॥ ६ ॥**

यज्ञायुधिवाक्यसमर्थनच्छलेन वेदप्रामाण्यार्थमेवेदमिति तत्प्रतिपादनमिदानीं संक्षिप्य दर्शयति—

**शरीरेन्द्रियबुद्धिभ्यो व्यतिरिक्तत्वमात्मनः ।**

**नित्यत्वं चेष्यते,**

यदि नित्यः, कथं तर्हि तान्येवानु विनश्यतीति विनाशितावचनमुपनिषत्सु ? अत आह—

**शेषं शरीरादि विनश्यति[2] ॥ ७ ॥**

विनाशवचन तु शरीरेन्द्रियादिविषयमिति वक्ष्यत इति ॥ ७ ॥

चोदयति नित्य इति द्वयेन—

**नित्यः कर्तृत्वभोक्तृत्वे प्रतिपन्नोऽपि सन् यदा ।**

**न कर्मफलसम्बन्धं भोगकालेऽवबुध्यते ॥ ८ ॥**

**मया यत्तु कृतं कर्म तस्येदं भुज्यते फलम् ।**

**शुभाशुभं मयैवेति तदा कोऽस्य रसो[3] भवेत् ॥ ९ ॥**

न तावन्नित्यस्य समस्तार्थक्रियाविरहिणः कर्तृत्वभोक्तृत्वे सम्भवतः, सम्भवेतां वा, तथापि फलभोगकाले मत्कृतस्यामुष्य कर्मणः फलमिदमुपभुज्यत इति अपरामृशतः कर्मण्यनुरागाभावान्नानुष्ठानं स्यादिति ॥ ९ ॥

---

१. कर्तृफलेन०—३ पु० । २. विनाशि च—३ पु० । ३. कोऽस्वरसः—३ पु० ।

एतदेवोपपादयति—

**अपरामृश्यमाने हि स्वकर्मप्रत्यये फले।**
**न विशेषो भवेत् कश्चित् स्वपरात्मोपभोगयोः ॥ १० ॥**

स्वकर्मकारणकं फलमपरामृशतां स्वोपभोगे वा परोपभोगे वा न कश्चिद्विशेषः स्याद्; उभयत्राप्यननुष्ठानात्। यो ह्यस्य कर्मणः साधनत्वं फलकालेऽनुसन्धास्यामीति निरूपयति स एव कर्मानुतिष्ठति, नान्य इति ॥ १० ॥

एवं निषिद्धमपि न वर्जयेदित्याह—

**कुर्वन्नप्यशुभं कर्म तेनैवं चिन्तयेन्नरः।**
**न स्मरिष्यामि भोगेऽहमिति नैतद् विवर्जयेत् ॥ ११ ॥**

ततश्चानित्यपक्षवन्नित्यत्वे कृतनाशाकृतागमौ फलत. स्याताम्, अननुष्ठानस्य तुल्यत्वात्, वृथा नित्यत्वप्रतिपादनमित्याह—

**तत्र नित्यत्वपक्षेऽपि कृतनाशाकृतागमौ।**
**फलतस्तुल्यरूपौ चेद् वृथा तत्प्रतिपादनम् ॥ १२ ॥**

किमिद कृतनाशाकृतागमाविति ? कर्तुं. कृते कर्मणि नाशः, भोक्तुश्चाकृते कर्मण्यागम इति ॥ १२ ॥

परिहरति—

**नैष दोषः, न भोगे हि स्मृतिर्न उपयुज्यते।**

कथ नोपयुज्यते ? अत आह—

**न प्रवृत्तिर्निवृत्तिर्वा भोगकाले स्मृतेर्भवेत् ॥ १३ ॥**

प्रवृत्त्युत्तरकालो हि भोग.; तत् कथ भोगकाले परामर्शः प्रवृत्तावुपयुज्येतेति ॥ १३ ॥

यस्तु साक्षात्प्रवृत्त्यङ्गं समीहितसाधनत्वपरामर्शः, सोऽस्त्येव प्राक् प्रवृत्तेः शास्त्रेणेत्याह—

**तदङ्गं[1] यः परामर्शस्तदस्तित्वं च मृग्यते।**
**प्राक् प्रवृत्तेस्तु[2] सोऽस्त्येव विदुषां शास्त्रतःस्फुटः॥ १४ ॥**

यदि त्ववश्यं भोगकाले परामर्शेन प्रयोजनम्, सोऽप्यस्त्येव विदुषामित्याह—

**पश्चादपि च शास्त्रज्ञा विमृशन्त्येव केचन।**

अविदुषां नास्तीति चेत् ? सत्यम्, स त्वदोष इत्याह—

**तेषामेवाधिकारश्च मा भूदविदुषां तु सः ॥ १५ ॥**
**परामर्शश्च सर्वत्र नास्ति सर्वप्रमाणकः।**

न शास्त्रादन्येन प्रमाणेन परामर्शोऽस्तीति चेत्, सोऽप्यदोष इत्याह—

---

१. तदसम्—का० सं०। २. वृत्तेस्तु—१ पु०।

**न चान्येनापरामृष्टे स्यादन्यस्याप्रमाणता ॥ १६ ॥**

तदेवमनुष्ठानकालपरामर्शो न भोगकालपरामर्शः, सोऽपि चास्त्येव विदुषामित्युक्तम्, यः साधनत्वमनुष्ठानकाले न वेत्ति, तस्याविद्वत्त्वादेवानधिकारादननुष्ठानमिष्टमेवेत्याह—

**नावबुध्येत यस्त्वेवं ममास्मात् कर्मणः फलम् ।**
**भविष्यतीत्यविद्वत्त्वाद् दैवादेवात्र[1] न क्रिया ॥ १७ ॥**

यदुक्तम्—'न भोगकालपरामर्शोऽङ्गम्' इति, तत्रोदाहरणमाह—

**अपरामृश्यमानेऽपि स्वापकाले सुखाश्रये ।**
**सम्भोगे[2] मृदुशय्यादौ प्राक्प्रवृत्तिश्च दृश्यते ॥ १८ ॥**

स्वापकालसुखस्याश्रयो यः साधन शयनादि. तस्मिन् सम्भोगवेलायां[3] स्वापवेलायामपरामृश्यमानेऽपि प्राक् प्रवृत्तिर्दृष्टेति, प्रत्युत भोगकालापरामर्शात्, एतदेव वेदस्य प्रामाण्यम्, अन्यथा तन्न स्यादित्याह—

**भोगकालेऽनुसन्दध्यात् फलं यदि तु कश्चन ।**
**रथादिकर्मवद् यागे शास्त्रं स्यादप्रकल्पकम्[4] ॥ १९ ॥**

भोगकालपरामर्शे ह्यन्वयव्यतिरेकावगम्यं फलं स्यात्, ततश्च यथा रथादिकर्मणां लोके कर्मणि वेदवत् ततोऽधिपुरुषज्ञानमिति शास्त्रीयत्वमाशङ्क्य—'अशास्त्रात्तूपसम्प्राप्तिः शास्त्रं स्यादप्रकल्पकम्' इत्यशास्त्रीयत्वं वक्ष्यति। तथाग्निहोत्रादीनां स्यादिति ॥ १९ ॥

चोदयति द्वयेन—

**तव नित्यविभुत्वाभ्यामात्मानो निष्क्रिया यदि ।**
**सुखदुःखाविकार्याश्च[5] कीदृशी कर्तृभोक्तृता ॥ २० ॥**
**अथ कर्तृत्ववेलायां दुःखादेश्चापि जन्मनि ।**
**प्राग्रूपादन्यथात्वं स्यान्नित्यतास्य विरुध्यते ॥ २१ ॥**

विभोस्तावत्संयुक्तज्यमानवियुज्यमानदेशासम्भवेन स्पन्दितुमसाथ्यान्न कर्तृत्वं सम्भवति, तथा नित्यस्याप्रच्युतप्राच्यरूपत्वात् प्रागिवाविक्रियस्य सुखादिना चाविक्रियमाणस्य कथ कर्तृभोक्तृत्वे स्याताम् ! अथ क्रियावस्थायां सुखाद्यवस्थायां च प्राच्यमकर्तृत्वरूपमभोक्तृत्वरूप च हित्वा कर्तृत्वभोक्तृत्वाभ्यां विक्रियेत, ततश्च कर्मवदनित्यः स्यात्, प्रच्युतप्राच्यरूपत्वात् । स हि विकारस्ततोऽन्यश्चेत् ततोऽसौ प्रागिवाकर्तैव स्यात्, अनन्यश्चेत्, तद्वदेवोत्पत्तिधर्मकत्वादनित्यः स्यादिति ॥२१॥

---

१. अस्य—का० ।
२. संभङ्गे—का० ।
३. सम्भोगवेलायामिति नास्ति—३ पु० ।
४. अप्रमाणकम्—का० ।
५. ०दुःखादिकार्यस्य—३ पु० ।

परिहरति—

**नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते ।**
**विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता ॥ २२ ॥**

विभोस्तावत् कर्तृत्वमुपपादयिष्यते, नित्यस्य त्वविक्रियत्वेन सत्यं न कर्तृत्व-भोक्तृत्वे, स तु प्राच्यमौदासीन्यं हित्वा कर्तृत्वभोक्तृत्वाभ्यां विक्रियत एव, न त्वेवमनित्यः स्यात् । यदि विकारमात्रमनित्यत्वम्, तदस्तु, न हि विकारमात्रेण स्वरूपोच्छेदो भवति, प्रत्यभिज्ञानात् । अन्यानन्यविकल्पश्च सर्वत्रानेकान्तवादा-श्रयणेन परिहर्त्तव्य इति ॥ २२ ॥

नन्वसत्यपि स्वरूपोच्छेदेऽवस्थात्मनोऽस्त्येवोच्छेद इति कृतनाशाकृतागमौ स्याताम् ? अत आह—

**स्यातामत्यन्तनाशेऽस्य कृतनाशाकृतागमौ ।**
**न त्ववस्थान्तरप्राप्तौ लोके बालयुवादिवत् ॥ २३ ॥**

'लोके बालयुवादिवत्' इत्येतद् विवृणोति सार्द्धेन—

**अवस्थान्तरभाव्येतत् फलं मम शुभाशुभम् ।**
**इति ज्ञात्वानुतिष्ठंश्च विजहच्चेष्टते[1] जनः ॥ २४ ॥**
**अनवस्थान्तरप्राप्तिर्दृश्यते न च कस्यचित् ।**

एवमप्यवस्थावतोऽनुच्छेदात् ततो न कर्तृभोक्त्रोरन्यत्व लौकिका मन्यन्त इत्याह—

**अनुच्छेदात् तु नान्यत्वं भोक्तुर्लोकोऽवगच्छति[2] ॥ २५ ॥**

किं पुनस्तद् रूपं येनागमापायिनीष्ववस्थासु पुमाननुवर्तते ? तद्दर्शयति—

**सुखदुःखाद्यवस्थाश्च गच्छन्नपि नरो मम ।**
**चैतन्यद्रव्यसत्तादिरूपं नैव विमुञ्चति ॥ २६ ॥**

यस्त्ववस्थान्तररूपविकारापत्तिमात्रे स्वरूपोच्छेदम्, स्वरूपानुवृत्तौ वा अव-स्थानामनुवृत्तिमातिष्ठते, तस्याय दोष इत्याह—

**दुःखिनः सुख्यवस्थायां नश्येयुः सर्व एव ते ।**
**दुःखित्वं चानुवर्तेत विनाशे विक्रियात्मके ॥ २७ ॥**

तस्मादैकान्तिकीमनुवृत्तिं व्यावृत्तिं च हित्वा कथञ्चिदनुवृत्तिः स्वर्णस्येव[3] कुण्डलादिषु पुंसोऽभ्युपगन्तव्येत्याह—

**तस्मादुभयहानेन व्यावृत्त्यनुगमात्मकः ।**
**पुरुषोऽभ्युपगन्तव्यः कुण्डलादिषु स्वर्णवत्[4] ॥ २८ ॥**

---

१. ईक्षते—३ पु० ।
२. अधिगच्छति—का० ।
३. सर्पस्येव—३ पु० ।
४. सर्पवत्—मु० पा० ।

एवमपि स्यातां कृतनाशाकृतागमौ, यद्यवस्थानां कर्तृत्वं भोक्तृत्वं च स्यात्, न तु तदस्तीत्याह—

**न च कर्तृत्वभोक्तृत्वे पुंसोऽवस्थासमाश्रिते ।**
**तेनावस्थावतस्तत्त्वात् कर्त्तैवाप्नोति तत्फलम् ॥ २९ ॥**

यद्वा, अवस्थापि नात्यन्त नश्यतीत्याह—

**न चावस्थान्तरोत्पादे पूर्वात्यन्तं विनश्यति ।**

किं तर्हि नोपलभ्यते ? अत आह—

**उत्तरानुगुणत्वात्[1] तु सामान्यात्मनि लीयते ॥ ३० ॥**

उत्तरावस्थोत्प त्यानुगुण्याय स्वरूपेणैव योऽवस्थाना साधारणः पुमांस्तस्मिन् लीयते, तेन रूपेणावतिष्ठत इत्यर्थः ॥ ३० ॥

नन्ववस्थानाममौदासीन्यकर्तृत्वादीना मिथो विरोधात् पूर्वस्यां धर्मिरूपेण व्यवस्थितायामुत्तरस्याः कथं निष्पत्तिः ? अत आह—

**स्वरूपेण ह्यवस्थानामन्योन्यस्य विरोधिता ।**
**अविरुद्धस्तु सर्वासु सामान्यात्मा प्रवर्तते ॥ ३१ ॥**

एवं नित्यात्मपक्षे सिद्ध्यति वेदप्रामाण्यमित्युक्तम्, ज्ञानमात्रे शरीरमात्रे वा न सिध्यतीत्यर्थंवन्नित्यात्मप्रतिपादनमित्याह सार्द्धेन—

**नैरात्म्यवाद[2]पक्षे तु पूर्वमेवावबुध्यते ।**
**मद्विनाशात् फलं[3] न स्यान्मत्तोऽन्यस्याथ वा भवेत् ॥३२॥**
**इति नैव प्रवृत्तिः स्यान्न च वेदप्रमाणता ।**

शरीरपक्षे तद्विनिपातात् परं न किञ्चिदस्तीति फलं नैव स्यात्, ज्ञानसन्ताने तु भवदन्यस्यैव स्यादिति ।

ननु ज्ञानमात्रवादिनो जन्मान्तर भवत्येव, तद्वद् भवतामपि सिद्धौ किं नित्येनात्मना ? अत आह सार्द्धेन—

**जन्मान्तरेऽभ्युपेतेऽपि ज्ञानमात्रात्मवादिनाम् ॥ ३३ ॥**
**ज्ञानानां क्षणिकत्वाद्धि कर्तृभोक्त्रन्यता भवेत् ।**
**निष्क्रियत्वाविभुत्वाभ्यां[4] न च देहान्तराश्रितिः[5] ॥ ३४ ॥**

सम्भवत्यपि जन्मान्तरे कर्तृभोक्तृत्वमपरिहार्यम्, न तु जन्मान्तरमपि सम्भवति, ज्ञानानां निष्क्रियत्वात्, अविभुत्वाच्च देहान्तरप्राप्त्यसम्भवादिति ॥ ३४ ॥

चोदयति—

---

१. गुणार्था—का० ।
२. नैवात्मवाद०—१ पु० ।
३. मद्विना मत्फलम्—का० ।
४. नियतत्वविभु०—का० सं० ।
५. ०तरागतिः—पाठा० ।

**एवं च सोऽपि द्रव्यान्तरं[1] भवेत् ॥ ४० ॥**

यदि तु सन्तानिभिरभिन्ना एका च सन्ततिः ततो ग्राह्यग्राहकयोर्ज्ञानाव्यतिरेके यदुक्तम्—एकज्ञानादनन्यत्वात् अनयोरप्यभेदो भिन्नाभ्यामभेदाद् वा ज्ञानस्यापि भेद इति, तदेवापादयितव्यमित्याह—

**एका चाव्यतिरिक्ता च सन्तानिभ्योऽथ सन्ततिः ।**
**भेदाभेदौ प्रसङ्क्तव्यौ ग्राह्यग्राहकयोर्यथा ॥ ४१ ॥**

तदयं सन्तानो यद्यत्यन्तभिन्नः, यदि वा कथञ्चिद्भिन्नः—द्वेधापि **वैशेषिकादि-**सम्मत एवात्मा शब्दान्तरेणोक्तः स्यादित्याह—

**तस्मादत्यन्तभेदो वा कथञ्चिद्वापि भिन्नता[2] ।**

किञ्च, अभिन्नरूपमन्तरेण[3] सन्तानवागपि न सम्भवतीत्याह—

**सन्तानस्येत्ययं चात्मा स्याद् वैशेषिकसांख्ययोः ॥ ४२ ॥**
**सन्तानोऽयं स एवेति न त्वभेदाद्[4] विना भवेत् ।**

कथम् ? इत्याह—

**वायुदीपादिसन्ताने वायुत्वादिर्न भिद्यते ॥ ४३ ॥**

भवत्वत्रापि ज्ञानत्वेनाभेद इति चेत् ? तत्राह—

**ज्ञानत्वेनाप्यभिन्नत्वं शून्यवादे निराकृतम् ।**

तदेवमसति नित्ये पुंसि न कर्त्तुः फलं सम्भवतीत्युक्तम्, इदं च न सम्भवतीत्याह—

**तथैव कर्मभिर्वेष्टा फलार्थं चित्तवासना ॥ ४४ ॥**

क्षणिकानि चैत्यवन्दनादिकर्माणि न कालान्तरे फलं जनयितुमलम्, तथा अपूर्वस्थानीया चित्ताधारा वासना फलसिद्ध्यर्थं भवद्भिरङ्गीकृता, सापि क्षणिकानां वास्यवासकभावासम्भवात् **निरालम्बनवादे** निराकृतेति ॥ ४४ ॥

व्यर्था चेयं वासना, तया वासितस्य चित्तस्य यावत्फलकालमवस्थानाभावादित्याह—

**न चात्र वासनाकालं किञ्चिच्चित्तमवस्थितम् ।**

सन्तानो वास्यत इति चेत् ? न, तस्य नित्यत्वे च क्रियाविरहिणोऽवस्तुत्वात्, क्षणिकत्वेऽपि दोषतादवस्थ्यादित्याह—

**अवस्तुत्वाच्च सन्तानः कर्मभिर्नैव[5] वास्यते ॥ ४५ ॥**

---

१. व्यक्तयन्तरम्—३ पु० ।
२. अभिन्नता—का० पु० ।
३. अभिन्नरूपान्तरेण—मु० पा० ।
४. च भेदात्—३ पु० ।
५. कर्मभिर्न्नैव—मु० पा० ।

अथ क्षणिकज्ञानाधारापि तद्विनाशे विनश्यन्त्यपि तज्जन्यज्ञानान्तरे वासनान्तरं जनयति तदपि वासनान्तरम्, तदेव वासनापरम्परायामन्तिमवासनाधारं ज्ञानं फलभोक्तृरूपं ज्ञान जनयतीत्युच्यते, तदस्तु तावत्, एवमपि कृतनाशाकृतागमौ तदवस्थावेव, न ह्येवमपि कर्तृभोक्त्रोस्तादात्म्यमस्ति ? इत्याह—

**तत्पारम्पर्यजातेऽपि भुञ्जाने कर्मणः फलम् ।**
**तादात्म्येन विना स्पष्टौ कृतनाशाकृतागमौ ॥ ४६ ॥**

यदपि कर्तृभोक्त्रोरन्यत्वाविशेषेऽपि सन्तानान्तरजानां भोक्तृत्वप्रसङ्गपरिहाराय हेतुफलभावकृतो विशेषः परैरुक्तः, सोऽपि दुःसाधन एव, क्षणिकानां हेतुफलभावस्य **निरालम्बनवादे** निराकृतत्वादित्याह दुःसाधोऽन्तेन—

**सन्तानान्तरजेभ्यश्च यो हेतुफलभावतः ।**
**विशेषः सोऽपि दुस्साधः,**

सत्यपि तस्मिन् विशेषे कृतनाशाकृतागमावपरिहृतावित्याह—

**परिहारो न चानयोः ॥ ४७ ॥**

यदा च हेतुफलभावो नास्ति तदा प्रकारान्तरेणैकभूमिसम्बन्धेन ज्ञानत्वेन वा कर्तृभोक्त्रोरेकत्वमुच्यताम्, एवमपि कथञ्चिदेकत्व दर्शित भवति, ततश्च सन्तानान्तरेऽपि अतिप्रसङ्गः स्यात् ? इत्याह—

**तस्मिन्नसत्यपि ब्रूयाः परिहारं त्वमन्यथा ।**

न चेदमप्येकत्वं सम्भवति, न हि क्रियावस्थायाम् भोगावस्थायां वा एका पृथिवी ज्ञानत्वं वानुसंहितं सर्वक्षणिकवादिनामस्तीत्याह—

**समानपृथिवीवासज्ञानत्वाद्यविशेषतः ॥ ४८ ॥**
**समान इति नाप्येतदेकत्वानुगमाद् विना ।**

यदप्युच्यते—यस्माच्चित्तात् कर्तृचित्त जात भोक्तृचित्तमपि तत्सन्तानः, तेनैकस्मादेव चित्तात् साक्षात्परम्परया वा जातयोः कर्तृभोक्त्रोरस्ति तज्जन्यतयैककर्तृत्वमिति; तदपि तेनैव एकाकारानुगमाभावेन मृषेत्याह—

**तेन यच्चित्तजं[1] तस्य सन्तान इति वो मृषा[2] ॥ ४९ ॥**

एतदेव दर्शयति—

**न हि यच्छब्दतच्छब्दौ वर्तेते भिन्नवस्तुनि ।**

न तच्चित्तजत्वं नामैकमनुगतं सम्भवति, तदभावे च यद्रूपः कर्त्ता तद्रूपोऽसौ भोक्तेति यत्तच्छब्दौ न सम्भवत इति ।

उपसंहरति—

**तेनैकात्मकतैष्टव्या तत्सन्तानात्मवादिभिः[3] ॥ ५० ॥**

---

१. चित्रजम्—का० । २. वृथा—का० पा० । ३. तत्सन्तानात्मा—१ पु० ।

चोदयति—

**नन्वन्यत्वं[1] विदन्तोऽपि[2] पुत्रादिफलसिद्धये।**
**प्रवर्तन्ते यथा तद्वज्ज्ञानसन्तानिनोऽपि नः॥ ५१॥**

ततश्च सतोरपि कृतनाशाकृतागमयोर्न दोष इति॥ ५१॥

न चैतावता सन्तानान्तरजस्यापि फलं सम्भवतीत्याह—

**अन्यत्वे च समानेऽपि यथा वंशान्तरोद्भवाः।**
**न लभन्ते फलं तद्वत् सन्तानान्तरजाः क्षणाः॥ ५२॥**

परिहरति एवमन्तेन—

**न तावद् बुद्धिरत्रैवम्,**

सविदेवात्र परिपन्थिनीति।

दृष्टान्तश्चासिद्ध इत्याह—

**अपि चात्मफलेच्छया।**
**पुत्रादिभरणे वृत्तिः स्यात् तदप्यत्र नास्ति ते॥ ५३॥**

वार्द्धके हि पिता पुत्रमुपजीवति, तथा च—

"वृद्धौ च मातापितरौ साध्वी भार्या सुत शिशुः।
अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्॥"

इति वचनाददृष्टमप्यस्तीति॥ ५३॥

एतदेव विवृणोति—

**फलान्तरमनुद्दिश्य न च पुत्रादि बिभ्रति।**
**विनष्टस्य तु नात्मीयसन्तानभरणात् फलम्॥ ५४॥**

यदि त्वस्त्येवात्रापि स्वसन्तान्युपकारजं फलान्तरम्, तदपि हि परस्ताद्भाविभिः सन्तान्यन्तरैरपि भुज्यताम्, मा नाम विनष्टेन कर्त्रा भुज्यतामिति चेत्? न, तस्यापि कर्तृगामित्वाभावात् ततः परमपि फलान्तरमपेक्ष्यम्, ततः परमपि तथेत्यनवस्था स्यादिति॥ ५४॥

दूरगमनेऽपि स्वोपभोगाभावात्, न हि दूरवर्त्त्यपि सन्तानी कर्त्तुरात्मसमो भवतीत्याह द्वयेन—

**यस्त्वनेनैव मार्गेण फलान्तरमपीच्छति।**
**स्वसन्तान्यन्तरैर्भोग्यं[3] तत्सन्तान्युपकारकम्[4]॥ ५५॥**
**अनवस्थेदृशी तस्य स्वोपभोगाद् ऋते भवेत्।**
**नैव ह्यन्योऽपि सन्तानी कश्चित् तस्यात्मवन्मतः॥ ५६॥**

---

१. न त्वन्यत्वम्—१ पु०। २. विदित्वापि—३ पु०।
३. स्वसन्तान्यतरैः—१ पु०। ४. उपकारजम्—१ पु०।

प्रत्युत दूरगमनात् सुतरामात्मीयत्वे नश्येदित्याह—

**यावद् यावच्च दूरस्थे सन्तानिनि फलं भवेत् ।**
**तावत् तावच्च तन्नश्येत् सुतरां विप्रकर्षतः ॥ ५७ ॥**

नन्वसत्यपि फलान्तरेऽपि तिर्यञ्चोऽपत्यं बिभ्रति, अत आह—

**भरणं यदपत्यानां तिर्यगादिषु दृश्यते ।**
**अज्ञानं शरणं तत्र प्राज्ञानां तु न युज्यते ॥ ५८ ॥**

एव तावद्यदुक्तम्—'जन्मान्तरेऽभ्युपेतेऽपि कर्तृभोक्त्रन्यता भवेत्' (श्लो० वा० आ० ३४) इति, तद्विवृतम् ॥ ५७ ॥

यत्तु 'निष्क्रियत्वाविभुत्वाभ्या न च देहान्तरागति ' ( श्लो० वा० आ० ३४) इति, तद्विवृणोति—

**देहान्तरे च[1] बुद्धीनां सञ्चारो नोपपद्यते ।**

न केवल देहान्तरसंयोगो न सम्भवति, पूर्वदेहवियोगोऽपि न सम्भवति इत्याह—

**पूर्वदेहाद् बहिर्भावो न च तासां प्रतीयते ॥ ५९ ॥**

कारणमाह सार्द्धेन—

**वायुना प्रेर्यमाणं हि ज्वालाद्यन्यत्र सञ्चरेत् ।**
**बुद्धेः कारणदेशात् तु प्रेरणं नास्ति केनचित् ॥ ६० ॥**
**अमूर्तत्वात् स्वयं नासावुत्प्लुत्याऽन्यत्र गच्छति ।**

न ह्यमूर्त्ताया बुद्धेः स्वयमुत्प्लव. परेण वा प्रेरण सम्भवतीति ।

अमूर्तत्वादेव च न जीवद्देहेऽपि गमन बुद्धे. सम्भवति, तेन शरीरे गच्छति सति बुद्धिस्तस्मान्निःसृता तत्रैव तिष्ठेत्, तया च विना शरीर गच्छदचेतनं स्यादित्याह—

**जीवद्देहे[2]ऽपि तेनास्या गमनं नोपपद्यते ॥ ६१ ॥**

यदप्यातिवाहिकं नाम शरीरं पूर्वोत्तरदेहयोरन्तराले ज्ञानसन्तानसन्धारणार्थं कल्प्यते, तदपि **विन्ध्यवासिना** निराकृतमित्याह—

**अन्तराभवदेहस्तु निषिद्धो विन्ध्यवासिना ।**

तदेव निराकरणं दर्शयति—

**तदस्तित्वे प्रमाणं हि न किञ्चिदवगम्यते ॥ ६२ ॥**

तदुत्पत्तिविनाशयोरनुपलब्धेश्च न किञ्चित् कारणमस्तीत्याह—

**सहसा जायते तच्च सहसैव विनश्यति ।**
**सूक्ष्मरूपादियुक्तं चेत्युत्प्रेक्षामात्रमेव तत् ॥ ६३ ॥**

---

१. देहान्तरेण—न्यायरत्नाकरसम्मतः पाठः ।    २. जीवदेहे—१ पु० ।

सत्यपि तस्मिन् ज्ञानस्यामूर्त्तस्य तत्र सञ्चारः, तेन च देहान्तरे निक्षेपो निष्प्रमाणक एवेत्याह—

**सत्यपि ज्ञानसञ्चारस्तत्र स्यान्निष्प्रमाणकः ।**
**तेन चान्यशरीरेषु पुर्नानिक्षेपकल्पना ॥ ६४ ॥**

ज्ञानसञ्चारे च कललमांसाद्यवस्थायामपि ज्ञानमस्तीत्यङ्गीकर्त्तव्यम्, तच्च साहसमित्याह—

**कललादिषु विज्ञानमस्तीत्येतच्च साहसम् ।**

कथं साहसम् ? इत्याह—

**असञ्जातेन्द्रियत्वाद्धि न तत्रार्थोऽवगम्यते ॥ ६५ ॥**

विनाप्यर्थविभासेन न सविन्मात्ररूपेण ज्ञान तस्यामपि दशायामवतिष्ठत इति चेत् ? तत्राह—

**न चार्थावगते[1]रन्यद् रूपं ज्ञानस्य युज्यते[2] ।**

प्रकाशजननमेव हि ज्ञानस्य स्वरूपम्, न च तदसति प्रकाश्ये सम्भवति, स्वांशप्रकाशश्च **विज्ञानवादे** निराकृत इति ।

कथ तर्हि मूर्च्छासुषुप्तितुरीयेषु, न हि तत्राप्यर्थविबोधोऽस्ति ? अत आह—

**मूर्च्छादावपि तेनास्य सद्भावो नोपपद्यते ॥ ६६ ॥**

तत्रापि नास्त्येव विज्ञानमिति ॥ ६६ ॥

अथ स्वरूपेणानवस्थितापि सा शक्तिरूपेण तास्ववस्थासु धीरवतिष्ठत इत्युच्यते ? अत आह—

**न चापि शक्तिरूपेण तदा धीरवतिष्ठते ।**

कारणमाह—

**निराश्रयत्वाच्छक्तीनां स्थितिर्न ह्यवकल्पते ॥ ६७ ॥**

आत्मा न तावद् भवतामस्ति, तद्यदि भूतेन्द्रियाधारा स्यात्, ततस्तच्चैतन्यप्रसङ्गात् जन्मान्तरानुपपत्तिः, चितिशक्त्याधारत्वमेव चैतन्यमित्याह—

**यदि भूतेन्द्रियाधारा ज्ञानशक्तिर्भवेत् ततः ।**
**तच्चैतन्यं प्रसज्येत न च जन्मान्तरं भवेत् ॥ ६८ ॥**

भूतचैतन्ये समनन्तरप्रत्ययात् जन्यत्वमपि बुद्धीना न स्यादित्याह—

**परिणामविवेकाद्यैः शक्त्यभिव्यक्त्यनुग्रहात् ।**
**तेभ्य एव भवेद् बुद्धिर्न बुद्ध्यन्तरपूर्विका ॥ ६९ ॥**

भूतानां हि चिच्छक्तियोगे तेभ्य इव घटादिपरिणामाद् विविक्तात् शरीराकारपरिणामाच्छक्त्यभिव्यक्तिरूपादनुग्रहादिन्द्रियादिसहायाद् बुद्धिरुत्पद्यते, न समनन्तरप्रत्ययादिति ॥ ६९ ॥

---

१. न चाथ विगतेः—का० । २. गम्यते—३ पु० ।

यदा चैवं भूतेभ्य एव सर्वबुद्धीनामुत्पत्तिः न बुद्ध्यन्तरात्, तदा यत् कललबुद्बुदमूर्च्छादिष्वपि ज्ञानसिद्ध्यर्थं परैरनुमानमुक्तम्, उत्तरकाले हि जातस्य मूर्च्छादिभ्यश्चोत्थितस्य या बुद्धयः ता द्वितीयादिबुद्धयो बुद्ध्यन्तरप्रसूता दृष्टा इति पूर्वस्या अपि बुद्ध्यन्तरं कारणमनुमीयते, तस्या अपि बुद्ध्यन्तरमित्येवं कललादिष्वपि बुद्धिसिद्धिरिति, तत्र दृष्टान्तः साध्यविकल., अस्मन्मते[1]ऽप्यसत्यपि भूतचैतन्येऽस्यैव साध्यवैकल्यमिति द्वितीयादिबुद्धीनामपीन्द्रियाद्यनुगृहीतात्मनिमित्तत्वाद् बुद्ध्यन्तरप्रसूतत्वाभावादित्याह—

**तथैवोत्तरकालेऽपि पूर्वबुद्धेर्यदुच्यते ।**
**बुद्ध्यन्तरप्रसूतत्वं दृष्टान्तोऽत्र न विद्यते ॥ ७० ॥**

यदि तु विनैवाधारेण चितिशक्तिरवतिष्ठेत तदा शक्त्यात्मैव शब्दान्तरेणोक्तः स्यादित्याह—

**अथाधारविनिर्मुक्ता शक्तिः स्यात् कललादिषु[2] ।**
**पश्चाद्विज्ञानसिद्ध्यर्थमात्मा शक्त्यभिधो भवेत् ॥ ७१ ॥**

अथ शक्तेराधारः कश्चित् कल्प्यते तथाप्यात्मैवासौ, नान्यः ? इत्याह—

**शक्त्याधारप्रक्लृप्तौ वा नात्मनोऽन्यः प्रकल्प्यते ।**

यदुक्तम्, 'अमूर्त्तत्वान्निष्क्रिया बुद्धिर्न देहान्तरसञ्चारक्षमा' इति, तदयुक्तम्, न हि मूर्त्तानामपि क्रियावशाद्देहान्तरप्राप्तिः क्षणिकाना क्रियासम्भवात् सदृशेषु क्षणेषु उत्तरोत्तरदेशे सन्तन्यमानेषु क्रियाविकल्पो भवति ज्वालावज्जलबुद्बुदवच्च, तथैव बुद्धीनामपि देहान्तरप्राप्ति[3] सिद्ध्यति, जीवद्देहेऽप्येव देशान्तरप्राप्तिः समर्थनीया, अत आह—

**ज्वालाबुद्बुदवद् वृत्तिर्न चाधाराद् विना धियाम् ॥ ७२ ॥**

जलाधारा हि बुद्बुदसन्ततिः, वर्त्त्याधारा च ज्वाला, न च बुद्धीनामाधारोऽस्ति, व्योमाधारत्वे तच्चैतन्यप्रसङ्गः । मूर्त्ताना च क्रिया प्रत्यक्षादिप्रमाणसिद्धा न शक्यापलपितुम्, क्षणभङ्गस्तु **शब्दाधिकरणे** निराकरिष्यत इति ॥७२॥

तदवश्यं कृतनाशाकृतागमपरिहाराय नित्यः पुमान् प्रतिपादयितव्यः, स च भोक्तृत्वसिद्ध्यर्थं चेतन, देहान्तरप्राप्तये च सर्वगतः, सर्वगतो ह्यसावगच्छन्नेव शक्नोति देहान्तरेण सम्बन्धुम्, अयमेव तस्य शरीरेण सम्बन्धो यद्भोगायतनत्वेनात्मसात्करणमित्याह—

**ज्ञानशक्तिस्वभावोऽतो नित्यः सर्वगतः पुमान् ।**
**देहान्तरक्षमः कल्प्यः सोऽगच्छन्नेव योक्ष्यते ॥ ७३ ॥**

---

१. 'अस्मन्मते' इत्यादिग्रन्थः ३ पु० कुण्डलितः । २. कल्पनादिषु—का० सं० ।
३. ०प्राप्तिर्न—मु० पा० ।

ननु विभुश्चेन्निष्क्रिय , कथ कर्त्ता ? कर्त्ता न चेत् कथ कर्तृवाचिना यजमानशब्देनोच्येत—यज्ञायुधी यजमान इति, तदुक्तम्—'न चास्य यजमानत्वम्' इति ? अत आह—

**यजमानत्वमप्यात्मा सक्रियत्वात् प्रपद्यते ।**

कथ विभो. सक्रियत्वम् ? अत आह—

**न परिस्पन्द एवैकः क्रिया नः कणभोजिवत् ॥ ७४ ॥**

**काणादा** हि उत्क्षेपणादिपञ्चक स्पन्दात्मकमेव कर्मेच्छन्ति, न चाय तथेति ॥ ७४ ॥

स्पन्दात्मके तर्हि विष्णुक्रमणादौ कथं कर्तृत्वम् ? अत आह—

**न च स्वसमवेतैव कर्तृभिः क्रियते क्रिया ।**

उभयोर्व्यतिरेकमाह—

**क्रिया धात्वर्थमात्रं स्यादन्याधारेऽपि कर्तृता ॥ ७५ ॥**

**अन्याधारेऽपि** कर्मणीत्यर्थः ॥ ७५ ॥

कि पुनरस्पन्दात्मक कर्म, यत्रात्मा साक्षात् कर्त्ता ? तद् दर्शयति—

**सत्ताज्ञानादिरूपाणां कर्ता तावत् स्वयं पुमान् ।**

यागादीनामादिशब्देन ग्रहणमिति ।

ननु भूताश्रये स्पन्दकर्मणी, कथमात्मनः कर्तृत्वम्, न ह्यकुर्वन् कर्ता ? अत आह—

**योऽपि भूतपरिस्पन्दस्तत्राधिष्ठानतो भवेत् ॥ ७६ ॥**

आत्माधिष्ठितानि हि भूतानि स्पन्दन्ते, मृतावस्थायां विपर्ययदर्शनात्, तेनाधिष्ठानद्वारमात्मन. कर्तृत्वमिति ॥ ७६ ॥

यद्वा, उद्देशोऽस्य[1] व्यापार इत्याह—

**तदुद्देशप्रवृत्तेश्च या या देहेन्द्रियैः क्रिया ।**

**क्रियते पुरुषेणैव सा सा सर्वा कृतोच्यते[2] ॥ ७७ ॥**

यदा ह्यात्मा भूतादिपरिस्पन्दमुद्दिशति तदैव तानि परिस्पन्दन्ते, अतो युक्तम्—स्पन्देऽपि प्रयोजककर्तृत्वमात्मनः, स्वतन्त्रकर्तृत्वं तु भूतानामेवेति ॥ ७७ ॥

तदा स्वतन्त्रत्वमप्यात्मन एव भूतानामस्वातन्त्र्यादित्याह—

**नैव ह्येषां प्रवृत्तिः स्यात् पुरुषेणापरिग्रहे ।**

**अस्वातन्त्र्यादतो नैषां परिस्पन्देऽपि कर्तृता ॥ ७८ ॥**

यद्वा, यदेवेदं धर्माधर्माभ्या भूतेन्द्रियाणामर्जनम् अयमेवात्मनो व्यापारः, अनर्जितानां प्रवृत्त्यभावादित्याह—

---

१. उद्देश्यो०—मु० पा० । २. सर्वाकृता—का० ।

**तत्कर्मोपार्जितैश्चैतैः क्रियमाणेषु कर्मसु ।**
**कर्तृता यजमानानाम् ऋत्विक्परशुकर्मवत् ॥ ७९ ॥**

ननु परिक्रयबलात् तत्र युक्त प्रयोजकत्वेनैव कर्तृत्वम्, स्पन्दे तु कथम् ? अत आह—

**यथा परिक्रयाम्नानाद् ऋत्विग्द्वारा क्रियेष्यते ।**
**गमनादिविधेस्तद्वद् भूतद्वारत्वमाश्रितम्[1] ॥ ८० ॥**

एतदेवोपपादयति—

**क्रयो यथात्मनो नास्ति गमनादि तथैव हि ।**
**विधीयते च तेनात्र परद्वारास्य कर्तृता ॥ ८१ ॥**

ननु 'यस्य व्यापारं धातुराह स कर्ता' इति स्मरणाद् धातूक्तक्रियासमवायित्वमेव कर्तृत्वम्, अत कथमन्यसमवेतेन कर्मणान्यस्य कर्तृ वम् ? अत आह—

**यथा वा देवदत्तस्य च्छेदने काष्ठसंश्रिते ।**
**कर्तृत्वमेवं पुंसः स्याच्छरीरगमनादिषु ॥ ८२ ॥**

ननूद्यमननिपातन छेदन तच्च देवदत्ताश्रयमेव, नोद्यमननिपातनमात्रम् सति[2] द्विधाभवन छेदनमुच्यते, अतो द्विधाभवनफलावच्छेदेनैव तस्य छेदनत्वम् । न च धातूक्तव्यापाराधारत्व कर्तृत्वम्, किन्तु प्रत्ययोपात्तभावनासमवायित्वम् । 'यस्य व्यापार धातुराह' इति यस्य व्यापारस्याख्यातोक्त धातुरवच्छिनत्तीत्यर्थः । आख्यातं च क्वचिद् धात्वर्थसमानाश्रय व्यापारमाह, यथा—विक्लिद्यन्ति तण्डुला इति; क्वचिदन्याश्रयम्, यथा—रोचन्ते मोदका इति, रोचन्त इतीच्छावचनाद्धातोरुत्पन्नमाख्यातमिष्यमाणगत व्यापारमाह, क्वचिदुभयम्—पचति देवदत्तः, पचन्ति तण्डुला इति ॥ ८२ ॥

ननु युक्त द्वैधीभावफलाख्यातोपात्तोद्यमननिपतनव्यापारयोगाद् देवदत्तस्य कर्तृत्वम्, आत्मनस्तु कथम् ?—इत्याशङ्कामनुभाष्य परिहरति—

**व्यापारान्तरतस्तत्र कर्तृत्वं चेदिहापि नः ।**
**सङ्कल्पसत्त्ववत्त्वाभ्यां[3] पुमानिष्टः प्रयोजकः ॥ ८३ ॥**

तदेव विभज्य द्वेधा दर्शयति—

**साधारण्येन कर्तृत्वं सत्त्ववत्त्वेन कर्मसु ।**
**सङ्कल्पनैः पुनर्भेदात् प्रतिकर्मास्य कर्तृता ॥ ८४ ॥**

सत्ताव्यापारेण सर्वक्रियासाधारण कर्तृत्वम् सङ्कल्पप्रयत्नादिभिस्तु प्रतिकर्म व्यवस्थितमिति ॥ ८४ ॥

---

१. आश्रिताम्—का० सं० । २. ०मात्रे सति—मु० पा० ।
३. सत्त्वबन्धाभ्याम्—३ पु० ।

ननु देवदत्तवदात्मनश्चलनात्मको व्यापारो नास्तीति कथमस्य भूतक्रियासु प्रयोक्तृत्वम् ? अत आह द्वयेन—

**न च सर्वत्र तुल्यत्वं स्यात् प्रयोजककर्मणाम् ।**
**चलनेन ह्यसिं योद्धा प्रयुङ्क्ते च्छेदनं प्रति ॥ ८५ ॥**
**सेनापतिस्तु वाचैव भृत्यानां विनियोजकः ।**
**राजा सन्निधिमात्रेण विनियुङ्क्ते कदाचन ॥ ८६ ॥**

तस्माद् देवदत्तवत् परसमवेतेऽप्यात्मनः कर्तृत्व सिद्धमित्युपसंहरति—

**तस्मादचलतोऽपि स्याच्चलने कर्तृतात्मनः ।**
**यथैवाभिद्यमानस्य देवदत्तस्य भेत्तृता ॥ ८७ ॥**

अथाप्यवश्यं चलनव्यापारेण प्रयोक्तुर्भवितव्यम्, सोऽप्यस्त्येवात्मन इत्याह त्रिपादेन—

**कर्मान्तरैर्यदा दानं स्वव्यापारः स एव वा ।**
**भूतक्रियासु पुंसः स्यात्,**

प्राग्भवीयभूतपरिस्यन्दात्मकं यदात्मनः कर्म तदुपात्तेष्वेवैहिकेषु भूतेषु वर्त्तमानेषु तेनैव स्पन्देनास्ति प्रयोक्तृत्व पुंस इति ॥ ८८ ॥

प्राग्भवीयभूतव्यापारेऽपि तर्हि कथ कर्तृत्वम् ? अत आह त्रिपादेन—

**तानि भूतान्तरैः पुनः ॥ ८८ ॥**
**तानि भूतान्तरेभ्यश्चेत्येवमादिर्न[1] विद्यते ।**

तान्यपि हि ततः पूर्वतरभूतपरिस्पन्दनिर्मितानि, तान्यपि हि तथेत्यनादिरेव संसारः । ननु देहेन क्वचित् स्पन्दे साक्षादात्मना कर्तृत्वम्, साक्षात्कर्तृत्वाधीनं चान्यत्र तद्द्वार कर्तृत्वम्, अतः कथमात्मनः कर्तृत्व स्यात् ? सत्यम्, यदि स्पन्दद्वारमेव सर्वत्र कर्तृत्वं स्यात्, सकल्पादिक तु यत्साक्षादात्मकर्तृकं तद्द्वारेण भूतपरिस्पन्देऽपि स्थिते कर्तृत्वे तद्द्वारेण भूतान्तरस्पन्देषु सम्भवति कर्तृत्वम् । एवं पूर्वपूर्वभूतस्पन्दद्वारम् उत्तरोत्तरभूतस्पन्देषु कर्तृत्वमिति ।

यद्यनात्मभूतैरपि भूतैः कृतं कर्म पुरुषं बध्नाति, ततोऽनात्मीयैरपि कृतं प्रक्षीणकर्माणमपि पुमास लिम्पेत, तत्र मोक्षाऽनुपपत्तिरत आह—

**कर्मक्षयात् त्वनात्मीयैः कृतं कर्म न लिम्पति ॥ ८९ ॥**

न ह्यनात्मीयभूतकृतेष्वस्य साक्षाद्वा प्रयोक्तृत्वेन वा कर्तृत्वमुक्तम्, तत्रोदाहरणमाह—

**अन्वारम्भणमानादावौदुम्बर्यादिवर्त्तिनि ।**
**स्वरूपासम्भवाद् यष्टुः शरीरेणैव कर्तृता ॥ ९० ॥**

---

१. इत्यादिरेवं न—१ पु० ।

एतदेव दृष्टान्तनिदर्शनेनोपसहरति—

**तस्माद् यथाकृतौ शास्त्रं प्रवृत्तं व्यक्तिमाश्रयेत् ।**
**तथा पुंसि प्रवृत्तस्य भूतेन्द्रियसमाश्रयः ॥ ९१ ॥**

यथा आकृतेः साधनत्वे विहितमपि व्यक्तिद्वार तथाऽत्मनो देहद्वारमिति ॥ ९१ ॥

**भाष्यकारेण** "प्राणादिभिरेनमुपलभामहे" ( शा० भा० पृ० ७२ ) इति **वैशेषिकादि**सम्मता हेतव उपन्यस्ता, तत्र प्रयोजनमाह—

**परैरभिगतान्**[1] **पूर्वमात्महेतून् निरस्यति ।**

तेषु ह्यनिरस्तेषु शिष्यास्तेष्वहम्प्रत्यये च सामान्यदृष्टयो भवेयुरिति ।

"ननु शरीरमेव प्राणित्यपानिति च" ( शा० भा० पृ० ७३ ) इति चोद्यस्योत्तरम् "न, प्राणादय. शरीरगुणविधर्माण" (शा० भा० पृ० ७३) इति, तद् विच्छिद्य व्याख्येयमित्याह—

**नेत्येतावदवच्छेद्यम्,**

विच्छिन्नस्योत्तरस्यार्थमाह—

**विधर्माण इमे यतः ॥ ९२ ॥**

वैधर्म्यं च अयावद्देहभावित्वमुक्त भाष्ये, तदाक्षिपति—

**अयावद्**[2] **देहभावित्वं कार्श्यादेरपि दृश्यते ।**

अथ स्थौल्याद्यवस्थान्तर तत्रास्तीत्युच्यते, तथात्रापि, [3]मृत्युरप्यवस्थान्तरमस्त्येव ? इत्याह—

**अथावस्थान्तरं तत्र तथा मृत्युरपीष्यताम् ॥ ९३ ॥**

परिहरति—

**एतावानिह भेदः स्याच्छरीरे दृढ एव या ।**
**प्राणाद्यपगतिस्तत्र निमित्तं न प्रतीयते ॥ ९४ ॥**

दृढे तदवस्थे शरीरे या प्राणाद्यपगतिः सा शरीरगुणत्वे प्राणादीनां निर्निमित्तैव स्यात् । ननु मृत्युर्निमित्तम्, कोऽयं मृत्युर्नाम ? नन्वसौ प्राणाद्यपगम एव, तस्यैव निमित्तमान्विष्यते, तच्च नास्तीति ।

कथ नास्ति तत आह द्वयेन—

**गुणो द्रव्यविनाशाद् वा विनाशमुपगच्छति ।**
**गुणान्तरोपपाताद् वा**[4] **तस्मादुत्कृत्य नाश्यते ॥ ९५ ॥**
**न तावत्तद् द्वयं मृत्यौ सर्वस्यैवोपलभ्यते ।**
**अविनष्टशरीरस्य प्राणादिश्चापगच्छति ॥ ९६ ॥**

---

१. अपिहितान्—३ पु० पा० । २. अयाचेद्—१ पु० ।
३. मृत्युरिवाव०—मु० पा० । ४ उपघाताद्—३ पु० ।

**तस्मादुत्कृत्येति**। द्रव्यादुद्धृत्य तदुच्छेदेनेत्यर्थः। **मृत्युः** प्राणाद्यपगमः, तत्रान्यतरदपि निमित्तं नास्तीत्यर्थ.॥ ९५-९६ ॥

तदेवमुपपादित देहाधर्मत्व प्रयोगेण दर्शयति—

**तस्मान्न देहधर्मत्वं प्राणादेरिति गम्यते।**
**तस्मिन् दृष्टेऽप्यसद्भावात् स्रग्विलेपनगन्धवत्॥ ९७ ॥**

मा भूद् देहधर्म, तथापि कथमात्मलिङ्गत्वम्? वायोर्ह्यूर्ध्वाधोगतिविशेषः प्राणापानशब्दाभ्यामुच्यते, स च वायुधर्मः कथमात्मलिङ्गमुच्यते, तिर्यग्गमनशीलस्य वायोर्नाकस्मादूर्ध्वाधोगति. सम्भवतीति तद्धेतुः प्रयत्नोऽनुमीयते, प्रयत्नश्च गुणत्वाद् गुणिनमनुमापयति, स चात्मेति।

"सुखादयश्च स्वयमवगम्यन्ते, रूपादय इव शरीरगुणा परेणापि" (शा० भा० पृ. ७३) इति भाष्यमयुक्तम्, प्राणापानयोरप्यन्तर्वर्त्तिनोः परेणानवगमात् केन विशेषेण सुखाद्युपन्यास? अत आह—

**बहिर्वृत्तित्वमप्यस्ति प्राणादेरिति गम्यते।**
**परेन्द्रियैः, सुखादिस्तु नान्तरत्वात् प्रतीयते॥ ९८ ॥**

यदि नेन्द्रियैर्गम्यते, केन तर्ह्यवगम्यते? अत आह—

**प्रहृष्टवदनत्वादिलिङ्गगम्यं सदैव हि।**

शङ्कते—

**अन्तःस्थितेर्न दृष्टिश्चेत्,**

परिहरति—

**पाटितेऽप्यनुपग्रहात्॥ ९९ ॥**

'न' इत्यध्याहार इति॥ ९९ ॥

एतदेव विवृणोति दिरन्तेन—

**अन्तःशरीरे रूपादि पाटितस्योपलभ्यते[1]।**
**न सुखादिः,**

एतदेव प्रयोगेण दर्शयति—

**अतोऽस्यासौ न मनोबुद्धिवद् गुणः॥ १०० ॥**

तथापि कथमात्मसिद्धि? अत आह आत्मान्तेन—

**गुणत्वादाश्रितत्व हि सुखादेः स्याद् रसादिवत्।**
**य आश्रितः[2] स आत्मा,**

एव सुखादीना शरीरगुणत्वनिराकरणेन शरीरादन्यस्मिन्नात्मनि **वैशेषिका-**

---

१. रूपादिरितरस्यो०—३—पु०। २. यदाश्रित —का०।

दिमतेन साधिते ज्ञानमात्रात्मवादी त्वाह—"कुत एष सम्प्रत्ययः" ( शा० भा० पृ. ७४ ) इत्यादिना, तस्यार्थमाह—

**इति ब्रुवाणस्यैतदुत्तरम् ॥ १०१ ॥**

**गुणानां परतन्त्रत्वात् गुणवाननुमीयते ।**

**सिद्धे गुणत्वे तत् त्वस्मात् प्रत्यसिद्धं सुखादिषु ॥ १०२ ॥**

ज्ञानविशेषा हि सुखादय , ज्ञान स्वतन्त्र न कस्यचिदन्यस्य गुणः, अतो नान्यस्तद्वानस्ति, यत. शरीरस्य तद्वत्तानुपपत्तेरात्मा सिद्ध्यतीति ॥ १०१ ॥

एवं सुखादीना लिङ्गत्व निराकृत्य इच्छालिङ्गत्वमाशङ्कितम्, इच्छा हि नादृष्टेऽन्यदृष्टे वा सम्भवति, अतिप्रसङ्गात् ? तदियमुपलब्धिसमानकर्तृका सती ज्ञानातिरिक्त स्थायिनमात्मानमुपकल्पयतीति, तत्रोत्तरम् "अनुपपन्नमिति नः क्व सम्प्रत्ययः" ( शा० भा० पृ ७७ ) इति । यदा हि स्थिरः कर्त्ता न दृष्टः तदा यथादर्शनमन्योपलब्धे वासनावशात् तत्सन्ततिजन्यस्यान्यस्येच्छा भवति, नान्यसन्ततिजन्यस्येति व्यवस्था भविष्यतीति ॥ १०२ ॥

पुन. स्मृतेर्लिङ्गत्वमाशङ्क्य तथै निराकृतम्, तदाक्षिपति—

**भेदेन किमुपन्यस्ता तुल्यन्यायेच्छया स्मृतिः ।**

तुल्यन्यायतामेव दर्शयति—

**उभयं न ह्यदृष्टेऽर्थे वासनातश्च सिद्ध्यति ॥ १०३ ॥**

नादृष्टेऽन्यदृष्टे वा सम्भवति अतिप्रसङ्गादिति यच्चोद्यं तदुभयोस्तुल्यम् । वासनातः सिध्यति व्यवस्थेत्युत्तरमपि तुल्यमिति ॥ १०३ ॥

परिहरति द्वयेन—

**उपलब्धिमनाश्रित्य स्मृत्यैवेच्छोपजायते[1] ।**

**उपलब्धिसमानोऽस्याः कर्ता नैकान्ततो भवेत् ॥ १०४ ॥**

**उपलब्ध्यनुसारेण स्मृत्यात्मा पुनरिष्यते ।**

**समानस्तेन कर्तास्ति तदर्थं पुनरुच्यते ॥ १०५ ॥**

स्मृतिविषया हीच्छा, सेयमन्तरेणाप्युपलब्धिसमानकर्तृतां स्मृतिव्यवस्थयैव व्यवस्थां लभते । स्मृत्यात्मा पुनरुपलब्ध्यनुसारेणैव भवद् अवश्यं समान कर्तारं गमयति, अन्यथा व्यवस्थानुपपत्तिरित्यनेन विशेषेण पुनरुपन्यास इति ॥ १०५ ॥

कथं तर्हि स्मृतेरपीच्छावदनिराकरणम् ? अत आह—

**तत्रापि तु समानायां सन्ततौ वासना यतः ।**

**तस्मात् सत्यपि भिन्नत्वे स्मरणं व्यवतिष्ठते ॥ १०६ ॥**

---

१. स्मृत्यैवेच्छो०—मु० पा० ।

"अन्येद्युर्दृष्टे परेद्युरहमिदमदर्शमिति भवति प्रत्यय" (शा० भा० पृ. ७९) इति सिद्धान्तभाष्यम्, तस्यार्थमाह—

**हेतुष्वेवं परोक्तेषु प्रतिषिद्धेषु सम्प्रति ।**

अत्र चोद्यभाष्यम् "परत्राप्यहशब्दो भक्त्या दृश्यते, अहमेव पुत्रोऽहमेवासौ देवदत्तः" ( शा० भा० पृ ७९ ) इत्यादि, तत्र 'अहं गच्छामि' इत्यत्र कथं परगोचरत्वमहंशब्दस्य ? इत्यत आह—

**अहम्प्रत्ययविज्ञेयः स्वयमात्मोपपाद्यते ॥ १०७ ॥**
**अहं यामीत्यहंशब्दः शरीरार्थः प्रयुज्यते ।**
**गन्तृत्वात् तस्य, न ह्यात्मा गमनं प्रतिपद्यते ॥ १०८ ॥**

अत्र परिहारभाष्यम् "न वयमहमितीमं शब्द विज्ञानातिरिक्ते स्थायिनि विज्ञातरि हेतुत्वेनोद्दिशामः, किं तर्हि ? शब्दाद् व्यतिरिक्तं प्रत्यभिज्ञाप्रत्ययम्" ( शा० भा० पृ. ७९ ) इति, तदयुक्तम्, स्मृतिवदेव हि प्रत्यभिज्ञापि वासनावशादेवोपपन्ना नैकान्ततः शक्नोति पूर्वापरकालावस्थायिनं विज्ञातारमुपस्थापयितुम्, अत आह—

**स्मरणप्रत्यभिज्ञाने भवेतां वासनावशात् ।**
**अन्यार्थविषये, ज्ञातुः प्रत्यभिज्ञा तु दुर्लभा[1] ॥ १०९ ॥**

यद्यर्थान्तरविषयया स्मृत्या प्रत्यभिज्ञया चार्थापत्त्या विज्ञातारं कल्पयेम, ततो वासनावशादेवोपपत्तिरुच्येत, ज्ञातृप्रत्यभिज्ञा त्वियमुच्यते **भाष्यकारेण**—वयमेव ह्यो वयमेवाद्येति । तेन ज्ञातृरूपेण प्रत्यभिज्ञारूपेणाहप्रत्ययेन ज्ञानादन्यस्य स्थिरस्य ज्ञातु. सिद्धिरिति ॥ १०९ ॥

कथं पुनरहम्प्रत्ययेन ज्ञातुः स्थायित्वम् ? अत आह—

**अहं वेद्मीत्यहिं बुद्धिर्ज्ञातारमधिगच्छति[2] ।**
**तत्र स्याद् ज्ञातृविज्ञानं तदाधारोऽथ वा पुमान् ॥ ११० ॥**

ज्ञातैवाहम्प्रत्ययस्य विषयः, तद्यद्यहंमतिर्ज्ञानालम्बना अतस्तदेव ज्ञातृ, अथास्याविषयो ज्ञानाधारोऽन्य' ततः स एव ज्ञाता, तत्र ज्ञानस्य क्षणिकत्वेन प्रत्यभिज्ञाहम्प्रत्ययविषयत्वानुपपत्तेरन्यस्य ज्ञातु. सिद्धिरिति ।। ११० ।।

ननु शरीरविषयत्वं कस्मान्न भवति, तदेव युक्तम्; अह स्थूलोऽह कृशः' इति कार्श्यादिसामानाधिकरण्यात् ? अत आह भिरन्तेन—

**कृतं भूतेन्द्रियाणां च चैतन्यप्रतिषेधनम् ।**
**समस्तव्यस्तसङ्घातविवेकपरिणामिनाम् ॥ १११ ॥**
**साङ्ख्यादिभिः,**

---

१. दुर्बला—१ पु० ।  २. अभिगच्छति—१ पु० ।

समस्तानामाग्नेयादीनामिव सहतानां व्यस्ताना सौर्यादीनामिवेतरेतरनिरपेक्षाणा सङ्घातस्य समुदायस्य विवेकपरिणामिनां भूतान्तरेभ्यो विवेकेन देहात्मना परिणतानामिति ॥ १११ ॥

तमेव प्रतिषेधे दर्शयति—

**अशुद्धत्वात् सङ्घातात् सन्निवेशतः[1] ।**
**मृतवच्च शरीरत्वाद् भूतत्वाद् बाह्यभूतवत् ॥ ११२ ॥**

अशुद्धत्व त्रिगुणात्मकत्व बीभत्सानिमित्तत्व वा । अत्र शरीरत्वातिरिक्तेपु चतुर्षु बाह्यभूतवदिति दृष्टान्तः । शरीरत्वे तु मृतवदिति ॥ ११२ ॥

किञ्च, एव भूतचैतन्यवादी वक्तव्य.—कि सर्वाणि चेतयन्ते, कि वैकमिति ? पूर्वस्मिन् पक्षे सर्वेषा समत्वादसम्बन्ध. स्यादित्याह समत्वादन्तेन—

**चेतनत्वे हि[2] सर्वेषां न सम्बन्धः परस्परम् ।**
**समत्वात्,**

एकचैतन्ये त्वितरेण विनापि लोष्टादावपि पृथिव्यादिकस्य चैतन्य स्यात्, न हि तस्य चैतन्ये अन्यदपेक्षणीयम् । शरीर तु पञ्चस्वपि गतमित्याह—

**एकचैतन्येऽन्यस्याङ्गत्वं विरुध्यते ॥ ११३ ॥**

तदय प्रयोग — 'येयं शरीरगता भूतान्तरसृष्टा पृथ्वी सा न चेतयते, पृथिवीत्वाल्लोष्टवत्' इति । तथा जलादावपि दर्शयितव्यमिति ॥ ११३ ॥

प्रयोगान्तरमाह—

**सङ्घातसन्निवेशौ च न स्तः पारार्थ्यवर्जितौ ।**

शय्यादौ सङ्घातत्वं सन्निवेशत्व च पारार्थ्येन व्याप्त दृष्ट शरीरस्यापि पारार्थ्यमनुमापयतीति ।

तथापि कथं तस्याचैतन्यम्, अस्य वा कथ चैतन्यम् ? अत आह—

**भोक्ता च चेतनः कश्चिदस्तीत्यत्राविरुद्धता ॥ ११४ ॥**

स्वयचेतनस्य हि स्वयमेव भोक्तृत्वात् पारार्थ्यं विरुद्धयेत, अतोऽन्यः कश्चिच्चेतनो भोक्तेति ।

विस्तरेण शरीरचैतन्य **शास्त्रदीपिकायामेव** निरस्तमिति ॥ ११४ ॥

स्थिते शरीरस्याचेतनत्वे ज्ञानस्य ज्ञातृत्वे प्रत्यभिज्ञानुपपत्तिरित्याह—

**यदि स्याद् ज्ञानमात्रं च क्षणिकं ज्ञातृ तत्र वः ।**
**न भवेत् प्रत्यभिज्ञानं पूर्वज्ञातरि सम्प्रति ॥ ११५ ॥**

कीदृशं पुनः प्रत्यभिज्ञानम् ? इति तत्स्वरूप दर्शयति—

**ज्ञातवानहमेवेदं पुरेदानीं च वेद्म्यहम् ।**

---

१. सघातासन्निवेशतः—३ पु० । २. चेतनत्वेन—३ पु० ।

तस्य ज्ञानक्षणविषयत्वासम्भवं विकल्पपूर्वकं विवृणोति सार्धत्रयेण—

**तस्य ज्ञानक्षणः को नु विषयः परिकल्प्यताम् ॥ ११६ ॥**
**पूर्ववृत्ते हि विषये ज्ञातवानिति सम्भवेत्[1] ।**
**जानामीति न सत्यं स्यान्नेदानीं वेत्त्यसौ ततः ॥ ११७ ॥**
**यदीदानीन्तनो ग्राह्यो जानामीत्युपपद्यते ।**
**ज्ञातवानित्यदोऽसत्यं नैवाज्ञासीदयं यतः ॥ ११८ ॥**
**उभयग्राह्यतायां तु द्वयमप्यनृतं भवेत् ।**
**न ह्येतौ ज्ञातवन्तौ वा जानीतो वाधुना पुनः ॥ ११९ ॥**

सन्तानविषयत्वमपि न सम्भवतीत्याह—

**सन्तानो न च तद्ग्राह्यो द्वैरूप्यस्यासम्भवात् ।**
**ज्ञातवान् न ह्यसौ पूर्वमवस्तुत्वान्न वाधुना ॥ १२० ॥**

स्थायित्वेऽर्थक्रियाया असम्भवात् अवस्त्वेव, क्षणिकत्वे तु ज्ञानवदेव प्रत्यभिज्ञानुपपत्तिरिति ॥ १२० ॥

न च ज्ञानत्वसामान्यं विषयः, तस्य भवतामभावादित्याह—

**सामान्यं न च किञ्चित् ते ज्ञातृ पूर्वापरक्षणे ।**

तद्विषयश्चाहम्प्रत्ययः सन्तानान्तरेऽपि स्यात्, तत्रापि ज्ञानत्वसम्भवादिति ।

भिन्नत्वेऽपि पूर्वापरज्ञानयोः सादृश्यादेकत्वभ्रम इति चेत् ? न, विसदृशेष्वपि दर्शनादित्याह—

**सादृश्यात् प्रत्यभिज्ञा चेन्न स्यादसदृशेषु[2] सा ॥ १२१ ॥**

अस्ति च विसदृशेष्वहमंशस्य प्रत्यभिज्ञेत्याह—

**गामहं ज्ञातवान् पूर्वमश्वं जानाम्यहं पुनः ।**

तत्रापि ज्ञानशब्दवाच्यतया अस्त्येव सादृश्यमिति चेत्, ततोऽतिप्रसङ्गः स्यादित्याह—

**अथ ज्ञातृत्वसामान्यं[3] तत् स्याद् देहान्तरेष्वपि ॥ १२२ ॥**
**तत्र सर्वेण विज्ञाते भवेदहमिति स्मृतिः ।**

यदि सत्यपि सादृश्ये सन्तानान्तरे 'स' इत्येव प्रत्ययो भवति न 'अहम्' इति, तथा सत्येकसन्तानान्तरवद् घटादिबहिरर्थवच्च स इत्येव स्यादित्याह—

**एकसन्तानजे चापि स इति स्यात् क्षणे मतिः ॥ १२३ ॥**
**यथा देहान्तरज्ञाने घटादौ वा बहिः स्थिते ।**

---

१. सम्मतम्—१ पु० ।    २ विसदृशेषु—पाठान्तरम् ।
३. ज्ञातृत्वसादृश्यम्—३ पु० ।

ननु सत्यप्येकस्मिन् विज्ञातरि वासनावशादेव प्रत्यभिज्ञा, तथा चेद्भिन्नेष्वपि समानसन्ततिजेषु ज्ञानक्षणेषु तद्वशादेवास्तु, न च सा सन्तानान्तरेऽस्तीति नातिप्रसङ्गः? अत आह—

**ज्ञातरि प्रत्यभिज्ञां च वासना कर्तुमर्हति ॥ १२४ ॥**
**नातस्मिन् स इति ज्ञानं न ह्यसौ भ्रान्तिकारणम् ।**

स्मृतिहेतुर्हि संस्कारो वासना, सा अनुभूतेऽर्थे स्मृतिं जनयतीति युक्तम्, न त्वसौ भ्रान्तिहेतुः, येनातस्मिंस्तद्ग्रहोऽनया स्यादिति ।

भ्रान्तित्वमप्ययुक्तमित्याह—

**न चाहम्प्रत्ययो भ्रान्तिरिष्टो बाधकवर्जनात् ॥ १२५ ॥**

ननु कार्श्यादिसामानाधिकरण्याद् देहविषयोऽहम्प्रत्ययः ? अत आह—

**ज्ञातुरन्यश्च विषयस्तस्य न स्यात् स्वभावतः ।**
**अहं प्रत्ययविज्ञेयो ज्ञाता नः सर्वदैव हि ॥ १२६ ॥**

स्वभावोऽयमहम्प्रत्ययस्य यद् ज्ञातृविषयत्वम्, सर्वदैव तत्र ज्ञातुरवभासात् । न च देहस्य ज्ञातृत्व सम्भवतीति न तद्विषयत्वमिति ॥ १२६ ॥

कथं तर्हि कार्श्यादिसामानाधिकरण्यम् ? अत आह सान्तेन—

**गुरुः स्थूलः कृशो वाहमिति देहेऽपि या मतिः ।**
**भ्रान्तिः सा,**

देहात्मनोरभेदभ्रमाद् देहगत कार्श्यादिकमात्मन्यध्यवस्यतीति ।

भ्रान्तित्वे कारणमाह—

**भेदरूपं हि गुरु मे तन्वितीष्यते[1] ॥ १२७ ॥**

'गुरु मे शरीरम्', 'तनु मे शरीरम्' इत्यस्मदर्थाद् भेदेन शरीर परामृश्यत इति ॥ १२७ ॥

भेदपरामर्शादिवेन्द्रियाणामप्यस्मदर्थाद् भेदात् सिद्धमज्ञातृत्वमित्याह—

**इदं ममेदृशं चक्षुर्मनो मे भ्रान्तमित्यपि ।**
**इन्द्रियेष्वपि भेदेन व्यवहारश्च दृश्यते ॥ १२८ ॥**

ननु 'कृशोऽहम्' इत्यभेदोऽपि परामृश्यते, 'कृशं मे शरीरं तनु मे शरीरम्' इति भेदोऽपि, तदिहाभेदो भ्रान्तो भेदस्तु परमार्थ इ[ति] कथमवगम्यते ? अत आह—

**अज्ञातृत्वस्य[2] सिद्धत्वाद् विरोधाद् भेदवत्यपि ।**
**प्रत्यासत्तिनिमित्तस्तु स्यादभेदमतिर्भ्रमः ॥ १२९ ॥**

शरीरस्य त्वज्ञातृत्वं सिद्धम्, अतस्तस्य ज्ञातृगोचराहम्प्रत्ययगोचरत्व-विरोधाद् ज्ञातुर्भिन्नेऽपि शरीरे तत्संसर्गकृतोऽयमभेदभ्रम इति ॥ १२९ ॥

---

१. ईक्ष्यते—का० । २. अज्ञातत्वस्य—पु० ।

ननु 'मम शरीरम्' इतिवत् 'ममात्मा' इत्यपि भेदव्यपदेशोऽस्ति, तथा हि व्यपदिशन्ति—'नायमर्थो ममात्मना ज्ञातः' इति, इतश्चाप्यात्मनोऽन्यदात्मान्तरं प्रसज्येत ? अत आह—

**ममात्मेति मतिभेदव्यपदेशेन यात्मनः।**
**तत्रावस्थात्मना भेदं ज्ञानस्याश्रित्य कल्पना ॥ १३० ॥**

ज्ञानं हि कथञ्चिद् अवस्थारूपेणात्मनो भिन्नत्वान्ममेति भेदेन व्यपदिश्यते, न तदेवात्माभेदविवक्षयात्मेति, अतो नात्मान्तरप्रसङ्ग इति ॥ १३० ॥

केचित् तु अस्मिन् प्रयोगे शरीरमेव ममेति व्यपदिश्यत इति मन्यन्ते, तत्तु अयुक्तमित्याह पादत्रयेण—

**ममेत्येतस्य मुख्यार्थो नात्मनोऽन्यः प्रतीयते।**
**तेनासौ भेदहेतुः स्याद्,**

ज्ञातृवचनस्य ममशब्दस्य यात्मनोऽन्यो मुख्योऽर्थोऽस्ति, तेनासावेव पूर्वभेदव्यपदेशस्य हेतुरिति।

कस्मात् पुनरात्मान्तरमेव नेष्यते ? अत आह—

**भेदश्च ज्ञानहेतुकः ॥ १३१ ॥**

ज्ञानहेतुको हि भेदो न व्यपदेशमात्रात् सिद्ध्यति, न चेह ज्ञातृज्ञानशरीरेभ्यो वस्त्वन्तरं प्रतीयते, अतो नात्मभेद इति ॥ १३१ ॥

इतश्च शरीरेऽहमानो भ्रान्तिरित्याह—

**ये चेहाज्ञातनानात्वास्तेषां देहेष्वहं मतिः।**

तेषामपि हि ज्ञातृत्वाभिमानेनैव देहेऽहम्प्रत्यय', ते हि देहमेव ज्ञातारं मन्वानास्तत्राहमान कुर्वन्ति, तेनाविवादमस्य ज्ञातृगोचरत्वमिति।

शरीरगोचरत्वं भ्रान्तिरेवेत्याह—

**तत्राप्यात्माभिमानेनेत्यहम्बुद्धिर्ध्रुवात्मनि ॥ १३२ ॥**

ये तु श्रवणमननादिभिर्ज्ञातुर्देहस्य च व्यक्तं नानात्वं जानन्ति तेषां देहेऽहंमतिर्निवर्तत इत्याह—

**ये तु विज्ञातनानात्वास्ते देहेष्वनहंकृताः।**

ननु ज्ञातर्यप्यहंमानो निवर्तत एव, योगिनामहङ्कारममकारौ ह्यनात्मन्यात्मभ्रान्त्यभिमानावेव ? अत आह—

**जानाम्यहमितीदं तु ज्ञानं नैव निवर्त्तते ॥ १३३ ॥**

योगिनामपि 'अहम्' इति 'जानामि' इति चोभयमपि ज्ञानं न निवर्तत इति ॥ १३३ ॥

कारणमाह—

**तन्निवृत्तौ न तेषां स्याद् ध्यानं, शिष्योपदेशने ।**
**प्रवृत्तिर्दृश्यते सा च, तेनात्मा तैः प्रतीयते ॥ १३४ ॥**

समानविषयबुद्धिधारैव ध्यानमुपासनमिति चोच्यते, न च स्वात्मन्यहं-बुद्धेरन्या बुद्धि' सम्भवति, अतोऽस्ति योगिनामप्यहंमान, तथा 'जानामि'इत्येव-मात्मानमनवगच्छत' कथ शिष्योपदेशे प्रवृत्ति । दृश्यते च योगीश्वरस्यापि भगवतो **वासुदेव**स्यार्जुनोपदेशे प्रवृत्तिरहमानश्च 'अह सर्वस्य जगत." ( भ० गी० ७-६ ) इत्यादिभिरिति योगिभिरप्यात्मा ज्ञाता प्रतीयत इति ।

एव तावदस्ति स्वात्मन प्रत्यभिज्ञा, परेषामपि चेष्टाविशेषादात्मप्रत्यभि-ज्ञाव्यापारावसायनुमीयत इत्याह—

**शास्त्रार्दर्थविज्ञाते यद्यहं ज्ञातवानिति[1] ।**
**नावगच्छेत् ततः सर्वः प्रवर्त्तेतादितः पुनः ॥ १३५ ॥**

तदेव सर्वजनीनात्मप्रत्यभिज्ञानान्नैरात्म्यवादस्य जीवच्छरीर निरात्मक शरीरत्वान्मृतशरीरवदित्यादेर्बाध स्यादित्याह त्रिपादेन—

**तेनास्मात् प्रत्यभिज्ञानात् सर्वलोकावधारितात् ।**
**नैरात्म्यवादबाधः[2] स्यात्,**

प्रतिहेतवश्च सन्तीत्याह—

**एते च प्रतिहेतवः ॥ १३६ ॥**

**ह्यस्तनाहम्मतिग्राह्यो ज्ञाताद्याप्यनुवर्त्तते ।**
**अहंप्रत्ययगम्यत्वाद् इदानीन्तबोद्धृवत् ॥ १३७ ॥**
**एष वा ह्यो[3] भवेज्ज्ञाता ज्ञातृत्वात् तत एव वा ।**
**ह्यस्तनज्ञातृवत्,**

तत एवाहम्प्रत्ययगम्यत्वादिति—

**तेषां प्रत्ययानां च साध्यता[4] ॥ १३८ ॥**

प्रयोगान्तरमाह—

**एकसन्तानसम्बन्धिज्ञात्रहम्प्रत्ययत्वतः ।**
**ह्यस्तनाद्यतनाः सर्वे तुल्यार्थाश्चैकबुद्धिवत् ॥ १३९ ॥**

एकसन्तानसबन्धिनोऽहंप्रत्यया एकज्ञातृविषया इति प्रतिज्ञेति ॥ १३९ ॥

**भाष्यकारेण** 'अविनाशी वा अरेऽयमात्मा' इति ब्राह्मणमुपन्यस्तम्, तदयुक्तम्, न ह्यनेन नास्तिकाः प्रतिबोध्यन्ते, अत आह—

**वेदादेवात्मनास्तित्वं यो नाम प्रतिपद्यते ।**
**विरोधं वात्मना ब्रूयात् तं प्रति ब्राह्मणाभिधा ॥ १४० ॥**

---

१. श्रुतवानिति—का० । २. ०दलाभः—मु० पा० ।
३. ०बाह्यः—३ पु० । ४. साध्यताम्—१ पु० ।

यो वेदवादी शिष्यः, यो वा "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति तं प्रेत्य संज्ञास्ति" इति भूतचैतन्याभिधानाद् वेदविरोधमात्मनो मन्यते, तत् प्रतिबोधनाय ब्राह्मणाभिधानमिति ॥ १४० ॥

न केवलमुपनिषद्वचनादेवात्मास्तित्वम्, अग्निहोत्रादिविधयोऽपि हि नित्यं भोक्तारमन्तरेणानुपपद्यमानास्तमर्थाद् द्योतयन्त्येव, तमेव तूपनिषदो गहनतया विस्पष्टीकर्तुं श्रुत्यादिभिरभिदधतीत्याह—

**अन्यथानुपपत्तेश्च विधिनात्मन्यपेक्षिते ।**
**अस्तित्वद्योतनादेतैरर्थाक्षिप्तसमर्थनम् ॥ १४१ ॥**

**भाष्यकारेण** "यदि विज्ञानादन्यदस्ति विज्ञातृ विज्ञानमपास्य तन्निदर्श्यताम्" ( शा० भा० पृ. ८० ) इति चोदयित्वा "स्वसंवेद्यः स सम्भवति, नासावन्येन शक्यते द्रष्टुम्, अशक्यत्वाच्च नासावपि शक्यते निदर्शयितुम्" (शा० भा० पृ. ८१) इति परिहृत्यास्मिन्नर्थे ब्राह्मणमुपन्यस्तम्—"शान्तायां वाचि किंज्योतिरेवायं पुरुष आत्मा ज्योतिः सम्राडिति होवाच" (वृ० उ० ६. ३) इति। तद् व्याचष्टे—

**शान्तायां वाच्यशक्तायामात्मा केन प्रकाश्यते ।**
**आत्मनैव प्रकाश्योऽयमात्मा ज्योतिरितीरितम् ॥ १४२ ॥**

"परेण न गृह्यत इत्यत्रापि ब्राह्मणं भवति, अगृह्यो न हि गृह्यत इति परेण न गृह्यत इत्येतदभिप्रायमेतद् भवति, कुतः ? स्वयं ज्योतिष्ट्ववचनात्" ( शा० भा० पृ. ८२ ) इति भाष्यार्थमाह—

**अग्राह्य इति सामान्यात् सर्वेणेति[1] प्रतीयते ।**
**आत्मज्योतिष्ट्ववचनात् परैरित्यवतिष्ठते[2] ॥ १४३ ॥**

"केन पुनरुपायेनायमन्यस्मै कथ्यते" इत्यत्रापि "स एष नेति नेति" इति ब्राह्मणमुपन्यस्य "यत्तु परः पश्यति" इत्यादिना च तद् व्याख्याय पुन "उपमानाद् वोपदिश्यते यादृश भवानात्मानमुपलभते तमहमपि तादृश पश्यामि" (शा० भा० पृ. ८३) इति भाष्यम्, तदयुक्तम्; सदृशादर्थात् सदृशान्तरे बुद्धिरुपमानम्, इद तु "प्रसिद्धसाधर्म्यात् साध्यसाधनम्" ( न्या० सू० १.१.६ ) **नैयायिकोक्त**मागमाद् बहिर्भूतमित्युक्तम् ? अत आह—

**अर्थादेवार्थबुद्धिर्या सा शुद्धैवोपमोच्यते ।**
**सादृश्यबोधनं शब्दैरुपमानागमौ पुनः ॥ १४४ ॥**

सत्यम् तच्छुद्ध मुख्यमुपमानम्, इद तु शाब्दमपि सादृश्यविषयत्वादुपमानमित्युक्तमिति ॥ १४४ ॥

ननु परात्मन्यवगते तत्सादृश्येनात्मोपदिश्यते, तदवगतिरेव कुतः ? अत आह—

---

१. परेणेति पाठान्तरम् । २. अवधार्यते इति पाठान्तरम् ।

**आत्मज्ञानाविनाभूतदृष्टचेष्टानिरूपणात् ।**
**परेषामात्मविज्ञानम् अनुमानादुदाहृतम् ॥ १४५ ॥**

"यदासौ पुरुषः" (शा० भा० पृ. ८३) इत्यादिना भाष्येण, "शास्त्रादावद्धं-विज्ञाते" ( श्लो० वा० आ० १३५ ) इत्यत्र चैतदनुमानमुदाहृतमिति ।

यत्तु पूर्वपक्षे भूतचैतन्यार्थे ब्राह्मणमुपन्यस्तम्—"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" (शा० भा० पृ. ८५) इति, तत् परिहरति—

**सदसद्ग्राह्यनाशात्मपरिकीर्तनमूढया ।**
**चोदितः पूर्वपक्षोऽयमिति सिद्धान्तमब्रवीत् ॥ १४६ ॥**

श्रुतिरेव ह्यस्य वाक्यस्यान्यार्थतां दर्शयतीति । तथा हि, पूर्वमजरामृतत्वम-भिधाय "विज्ञानघन" इत्यादिना विनाशित्वानुकीर्तनात् सदसद्रूपकीर्तनाच्च सम्मूढया मैत्रेय्या पूर्वापरविरोधाख्य पूर्वः पक्षो याज्ञवल्क्यं प्रति चोदितः, अत्रैव मा भगवान्मोहान्तमपीपददिति विरुद्धाभिधानात् । एव पूर्वपक्षश्चोदित इति कृत्वा सिद्धान्तविरोधपरिहार याज्ञवल्क्यः "अविनाशी वारेऽयमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति" ( शा० भा० पृ. ८५ ) इत्यन्तेनाब्रवीदिति ।

सिद्धान्तश्रुतिं व्याचष्टे पादत्रयेण—

**अविनाशी स्वरूपेण पुरुषो या तु नाशिता ।**
**मात्राणां साऽधिकाराणाम्,**

नित्य एवायमविनश्वरः पुरुषः, नित्यस्यापि तु मात्रादिसंसर्गो विनाशीति कृत्वा तदभिप्राय 'तान्येवानु विनश्यति' इति विनाशवचनम् । एतदुक्तम् भवति—"विज्ञानघन." इति ज्ञानशक्तिस्वभावस्यात्मनोऽभिधानम्, न ज्ञानमात्रस्य, स च भूतेभ्यः समुत्थितो मुक्तस्तान्येव भूतान्यनु विश्यति, मोक्षकाले तस्य मात्रा-शब्दवाच्यैः इन्द्रियैरधिकारशब्दवाच्याभ्यां धर्माधर्माभ्या सम्बन्धनाशात् तेनात्मना पुरुषो विनष्टो भवतीत्यर्थः । गौण वा विनष्टत्व प्रमाणागोचरत्वाद् विनष्ट इव भवतीत्यर्थः । "न प्रेत्य सञ्ज्ञास्ति" इति । भूतेभ्यः प्रेतस्य मुक्तस्य कारणाभावान्न ज्ञानमस्तीत्यर्थः ।

प्रकरणार्थमुपसहरति—

**भूतादीनामसंज्ञिता ॥ १४७ ॥**

भूतेन्द्रियविज्ञानानामसञ्ज्ञित्वमचैतन्यम्, अन्यस्तु तेभ्यो नित्यश्चेतन इति ॥ १४७ ॥

ननु प्रतिपादितोऽप्यात्मनः शरीरादिविवेको न दृढरूपेण हृदयेऽवतिष्ठते, 'अहं स्थूलः' 'अहं गच्छामि'इति शरीर एव बलादहंमानो भवति, तदत्र कोऽभ्युपायः, येनाभिप्रेतविविक्तात्मबोधो निश्चलो दृढो भवति ? अत आह—

**इत्याह नास्तिक्यनिराकरिष्णु-**
**रात्मास्तितां भाष्यकृदत्र युक्त्या ।**
**दृढत्वमेतद्विषयश्च बोधः[1]**
**प्रयाति वेदान्तनिषेवणेन ॥ १४८ ॥**

**इत्यात्मवादः**

नित्यात्मसत्तामात्रेणैव वेदप्रामाण्यसिद्धेस्तन्मात्रमिह प्रतिपादितम् । दाढ्यार्थिभिस्तु वेदान्तविहितेष्वेव श्रवणमनननिदिध्यासनादिषु यतितव्यमिति ॥१४८॥

इति श्रीपार्थसारथिमिश्रकृतौ न्यायरत्नाकरे आत्मवादः समाप्तः

इति पञ्चमं सूत्रम्

## अथ शब्दनित्यताधिकरणम्

### कर्मैके तत्र दर्शनात् ( जै० सू० १.१.६ )

प्रयोजनाभावेनाधिकरणारम्भमाक्षिपति—

**यद्यनित्यत्वपक्षेऽपि शब्दादर्थोऽवगम्यते ।**
**अनादिर्व्यवहारश्च नित्यत्वं किं नु साध्यते ॥ १ ॥**

वेदप्रामाण्याय हीदं नित्यत्वप्रतिपादनम्, असत्यपि च नित्यत्वे तत्सिद्धयति । यदि ह्यसति नित्यत्वे शब्दादर्थप्रतीतिर्न स्याद्, यदि वा समयापेक्षा ततोऽनवबोधकत्वात् समयकारिपुरुषापेक्षया च न स्यात् प्रामाण्यम्, यदा त्वनित्यादपि शब्दादनित्यत्ववादिनामिवार्थप्रतीतिः सिध्यति, शब्दव्यवहारानादितया च न पुरुषस्य क्वचित् स्वातन्त्र्यम्, तदा किं नित्यत्वसाधनेन ? सम्बन्धनित्यत्वं न सिध्यतीति चेन्मा सैत्सीत्, अनित्येऽपि तस्मिन् पुरुषस्वातन्त्र्याभावादेव प्रामाण्यसिद्धेरिति ॥ १ ॥

परिहरति—

**सत्यमिच्छन्ति तेऽप्येवं न्यायस्तत्र परीक्ष्यते ।**
**न पराभ्युपगत्यैव प्रामाण्यमवतिष्ठते ॥ २ ॥**

सत्यमनित्यत्ववादिनोऽपि शब्दादर्थप्रतीतिमिच्छन्ति, न च तदिच्छामात्रेणासौ सिद्धयति, न्यायेन त्वस्मादर्थप्रतीतिः सिध्यति नेति निरूप्यमिति ॥ २ ॥

तमेव न्यायं निरूपयति—

**यदा हि क्षणिकः शब्दो न शक्तोऽर्थावधारणे ।**
**युक्त्यावधार्यते तत्र निर्मला वेदधीर्भवेत् ॥ ३ ॥**

---

[1] विषयप्रबोध.—२ पु० ।

न हि क्षणिकस्य सम्बन्धग्रहणं सम्भवति, तदभावेऽपि प्रत्यायकत्वेऽवश्यं समयापेक्षाङ्गीकर्त्तव्या। तदनपेक्षायां वा नेत्रादिवत् प्रथमश्रवणेऽपि प्रत्याययेत्, अतः शब्दस्यार्थप्रत्यायकत्वासम्भवाद् निर्निमित्तैव वेदार्थप्रतीतिः स्यादिति ॥३॥

कथं तर्हि लोके शब्दादर्थप्रतीतिः ? अत आह—

**निर्मूलैरपि विज्ञानैर्दृष्टार्थेषु भवेद् गतिः।**
**श्रुतिमात्राश्रयत्वात्तु धर्मो दौःस्थित्यमाश्रितः[1] ॥ ४ ॥**

व्यवहारानादित्वमसति शब्दनित्यत्वेऽनुपपन्नमित्याह ख्येयमन्तेन—

**अनादिव्यवहारत्वमादिमद् वस्तुसंश्रयम्।**
**प्रत्याख्येयम्,**

नन्वादिमद्भिरपि घटादिभिरनादिरुदकाहरणादिर्दृष्टो व्यवहारः ? अत आह—

**घटत्वादिजातौ व्यक्तिभ्रमो हि सः ॥ ५ ॥**

एतदेव दर्शयति—

**स्थिते कूटस्थनित्यत्वे व्यवहारस्य नित्यता।**
**कूटस्थेन विनैतेन न तस्यालम्बनं भवेत् ॥ ६ ॥**

कथम् ? इत्याह—

**प्रसिद्धत्वाद् ऋते सर्वो व्यवहारो हि नेष्यते।**

उदकाहरणाय क्षिप्रं घटमाजिहीर्षतावश्य तस्य तत्सामर्थ्यमवगन्तव्यम्, न चाभिनवस्य सामर्थ्यज्ञान सम्भवति, तदवश्य तज्जातीयाना तत्सामर्थ्यमवगम्याभिनवस्यापि तयैव जात्या सामर्थ्यमनुमाय व्यवहर्त्तव्यम्। तदिह सास्नादिमदर्थप्रतिपादनाय गोशब्दमभिनवमुच्चारयता केनचिदुपलक्षणेन तत्प्रतिपादकत्वमवगन्तव्यम्। न तावच्छब्दत्वेन, अश्वादिशब्दानामप्युच्चारणप्रसङ्गात्, न च गोशब्दत्वं नामावान्तरसामान्यमस्तीत्युक्तमिति।

उपसंहरति—

**तस्माद् वेदप्रमाणार्थं नित्यत्वमिह साध्यते ॥ ७ ॥**

सूत्रकारेण कर्मत्वं कृतकत्वपर्याय शब्दस्य प्रतिज्ञाय '**तत्र दर्शनाद् अस्थानात्**' (जै० सू० १.१.६-७) इत्यादयो हेतवो दर्शिता., तत्र 'अस्थानात्' इति हेतुर्विनाशाख्यानित्यत्वस्याकृतकत्वान्न कृतकत्वप्रतिज्ञया सङ्गच्छते; भाष्यमप्यनित्यः शब्द इति सौत्रस्य कृतकत्वस्य न व्याख्यात्वेन सङ्गच्छते, अत आह—

**परस्पराविनाभावादनित्यकृतकत्वयोः।**
**कारणं द्वयसिद्धयर्थं किञ्चित् कस्यचिदुच्यते ॥ ८ ॥**

यदेवानयोरेकस्य कस्यचित् साधनत्वेनोच्यते तदेव व्याप्त्येतरदपि साधयद्

---

1. आगतः--३ पु०।

द्वयसिद्धयर्थं भवति। तेन 'अस्थानात्' इति भवत्येव कृतकत्वस्य हेतुः, भाष्यमप्यनित्यत्वद्वारेण कृतकत्वप्रतिज्ञार्थमेवेति ॥ ८ ॥

**"सत्त्वान्तरे च यौगपद्यात्"** ( जै० सू० १. १. ९ ) इति सूत्रम्, तस्यार्थं प्रयोगेण दर्शयति—

**नानादेशावगम्यत्वाद् युगपत् तुल्यबुद्धिभिः।**
**अस्माभिः, कृतकः शब्दो भवेदक्षरलेख्यवत् ॥ ९ ॥**

युगपन्नानादेशेऽवगमादित्येतावानेव हेतुः, **'तुल्यबुद्धिभिः'** इति चानुवादमात्रम्। अतुल्यबुद्धिभिरपि[1] गम्यमानः कृतक एव न नित्य इति ॥ ९ ॥

अथ वा, भेदप्रसाधनद्वारेणायं हेतुः कृतकत्वं साधयति, न साक्षादित्याह—

**यौगपद्योपलम्भाद् वा भेदो भेदाच्च कार्यता।**

नन्वनैकान्तिको यौगपद्योपलम्भो भेदे, गोत्वादिसामान्यस्याकाशस्य चानेकत्र युगपदुपलभ्यमानस्यापि भेदाभावात्? अत आह—

**अविभुत्वे हि युगपन्नैको नानावगम्यते ॥ १० ॥**

सविशेषणोऽयं हेतुरित्यर्थः ॥ १० ॥

नन्वसिद्धमविभुत्वम्? अत आह तान्तेन—

**कात्स्न्र्येन चावगम्यत्वादेकदेशे घटादिवत्।**
**शब्दस्याविभुता,**

गगनं हि तत्तदुपाधिपरिच्छिन्नमेव प्रदेशेषु गृह्यते न कात्स्न्र्येन, सामान्यस्यापीदमेव कात्स्न्र्यं यः सर्वव्यक्त्यनुरागः। न चैतस्यैकैकत्र तथावगतिः, एकैकव्यक्त्यनुरक्तप्रतीतेः। अतो युक्तं तयोर्विभुत्वम्, शब्दस्य त्वेकैकत्र कात्स्न्र्येनावगमाद् घटवदविभुत्वमिति।

उपसंहरति—

**तस्मादन्यतास्य मुखान्तरे ॥ ११ ॥**

युगपदनेकवक्त्रुच्चारितस्य गकारस्य नानात्वम्, अविभुत्वे सति युगपन्नानादेशेऽवगमात् घटवदिति ॥ ११ ॥

एकत्वे वा नानादेशेऽवगमो न[2] स्यादित्याह—

**एकः सन्नेकदेशस्थो यदैकेन प्रयुज्यते।**
**तदा वक्त्रन्तरे न स्यादेकवक्तृमुखादिवत् ॥ १२ ॥**

एको हि युगपदेकत्रैव देशेऽवतिष्ठते, ततश्चैकेन प्रयुज्यमानस्तन्मुखेऽवस्थितो मुखान्तरे न स्यात्, यथा तदेव मुखं मुखान्तर इति ॥ १२ ॥

---

१. तुल्य०—मु० पा०। २. मु० पु० नास्ति।

कृत्रिमत्वे तु युक्तो नानादेशोपलम्भ इत्याह—

**कार्यत्वे स्यात् क्रियाभेदात् फलभेदः प्रतिक्रियम् ।**

कथं तर्हि प्रत्यभिज्ञा ? अत आह—

**तेनैकबुद्धिः सादृश्यात् स्फुटेऽन्यत्वेऽवकल्पते ॥ १३ ॥**

ज्वालादाविवेत्यभिप्रायः ॥ १३ ॥

भवतु यौगपद्योपलम्भाद् भेदः, कथं तु भेदात् कार्यता, भिन्ना एव गकारा नित्या भवन्तु ? अत्राह—

**नित्यत्वे त्वेकबुद्धेः[1] स्यान्न किञ्चिद् भ्रान्तिकारणम् ।**
**कामं देशा इति न्यायात् तच्चैकत्वं विरुद्ध्यते ॥ १४ ॥**

न भेदे नित्यत्वं सम्भवति, भेदे हि सत्येकबुद्धेः सादृश्यादिवशेन भ्रान्तित्वं वक्तव्यं स्यात् । न च नित्यत्वे भ्रान्तिकारणमस्या शक्यं वक्तुम्, नित्यत्वहानिप्रसङ्गात् । तथा च वक्ष्यति—"अपि चैकरूप्ये सति देशभेदे च कामं देशा एव भिन्नाः स्युः, न तु शब्दः" इति । तस्मान्नित्यत्वे सत्यवश्यमेकत्वं स्यात्, तच्च नानादेशोपलम्भेन विरुद्धम् । प्रत्यभिज्ञा तु सादृश्यादप्युपपन्नेत्युक्तम् । ततो भिन्ना एव गकाराः, नानादेशोपलम्भाद् भेदाच्च प्रत्यभिज्ञाया भ्रान्तित्वम्, तद्भ्रान्तित्वाच्च शब्दस्य कार्यता, तदिदम्—"नानादेशेषु युगपच्छब्दमुपलभामहे तदेकस्य नित्यस्यानुपपन्नम्, असति विशेषे नित्यस्य नानेकत्वम्" ( शा० भा० पृ० ८९ ) इत्यनेन भाष्येणोक्तम् । अयं च भाष्यार्थः—तदेकस्य नित्यस्यानुपपन्नमिति, एकस्येति हेतुर्नित्यो ह्ययमेकः[2] स्यादेकत्वे चानुपपन्नं नानादेशोपलम्भनमिति ।

कथं पुनर्नित्यस्यैकत्वम्, नित्या एव बहवो गकारा भवन्तु ? इत्याशङ्क्योक्तम्—असति विशेषे नित्यस्य नानेकत्वमिति विशिष्टरूपस्य गकारस्य नित्यत्वपक्षे नानेकत्वं सम्भवति । तथा सत्यविशेषबुद्धेरप्रामाण्यापत्तेः, तदप्रामाण्ये च नित्यत्वहानिरिति ॥ १४ ॥

ननु नानादेशोपलब्धिरपि व्यञ्जकत्वनिदेशभेदादेवोपपन्ना ? अत आह—

**न च व्यञ्जकभेदेन देशभेदोपलम्भनम् ।**

कारणमाह—

**प्रदीपैर्भिन्नदेशस्थैर्नं भिन्नो व्यज्यते घटः ॥ १५ ॥**

असिद्धश्च व्यञ्जकानां देशभेद इत्याह—

**व्योमानवयवं चैषां ध्वनीनामाश्रयो मतम् ।**

---

१. ०बुद्धिः—का० । २. ०मेके—मु० पा० ।

न हि व्योम्नः स्वतोऽवयवशो वा भेदोऽस्ति, इति।

न परं व्यञ्जकानाम्, व्यङ्ग्यानामपि शब्दाना भवन्मते स एव देशः, अतः सर्वैरेकत्रैव शब्दोऽभिव्यज्यते, भिन्नाश्रयसमवाये सति स्यादपि कथञ्चिद् गोत्वादिवन्नादेशेषु यौगपद्यम्, न त्वसावस्तीत्याह—

**सव्यङ्ग्यानामतः सर्वैर्व्यक्तिरेकत्र ते भवेत् ॥ १६ ॥**

अस्मत्पक्षे तु वायवीय शब्दो वाय्ववयवदेशत्वाद् भिन्नदेशो भवतीति युक्तमिति ॥ १६ ॥

"**प्रकृतिविकृत्योश्च**" (जै० सू० १. १ १०) इति सूत्रार्थं प्रयोगेण दर्शयति—

**वस्त्वन्तरविकार्यत्वात् स्मृतिसादृश्यसाधितात् ।**
**इकारादेरनित्यत्वं दधिक्षीरगुडादिवत् ॥ १७ ॥**

हेतुसिद्धयर्थं च **भाष्यकारेण** स्मृतिः सादृश्य चोक्तम्, "इको यणचि" ( पा० सू० ६. १. ७७ ) इति स्मृतिकारसादृश्यं यकारस्य वक्ष्यत इति। तदिदं 'स्मृतिसादृश्यसाधितम्' इत्यनेन दर्शितमिति ॥ १७ ॥

"**वृद्धिश्च कर्तृभूम्नास्य**" ( जै० सू० १.१ ११ ) इति सूत्रार्थमाह—

**हेतुवृद्धयनुसारित्वात् कार्यतास्य घटादिवत् ।**

मृत्पिण्डादिकारणाल्पत्वमहत्त्वानुसारिणो हि घटादेस्तत्कार्यत्व दृष्टमिति।

व्यञ्जकवृद्धया वृद्धिरिति चेत् ? तत्राह—

**न हि दीपसहस्रेऽपि व्यञ्जके वर्द्धते घटः ॥ १८ ॥**

"**समं तु तत्र दर्शनम्**" ( जै० सू० १.१ १२-१७ ) इत्यादे. सूत्रषट्कस्य तात्पर्यमाह—

**अनैकान्तिकता तावद्धेतूनामिह कथ्यते ।**

**ताव**च्छब्देनासिद्धतापि वक्ष्यति। तेन दूषणद्वयमनेन षट्केन कथ्यते इति।

"प्रयत्नानन्तरदर्शनात्" इत्यस्य तावदनेकान्तिकत्व दर्शयति—

**प्रयत्नानन्तरा[1] दृष्टिर्नित्येऽपि न विरुद्धयते ॥ १९ ॥**

दर्शनं हि तत्र सत्तां गमयति, न कालान्तरे निषेधति। तेन विपक्षेऽपि कालान्तरे निषेधति, सत्त्वसम्भवात् तत्र दर्शनमनैकान्तिकमिति ॥ १९ ॥

मा भून्निषेधः, सत्ता तु कालान्तरे कथम् ? अत आह—

**तस्मात् तत्रैव दृष्टत्वादन्यत्रादृष्टकल्पना ।**

यस्मात् कालान्तरे सत्त्वमनिषिद्ध तस्मात् तत्रैवानन्तरकाले सप्रत्यभिज्ञानेन प्रत्यक्षेण दृष्टात्वादन्यत्रापि काले प्रत्यक्षेणादृष्टस्यापि सद्भावस्य कल्पना शक्यत इति।

---

१. अनन्तरम्—का०।

शङ्कते—

**प्रागूर्ध्वानुपलब्धी[1] चेद्धेतुत्वेन विवक्षिते ॥ २० ॥**

परिसंख्यारूपेण 'तत्रैव दर्शनात्' इत्येव प्रागूर्ध्वानुपलब्धेर्हेतुत्वमिति ॥ २० ॥

तथाप्यनैकान्तिकमित्याह सार्द्धेन—

**जात्यौलूक्यस्य, सांख्यस्य चैतन्येनात्मवर्तिना ।**
**शाक्यस्यापि त्वनैकान्तः क्षणिकव्यतिरेकिभिः ॥ २१ ॥**
**प्रतिसंख्याप्रतिसंख्यानिरोधव्योमभिस्त्रिभिः ।**

शब्दत्वजातिरपि प्रागूर्ध्वं च न दृश्यते, अतो **वैशेषिकस्य** तावदनैकान्तिकत्वम्, **सांख्यस्यापि** नित्यमात्मचैतन्यमुन्मीलनोच्चारणादिप्रयत्नानन्तर चक्षुरादिभि· रूपाद्याकारेण प्रकाशे महदाख्याया बुद्धावाहितेऽभिव्यज्यते न प्रागूर्ध्वं वा, सुषुप्त्यादौ सतोऽपि चैतन्यस्यानभिव्यक्ते·। अस्ति हि तदापि चैतन्यम्, तद्धि पुंसः स्वरूपम्, न हि स्वरूपमपहाय पुंसोऽवस्थानं सम्भवति, अतश्चैतन्येऽनैकान्तिकत्वम्। **शाक्यस्यापि** "बुद्धिबोध्यं त्रयादन्यत् सस्कृत क्षणिक च तत्" इति पर्युदासान्नित्यत्वाभिमतै प्रतिसंख्यानिरोधादिभिरनैकान्त इति।

क· पुन प्रतिसख्यानिरोध , को वा इतरः ? इति तत्स्वरूपं दर्शयति—

**बुद्धिपूर्वं विनाशे हि प्रतिसंख्यानिरोधधीः ॥ २२ ॥**
**अबुद्धिपूर्वकस्तेषां निरोधोऽप्रतिसंख्यया ।**

बुद्धिपूर्वो मुद्गराभिघाताद्यभिव्यङ्ग्य , कुड्यनिपाताद्यभिव्यङ्ग्यस्त्वबुद्धिपूर्वं इति।

कथं पुनस्तयोरकृतकत्वम् ? अत्राह—

**तौ च द्वावप्यनाशित्वाद् इष्टावकृतकावपि ॥ २३ ॥**

कृतकता हि विनाशित्वव्याप्या घटादिषु दृष्टा, तच्च विनाशित्वनिरोधाभ्या निवर्तमान स्वव्याप्यां कृतकतामपि निवर्त्तयतीति ॥ २३ ॥

कथमकारणकस्य विनाशस्य सिद्धिः ? अत आह—

**आहुः स्वभावसिद्धं हि ते विनाशमहेतुकम् ।**

स्वाभाविको घटादीनां विनाशः, ते हि स्वहेतुभ्यो विनश्वरा एव जाताः। जनित्वैव प्रध्वंसन्ते, किमत्र कारणेनेति।

अविनाशित्वादिति[2] हेतुं विवृणोति—

**हेतुर्यस्य विनाशोऽपि तस्य दृष्टोऽङ्कुरादिवत् ॥ २४ ॥**
**विनाशस्य विनाशस्तु नास्ति तस्मादकृत्रिमः ।**

---

१. अनुपलब्ध्या—का० । २. अनाशि०—मु० पा० ।

किमिदानी मुद्गरप्रहारादिरकिञ्चित्कर: ? नेत्याह सार्द्धेन—

**भवति ह्यग्निसम्बन्धात् काष्ठादङ्गारसन्ततिः ॥ २५ ॥**
**मुद्गरादिहताच्चापि कपालं जायते घटात् ।**
**स्वाभाविको विनाशस्तु जातमात्रप्रतिष्ठितः ॥ २६ ॥**

सर्वं हि कारण सदृशकार्यजननस्वरसम्, विलक्षणकारणोपनिपाते तु विसदृश जनयति, तेन मुद्गराभिघातोऽपि विसदृशोत्पत्तौ उपयुज्यते न विनाशे, स हि स्वाभाविको जातमात्र एव घटादाववस्थित इति ॥ २६ ॥

किमिति तर्हि नोपलभ्यते ? अत आह—

**सूक्ष्मः सदृशसन्तानवृत्तेरनुपलक्षितः ।**

कदा तर्ह्यसावुपलभ्यते ? तत्राह—

**यदा विलक्षणो हेतुः पतेत् सदृशसन्ततौ ॥ २७ ॥**
**विलक्षणेन कार्येण स्थूलोऽभिव्यज्यते तदा ।**

कथ तर्हि मुद्गराभिघातस्य विनाशजनकत्व लौकिका मन्यन्ते ? अत्राह—

**तेनासदृशसन्तानो हेतोः सञ्जायते यतः ॥ २८ ॥**
**तेनैवाक्रियमाणोऽपि नाशोऽभिव्यज्यते स्फुटः ।**

तेनाक्रियमाणमपि प्रागनुपलभ्यमान तदनन्तरमेवोपलभमानास्तत्कृत मन्यन्त इति ।

ततश्च सिद्ध हेतोरनैकान्तिकत्वम् ? त्याह—

**स मुद्गरप्रहारादिप्रयत्नानन्तरीयकः ॥ २९ ॥**
**यस्मादकृतको दृष्टो, हेतुः स्याद् व्यभिचार्यतः[1] ।**

व्योम्नानैकान्तिकत्वं विवृणोति द्वयेन—

**आकाशमपि[2] नित्यं सद् यदा भूमिजलावृतम् ॥ ३० ॥**
**व्यज्यते तदपोहेन खननोत्सेचनादिभिः ।**
**प्रयत्नानन्तरं ज्ञानं तदा तत्रापि दृश्यते ॥ ३१ ॥**
**तेनानैकान्तिको हेतुर्यदुक्तं तत्र दर्शनात् ।**

खननोत्सेचनादिभिस्तदपोहेन—इत्यन्वय इति ।

तत्र किञ्चिदाशङ्कते—

**अथ स्थगितमप्येतद् अस्त्येवेत्यनुमीयते ॥ ३२ ॥**

न च सर्वगतस्य कचिदप्यभावः सम्भवति, सर्वगतत्वं चानणुत्वे सति द्रव्यत्वात् कालवदिति ॥ ३२ ॥

---

१. ०र्यंयम्—का० ।    २. प्रकाशम्—१ पू० ।

परिहरति—

**शब्दोऽपि प्रत्यभिज्ञानात् प्रागस्तीत्यवगम्यते।**

'अस्थानात्' इत्यस्यानैकान्तिकत्वप्रदर्शनार्थं सूत्रम्—"**सतः परमदर्शनं विषयानागमात्**" (जै० सू० १. १. १८) इति, तद् व्याचष्टे—

**कूपपूरणयत्नेन खं तिरोधीयते यदा ॥ ३३ ॥**

**अस्थानादित्ययं[1] हेतुस्तदानैकान्तिको भवेत्।**

कथम् ? इत्याह—

**आकाशधीप्रबन्धो हि तदा तस्मिन्न तिष्ठति ॥ ३४ ॥**

**तिरोहितानभिव्यक्तेः शब्दबुद्धिप्रबन्धवत्।**

किमिदमप्रत्यक्षाकाशस्य तिरोधानं नामेति[2] चेत्[2] ? नाप्रत्यक्षमाकाशम्, अपरोक्षावभासादप्रत्यक्षस्य तस्य सिद्धिरपि दुर्लभा, प्रमाणान्तरासम्भवात्। शब्दलिङ्गकमनुमानं प्रमाणम्, शब्दो हि गुणः, स च गुणिनमनुमापयतीति चेत् ? न, गुणत्वासिद्धेः। सत्यपि गुणत्वे वायुगुणत्वान्नाप्रसिद्धस्य गुणिनोऽनुमानम्। वायौ हि श्रोत्रं प्राप्ते शब्द उपलभ्यते। यथा हि चम्पकद्रव्ये घ्राणसन्निकृष्टे गृह्यमाणस्य गन्धस्य तद्गुणत्वम्, तथा शब्दस्यापि वायुगुणत्वं वेदितव्यम्। अथ वा, वायुरेव ताल्वादिस्थानसंयोगात् तत्तच्छब्दगुणको निष्पद्यते, तस्मिन् श्रोत्रं प्राप्ते संयुक्तसमवायसन्निकर्षेण शब्दो गृह्यते, सत्यपि चानित्यधर्मत्वे शब्दस्य नानित्यता भविष्यति, गोत्वादिवच्छुक्लादिगुणवच्च तेषामपि हि नित्यत्वमुपरिष्टाद् वक्ष्यति, तत्सिद्धम्—नाकाशस्यानुमानं सम्भवतीति। प्रत्यक्षमेवाकाशम्, नीरूपस्याप्यपरोक्षावभासान्नानुपपन्नं प्रत्यक्षत्वम्।

एवं दिक्कालयोरपि प्रत्यक्षता समर्थनीया, तयोरप्यपरोक्षावभासात्, प्रमाणान्तरासम्भवाच्च। तदुपपन्नमतिरोधानवचनमिति।

शङ्कते—

**शब्दस्यैवानवस्थानादिति हेतुं वदेद् यदि ॥ ३५ ॥**

निराकरोति—

**असिद्ध एव वक्तव्यस्ततोऽभिव्यक्तिवादिना।**

विकल्पनीयं चेदम्—कृतकत्वं किं यत्किंचित्कारणजन्यत्वम्, उत यद्व्यापारानन्तरमुपलभ्यते तत्कृतत्वमिति ? यत्किञ्चित्कारणजन्यत्वे तावत्प्रयत्नानन्तर्यमप्रयोजकमुक्तं च शब्दत्वादिनाऽनैकान्तिकत्वम्, तद्व्यापारजन्यत्वे तु मूलोदकादिभिरनैकान्तिकत्वमित्याह—

**तद्व्यापारकृतत्वेऽपि[3] व्यङ्ग्यैर्मूलोदकादिभिः ॥ ३६ ॥**

१. आस्थानात्–मु० पा०। २–२. नाम–मु० पा०।

३. व्यापारकृतत्वे वा—३ पु०।

कथम् ? इत्यत आह—

**कृतकत्वेऽपि तेषां हि नोत्पत्तिः खननादिना ।**

यदा चोच्चारणजन्यत्वं न सिद्ध्यति तदा कृतकत्वमात्रमपि तस्य न सिद्ध्यत्येव, कारणान्तराभावादित्याह—

**न चोच्चारणतोऽन्याऽस्ति शब्दस्योत्पादिका क्रिया ॥ ३७ ॥**

सविशेषणोऽयं हेतुः प्रतिबन्धकाभावेऽपि प्रागूर्ध्वमनुपलम्भादिति ॥ ३७ ॥

मूलोदकादीना तु मृत्तिकादिप्रतिबन्धोऽस्तीति नानैकान्तिकत्वमत्राह—

**निबन्धर्यसतीत्येवं विशिष्टेऽपि, तथैव नः[1] ।**

एवमपि तैरेव मूलोदकादिभिरनैकान्तिक इति ।

कथम् ? इत्यत्राह—

**अबन्धाः स्युर्यदैतेषाम्[2] अबोधो हेत्वभावतः ॥ ३८ ॥**

अप्रतिबन्धा अपि ते दीपाद्यभावान्नोपलभ्यन्त इति ॥ ३८ ॥

नन्वस्तु हि स्वभावादप्रतिबद्धस्यापि मूलोदकादेरग्रहणम्, शब्दस्य तु कथम् ? अत आह—

**व्यञ्जकाभावतः शब्देऽप्यबोधो बधिरादिवत् ।**

यद्वा, व्यञ्जकाभावस्यैव प्रतिबन्धकत्वादसिद्धोऽयम् 'प्रतिबन्धकाभावे अनुपलम्भात्' इति हेतुरित्याह—

**तस्यैव वा निबन्धृत्वे भवेद्धेतोरसिद्धता ॥ ३९ ॥**

अथ नानुपलब्धिर्हेतु , किन्त्वसत्त्वम्, तदसिद्धमित्याह—

**अथ पूर्वापरासत्त्वं हेतुस्तत्राप्यसिद्धता ।**

कथम् ? इत्यत आह—

**सन्नेव साधनाभावाच्छब्दो नैवोपलभ्यते ॥ ४० ॥**

यदा तर्हि व्यञ्जकं लब्ध तदा किं न चिरमुपलभ्यते ? अत आह—

**क्षणिकं साधनं चास्य बुद्धिरप्यनुवर्तते ।**
**मेघान्धकारशर्वर्यां विद्युज्जनितदृष्टिवत् ॥ ४१ ॥**

वायवीया हि ध्वनयोऽभिव्यञ्जका., ते च श्रोत्र प्राप्यैवान्यत. प्रयाता । शब्दबुद्धिरपि तदनुवर्त्तिनी मेघान्धकार इव विद्युज्जनिता घटादिबुद्धिर्न चिरमनुवर्त्तते । किमिद**मन्धकारशर्वर्यामि**ति ? तमउच्छ्रिताया यामिन्यामित्यर्थः । किमिद तमो नाम ? द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भाऽभावस्तम इति **काश्यपीयाः** । तथा तु नीलबुद्धिर्निर्निमित्ता स्यात्, अभावस्य नीलिमाभावात् । न चासतो नीलिम्न

१. तैः—का० ।　　२. अनिबन्धात् सदा तेषामिति पाठान्तरम् ।

किञ्चिद् ग्राहकं स्मारकं वास्ति, आलोकादर्शनमात्रेण तु तद्भ्रमो भवस्तच्छून्य-भागेऽपि स्यात्। अतो द्रव्यान्तरमिदं वायुवन्नीलिमगुणम्। वायुररूप स्पर्शवान्, इदं चास्पर्शं रूपवदित्येतावान् विशेष'।

अथ वा, य एते पार्थिवास्त्रसरेणवो वातायनविवरेषु दृश्यमाना सर्वतो भ्रमन्ति, तेषा ये नीलगुणकाः तद्गतमिद नीलरूप गृह्यमाणं गुणान्तराणां द्रव्यान्तराणा च तदन्तरालस्य चाग्रहणाद् व्याप्ताखिलब्रह्माण्डवच्चकास्ति। नील-रूपग्रहणे चालोकापेक्षा नास्तीति दर्शनबलादभ्युपगम्यते।

नन्वेव गवादिगतमपि नीलरूपमन्धकारे गृह्येत ? केन चोक्तं नेति! तत्तु गोरग्रहणात् तद्गतत्वेन न लभ्यते, सर्वमेव नीलरूपं तदा गृह्यते। प्रभायां तु प्रभारूपेण गृह्यमाणेन यानि ग्रहणायोग्यसूक्ष्मद्रव्याश्रितानि नीलरूपाणि तान्य-भिभूतानि न गृह्यन्ते। निमीलिते तु नेत्रे प्रभारूपाग्रहणादनभिभूतानि गृह्यन्ते, निमीलितनेत्रस्यापि कियन्त्यपि चाक्षुषाणि तेजांसि शुक्तिच्छिद्रादिवन्नि'सरन्त्येव यैर्नीलरूप गृह्यते, वस्त्वन्तराणि तु न तावद्भिर्गृह्यन्ते। जात्यन्धानामुद्धृतनेत्राणां च यद्यन्धकारदर्शनं नास्ति, ततो न किञ्चिद्वक्तव्यम्। अथ त्वस्ति, ततस्तेषामपि सन्ति कानिचित् तेजांसीति कार्यबलादेव कल्प्यते। न हि कारणकल्पनाभयात् कार्यमपह्नोतु युक्तम्, सर्ववस्तूपलब्धीनामपह्नवप्रसङ्गात्, तत्कारणान्यपि हीन्द्रि-याणि कल्प्यान्येवेत्यास्ता तावत् ॥ ४१ ॥

कीदृश पुनर्ध्वनीनामभिव्यञ्जकत्वम् ? तद्दर्शयति—

**यथा घटादेर्दीपादिरभिव्यञ्जक इष्यते।**
**चक्षुषोऽनुग्रहादेवं ध्वनिः स्याच्छ्रोत्रसंस्कृतेः**[1] **॥ ४२ ॥**

तेजसश्चाक्षुषस्याप्यायनानुग्रह कुर्वन् प्रदीपो यथा चाक्षुषाणां घटादीनां व्यञ्जको भवति तथा ध्वनयोऽपि श्रोत्रसंस्कार कुर्वन्तः शब्दस्याभिव्यञ्जका भविष्यन्तीति ॥ ४२ ॥

केन तर्हि रूपेणैषा संस्कारकत्वम्, न हि संस्कारजननानुगुण किञ्चिद् रूपं ध्वनिषु दृश्यते ? अत आह—

**न च पर्यनुयोगोऽत्र केनाकारेण संस्कृतिः।**

कारणमाह—

**उत्पत्तावपि तुल्यत्वाच्छक्तिस्तत्राप्यतीन्द्रिया ॥ ४३ ॥**

योऽपि ध्वनीनामन्यस्य वा कारणस्य शब्दोत्पादकत्वमिच्छति तस्यापि कारणगत शक्त्याख्यमतीन्द्रियमेव रूपमिति ॥ ४३ ॥

तथापि किं नानुयुज्यते ? अत आह—

---

१. ० तृसंस्कृतेः—मु० पा०।

**नित्यं कार्यानुमेया च शक्तिः किमनुयुज्यते ।**

कार्यानुगत रूपमित्येतावत् शक्ते रूपम्, अतीन्द्रियत्वान्न रूपान्तरमिवेदमिति शक्य दर्शयितुमिति ।

कि पुनर्ध्वनीनां शक्तिसद्भावे प्रमाणम् ? अत आह—

**तद्भावभावितामात्रं प्रमाणं तत्र गम्यते ॥ ४४ ॥**

उपसंहरति—

**अतोऽतीन्द्रिययैवेते शक्त्या शक्तिमतीन्द्रियाम् ।**

**इन्द्रियस्यादधानाः स्युः शब्दाभिव्यक्तिहेतवः ॥ ४५ ॥**

चोदयति—

**व्यञ्जको नान्यजातिश्चेत्,**

गन्धादीनां सजातीयमेव व्यञ्जकं दृष्टम्-पार्थिवं घ्राणं गन्धेन गन्धान् व्यनक्ति, आप्यं रसनं रसेन रसान्, तैजसं चक्षू रूपेण रूपाणि, वायवीयं त्वगिन्द्रियं स्पर्शेन स्पर्शान् । न च वायवीयानां ध्वनीनां शब्देन सजातीयत्वम्, न च शब्दस्तेषां गुण , येन स्वगुणेन शब्देन शब्दाभिव्यक्तिरिति ।

परिहरति—

**श्रोत्रं शब्दस्य ते कथम् ।**

श्रोत्र हि स्वरूपेणैव स्वसमवेतं शब्दं गृह्णाति न शब्देन, व्यङ्ग्यशब्दव्यतिरेकेण शब्दान्तराभावात्, न च श्रोत्रस्य शब्देन सजातीयत्वमस्तीति ।

उदाहरणान्तरमाह—

**पार्थिवानां घटादीनां प्रदीपादिश्च तैजसः ॥ ४६ ॥**

**आत्मादिसम्प्रयोगे च कार्यैः स्यात् तुल्यजातिता ।**

सत्तादिरूपेण तुल्यजातीयत्वे ध्वनिशब्दयोरपि तुल्यमित्याह—

**जातिर्या काचिदिष्टा चेत् सा नोऽत्रापि भविष्यति ॥ ४७ ॥**

ननु दीपादिष्वेव व्यञ्जकत्वप्रसिद्धि , कथमात्मादिसम्प्रयोगेण व्यभिचार. ? अत आह--

**उपलब्धिनिमित्ताच्च नान्यद् व्यञ्जकमुच्यते ।**

उपसंहरति--

**तस्माद् यथोपलब्धत्वात् स जातिव्यञ्जको भवेत् ॥ ४८ ॥**

**तथा तदविनाभावाद् विजातीयो भविष्यति ।**

**भाष्यकारेण** सयोगविभागयोरभिव्यञ्जकत्वमुक्त्वा शङ्कितम्—"उपरतयोः संयोगविभागयोः शब्दः श्रूयत इति चेत्" ( शा० भा० पृ. ९२ ) इति, तदयुक्तम्, वायवीययोः संयोगविभागयोरुपरमासिद्धेरत आह—

**वायवीयानभिज्ञत्वात् ताल्वादिस्थाभिमानतः ॥ ४९ ॥**
**अनभिव्यञ्जकत्वार्थमाहोपरतयोरपि ।**

"न नूनमुपरमन्ति" ( शा० भा० पृ० ९२ ) इत्युत्तरभाष्यं वायवीयाभिप्रायमेव, गूढाभिप्रायस्य वचनमित्याह—

**वायवीयधियैवोक्तं न नूनमिति चोत्तरम् ॥ ५० ॥**

एव "यदि शब्दम्" (शा० भा० पृ० ९३) इत्यत प्रभृति प्राग् "अभिघातेन" ( शा० भा० पृ० ९५ ) इत्यस्माद् ग्रन्थाद् गूढाभिप्रायावेव पूर्वोत्तरपक्षवादिनावित्याह—

**अभिघातवचस्तः प्रागेवं गूढधियावुभौ ।**

कथं पुनर्गूढाभिप्रायत्व गम्यते, "अप्राप्ताश्चेत्" ( शा० भा० पृ० ९५ ) इत्यादिना सयोगविभागानामप्राप्तौ पूर्वपक्षिणा दोषापादनात् । वायवीयज्ञाने हि तेषा प्राप्तत्वादनवकाशश्चोद्यस्य स्यात्, उपरमचोद्यपरिहारस्यापि अभिघातवाक्य एव स्पष्टीकरणात् । ननु न हि ते प्रत्यक्षा इति वायवीयाभिप्राय. सिद्धान्तिना विवृत एव ? न, ताल्वादिसंयोगविभागानामपि कार्यसामर्थ्यरूपेणाप्रत्यक्षत्वोपपत्तेति ।

"यदि शब्दम्" ( शा० भा० पृ ९३ ) इत्यादेश्चोद्यभाष्यस्यार्थमाह—

**यदि शब्दमितीहापि त्रेधाभिव्यक्तिसम्भवः ॥ ५१ ॥**
**सा हि स्याच्छब्दसंस्कारादिन्द्रियस्योभयस्य वा ।**

शब्दसस्कारपक्षे तावद् दूषणमाह—

**तत्र सर्वैः प्रतीयेत शब्दः संस्क्रियते यदि ॥ ५२ ॥**

सर्वग ोऽयं नित्यत्वपक्षे शब्द., तदसौ संस्कृ '. सर्वैः पुरुषै श्रूयेत, कृतकत्वे तु प्रादेशिकत्वान्नायं दोष इति ॥ ५२ ॥

स्यादेतत्, यः शब्दप्रदेशो ध्वनिभिः सस्कृत स दूरवर्त्तिना श्रोत्रेणाप्राप्त कथं ते शब्दं शृणुयुरिति ? अत आह—

**निर्भागस्य विभोर्न स्यादेकदेशे हि संस्क्रिया ।**

नन्वाधारद्वारोऽस्य ध्वनिभिः संस्कार., अतो य एवाधारः सस्कृतः तत्समीपगतैरेव पुरुषैर्गृह्यते, न दूरस्थैः ? अत आह—

**न चास्याधारभेदेन संस्कारनियमो भवेत् ॥ ५३ ॥**
**यतः शब्दो निराधारो व्योमात्मादिवदेव च ।**

सत्यप्याधारे तद्भेदो नास्त्येव, यतो व्यवस्था स्यादित्याह पादत्रयेण—

**अथाप्याकाशमाधारस्तत्रानवयवेऽसति ॥ ५४ ॥**
**न स्यात् प्रदेशसंस्कारः,**

न ह्याकाशस्य स्वरूपतोऽवयवतो वा भेदो ऽस्तीति ।

इतश्च न प्रदेशसंस्कार इत्याह—

**कृत्स्नशब्दमतेरपि।**

एतदेव विवृणोति—

**न हि सामस्त्यरूपेण यावद् व्योम व्यवस्थितः॥ ५५॥**
**शक्यते सकलो बोद्धुमेकदेशेन संस्कृतः।**

तदेवं शब्दसंस्कारपक्षे सर्वेषां दूरस्थानामपि शब्दोपलब्धिः स्यादित्युक्तम्, एतदेव श्रोत्रसंस्कारपक्षेऽप्यापादयति—

**आकाशश्रोत्रपक्षे च विभुत्वात् प्राप्तितुल्यता॥ ५६॥**
**दूरभावेऽपि शब्दानामिति ज्ञानं प्रसज्यते।**

ये ह्याकाशं श्रोत्रमित्याचक्षते, तन्मते तावत् श्रोत्र विभुत्वात् दूरवर्तिभिरपि ध्वनिभिः प्राप्तत्वात् संस्कृतमेवेति स्यादेव सर्वेषा शब्दज्ञानम्। इतिशब्दो हेताविति।

स्वपक्षे तु कर्णशष्कुल्या एव श्रोत्रत्वान्नाय प्रसङ्ग इति।

किञ्च, अस्मिन् पक्षे श्रोत्रमपि सर्वपुंसामप्येकं स्यात्, आकाशस्यैकत्वात्, तत्रैकस्य शब्दश्रवणवेलायामितरेऽपि सर्वे संस्कृतश्रोत्रत्वात् शृणुयुरेव शब्दमित्याह—

**श्रोत्रस्य चैवमेकत्वं सर्वप्राणभृता भवेत्॥ ५७॥**
**तेनैकश्रुतिवेलायां शृणुयुः सर्व एव ते।**

ननु धर्माधर्मोपगृहीतो नभोभागः श्रोत्रम्, न सर्वमाकाशम्, भागभेदाच्च संस्कारव्यवस्था श्रवणव्यवस्था च द्वयं सिद्ध्यति? अत आह—

**तस्यानवयवत्वाच्च न धर्माधर्मसंस्कृतः॥ ५८॥**
**नभोदेशो भवेच्छ्रोत्रं व्यवस्थाद्वयसिद्धये।**

उपसंहरति—

**वैशेषिकादिसिद्धान्तेष्वेवं तावत् प्रसज्यते॥ ५९॥**

**सांख्य**पक्षेऽप्याहङ्कारिकत्वादिन्द्रियाणाम् अहङ्कारस्य सर्वगतत्वादनवयत्वाच्चायं दोष समान इत्याह—

**कापिलेऽपि विभुत्वेन श्रोत्रादेरियमेव दिक्।**

दोषान्तरमपि श्रोत्रसंस्कारे दर्शयति—

**सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रबोधयेत्॥ ६०॥**

नित्यत्वात् सर्वगतत्वाच्च सर्वदैव हि सर्वे शब्दा सर्वेषु श्रोत्रेषु सन्निहिताः, कृतत्वे त्वेकशब्दसमये शब्दान्तराणामसत्त्वादुपपन्नमश्रवणमिति॥ ६०॥

न चाभिसन्धिभेदाद् व्यवस्था सिद्ध्यतीति वाच्यमित्याह—

**घटायोन्मीलितं चक्षुः पटं न हि न बुध्यते।**

इममेव दोषं श्रोत्रविषयशब्दसंस्कारेऽप्यतिदिशति—

**एतदेव प्रसङ्क्तव्यं विषयस्यापि संस्कृतौ ॥ ६१ ॥**

कथम् ? इत्याह—

**समानदेशवर्तित्वात् संस्कारोऽप्यविशेषतः ।**

इतश्चाविशेष इत्याह—

**स्थिरवाय्वपनीत्या च संस्कारोऽस्य भवन् भवेत् ॥ ६२ ॥**

ततः किम् ? इत्याह—

**दृष्टं वावरणापाये तद्देशान्योपलम्भनम् ।**

यदि ह्यदृष्टरूपः संस्कारः स्यात्, ततः स्यादपि कदाचिद् व्यवस्था, स्थिरवाय्वपनये तु संस्कारे तत्स्वरूपत्वान्न कथञ्चिद् व्यवस्थासिद्धिरिति।

भवतु वा कथञ्चित् शब्दभेदे संस्कारव्यवस्था, न ह्येकस्मिन् शब्दे सा सम्भवति, विरुद्धत्वात् ? इत्याह—

**संस्कृतासंस्कृतत्वे च शब्दैकत्वे न सिद्ध्यतः ॥ ६३ ॥**

ततः किम् ? इत्याह—

**एकावस्थाभ्युपेतो[1] वा सर्वैर्ज्ञायेत वा न वा ।**

द्वयसंस्कारेऽपि दोषद्वयमपि समुच्चित्य दर्शयितव्यमित्याह—

**प्रत्येकाभिहिता[2] दोषाः स्युर्द्वयोरपि संस्कृतौ ॥ ६४ ॥**

पूर्वपक्षमुपसंहरति—

**तेन प्रादेशिकं ज्ञानं न कृतत्वाद् विना भवेद् ।**

यदेतत् क्वचिदेव कस्यचिच्छब्दस्य श्रवणम्, तन्न नित्यत्वेऽवकल्पत इति ।

"यस्याप्यभिव्यञ्जन्ति तस्याप्येष न दोषः" ( शा० भा० पृ० ९४ ) इत्यादि परिहारभाष्यम्, तस्यार्थमाह—

**उत्तरं श्रोत्रसंस्काराद् भाष्यकारेण वर्णितम् ॥ ६५ ॥**

श्रोत्रभेदाच्च संस्कारव्यवस्थापनात् श्रवणभेदव्यवस्थापि युक्तैवेत्याह—

**तद्भेदात् श्रुतिभेदश्च प्रतिश्रोतृ व्यवस्थितः ।**

नन्वाकाशस्य श्रोत्रत्वात् कथं श्रोत्रभेदः ? अत आह—

**नावश्यं श्रोत्रमाकाशमस्माभिश्चाभ्युपेयते ॥ ६६ ॥**

यद्यप्याकाशं श्रोत्रम्, तस्य त्वनवयवत्वं जैनसांख्यैर्निराकृतम्, ते हि 'अत्रेदम्, अत्रेदम्' इति भागावग्रहात् सावयवमेवाकाशमास्थिषतेत्याह—

**न चानवयवं व्योम जैनसांख्यनिषेधतः ।**

---

१. ०भ्युपेतौ—मु० पा० ।    २. ०भिहता—मु० पा० ।

यदि सावयवमेवाकाशं यदि वा नाकाशम्, द्वेधापि किं सिद्ध्यति ? अत आह—

**तेनाकाशैकदेशो वा यद्वा वस्त्वन्तरं भवेत् ॥ ६७ ॥**
**कार्यार्थापत्तिगम्यं नः श्रोत्रं प्रतिनरं स्थिरम् ।**

कर्णशष्कुल्या एव किञ्चित् सामर्थ्यं शब्दग्रहणानुगुणमर्थापत्त्या कल्प्यते, तत्खल्वाकाशादिश्रोत्रपक्षेऽप्यवश्य कर्णशष्कुलीगतमेव कल्पनीयम्; वातादिदूषिते तस्मिन् बधिरादेः शब्दश्रवणाभावात्, अस्ति हि तस्याप्याकाशमिति ।

भवतु वानवयवं सवगतमेवाकाश सर्वेषा श्रोत्रम्, तथापि ध्वनिसस्कार-स्याधिष्ठानगामित्वादधिष्ठानानां च भेदादसङ्करसिद्धिरित्याह—

**यद्यपि व्यापि चैकं च तथापि ध्वनिसंस्कृतिः ॥ ६८ ॥**
**अधिष्ठानेषु सा यस्य तच्छब्दं प्रतिपत्स्यते ।**

नन्वेवमधिष्ठानसंस्काराङ्गीकारान्न श्रोत्रसंस्कार समर्थितः स्यादत आह—

**अथापीन्द्रियसंस्कारः सोऽप्यधिष्ठानदेशतः ॥ ६९ ॥**
**शब्दं न श्रोष्यति श्रोत्रं तेनासंस्कृतशष्कुलि ।**

श्रोत्रस्यैवायवमधिष्ठानद्वारेण संस्कार इति असंस्कृतकर्णशष्कुलीकस्य न शब्दश्रवणमिति ।

नन्वधिष्ठानद्वारः संस्कारोऽपि किं न दूरस्थैः क्रियेत ? इत्यत्राह—

**अप्राप्तकर्णदेशत्वाद् ध्वनेर्न श्रोत्रसंस्क्रिया ॥ ७० ॥**
**अतोऽधिष्ठानभेदेन संस्कारनियमस्थितिः ।**

प्राप्य हि ध्वनयः संस्कुर्वन्ति, न दूरस्था शष्कुली तैः प्राप्ता, अतो न तद्द्वारः श्रोत्रसंस्कार इति ।

अत्र चोदयति—

**नन्वेकस्मिन्नधिष्ठाने लब्धसंस्कारमिन्द्रियम् ॥ ७१ ॥**
**बोधकं सर्वदेहेषु स्यादेकेन्द्रियवादिनः ।**

यदि ह्येकमेव सर्वेषां श्रोत्रं तदेकस्मिन्नप्यधिष्ठाने संस्कृते लब्धसस्कारमेवेति सर्वदेशवर्तिना पुसामतिदूरवर्त्तिनामपि शब्दं बोधयेदिति ।

परिहरति—

**पुंसा देहप्रदेशेषु विज्ञानोत्पत्तिरिष्यते ॥ ७२ ॥**
**तेन प्रधानवैदेश्याद् विगुणा सा तु संस्कृतिः ।**

ज्ञानाङ्गं हि संस्कारः, प्रधानं ज्ञानम्, प्रधानदेशत्वं चाङ्गानाम्, स्वदेहप्रदेशे च पुंसा ज्ञानमुत्पद्यते, नान्यत्र । अतो देहान्तरवर्ती सस्कारो न देहान्तरे ज्ञान-मुत्पादयति । स हि तत्र विगुण.; प्रधानवैदेश्यात् । किं पुनः प्रधानसादेश्यस्या ङ्गत्वे प्रमाणम् ? दर्शनमेव, न ह्यधिष्ठानान्तरे सस्कृतेऽन्यत्र ज्ञानमुत्पद्यत इति ।

नन्वात्मनः प्रदेशाभावात् कथं देहप्रदेशे विज्ञानमित्युच्यते, न हि प्रदेशगतं पुंसां ज्ञानम् ? अत आह—

**निष्प्रदेशोऽपि चात्मा नः कात्स्न्येन च विदन्नपि ॥ ७३ ॥**
**शरीर एव गृह्णातीत्येवमुक्ते न दुष्यति ।**

यद्यप्यनवयव आत्मा कात्स्न्येनैव ज्ञानाश्रयः, नावयवशः, तथापि शरीर एव गृह्णाति; तत्रापि ह्यसौ कात्स्न्येनैव विद्यत इति ।

तदेवमधिष्ठानसंस्काराश्रयणेन तद्भेदाद् व्यवस्थोक्ता, सम्प्रत्याकाशस्यापि संस्कारे सिद्ध्यत्येव व्यवस्थेत्याह—

**एकत्वेऽपि यथाकाशं द्रव्यैः सावयवैः पृथक् ॥ ७४ ॥**
**संसर्गभेदं लभते संस्कारासंस्कृती तथा ।**

एकस्यापि ह्याकाशस्यानवयवस्यापि यथा क्वचिदेव घटसंसर्गः क्वचित् पटसंसर्गः क्वचिच्चासंसर्ग इत्यसङ्करसिद्धिः; एवं कर्णशष्कुल्यवच्छेदोऽपि तस्य क्वचिदेव सर्वत्र न सङ्कीर्यते, तदसङ्करादेव च तदवच्छिन्नरूपस्यापि श्रोत्रस्य भेदः, तद्भेदाच्च संस्कारव्यवस्थेति ।

घटादिसंसर्गो वानवयव व्यापकमाकाशमाश्रितः कथमव्यापकः ? अत आह—

**व्योम्नोऽनवयवव्याप्तिसद्भावेऽपि भुवि स्थितान् ॥ ७५ ॥**
**द्व्याश्रयत्वं न संसर्गो घटादीननुरुध्यते ।**

यद्यपि व्यापकं व्योम, घटादयस्त्वव्यापकाः, व्याप्तिर्हि नाम सर्वसम्बन्धिभिरनागतैश्च सम्बन्धः, न च घटादेरयमस्ति, अतो न ते व्यापकाः, संसर्गस्तु द्व्याश्रयत्वाद् घटादीननुरुध्यमानो न व्यापको भवतीति ।

एवं चेदमपि न वक्तव्यम्—आकाशस्य श्रोत्रत्वेन तस्य सर्वान् प्रत्यविशेषात् न कश्चिद् बधिरः स्यादिति, न ह्याकाशमात्रं श्रोत्रम्, किं तर्हि ? धर्माधर्मोपगृहीतविशिष्टशक्त्युपेतकर्णशष्कुल्यवच्छिन्नम्, अतो यस्य तादृशी कर्णशष्कुली नास्ति धर्माधर्मलोपेन कर्णशष्कुल्योर्वाताद्युपहतत्वात्, तस्य सदप्याकाशं तदनवच्छिन्नत्वादभोग्यमिति स बधिरो भविष्यतीति, तदाह—

**बाधिर्यादिव्यवस्थानमनेनैव च हेतुना ॥ ७६ ॥**
**तदेवाभोग्यमन्यस्य धर्माधर्मवशीकृतम् ।**

नन्वनुपहतशाष्कुलीकेऽपि देहे बधिरात्मा वसति सर्वगतत्वात्, अतस्तद्देहस्वामिवत् किं न शब्दं शृणोति ? अत आह—

**यथा तत्र वसन्नेव स्वामित्वादवरोपितः ॥ ७७ ॥**
**न भोगं लभते तद्वद् बधिरोऽन्यत्र शृण्वति ॥**

न हि तद्देहनिवासमात्रेण भोगो भवति, ग्रामादिस्वामिनामिव तत्र वसतामपि स्वामित्वादवरोपितानामिति।

तदेवं श्रोत्रसस्कारे अधिष्ठानभेदाद् व्यवस्था समर्थिता, ध्वनिभेदादपि सम्भवति व्यवस्थेत्याह सार्द्धेन—

**श्रोत्रशब्दाश्रयाणां च न नामावयवाः स्वयम् ॥ ७८ ॥**
**न चैकदेशवृत्तित्वं तथाप्येतन्न दुष्यति ।**
**व्यञ्जकानां हि वायूनां भिन्नावयवदेशता ॥ ७९ ॥**

श्रोत्रसंस्कारस्यैवेदमपि समाधानम्। तत्तु शब्दतदाश्रययोरपि तुल्यमिति तद्ग्रहणम्। शब्दस्याश्रयद्वारोऽपि सस्कार पूर्वमुपक्षिप्त इति तद्ग्रहणमेतन्न दुष्यतीति, सर्वोपलम्भदोषो नास्तीति। ध्वनयो हि सावयवाः प्रादेशिकाश्च, तत्ससर्गः संस्कारः श्रोत्रस्य शब्दस्य तदाश्रयस्य आकाशस्य वा विभोरपि प्रादेशिक इति न दूरस्थानां श्रवणमिति ॥ ७८-७९ ॥

यदुक्तम् 'सकृच्च संस्कृत श्रोत्रं सर्वशब्दान् प्रबोधयेत्' ( श्लो० वा० श० ६० ) इति, तत्राह—

**जातिभेदश्च तेनैव संस्कारो व्यवतिष्ठते ।**

शब्दोपलब्धिव्यस्था दृष्ट्वा तद्बलेन प्रतिवर्णं संस्कारहेतुभूता ध्वनिजातिभेदाः कल्प्यन्ते, तत्संयोग एव श्रोत्रस्य सस्कारो न स्थिरवाय्वपनयः, येनातिप्रसङ्गः स्यादिति ।

तुल्या चेयं ध्वनिजातिकल्पना कार्यवादिनामपीत्याह—

**अन्यार्थं प्रेरितो वायुर्यथाऽन्यं न करोति वः ॥ ८० ॥**
**तथान्यवर्णसंस्कारशक्तो नान्यं करिष्यति ।**

वर्णान्तरानुगुणः श्रोत्रसंस्कारोऽन्यवर्णसंस्कार इति ।

अथ ताल्वादिसंयोगविभागः शब्दस्य कारणं न वायवीय इत्युच्यते, तथापि तुल्यतैवावयो. ? इत्याह—

**अन्यैस्ताल्वादिसंयोगैर्वर्णो नान्यो यथैव ते ॥ ८१ ॥**
**तथा ध्वन्यन्तराक्षेपो न ध्वन्यन्तरसारिभिः ।**

वर्णान्तरानुगुणश्रोत्रसस्कारजनकध्वनिप्रेरणसमर्थैस्ताल्वादिसयोगैर्ध्वन्यन्तराणामाक्षेपः प्रेरणं न क्रियत इति उपसंहरति सर्वत्रान्तेन—

**तस्मादुत्पत्त्यभिव्यक्त्योः कार्यार्थापत्तितः समः ॥ ८२ ॥**
**सामर्थ्यभेदः सर्वत्र,**

**सर्वत्रेति**। श्रोत्रतत्संस्कारेषु ध्वनिषु ताल्वादिषु च पक्षद्वयेऽपि सामर्थ्यकल्पना तुल्येति ।

एवमेव ताल्वादिसंयोगहेतुभूते प्रयत्नविशेषे तद्धेतुभूते च विवक्षाभेदे तुल्यत्वं दर्शयितव्यमित्याह—

**स्यात् प्रयत्नविवक्षयोः ।**

यत् पुन श्रोत्रसंस्कारदूषण शब्दसस्कारेऽतिदिष्टम्, एतदेव प्रसङ्क्तव्यम्—विषयस्यापि सस्कृताविति, तस्य परिहारोऽपि तद्वदेव ध्वनिजातिभेदाश्रयणेन कर्त्तव्य इत्याह—

**विषयस्यापि संस्कारे तेनैकस्यैव संस्कृतिः ॥ ८३ ॥**

यत्तु "शब्द सस्कृतः सर्वगतत्वात् सर्वै श्रूयेत" इत्युक्तम्, तत्राह—

**नरैः सामर्थ्यभेदाच्च न सर्वैरवगम्यते ।**

एतदेव दृष्टान्तेनोपपादयति द्वयेन—

**यथैवोत्पद्यमानोऽयं न सर्वैरवगम्यते ॥ ८४ ॥**
**दिग्देशादिविभागेन सर्वान् प्रति भवन्नपि ।**
**तथैव यत्समीपस्थैर्नादैः स्याद् यस्य संस्कृतिः ॥ ८५ ॥**
**तैरेव श्रूयते शब्दो न दूरस्थैः कथञ्चन ।**

यथा ह्यनित्यत्वे शब्दरूप प्रादेशिकम्, तथा नित्यत्वेऽपि तस्य सस्कार. प्रादेशिक एव । नादा हि प्रादेशिका स्वदेशावच्छिन्नमेव तस्य विभोरपि संस्कारं कुर्वन्ति न व्यापकम्, अत. समीपस्थानामेव श्रोत्रेण सस्कृत. शब्दप्रदेश प्राप्तो नान्येषामिति नातिप्रसङ्ग इति ।

उभयसस्कारेऽपि न कश्चिद् दोष इत्याह—

**द्वयसंस्कारपक्षे तु मृषा दोषद्वये वचः ॥ ८६ ॥**

कथम् ? इत्याह—

**येनान्यतरवैकल्यात् सर्वैः सर्वो न गृह्यते ।**

श्रोत्रसंस्कारवैकल्यान्न सर्वै. पुरुषैः श्रूयते, शब्दसंस्कारवैकल्याच्च न सर्वः शब्द, समुच्चितयोर्द्वयोः कारणत्वात्, प्रत्येककारणत्वे हि दोषद्वयं स्यादिति ।

**भाष्यकारेण** "अभिघातेन हि" इत्यादिना शब्दश्रवणमार्गो दर्शितः, **वैशेषिकादि**भिस्तु मार्गान्तरम्, तत्र **भाष्यकारे**णोक्त एव युक्तः, नान्य इत्याह—

**सर्वलोकप्रसिद्धां च विवक्षानुसृतां श्रुतिम् ॥ ८७ ॥**
**अनुगच्छद्भि[1]रैकान्तात् कार्यो मार्गः परीक्षकैः ।**

सर्वो हि लोक एकमेव शब्दं परस्मै श्रावयितुं विवक्षति, न तु शब्दान्तरं श्रावयितुं विवक्षति, तेनेयं विवक्षानुसारिणी शब्दश्रुतिः । विवक्षितस्यैव श्रवणं नान्यस्येति तामनुगच्छद्भिरनतिक्रामद्भिरेव परीक्षकैर्मार्गो दर्शयितव्यः । शब्दसन्ताने त्वन्य

---

१. अनुगृह्णद्भिः—२ पु० ।

एव शब्दो वक्त्रा विवक्ष्यते श्रोत्रा चान्यः श्रूयत इति न विवक्षामनुसृता श्रुतिरनुगता स्यादिति ।

कल्पनागौरवमप्यस्मिन् पक्षे स्यादिति दर्शयितुं तमेव तावत् पक्षमनुभाषते द्वयेन—

**तत्र ये तावदिच्छन्ति प्राक्संयोगविभागतः ॥ ८८ ॥**
**शब्द उत्पद्यते तस्मादन्यस्तत्सदृशः पुनः ।**
**तदनन्तरदेशेऽन्यस्तादृगन्यस्ततः परः ॥ ८९ ॥**
**वीचीतरङ्गवृत्त्यैवम् अन्त्यः श्रोत्रेण गृह्यते ।**

**वैशेषिकास्त्वाहुः**—"संयोगाद्वा विभागाद्वा शब्दनिष्पत्तिः" इति । प्रथमं भेरीदण्डसंयोगाद् वेणुदलविभागाद् वा शब्दो निष्पद्यते, स च वीचीसन्तानवत् समानजातीयान् सर्वतः सन्तनोति, तेषु च सन्तन्यमानेषु स्वदेशप्राप्तः शब्दः श्रोत्रेण गृह्यत इति ।

तदिदमदृष्टकल्पनागौरवादयुक्तमित्याह—

**अदृष्टकल्पना तस्मिन् पक्षे बह्वी प्रसज्यते ॥ ९० ॥**

कथम् ? इत्याह—

**शब्दभेदे न तावन्नः प्रज्ञाभेदः प्रवर्त्तते ।**

शब्दानेकत्वमेव तावददृष्टमिति ।

आरम्भकत्वं तु न केवलमदृष्टम्, प्रमाणविरुद्धं च, निष्क्रियत्वादित्याह—

**आरम्भकत्वं शब्दस्य निष्क्रियस्याप्रमाणकम् ॥ ९१ ॥**

अरुणादीनां हि द्रव्यद्वारं कारकत्वं न साक्षादिति देशान्तरकार्यारम्भकत्वं सुतराममूर्त्तस्याभिघातमकुर्वतोऽनुपपन्नमित्याह—

**देशान्तरगतं कार्यं नामूर्तस्यानभिघ्नतः ।**

या चेयमारम्भनियमं प्रति देशेयत्ता नातिदूरमारभत इति न तस्याः किञ्चिन्निमित्तमुपलभ्यते, अन्तिमोऽपि हि शब्दः शब्दान्तरमारभेत, अविशेषादित्याह—

**देशेयत्तानिमित्तं च नारम्भनियमं प्रति ॥ ९२ ॥**

यश्चायं नियमो न चतुर्दिशं दूरेऽपि शब्दश्रवणं तथा नाधस्तादुपरिष्टाच्च या चानुवातं दूरादुपलब्धिः तत्रापि न कश्चिद्धेतुरस्तीत्याह—

**न च दिङ्नियमे हेतुरनुवातगतेस्तथा ।**
**सदृशं वा सजातिं वा करोतीति च दुष्करम् ॥ ९३ ॥**

इदमपरमदृष्टकल्पनं सदृशमिति ॥ ९३ ॥

वीचीसन्तानेन चैकदिक्क एव शब्दसन्तानः स्यात्, न सर्वदिक्क इत्याह—

**आरम्भसर्वदिक्कत्वे न च हेतुः प्रतीयते ।**

किञ्च, कार्यकारणयोर्मृदादिरूपेणेतरेतरापत्तिर्दृष्टा, शब्दे तु निरन्वयविनाशिभिः कथमत्यन्तासतां क्रिया ? इत्याह—

**निरन्वयैर्विनश्यद्भिर्न चात्यन्तासतां क्रिया ॥ ९४ ॥**

निरस्तप्रायश्चाय शब्दसन्तानो ज्ञानसन्ताननिराकरणन्यायेनेत्याह—

**ज्ञानसन्तानवच्चैषां सन्तानो नावकल्पते ।**

यत्तु 'वीचीसन्तानवत्' इत्युक्तम्, तत्राह—

**वेगवत्सक्रियत्वाभ्यां तरङ्गाणां तु युज्यते ॥ ९५ ॥**

**कार्यदेशान्तरारम्भो यावद्वेगं च तत्क्रिया ।**

सक्रियत्वाद्, अभिघातकारणत्वाद्, वेगवत्त्वाच्च यथाक्रममारम्भः । स च देशान्तरे यावद्वेगं चेत्युपपन्नमिति ।

अय चापरो दोष इत्याह—

**आरम्भप्रतिबन्धोऽस्य न च कुड्यादिभिर्भवेत् ॥ ९६ ॥**

कारणमाह—

**न ह्यमूर्त्तस्य सद्भावो मूर्तमध्ये विहन्यते ।**

नन्वाकाशगुण. शब्द कथमसत्याकाशे कुड्यमध्ये स्यात् ? अत आह—

**न च कुड्यादिभिर्व्योम नाश्यते सार्यतेऽपि वा ॥ ९७ ॥**

**न तिरोधीयते तस्मात् कुड्यमध्येऽपि तद् ध्रुवम् ।**

यत्र हि कुड्यं सञ्चीयते तत्र प्राक् तावदस्त्याकाशम्, तच्च कुड्येन न विनाश्यते, नित्यत्वान्नाशोत्सारणे । तिरोधानमात्रमपि न क्रियते, सत्यपि कुड्ये प्रदेशान्तरे व्योमोपलम्भात् । व्योमस्वरूपाभिप्रायं चेदमतिरोधानम् । कुड्यप्रदेशे त्वस्त्येव तिरोधानम्, अतोऽस्त्येव कुड्यमध्येऽप्याकाशमिति ।

अथ कुड्यनिष्पत्तेः प्रागपि न तत्राकाशमस्ति, किन्तु मूर्त्तान्तरमेवेत्युच्यते, ततस्तत्र कुड्यस्य तदवयवाना च स्थितिरेव न स्यादित्याह पादत्रयेण—

**आकाशं तत्र न स्याच्चेत् कुड्यस्थानं विरुध्यते ॥ ९८ ॥**

**तन्मध्यावयवानां च,**

कारणमाह—

**न हि तिष्ठति ते घने ।**

अथ सदप्याकाश मूर्तद्रव्यरहितं शब्दं बिभर्त्ति न तत्ससृष्टमिति कल्प्यते, तदप्रमाणकमित्याह—

**अथावृत्यात्मकद्रव्यसंयोगरहितं नभः ॥ ९९ ॥**

**शब्दोत्पादं बिभर्तीति तत्र न्यायो न कश्चन ।**

प्रमाणं च शब्दारम्भे न किञ्चित् सम्भवति, न तावदर्थापत्तिः, शब्दश्रवणस्य वक्ष्यमाणन्यायेनाप्युपपत्तेरित्याह—

**अन्यथाप्युपपन्नत्वात् नार्थापत्त्यैतदिष्यते ॥ १०० ॥**

प्रमाणद्वयवादिनां चायुक्तमर्थापत्त्यभिधानमित्याह—

**न प्रमाणान्तरं चेयं प्रमाणद्वयवादिनाम् ।**

अनुमानमिति चेत् ? न; क्वचिदप्यदृष्टेनादृष्टारम्भेण[1] सह कस्यचिल्लिङ्गस्य सम्बन्धादर्शनादित्याह—

**सम्बन्धानुपलब्धेश्च नानुमानेन कल्पना ॥ १०१ ॥**

अत्र किञ्चिदाशङ्कते—

**ब्रूयात् सामान्यदृष्टं चेद्,**

दूषयति—

**भवेद्धेतोर्विरुद्धता ।**

सामान्यदृष्टं विवृणोति—

**सजातीयकरः शब्दो गुणत्वाच्चेन्द्रियादिवत् ॥ १०२ ॥**

विरुद्धतां विवृणोति—

**अशब्दारम्भकस्तद्वत् स्याद्देशान्तरे तथा ।**

ततश्च धर्मस्वरूपं तद्विशेषं च विरुन्ध्यात् । ननु एवंरूपस्यापि रूपानारम्भकत्वं रसादिवदनुमीयेत ? केन चोक्तं नेति, तन्तुगुणा एव हि तन्तुषु पटीभूतेषु पटगुणता भजन्ते, न गुणान्तरबुद्धिस्तत्रास्तीत्यसकृदुक्तमिति ।

विशेषविरुद्धत्वं विवृणोति द्वयेन—

**यत्र ह्यवयवा देशे पटादीनां व्यवस्थिताः[2] ॥ १०३ ॥**
**तत्रैव तद्गुणाः सर्वे तदारब्धोऽवयव्यपि ।**
**तद्गुणाश्चापि तद्देशास्तेनैषामेकदेशता ॥ १०४ ॥**
**तद्वदाद्याः पृथग्देशाः शब्दाः सर्वे भवन्ति हि ।**

सप्रतिसाधनश्चायं हेतुरित्याह—

**शब्दं नारभते शब्दः शब्दत्वादन्त्यशब्दवत् ॥ १०५ ॥**

सयोगविभागयोरप्यशब्दारम्भकत्वं तन्त्वादिसयोगविभागवदित्याह—

**एवं विभागसंयोगौ तद्भावादन्त्ययोगवत् ।**

तस्माद् वैशेषिकपक्षाज्जैनसांख्यपक्षावेव युक्तावित्याह अस्मादन्तेन—

**जैनकापिलनिर्दिष्टं शब्दश्रोत्रादिसर्पणम् ॥ १०६ ॥**
**साधीयोऽस्मात्,**

आदिशब्देन श्रोत्रवृत्तेरुपासनम्, तयोर्हि पक्षयोर्धर्मिणः प्रसिद्धस्यागमनमात्रं कल्प्यम्, न त्वनेकशब्दकल्पनमिति ।

---

१. दृष्टारम्भेण—मु० पा० ।  २. अवस्थिताः—३ पु० ।

तावपि त्वस्मिन् **मीमांसा**सिद्धान्ते परिपन्थिनि न युक्तावेवेत्याह—

**तदप्यत्र युक्त्या नैवावतिष्ठते ।**

तत्र शब्दागमनस्य तावदयुक्ततामाह सार्द्धेन—

**शब्दस्यागमनं तावददृष्टं परिकल्पितम् ॥ १०७ ॥**
**मूर्तिस्पर्शादिमत्त्वं च तेषामभिभवः सताम् ।**
**त्वगग्राह्यत्वमन्ये च भागाः सूक्ष्माः प्रकीर्तिताः ॥ १०८ ॥**

**जैनैर्हि** शब्दस्यागमनम्, परिमाणम्, स्पर्शः, तेषां चाभिभवः, स्पर्शवत्त्वेऽपि च त्वगिन्द्रियाग्राह्यत्वम्, सूक्ष्माश्च भागाः पुद्गलरूपाः कल्पिताः, तच्च सर्वमदृष्टमिति ॥ १०८ ॥

भागैश्चादृश्यमानैः कथमवयवी शब्दो रच्येत ? इत्याह—

**तेषामदृश्यमानानां कथं च रचनाक्रमः ।**
**कीदृशाद् रचनाभेदाद् वर्णभेदश्च जायते ॥ १०९ ॥**

संश्लेषोऽप्यनुपपन्न इत्याह—

**द्रवत्वेन[1] विना चैषां संश्लेषः कथ्यते कथम् ।**

यद्यपि कथञ्चित् सक्तुमुष्टिवत् संश्लेषः स्यात्, तथापि तद्वदेव वायुसंश्लेषाद् विश्लेषः स्यादित्याह—

**आगच्छतां[2] च विश्लेषो न भवेद् वायुना कथम् ॥ ११० ॥**

कारणमाह—

**लघवोऽवयवा ह्येते निबद्धा न च केनचित् ।**

दोषान्तरमाह—

**वृक्षाद्यभिहतानां च विश्लेषो लोष्टवद् भवेत् ॥ १११ ॥**

अन्यदप्याह—

**एकश्रोत्रप्रवेशे च नान्येषां स्यात् पुनः श्रुतिः ।**

एको हि शब्दो युगपदुच्चरितः कथमन्यत्र प्रविशेदिति ! ।

अथैकस्मिन्नप्युपचरिते तमनु बहवो निष्पन्नाः सर्वतो गच्छन्तीत्युच्यते ? तत्राह—

**न चावान्तरवर्णानां नानात्वस्यास्ति कारणम् ॥ ११२ ॥**

उच्चारणमेव हि शब्दनिष्पत्तिकारणम्, तच्चैकविषयमिति कथं बहूनां निष्पत्तिरिति ॥ ११२ ॥

अथैक एव शब्दः सर्वतो गच्छतीत्यत्राह—

**न चैकस्यैव सर्वासु गमनं दिक्षु युज्यते ।**

---

१. द्रव्यत्वेन—१ पु० । २. अगच्छताम्—१ पु० ।

न तावद् युगपद्गमन सम्भवति, पर्यायेण तु गमने दूरसमीपस्थयोरिव[1] द्वयोर-भितः स्थितयोरपि[2] युगपद् ग्रहण न स्यादिति।

**सांख्यपक्षं** दूषयति—

**श्रोत्रागमनपक्षे च,**

दृष्टविरुद्धं त्वदृष्टकल्पन चास्मिन्नपि पक्षे स्यादिति।

कथम् ? इत्याह—

**तन्न,**

तत्तावत् श्रोत्र न गच्छति, कर्णशष्कुल्यास्तावत् विस्पष्टैवानागतिः। अत एव तदवच्छिनत्तीति चेत् ? का पुनरियं वृत्तिर्नाम ? शब्दादिविषयसन्निभो विकारः, विषया हि प्रथममिन्द्रियेषु स्वाकारं विकारमालोचनवृत्त्यादिपदपर्यायमादधति, सा च वृत्तिर्विषयदेशमागत्य विषयाकार प्रकाशमध्यवसायाख्य महदाख्याया बुद्धा-वादधाति, तस्मिन्नाहिते तस्या चैतन्यमभिव्यज्यते, अत आह तस्यान्तेन—

**वृत्तिश्च गच्छति॥ ११३॥**

**तददृष्टद्वयं तस्य,**

वृत्तिश्चास्ति, सा च गच्छतीति द्वयमप्यदृष्टमेववादिन इति।

यच्चेदसम्बद्धेनैव विषयेणेन्द्रिये विकाराधानम्, तदप्ययुक्तमित्याह—

**दूरस्थेन च विक्रिया।**

शङ्कते—

**प्राप्तिः सर्वगतत्वाच्चेत्,**

विभुत्वादहङ्कारस्य तन्मयानीन्द्रियाण्यपि तथेत्यस्ति प्राप्तिरिति।

दूषयति—

**तुल्या दूरगतेष्वपि॥ ११४॥**

ततः किम् ? इत्याह—

**विक्रियाविक्रिये तत्र सर्वैः स्यातां न भेदतः।**

अथासत्यपि सम्बन्धे विकारः स्यात्, तथापि स एव दोष इत्याह—

**असम्बद्धविकारित्वमपीष्टं तत्र पूर्ववत्॥ ११५॥**

तदेव विवृणोति—

**असम्बन्धसमानत्वे नासन्नो हि विशिष्यते।**

कुड्यादिर्प्रतिबन्धश्चामूर्तत्वाद् वृत्तेरनुपपन्न इत्याह—

**अमूर्ता श्रोत्रवृत्तिश्च न मूर्तेन विहन्यते॥ ११६॥**

**तत्र व्यवहितः शब्दः किमर्थं नोपलभ्यते।**

---

१. समीपस्थयोरपि—मु० पा०। २. स्थितयोर्युग०—मु० पा०।

शब्देन चासम्बद्धेन श्रोत्रे विक्रियमाणेन देशेनाय नियमो दृश्यते, कदाचित् केषाञ्चित् दूरेऽपि श्रवणात्, एवं चातिदूरेऽपि श्रवण स्यादित्याह—

**श्रोत्रस्य विक्रियायां च नेयत्ताया नियामकम् ॥ ११७ ॥**

अनुवातेन श्रोत्रस्य वृत्तेर्वा प्रेरणं न स्यात्, प्रत्युत विघात एव शब्दगतेनानुवातेन वृत्तेः स्यादित्याह पादत्रयेण—

**नानुवातादिभिस्तस्य वृत्तेश्च प्रेरणं भवेत् ।**
**अनुवातं विहन्येत,**

किञ्च, प्रतिवातमेव शब्दमासाद्य वृत्तिर्दूरं गच्छेदित्याह—

**प्रतिवातं च सा व्रजेत् ॥ ११८ ॥**

कारणमाह—

**तद्गतं ह्यनुवातत्वं स्यान्न शब्दगतं तदा ।**

अप्राप्यकारीन्द्रियवादिनः शाक्यान् प्रत्याह—

**येषां त्वप्राप्त एवायं शब्दः श्रोत्रेण गृह्यते ॥ ११९ ॥**
**तेषामप्राप्तितुल्यत्वं दूरव्यवहितादिषु ।**

ततः किम् ? इत्याह—

**तत्र दूरसमीपस्थग्रहणाग्रहणे समे ॥ १२० ॥**
**स्यातां न च क्रमो नापि तीव्रमन्दादिसम्भवः ।**

एव मार्गान्तराणि दूषयित्वा भाष्यकारीयं मार्गं परीक्षितुमारभते—

**तस्माच्छ्रोत्रियदृष्टापि कल्पनेयं परीक्ष्यताम्[1] ॥ १२१ ॥**

तत्र यत् तावदुक्तम्—"अभिघातेन हि प्रेरिता वायव" ( शा० भा० पृ० ९५ ) इति, तत् प्रत्यक्षसिद्ध न कल्पनीयमित्याह—

**प्रयत्नाभिहतो वायुः कोष्ठ्यो यातीत्यसंशयम् ।**

स च शब्दविशेषव्यक्तौ ताल्वादिस्थानविशेषसयोगमनुरुध्यते, स्थानविशेषवशेन शब्दविशेषोपलम्भादित्याह—

**स संयोगविभागौ च ताल्वादेरनुरुध्यते ॥ १२२ ॥**

'यावद्वेगमभिप्रतिष्ठन्ते' ( शा० भा० पृ० ९५ ) इत्येतदपि वेगवत्त्वादेव वायूना शरादिवत् क्लृप्तमेवेत्याह—

**वेगवत्त्वाच्च सोऽवश्यं यावद् वेगं प्रतिष्ठते ।**

यदपि स्तिमितानि वाय्वन्तराणि प्रतिबाधमाना. सर्वतोदिक्कान् संयोगविभागानुत्पादयन्त इति, तत्र तावत् क्लृप्तकल्पनेत्याह—

**तस्यात्मावयवानां च स्तिमितेन च वायुना ॥ १२३ ॥**
**संयोगा विप्रयोगाश्च जायन्ते गमनाद् ध्रुवम् ।**

---

१. निरीक्ष्यताम्—१ पु० ।

किमिद स्तिमितेनेति ? स्थिरेणेत्यर्थ । कथं पुनर्वायो· स्थिरत्वम्, 'सदागतिः' इति हि तं समाचक्षते ? सत्यम्, सूक्ष्मत्वात्तु पदार्थान्तराण्यचालयन् इव भवतीति स्थिराभिधानम् । किं पुनरस्य सद्भावे प्रमाणम् ? नासति तस्मिन् व्यजनादिचालने वायूपलम्भसम्भव., न हि तत्रासौ जन्यते, निरुपादानकार्यनिर्माणासम्भवात्, पार्थिवस्य च वायूपादानत्वायोगात्, व्यस्तास्तु वाय्ववयवा व्यजनेन सहृन्यमाना युक्तमुपलभ्यन्त इति ।

एतावत् त्विहादृष्टमित्याह—

**कर्णव्योमनि स प्राप्तः शक्तिं श्रोत्रे नियच्छति ॥ १२४ ॥**

किं पुनस्तत्र प्रमाणम् ? तद्दर्शयति—

**तद्भावे शब्दबोधाच्च संस्कारोऽदृष्ट इष्यते ।**

नन्वेवमप्यदृष्टकल्पनास्त्येव ? अत आह—

**उत्पत्तिशक्तिवत् सोऽपीत्यधिकं नो न किञ्चन ॥ १२५ ॥**

उत्पत्तिशक्तिरपि कल्प्यैव भवताम्, वय तु संस्कार कल्पयाम इति न किञ्चिदधिकमिति ॥ १२५ ॥

ननु प्रतिशब्द सस्कारविशेष· कल्प्य ? अत आह—

**तथैव तद्विशेषोऽपि विशिष्टग्रहणाद् भवेत् ।**

तुल्यमिदमपि भवता प्रतिशब्दमुत्पादकभेदकल्पनादिति ।

नन्वेवमविशेषे किमिति सस्कारविशेषोत्पत्तिरेवाङ्गीक्रियते, न शब्दविशेषोत्पत्तिः ? अत आह—

**शब्दोत्पत्तेर्निषिद्धत्वाद् अन्यथानुपपत्तितः ॥ १२६ ॥**
**विशिष्टसंस्कृतेर्जन्म ध्वनिभ्योऽध्यवसीयते ।**

प्रागनुपजातपश्चादुपजातशब्दोपलम्भानुपपत्त्या अवश्यं कल्पनीये कस्मिंश्चित् प्रत्यक्षया शब्दोत्पत्तेर्निषेधात् संस्कारकल्पनैव युक्तेति ।

भवतु संस्कार·, ध्वनीनां तज्जननशक्तौ किं प्रमाणम् ? अत आह—

**तद्भावभाविता चात्र शक्त्यस्तित्वाऽववोधिनी ॥ १२७ ॥**
**श्रोत्रशक्तिवदेवेष्टा,**

यथा हि श्रोत्रस्य शब्दग्रहणशक्तिस्तद्भावभावात्, तथा ध्वनीनामपि तत एव श्रोत्रसंस्कारशक्तिस्तत्र कल्प्यते ।

**बुद्धिस्तत्र हि संहृता ।**

येय संस्कारकरणत्वकल्पनायां[1] प्रवृत्ता बुद्धि· सा तत्रैव ध्वनिशक्तिकल्पनायामुपसंहृतेति[2] ।

---

१. करणकल्पनाया—मु० पा० । २. उपसंहृतेति । चरितार्थेत्यर्थः ।

दृष्टानुगुण्य चास्य पक्षस्येत्याह द्वयेन—

**कुड्यादिप्रतिबन्धोऽपि युज्यते मातरिश्वनः ॥ १२८ ॥**
**श्रोत्रदेशाभिघातेऽपि तेन तीव्रप्रवर्तिना ।**
**तस्य च क्रमवर्तित्वात् क्षयि[1] वेगात्मसंपदः ॥ १२९ ॥**
**संस्कारक्रमतीव्रत्वमन्दतादिनिमित्तता ।**

क्षयिणी हि तस्य वेगसम्पद्, आत्मसम्पच्च दूरे, अतो दूरमपि श्रवणम्, आदिशब्दोपात्त चातिदूरवर्तिनामश्रवणम्, अनुवातं च दूरादुपलम्भनम्, तिर्यक्पवनशीलत्वाच्च चतुर्दिश दूरे श्रवणम्, नाधस्तादुपरिष्टाच्चेत्येतदपि युक्तमिति ।

अत्र भर्तृमित्रो वदति—न श्रोत्र नाम किञ्चित्, तस्य च ध्वनिजन्यः सस्कार इति द्वय कल्प्यम्, आदौ ध्वनिजन्यः संस्कार एव श्रोत्रम्, तदुपन्यस्योपालभते द्वयेन—

**इममेव च संस्कारं शब्दग्रहणकारणम् ॥ १३० ॥**
**केचित् तु पण्डितम्मन्याः श्रोत्रमित्यभिमन्वते ।**
**संज्ञासञ्चारणाच्चैषां बहुमानः स्वचेतसि ॥ १३१ ॥**
**मुधैषां बहुमानोऽयं वस्त्वनुत्पाद्य किञ्चन ।**

नन्वस्त्येव वस्तूत्पत्तिः द्वयोरकल्पनात् कथ सज्ञासञ्चारमात्रत्वम् ? अत आह—

**ध्वनिजन्याद्धि संस्काराच्छ्रोत्रं नान्यत् प्रदर्शितम् ॥ १३२ ॥**
**तं मुक्त्वा श्रोत्रशब्देन किं दृष्टमधिकं च तैः ।**

न हि ध्वनिजन्यात् संस्कारादन्यत् श्रोत्रं भाष्यकारेण दर्शितम्, नाक्लृप्त[2] कल्पितम्, कर्णशष्कुली वा तदवच्छिन्नो वा नभोभागः श्रोत्रम्, तच्च क्लृप्तमेव, संस्कारमात्रं त्वदृष्टं कल्पित भवता, तत्रैव श्रोत्रसज्ञा सञ्चारयता किमर्थाधिक्यं कृतमिति ।

संज्ञासञ्चारे वा को दोषः ? अत आह—

**एवञ्जातीयकानर्थान् फलेन प्रतिपादितान् ॥ १३३ ॥**
**लोकः संस्कारशब्देन सामान्येनैव जल्पति ।**

यत् खल्वतीन्द्रियकार्यकल्प्यमागन्तुकं रूपं तत् कर्मज्ञानादिजन्यसंस्कारसाधारणेन सस्कारशब्देन लोकोऽभिधत्ते, न तु संस्कारविशेषस्य साक्षादभिधायकं किञ्चिदस्तीति ।

श्रोत्रशब्दोऽपि सस्कारमात्रवचन इति चेत् ? तत्राह—

**श्रोत्रशब्दो विशेषेण तत्राविज्ञातसङ्गतिः ॥ १३४ ॥**
**सिद्धं स्वार्थं परित्यज्य नाभिधानेन वर्तते ।**

---

१. क्षय०—३ पु० ।　　　२. चाक्लृप्तं—मु० पा० ।

**विशेषेणेति**। विशिष्टविषयो हि श्रोत्रशब्दः, नासौ संस्कारसामान्ये ज्ञातसम्बन्धः, संस्कारान्तरेष्वप्रयोगात्। अतो नासौ लोकप्रसिद्ध कर्णशष्कुल्यादि परित्यज्य संस्कारमभिधत्त इति।

न केवलं लोकविरोधः, भाष्यविरोधश्चैववादिनामित्याह—

**आदावपरिभाष्यत्वं भाष्यकारो यदब्रवीत्॥ १३५॥**
**पदार्थेषु भवेत् तेषां तदतिक्रमणं फलम्।**

न केवलमप्रसिद्धार्थकल्पनम्, प्रसिद्धहानिरपीत्याह—

**संस्कारव्यतिरिक्ते च सर्वलोकस्य वस्तुनि॥ १३६॥**
**श्रोत्रशब्दः प्रसिद्धः सन् स्वाच्छन्द्येनापनीयते।**

आगमविरोधश्च स्यादित्याह—

**इन्द्रियाणामभिव्यक्तिर्गर्भस्थस्यैव देहिनः॥ १३७॥**
**प्राक्कार्यादागमैः सिद्धा तत्प्रद्वेषेण[1] लङ्घ्यते।**

प्राक्कार्याच्छब्दोपलब्धिलक्षणाद् गर्भस्थस्य पञ्चमे मासि इन्द्रियाणि जायन्त इति श्रुतिः[2]। **तत्प्रद्वेषेणेति**। आगमप्रद्वेषेणेति।

सिद्धान्तविरोधमपि दर्शयति—

**न च शब्दार्थसम्बन्धः कर्तुं योग्यः कथञ्चन॥ १३८॥**
**क्षणिकश्रोत्रपक्षे च सोऽवश्यं कृतको भवेत्।**

क्षणिको हि ध्वनिजन्यः संस्कारः, कथं तेन श्रोत्रशब्दस्याकृतिमः सम्बन्धः स्यात्, न हि तत्र लोकप्रसिद्धिरस्तीति।

परस्त्वगृहीताभिप्रायः शङ्कते—

**संस्कारे तुल्यमेतच्चेत्,**

संस्कारशब्देऽपि तुल्यमेतदिति।

परिहरति—

**न संस्कारान्तरस्थितेः॥ १३९॥**

तदेव विवृणोति—

**संस्कारशब्दवाच्या हि केचिद् वर्षशतान्यपि।**
**ध्रियन्ते तेन तच्छब्दसम्बन्धो न विनश्यति॥ १४०॥**

किमिदं वर्षशतानीति, न ह्येतावतापि नित्यः सम्बन्धः? सत्यम्, किन्त्वविशेषार्थमिदं व्यक्तेः स्थायित्वमुक्तम्। अस्ति हि सर्वसंस्कारेषु कार्ययोग्यत्वं नामैकरूपम्, तेन संस्कारशब्दस्य नित्यः सम्बन्धः सिद्ध्यतीति॥ १४०॥

---

१. सा प्रद्वेषेण—२ पु०। २. श्रुतितत्प्रद्वेषेण—मु० पा०।

श्रोत्रशब्दस्यापि तथास्त्विति चेत् ? तत्राह—

**श्रोत्रशब्दः पुनः पूर्वं संस्कारादुत्तरत्र तु ।**
**एकदेशनिबद्धे हि सर्वदार्थे प्रतिष्ठितः ॥ १४१ ॥**

स्यादेवम्, यदि ध्वनिजन्यात् संस्कारात् प्रागूर्ध्वं च देहैकदेशे कर्णे श्रोत्रशब्दो लोके न प्रयुज्यते, अतोऽस्य क्षणिकसंस्कारवाचित्वं लोकादसिद्धमवश्य कृत्रिममेव स्यात् । यदि लोकप्रसिद्धयभावेन कृत्रिमत्वम्, किमर्थं तर्हि क्षणिकत्ववचनम् ? सत्यम्, यदि यावत् कर्णसंस्कारोऽवतिष्ठेत ततस्तत्र प्रयुज्यमानः श्रोत्रशब्दो न संविविच्येत—किं नु संस्कारवचनः, किं वा कर्णवचन इति ? क्षणिकत्वे च ततः प्रागूर्ध्वं च प्रयोगादतद्वचनत्व शक्यं निर्णेतुम्, तन्निर्णये च तद्वचनत्वं कृतकं स्यादिति सूक्तम्—"क्षणिकश्रोत्रपक्षे च सोऽवश्यं कृतको भवेत्" इति ॥ १४१ ॥

प्रयोगमप्यक्षणिकत्वे श्रोत्रस्य दर्शयति—

**शक्यं च ध्रियमाणत्वमिन्द्रियत्वात् त्वगादित्वत् ।**
**वक्तुं श्रोत्रस्य तेनात्र क्षणिकोत्पत्त्यसम्भवः ॥ १४२ ॥**

नन्वस्त्येव वस्तुन्यपि लाघवम्, भवन्तो हि कर्णसमवायिनी स्थिरां शक्तिमिच्छन्ति पुनश्च संस्कारम्, वयं तु संस्कारमात्रम् ? अत आह—

**यदि च ध्वनिससम्पर्काच्छ्रोत्रमेवोपजायते ।**
**बधिरस्यापि तज्जन्म किमर्थं नोपलभ्यते ॥ १४३ ॥**

सत्यम्, सा त्ववश्याङ्गीकर्त्तव्या, सस्कारमात्रेण हि शब्दश्रवणम् बधिरस्यापि स्यादिति ॥ १४३ ॥

ननु तस्य श्रोत्रं नास्ति ? सत्यम्, अत एव तज्जन्यत इत्याह—

**यद् यस्य नास्ति तत् तस्य सुतरां जननक्षमम् ।**

उपसहरति—

**तस्मादपेक्षितं श्रोत्रं बधिरस्यापि जायताम् ॥ १४४ ॥**

शङ्कते—

**संस्कारेऽप्यविशिष्टं चेत्,**

संस्कारो बधिरस्यापि जायेतेति ।

परिहरति—

**नासावुपहतेन्द्रिये ।**

तदेव विवृणोति—

**श्रोत्रमाच्छादितं दोषैः संस्कर्तुं ध्वनयोऽक्षमाः ॥ १४५ ॥**

आच्छादितमुपहृतशक्तिकम्, तत्र[1] ध्वनयः सस्कुर्वन्ति, शक्त्युद्बोधनमेव हि संस्कारः कथमसत्यां तस्यां स्यादिति ।

भवतस्तु स्वतन्त्रस्योत्पद्यमानस्य श्रोत्रस्य बधिरेऽपि नास्ति प्रतिबन्ध इत्याह—

**उत्पद्यमानपक्षे तु न किञ्चित् प्रतिबन्धनम् ।**

प्रतिबन्धकल्पनायां वा अदृष्टकल्पनातो न मुक्तिरिति ।

तंत्रान्तरविरुद्धश्चाय पक्ष इत्याह—

**श्रोत्रमाकाशदेशं च भौतिकेन्द्रियवादिन ॥ १४६ ॥**
**यमाहुस्तस्य सद्भावः प्राग्ध्वनेः केन वार्यते ।**

लोकविरुद्धमेव प्रकारान्तरेणाह—

**सिद्धस्य च पदार्थस्य यान्यतः कार्ययोग्यता ॥ १४७ ॥**
**संस्कारशब्दवाच्यत्वात् सा युक्त्या वार्यते कथा ।**

सस्कारशब्दस्य साधारणस्य वाच्यत्वेन प्रसिद्धा शक्तिः, अतः सा तद्वाच्यत्वान्न वारणीयेति ।

ननु कोऽयं दोषः, यत्तन्त्रान्तरविरुद्धाभिधानम् ? अत आह—

**लोकागमप्रसिद्धेषु पदार्थेष्वन्यथा वचः ॥ १४८ ॥**
**तन्मुधाखेदकारि स्याद् गोविषाणाशनोपमम् ।**

तन्त्रान्तरेऽपि यल्लौकिकेन न्यायेन चाविरुद्धं तस्यान्यथाकरण वृथैवेति ।

यदि चावश्यं तन्त्रान्तरविपरीतं विवक्षितम्, एव वक्तव्यमित्याह—

**यदि त्ववश्यं कर्तव्यस्तार्किकोक्तिविपर्ययः ॥ १४९ ॥**
**ततो वेदानुसारेण कार्या दिक्श्रोत्रतामतिः ।**

वेदानुसारमेव दर्शयति—

**दिशः श्रोत्रमिति ह्येतत् प्रलयेष्वभिधीयते ॥ १५० ॥**

अध्रिगुप्रैषे हि सञ्ज्ञप्यमानस्य पशोरङ्गानां प्रलयेऽभिधीयमाने "दिशः श्रोत्रम्" इति वचनेन श्रोत्रस्य दिक्षु प्रलयोऽभिहित इति ॥ १५० ॥

ततः किम् ? इत्याह—

**तच्च प्रकृतिगामित्ववचनं चक्षुरादिवत् ।**

'चक्षुरादिवत्' इत्येतद् विवृणोति—

**सूर्यमस्य यथा चक्षुरुक्तं गमयतादिति ॥ १५१ ॥**
**तेजः प्रकृतिविज्ञानं तथा श्रोत्रं दिगात्मकम् ।**

"सूर्यमस्य चक्षुर्गमयतात्" इत्येवं तेजोरूपे सूर्ये प्रलीयमानत्वेनोक्तं चक्षुर्यथा

१. तत्र—मु० पा० ।

तेज प्रकृतिविज्ञानं तथा श्रोत्रमपि दिशः श्रोत्रमित्युक्तत्वाद् दिगाश्रयं तेजः-प्रकृतिकमित्येवंरूपं विज्ञानं यस्येत्यर्थ इति ।

नन्वाकाशवत् सर्वगता एका च दिक्, तस्या श्रोत्रत्वे दूरवृत्तीनामपि पुसा श्रोत्रं ध्वनिभि सस्कृतमिति सर्वेषा शब्दश्रवण स्यात् ? अत्राह—

**दिक् च सर्वगतैका च यावद् व्योम व्यवस्थिता ॥ १५२ ॥**
**कर्णच्छिद्रपरिच्छिन्ना श्रोत्रमाकाशदेशवत् ।**

सत्य दिगेका सर्वगता च, प्रत्यभिज्ञायते हि दिक्स्वरूपमेक सर्वदेशकालेषु, प्रागादिभेदस्त्वादित्योदयाद् यवच्छेदभेदादप्युपपद्यमानो न दिक्स्वरूप भेत्तुमलम्, तथाप्यसङ्कर इति ।

'आकाशदेशवत्' इत्येतद् विवृणोति पादत्रयेण—

**यावांश्च कणभुग्न्यायो नभोभागप्रकल्पने ॥ १५३ ॥**
**दिग्भागे तु समस्तोऽसौ,**

ननु तुल्यत्वे कः पक्षपातो दिङ्मयत्वे ? अत आह—

**आगमात् तु विशिष्यते ।**

उपसंहरति—

**तस्माद् दिग्द्रव्यभागो यः पुण्यापुण्यवशीकृतः ॥ १५४ ॥**
**कर्णच्छिद्रपरिच्छिन्नः श्रोत्रं संस्क्रियते च सः ।**

"प्रकृतमस्थानात्" इत्यस्य हेतोरसिद्धिमनैकान्तिकत्वं च यथायथमुपसंहरति—

**तस्मात् स्वतोऽनवस्थानं [1]परस्तादित्यसिद्धता ॥ १५५ ॥**
**प्रत्ययस्यानवस्थानं व्योम्न्यपि स्थगितेऽस्ति नः ।**

व्योमापि नश्वरमिति चेत् ? तत्राह—

**न च तस्मिन् विनाशित्वं द्रव्येऽद्रव्यात्मके[2] सति ॥ १५६ ॥**

न ह्यद्रव्यस्य द्रव्यस्य विनाशः सम्भवति परमात्मादिवदिति ॥ १५६ ॥

शङ्कते—

**तत्रानुमानबुद्धिश्चेत्,**

इयमेव भवदुक्ता अनुमानबुद्धिः स्थगिते व्योम्नि व्यवतिष्ठते, तत प्रत्ययानवस्थानस्य तत्राभावात् कथमनैकान्तिकत्वमिति ।

परिहरति—

**शब्देऽप्यस्तीति गम्यताम् ।**

शब्देऽपि प्रत्यभिज्ञानादानुमानिकः प्रत्ययोऽवतिष्ठत एवेत्यसिद्धः प्रत्ययानवस्थानं हेतुरिति ।

---

१. परस्मात्—का० । २. द्रव्याद्रव्यात्मके—३ पु० ।

**"प्रयोगस्य परम्"** ( जै० सू० १. १. १४ ) । यत्तु "करोतिशब्दात्" इत्युक्तं तद्विकल्प्य दूषयति द्वयेन—

**करोतेर्यच्च कर्मत्वात् कृतकत्वमुदाहृतम् ॥ १५७ ॥**
**अर्थस्तावदसिद्धोऽयम् अभिधानमथोच्यते ।**
**तत्रापि व्यभिचारित्वं तत्क्रियाजन्मवादिनः[१] ॥ १५८ ॥**
**गोमयादावतज्जन्येऽप्येष शब्दो हि दृश्यते ।**

'गोमयानि कुरु' इति समाहारेऽपि हि करोत्यभिधान दृष्टमिति ।

शङ्कते—

**यथा कथञ्चिदिष्टं चेत् कार्यत्वं गोमयादिषु ॥ १५९ ॥**

कार्यत्वमात्रं प्रतिज्ञातोऽर्थे , तच्चास्त्येव गोमयादाविति विपक्षत्वाभावान्ना-नैकान्तिकतेति ॥ १५९ ।।

परिहरति—

**तथाप्याकाशमात्रत्वं कुरुष्वेत्यत्र दृश्यते ।**

पुनः शङ्कते—

**वरणाभावमात्रत्वात् कार्यमेवेति चेत्,**

वरणाभावमात्रमाकाशं न वस्त्वन्तरम्, तच्चोद्धरणादिव्यापारजन्यमेवेति ।

निराकरोति—

**न तत् ॥ १६० ॥**

कारणमाह—

**बौद्धानामपि नाभावः स्वयंसिद्धो हि जन्यते ।**
**मृदां देशान्तरप्राप्तिर्व्यापारफलमत्र हि ॥ १६१ ॥**

**बौद्धानामिद** दर्शनम्—वरणाभावमात्रमाकाशमिति, तेषा त्वभावस्याकार्य-त्वादस्त्येव विपक्षत्वम्, वस्त्वन्तरत्वे च निर्विवादमेव विपक्षत्वमिति ॥ १६१ ॥

किमर्थस्तर्हि उद्धरणादिव्यापारः ? अत आह—

**अनावृत्यात्मकं व्योम नित्यमेव व्यवस्थितम् ।**

मुख्यं करोत्यभिधान हेतुः, आकाशे तु प्रसिद्धनित्यत्वे गौणोऽयम्, अतो नानैकान्तिकत्वमिति चेत् ? एवं तर्ह्यसिद्धो हेतुः, शब्देऽपि प्रत्यभिज्ञावगतनित्यत्वे गौण एव करोतिप्रयोग इत्याह—

**नित्यस्य करणाभावात् प्रयोगेऽस्मिन्नथोच्यते ॥ १६२ ॥**
**भ्रान्तत्वं गौणता वेति शब्देऽप्येवं भविष्यति ।**

---

१. ०जन्य०—का० ।

**"आदित्यवद् यौगपद्यम्"** ( जै० सू० १ १. १५ )। "सत्त्वान्तरे च यौगपद्यात्" ( जै० सू० १. १. ९ ) इति यदुक्तं तदनैकान्तिकमित्याह द्वयेन—

**प्राग्भागो यः सुराष्ट्राणां मालवानां स दक्षिणः ॥ १६३ ॥**
**प्राग्भागः पुनरेतर्षां तेषामुत्तरतः स्थितः ।**
**तेन सूर्योदितेर्देशौ भिन्नावुभयवासिनाम् ॥ १६४ ॥**
**दृष्टौ सवितुरेकत्वेऽप्यतोऽनैकान्तिको भवेत् ।**

इतश्चास्ति नानादेशोपलम्भः सवितुरित्याह—

**पश्यन्त्येके च यद्देशावुदयास्तमयौ रवेः ॥ १६५ ॥**
**तावत्येवाभिमन्यन्ते परस्तात् तन्निवासिनः ।**

यस्मिन् खलु वृक्षे पर्वते वा यावद्देशवर्त्तिनि सूर्यस्योदयमस्त वा केचित् पश्यन्ति तद्देशवासिन , अन्ये तत परस्तात् तावद् दूरे पश्यन्तीति व्यक्तं नानादेशोपलम्भनमिति ।

भिन्नो भिन्न एवादित्य इति चेत् ? न, योग्यानुपलम्भादित्याह—

**न च भिन्ना निरीक्ष्यन्ते तेन नादित्यभिन्नता ॥ १६६ ॥**

इतश्चास्ति नानादेशोपलब्धिरित्याह—

**मध्याह्ने सर्वपुंसां स्यादेकं[1] चोपरि[1] दर्शनम् ।**

किं पुनः कारण येनैकोऽपि सविता नानादेशेषु दृश्यते ? तद्दर्शयति—

**यो यो गृहीतः सर्वस्मात् पुरतः सवितेक्ष्यते[2] ॥ १६७ ॥**

दूरस्थस्य सन्निध्यध्यासकृतो नानादेशभ्रमः । तथा हि—योऽत्र स्थितैरस्माभिर्यावदन्तरालः पर्वतादि. सवितुर्देशत्वेन गृहीतः, तद्गतैरस्माभिस्ततः परस्तात् तावदन्तराले दृश्यते, तथा तद्गतैरपि ततः परस्तात्, अतोऽवगम्यते सर्वेषामग्रतोऽतिदूरे स्थितोऽसौ भिन्नदेशस्थै. सर्वैः पुरुषैस्तत्सन्निध्यध्यासेन नानादेशेषु दृश्यत इति ॥ १६७ ॥

**तदन्तराधिकात्मा च भाति तेनाग्रतः स्थितः ।**

पूर्वं हि पर्वतोऽस्य देशत्वेन गृहीत., न च पर्वतस्य सवितुश्चान्तरालमवगतम्, तद्गतैस्तु तयोरन्तरालं पूर्वान्तरालसमानपरिमाणमधिकं वा गम्यत इति ।

दृष्टं चान्यत्रापि दूरस्थस्यैकस्यापि सन्निध्यध्यासेन नानादेशदर्शनम्, अतस्तत्रानैकान्तिकत्व हेतोरित्याह—

**विप्रकृष्टान्तराणां च स्तोकदेशोऽपि दृश्यते ॥ १६८ ॥**
**सिद्धभिन्नाप्रदेशानां दूरदेशसमानता ।**

यो ह्यादित्यापेक्षया स्तोकदेशः पर्वतादिः, तत्रापि विप्रकृष्टान्तराणां पुरुषा-

---

१-१. एकत्रोपरि—का० । २. इष्यते—का० पा० ।

णाम्, अत एव सिद्धभिन्नाग्रदेशानां दूरदेशसमानता दृश्यते, ये हि पर्वतस्य दशयोजनेषु स्थिताः ये च द्वादशसु, ते तावन्मिथो द्वियोजनानन्तरत्वाद् विप्रकृष्टान्तरालाः, तत्र दशयोजनस्थिता यावद् दूरे स्वात्मनो देशे पर्वतं पश्यन्ति, द्वादशस्ववस्थिताः स्वात्मनस्तावद् दूर एव स्वात्मदेशे पश्यन्तीति।

चोदयति सपादेन—

**तत्रापि विप्रकृष्टस्य सन्निध्यध्यासकारिता ॥ १६९ ॥**
**देशभ्रान्तिर्भवेत् पुंसां तत्तद्देशमपश्यताम्।**
**शब्दे तु किंनिमित्तैषा ?**

परिहरति—

**तत्रापि व्यापिताकृता ॥ १७० ॥**

व्यापित्वमेव कथम् ? अत्राह—

**यो यो गृहीतः सर्वस्मिन् देशे शब्दोऽपि[1] दृश्यते[1]।**

न हि स देशोऽस्ति यत्रोच्चरितोऽपि शब्दो न गृह्यते, अतो देशानवच्छेदाद् विभुत्वमिति।

यत्तु 'कात्स्न्येंन चावगम्यत्वादेकदेशे घटादिवत् शब्दस्याविभुता' (श्लो० वा० श० ११) इत्युक्तम्, तत्राह—

**न चास्यावयवाः सन्ति येन वर्त्तेत भागशः ॥ १७१ ॥**

यद्यसौ भागशः प्रदेशेषु वर्त्तेत, ततो न कात्स्न्येंन गम्येत। न त्वसौ भागशः प्रदेशेषु वर्त्तते, निर्भागत्वादिति ॥ १७१ ॥

कथं तर्हि वर्त्तते ? अत्राह—

**शब्दो वर्त्तत इत्येवम्,**

स्वरूपेणैवासौ वर्त्तत इति।

तथापि कथं कात्स्न्येंनावगतिरिति ? तत्राह—

**तत्र सर्वात्मकश्च सः।**

इदमेव तस्य कात्स्न्यं यदुक्तावेकत्वम्, अतो व्योमादिवदवैकल्येन सर्वत्र वर्त्तमानः सर्वात्मना वृत्तो भवतीति युक्तैव एकैकत्र कात्स्न्यावगतिरिति।

ननु सर्वगतः शब्दः किमिति सर्वव्यापितया न गृह्यते ? अत आह—

**व्यञ्जकध्वन्यधीनत्वात् तद्देशे[2] तु[2] स गृह्यते ॥ १७२ ॥**

व्यञ्जकदेशेऽस्य घटादेरिवालोकदेशे ग्रहणमिति ॥ १७२ ॥

ततः किम् ? इत्याह—

---

१-१. शब्दो हि विद्यते—का०। २. तद्देशेषु—का०।

**न च ध्वनीनां सामर्थ्यं व्याप्तुं व्योम निरन्तरम् ।**

उपसंहरति—

**तेनाविच्छिन्नरूपेण नासौ सर्वत्र गृह्यते ।। १७३ ।।**

ननु यद्यपि ध्वनिवशात् प्रादेशिको गृह्यते न सर्वव्यापितया, तथापि कथं देशभेदभ्रान्तिः ? अत आह—

**ध्वनीनां भिन्नदेशत्वं श्रुतिस्तत्रानुरुध्यते ।**
**अपूरितान्तरालत्वाद् विच्छेदश्चावसीयते ।। १७४ ।।**

व्यापी हि शब्दो यदा भिन्नदेशैर्युगपद्भूतैर्ध्वनिभिरभिव्यज्यते, तदायमपि तत्तद्देशेऽवगम्यते । ध्वनीनां चापूरितान्तरालत्वाच्छब्दोऽप्यन्तरालेऽनवगम्यमानो विच्छिन्न इव भासते, अतो युक्ता नानादेशावगतिरिति ।। १७४ ।।

ध्वन्यल्पदेशत्वादेव च शब्देऽप्यविभुत्वभ्रान्तिरित्याह—

**तेषां चाल्पक[1]देशत्वाच्छब्दस्याविभुता[2]मतिः ।**

योऽप्ययम् 'इतः शब्द आगच्छति' इति प्रत्ययः सोऽपि ध्वन्यागमननिबन्धन एव । ध्वनयो हि गतिमन्तो वेगवन्तश्च यतो नि सरन्ति ततस्ततः स शब्दमिवायान्तं मन्यते, तदाह—

**गतिमद्वेगवत्त्वाभ्यां ते चायान्ति यतो यतः ।। १७५ ।।**
**श्रोता ततस्ततः शब्दमायान्तमिव मन्यते ।**

चोदयति—

**सूर्यस्य भिन्नदेशत्वं नन्वेकेन न गृह्यते ।। १७६ ।।**

परिहरति—

**न नाम सर्वथा तावद् दृष्टास्यानेकदेशता ।**

यदि त्वेकेन युगपदुपलम्भादिति सविशेषणो हेतुः, तथाप्यस्त्येव व्यभिचार इत्याह—

**सविशेषणहेतुश्चेत् तथापि व्यभिचारिता ।। १७७ ।।**

कथम् ? इत्याह—

**दृश्यते भिन्नदेशोऽयमित्येकोऽपि हि बुद्ध्यते ।**

एकोऽपि हि इतस्ततो गतस्तत्र तत्रादित्यं पश्यन्नेवमवगच्छति—नूनमय नानादेशस्थैस्तत्र तत्र दृश्यत इति ।

अथ पुनरिन्द्रियेण युगपदेकेन पुरुषेण नानादेशोपलम्भादिति हेतुः, अत्राह युगपदन्तेन—

---

१. अल्पैक०—२ पु० ।  २. शब्देऽप्यविभुता०—३ पु० ।

**जलपात्रेषु चैकेन नानेकः सवितेक्ष्यते ॥ १७८ ॥**

**युगपत्,**

ननु नात्र सविता एको दृश्यते, किन्तु प्रतिपात्र भिन्नान्येव प्रतिबिम्बानि ? अत आह—

**न च भेदस्य प्रमाणं तुल्यवेदनात् ।**

न हि बिम्बात् प्रतिबिम्बस्य भेदोऽस्ति प्रत्यभिज्ञानात्, नतरां प्रतिपात्रं भेद ? इति शङ्का विवृणोति—

**आहैकेन निमित्तेन प्रतिपात्रं पृथक् पृथक् ॥ १७९ ॥**

**भिन्नानि प्रतिबिम्बानि जायन्ते युगपन्मम ।**

केनचिन्मुखबिम्बसन्निधानादिना निष्पन्नानि भिन्नान्येव पृथक् पृथक् गृह्यन्त इति ।

परिहरति द्वयेन—

**अत्र ब्रूमो यदा तावज्जले सौरेण तेजसा ॥ १८० ॥**

**स्फुरता चाक्षुषं तेजः प्रतिस्रोतः प्रवर्त्तितम् ।**

**स्वदेश एव गृह्णाति सवितारमनेकधा ॥ १८१ ॥**

**भिन्नमूर्ति यथा पात्रं तदास्यानेकता कुतः ।**

एवमप्युपपत्तौ सत्या नानेकप्रतिबिम्बाख्यवस्त्वन्तरपरिकल्पनाया प्रमाणमस्ति । **यथा पात्रमिति** । यावन्ति पात्राणि तावद् भेदमित्यर्थः ।

दृष्टं च नेत्रवृत्तिभेदादेकस्यापि चन्द्रादेरनेकधा दर्शनमित्याह—

**ईषन्निमीलितेऽङ्गुल्या[1] यथा चक्षुषि दृश्यते ॥ १८२ ॥**

**पृथगेकोऽपि भिन्नत्वाच्चक्षुर्वृत्तेस्तथैव नः ।**

प्रतिबिम्बवादिना चोद्यमुपन्यस्यति द्वयेन—

**अन्ये तु चोदयन्त्यत्र प्रतिबिम्बोदयैषिणः ॥ १८३ ॥**

**स एव चेत् प्रतीयेत कस्मान्नोपरि दृश्यते ।**

**कूपादिषु कुतोऽधस्तात् प्रतिबिम्बेक्षणं भवेत्[2] ॥ १८४ ॥**

**प्राङ्मुखो दर्पणं पश्यन् स्याच्चेत् प्रत्यङ्मुख. कथम् ।**

परिहरति—

**तत्रैव बोधयेदर्थं बहिर्यातं यदिन्द्रियम् ॥ १८५ ॥**

**तत एतद् भवेदेवं शरीरे तत्तु बोधकम् ।**

देहप्रदेशे पुंसो ज्ञानम्, अतो बहिर्गतमपि चाक्षुष तेजो देह एव बोधयति, न बहिर्देहेऽवबुद्धयमानो देहाभिमुखे च[3] चाक्षुषार्थं बुद्धयते, नान्यथेति ।

---

१. निमीलिता०—मु० पा० । २. प्रतिबिम्बाद्विनेक्षणन्—१ पु० ।

३. ०भिमुख्येनैव—मु० पा० ।

तत किम् ? इत्याह सार्द्धेन—

**अप्सूर्यदर्शिना[1] नित्यं चक्षुर्द्वेधा प्रवर्त्तते ॥ १८६ ॥**

**एकमूर्ध्वमधस्ताच्च तत्रोर्ध्वांशप्रकाशितम्[2] ।**

**अधिष्ठानानृजुस्थत्वान्नात्मा सूर्यं प्रपद्यते ॥ १८७ ॥**

एकमेव चक्षुरुत्कण्ठितलम्बमानसर्पवद् द्वेधा वर्त्तते—अधस्तादूर्ध्वं च, तत्रोर्ध्ववृत्तिप्रकाशितदेहानार्जवान्नात्मा बुध्यत इति ॥ १८७ ॥

कस्मात् तर्हि बुद्ध्यते ? अत आह—

**पारम्पर्यार्पितं सन्तमर्वाग्वृत्त्या तु बुध्यते ।**

ऊर्ध्ववृत्तिरधोवृत्त्यै समर्पयति सा चात्मन इति ।

कः पुनरूर्ध्ववृत्तेरधोवृत्त्या सम्बन्धः, येन समर्पयति ? अत आह—

**ऊर्ध्ववृत्तेस्तदेकत्वादवागिव च मन्यते ॥ १८८ ॥**

एकस्यैव हि तावशौ, तेनास्योर्ध्ववृत्तेस्तया वृत्त्या—धर्मिरूपेणैक्यमिति अधोवृत्त्याऽवबुद्ध्यमानस्तदानुगुण्यादवागिव सूर्यं मन्यत इति ॥ १८८ ॥

उपसंहरति—

**अधस्तादेव तेनार्कः,**

सान्तराल इवोर्ध्ववृत्त्या समर्पित इति ।

तथावगतिरप्युपपन्नैवेत्याह—

**सान्तरालः प्रतीयते ।**

यत्तु प्राङ्मुखो दर्पण पश्यन् कथं प्रत्यङ्मुखो दृश्यत इत्युक्तम् ? तत्राह—

**एवं प्राग्भूतया वृत्त्या प्रत्यग्वृत्तिसमर्पितम् ॥१८९ ॥**

**बुध्यमानो मुखं भ्रान्त्या प्रत्यगित्यवगच्छति ।**

तत्रापि प्रत्यग्वृत्तिप्रकाशित मुखम् अधिष्ठानानार्जवान्नात्मा प्रतिपद्यते, किं तु प्रत्यग्वृत्तिः प्राग्वृत्त्यै समर्पयति, तया च समर्पितः प्राग्वृत्त्या बुद्ध्यमानस्तदानुगुण्येन प्रत्यगिति बुद्ध्यते ।

नन्वत्र दर्पणस्थमेव मुख गृह्यते न जलपात्रेष्विवाधः सान्तरालम्, तत्कस्य हेतोः ? अत्रापि सान्तरालमेव मुख प्रत्यग्वृत्त्या प्रकाशित प्राग्वृत्त्यै समर्पित तथैव ग्रहीतव्यम् ? उच्यते, वस्तुस्वभावस्यापर्यनुयोज्यत्वाददोषः । तैजसेषु हि दर्पणादिषु तद्गतमेव मुखं गृह्यते, जले तु सान्तरालमिति किमत्र पृच्छ्यत इति ।

उपेत्यापि प्रतिबिम्बं तद्देशभेदं च नानात्वं नास्ति प्रत्यभिज्ञानादित्याह—

**अनेकदेशवृत्तौ वा सत्यपि प्रतिबिम्बके ॥ १९० ॥**

**समानबुद्धिगम्यत्वान्नानात्वं नैव विद्यते ।**

---

१. असूर्य०—१ पु० । २. ऊर्ध्वांशम्—का० ।

**भाष्यकारेण** "दूरत्वादादित्यस्य देशो नावधार्यते, अतो व्यामोहाद् देशभेदावगतिः, एवं शब्देऽपि व्यामोहादनवधारणं देशस्य" इत्युक्त्वा व्यामोहत्वे कारणं दर्शितम्—"यदि श्रोत्रं संयोगविभागदेशमागत्य शब्दं गृह्णीयात् तेनैकदेशता कदाचिदवगम्येत, न तु तत्संयोगदेशमागच्छति, प्रत्यक्षा हि कर्णशष्कुली तद्देशस्था गृह्यते" ( शा० भा० पृ० ९८ ) इति, तद् व्याचष्टे—

**वक्तृवक्त्रप्रदेशानां भिन्नत्वाद् भिन्नदेशता ॥ १९१ ॥**
**श्रोत्रागमनपक्षे स्यात् तद्देशे त्वेकदेशता ।**

श्रोत्रदेश एव यदा शब्दः श्रूयते तदा तस्यैकत्वादेकस्मिन्नेव देशे परमार्थतः शब्दः श्रूयते, त तु देशमनवधारयन्तो वक्तृदेश एव शब्दं मन्वानास्तेषां भेदाद् भिन्नदेशतां भ्रान्त्या मन्यन्त इति ।

ननु श्रोत्रानागमे यत्कारणं प्रत्यक्षा हि[1] कर्णशष्कुली तद्देशस्था गृह्यत इति, तदयुक्तम्, न हि तत्स्वरूपं श्रोत्रम्, किन्तु तदवच्छिन्नो नभोभागः ? अत आह—

**अधिष्ठानाबहिर्वृत्तेरन्यस्मिन् सत्यपीन्द्रिये ॥ १९२ ॥**
**तद्देशाः कर्णशष्कुल्यो गृह्येरन् गमने सति ।**

किं पुनर्भ्रान्तित्वप्रतिपादनस्य प्रयोजनम् ? एकत्वसमर्थनमेव । अनेकदेशसम्बन्धो ह्येकस्यानुपपन्नः स्यात्, एकदेशस्थस्यैव तु भ्रान्त्यानेकदेशत्वावगतिः एकस्याप्यादित्यस्येव नानुपपन्नेति ।

तदिदमाक्षिपति—

**इयं तु वक्त्रनेकत्वे श्रोत्रैकत्वे[2] च कल्पना ॥ १९३ ॥**
**वक्तर्येकत्र भिन्नेषु श्रोतृषु स्याद् विपर्ययः ।**

येयं श्रोत्रानागमेन एकदेशनानादेशप्रतीत्योः पारमार्थिकभ्रान्तित्वकल्पना सा वक्त्रनेकत्वे श्रोत्रैकत्वे च सम्भवति, यदा त्वेको वक्ता बहवश्च श्रोतारः तदा श्रोत्रानागमादेव विपर्ययः स्याद्—एकदेशप्रतीतिरेव भ्रान्तिः नानादेशप्रतीतिस्तु पारमार्थिकी स्यादिति ।

कथम् ? इत्याह—

**तत्र हि श्रोत्रदेशानां भिन्नत्वाद्भिन्नदेशता ॥ १९४ ॥**
**तदागमे तु वक्त्रैक्यादेकदेशत्वसम्भवः ।**

बहुभिः श्रोतृभिः स्वश्रोत्रदेशेषु शब्दः श्रूयमाणो भिन्नदेश एव परमार्थतः स्यात्, श्रोत्रस्य हि वक्तृदेशं प्रत्यागमे सति तस्यैक्यादेकदेशता स्यात्, न चासावस्ति, तेनैकदेशप्रतीतिरेव भ्रान्तिः स्यादिति ।

सत्यमेकदेशावगतिरपि भ्रान्तिरेव, सर्वगतो हि शब्दो न प्रादेशिकः, स च

१. प्रत्यक्षादि—मु० पा० । २. ज्ञानैकत्वे—३ पु० ।

प्रादेशिकैर्ध्वनिभिरेकस्माद् वक्तृप्रदेशादागच्छद्भिरभिव्यज्यमानस्तद्देश इव भ्रान्त्या-वगम्यते इति चेत् ? तथा सति इतरत्रापि वक्तृबहुत्वे तुल्यैवैषा ध्वनिनिमित्ता भ्रान्तिः। भिन्ना हि येऽभिव्यञ्जका ध्वनय. तेषा ताल्वादिदेशभेदाच्छब्दोऽपि भिन्नदेश इवावगम्यत इति शक्यं वक्तुम्, किं श्रोत्रानागमनोपन्यासेन ? इत्याह—

**ध्वन्यागत्या यदि भ्रान्तिरितरत्रापि सा समा ॥ १९५ ॥**
**भिन्नव्यञ्जकताल्वादिदेशभेदाद् भविष्यति ।**

समाधत्ते—

**सूत्रेण युगपद्भावः श्रोत्रैकत्वादुदाहृतः ॥ १९६ ॥**
**अतस्तदनुसारेण यद्यपीत्यादिकीर्तनम् ।**

सत्य नानैकदेशप्रतीति , द्वे अपि भ्रान्ती, तथा त्वेकदेशप्रतीतेर्भ्रान्तित्वम-प्रस्तुतत्वान्नोपपद्यते । **सूत्रकारेण** हि बहुषु वक्तृषु एकस्य श्रोतुर्युगपन्नानादेशोप-लब्धि. पूर्वपक्षहेतुत्वेनोपन्यस्ता, तदनुसारेण **भाष्यकारो** नानादेशप्रतीतेरेव "यदि श्रोत्रम्" इत्यादिना भ्रान्तित्वमुपपादयति ।

नन्वेवमपि ध्वन्यागतिरेव वक्तव्या, कि श्रोत्रानागमेन ? उच्यते, ध्वन्यागतिर्हि भ्रान्तौ कारणं न तु भ्रान्तित्वे प्रमाणम् । वैभव प्रमाणमिति चेत् ? न तस्य परे-षामसिद्धेस्ततस्तत्प्रमाणत्वेन श्रोत्रानागतिरुच्यते । न हि स्वदेशस्थ श्रोत्रं शक्नोति भिन्नेषु देशेषु शब्दं ग्रहीतुम्, अतो भ्रान्तमेव नानादेशत्व न वास्तवम्, येन शब्दभेदः स्यात् । एकस्मिन् वक्तर्येकदेशावगतेरपि भ्रान्तित्वे श्रोत्रानागतिरेव प्रमाणम्, प्रस्तुतत्वात्त्वनेकदेशावगतेरेव भ्रान्तित्वं भाष्ये वर्णितमिति ।

नन्विद भवतु भ्रान्तम्, श्रोतृबहुत्वे तु परमार्थत एव देशभेदात् शब्दस्वरूप-मपि घटपटवद् भिद्येत, आकाशदेशत्वेऽपि ,तत्प्रदेशभेदान्नानुपपन्ना नानादेशता, अत आह **भाष्यकारः**—"अपि चैकरूपत्वे सति" ( शा० भा० पृ. ९९ ) इत्यादि, तद् व्याचष्टे—

**देशभेदेन भिन्नत्वमित्येतच्चानुमानिकम् ॥ १९७ ॥**
**प्रत्यक्षस्तु स एवेति प्रत्ययस्तेन बाधकः ।**

सत्यपि देशभेदे प्रत्यक्षप्रत्यभिज्ञयैकरूप्यावगमान्न भेदानुमानं सम्भवतीति ।

कथमेकस्यानेकैर्देशैः सम्बन्ध इति चेत् ? न; अन्यत्रापि दर्शनादित्याह द्वयेन—

**पर्यायेण यथा चैको भिन्नान् देशान् व्रजन्नपि ॥ १९८ ॥**
**देवदत्तो न भिद्येत तथा शब्दो न भिद्यते ।**
**ज्ञातैकत्वो[1] यथैवासौ दृश्यमानः पुनः पुनः ॥ १९९ ॥**

---

१. ज्ञानैकत्वे—३ पु० ।

**न भिन्नः कालभेदेन तथा शब्दो न देशतः।**

अत्र शङ्कते—

**पर्यायादविरोधश्चेद्,**

न हि स्वतन्त्रस्य कस्यचिदेकस्य युगपदनेकदेशसम्बन्ध. सम्भवति, सामान्यस्य तु गोत्वादेर्व्यक्तिपरतन्त्रस्य स्यादपि, प्रत्यभिज्ञा तु ज्वालादाविव सादृश्यादप्युपपद्यत इत्युक्तमिति।

परिहरति—

**व्यापित्वादपि दृश्यताम्** ॥ २०० ॥

विच्छिन्नानेकदेशसम्बन्धो हि एकस्य न स्याद्, व्यापिनस्तु सर्वत्र सतो गगनवन्नानुपपत्तिरिति ॥ २०० ॥

किं पुनः प्रमाणं व्यापित्वे ? तद्दर्शयति—

**दृष्टसिद्धौ हि यो धर्मः सर्वथा सोऽभ्युपेयते।**

यदेतद् युगपदनेकदेशसम्बन्धित्वं यच्च प्रत्यभिज्ञावगतमेकत्वम्, तदुभयसिद्ध्यर्थं व्यापित्वमुपेयते। तेनोपपन्नमनेकदेशत्वमेकत्वेऽपीति।

न प्रत्यभिज्ञाया भ्रान्तित्वं युक्तम्, प्रत्युतानित्यत्वपक्ष एव बहुभिर्युगपच्छ्रवणमेकस्य शब्दस्यानुपपन्नम्। न ह्यप्राप्यग्रहणं सम्भवति, सन्निकृष्टविप्रकृष्टयोर्युगपद्ग्रहणप्रसङ्गात्, अत· श्रोत्रप्राप्तस्यैव ग्रहणं वक्तव्यम्। न चैकवक्त्रुच्चारितस्यैकस्य शब्दस्य युगपदनेकश्रोत्रप्राप्ति· सम्भवति, सन्तानपक्षेऽपि प्रदेशान्तरे कार्यारम्भणं प्रमाणविरुद्धमेव, रूपादिष्वदर्शनात्। तद्वर घटादिष्वदृष्टामप्यभिव्यञ्जकव्यवस्थामाश्रित्य नित्यत्वाङ्गीकरणम्। एवं हि प्रत्यभिज्ञा समर्थिता भवति। तस्मात् सर्वगतो नित्यः शब्दो ध्वनिवशात् क्वचित् कदाचिदभिव्यज्यत इति युक्तमिति।

यत्तु यकारादिरूपेण विक्रियमाणत्वादिकारादेरनित्यत्वं विकारसिद्ध्यर्थं च ये स्मृति-सादृश्ये उक्ते, तत्र स्मृतिस्तावदसिद्धेत्याह सपादेन—

**वर्णान्तरविकार्यत्वादिति योक्ता विनाशिता** ॥ २०१ ॥
**उक्ते च हेतुसिद्ध्यर्थं सादृश्यस्मरणे पुनः।**
**तत्र स्मृतेरसिद्धत्वम्,**

कथमसिद्धिः ? अत्राह—

**न ह्येवं पाणिनेर्वचः** ॥ २०२ ॥

**इकारपरिणामेन यकारः क्रियतामिति।**

'इको यणचि' ( पा० सू० ६. १. ७७ ) इत्यस्य नायमर्थ इति।

किमिति नायमर्थः ? अत आह—

**सिद्धे शब्दार्थसम्बन्धे तच्छास्त्रं हि प्रवर्त्तते ॥ २०३ ॥**
**प्रयोगनियमार्थाय न चैवं सिद्धता भवेत् ।**

एव शास्त्रादावुक्तम्—"सिद्धे शब्दार्थसम्बन्धे नियमार्थं व्याकरणम्" (पा० म० भा० पृ० ५५) इति, प्रकृतिविकारभाव च ब्रुवता दध्यपदमसिद्धमेव साधितं स्यात्, अतो नायमर्थ इति तद्दर्शनार्थं तत्पातनिका तावत् करोति सार्द्धेन—

**भिन्नप्रसिद्धयोस्तेन दधि दध्येति शब्दयोः ॥ २०४ ॥**
**आचक्षाणेन साधुत्वं दधीत्यौत्सर्गिकः कृतः ।**
**अन्वाख्यातुं स्वरूपेण दध्यशब्दं च वेदितुम् ॥ २०५ ॥**

स्वतन्त्रसिद्धयोरेव दधिदध्यपदयोः साधुत्वमाचक्षाणेन दधिपद तावदुत्सर्गरूपेण **नामपारायणे** पठितम्, किमर्थम् ? तत्स्वरूपस्य तदपवादरूपेणाचि परत. सहितायामेव लोकसिद्धस्य दध्यशब्दस्य साधुत्वमन्वाख्यातुमिति ॥ २०५ ॥

नन्वव स्वातन्त्र्ये दध्यपदमपि स्वरूपेणैव पठितव्यम्, अपवादरूपेण तु तद्वचनाद् दधिपदस्यायमेकदेशविकारो न पदान्तरम् ? अत आह—

**स्वशास्त्रे लघुबोधार्थमेकत्वमिव दर्शितम् ।**

स्वरूपेण हि सर्वेषामिगन्ताना यणन्ताना पाठे गौरव स्यात्, अव्यवस्थया च सर्वेषा साधुत्वं स्यात्, अतो लाघवार्थम् 'अचि परत सहितायामेव यणन्ताना साधुत्वमन्यत्र चेगन्तानाम्' इति व्यवस्थार्थं चैकत्वमिति दर्शितमिति ।

सूत्रतात्पर्यं दर्शयति—

**तत्राचि[1] परतः सिद्धं दध्यशब्दं निवर्त्तयन् ॥ २०६ ॥**
**दधीति शास्त्रतः प्राप्तः सोऽयं तेनैव वार्यते ।**

तेनैव शास्त्रेणापोद्यत इति ।

अपवादस्वरूपं सौत्रं दर्शयति—

**इक्प्रयोगप्रसङ्गे तु यण् साधुरिति गम्यते ॥ २०७ ॥**

परमार्थतस्तु नास्त्येव विकार इत्याह—

**परमार्थस्तु नैवास्मिन् विकारोऽभूत् कदाचन ।**

स्मृत्यभावे च केवलं सादृश्यमवशिष्यते, तच्च **भाष्यकारे**णानैकान्तिकीकृतमित्याह—

**केवलं यत्तु सादृश्यं तदनैकान्तिकीकृतम् ॥ २०८ ॥**
**कुन्दे दध्यविकारेऽपि तत्सादृश्यं हि दृश्यते ।**

ननु दधिकुन्दयोर्न सर्वात्मना सादृश्यम्, तत् कथमनैकान्तिकत्वम् ? एवं तर्ह्यसिद्धो हेतु., इकारयकारयोः सर्वात्मना सादृश्याभावादित्याह—

१. तत्रापि०—३ पु० । १—०परतासिद्धम्—२ पु० ।

**नास्ति सर्वात्मना तच्चेच्छब्देऽपि स्थानमात्रकम् ॥ २०९ ॥**

यदा च स्मृतिसादृश्ययोरसिद्धि , तदा तदधीनसिद्धेर्मूलहेतो' प्रकृतिविकार-भावस्याप्यसिद्धिरित्याह—

**तेनैतयोरसिद्धत्वात् मूलहेतोरसिद्धता ।**

"वृद्धिश्च कर्तृभूम्नास्य" ( जै० सू० १. १. ११ ) इत्यस्यासिद्धिकथनार्थं सूत्र **नादवृद्धिपरा** ( जै० सू० १ १ १७ ) इति ।

तद् व्याचष्टे—

**कारणानुविधायित्वं यच्चाल्पत्वमहत्त्वयोः ॥ २१० ॥**

**तदसिद्धं न वर्णो हि वर्धते न पदं क्वचित् ।**

कथं पदस्यावृद्धिसिद्धि ? इत्यत आह—

**वर्णान्तरजनौ तावत् तत्पदत्वं विहन्यते ॥ २११ ॥**

अथ विहते तत्पदत्वे कि तद्भवति ? अत्राह—

**अपदं हि भवेदेतद् यदि वा स्यात् पदान्तरम् ।**

वर्णस्यावृद्धि प्रयोगेण दर्शयति—

**वर्णोऽनवयवत्वात् तु वृद्धिह्रासौ न गच्छति ॥ २१२ ॥**

**व्योमादिवदतोऽसिद्धा वृद्धिरस्य स्वरूपतः ।**

मा भूद् वस्तुतो वृद्धि , अस्ति तावद् वृद्धिज्ञानम्, तन्मात्रं चात्र हेतु , ततोऽनैकान्तिकत्वमित्याह—

**अथ ताद्रूप्यविज्ञानं हेतुरित्यभिधीयते ॥ २१३ ॥**

**तथापि व्यभिचारित्वं शब्दत्वेऽपि हि तन्मतिः ।**

तदेव विवृणोति—

**व्यक्त्यल्पत्वमहत्त्वे च यद् यथानुविधीयते ॥ २१४ ॥**

**तथैवानुविधानार्थं ध्वन्यल्पत्वमहत्त्वयोः ।**

इतश्चानैकान्तिकत्वमित्याह सार्धेन—

**व्यङ्ग्यानां चैतदस्तीति लोकेऽप्यैकान्तिकं न तत् ॥ २१५ ॥**

**दर्पणाल्पमहत्त्वेऽपि दृश्यतेऽनुपतन्मुखम् ।**

**न स्यादव्यङ्ग्यता तस्य तत्क्रियाजन्यतापि वा ॥ २१६ ॥**

**तत्क्रिया** = दर्पणावेक्षणक्रियेति ॥ २१७ ॥

नन्वेवमुच्चारणक्रियाजन्यतैव शब्दस्य न स्यात्, क्रियान्तरजन्यता तु मुखादिवत् कि न भवति ? अत्राह—

**न चास्योच्चारणादन्या विद्यते जनिका क्रिया ।**

किञ्च, अत्यन्ताकृतकेऽपि व्योमन्यस्त्येव व्यञ्जकानुविधायिनी महत्त्वाल्पत्वबुद्धिरित्याह—

**यथा महत्यां खातायां मृदि व्योम्नि महत्त्वधीः ॥ २१७ ॥**
**अल्पायामल्पधीरेवमत्यन्ताकृतके सति ।**

व्योमवद् व्यञ्जकोपाधिकृतो वृद्धिभ्रम इत्याह—

**तेनात्रैवं परोपाधिः शब्दवृद्धौ मतिभ्रमः ॥ २१८ ॥**

किञ्च, वृद्धिरपि शब्दवृद्धौ नास्त्येवेत्याह—

**न च स्थूलत्वसूक्ष्मत्वे लक्ष्येते शब्दवृत्तिनी[1] ।**

ननु बहुभिरुच्चार्यमाणेऽस्त्येव वृद्धिप्रतीतिः ? अत्राह—

**बुद्धितीव्रत्वमन्दत्वे महत्त्वाल्पत्वकल्पना ॥ २१९ ॥**

वक्तृबहुत्वेऽल्पत्वे च बुद्धेस्तीव्रता मन्दता च भवतीति। तीव्रता तावत् साधारणासाधारणबहुतरधर्मावगतिः, तद्विपर्यये मन्दता। तावता च बहुत्वाल्पत्वप्रतीतिर्भ्रम इति ॥ २१९ ॥

तीव्रमन्दता च बुद्धेर्व्यञ्जकवशादपि दृष्टेति न तया शब्दस्य कृतकता सिद्ध्यतीत्याह—

**सा च पट्वी[2] भवत्येव महातेजःप्रकाशिते ।**
**मन्दप्रकाशिते मन्दा घटादावपि सर्वदा ॥ २२० ॥**

ननु नित्यस्य सर्वगतस्य च कथं दीर्घादिविभागः ? स्तत्राह—

**एवं दीर्घादयः सर्वे ध्वनिधर्मा इति स्थितम् ।**

**स्फोटे** स्थितमिति।

**भाष्यकारेण** हि "वायवीयाः संयोगविभागाः शब्दमभिव्यञ्जयन्तो नादशब्दवाच्याः" ( शा० भा० पृ० १०१ ) इत्युक्तम्, तदाक्षिपति सार्द्धेन—

**नादो वायुगुण[3]स्तद्वान् वायुर्वा यदि कल्प्यते ॥ २२१ ॥**
**वर्णानां श्रोत्रगम्यत्वान्न च ये श्रोत्रगोचराः ।**
**तत्रावर्णात्मकः शब्दः शङ्खादेः श्रूयते कथम् ॥ २२२ ॥**

यदि वायवीयाः संयोगविभागाः संयोगविभागविशिष्टो वा वायुरेव नादः, न तु शब्दविशेषः। ततो वर्णातिरिक्तस्य नादात्मकस्य शब्दस्याभावाद् वर्णानामेव श्रोत्रता स्यान्न नादस्य, वायोरश्रावणत्वात्। ततश्च शङ्खादिनादानां श्रवणं न स्यादिति ॥ २२२ ॥

परिहरति—

**ध्वनीनां श्रोत्रगम्यत्वं तस्मात् केचित् प्रचक्षते ।**

---

१. ०वर्त्तिनी—३ पु० ।
२. बह्वी—२ पु० ।
३. नादा वायुगुणाः—२ पु० ।

नन्वेवं ध्वनीनां शब्दाभिव्यञ्जकत्वमिति सिद्धान्तोऽपि हीयेत, वायवोऽभिव्यञ्जकास्ते च न ध्वनयः ? अत्राह—

**मारुतप्रेरितास्ते च कुर्वन्ति श्रोत्रसंस्कृतिम् ॥ २२३ ॥**

न वायवोऽभिव्यञ्जका', किन्तु वायुगुणभूता ध्वन्याख्याः शब्दा वायुना सह ताल्वादिभिः प्रेरिताः श्रोत्रं सस्कुर्वन्तः शब्दस्य व्यञ्जका इति ॥ २२३ ॥

ननु वर्णोच्चारणवेलाया ते न श्रूयन्ते, तत् कथं तत्रैषामभिव्यञ्जकत्वम्, ? अत्राह—

**वर्णव्यक्तौ च दृष्टत्वात् तेषां नादृष्टकल्पना ।**

अस्त्येव वर्णोच्चारणेऽपि ध्वन्युपलब्धि सर्वजनीना, तथा च दूरादधीयानेषु वर्णानश्रृण्वन्तोऽपि ध्वनिमात्रं शृण्वन्ति, ते च ताल्वादिसयोगविशेषलाभे वर्णान् व्यञ्जन्ति, स्वयं चोपलभ्यन्ते, शङ्खभेर्यादिध्वनयस्तु केवलं स्वयमेवोपलभ्यन्ते, श्रोत्रेषु च ध्वनिषु तद्विशेषवशादेव द्रुतादिभेदोऽपि सुकर इति ।

भाष्योक्तवायवीयध्वनिवादिनस्तु ध्वन्याख्यशब्दाभावेऽपि वायुनानात्वादेव शङ्खादिघोषश्रवणमुपपादयन्ति, इत्याह—

**अन्ये तु वर्णयन्त्यत्र पूर्वोक्तध्वनिवादिनः ॥ २२४ ॥**
**मरुतामेव नानात्वाद् घोषश्रुत्युपपादनम् ।**

तदेव दर्शयति—

**तत्र ताल्वादिसंयोगविभागैः प्रेरिताः स्फुटम् ॥ २२५ ॥**
**व्यञ्जन्ति वर्णमन्ये तु शब्दत्वं सर्ववर्णभाक् ।**

नन्वनाश्रया जाति कथ व्यज्यते ? तत्राह—

**वर्णसर्वगतत्वात् तु नापद्येत निराश्रयम् ॥ २२६ ॥**

न च वाच्यम्—शङ्खादिभिर्व्यज्यमान शब्दत्वं कस्मिन् वर्णे व्यज्यत इति, सर्ववर्णाना नित्यत्वात्, सर्वगतत्वाच्चेत्याह—

**न च पर्यनुयोगः स्यात् क्व वर्णे व्यक्तिरित्ययम् ।**

नन्वेवं ध्वनीनामश्रोत्रत्वात् कथमेकस्मिन् वर्णे द्रुतादिवृत्तिभेदावसायः ? अत्राह—

**एत एव च ते पूर्वमुक्ता बोधानुवर्त्तिनः ॥ २२७ ॥**
**येषां[1] प्रचयनानात्वाद् वृत्तिभेदः प्रतीयते ।**

अश्रौत्रैरपि तैर्यथाबोधमनुवर्तयद्भिर्वृत्तिभेदसिद्धि तथा **स्फोटवादे** दर्शितमिति ।

तत् पुनरिदं नातीव चित्तमनुरञ्जयति । कथं हि वीणापणवादिध्वनिषु विल-

१. तेषाम्—२ पु०।

रणेषु श्रूयमाणेषु शब्दत्वमेवैक श्रूयत इति शक्य वक्तुम्, व्यञ्जकभेदात्तु तद्भेद-समर्थने गकारे उकारादिभेदोऽपि तथा स्यात्, तत्र वर्णानामप्यप्लवः स्यात्। अथ तेषां भेदप्रतीतौ बाधकाभावान्नौपाधिकत्वम्, तुल्यं शङ्खादिघोषेष्वपी-त्यत्राह---

**यद्वा जात्यन्तरं सन्तु सर्वथा कार्यहेतुकम् ॥ २२८ ॥**
**त्वत्पक्षवद् ध्वनीनां नः शक्तिभेदप्रकल्पनम् ।**

भवतु वर्णत्ववद् ध्वनित्व नाम शब्दत्वावान्तरभेद.। तद्भेदाश्च गकारादिवत् पारमार्थिका सन्तु, तेषा तु श्रौत्रत्वात् तत्सम्पर्कवशादेव वर्णेषु सानुनासिकनिर-नुनासिकोदात्तानुदात्तादिभेदावभासोऽपि सुकरोऽस्तु, न कश्चिद्दोषः सर्वथा शब्दा-नित्यत्वपक्षे। तद्योऽस्य कार्यभेदः—क्वचिद्वर्णोपलब्धि, क्वचिच्च नादमात्रोपलब्धि, तद्बलेन ध्वनीना शक्तिभेदकल्पने केचिद् वर्णान् व्यञ्जन्ति, केचिन्नेति। ध्वनयस्तु वायवो वा शब्दजातिभेदो वा नात्राभिनिवेश'। शब्दपक्षे च तस्यामूर्त्तस्य वृद्धय-सम्भवात् "नादवृद्धि" इति सूत्रेण नादशब्देन नानागुणका वायवो लक्ष्यन्ते तल्लक्षणत्वव्याख्यानार्थमेवेद भाष्यम् —"सयोगविभागाश्च नादशब्दवाच्याः" ( शा० भा० पृ. १०१ ) इति।

अत्र सिद्धान्तसूत्रम्—**नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्**" ( जै० सू० १. १. १८ ) इति, तदिद **नैयायिका** दूषयन्ति। शब्दो ह्यत्र नित्यतया पक्षीक्रियते, न च तद्धर्मः पारार्थ्यम्, दर्शनधर्मत्वात्। अतोऽसिद्धोऽयं हेतुः, स्वरूपेण सिद्धस्यापि पक्षधर्मतया हेतुत्वात्, तद्धर्मत्वासिद्धौ असिद्धता भवत्येव, तदाह—

**दर्शनस्य परार्थत्वं यदि नाम प्रतीयते ॥ २२९ ॥**
**शब्दस्य किमिहायातं येन नित्योऽभ्युपेयते ।**

यदि परम्परया सम्बन्धेनापि पक्षधर्मता परार्थदर्शनत्वात् इति वा बहुव्री-हिणा पक्षधर्मत्वमेव सम्भवतीति उच्यते, तथाप्यनैकान्तिकत्वमित्याह—

**अनित्येष्वपि दृष्टत्वाद् दीपज्वालाघटादिषु ॥ २३० ॥**
**परार्थदर्शनत्वस्य धर्मत्वेऽपि न हेतुता ।**

न तावदत्र दर्शनपदाभिधेयोच्चारणपारार्थ्यं हेतुः, असाधारणत्वात्; किन्तु पारार्थ्यप्रयोगमात्रम्, तच्चानैकान्तिकमिति।

यद्वा--घटादिष्वनित्येष्वेव दृष्टत्वान्नित्येषु च परमाणुष्वदृष्टत्वाद् विरुद्धोऽयं हेतुरित्याह—

**विना साधर्म्यदृष्टान्ताद् विरुद्धो[1] वा भवेदयम् ॥ २३१ ॥**
**नित्यानामप्रयोगित्वमणूनामपि दृश्यते ।**

---

१. विरोधो—३ पु०।

नन्वस्थायी सन्निव्यापार: कथमर्थं प्रत्याययति ? अत आह—

**अर्थप्रत्यायनं चैष जन्मनैव करिष्यति ॥ २३२ ॥**
**विनापि स्थास्नुरूपेण संयोगादीन् यथा क्रिया ।**

ननु पूर्वदृष्टशक्त्यालोचनेनैव कारणं कार्यसिद्धौ व्यापार्यते तस्यानालोचितशक्तेः कथं व्यापार: ? अत आह—

**पूर्वालोचनमेतस्य भूतस्मृत्या च कर्मवत् ॥ २३३ ॥**

यथा हि क्रियान्तरस्य घटान्तरस्य वा सामर्थ्यमालोच्याभिनवक्रियानिर्माणम्, एवमिहापीति ॥ २३३ ॥

उपसंहरति—

**तस्मान्न विनियोज्यत्वात् प्रागस्तित्वं घटादिवत् ।**

नागृहीतसम्बन्धस्य ज्ञापकत्व धूमादावदर्शनादिति चेत् ? तत्राह—

**प्रकाशितं यथा चार्थं तेजसा केनचित् पुरा ॥ २३४ ॥**
**न वा[1] भूयोपि बुद्धयन्ते शब्दादपि तथा भवेत् ।**

समाधत्ते—

**दर्शनस्य परार्थत्वे यदसिद्धयादि चोद्यते ॥ २३५ ॥**
**तत्काष्ठदहनो वह्निरब्दाहार्थं नियुज्यते ।**

कथम् ? इत्याह—

**अनुमानप्रयोगे हि वक्तुमित्यादि युज्यते ॥ २३६ ॥**
**अर्थापत्तिरियं चोक्ता पक्षधर्मादिवर्जिता ।**

अर्थापत्तौ हि द्वावेव दोषौ—अन्यथाप्युपपत्तिः, अन्यथैवोपपत्तिश्च । तदिहापि यद्यनित्यत्वेऽप्यर्थप्रत्यायकत्वमुपपद्येत, अनित्यत्व एव वा ततो दूषण स्यात्, न तु तदस्तीत्याह—

**यदि नाशिनि नित्ये वा विनाशिन्येव वा भवेत् ॥ २३७ ॥**
**शब्दे वाचकसामर्थ्यम्, ततो दूषणमुच्यताम् ।**

ननु मा भूदर्थप्रत्यायनम्, तथापि किमित्यनित्यता न भवति ? अत आह—

**फलवद् व्यवहाराङ्गभूतार्थप्रत्ययाङ्गता ॥ २३८ ॥**
**निष्फलत्वेन शब्दस्य योग्यत्वादवधार्यते ।**

फलवतो गवानयनादिव्यापारस्याङ्गभूतोऽर्थप्रत्ययस्तत्फलत्वेनैव फलवान्, शब्दस्योच्चारणसंस्कारभाज. स्वयमफलस्य फलवत्प्रत्ययाङ्गताऽवगम्यते इति ।

तत. किम् ? इत्याह—

**परीक्ष्यमाणस्तेनास्य[3] युक्त्या नित्यविनाशयोः ॥ २३९ ॥**

---

१. नवाद्—का० । २. तत्त्वसिद्धयादि—का० ।
३. परीक्षमाण०—३ पु० ।

**स धर्मोऽभ्युपगन्तव्यो यः प्रधानं न बाधते ।**

अर्थप्रत्ययाङ्गस्य शब्दस्य स एव धर्मः स्वाङ्गत्वेन ग्रहीतव्यो यश्च प्रधान-मर्थप्रत्यय न बाधत इति ।

कारणमाह—

**न ह्यङ्गाङ्गानुरोधेन प्रधानफलबाधनम् ॥ २४० ॥**

**युज्यते,**

अर्थप्रत्ययाङ्गभूतस्य शब्दस्य यदङ्गमनित्यत्वं तदनुरोधेन यत्तत्प्रधान शब्द, तत्फलस्यार्थप्रत्ययस्य बाधनमयुक्तमिति ।

तथापि कथं नानित्यत्वम् ? अत्राह—

**नाशिपक्षे च तदेकान्तात् प्रसज्यते ।**

कथम् ? इत्याह—

**न ह्यदृष्टार्थसम्बन्धः शब्दो भवति वाचकः ॥ २४१ ॥**

किमित्यवाचक. ? अत आह—

**तथा चेत् स्यादपूर्वोऽपि सर्वः सर्वं प्रकाशयेत् ।**

सम्बन्धज्ञानं च न क्षणिक य सम्भवतीत्याह—

**सम्बन्धदर्शनं चास्य नानित्यस्योपपद्यते ॥ २४२ ॥**

ननु कियन्तञ्चित् कालमवतिष्ठन्ता शब्दा, यावत्सम्बन्धदर्शन तस्य व्यव-हारश्च सम्भवति, नैतावता नित्यत्वसिद्धिः ? अत आह—

**सम्बन्धज्ञानसिद्धिश्चेद् ध्रुवं कालान्तरस्थितिः ।**

एतच्च "अनपेक्षत्वात्" इति ( जै० सू० १ १. २१ ) सूत्रे वक्ष्यतीति ।

नन्वन्यस्यैव गोशब्दस्य सम्बन्ध गृहीत्वान्यस्मादर्थं प्रत्येष्यामः, नावश्यमेक-स्यैव स्थायित्वम् ? अत आह—

**अन्यस्मिन् ज्ञातसम्बन्धे न चान्यो वाचको भवेत् ॥ २४३ ॥**

**गोशब्दे ज्ञातसम्बन्धे नाश्वशब्दो हि वाचकः ।**

एवं ह्यव्यवस्था स्यादिति ।

शङ्कते—

**अथान्योऽपि स्वभावेन कश्चिदेवावबोधकः ॥ २४४ ॥**

स्वभावादेव व्यवस्थासिद्धिरिति ॥ २४४ ॥

दूषयति—

**तत्रानिबन्धने न स्यात् कोऽसाविति विनिश्चयः ।**

पुनः शङ्कते—

**यतः प्रत्यय इत्येवं व्यवहारोऽवकल्पते ॥ २४५ ॥**

यतः प्रतीतिर्दृश्यते स एव बोधको नेतर इति व्यवस्था सिद्धयतीति ॥२४५॥

परिहरति—

**श्रोतॄणां स्यादपीत्थं तु वक्तॄणां नावकल्पते ।**

कथं नावकल्पते ? अत आह—

**अज्ञात्वा कमसौ शब्दमादावेव विवक्षति ॥ २४६ ॥**

वक्ता ह्यादावेव प्रागेव प्रत्ययाच्छब्दमुच्चारयन् केन चिह्नेन कं शब्दं विवक्षतीति ॥ २४६ ॥

यदि तु वक्ता जानाति—'असौ शब्दोऽमुमर्थं प्रत्याययिष्यति' इति, ततो नूनमनेनासौ तत्प्रत्यायनसामर्थ्येन प्रागवधृत इति अनित्यत्वानुपपत्तिरित्याह—

**जानाति चेदवश्यं स पूर्वं तेनावधारितः ।**

यत्तु 'तेजोवत्' इत्युक्तम्, तत्राह—

**तेजः प्रत्यक्षशेषत्वान्न तत्त्वेऽपि प्रकाशकम्[1] ॥ २४७ ॥**

शब्दस्तु न तथा, बालानामपि प्रतीतिप्रसङ्गादिति "अर्थवत्सादृश्यादर्थविगमः चेत्" ( शा० भा० पृ. १०२ ) इति भाष्यम्, तस्यार्थमाह—

**सदृशत्वात् प्रतीतिश्चेत्,**

शब्दान्तरे गृहीतसम्बन्धेऽर्थवति शब्दान्तरं तत्सादृश्यात् तत्त्वेन भ्रान्त्यवगतं तदर्थं प्रत्याययतीति ।

परिहरति—

**तद्द्वारेणाप्यवाचकः ।**

कारणमाह—

**कस्य चैकस्य सादृश्यात् कल्प्यतां वाचकोऽपरः ॥ २४८ ॥**

च-शब्दो हेतौ । इदं च "न हि कश्चिदर्थवान्" (शा० भा० पृ० १०२) इत्यनेन भाष्येणोक्तमिति ॥ २४८ ॥

एतदेवोपपादयति—

**अदृष्टसङ्गतित्वेन सर्वेषां तुल्यता यतः ।**

शङ्कते—

**अर्थवान् पूर्वदृष्टश्चेत्,**

निराकरोति—

**तस्य तावान् कुतः क्षणः ॥ २४९ ॥**

अवसराभावमेव दर्शयति—

**द्वित्रिर्वानुपलब्धो हि नार्थवान् सम्प्रतीयते ।**

---

१. प्रकाशनम्—२ पु० ।

श्लो० वा० : ३६

स्यादेतत्, यद्यपि सकृदुपलब्धो नार्थवान्, तथापि येन व्युत्पत्तिकालेऽन्ये गोशब्दाः श्रुता अस्य चरमशब्दोऽर्थवान् भवति, तदूर्ध्वं च प्रतीतिकाले शब्दस्तत्सादृश्यात् प्रत्याययतीति, तदयुक्तम्, एव हि य एव कस्यचिच्चरमश्रुतोऽर्थवान् स्यात् श्रुतशब्दान्तरस्य, म एवाश्रुतशब्दान्तरस्यान्यस्य प्रथमश्रुतत्वादनर्थकः स्यादिति विरुद्धमापद्येतेत्याह--

**अप्रतीतान्यशब्दानां तत्कालेऽसावनर्थकः ॥ २५० ॥**
**स एवान्यश्रुतीनां स्यादर्थवानिति विस्मयः ।**

अथ त्वर्थवानेवासौ स त्वर्थोऽश्रुतशब्दान्तरैः सामग्रीवैकल्यान्नावगम्यते, तथा सति प्रतीतिकालस्यापि शब्दस्य मुख्यार्थवत्त्वसम्भवान्न सादृश्येन वाचकत्वं स्यात्, सोऽपि कस्यचिद् व्युत्पत्तिकालवर्त्ती चरमश्रुतश्च स्यात्, तदाह—

**अथास्य विद्यमानोऽपि कैश्चिदर्थो न गम्यते[1] ॥ २५१ ॥**
**तत्तुल्यमुत्तरस्येति किं सादृश्येन वाचकः ।**

अथ त्वसावश्रुतशब्दान्तरैरर्थवत्त्वेनाग्रहणादनर्थक एव, ततो न कश्चिदर्थवान् स्यात् । तत पूर्वोऽर्थवानिति चेत् ? न, तस्याप्यश्रुतशब्दान्तरैरर्थवत्त्वाग्रहणाच्चरमश्रुतवदेवानर्थक्यान्न कस्यचिदर्थवत्त्व मुख्य सिध्येदित्याह--

**अनर्थकत्वमस्य स्यादथानन्यश्रुतीन् प्रति ॥ २५२ ॥**
**पूर्वस्मिन्नपि तत्सत्त्वात् सर्वानर्थकता भवेत् ।**

अथ वा, व्युत्पत्तिकालदृष्ट शब्दो मुख्योऽर्थवान्, प्रतीतिकालस्तु तत्सादृश्याद् गौण इति वदतो विरुद्धमापद्येत । एव ह्येक एव शब्दः श्रुतार्थवच्छब्दान्तरस्य गौणः, अश्रुतार्थवच्छब्दस्य मुख्य स्यात्, न चैकस्य मुख्यत्व गौणत्वं च युक्तम्, तदाह—

**अर्थवत्सदृशत्वेन यो वा श्रुतवतां मतः ॥ २५३ ॥**
**मुख्योऽसावश्रुतीनां स्यात्, तदेकत्वे न युज्यते ।**

"कस्यचिदेकस्य जगदादिवर्त्तिनः कृत्रिमो भविष्यति सम्बन्धः" ( शा० भा० पृ० १०२ ) इति चोद्यस्योत्तरं भाष्यम् "तदुक्तम्" ( शा० भा० पृ० १०२ ) इति, तद् व्याचष्टे—

**सम्बन्धाकरणे युक्तिस्तदुक्तमिति कथ्यते ॥ २५४ ॥**

यासौ सम्बन्धाकरणे युक्तिः सर्वशब्देष्वप्रसिद्धार्थेषु [2]सम्बन्धकरणमप्यशक्यमिति सैवेयमत्र परामृष्टेति ॥ २५४ ॥

क्षणिकशब्दपक्षे तु विशेषतोऽशक्यमित्याह—

**शब्दानित्यत्वपक्षेऽपि विशेषेण स दुष्करः ।**

---

१. गृह्यते—३ पु० । २. सम्बन्धकारण०—मु० पा० ।

तदेव दर्शयति सार्धेन—

**शब्दं तावदनुच्चार्य सम्बन्धकरणं कुतः ॥ २५५ ॥**
**न चोच्चारितनष्टस्य[1] सम्बन्धेन प्रयोजनम् ।**
**तेनासम्बद्धच नष्टत्वात् पूर्वस्तावदनर्थकः ॥ २५६ ॥**

तेन सर्वाद्यस्तावच्छब्दः सम्बन्धमगत्वैव नष्टत्वादनर्थकः, ततश्च तदुत्तरेषामर्थवत्सादृश्याभावात् स्वयं चाकृतसम्बन्धत्वान्नार्थवत्ता सिध्यतीत्याह—

**उत्तरोऽकृतसम्बन्धो विज्ञायेतार्थवान् कथम् ।**

मा भूदनुच्चरितस्योच्चरितनष्टस्य वा सम्बन्धकरणम्, उच्चार्यमाणस्य तु क्रियताम्, व्यवहारोऽपि तदैव क्रियत इति नानर्थक्यमिति चेत्? तदशक्यमित्याह—

**शब्दोच्चारणसम्बन्धकरणव्यावहारिकाः ॥ २५७ ॥**
**क्रियाः क्रमस्वभावत्वात् कः कुर्याद् युगपत् क्वचित् ।**

यद्यपि जगदादौ कश्चिच्छब्दः कृतसम्बन्धः स्यात्, तथापि देशकालान्तरवर्तिना पुंसा नासौ सिध्येत्, शब्दान्तरमेव ते शृण्वन्ति न जगदाद्यम्, तदसिद्धौ च तत् सादृश्यासिद्धेः कथं तेषामर्थप्रतीतिः? इत्याह—

**देशकालादिभेदानां पुंसां शब्दान्तरश्रुतेः ॥ २५८ ॥**
**पूर्वं कृत्रिमसम्बन्धेऽप्येकः शब्दो न सिध्यति ।**

क्षणिकत्वे च शब्दस्य सम्बन्धकरणवत् कथनमप्यनुपपन्नमेवेत्याह—

**सम्बन्धकथनेऽप्यस्य स्यादेवैषा[2] निराकृतिः ॥ २५९ ॥**

तामेव दर्शयति—

**नष्टासद्वर्त्तमानेषु[3] नाख्यानस्य हि सम्भवः ।**

विशेषतस्त्वनुपपन्नं कथनमित्याह—

**अर्थवान्[4] कतरः शब्दः श्रोतुर्वक्त्रा च कथ्यताम् ॥ २६० ॥**
**यदा पूर्वश्रुतं शब्दं नासौ शक्नोति भाषितुम् ।**

यो हि वक्त्रा पूर्वमर्थवत्त्वेन ज्ञातः तमतीतत्वाद् वक्तुमशक्नुवन् कतरं शब्दं ब्रूयात्—किमर्थवन्तम्, उतार्थवत्सदृशमिति? द्वेधापि नोपपद्यत इत्याह सपादेन—

**न तावदर्थवन्तं स ब्रवीति सदृशं वदेत् ॥ २६१ ॥**
**नार्थवत्सदृशः शब्दः श्रोतुस्तत्रोपपद्यते ।**
**अर्थवद्ग्रहणाभावात्,**

न चाभिनवमेवार्थवत्तया वदतु इति वाच्यम्, तस्यार्थवत्त्वेनानवगमादित्याह—

---

१. उच्चरित०—२ पु० ।
२. एषैव—२ पु० ।
३. नष्टसत्०—३ पु० ।
४. अथवा—३ पु० ।

**न चासावर्थवान् स्वयम् ॥ २६२ ॥**

वक्तुरपि श्रोतृत्ववेलायामेतदेव दर्शयितव्यमित्याह—

**वक्तुः श्रोतृत्ववेलायामेतदेव प्रसज्यते ।**

ततश्च न कस्यचिदपि कश्चिच्छब्दोऽर्थवान् सिध्यति यत्सादृश्यादर्थप्रतीतिः ? इत्याह—

**एवं च सर्ववक्तॄणां न शब्दः क्वचिदर्थवान् ॥ २६३ ॥**

जगदादिभूतस्तु शब्दः प्रजापतिना कृतसम्बन्धः स्यादर्थवान्, तस्य त्वद्यतनैरस्माभिरनवगमान्न तत्सदृशतयाद्यतनाः शब्दा ज्ञायेरन्, अतो नार्थप्रतीतिः स्यादित्युक्तमेवेत्याह—

**भवेद् यद्यपि सम्बन्धः सर्गादौ कस्यचित् कृतः ।**
**तस्मिन्नबुद्धे नैव स्यादेकस्मात् सदृशे मतिः ॥ २६४ ॥**

शङ्कते—

**अथ तत्कालजैः पुम्भिस्तस्मिन् शब्देऽवधारिते ।**
**प्रवृत्तेरनुमीयेत तत्सादृश्यपरम्परा ॥ २६५ ॥**

आदिकालभुवः पुरुषास्त शब्दं विदित्वा तत्सदृशेभ्योऽर्थं प्रतिपन्नाः, ततोऽर्वाञ्चोऽपि तस्य सदृशेभ्यः—इतरेभ्य इत्येव सादृश्यपरम्पराऽद्य यावत् प्रवृत्ता, वय त्वीदृशी परम्परामर्थप्रतीत्यैव कल्पयाम । न ह्यसत्यामर्थवत्सादृश्यपरम्पराया क्षणिकाना शब्दानामर्थप्रत्यायकत्व सम्भवतीति ॥ २६५ ॥

दूषयति—

**तत्र सम्बन्धमार्गेण पूर्वोक्तेन प्रसज्यते ।**
**स्मार्यं तन्मूलसादृश्यं तदधीनार्थनिश्चयात् ॥ २६६ ॥**

ईदृशी ह्यर्थवत्सादृश्यपरम्परा प्रतिपत्तृभिः स्मर्येतेति तदधीनत्वादर्थनिश्चयस्य तदस्मरणाच्च 'नेयमस्ति' इति निश्चीयते। किञ्च, स्वभावविलक्षणेषु वस्तुषु सत्यामपि सादृश्यपरम्परायां स्तोकस्तोकभेदेनैव दूरस्थस्य मूलसादृश्यमत्यन्तमेव नश्येत्, विशेषतस्तु शब्दे स्तोकविशेषादेवार्थान्यत्वं भवति, स्वरभेदादेव बहुव्रीहितत्पुरुषार्थभेदात्, किं पुनर्व्यञ्जनमात्राक्रमादिभेदादित्याह सार्धेन—

**वस्तुन्युत्पत्तिभिन्ने च दूरादारभ्य कल्पितम् ।**
**स्तोकस्तोकविशेषेण सादृश्यं विप्रकृष्यते ॥ २६७ ॥**
**स्वरव्यञ्जनमात्रादिभेदाच्छब्दे विशेषतः ।**

अत्रैवोदाहरणमाह—

**शालामालाऽबलावेलाशीलेत्यादिप्रकल्पनात् ॥ २६८ ॥**

दोषान्तरमपि सादृश्यादर्थप्रतीतौ दर्शयति—

**सादृश्यात् प्रतिपत्तौ[1] च भ्रान्तिज्ञानं प्रसज्यते ।**
**धूमे दृष्टेऽग्निसम्बन्धे बाष्पादिव कृशानुधीः ॥ २६९ ॥**

भवत्विति चेत् ? न; बाधाभावादित्याह—

**एवमस्त्विति चेत् ब्रूयान्नैतद्बाधकवर्जनात् ।**

शङ्कते—

**तावता सिद्धमिति चेत्,**

सादृश्यनिबन्धनस्यापि ज्ञानस्य बाधकाभावादेवाभ्रान्तत्वसिद्धेः कथं भ्रान्तत्वापादनमिति ?

परिहरति—

**शब्दाभेदोऽपि सिध्यति ॥ २७० ॥**

सत्यमभ्रान्तम्, तद्वदेव तु शब्दैकत्वमप्यभ्रान्तमेव, तस्यापि प्रत्यभिज्ञावगतस्य बाधाभावात्, तद्भ्रान्तित्वे वार्थज्ञानमपि कारणदोषादेव भ्रान्तं स्यादिति ॥२७०॥

किञ्च, सादृश्यमपि विकल्पनीयमित्याह—

**तथा भिन्नमभिन्नं वा सादृश्यं व्यक्तितो भवेत् ।**
**एवमेकमनेकं वा नित्यं वानित्यमेव वा ॥ २७१ ॥**

तत्र दूषणमाह—

**भिन्नत्वैकत्वनित्यत्वे जातिरेव प्रकल्प्यते ।**

गत्वादिजातिश्च निराकृतेति ।

पक्षान्तर दूषयति—

**अभेदानित्यनानात्वे पूर्वोक्तेनैव तुल्यता ॥ २७२ ॥**
**व्यक्त्यनन्यत् तथैकं च सादृश्यं नित्यमिष्यते ।**

पूर्वोक्तशब्दक्षणिकत्वेन तुल्यता, ततश्च तद्वदेव दोष इति ।

पक्षान्तरं दूषयति—

**व्यक्तिनित्यत्वमापन्नं तथा सत्यस्मदीहितम् ॥ २७३ ॥**

किञ्च, अवयवसामान्यनिबन्धनं सादृश्यम्, न च तद्वर्णानां सम्भवति निरवयवत्वात्, न च पदानाम्, तदवयवानां वर्णानां प्रतिपद भिन्नत्वेनावयवसामान्याभावादित्याह—

**न चावयवसामान्यरूपा सदृशता तव ।**
**वर्णभेदे हि सा सिध्येन्न चाभेदस्त्वयेष्यते ॥ २७४ ॥**

मा भूत् सादृश्यम्, गत्वगोशब्दत्वादिजातेस्तु वाचकत्वं भविष्यति, गोत्वादेरिव वाच्यत्वं न दोक्ष्यति किञ्चिद् ? अत आह—

---

१. सादृश्याप्रतिपत्तौ—३ पु० ।

**गोशब्दत्वादिगत्वादि पूर्वमेव निराकृतम् ।**

उपसंहृति—

**वर्णव्यक्तय एव स्युर्नित्यास्तेनावबोधकाः ॥ २७५ ॥**

"यथा गावीशब्दात् सास्नादिमत्प्रत्ययस्यानिवृत्तिस्तद्वद्भविष्यति" इति चोद्यस्योत्तर भाष्यम् "गोशब्द तत्रोच्चारयितुमिच्छा" ( शा० भा० पृ. १०२ ) इति, तद् व्याचष्टे—

**गोशब्देऽवस्थितेऽस्माकं तदशक्तिजकारिता ।**

**गाव्यादेरपि गोबुद्धिर्मूलशब्दानुसारिणी ॥ २७६ ॥**

अवस्थितो हि गोशब्दोऽस्माकं न क्षणिकः, ततश्च तस्मान्नार्थवति या गाव्यादेर्गोबुद्धिः सा मूलभूतं गोशब्दमेवानुसृत्य भवति तज्जनितैवेति, यावत्तदशक्तिजकारिता हि सा तत्सादृश्यनिबन्धनेति ॥ २७६ ॥

कथम् ? इत्याह—

**स्यात् सादृश्यनिमित्ता चेद् गौरशब्दादपि ध्रुवम् ।**

**तेनाव्यावृत्तिरिष्टात्र गोशब्दादेव सा हि धीः ॥ २७७ ॥**

नाशक्तिजत्वावगमेन गोशब्दविवक्षामेवानुमाय तत एव जायमाना गोबुद्धिर्युक्तं यन्न व्यावर्तत इति ॥ २७७ ॥

चोदयति—

**नन्वानुपूर्व्यनित्यत्वादनित्यो वाचको भवेत् ।**

**पदं वाचकमिष्टं हि क्रमाधीना च तन्मति ॥ २७८ ॥**

कथं क्रमानित्यत्वे वाचकानित्यत्वम् ? अत आह—

**वर्णाः सर्वगतत्वाद् वो न स्वत. क्रमवृत्तय. ।**

देशत कालतो वा क्रमो भवति, न च सर्वगतानां नित्यानां च स्वत. स सम्भवति । कुतस्तर्हि तेषु क्रमः ? अत आह—

**अनित्यध्वनिकार्यत्वात् क्रमस्यातो विनाशिता ॥ २७९ ॥**

ध्वनयो हि क्रमवर्तिनः क्रमेण शब्दानभिव्यञ्जयन्तः स्वीय क्रमं वर्णेष्वपि दर्शयन्तीति ॥ २७९ ॥

स्यादेतत्, अनित्यत्वेऽपि पुरुषस्वातन्त्र्याभावान्नाप्रामाण्यमिनि ? तत्राह—

**पुरुषाधीनता चास्य तद्विवक्षावशाद् भवेत् ।**

पुरुषो हि यथाविवक्षं क्रममाचरन् कथमस्वतन्त्र. स्यादित्युपसंहरति—

**वर्णानां नित्यता तेन निष्फला परमाणुवत् ॥ २८० ॥**

तदेव विवृणोति—

**यथा सत्यणुनित्यत्वे घटे तद्रचनात्मके ।**

**न नित्यतैवं वर्णेषु नित्येषु पदनाशिता ॥ २८१ ॥**

किञ्च, क्रम एव वाचको न तद्विशिष्टा वर्णा.,स्तेन व्यक्त वाचकानित्यत्व-मित्याह—

**न च क्रमाद् विना वर्णा विज्ञाताः प्रतिपादकाः।**
**क्रमस्यैव पदत्वं वस्तस्मादेवं प्रसज्यते ॥ २८२ ॥**

स्फोटपक्षे नित्यत्वस्यार्थवत्त्वं दर्शयति—

**पदं वर्णातिरिक्तं तु येषां स्यात् क्रमवर्जितम् ।**
**तेषामेवार्थवत्येषा शब्दनित्यत्वकल्पना ॥ २८३ ॥**

परिहरति—

**न तावदानुपूर्व्यस्य पदत्वं नः प्रसज्यते[1] ।**

कारणमाह—

**न हि वस्त्वन्तराधारमेतद् दृष्टं प्रकाशकम् ॥ २८४ ॥**

तेन द्वयेऽप्यवश्यम्भाविनि सति गुणप्रधानमात्र विचिन्त्यमित्याह—

**द्वये सत्यपि तेनात्र विज्ञेयोऽर्थस्य वाचकः।**
**वर्णाः किं नु क्रमोपेताः किं नु वर्णाश्रयः क्रमः ॥ २८५ ॥**

अत्र निर्णयमाह—

**'क्रमः क्रमवतामङ्गम्' इति किं युक्तिसाध्यता ।**

कथ न युक्त्यपेक्षा ? इत्यत्राह—

**धर्ममात्रमसौ तेषां न वस्त्वन्तरमिष्यते ॥ २८६ ॥**

उपसहरति—

**इत्थं प्रतीयमानाः स्युर्वर्णास्तेनावबोधकाः ।**

भवत्वेवम्, तथापि क्रमस्य पुरुषकार्यत्वात् तद्विशिष्टवाचकस्यापि पौरुषेयत्व-मेव ? अत आह—

**न च क्रमस्य कार्यत्वं पूर्वसिद्धपरिग्रहात् ॥ २८७ ॥**

एतदेव विवृणोति सार्द्धेन—

**वक्ता न हि क्रमं कञ्चिद् स्वातन्त्र्येण प्रपद्यते ।**
**यथैवास्य परैरुक्तिस्तथैवैनं विवक्षति ॥ २८८ ॥**
**परोऽप्येवमतश्चास्य,**

कथं पुनरवगम्यते—सर्वे परोक्तप्रकारमेव क्रम विवक्षन्ति, न तु कश्चिदपि स्वातन्त्र्येणेति ? तत्रोत्तरम्—

**सम्बन्धवदनित्यता ।**

कर्तुरकरणादित्यर्थः ।

---

१. पदमित्याद्यर्धत्रयं का०, स०, १ पु० च त्रुटितम् । २. उक्त—१ पु० ।

नन्वसत्यपि स्वातन्त्र्ये पुरुषकार्यता तावत् क्रमस्यास्तीति तद्विशिष्टस्यापि वाचकस्य कथं नित्यता ? अत आह—

**तेनैवं व्यवहारात् स्यादकौटस्थ्येऽपि[1] नित्यता ॥ २८९ ॥**

न कूटस्थनित्यतां वाचकस्य ब्रूमः, किन्तु व्यवहारादेवास्य नित्यत्वम्, अनिदम्प्रथमत्वमिति यावत्, गकारौकारविसर्जनीयानाम् एतेषामेवेदृशेनैव क्रमेण व्यवहारः प्रयोगोऽनिदम्प्रथम इति पदस्यानिदम्प्रथमत्व नित्यत्वम्, न वर्णवत् कूटस्थनित्यत्वमिति ॥ २८९ ॥

नन्वेवमपि पुरुषकार्यता तावदस्तीति तदधीनप्रामाण्यमेव शाब्दं स्यादत्राह—

**यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता ।**

स्वातन्त्र्ये हि पुरुषस्य तदायत्तं प्रामाण्यं भवति, न पारतन्त्र्ये। न ह्यस्माभिरुच्चार्यमाणानामपि मनु-बुद्धादिवाक्यानामस्मद्‌गुणदोषवशेन प्रामाण्यमप्रामाण्यं वा भवतीति ।

चोदयति—

**वर्णानामपि नन्वेवमकौटस्थ्येऽपि सेत्स्यति ॥ २९० ॥**

वर्णानामपि व्यवहारादेवानिदंप्रथमतामात्रस्तु, किं कूटस्थनित्यतयेति ॥२९०॥

परिहरति—

**नित्येषु सत्सु वर्णेषु व्यवहारात् क्रमोदयः ।**
**घटादिरचना यद्वन्नित्येषु परमाणुषु ॥ २९१ ॥**

व्यवहारः, क्रियाप्रयोग, अनुष्ठानमिति पर्यायाः । तदिह वर्णेषु नित्येषु सत्सु तानेवोपादाय प्रयोगविशेषेण शक्यते क्रमविशेषो निष्पादयितुम्, परमाणुभिरिव घटादीति ॥ २९१ ॥

वर्णाभावे तु किम्मूला रचना, न हि निरुपादानं कार्यरचन सम्भवति ? इत्याह—

**तदभावे हि निर्मूला रचना नावधार्यते ।**

वर्णावयवमूलेति चेत् ? न; तेषां स्फोटे निराकृतत्वादित्याह—

**अणुकल्पाश्च वर्णांशा न सन्तीत्युपपादितम् ॥ २९२ ॥**

ननु ताल्वादिसंयोगविभागवशेनैव वर्णरचना सम्भवति विनापि वर्णावयवैः, अत आह पादत्रयेण—

**परैरुक्तान्[2] ब्रवीमीति विवक्षा चेदृशी ध्रुवम्[3] ।**
**तथा च नित्यतापत्तिः,**

---

१. अकौटिल्येऽपि—का० । २. परेणोक्तान्—१ पु० ।
३. ध्रुवा—३ पु० ।

सम्भवत्येवं रचना, तथापि न वर्णेष्वपूर्वरचना सम्भवति; 'परोक्तानेव ब्रवीमि' इति तेषु वक्तुर्विवक्षा श्रोतुश्च 'पूर्वश्रुतमेव शृणोमि' इति द्वयोः प्रत्यभिज्ञानान्नित्यत्वं वर्णानाम्, नापूर्वरचनमिति।

नन्वेवं प्रत्यभिज्ञाक्रमे तद्विशिष्टे च पदरूपेऽप्यस्त्येवेति तयोरपि कूटस्थनित्यतैव स्यात् ? अत्राह—

**न चान्यच्चिह्नमस्ति वः ॥ २९३ ॥**

वर्णेषु नित्येषु तैरेव चिह्नभूतैरभिन्नैः शक्यं क्रमादेरप्यौपाधिकमेकत्वमवगन्तुम्, प्राच्ये हि गोपदे गकारः प्रथमं तदनन्तरं चौकार, एवमेवाद्यतनेऽपि गोपदे इत्येवमुपाध्येकत्वादेव स्वरूपभेदेऽपि सम्भवति प्रत्यभिज्ञानम्, वर्णेषु तु नान्यदस्ति चिह्नं यदेकत्वात् प्रत्यभिज्ञा स्यादिति ॥ २९३ ॥

तत्रापि गत्वं सादृश्यं वा प्रत्यभिज्ञानिबन्धनमिति चेत् ? तत्राह—

**तज्जातीयत्वसादृश्ये निषिद्धे,**

जाति **स्फोटे** निराकृता, सादृश्य चानन्तरमिति।

ननु शब्दत्वमस्ति ? सत्यम्, तत्तु सर्वशब्दसाधारण न गकारादिस्वरूपगोचरस्य प्रत्यभिज्ञाविशेषस्यालम्बन सम्भवतीत्याह—

**यत्तु सम्भवेत्।**

**शब्दत्वेन सजातित्वं तुल्यं शब्दान्तरेषु[1] तत् ॥ २९४ ॥**

नन्वेवविधकार्यनिर्माणम् एकविधेनैव कारणेनोपलक्ष्य कर्त्तव्यम्, यथा मृत्तन्त्वादिजातीयैः कारणैर्घटपटादिकार्यनिर्माणमुपलक्ष्यते, तदिहाप्येवंविधेन कारणेनैवंविधं क्रमरचन सम्भवतीत्यालोचयितव्यम्, तदत्र केनैकैकरूपेण कारणेन पूर्वदृष्टक्रमतुल्यस्य क्रमान्तरस्य निर्माणमुपलक्ष्यताम् ? अत आह—

**जात्या यथा घटादीनां व्यवहारोपलक्षणम्[2]।**
**तथैव चानुपूर्व्यादिर्जातिद्वारेण सेत्स्यति ॥ २९५ ॥**

अस्त्येवात्र कारणेष्वेका जातिः, तया च क्रमदीर्घादिव्यवहारोपलक्षणं सम्भवतीति ॥ २९५ ॥

तदेव दर्शयति—

**ताल्वादिजातयस्तावत् सर्वपुंसां[3] व्यवस्थिताः।**
**वक्ता तावद् ध्वनींस्ताभिरुपलक्ष्य निरस्यति ॥ २९६ ॥**

ध्वनिप्रेरण तावत् ताल्वादिजातिभिरेवोपलक्ष्य क्रियत इति ॥ २९६ ॥

---

१. शब्दान्तरेऽपि—३ पु०। २. व्यवहारोऽपि०—३ पु०।
३. ०पुंसि—का०।

ध्वनिजातयश्च भिन्नाः तद्विशिष्टा वा व्यक्तयस्ताल्वादिजातिभिरुपलक्ष्य प्रेरिताः सर्वभेदानभिव्यञ्जन्तीत्याह—

**तेषां च जातयो भिन्नाः शब्दाभिव्यक्तिहेतवः ।**
**यावद्वर्णं प्रवर्तन्ते व्यक्तयो वा तदन्विताः ॥ २९७ ॥**

भवत्वेवम्, क्रमस्य किमायातम् ? इत्याह—

**तत्र ताल्वादिसंयोगविभागक्रमपूर्वकम् ।**
**ध्वनीनामानुपूर्व्यं स्याज्जात्या चोभयनित्यता ॥ २९८ ॥**

ताल्वादिसयोगविभागक्रमवशेन तत्प्रेरिताना ध्वनीनामपि क्रमो भवति, द्वये च ताल्वादयो ध्वनयश्च जात्या नित्याः, तेन गकारौकारविसर्जनीयाना क्रममिच्छन् तदभिव्यञ्जकानां ध्वनिजातीयानां तत्तदनुरूपेण क्रमेण प्रेरणं चिकीर्षंस्ताल्वादिजातीयाना स्थानाना संयोगविभागौ क्रमेणारभत इति ॥२९८॥

ननु स्वाश्रयमेव जातिरुपलक्षयति, ताल्वादिसमवेतया तु जात्या कथमतदाश्रय. क्रम. शक्यते लक्षयितुम् ? अत आह—

**यथैव भ्रमणादीनां भागैर्जात्या[1] च लक्षितैः[1] ।**
**क्रमानुवृत्तिरेवं स्यात् ताल्वादिध्वनिवर्णभाक् ॥ २९९ ॥**

विततिविशेषयुक्ता बहव पूर्वापरीभूतक्रियाक्षणा भ्रमणमुच्यते, तेषा च क्रमानुवृत्तिर्यथा भ्रमणभागक्रियाक्षणसमवेतया क्रियात्वजात्या लक्ष्यते तथा ताल्वादिध्वनिवर्णभागेऽपि क्रमानुवृत्तिः ताल्वादिजात्यैव शक्योपलक्षयितुम् । **भागैर्जात्या चे**ति । जात्युपलक्षितैर्भ्रमणभागै. क्रमोपलक्षणमित्यर्थः ॥ २९९ ॥

मा वा भूवन् ध्वनिजातय', तद्व्यक्तय एव तु प्रतिवर्णं भिन्ना जातिवन्नित्याः सत्यः क्वचित् कदाचित् ताल्वादिक्रमेण प्रेर्यन्ते इत्याह—

**व्यक्तीनामेव वा सौक्ष्म्याज्जातिधर्मावधारणम् ।**

एवं ताल्वादीना ध्वनीना च क्रममुपपाद्य तन्निमित्त वर्णक्रमं दर्शयति—

**तद्वशेन च वर्णानां व्यापित्वेऽपि क्रमग्रहः ॥ ३०० ॥**

उपसंहरति—

**एवं ध्वनिगुणान् सर्वान्नित्यत्वेन व्यवस्थितान् ।**
**वर्णा अनुपतन्तः स्युरर्थभेदावबोधिनः ॥ ३०१ ॥**

**सर्वा**निति । क्रमदीर्घत्वादीनिति ॥ ३०१ ॥

सम्प्रति कूटस्थतामेव क्रमस्य मतान्तरेण दर्शयितुमाह—

**आनुपूर्वी च वर्णानां ह्रस्वदीर्घप्लुताश्च ये ।**
**कालस्य प्रविभागास्तैर्जायन्ते ध्वन्युपाधयः ॥ ३०२ ॥**

---

१—१. जात्याभिलक्षिता—३ पु० ।

पौर्वापर्यं हि क्रमः, चिरक्षिप्रात्मकं च दीर्घादिकम्, पूर्वापरचिरक्षिप्रप्रत्ययाश्च कालालम्बनाः, तेन ध्वनिभिर्वर्णेषु पूर्वापरभागेन व्यज्यमानः काल एव क्रम इति ॥ ३०२ ॥

ततः किम् ? इत्याह—

**कालश्चैको विभुर्नित्यः,**

यद्येकः कालः, कथं तर्हि पूर्वापरेण रूपेण विभक्तो भासते ? अत्राह वदन्तेन—

**प्रविभक्तोऽपि गम्यते ।**

**वर्णवत्,**

यथा हि वर्णो नित्य. सर्वगतोऽपि दीर्घादिरूपेण विभक्तो भासते ध्वन्युपाधिवशात्, तथा कालोऽपि स्वयमभिन्नोऽपि आदित्यस्य गतिक्रियोपाधिवशाद् भिन्नो भासत इति ।

ननु नायं स्वातन्त्र्येण गम्यते, तत किमस्य सद्भावे प्रमाणम्, कथं विभुत्वं नित्यत्व च, विभक्तरूपावगतस्य च किंप्रमाणमेकत्वम् ? अत आह—

**सर्वभावेषु व्यज्यते केनचित् क्वचित् ॥ ३०३ ॥**

सत्य न स्वातन्त्र्येण गम्यते, भावेषु गृह्यमाणेषु तद्विशेषणतया केनचित् पूर्वत्वेनापरत्वेन वाऽऽकारेण क्वचिद्भावे गृह्यते 'इद पूर्वमिदमुत्तरम्' इति प्रत्ययो भावमात्रमनालम्बमानो वस्त्वन्तरमवस्थापयति स कालः । स च सर्वेषु भावेषु व्यवहितविप्रकृष्टेष्वतीतानागतप्रत्युत्पन्नेषु च व्यज्यत इति विभुत्वनित्यत्वसिद्धिः । विभक्तस्वरूपो भासमानोऽपि कालरूपेणैकेन प्रत्यभिज्ञाप्यत इति नाप्रमाणकमेकत्वम् । सति चैकत्वे विभागस्यौपाधिकत्वेनाप्युपपत्तेर्न स्वाभाविकत्वम्, उपाधयश्च विनष्टवर्त्तमानानागता. सूर्यादिक्रिया इति तद्वशेन कालेऽप्यतीतादिविभागः, क्षिप्रत्वं चाल्पक्रियावच्छेदाद् बहुक्रियावच्छेदाच्चिरत्वमिति ॥ ३०३ ॥

यदि सर्वभावेषु व्यज्यते, किमिति तर्हि भावान्तरेष्वपि नार्थं प्रत्याययति ? अत्राह—

**वर्णेषु व्यज्यमानस्य तस्य[1] प्रत्यायनाङ्गता[1] ।**

स्वरूपं त्वन्यत्रापि विद्यत इति नित्यमेवेत्याह—

**अन्यत्रापि तु सद्भावात् तत्स्वरूपस्य नित्यता ॥ ३०४ ॥**

उपसंहरति—

**तस्मान्न पदधर्मोऽस्ति विनाशी कश्चिदीदृशः ।**

**ईदृश** इति । अर्थप्रत्ययाङ्गमित्यर्थः ।

---

१-१. तस्यार्थप्रत्ययाङ्गता—२ पु० ।

यदा च वर्णनित्यत्ववादिनां पदस्यापि व्यवहारनित्यत्वम्, एवं च यदुक्तम्—'वर्णानां नित्यता तेन निष्फला परमाणुवत्' इति, तत् परिहृतमित्याह—

**तेन नित्यं पदं सिद्धं वर्णनित्यत्ववादिनाम् ॥ ३०५ ॥**

ननु ध्वनिधर्माः क्रमादयः कथं वर्णानामर्थं प्रत्याययतामङ्गं भवन्ति ? अत्राह—

**परधर्मेऽपि चाङ्गत्वमुक्तमश्वगजादिवत् ।**

कि पुन. क्रमादीनां व्यवहारनित्यत्वे प्रमाणम् ? अत्राह—

**नित्यतायां च सर्वेषामर्थापत्तेः प्रमाणता ॥ ३०६ ॥**

पूर्वोक्ता ह्यर्थापत्तिर्वाचकरूपस्यैव नित्यत्वं कल्पयति, न वर्णस्वरूपमात्रस्येति ॥ ३०६ ॥

यत्तु वर्णातिरिक्तनिरवयवपदवादिनामेवेदं नित्यत्वमर्थवदिति, तदयुक्तम्; तेषामपि क्रमवद्ध्वनिव्यङ्ग्यत्वात्, स्फोटस्यास्त्येव पुरुषाधीनत्वं तद्दोषादप्रामाण्यं तुल्यमित्याह—

**पदेऽनवयवे चापि व्यञ्जकैः क्रमवृत्तिभिः ।**
**पुरुषाधीनतायां[1] च[1] न प्रामाण्यं[2] प्रसज्यते ॥ ३०७ ॥**

तथा च वाक्येष्वनवयवेष्वपि पुरुषगुणदोषापेक्षया प्रामाण्यमप्रामाण्यं च दृष्टमित्याह—

**वाक्येषु दृष्टमेतच्च तन्निर्भागत्ववादिनाम् ।**

तेन तन्मतेऽपि पदेषु च वेदवाक्येषु सत्पुरुषस्वातन्त्र्याभावादेव न तदधीनं प्रामाण्यमिति वक्तव्यम्, तच्चास्मन्मतेऽपि तुल्यमिति सूत्रार्थमुपसंहरति—

**अन्यथानुपपत्त्या तत्[3] सर्वथा पदनित्यता ॥ ३०८ ॥**

तदेवं सूत्रमर्थापत्त्यभिप्रायमिति वर्णितम्, शक्यते त्वनुमानाभिप्रायमपि वर्णयितुमित्याह—

**परार्थदर्शनार्थत्वं येनायं प्रतिपद्यते ।**
**स धर्मो ह्यनुमानाय[4] सम्बन्धापेक्षितोच्यते[5] ॥ ३०९ ॥**

सम्बन्धापेक्षया हि शक्यते स्थिरत्वमनुमातुम्, तत्सूचनार्थं चेदं परार्थदर्शनार्थत्वमुच्यते, तद्धि तया विनानुपपन्नं शक्नोति तां सूचयितुमिति ॥ ३०९ ॥

तदेव विवृणोति—

---

१-१. पुरुषाधीनतातोऽर्थे—३ पु० । २. प्रमाणम्—३ पु० ।
३. यतः—२ पु० । ४. वानुमानाय—३ पु० ।
५. अपेक्षितो यतः—३ पु० ।

**न साधनप्रयोगोऽयं सूत्रकारेण रच्यते ।**
**वृत्तिकारेण चार्थस्तु योग्यो द्वाभ्यां निरूपितः ॥ ३१० ॥**

योऽनुमानप्रयोग सूचयितुं योग्य· परार्थदर्शनं नामार्थः सोऽयं **सूत्रकारभाष्यकार**ाभ्यां निरूप्यते, न तु साधनमिति ॥ ३१० ॥

अत्र त्वस्मदीये ग्रन्थे प्रयोग उच्यत इत्याह—

**अत्रोच्यते स्थिरः शब्दो धूमगोत्वादिजातिवत् ।**
**सम्बन्धानुभवापेक्षसामान्यार्थावबोधनात्[1] ॥ ३११ ॥**

धूमत्वमग्नेर्गमकम्, गोत्वं विषाणित्वस्येति ॥ ३११ ॥

ननु साध्यहीनो दृष्टान्तः, जातिवादिनामेव हि धूमत्वादिकं नित्य नान्येषाम् ? अत्राह—

**अन्यापोहनसारूप्यजातिलिङ्गत्वकल्पने ।**
**विशेषाणामलिङ्गत्वात् सर्वसामान्यनित्यता ॥ ३१२ ॥**

परोक्तानुमानदूषणार्थमेवेदं सूत्रमित्याह—

**स्ववाक्यादिविरोधो वा परार्थत्वेन कथ्यते ।**

एवं हि परैरनुमानमुक्तम्—अनित्यः शब्दो जातिमत्त्वे सत्यैन्द्रियकत्वात् पटवदिति, तदिह स्ववाग्विरोधं तावद् दर्शयति सार्द्धेन—

**प्रतिज्ञोच्चार्यते सर्वा साध्यार्थप्रतिपत्तये ॥ ३१३ ॥**
**न चानित्या ब्रवीत्येषा स्वार्थमित्युपपादितम् ।**
**तेनार्थप्रत्ययापन्नान्नित्यत्वान्नाशबाधनम् ॥ ३१४ ॥**

यदिद प्रतिज्ञया पक्षस्याभिधानमनेनैवार्थाच्छब्दस्य नित्यत्वमापन्नम्, क्षणिकत्वेऽर्थप्रत्यायकत्वायोगात्, तदनेन प्रतिज्ञाया. स्वा।र्थाभिधानेनैव साध्यार्थस्यानित्यत्वस्य बाध इति ॥ ३१४ ॥

पूर्वाभ्युपगमविरोधं दर्शयति—

**अर्थाभिधानसामर्थ्यमभ्युपेत्य च साधयेत्[2] ।**
**पूर्वाभ्युपगतेनापि[3] नाशित्वं बाधते परः ॥ ३१५ ॥**

साधनं हि वदता अवश्यम् अर्थप्रत्यायकत्वं शब्दानामुपगतम्, अनित्यत्वे च तद्बाधा स्यादिति ॥ ३१५ ॥

अभ्युपगतागमविरुद्धश्चाय पक्ष इत्याह—

**अर्थप्रतीतिसामर्थ्यैः प्रतिशास्त्रमुपाश्रितैः ।**
**आगमेनापि[4] नाशित्वं बाध्यते सर्ववादिनाम् ॥ ३१६ ॥**

---

१. ०पेक्षं सामान्या०—३ पु० ।          २. साधनम्—३ पु० ।
३ अभ्युपगतेनैव—३ पु० ।          ४. आगमैः—३ पु० ।

सर्वलोकप्रसिद्धिविरुद्धश्चायम्, अनित्यत्वे पूर्वोक्तन्यायेन लोकप्रसिद्धप्रत्यायकत्वबाधादित्याह—

**सर्वलोकप्रसिद्ध्या च बाधः पूर्वोक्तया दिशा ।**

अपरमपि दोषद्वयमाह—

**अनुमानविरोधोऽपि प्रागुक्तेनैव हेतुना ॥ ३१७ ॥**
**प्रत्यक्षेण विरुद्धत्वं सङ्ख्याभावेऽभिधास्यते ।**

स्वयमिदानी दोषान्तराणि दर्शयिष्यन् धर्मिणं तावद् विकल्पयति द्वयेन—

**वक्तव्यश्चैष कः शब्दो नाशित्वेन प्रसाध्यते ॥ ३१८ ॥**
**त्रिगुणः पौद्गलो वाऽयमाकाशस्याथ वा गुणः ।**
**वर्णादन्योऽथ नादात्मा वायुरूपोऽर्थवाचकः ॥ ३१९ ॥**
**पदवाक्यात्मकः स्फोटः सारूप्यान्यनिवर्त्तने ।**

सत्त्वरजस्तमःस्वभाव. **सांख्यानाम्**, आर्हताना पुद्गलारब्ध । **काणादाना**माकाशगुणो नादात्मा शङ्खादिविषय । **शिक्षाकारस्य** वायुरूपोऽर्थवाचक., अर्थवाचकरूपेण शब्दात्मना परिणतो वायुरिति यावत् । स्फोटश्च द्विविधो **वैयाकरणाभिमत**', [1]सारूप्यान्यनिवर्त्तने च **सांख्य-सौगता**भिमते इति ।

एषु पक्षेषु सिद्धसाध्यतेत्याह—

**एतेषामस्त्वनित्यत्वं नास्माकं तेषु नित्यता ॥ ३२० ॥**

एतेषु चाप्रसिद्धविशेष्यत्वमाश्रयासिद्धहेतुकत्वं चानुमानस्य स्यादित्याह—

**अप्रसिद्धविशेष्यत्वम् आश्रयासिद्धहेतुता ।**

इद च दोषद्वयं नादातिरिक्तेषु द्रष्टव्यम्, न हि नादस्य प्रत्यक्षसिद्धस्यासिद्धिः। न शब्दत्वातिरिक्तो नादोऽस्तीति चेत् ? न, निरस्तत्वात् । अपि च, अस्तु शब्दत्वमेव नादः, तथापि तस्यास्तित्वात् कथमसिद्धि' ? किञ्च, एव सिद्धसाध्यताप्यनुपपन्ना स्यात्, न शब्दत्वस्यानित्यत्व सिद्धमिति ।

अस्मदिष्टे तु शब्दे प्रतिवादिनामिद दोषद्वय स्यादित्याह—

**अथास्मदिष्टः पक्षः स्याद् द्वयमेतत् समं तव ॥ ३२१ ॥**

यदि त्वविवक्षितविशेष शब्दमात्र धर्मीक्रियते ततो मात्रशब्दस्यापि सामान्यवचनत्वात् तदनित्यत्वेऽभ्युपगमविरोधः स्यादित्याह—

**शब्दमात्रमथोच्येत शब्दत्वं च तथा सति ।**
**अनित्यं तच्च सर्वेषां नित्यमिष्टं विरुध्यते ॥ ३२२ ॥**

तदभ्युपगममेव दर्शयति—

**यत्किञ्चिदिह सामान्यं नित्यं सर्वेण कल्प्यते ।**

---

१. सांख्यमते सारूप्यं शब्द इति दुरवगमोऽभिप्रायः ।

सारूप्यापोहजात्यात्मकमित्यर्थः।

कारणमाह--

**अनित्यत्वे हि नैतत् स्याद् व्यापि व्यक्तिषु कासुचित् ॥ ३२३ ॥**

किञ्च, शब्दत्वसामान्यं पक्ष, व्यक्तिर्वा? सामान्ये तावदभ्युपगमविरोधो दर्शितः, व्यक्तयस्तु शब्दशब्देनानभिधेयत्वादनुपात्ता इत्यनुपात्तविशेष्यः पक्षः स्यादित्याह--

**व्यक्तयः शब्दशब्देन न शक्यन्ते च भाषितुम्।**

भवतु वा कथञ्चिल्लक्षणयोपादानम्, तथापि विकल्पनीयम्—किं जातेरत्यन्त-भिन्ना. पक्षीक्रियन्ते, उताभिन्ना इति? पूर्वस्मिन् पक्षेऽस्माकमप्रसिद्धविशेष्यत्वम् आश्रयासिद्धता च हेतोरित्याह--

**तासां जात्यतिरेके च पूर्वोक्ते एव दूषणे ॥ ३२४ ॥**

अभिन्नत्वे तु जातिवदेव पूर्वाभ्युपगमविरोध, जातेर्हि नित्यत्वाभ्युपगमे तदभिन्नाना व्यक्तीनामपि बलान्नित्यत्वमभ्युपगतमित्याह---

**आश्रयानतिरेके तु जाताविव विरोधिता।**

भिन्नाभिन्नत्वे तु तवाप्रसिद्धविशेष्यत्वाश्रयासिद्धी स्याताम्—"अथास्मदिष्ट पक्ष स्यात्" इत्यत्रोक्तवदित्याह---

**अप्रसिद्धविशेष्यत्वं स्यात् परेषा च पूर्ववत् ॥ ३२५ ॥**

धर्ममप्यनित्यत्वं विकल्प्य दूषयति--

**अनित्यत्वं च नाशित्वं यद्यात्यन्तिकमुच्यते[1]।**
**ततोऽस्मान् प्रति पक्षः स्यादप्रसिद्धविशेषणः ॥ ३२६ ॥**

नहि निरन्वयविनाशोऽस्माक क्वचिदस्तीति ॥ ३२६ ॥

कथञ्चिन्नाशे सिद्धसाधनमित्याह—

**यथा कथञ्चिदिष्टा चेदनित्यव्यपदेश्यता।**
**अनभिव्यक्त्यवस्थातः साभिव्यक्त्यात्मनेष्यते ॥ ३२७ ॥**

अभिव्यक्त्यात्मना हि शब्दविनाशितास्त्येव, अनन्तरमेवानभिव्यक्त्यवस्थो-पजननादिति ॥ ३२७ ॥

**सांख्यजैनयो**श्चैकान्तिकव्यतिरेकविनाशप्रतिज्ञायामभ्युपगमविरोधोऽपि स्यात्, **सांख्य**स्यावस्थान्तरापत्तिमात्रविनाशाभ्युपगमात्, **जैन**स्यापि **स्याद्वादिनो**ऽनै-कान्तिकवादाश्रयणादित्याह—

**ऐकान्तिकविकल्पे च व्यतिरेकविनाशयोः।**
**पूर्वाभ्युपगमेनापि विरोधः सांख्यजैनयोः ॥ ३२८ ॥**

---

१. यद्यात्य०—३ पु०।

हेतुमिदानीं दूषयति—

**प्रत्यक्षैन्द्रियकत्वादेरौलूक्यानामसिद्धता ।**

**अनेकशब्दकल्प्यत्वाद्[1] आद्यमध्यभवेषु च ॥ ३२९ ॥**

**वैशेषिकनैयायिका** ह्यनेकान् शब्दान् सन्ततिरूपेण कल्पयन्ति, ते यद्याद्यमध्यमान् शब्दान् पक्षीकुर्युः ततस्तेषामप्रत्यक्षत्वादसिद्धो हेतुरिति ॥ ३२९ ॥

अन्तिमे तु अस्माकं विशेष्यासिद्धिराश्रयासिद्धहेतुता च स्यात्, न ह्यस्माकमन्तिमो नाम शब्दोऽस्तीत्याह—

**अन्त्यशब्देऽपि पक्षे स्यादाश्रयासिद्धता मम ।**

अविशेषेण तु सर्वशब्दपक्षकरणे भागासिद्धो हेतुराद्यमध्यमेष्वव्याप्तेरित्याह—

**सर्वशब्देषु साध्येषु हेतुरव्यापकस्तव ॥ ३३० ॥**

दोषान्तरमाह—

**सामान्यैर्व्यभिचारश्च,**

जातिमत्त्वे सतीति विशेषणेऽप्यस्त्येव व्यभिचार इत्यनुषङ्गेणाह अप्यन्तेन—

**जातिमत्त्वे सतीति चेत् ।**

**तथापि[2],**

गोत्वादीनामपि सत्तायोगादस्त्येव जातिमत्त्वमिति ।

जातिमत्त्वमपि विकल्प्य दूषयति—

**असिद्धमस्माकं[2] तद्वत्त्व व्यतिरिक्तया ॥ ३३१ ॥**

**अनन्यया[3] तु तद्वत्ता तवासिद्धेत्यहेतुता ।**

व्यभिचारपरिहाराय विशेषणान्तरं शङ्कते—

**अथानुवृत्तिव्यावृत्तिहेतुना युज्यते मतुप् ॥ ३३२ ॥**

येन धर्मेण भावो भावान्तरेषु केषुचिदनुवर्त्तते केभ्यश्चिद् व्यावर्त्तते स धर्मोऽनुवृत्तिव्यावृत्तिहेतुरित्युच्यते, यथा द्रव्यगुणकर्मावान्तरसामान्यानि घटत्वे । न हि घटो घटान्तरेष्वनुवर्त्तते पटादिभ्यश्च व्यावर्त्तते । तथा गकारादिः शब्दत्वेन शब्दान्तरेष्वनुवर्त्तते रूपादिभ्यश्च व्यावर्त्तते । तदेष प्रयोगः—अनित्यः शब्दः, अनुवृत्तिव्यावृत्तिहेतुमत्त्वे सत्यैन्द्रियकत्वाद् घटवदिति । न चैव सत्तायोगिभिर्गोत्वादिसामान्यैर्व्यभिचार, सत्ताया महासामान्यस्य केवलानुवृत्तिहेतुत्वादिति ॥ ३३२ ॥

परिहरति—

**तथाप्यस्त्येव तद्वत्ता तेषां सामान्यबुद्धितः ।**

गोत्वादीनामपि सामान्यबुद्धिविषयत्वादस्त्येवानुवृत्तिव्यावृत्तिहेतुमत्त्वमिति ।

---

१. अनेक शक्ति०—१ पु० ।
२-२. तथार्थसिद्ध०—३ पु० ।
३. अनन्यथा—३ पु० ।

एतदेव विवृणोति—

**गोत्वादिष्वपि सामान्यं[1] सामान्यमिति[1] नो मतिः॥ ३३३ ॥**

**व्यावर्त्तते विशेषेभ्यः सेति शब्देन तुल्यता।**

यः खलु सामान्यबुद्धिशब्दयोरालम्बनत्वेना**कृतिवादे** दर्शितो धर्मो भिन्नेष्वेकस्य वृत्तिर्नाम, तेन गोत्वादिकं सामान्यं सामान्येष्वनुवर्तते विशेषेभ्यश्च व्यावर्तत इति अस्त्येवानुवृत्तिव्यावृत्तिहेतुभूतोपाधिमत्ता गोत्वादीनामिति।

धर्मान्तरमपि दर्शयति—

**नित्यत्वं चानुगाम्येषामनित्येभ्यो निवर्त्तितम्॥ ३३४ ॥**

अथ सामान्येषु तद्वत्त्वं गौणं मिथ्या चेत्युच्यते, तच्छक्यं वाङ्मात्रेण शब्देऽपि वक्तुम्, इत्यसिद्धता हेतोरित्याह—

**अथात्र गौणमिथ्यात्वे स्यातां वर्णेषु ते समे।**

अथोपाधिनिवृत्त्यर्थमवान्तरजातिमत्त्वे सतीत्युच्यते, ततः परमाणुभिः पृथिवीत्वाद्यवान्तरसामान्ययोगिभिर्व्यभिचार इत्याह—

**योगीन्द्रियावगम्यैश्च व्यभिचारोऽणुभिस्तव॥ ३३५ ॥**

तदेव विवृणोति—

**नित्यानामपि तेषां हि प्रत्यक्षत्वादिसम्भवः।**

शङ्कते—

**अथ स्यात् तन्निवृत्त्यर्थमस्मदादिविशेषणम्॥ ३३६ ॥**

दूषयति—

**अहंप्रत्ययविज्ञेयैरात्मभिर्व्यभिचारिता।**

ननु चात्मा प्राणादिलिङ्गगम्यः शब्दगम्यो वा, नैन्द्रियकः, तत्राह—

**लिङ्गशब्दाद्यभावेन मनस्संयोगहेतुकम्॥ ३३७ ॥**

**प्रत्यक्षं चैतदेकान्तात् सुखादाविव कल्प्यते[2]।**

अहंबुद्धिगम्योऽयम्, न च तत्समये सर्वदा लिङ्गाद्यनुसन्धानमस्ति। दर्शितं हि प्राणादीनामलिङ्गत्वं मानसप्रत्यक्षगम्यत्वं चा**त्मवादे**। शब्दश्चाविनाशी वेत्यादिः शरीरादिविवेके प्रमाणम्, न स्वरूप इति।

पुनरपि विशेषणान्तरं शङ्कते—

**बाह्येन्द्रियावगम्यत्वमथ कुर्याद् विशेषणम्॥ ३३८ ॥**

निराकरोति—

**तथापि व्यभिचार्येव जातीनां जातिमत्तया।**

---

१-१. सर्वेषु सामान्यमिति—३ पु०।  २. कल्पते—३ पु०।

एतदेव विवृणोति—

**एकार्थसमवायेन जातिर्जातिमती हि वः ॥ ३३९ ॥**

गोत्वादीनामपि ह्यस्ति पृथिवीत्वाद्यवान्तरसामान्यैरेकार्थसमवायसम्बन्धात् तद्वत्त्वमिति ॥ ३३९ ॥

शङ्कते—

**आधारत्वमथोच्येत,**

गकारादिर्हि शब्दत्वस्यावान्तरजातेराधार., न तथा गोत्वादीति ।

परिहरति—

**नामूर्ताऽऽधीयते ह्यसौ ।**

जातिरमूर्ता न क्वचिदाधीयते, अतोऽसिद्ध गकारस्य जात्याधारत्वमिति ।

शङ्कते—

**समवायं यदि ब्रूयाः,**

निराकरोति—

**त्वदीयः सोऽपि वारितः ॥ ३४० ॥**

पुनः शङ्कते—

**अभेदवृत्ति ब्रूयाश्चेत्,**

परिहरति—

**जातीनामपि सेष्यते ।**

अस्ति हि वृक्षत्वशिशपात्वादीना द्रव्यरूपेण सत्तारूपेण वा परस्पराभेद इति ।

तदेवमनेकविशेषणोपादनेऽपि शब्दस्य नित्यवैधर्म्यासिद्धे स्वशब्देनैव नित्यानुपादाय तेभ्योऽन्यत्वादित्युच्यताम्, अनित्य. शब्द. उभयसिद्धनित्यव्योमादिव्यतिरेकादिति, तदाह—

**क्लेशश्च नित्यवैधर्म्ये कृतो बहुविशेषणैः ॥ ३४१ ॥**

**स्वशब्देनैव तान्युक्त्वा[1] तेभ्योऽन्यत्वं वरं कृतम् ।**

भवतु तर्हि तथेति चेत् ? तत्राह—

**एवं च शक्यते वक्तुं नित्यताप्यम्बरादिवत् ॥ ३४२ ॥**

**तद्भिन्नाऽनित्यवृक्षादिव्यतिरिक्तत्वहेतुका ।**

नित्य· शब्द·, उभयसिद्धानित्यवृक्षादिव्यतिरेकात्, व्योमवदिति । सेयं प्रकरणसमा नाम जातिरिति ।

---

१ तामुक्त्वा—३ पु० ।

यदि सादृश्यापोहसामान्यवादिनौ **सांख्यबौद्धौ** जातेरभावात् तत्रानैकान्तिकत्वं नास्तीति मत्वा निर्विशेषणमेवैन्द्रियकत्वं ब्रूयाताम्, ततः तयोरपीदानीमा**कृतिवादे** जाते. साधितत्वादस्त्येव तया व्यभिचार इत्याह—

**केवलैन्द्रियकत्वेऽपि सांख्यबौद्धप्रकल्पिते ॥ ३४३ ॥**
**जात्या साधितयेदानीं व्यभिचारः प्रतीयते**[1] ।

ननु साधितायामपि जातौ तयोरसम्प्रतिपत्तेः कथं व्यभिचारः ? अत आह द्वयेन—

**असिद्धे पक्षधर्मत्वे यथैव प्रतिवादिनः ॥ ३४४ ॥**
**न हेतुर्लभ्यते, तद्वदन्वयव्यतिरेकयोः ।**
**तत्र यद्यप्यसिद्धा स्याज्जातिः साधनवादिनः ॥ ३४५ ॥**
**तावत् तथाप्यहेतुत्वं यावत् सा न निराकृता ।**

मा भूत्तयोः सम्प्रतिपत्तिः, प्रतिवादिनस्तु **मीमांसकस्य** सास्त्येव प्रत्यक्षा चेति तत्र व्यभिचारो दूषणमेव । प्रतिवादिबोधनार्थं हि साधनम्, तस्य त्रीणि लक्षणानि—पक्षधर्मत्वम्, सपक्षयान्वयः, विपक्षव्यतिरेकश्च । तत्र प्रतिवादिनः पक्षधर्मत्वासिद्धौ यथा न हेतुत्वं सिद्ध्यति, तथा सपक्षान्वयविपक्षव्यतिरेकयोरसिद्धयोर्न सिद्ध्यत्येव हेतुत्वम् । अतो न यावन्**मीमांसक**सम्मता जातिर्निराकृता, तावत् ततो विपक्षाद्धेतोर्व्यतिरेकासिद्धेर्न हेतुत्वमिति ।

किञ्च, इदमैन्द्रियकत्वमपि कीदृशमिति विकल्पनीयमित्याह—

**कार्या चैन्द्रियकत्वेऽपि किं वस्त्विति निरूपणा ॥ ३४६ ॥**
**व्यक्त्यनन्यत्वनानात्वभेदाभेदेषु च स्फुटा ।**

किं स्वाश्रयेभ्योऽन्यदनन्यद् वा, प्रत्याश्रयभिन्नमभिन्नं वा, सर्वत्रैकरूपं वेति ? तत्र दूषणमाह—

**तत्रासाधारणासिद्ध साध्यहीनसपक्षताः ॥ ३४७ ॥**
**विकल्पितानुसारेण वक्तव्या वाद्यपेक्षया ।**

एतेषु विकल्पेषु आद्यो विकल्पो येन वादिनाङ्गीकृतः, तं प्रति यथाविकल्पम्—असाधारण्यम्, असिद्धिः, साध्यहीनसपक्षता दोषा वक्तव्याः । तथा हि—यदि तावद् व्यक्तिभ्योऽन्यत् तदपि प्रतिव्यक्ति भिन्नं ततस्तस्य शब्दातिरेकेणान्यत्र क्वचिदप्यभावाद् गन्धवत्त्ववदसाधारणत्वम्, व्यक्त्यन्यत्वे चास्माकमसिद्धिः. अनन्यत्वं तु भवतामसिद्धम्, यदि तु व्यक्तिभ्योऽनन्यत् सर्वत्र चैकरूपमित्युच्यते ततः पूर्वानुयायिनस्तस्य नित्यत्वात् तदभिन्नस्य घटादेर्नित्यत्वमेवापन्नमिति साध्यहीनता दृष्टान्तस्येति ।

---

१. इदमर्धत्रय १ पु० त्रुटितम् ।    २. ०सिद्धे०—३ पु० ।

दोषान्तरमाह—

**विरुद्धाव्यभिचारित्वं वक्ष्यमाणैश्च हेतुभिः ॥ ३४८ ॥**

तानेव दर्शयति सार्द्धेन—

**केवलाकाशवर्त्तित्वाद्[1] औलूक्यस्य विभुत्ववत् ।**

**तथा च श्रोत्रगम्यत्वाच्छब्दत्ववदिति स्थितिः[2] ॥ ३४९ ॥**

**प्रागुक्तेन विभुत्वेन व्योमवच्चास्य नित्यता ।**

घटादिसंयोगैरनैकान्तिकत्व मा भूदिति केवलग्रहणम् । आकाशे हि शब्दस्य परिसमाप्यवृत्तिर्न तत्र चान्यत्र च व्यासज्येति ।

दृष्टान्तमपि विकल्प्य दूषयति—

**सपक्षोऽपि[3] विकल्प्योऽत्र श्रुत्यर्थे साध्यहीनता ॥ ३५० ॥**

घटत्वं श्रुत्यर्थः, तच्च नित्यमिति ॥ ३५० ॥

व्यक्तिलक्षणामपि विकल्प्य दूषयति—

**व्यक्तिलक्षणपक्षेऽपि जात्यन्यानन्यकल्पना ।**

**अन्यत्वे धर्म्यसिद्धिर्नोऽनन्यत्वेऽपि परान्[4] प्रति ॥ ३५१ ॥**

यदि तु श्रौतलाक्षणिकाशविशेषमनुपादाय सम्मुग्धमेव वस्तु दृष्टान्त इत्युच्यते, तत्राह—

**अविशेषेऽपि नानित्यं न नित्यं वस्तु तन्मम ।**

कथम् ? इत्याह—

**अंशो ह्येतस्य जात्याख्यो नित्यो ध्वंसीतरो मतः ॥ ३५२ ॥**

ततश्च न तेन दृष्टान्तेन शब्दस्यैकान्तिकमनित्यत्व सिध्यतीति ॥ ३५२ ॥

दृष्टान्तेऽप्यनित्यता विकल्प्य दूषयति पादत्रयेण—

**अनित्यता विकल्प्यात्र, नाशश्चेत् साध्यहीनता ।**

**ममान्यथा तु भवताम्,**

विनष्टो हि घटो द्रव्यरूपेण सामान्यरूपेण वावतिष्ठत इति नात्यन्तिको[6] विनाशः, कथञ्चिन्नाशस्तु तवासिद्ध इत्युपसहरति—

**इत्येषा दूषणोक्तिदिक् ॥ ३५३ ॥**

किञ्च, सर्ववादिनामविवादं वाचकरूपस्य नित्यत्वम्, तत्स्वरूपमात्रं तु विप्रतिपन्नम्, अनित्यशब्दवादिनाऽपि हि अत्यन्तसारूप्यापोहरूपं नित्यमेव वाचकं मन्यन्ते । अत्यन्तसारूप्यं गत्वादिकं च यदा निराकृतं तदा वर्णस्वरूपमेव नित्यं

---

१. ०गामित्वात्—३ पु० ।    २. स्थितम्—३ पु० ।

३. वा—३ पु० ।    ४. परम्—३, का० ।

५. अविनाशी—३ पु० ।    ६. इत्यात्यन्तिको—मु० पा० ।

सिद्धं भवति, सिद्धेऽपि तस्मिन् परोक्तानित्यत्वहेतुपरिहारमात्रार्थमिदमधिकरण-मित्याह—

**सर्वेण शब्दरूपं च वाचकं नित्यमिष्यते।**
**तत्स्वरूपे विवादस्तु[1] वर्णास्तत्र च साधिताः॥ ३५४॥**

**सर्वत्र यौगपद्यात्** (जै० सू० १. १. १९)। "गोशब्द उच्चरिते सर्वगवीषु युग-पत् प्रत्ययो भवति अत आकृतिवचन: शब्दः। न चाकृत्या शब्दस्य सम्बन्धः शक्यते कर्त्तुम्" (शा० भा० पृ. १०४) इति भाष्यं सम्बन्धनित्यतामेव प्रति-पादयति—

**सम्बन्धनित्यतायाः किं शब्दाधिकरणेऽभिधा।**

तत्र कश्चित् समाधत्ते—

**तादर्थ्याच्छब्दचिन्तायाः सैव ह्यत्राधिकारिकी॥ ३५५॥**

सम्बन्धनित्यतैव हि **महाप्रकरणे** प्रकृता। शब्दनित्यत्वमपि हि तदङ्गत्वेनैव चिन्तितम्, तस्मिन् समाप्ते प्रकृतायामेव सम्बन्धनित्यतायां युक्त्यन्तरमुच्यते। अतो नासङ्गतिरिति॥ ३५५॥

तदिदमयुक्तमसमाप्तत्वाच्छब्दचिन्ताया, ततः पक्षान्तरमाह—

**यद्वा सम्बन्धनित्यत्वद्वारेयं शब्दनित्यता।**
**साध्यते, न विनष्टे हि शब्दे तन्नित्यता भवेत्॥ ३५६॥**

ननु विनश्वराणामपि व्यक्तीना जातिसम्बन्धो नित्यो दृष्ट.? अत्राह—

**अनित्यानां हि नित्यात्मा यः सम्बन्धः प्रतीयते।**
**आश्रयाणामनुच्छेदान्न क्वचित् स विरुध्यते[2]॥ ३५७॥**

बहुव्यक्त्याश्रयं तत्र सम्बन्धनित्यत्वम्, ता ह्यनुच्छेदरूपेण सर्वदा सन्त्येवेति॥

न चैवमिह सम्भवतीत्याह—

**न चानुच्छेदरूपेण गोशब्दानामिह स्थितिः।**

कारणमाह—

**न चैषां गम्यते भेदस्तेनैकस्यैव नित्यता॥ ३५८॥**

च-शब्दो हेताविति॥ ३५८॥

भवतु सम्बन्धनित्यतया शब्दनित्यत्वम्, सैव तु कथम्? इत्यत आह—

**कृत्रिमत्वे च[3] सम्बन्धस्तत्प्रयोगापवर्जनात्[4]।**
**तदेकव्यक्तिनिष्ठत्वान्नैव सार्वत्रिको भवेत्॥ ३५९॥**

यदा हि न कश्चिदपि शब्द केनचिदप्यर्थेन सम्बद्ध तदाङ्गुल्यार्थं निर्दिश्य

---

१. विसंवादः—३ पु०। २. निरुध्यते—का०।
३. अपि—१ पु०। ४. प्रयोगोऽप०—३ पु०।

सम्बन्धः क्रियते, अङ्गुलीप्रयोगश्चैकव्यक्तिनिष्ठ इति तत्प्रयोगोऽपवृक्त [1], सम्बन्धोऽप्येकव्यक्तिनिष्ठो न सार्वत्रिक स्यात्, तत्र न सर्वगवीषु प्रत्यय. सिद्धचेदिति ॥ ३५९ ॥

अथापि जातिमेव निर्दिश्य सम्बन्धः क्रियते, तथापि बहुजातिसन्निधानान्न सकृच्छ्रवणे जातिनिर्धारणमित्याह—

**पार्थिवद्रव्यसत्तादिलाङ्गूलत्वादिसङ्करात् ।**
**विना प्रयोगभूयस्त्वं न स्याद् गोत्वावधारणा [2] ॥ ३६० ॥**

एवमुपपादितं सम्बन्धनित्यत्वद्वार शब्दनित्यत्व प्रयोगेण दर्शयति—

**तस्मादकृत्रिमः शब्दो न कदाचिद् विनश्यति ।**
**नित्येन नित्यसम्बन्धादाकाशपरमाणुवत् ॥ ३६१ ॥**

स्वमतेनेदानी सूत्रार्थमाह—

**यद्वा सम्बन्धनित्यत्वं सूत्रेऽस्मिन्नैव वर्ण्यते ।**

शब्दनित्यत्वमेवात्रोच्यते न सम्बन्धनित्यत्वमिति ।

कथ तर्हि भाष्यम् ? इत्यत आह—

**शब्दनित्यत्वमात्रेऽपि [3] भाष्यं ह्येतस्य युज्यते ॥ ३६२ ॥**

भाष्यार्थं दर्शयति—

**सम्मुग्धानेकसामान्यविषयो [4] हि सकृच्छ्रुतः ।**
**निष्कृष्टस्वार्थवाचित्वं शब्दो न प्रतिपद्यते ॥ ३६३ ॥**

"कर्तुम्" इति च भाष्ये कथन ग्रहण वोच्यते, न विना प्रयोगबाहुल्येन सकृच्छ्रुतस्य निष्कृष्टस्वार्थवाचित्व कथयितु ग्रहीतुं वा शक्यमिति भाष्यार्थ इति ॥३६३॥

"नित्ये खलु गोशब्दे" (शा० भा० पृ० १०९) इत्यादिभाष्यार्थमाह द्वयेन—

**बहुभिः श्रवणैरेव प्राणित्वादीनि वर्जयेत् ।**
**शुक्लादिगमनादीनि सास्नालाङ्गूलतादि च ॥ ३६४ ॥**
**शाबलेयादिखण्डादिव्यक्तीश्च स्वनिबन्धनाः ।**
**निष्कृष्टगोत्ववाचित्वं चिरेण प्रतिपद्यते ॥ ३६५ ॥**

व्यक्तीना शब्दभाक्त्वे निबन्धन तज्जातीयेषु सर्वेषु प्रयोगात् न स्वरूपम्, अतस्तासामनभिधेयतेति ॥ ३६४-३६५ ॥

---

१. अपवृक्त इति वैयक्तिकः । असाधारण इत्यर्थः ।

२. ०वधारणात्—का० । ०वधारणं—२ पु० ।

३. ०मात्रे तु—३ पु० ।

४. संस्थानैकत्वसामान्ये०—३ पु० ।

नन्वेवमपि स्थायित्वमात्र सिद्ध्यति, न नित्यत्वम् ? अत्राह—

**तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति ।**

तच्चानपेक्षत्वसूत्रे ( जै० सू० १ १. २१ ) वक्ष्यत इत्याह—

**अनपेक्षत्वसूत्रेण[1] तच्चैतत् साधयिष्यते ॥ ३६६ ॥**

**संख्याभावात्** ( जै० सू० १. १. २० ) । "अष्टकृत्वो गोशब्द उच्चरित इति हि वदन्ति नाष्टौ गोशब्दा " (शा० भा० पृ० १०५) इति भाष्यम्, तस्याभिप्रायमाह—

**क्रियावतामभेदे हि क्रियावृत्तिषु कृत्वसुच् ।**
**तत्प्रयोगाद् ध्रुवं तस्य शब्दस्यावर्त्तते क्रिया ॥ ३६७ ॥**

योऽय क्रियाभ्यावृत्तिगणने विहित कृत्वसुच्प्रत्यय.[1] स च क्रियावतामभेदे भवति, तेन कृत्वसुच्प्रत्ययप्रयोगात् तस्यैव पूर्वोच्चरितकृत्वसुच्कस्य पुनरुच्चारणमनुवर्तत इति ॥ ३६७ ॥

कथमुच्चारणावृत्तौ शब्दाभेदसिद्धि ? इत्यत आह—

**पुनःप्रयोगविज्ञानं न हि शब्दान्तरे भवेत् ।**

गोशब्दोच्चारणस्य ह्यत्रावृत्तिरुच्यते, सा कथ शब्दान्तरत्वे स्यादिति ।

शब्दभेदे ह्यष्टौ गोशब्दा इति स्यात्, न च तथा दृश्यत इत्याह—

**तस्यां[2] च शब्दसंख्यायामष्टाविति भवेच्छ्रुतिः ॥ ३६८ ॥**

"किमतो यद्येवम्" ( शा० भा० पृ० १०५ ) इति भाष्यार्थमाह—

**भुक्तवन्तोऽष्टकृत्वोऽद्य ब्राह्मणा इति दृश्यते ।**
**द्रव्यभेदेऽप्यनेकान्तं मत्वा[3]ऽऽह किमतो यदि ॥ ३६९ ॥**

अनेन वचनेन गम्यते--प्रत्यभिजानन्तीति ॥ ३६९ ॥

परिहारभाष्याभिप्रायमाह—

**तस्मात् तत्परिहाराय प्रमाणान्तरमुच्यते ।**
**प्रत्यभिज्ञानमेतेन प्रयोगेणोपलक्षितम् ॥ ३७० ॥**

नाय कृत्वसुच्प्रत्ययप्रयोग. स्वरूपेणैव शब्दाभेदस्य लिङ्गतयोच्यते येनानैकान्तिकत्वमुच्यते, किन्तु प्रायेण प्रत्यभिज्ञासाहचर्यं कृत्वसुच्प्रत्ययस्यास्तीति तदुपलक्षणार्थोऽय कृत्वसुजुपन्यास इति ॥ ३७० ॥

यद्वा कृत्वसुजपि न व्यभिचारीत्याह—

**कृत्वसुच्चापि नैवायं व्यभिचारीति गम्यते ।**

कथम् ? इत्याह—

**यतः प्रयुज्यते चैकब्राह्मणत्वविवक्षया ॥ ३७१ ॥**

---

१. "संख्याया क्रियाभ्यावृत्तिगणने कृत्वसुच्" (५. ४. १७) इति पाणिनिसूत्रेणेति शेषः ।

२. सत्या—३ पु० । ३. गत्वा—३ पु० ।

ननु स्वसंवेद्यमेव प्रत्यभिज्ञानम्, किमत्र क्त्वसुजुपलक्षणेन ? अत आह—

**प्रमाणं प्रत्यभिज्ञानं दृढेन्द्रियतयोच्यते ।**

सत्यमात्मीय प्रत्यभिज्ञान स्वसवेद्यम्, तस्य तु कारणदोषाशङ्कानिराकरणाय सर्वजनीनत्वं साधयितुं क्त्वसुच्प्रयोगः, तदुक्तं भाष्यकारेण—"वय तावत् प्रत्यभिजानीमः, न नः करणदौर्बल्यम्, एवमन्येऽपि प्रत्यभिजानन्ति" ( शा० भा० पृ० १०५ ) इति ।

"अन्यत्वेऽपि सति सादृश्येन व्यामूढा. 'स ' इति वक्ष्यन्ति" ( शा० भा० पृ० १०५ ) इति भाष्यार्थमाह—

**इतरोऽसिद्धतामाह सादृश्याद् ग्राह्यदूषणात् ॥ ३७२ ॥**

इन्द्रियदोषनिमित्ता हि भ्रान्ति. सर्वव्यापितया निराक्रियेत, विषयदोषनिबन्धना तु सर्वेषामपि स्यादेव, अतोऽसिद्ध प्रत्यभिज्ञायाः प्रामाण्यमिति ॥३७२॥

"तन्न, न हि ते सदृश इति प्रतिपद्यन्ते, किं तर्हि स एवायम्" ( शा० भा० पृ० १०६ ) इति परिहारभाष्यम्, तस्याभिप्रायमाह सार्द्धेन—

**नित्यं सदृश एवेति यत्र रूढा मतिर्भवेत् ।**
**स इति प्रत्यभिज्ञानं भ्रान्तिस्तत्रावकल्पते ॥ ३७३ ॥**
**इह नित्यं स एवेति विज्ञानं जायते दृढम् ।**

नन्वेवमसत्यपि भ्रान्तित्वे गृहीतग्राहित्वात् अप्रामाण्यं प्रत्यभिज्ञायाः ? तत्राह—

**तदास्तित्वाधिकत्वाच्च प्रामाण्यं तस्य साधितम् ॥ ३७४ ॥**

"बुद्धिकर्मणी अपि हि ते प्रत्यभिज्ञायेते, ते अपि हि नित्ये प्राप्नुत." ( शा० भा० पृ. १०६ ) इति चोद्यभाष्यमयुक्तम्, न हि नित्यत्वेऽपि बुद्धिकर्मणोः शब्दनित्यत्वं दूषितं भवति अनित्यत्वं वा साधित भवति ॥ ३७४ ।

तदिदं सिद्धान्तान्तरदूषणं नाम निग्रहस्थानम्, अत आह—

**नित्यप्रसङ्गद्वारेण स्पष्टयोरप्यनित्ययोः ।**
**प्रत्यभिज्ञानसद्भावादनैकान्तिकतोच्यते ॥ ३७५ ॥**

नित्यत्वदूषणमेवेद प्रत्यभिज्ञानस्यानैकान्तिकत्वापादनादिति ॥ ३७५ ॥

"न हि ते प्रत्यक्षे" ( शा० भा० पृ. १०६ ) इति परिहारभाष्यमाक्षिपति—

**न प्रत्यक्षे इति त्वेतदसम्बद्धमिवोत्तरम् ।**

कथम् ? इत्याह—

**यतो नात्र परेणोक्ता प्रत्यक्षत्वेन नित्यता ॥ ३७६ ॥**

न परं नोक्ता, किन्त्वयुक्ता चेत्याह—

**प्रत्यक्षत्वाद् घटादीनां मा प्रसाङ्क्षीद्धि नित्यता ।**

प्रत्यक्षत्वेन हि नित्यत्वं साधयतो घटादिभिर्व्यभिचारः स्यादिति ।

यदि चाप्रत्यक्षत्वमनित्यत्वव्याप्तं स्यात्, ततो नित्यत्वसम्भावनाय प्रत्यक्षत्वमुच्येत, न तु तदस्तीत्याह—

**अतीन्द्रियत्वान्मा भूच्च व्योमादेरप्यनित्यता ॥ ३७७ ॥**

किञ्च, यदि चोद्यवादिना बुद्धिकर्मणोर्नित्यत्वमेव स्वरूपेण साधितं स्यात्, ततस्तद् दूष्येत, अनैकान्तिकता तु प्रत्यभिज्ञायास्तेनोक्ता । सा च नित्यत्वे दूषितेऽपि सुतरां प्रतिष्ठितैव भवति, अनित्ययोरेव तयोः प्रत्यभिज्ञादर्शनात्, अतो नेदमुत्तर युक्तमित्याह—

**न च नित्ये स्वरूपेण तेनोक्ते बुद्धिकर्मणी ।**
**या त्वनैकान्तिकत्वोक्तिः सा तथैवावतिष्ठते ॥ ३७८ ॥**

तत्रैकदेश्याह—

**न तयोः प्रत्यभिज्ञानमेतदेव किलोच्यते ।**
**प्रत्यक्षत्वनिषेधेन प्रत्यक्षेण हि तद् भवेत् ॥ ३७९ ॥**

प्रत्यक्षनिबन्धनैव प्रत्यभिज्ञा, अत प्रत्यक्षत्वनिषेधेन प्रत्यभिज्ञैव निषिध्यत इति ॥ ३७९ ॥

तन्निषेधे च विपक्षवृत्त्यभावान्नानैकान्तिकत्व भवतीत्याह—

**तेन हेतोरभावोऽयं विपक्षानुज्ञयोच्यते[1] ।**

"अथ प्रत्यक्षे नित्ये एव" (शा० भा० पृ० १०६) इति भाष्याभिप्रायमाह—

**हेतुं चाप्यभ्यनुज्ञाय विपक्षो नेति कथ्यते ॥ ३८० ॥**

तदेवमनैकान्तिकत्व परिहृतम् ॥ ३८० ॥

यदि तु नित्यत्वस्वरूपमेव सिषाधयिषित तन्निग्रहस्थानमित्याह—

**साध्यं नित्यस्वरूपं चेदेतयोः प्रत्यभिज्ञया[2] ।**
**तत्रासम्बद्धता वाच्या योक्ता पङ्क्तिवने प्रति ॥ ३८१ ॥**

यत्त्विदमनास्थावचनम्—"न हि ते प्रत्यक्षे, यदि ते प्रत्यक्षे, नित्ये एव" इति ( शा० भा० पृ. १०६ ) तत्राभिप्रायमाह रायान्तेन—

**प्रत्यभिज्ञाननित्यत्वे याप्येषानवधारणा ।**
**अनादराय,**

अनादरं दर्शयति—

**न ह्यस्मात् प्रकृतं मम दुष्यति ॥ ३८२ ॥**

व्यवस्थितविषयमेव चेद प्रत्यक्षनित्यत्वयो. सहत्ववचनमित्याह द्वयेन—

---

१. विषयानुज्ञयो०—३ पु० । २. प्रत्यभिज्ञयोः—का० ।

**व्यक्तिरूपेण वा येन नाशित्वं बुद्धिकर्मणोः।**
**न तत्र प्रत्यभिज्ञानं, घटबुद्धौ हि नास्य' धीः[1] ॥ ३८३ ॥**
**येन तु प्रत्यभिज्ञानं शक्तिजात्यात्मनानयोः।**
**तेन नित्यत्वमेवेष्टं कथञ्चित् सर्ववादिनाम् ॥ ३८४ ॥**

शक्त्यात्मनेति। प्रमेयप्रकाशनसामर्थ्यरूपेणेत्यर्थ ॥ ३८४ ॥

तदिदमेकदेशिमत निराकरोति—

**एवं तु प्रत्यभिज्ञानं वाचोक्तं क्लिष्टयानया।**

प्रत्यभिज्ञान हि निषेधन् विस्पष्टमेव न ते प्रत्यभिज्ञायेते इति ब्रूयात्, प्रत्यक्षशब्देन तु तदभिधानं क्लिष्टम्, अतो न ग्रन्थानुगुणं प्रत्यभिज्ञानिराकरणमिति।

न च युक्तमित्याह—

**न च शक्यं निराकर्तुं सर्वलोकप्रसिद्धितः ॥ ३८५ ॥**

अस्ति हि 'इयमपि गौरियमपि' इतिवदयमपि वेद—'अयमपि चलत्ययमपि' इति बुद्धिकर्मणो प्रत्यभिज्ञेति ॥ ३८५ ॥

केन पुन' प्रमाणेन तयोः प्रत्यभिज्ञानम्? अत्राह—

**येन नाम प्रमाणेन ग्रहणं बुद्धिकर्मणोः।**
**तेनैव[2] प्रत्यभिज्ञानान्नित्यत्वं[2] किं न सिद्ध्यति ॥ ३८६ ॥**

विशेषविषय तदेवेदमिति ज्ञान प्रत्यभिज्ञानम्। न च तदनुमान सम्भवति, तस्य सामान्यमात्रविषयत्वादिति चेत्? न; विशेषविषयस्यापि अनुमानस्य दर्शनात्। स्वरविशेषेण हि कुड्याद्यन्तर्हितो देवदत्तोऽनुमीयते। तदेव विशेषविषयैव प्रत्यभिज्ञा। कथ तर्हि सामान्यस्य गोत्वस्य सर्वपिण्डानुयायिन. प्रत्यभिज्ञया सिद्धिः, अथापरोक्षरूप तदिदमिति ज्ञान प्रत्यभिज्ञा, नैव गृहीतग्रहणं प्रत्यभिज्ञान परोक्षमपरोक्ष वा? भवत्वेवं परिभाषा, तथापि गृहीतग्रहणमेव स्थायितोपयोगि, तच्चानुमानेऽप्यस्तीति सिध्यत्येव बुद्धिकर्मणोर्नित्यत्वम्, मा भूत् प्रत्यभिज्ञा समाख्या।

स्यान्मतम्—नित्यपरोक्षे बुद्धिकर्मणो कार्यानुमेये, कार्यं च कारणसत्त्वमेव गमयति न प्राक्क्लृप्तमेवेति? तदयुक्तम्; एकविधं हि पटादिकार्यमेकेनैव तन्त्वादिना जन्यमान दृष्टम्, अतः संयोगविभागयोरपि शक्यं सामान्यात्मना विशेषात्मना चैकरूपमेव कारण कल्पयितुमिति नित्यत्वसिद्धिरिति ॥ ३८६ ॥

तदेवमस्ति तयोरपि प्रत्यभिज्ञा, वाङ्मात्रेण तु तदभाववचनं शब्देऽपि दर्शयितुं शक्यमित्यत आह—

**वाङ्मात्रात् प्रत्यभिज्ञानं शक्यं शब्देऽपभाषितुम्[3]।**

---

१-१. नाश्वधीः—मु० पा०।

२-२. मात्रप्रत्यभिज्ञानात्—३ पु०। प्रत्यभिज्ञाननित्यत्वम्—मु० पा०।

३. शब्देऽपि०—मु० पा०।

यदि तु प्रत्यक्षमात्रं निषिध्यते न प्रत्यभिज्ञा, तदनर्थकमेव, अनैकान्तिकत्वस्यापरिहारादित्याह—

**प्रत्यभिज्ञानपेक्षेण न प्रत्यक्षेण किञ्चन ॥ ३८७ ॥**

विशेषश्च प्रत्यक्षनित्यत्वनिराकरण कर्मणि न युक्तम्, स्वतन्त्रविरोधादित्याह पादत्रयेण—

**रूपशब्दाविभागाच्चेत्यत्रैतत् साधयिष्यते।**
**प्रत्यक्षनित्यं कर्मेति,**

तेनास्य व्याख्यानस्यानुपपत्तेरेव व्याख्यातव्यमित्याह—

**तेनैषात्रोपवर्णना ॥ ३८८ ॥**

तामेव दर्शयति सपादैश्चतुर्भि —

**नास्माभिः प्रत्यभिज्ञानं नित्यसाधनमिष्यते[1]।**
**अनित्यवादिनस्त्वेषा प्रत्यक्षेण विरुद्धता ॥ ३८९ ॥**
**तेनानैकान्तिको नायं सिद्धान्तान्तरदूषणम्।**
**धीकर्मस्वपि कि नैवमनित्यत्वं निवार्यते ॥ ३९० ॥**
**तदुच्यते विनाशित्वमनुमानात् प्रतीयते।**
**शब्दे प्रत्यक्षगम्ये च तेन बाधो बलीयसा ॥ ३९१ ॥**
**धीकर्मप्रत्यभिज्ञानान्नित्यता त्वानुमानिकी।**
**तादृशी नाशितापीति न स्यात् तत्र बलाबलम् ॥ ३९२ ॥**
**न हि ते इति तेनाह,**

यदेतद् बुद्धिकर्मणो प्रत्यभिज्ञया नित्यत्वप्रसञ्जन कृतम्, तन्न तावदनैकान्तिकत्वार्थ घटते, न ह्यस्माभि प्रत्यभिज्ञा शब्दनित्यत्वे लिङ्गमुक्ता येनानैकान्तिकत्वमुच्येत, अनित्यत्वस्य तु प्रत्यभिज्ञाप्रत्यक्षविरोधोऽयमुक्त., न च प्रत्यक्षस्यानैकान्तिकत्व दूषणम्, सिद्धान्तान्तरदूषणमात्र तु स्यात्, बुद्धिकर्मणोरपि प्रत्यभिज्ञानान्नित्यत्व स्यादिति ? तत्रेदमुत्तर निग्रहस्थानमुपेक्ष्योच्यते, न शब्दवत्तयोर्नित्यत्वम्, शब्दस्य ह्यानुमानिकी नित्यता बाधित्वा प्रत्यक्षेण नित्यता स्थापिता, बुद्धिकर्मणोस्तु स्वयमानुमानिकयोर्नित्यत्वमनित्यत्व च द्वयमानुमानिकमिति बलाबलविशेषाभावान्नैकान्ततो नित्यत्वमित्यभिप्रेत्य हि "न ते प्रत्यक्षे" इत्युक्तमिति।

व्याख्यान्तरमाह क्षमन्तेन—

**यद्वा हेतोर्विशेषणम्।**
**प्रत्यक्षम्,**

---

१. उच्यते—३ पु०।

लिङ्गत्वेऽपि प्रत्यभिज्ञाया नानैकान्तिकत्वम्, प्रत्यक्षेण विशेषणात्। न हि धीकर्मणोः प्रत्यक्षत्वमत्रेति भाष्यार्थः। प्रत्यक्षप्रत्यभिज्ञापि घटादिभिर्व्यभिचरतीति चेत्? न, स्थायित्वमात्रसाधनादिति।

यद्वा, श्रोत्रप्रत्यक्षत्वमत्र हेतुः, तद्धि शब्दत्वदृष्टान्तेन शक्नोति नित्यत्वं साधयितुमित्याह—

**श्रौत्रता चेयं हेतुः शब्दत्ववत् कृतः॥ ३९३॥**

नन्वयमपि वायुधर्मभूतैर्ध्वनिभिर्व्यभिचरत्येव? न; भूतावयवधर्मध्वन्यन्यत्वे सतीति विशेषणात्। आह च—

हेतुरेव ह्यसौ स्पष्टो नित्यत्वस्योपलभ्यते।
भूतावयवधर्माख्यध्वन्यन्यत्वविशेषितः॥ इति॥ ३९३॥

यत्तु कर्मणः प्रत्यक्षत्वात् कथमप्रत्यक्षाभिधानमित्युक्तम्? तत्राह—

**यत्कर्मातीन्द्रियाधारं तदप्रत्यक्षमुच्यते।**

परमाण्वाद्याश्रितकर्माभिप्रायमिदमप्रत्यक्षत्वाभिधानमिति।

बुद्धिष्वप्रत्यक्षत्वं साधितमेवेत्याह—

**अप्रत्यक्षेति बुद्धिश्च शून्यवादे निरूपिता॥ ३९४॥**

प्रत्यक्षद्रव्यवर्तिनीनां तु क्रियाणां शब्दवदेव प्रत्यक्षत्वं नित्यत्वं चेष्टमेवेति तदभिप्रायम् 'अथ प्रत्यक्षे नित्ये एव' इति भाष्यमित्याह—

**प्रत्यक्षद्रव्यवर्त्तिन्यो दृश्यन्ते याः पुनः क्रियाः।**
**तासां वर्णवदेवेष्टं नित्यत्वं प्रत्यभिज्ञया॥ ३९५॥**

स्थिते च प्रत्यक्षेषु नित्यत्वेऽतीन्द्रियेष्वपि नित्यतैव भवति; स्वभावापरित्यागात्। ततश्चाप्रत्यक्षवचनमुपक्रममात्रमिति॥ ३९५॥

यदि तु नित्याः, किमिति नित्यं नोपलभ्यन्ते? अत्राह—

**व्यञ्जकाभावतश्चासां सन्ततानुपलब्धिता[1]।**

किं पुनरासामभिव्यञ्जकम्? तद् दर्शयति—

**यदेवोत्पादकं वः स्यात् तदेव व्यञ्जकं मम॥ ३९६॥**

नोदनाभिघातादिकमेवाभिव्यञ्जकमिति॥ ३९६॥

व्यञ्जकाभावात् सन्ततानुपलम्भे दृष्टान्तमाह—

**तव[2] शब्दत्वकर्तृत्वे नित्ये अपि सती यथा।**
**न नित्यमुपलभ्येते तथा मे बुद्धिकर्मणी॥ ३९७॥**

नन्वभिव्यक्तिरेव कस्मात् सर्वदा न भवति, तदाश्रयस्य द्रव्यस्य तदभिव्यक्तिशक्तिः सर्वदास्त्येव? अत आह—

---

१. ०नुपलभ्यताम्—३ पु०। २. न च—का०।

**यथा वा शक्तिसद्भावे कुतश्चित् कारणादृते ।**
**न कार्याण्युपजायन्ते[1] तथाभिव्यक्तिरिष्यताम् ॥ ३९८ ॥**

सहकारिवैकल्यादुत्पत्तिवदेवाभिव्यक्तिरपि न सर्वदा भवतीति ॥ ३९८ ॥

ननु तुल्यत्वे किमित्युत्पत्तिरेव कर्मभेदानां नेष्यते, प्रत्यभिज्ञा हि जात्यालम्बनापि सम्भवति ? अत्राह द्वयेन—

**व्यक्तिभ्योऽन्यतया तावत् कर्म क्लेशेन कल्प्यते[2] ।**
**पुनर्जातिसहस्राणां तद्भेदे क्लिष्टकल्पना ॥ ३९९ ॥**
**तत एकत्वनित्यत्वप्रत्येकसमवायिताः ।**
**वृत्तिश्च विप्रकीर्णेषु कर्मभागेषु नाशिषु ॥ ४०० ॥**

द्रव्यादेव तावत् क्रियादेर्भेदः सौगतेषु परिपन्थिषु क्लेशलभ्य , तत्र पुनरुत्क्षेपणत्वादिजातिः तद्व्यक्तिश्च, तासु च तासां प्रत्येकं वृत्तिः। तथापि पुनर्गवादिवैलक्षण्येन कर्मभागेषु बहुषु युगपद्भाविषु भ्रमणत्वादीनां वृत्तिं कल्पयतोऽपि क्लेश इति ॥ ४०० ॥

उपसंहरति—

**एकत्वाच्चलनादीनां तस्मादेकात्मिका मतिः ।**

कथं तर्हि बुद्धिभेदः ? अत्राह—

**प्रयत्नाश्रयनानात्वाद् बुद्धिभेदः प्रवर्त्तते ॥ ४०१ ॥**

प्रयत्नभेदाद् भेदमुदाहरिष्यति। देवदत्तश्चलति, यज्ञदत्तश्चलतीत्याश्रयभेदाद् भेद इति ॥ ४०१ ॥

किमित्येवमौपाधिकभेदाश्रयणम् ? अत्राह—

**नैव ह्यत्रापि विच्छिन्नाः शाबलेयादिपिण्डवत् ।**
**कर्मव्यक्तीर्विजानीमः कल्पयेम द्वयं यतः ॥ ४०२ ॥**

यथैव हि वर्णे द्रुताद्युपाधिमवधीर्य स्वरूपभेदः शाबलेयादिवन्नास्ति तथात्रापीति ॥ ४०२ ॥

प्रयत्नभेदनिबन्धनं भेदमुदाहरति—

**शीघ्रमन्दादिभेदेऽपि स्यात् प्रयत्नादिभेदतः[3] ।**

समानं चेदमौपाधिकभेदाद् भेदाश्रयणं कर्मभेदवादिनोऽपीत्याह—

**व्यक्तिद्वारो यथा जातेः,**

यथा च व्यक्तावुत्पन्नायामभिव्यज्यमाना जातिमुत्पन्नां मन्यन्ते तथा कर्मापीत्याह—

**व्यक्तेर्वा जनने यथा ॥ ४०३ ॥**

---

१. अभिजायन्ते—३ पु० ।
२. कथ्यते—३ पु० ।
३. प्रयत्नविभागतः—३ पु० ।

कीदृशी पुनः कर्मणोऽभिव्यक्तिः ? द्रव्यसम्बन्धनमिति ब्रूमः । क्रिया हि जातिवदेव यस्मिन् द्रव्ये तादात्म्य समवायं वा सम्बन्ध प्रतिपद्यते तत्रैव गृह्यते । अतः सम्बन्धनमेवाभिव्यक्ति, तत्कारण चाभिव्यञ्जकम् । यच्च कर्मणो विनाशक सयोगविभागाख्य कार्यं तदपि कर्मणो द्रव्यसम्बन्धमेव विनाशयति, नास्य स्वरूपमिति ॥ ४०३ ॥

बुद्धेरिदानी नित्यत्वमुपपादयति पादत्रयेण—

**बुद्धीनामपि चैतन्यस्वाभाव्यात् पुरुषस्य नः ।**
**नित्यत्वमेकता चेष्टा,**

बुद्धि. चैतन्यं चितिशक्तिः पुंस स्वाभाविकत्वान्नित्यमेक चेति ।

कथं तर्हि गोबुद्धिरश्वबुद्धिरिति भेदः ? अत्राह—

**भेदस्तु विषयाश्रयः ॥ ४०४ ॥**

विषयशब्देन विषयभेदेनानुमीयमानभेदश्चितिशक्तिकार्यभूत. पुंसो ज्ञानाख्यो विकार उच्यते, तस्यानुमेयत्वं शून्यवादे वर्णितम् । तद्भेदाद् भेदावभास इति ॥ ४०४ ॥

यदि नित्यचैतन्यः पुमान्, किमिति सर्वं सर्वदा न जानाति, किमस्येन्द्रियादिभि. ? अत आह दीनन्तेन—

**स्वरूपेण यथा वह्निर्नित्यं दहनकर्मकः ।**
**उपनीतं दहत्यर्थं दाह्यं नान्यत्र चान्यथा ॥ ४०५ ॥**
**यथा वा दर्पण स्वच्छो यथा च स्फटिकोऽमल. ।**
**यत्संनिधीयते योग्य तच्छायां प्रतिपद्यते ॥ ४०६ ॥**
**तथैव नित्यचैतन्याः पुमांसो देहवृत्तयः ।**
**गृह्णन्ति करणानीतान् रूपादीन्,**

न हि शक्तिरस्तीत्येतावता सर्वदा कार्यं कर्त्तव्यम्, शक्तस्यापि सहकारिसन्निध्यपेक्षावलम्बनेन कार्यकरणक्रमापपत्तेरिति ।

ननु भाष्ये बुद्धेरेव नित्यत्वमुच्यते न तच्छक्ते. ? अत्राह—

**धीरसौ मता ॥ ४०७ ॥**

चैतन्यमेव भाष्ये बुद्धिशब्देनोच्यत इति ॥ ४०७ ॥

ननु विषयान्तरसञ्चारे पूर्वा मतिर्भङ्गिनी गम्यते, तत्र कथं नित्यत्वम् ? अत आह—

**तेनोपनेतृसम्बन्धभङ्गित्वाद् भङ्गिनी मतिः[1] ।**

विषयोपनेतॄणां चक्षुरादिकरणानां यो व्यापारस्तद्भङ्गात् तन्निमित्तोऽप्यात्मविकारो भज्यत इति भङ्गबुद्धिर्न पुंचैतन्यभङ्गादिति ।

---

१. मतः—का० ।

अत्रैव दृष्टान्तमाह—

**न नित्यं दाहको वह्निर्दाह्यासन्निधिना यथा ॥ ४०८ ॥**

न हि तावता दहनशक्तिरनित्येति ॥ ४०८ ॥

ननु प्रत्यभिज्ञैवासिद्धा, न घटबुद्धौ परबुद्धिः प्रत्यभिज्ञायते ? अत आह—

**तत्र बोधात्मकत्वेन प्रत्यभिज्ञायते मतिः ।**

विषयोपरागावधीरणेऽस्त्येव प्रत्यभिज्ञेति ।

भेदावभासस्तु विषयकृत इति उक्तमेवेत्याह—

**घटहस्त्यादिबुद्धित्वं तद्भेदाल्लोकसम्मतम् ॥ ४०९ ॥**

यदि विषयभेदेऽपि बोधरूपं प्रत्यभिज्ञायते किमिति सैवेयं बुद्धिरिति न तद्वृत्तेन परामृश्यते ? अत्राह—

**सैवेति नोच्यते बुद्धिरर्थभेदानुसारिभिः ।**

विषयभेदेनोद्भूतेन सतोऽप्यभेदस्याविभागात् पुरुषाभेदाभिप्राया नैवं व्यपदिशन्तीति, तदभिभवेऽस्त्येव प्रत्यभिज्ञेत्याह—

**न चास्याः[1] प्रत्यभिज्ञानमर्थभेदेऽनुपाश्रिते ॥ ४१० ॥**

तदेव प्रत्यक्षद्रव्याश्रितकर्माभिप्राय चैतन्याभिप्राय च "अथ प्रत्यक्षे नित्ये एव" इति भाष्यमित्याह—

**एतन्मनसि कृत्वाऽऽह नित्ये एवेति भाष्यकृत् ।**

ननु चैतन्यस्याप्रत्यक्षत्वात् कथ प्रत्यक्षवचनम् ? सत्यम् चितिशक्तिरप्रत्यक्षा, अत्र तु चैतन्यस्वभावः प्रमातैव लक्षणया बुद्धिशब्देनोच्यते, स च प्रत्यक्षो नित्यश्च, तस्य ज्ञानाख्यो विकारोऽप्रत्यक्षोऽनित्यश्चेति, तदभिप्राय एवंभाष्यम् । तदेवं भाष्यार्थ —यत् पूर्वपक्षवादिना बुद्धिकर्मणोर्नित्यत्वप्रसञ्जन कृतम्, तद्यदि ज्ञानरूपविकाराभिप्रायम् ? तदयुक्तम्, तस्याप्रत्यक्षत्वात्, अथ चितिशक्तिस्वभावपुरुषाभिप्रायम् ? स नित्य एवेति ।

धीकर्मप्रसङ्गेनेदानीं शुक्लादिगुणानामपि नित्यत्वैकत्वे दर्शयति—

**एतयैव दिशा वाच्या शुक्लादेरपि नित्यता ॥ ४११ ॥**

कथ तर्हि 'अयमपि शुक्लोऽयमपि' इति भेदबुद्धिः ? भिन्नाश्रयससर्गादित्याह—

**संसर्गमात्रभेदेन[2] स्यात् तत्रापि हि भेदधीः ।**

स्वरूपाभेदे च तत एव प्रत्यभिज्ञोत्पत्तेर्न गुणत्वरूपत्वातिरेकेण शुक्लत्वादिजातिः कल्पनीयेत्याह—

**स्वरूपं तु तदेवेति को जातिं कथयिष्यति[3] ॥ ४१२ ॥**

योऽपि 'अयमतिशुक्ल, अयमीषच्छुक्लः' इति भेद, सोऽपि संसर्गभेदादेवेत्याह—

---

१ चास्य—मु० पा० ।   २. भेदमात्रेण—३ पु. ।   ३. कल्पयिष्यति—३ पु० ।

**क्वचिद् द्रव्येण संसर्गः क्वचिन्न स्याद् गुणान्तरैः ।**

केवलद्रव्यससर्गेऽतिशुक्लम्, नीलादिससर्गे त्वीषदिति ।

यदपि धूसरस्वच्छभासुरेषु पार्थिवाप्यतैजसेषु द्रव्येषु शुक्लस्य वैलक्षण्यम्, तदपि तेनैव भिन्नजातीयद्रव्यससर्गभेदेनेत्याह--

**शुक्लादेस्तेन भिन्नत्वं सिद्धं भासुरधूसरैः ॥ ४१३ ॥**

सत्यपि च भास्वराद्यवान्तरभेदे शुक्लस्य प्रतिद्रव्य तद्व्यक्तिभेदो जातिभेदश्च निष्प्रमाणकः, न हि पटद्वये शुक्लगुणस्याश्रयभेदमन्तरेण स्वरूपभेदो मृग्यते, शाबलेयादिष्विव गोत्वस्येति ॥ ४१३ ॥

शङ्कते--

**ज्वालादेः क्षणिकत्वेऽपि प्रत्यभिज्ञेति चेत्,**

परिहरति--

**न तत् ।**

कारणमाह--

**तत्रापि प्रत्यभिज्ञेयं सामान्यं नित्यमेव नः ॥ ४१४ ॥**

सामान्यविषया प्रत्यभिज्ञा भवतोपन्यस्ता, विशेषविषया वा ? सामान्यं तावद्भिन्नवर्त्तिनीष्वपि ज्वालास्वनपायित्वान्नित्यमेवेति ॥ ४१४ ॥

यत्र तु व्यक्त्यशे केनचित् प्रकारेण भेदबुद्धिः, तत्रैव प्रत्यभिज्ञा बाध्यते, शब्दे तु नैवं बाधकमस्तीत्याह—

**भेदबुद्धिस्तु यत्रांशे स्यात् केनचिदुपाधिना ।**

**तत्र नः[1] प्रत्यभिज्ञानं भेदबुद्ध्यैव वारितम् ॥ ४१५ ॥**

कुतः पुनर्ज्वालाभेदबुद्धिरवयवविशरणेन पूर्वस्यावयविनो विनष्टत्वात्, न ह्यविशीर्णेषु ज्वालावयवेषु प्रभा सम्भवतीति तद्विशरण कल्प्यते, विशीर्णाऽवयवस्य क्षणेऽवश्यं ज्वालान्तरेणोत्पत्तव्यमिति भेदसिद्धिः । प्रत्यभिज्ञा तु सादृश्यादपि सम्भवति । तथा च यत्र पूर्वज्वालां निर्वाप्य ज्वालान्तरमारोप्यते तत्रापि नाशोत्पादानभिज्ञानाना पात्रैक्ये सति प्रत्यभिज्ञा दृश्यते, ततस्तद्वदत्रापि सादृश्यनिबन्धनैव प्रत्यभिज्ञेति गम्यते, शब्दे तु नैवं भेदे प्रमाणमनन्यथासिद्धमस्तीति स्वरूपैक्यनिबन्धनैव प्रत्यभिज्ञेति वैषम्यमिति ॥ ४१५ ॥

एवमुपपादिते शब्दनिबन्धत्वे प्रयोगानारचयति षड्भिः—

**ह्यस्तनोच्चारितस्तस्माद् गोशब्दोऽद्यापि विद्यते ।**

**गोशब्दज्ञानगम्यत्वाद् यथोक्तोऽद्यैष[2] गौरिति ॥ ४१६ ॥**

**ह्यो वासीदेष गोशब्दः पूर्वोक्तेनैव हेतुना ।**

**यद्वा गोत्वाभिधायित्वं वाच्यो हेतुर्द्वयोरपि ॥ ४१७ ॥**

---

१. तत्—२ पु० । २. अद्यैव—का० ।

**गोशब्दबुद्धचा ह्यस्तन्या गोशब्दोऽयं प्रकाशितः।**
**गोशब्दविषयत्वेन यथैवाद्यप्रसूतया ॥ ४१८ ॥**
**इयं वा तं[1] विजानाति तद्धेतोः पूर्वबुद्धिवत्।**
**उभे वाप्येकविषये भवेतामेकबुद्धिवत् ॥ ४१९ ॥**
**देशकालादिभिन्ना वा समस्ता गोत्वबुद्धयः।**
**एकगोशब्दजन्याः स्युर्गोधीत्वादेकबुद्धिवत् ॥ ४२० ॥**
**गोशब्दबुद्धयोऽप्येवम् एकगोशब्दगोचराः।**
**गोशब्दविषयत्वेन कल्प्यन्तामेकबुद्धिवत्[2] ॥ ४२१ ॥**

**देशकालादिभिन्ना वा** इति। अत्र गोशब्दोत्था गोत्वबुद्धयो धर्मिण्यो गोशब्दोत्थगोधीत्वं च हेतुरिति ॥ ४१६-४२१ ॥

न च गोशब्दत्वेनैकत्वात्सिद्धसाधनं वाच्यम्, तस्य स्फोटे निषिद्धत्वादित्याह—

**गोशब्दत्वनिषेधाच्च नात्र स्यात् सिद्धसाध्यता।**

यस्त्वेवमेव घटादेरपि नित्यत्वमेकत्वं च साधयति—ह्यस्तनो घटोऽद्याप्यनुवर्त्तते घटबुद्धिगम्यत्वादद्यतनघटवदिति, त प्रति जात्यंशेन वक्तव्यमित्याह—

**घटादेरेकतापत्तौ जात्येष्टं सिद्धसाधनम् ॥ ४२२ ॥**

व्यक्त्यंशकत्व सर्वप्रमाणविरुद्ध सर्वव्यक्तिभेदस्य तैस्तैः प्रमाणैर्दर्शनादित्याह—

**व्यक्तीनामेकतापत्तिं कुर्याच्चेदनया दिशा।**
**तस्य दृष्टविरुद्धत्वं वाच्यं सर्वप्रमाणकम् ॥ ४२३ ॥**

"येऽपि सर्वेषा भावाना प्रतिक्षण विनाशमिच्छन्ति तेऽपि शब्देन शक्नुवन्ति वदितुम्, अन्ते हि क्षयदर्शनात् ते मन्यन्ते, न च शब्दस्यान्तो नापि क्षयो लक्ष्यते" ( शा० भा० पृ १०७ ) इति भाष्यार्थमाह—

**येऽपि स्थूलविनाशानामन्यथानुपपत्तितः।**
**कल्पयन्त्यन्तरा सूक्ष्मं विनाशित्वं प्रतिक्षणम् ॥ ४२४ ॥**
**तेऽपि क्षणिकनाशित्वादधिकां स्थूलनाशिताम्।**
**शब्दानामविजानन्तो न शक्ता नाशिसाधने ॥ ४२५ ॥**

येन पथा स्थूलनाशेन सूक्ष्मविनाशसिद्धिस्तथा दर्शितम्—"विनाशस्य विनाशस्तु नास्ति तस्मादकृत्रिम" ( श्लो० वा० श० २५ ) इत्यत्रेति ॥ ४२५ ॥

किमिदानी स्थूलनाशिना घटादीनामिष्टमेव क्षणिकत्वम् ? नेत्याह—

**क्षणभङ्गो घटादीनां वार्यस्तैरेव साधनैः।**

'ह्यस्तनो घटोऽद्याप्यस्ति घटत्वाद् अद्यतनघटवत्'—इत्यादिभि. शब्दोक्तैरेव साधनैः क्षणभङ्गनिवारणमिति।

---

१. तत्—३ पु०। २. कल्प्यताम्—मु० पा०।

तथा प्रत्यभिज्ञयापि तन्निवारणमित्याह—

**तथैव प्रत्यभिज्ञानाद्,**

ननु मुसलाभिहतेन घटेन हेतुरनैकान्तिक , तस्यापि त्ववस्थानसाधने दृष्ट-विरोध स्यात् ? अत आह—

**यावद् दृष्टं न बाधते ॥ ४२६ ॥**

ततश्चैवं वक्तव्यम्—ह्यस्तनो घटोऽद्याप्यस्ति, निष्प्रयत्नत्वेऽवयवविश्लेषाभावे च सति अद्ययावत् स्थूलनाशानाक्रान्तत्वाद्, दृश्यमानघटवदिति ॥ ४२६ ॥

यस्तु सत्त्वात् ज्वालादिवत् क्षणिकत्व साधयति तस्य प्रत्यभिज्ञाप्रत्यक्षविरोध. पूर्वोक्तेनानुमानेन चेत्याह—

**साधनं तु ब्रुवाणस्य दीपज्वालादिदर्शनात् ।**
**पूर्वोक्तेनैव मार्गेण प्रत्यक्षादिविरुद्धता ॥ ४२७ ॥**

निरस्तश्चायं क्षणभङ्ग. शास्त्रदीपिकायामिति ॥ ४२७ ॥

यदपि सौगतैः स्थायिनोऽर्थक्रियाकारित्व न सम्भवतीत्युक्तम्, तदपि विपरीत-मित्याह—

**पूर्वक्षणविनाशे च कल्प्यमाने निरन्वये ।**
**उत्तरस्यानिमित्तत्वाद् उत्पत्तिर्नोपपद्यते ॥ ४२८ ॥**

सर्वक्षणिकत्वे हि पूर्वस्मिन् घटक्षणे निरन्वयनष्टे परस्य निरुपादानत्वादुत्प-त्तिर्न स्यादिति ॥ ४२८ ॥

कथ निरन्वयविनष्टस्यानुपादनत्वम्, तन्त्वादयो हि निरन्वयविनष्टा. पटादेरु-पादानमस्मन्मते ? अत्राह—

**अत्यन्तासन्नसौ तस्मिन्न तावद् व्यापृतिक्षमः ।**
**स्वयं चाभावदष्टत्वात्[1] कस्मिन् काले करिष्यते ॥ ४२९ ॥**

पूर्वस्यात्यन्तानुत्पन्नस्य न तावदुत्तरोत्पत्तिर्व्याप्रियते, नानुत्पन्नो विनष्टो वा, तदन्तरक्षणे च तस्य नाशः परस्य चोत्पाद इत्युच्येत, अत्राह पादत्रयेण—

**नाशोत्पादसमत्वेऽपि नैरपेक्ष्यात् परस्परम् ।**
**न कार्यकारणत्वे स्तः,**

कथं नैरपेक्ष्यम् ? इत्याह—

**तद्व्यापाराननुग्रहात् ॥ ४३० ॥**

न हि नाशोत्पादसमत्वे पूर्वव्यापारानुग्राह्यत्वमुत्तरस्येति ॥ ४३० ॥

एतदेव दर्शयति—

**न ह्यलब्धात्मकं वस्तु पराङ्गत्वाय कल्पते ।**
**न विनष्टं, न च स्थानं तस्य कार्यकृतिक्षमम् ॥ ४३१ ॥**

---

१. ०दृष्टत्वात्—का० ।

लब्धात्मकस्य ह्यात्मलाभोत्तरकालेऽङ्गत्वं परोत्पत्तौ, न त्वात्मलाभकाले एव। कारणाधीना हि क्रिया कथ कारणेन तुल्या स्यात्। उत्तरकाले च विनष्टत्वान्न व्यापार, व्यापारक्षणस्थानाभ्युपगमे वा क्षणिकत्वहानिरिति ॥ ४३१ ॥

न व्यापाराधीन कारणत्वम्, कि तु पूर्वक्षणवर्त्तित्वमिति चेत्? न; अतिप्रसङ्गादित्याह—

**जायमानं च गन्धादि घटरूपे विनश्यति।**
**तत्कार्यं नेष्यते तद्वत् तथा रूपान्तराण्यपि ॥ ४३२ ॥**

उपसंहरति—

**तस्मात् प्राक्कार्यनिष्पत्तेर्व्यापारो यत्र[1] दृश्यते।**
**तदेव कारणं तस्य न त्वानन्तर्यमात्रकम्[2] ॥ ४३३ ॥**

कर्मादीना तु सयोगादिकार्ये जन्मैव व्यापार इत्यवगन्तव्यम्। तस्य तदौपयिकत्वं पूर्वापरीभावनियमादगवम्यते, पूर्वक्षणजन्मनस्तूत्तरोत्पत्त्यौपयिकत्वमप्रमाणकम्। पौर्वापर्यमात्रात्तु तदौपयिकत्वमतिप्रसङ्गि। तन्नियमस्तु भवता न सम्भवति, भूयोदर्शनापेक्षित्वात्। सर्वक्षणिकत्वे च न कस्यचिदपि केनचित् सामान्यतो विशेषतो वा भूय. साहित्य शक्यते द्रष्टुमिति न कार्यकारणतेति ॥ ४३३ ॥

यदि न क्षणिकस्य कार्यारम्भकत्वम्, कथ तर्हि ज्वाला प्रभामारभते? अत्राह—

**ज्वालादेरपि नाशित्वं नैव सिद्धं प्रतिक्षणम्।**

न ज्वालया. क्षणिकत्वम्, त्रिचतुरक्षणावस्थायित्वादिति।

नेयं[3] निरन्वयविनाशिनी, यतो निरुपादाना प्रभा न निष्पत्तिं लभेत[4]। सा ह्यवयवात्मना प्रभायामप्यनुवर्त्तत एवेत्याह—

**लघवोऽवयवास्तत्र यान्ति देशान्तरं लघु ॥ ४३४ ॥**

लघु शीघ्रमित्यर्थ. ॥ ४३४ ॥

एतदेव दर्शयति सार्द्धेन—

**प्रभूतं वर्त्तिदेशे हि तेजस्तिष्ठति पिण्डितम्।**
**तत्र यावद् व्रजत्यूर्ध्वं तावज्ज्वालेति गम्यते ॥ ४३५ ॥**
**ततोऽपि यदतिक्रम्य याति तत् स्यात् प्रभात्मकम्।**

यद्यविनष्टमेव तेजो ज्वालातो निर्गत्य प्रभामारभते, तत. प्रभातोऽपि परस्तादविनष्टमेव निर्गच्छेत्, न च तथा दृश्यते? तत्राह—

---

१. यस्य—का०। २. ०मात्रतः—का०।
३. नन्वियं—मु० पा०। ४. लभते—मु० पा०।

**ततः परं तु यद् याति तत् सौक्ष्म्यान्नावधार्यते ॥ ४३६ ॥**

परतोऽपि गच्छत्येव न विनश्यति, अतिसूक्ष्मत्वान्न दृश्यत इति ॥ ४३६ ॥

ननु भवत्वविनष्टम्, तथापि किमिति गच्छति, तत्रैवावतिष्ठताम् ? अत्राह—

**उत्तरावयवै रुद्धे मार्गे पूर्वे न यान्ति च ।**
**यथोत्तरे विमुञ्चन्ति पूर्वे यान्ति तथा तथा ॥ ४३७ ॥**

उत्तरशब्देनोर्ध्वगतानां पूर्वशब्देनाधोदेशादागच्छतामभिधानमिति ॥ ४३७ ॥

ननु विरलानि प्रभाया तेजांसि, तेषु तिष्ठत्स्वप्युत्तरेषां तत्र संक्रान्तिः सम्भवत्येव, अत. कथं निर्गमनकल्पना ? अत आह—

**संक्रान्तावपि तेनैषां तृणादौ वृद्ध्यसम्भवः ।**

सत्य सम्भवति, किन्तु स्थितेषु पूर्वेषु उत्तरेषु वा गतेषु सान्द्रतेजोज्वालेव तृणादिकं दहेत्, न च स्थितिरपि सम्भवति, गत्वरत्वात् तेजसामिति ।

तेजोवदेव ध्वनीनामपि शीघ्रगत्वात् पुन: पुनरुच्चार्यमाणोऽपि हि शब्दे वृद्ध्यनवभासः पूर्वध्वनिषु श्रोत्रान्निर्गतेषु उत्तरेषामागमादिति प्रसङ्गाद् दर्शयति—

**शब्दे वृद्ध्याद्यभावोऽपि ध्वनिशैघ्र्येण जायते ॥ ४३८ ॥**

ननु शरीरस्य क्षणिकस्यापि प्रत्यभिज्ञा दृष्टा, तस्य हि बाल्ययौवनाद्यवस्थास्तावदागमापायिन्यो दृश्यन्ते, ताश्च शरीराभिन्ना', भेदे हि घटादिव पटः शरीरात् पृथगुपलभ्येरन्, अभेदेऽपि तद्वदेव शरीरस्यापि प्रतिक्षणमुत्पत्तिविनाशधर्मिणः स्थित्यनुपपत्ते क्षणिकत्वम् ? अत आह—

**शरीरे यौवनाद्याप्तिः परिणामाच्च सेत्स्यति ।**

परिणाममात्रेणापि यौवनाद्यवस्थाभेदसम्भवान्न स्वरूपभेद इति ।

यस्त्ववस्थाभेदादेव तद्वतोऽपि भेदमातिष्ठते, तस्य प्रत्यभिज्ञाविरोध इत्याह—

**तथा हि सन्निवेशादि प्रत्यभिज्ञायते जनैः ॥ ४३९ ॥**

यत्तु 'अवस्थातद्वतोरभेदादवस्थावदेव तद्वतोऽपि नाशोत्पादौ' इत्युक्तम्, तत्राह—

**तत्रान्यानन्यवृत्तीनाम् अनेकान्तस्वभावतः ।**
**उत्पत्तिस्थितिनाशानां[1] विरोधः प्राङ्निराकृतः ॥ ४४० ॥**

स्यादेवम्, यद्येकान्ततोऽवस्थातद्वतोरभेदः स्यात्, अनेकान्तस्वभावत्वे च अन्यानन्यभूतयोरवस्थातद्वतोर्वर्तमानानाम् उत्पत्ति-स्थिति-विनाशाना को विरोध इति ॥ ४४० ॥

यत्तु क्षणभङ्गवादिभिरुक्तम्—सन्तानैकत्वादेव घटादिषु प्रत्यभिज्ञावकल्पत इति, तत्राह—

---

१ ०स्थान०—३ पु० ।

**एकसन्तानसम्बन्धात् प्रत्यभिज्ञानकल्पना ।**
**ज्ञानसन्ततिमार्गेण वार्यान्यत्वाद्यसम्भवात् ॥ ४४१ ॥**

न हि सन्तानस्य सन्तानिभ्योऽन्यत्वमनन्यत्व वा सम्भवति इत्युक्तमिति ॥ ४४१ ॥

**"अनपेक्षत्वात्"** ( जै० सू० २१ ) इति सूत्रं व्याचष्टे—

**एवं स्थितस्य शब्दस्य श्रुतिकालात् क्षणान्तरे ।**
**सम्भाव्यते विनाशित्वं न भूयोऽन्येन हेतुना ॥ ४४२ ॥**

यदा प्रत्यभिज्ञया शब्दस्य श्रवणकालस्याभावान्नित्यत्वमतिक्रम्य कालान्तरेऽप्यवस्थानं साधितम्, तदा स्वारसिके नाशे निरस्ते हेत्वन्तरस्य नाशकस्याभावान्नित्यत्वमेव सिद्धं भवतीति ॥ ४४२ ॥

हेत्वन्तराभावमेव दर्शयति—

**यथा शस्त्रादिभिर्भेदाज्जरया वा पटादयः[1] ।**
**नङ्क्ष्यन्तीत्यवगम्यन्ते नैवं शब्देऽस्ति[2] कारणम् ॥ ४४३ ॥**

ननु यदा वायवीयोऽवयविद्रव्यविशेषः शब्दः, तदास्य पटादिवदेवावयवसंयोगविशेषविनाशात् सम्भवत्येव विनाश ?—इत्याशङ्कानिराकरणार्थं सूत्रम्—**"प्रख्याभावाच्च योगस्य"** ( जै० सू० १. १. २२ ) इति । तद् व्याचष्टे—

**शब्दो यथा पौद्गलिको निषिद्धः,**
**स्याद् वायवीयस्य स एव मार्गः ।**

**पौद्गलिकः**, पुद्गदलाख्यवर्णपरमाण्वारब्ध., स यथा निरस्तः, तेनैव न्यायेन शब्दस्यावयवयोगो निराकर्तव्य इति ।

अधिकरणार्थमुपसहरति—

**तस्मादनिर्धारितहेतुमार्गः**
**सर्वत्र साक्षाद् भवतीति नित्यः ॥ ४४४ ॥**

इति शब्दनित्यताधिकरणम्

यतोऽस्य हेतुर्नास्त्युच्चारणस्याभिव्यञ्जकत्वात्, यतश्च भागा न सन्ति, यतश्च सर्वदेशे साक्षाद्भावादपरोक्षीभावात् सर्वगत, तस्माद् व्योमादिवन्नित्य इति ॥ ४४४ ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे शब्दनित्यताधिकरणं समाप्तम्

---

१. घटादयः—३ पु० ।
२. शब्दोऽस्ति—३ पु० ।

## अथ वाक्याधिकरणम्

**"उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात्"** ( जै० सू० १.१.२४ ) इति पूर्वपक्षसूत्रम् ।

अस्यार्थ.—उत्पत्तिरित्यौत्पत्तिकं ब्रूमः, शब्दलक्षणया यथा द्यावोरिति द्यावापृथिव्योरिति वक्ष्यते द्यावोस्तथेति चेदित्यत्र चकारोऽप्यर्थे । तदयमर्थो भवति–प्रकृताना शब्दार्थसम्बन्धानामौत्पत्तिकत्वेऽपि वेदवाक्यार्थस्य धर्मस्य अवचना = अप्रतिपादकाः, अप्रमाणमिति यावत्, वर्णपदादीना प्रत्येकसमुदायविकल्पिताना वाक्यार्थप्रत्ययं प्रति हेतुभावानुपपत्ते. । न च पदार्थानां तन्निमित्तभावः, असम्बन्धात् । तदिदमुक्तम्–**अर्थस्यातन्निमित्तत्वादि**ति । तन्त्रेण चेदमर्थपदं वाक्यार्थपदार्थयो पूर्वापराभ्या सम्बन्धस्य व्याख्येयम् । एवमेवार्थमस्य सूत्रस्य दर्शयितुं भाष्यम्—"यद्यप्यौत्पत्तिको नित्य. शब्द. सम्बन्धश्च तथापि न चोदनालक्षणोऽर्थो धर्म." ( शा० भा० पृ ११० ) इति ।

अस्यार्थ –यद्यप्याकृतिग्रन्थशब्दाधिकरणसम्बन्धपरिहारेपु पदार्थपदसम्बन्धानां नित्यत्वमुक्तम्, तथापि यद्वाक्यार्थे वेदाना प्रामाण्यमभिहितं तन्न सिद्ध्यति, वक्ष्यमाणप्रकारेण तत्प्रतिपत्तौ मूलाभावात्, अनिमित्तायाश्च प्रतीतेरुत्पन्नयापि प्रतिभावदप्रमाण्यात् । अत. सोऽय शब्दनित्यत्वप्रतिपादनप्रयासोऽनर्थक एव ।

सोऽय मूलाभावात् पुनराक्षेपः ।

ननु न पदार्थनित्यत्वं क्वचित् साधितम्, **आकृतिग्रन्थे** हि सद्भावमात्रमाकृतेरुक्तं न नित्यता, **भाष्यकारे**णापि 'यद्यप्यौत्पत्तिक शब्द. सम्बन्धश्च' इत्येतावदेवोक्तम्, न पदार्थनित्यता कीर्त्तिता, अत कि पदार्थनित्यतानुभाषणेन ? अत्रोच्यते–शब्दनित्यताप्रतिपादनन्यायेनाकृतेरपि नित्यत्वं प्रतिपादितमेव, प्रत्यभिज्ञानेन हि शब्दस्य नित्यतोक्ता, तच्चेदमाकृतेरपि समानमेव । भवति हि दृष्टैकव्यक्तेरपरदर्शने स एवायमिति निश्चयः । अतो यदैव प्रत्यक्षसामर्थ्येनाकृतिः साधिता तदैव तद्बलेनास्या नित्यत्वमुक्तमेवेति सूक्तम्—'पदार्थपदसम्बन्धनित्यत्वे साधितोऽपि वः' इति ।

**"उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात्"** इति पूर्वपक्षसूत्रम्, तद् व्याचष्टे—

**पदार्थपदसम्बन्धनित्यत्वे साधितेऽपि वः ।**
**नैव वेदप्रमाणत्वं वाक्यार्थं प्रति सिध्यति ॥ १ ॥**

यागादेर्हि स्वर्गसाधनत्वं धर्मः । स च वाक्यार्थो नैकैकेन पदेनोच्यते । न च वाक्यार्थे सम्बन्धग्रहणं कस्यचिदस्ति । सम्बन्धग्रहणानपेक्षे च तत्प्रतिपादने प्रथमश्रवणेऽपि प्रतीतिः स्याद् । अतो निर्मूलो वाक्यार्थप्रत्ययः, सामयिको वेत्यप्रामाण्यं धर्मे वेदस्येति व्यर्थमेव पदपदार्थसम्बन्धनित्यत्वप्रतिपादनमिति ॥ १ ॥

निर्मूलत्वमेव दर्शयितुं यावत्सम्भव मूलानि विकल्प्य निराकरोति सार्द्धद्वयेन—

**पदानि गमयेयुस्तं प्रत्येकं संहतानि वा।**
**व्यतिरिक्तोऽथ वा शब्दः, पदार्था वापि पूर्ववत् ॥ २ ॥**
**तत् प्रमाणं स्मृतीनां च तथा सम्बन्धतद्धियाम्।**
**प्रत्येकं संहतत्वेन तद्वदेव विकल्पनम् ॥ ३ ॥**
**अदृष्टसङ्गतित्वेन सर्वेषामनिमित्तता।**

नन्वदृष्टसङ्गतीन्यपि चक्षुरादीनि रूपादि बोधयन्त्येव ? अत आह—

**अन्यः प्रतीतो न ह्यन्यं गमयिष्यत्यसङ्गतम् ॥ ४ ॥**

चक्षुरादि हि स्वसत्तामात्रेण बोधकम्, यस्तु प्रतीतिः सन्नर्थान्तर बोधयति धूमादिर्नास्यासङ्गतस्य बोधकत्वमिति ॥ ४ ॥

अस्त्येव वाक्यार्थेन पदादीना सम्बन्ध इति चेत् ? तत्राह—

**अप्रतीतश्च सम्बन्धो नाप्यसत्त्वाद् विशिष्यते।**

प्रतीतसम्बन्धस्यैव हि धूमादेरग्न्यादिबोधकत्व दृष्टमिति।

निष्प्रमाणक चास्याप्रतीतस्य सम्बन्धस्य सत्त्वमित्याह—

**न चाविज्ञायमानस्य सद्भावोऽपि[1] प्रमाणवान् ॥ ५ ॥**

ननु "चोदनालक्षणोऽर्थो धर्मः" (जै० सू० १. १. २) इत्युक्तम्, चोदना च वाक्यमेव, अतो वाक्यमेव वाक्यार्थप्रतीतेर्मूलमिति कि मूलान्तरैर्निराकृतै ? अत आह—

**वाक्यवाक्यार्थयोर्नापि वस्तुत्वमुपपद्यते।**
**स्पष्टं पदतदर्थाभ्यामन्यानन्यानिरूपणात् ॥ ६ ॥**

सत्त्वेऽपि तावदगृहीतसम्बन्धत्वान्न वाक्य वाक्यार्थप्रतिपत्तेर्निमित्तम्, सत्तापि तयोर्नास्त्येवेति ॥ ६ ॥

तत्राव्यतिरेके तन्मात्रापातात् स्पष्ट दूषणम्। व्यतिरेकं दूषयति—

**न तावदवगम्येते कैश्चित् तद्व्यतिरेकतः।**

एवं च मूलाभावात् प्रमेयाभावाच्च दूरभ्रष्टं वाक्यार्थावगतेः प्रामाण्यमिति।

नन्वस्त्येव व्यतिरेकः, पदसमुदायो हि वाक्यम्, पदार्थसमुदायश्च वाक्यार्थः ? अत आह—

**यौगपद्यागृहीतेश्च समुदायौ न सिध्यतः ॥ ७ ॥**

युगपद्भाविनामेव वृक्षादीना समुदाय इति ॥ ७ ॥

---

१. अत्र—३ पु०।

नन्वसत्यपि ग्रहणयौगपद्ये सत्तायौगपद्यादेव समुदायो भविष्यति? अत आह—

**न सत्तायौगपद्यस्य व्यवहाराङ्गतेष्यते[1] ।**

कथम्? इत्याह—

**सर्वनित्यतया मा भूद् विशेषानवधारणम् ॥ ८ ॥**

सर्वाणि पदानि नित्यत्वादेकवाक्यता गच्छेयु., तथा पदार्था वाक्यार्थताम्, न चैवमस्ति, अवान्तरवाक्यवाक्यार्थव्यवहारश्च न सत्तायौगपद्येन सिद्ध्येदिति ।

तेन ज्ञानयौगपद्यमेव वक्तव्यम्, न तु तदस्तीत्याह—

**ज्ञानानां क्रमवर्त्तित्वाद् यौगपद्येऽप्यसम्भवः ।**

सत्तायौगपद्ये सत्यपि ज्ञानाना न सम्भवोऽसाहित्यमिति ।

तत्सिद्ध न पदार्थसमुदायो वाक्यार्थ इत्याह—

**तेन तत्समुदायोऽपि न वाक्यार्थः प्रतीयते ॥ ९ ॥**

किञ्च, न समुदायमात्र वाक्य वाक्यार्थो वा; गौरश्च पुरुषो हस्तीत्यत्रापि प्रसङ्गात् । तेन सम्बद्धानि पदानि पदानां वा सम्बन्धो वाक्यम्, सम्बद्धाश्च पदार्था. पदार्थसम्बन्धो वा वाक्यार्थ इति वक्तव्यम्, न च सम्बन्धः सम्भवतीत्याह सार्द्धेन—

**सम्बन्धपूर्वकत्वं च वाक्यवाक्यार्थयोः स्थितम् ।**
**स्वतन्त्रेषु हि वाक्यत्वं कदाचिन्नोपलक्ष्यते[2] ॥ १० ॥**
**सम्बन्धश्चानपेक्षत्वात् कस्यचिन्नावकल्पते ।**

तत्र पदाना तावदनपेक्षता दर्शयति—

**पदानि तावद् वर्णा वा स्वरूपैर्न कदाचन ॥ ११ ॥**
**अनर्थकेष्वदृष्टत्वादपेक्षन्ते परस्परम् ।**

उपमार्थो वाशब्द । अर्थनिबन्धना हि पदानामपेक्षा, न स्वस्वरूपनिबन्धना; अनर्थकेष्वप्रतिपादितार्थेषु प्रथमश्रवणादौ वर्णवदपेक्षाभावादिति ।

इतश्चानपेक्षत्वमित्याह—

**न चानुच्चारितः शब्दः शक्नोत्यन्यमपेक्षितुम् ॥ १२ ॥**
**यौगपद्यं तु नास्त्येव न चोच्चार्य तिरोहितः ।**

भवतु वापेक्षा, सम्बन्धस्तु न कथञ्चिन्मिथः पदानामेकवाक्यताहेतुभूतोऽस्ति, यदर्थमपेक्षाङ्गीकरणमित्याह—

**अपेक्षणेऽपि सम्बन्धो नैव कश्चित् प्रतीयते ॥ १३ ॥**
**कार्यकारणसंयोगसमवायादिलक्षणः ।**

---

१. व्यवहारेण नेष्यते—का० ।    १. नोपलक्षितम्—३ पु० ।

नन्वस्त्येकार्थसमवायः ? अत आह—

**एकार्थसमवायेऽपि सर्वेषां व्योम्नि तुल्यता ॥ १४ ॥**

ततः किम् ? इत्यत आह—

**तत्रोक्तानुक्तयोग्यादेर्न विशेष्येण[1] सङ्गतिः ।**

एककार्यकरत्वं पदानां सम्बन्ध इति चेत् ? तद्विकल्प्य दूषयति द्वयेन—

**एककार्यनियोगोऽपि व्यङ्ग्ये जन्येऽथ वा भवेत् ॥ १५ ॥**

**व्यङ्ग्यास्तावत् पृथग्भूताः पदार्थाः पदभेदतः ।**

**तथा तद्विषयाप्येतैर्बुद्धिर्नैकापि जायते ॥ १६ ॥**

**या तु स्वविषया बुद्धिः प्रतिशब्दमसावपि ।**

ननु यद्यपि पदार्थज्ञानानि शब्दज्ञानानि च प्रतिपदार्थं प्रतिशब्दं च भिन्नानि, तथाप्यस्त्येवैक वाक्यज्ञानं वाक्यार्थज्ञानं वा पदार्थाना कार्यम् ? अत आह—

**न चैकज्ञानजननं भिन्नैस्तैः क्रमवर्त्तिभिः ॥ १७ ॥**

न हि सम्भवत्ययुगपद्भुवामेककार्यजननम् । किञ्च, असति पदातिरिक्ते वाक्ये कथ तज्ज्ञानमेषां कार्यं स्यात्, वाक्यार्थोऽप्येको निराकृत इति न तदपेक्षयाप्येषां सम्बन्ध इति ॥ १७ ॥

ननु प्रत्यस्तमितपदवर्णविभागमेकरूपमेव वाक्यम्, किमत्र पदानां सम्बन्धेन, तथा वाक्यार्थोऽपि निर्भाग एव ? अत आह—

**न चावयवशो बोधादैक्यं वाक्यतदर्थयोः ।**

गम्यते हि वाक्यवाक्यार्थयोरवयवशो भेद इति ।

यस्तु भागानपह्नुत्य निर्भागत्वमङ्गीकरोति, तस्य निष्पन्नानामवयवबुद्धीनामबाधितानां भ्रान्तित्व बाधितायाश्च निर्भागैकबुद्धेः प्रामाण्यमङ्गीकर्त्तव्यं स्यात्, न चैतद् युक्तमित्याह—

**न चावयवबुद्धीनां भ्रान्तित्वं बाधकाद् ऋते ॥ १८ ॥**

**एकनिर्भागताबुद्धेरसत्याः सत्यता कथम् ।**

एव तावदसम्बन्धात् पदाना वाक्यत्वं निराकृतम्, इदानीमसम्बन्धादेव वाक्यार्थमपि निराकरोति—

**अनुरागव्यवच्छेदौ बुद्धीनां न च सिद्ध्यतः ॥ १९ ॥**

**क्षणिकत्वादतो[2]ऽर्थत्वं नेष्टं संसर्गभेदयोः ।**

परस्परानुरागो व्यवच्छेदो वा सम्बन्धः स्यात्, सोऽपि पदानां पदार्थानां वा, न तावद् बुद्धीनाम्, क्षणिकत्वात् । अतो न संसर्गव्यवच्छेदयोः ससृष्टव्यवच्छिन्नानां वाक्यार्थत्वमिति ।

---

१. विशेष्येत—का० । २. ऋते—का० ।

एतदेव विवृणोति—

**यदि ध्रियेत गोबुद्धिः शुक्लबुद्धिजनिक्षणे ॥ २० ॥**
**ततोऽन्याभ्यो निवर्त्तेत संसृज्येत तथानया ।**

'गौः शुक्लः' इत्यत्र गोशब्दजनिता बुद्धि. सर्वगवीषु शुक्लकृष्णादिषु प्रसृता यदि शुक्लशब्दजनितशुक्लबुद्धिजनन यावद् ध्रियेत, ततस्तया ससृज्येत, अन्याभ्यो वा कृष्णादिव्यक्तिबुद्धिभ्यो व्यवच्छिद्येत, न तु सा ध्रियते, क्षणिकत्वादिति ।

ध्रियता वा, तथापि को बुद्ध्यो ससर्गः ? न तावत् संयोगः, द्रव्यधर्मत्वात्; नापि समवायः, द्वयोरप्यात्मसमवायित्वात् ? इत्याह—

**संसर्गो न च बुद्धीनां संयोगादेरसम्भवात् ॥ २१ ॥**

एकार्थसमवाय इति चेद् ? घटहस्त्यादिबुद्धीनामप्येकवाक्यार्थता स्यादित्याह—

**एकात्मवृत्तिता तुल्या घट[1]हस्त्यादिधीष्वपि ।**

निरन्तरोत्पत्ति. ससर्ग इति चेत् ? सापि घटहस्त्यादिबुद्धिपु तुल्येत्याह—

**तथा निरन्तरोत्पत्तिः,**

निराकाङ्क्षत्वादपि बुद्धीना पदवदेव न सम्बन्ध इत्याह—

**नाकाङ्क्षा वात्र शब्दवत् ॥ २२ ॥**

निराकाङ्क्षत्वमेव दर्शयति—

**क्षणिकाऽयुगपद्भावे का बुद्धिः काममपेक्षते[2] ।**

ननु सर्वाभि. पदार्थबुद्धिभिरन्ते परस्परविशिष्टसमस्तपदार्थविषया बुद्धिरेका जनयितव्यास्ति, तज्जननमेवासा मिथः संसर्ग, तज्जननाय चाकाङ्क्षापि भवत्येव ? अत आह—

**अत एव विशिष्टा धीस्ताभिर्नैकोपजन्यते[3] ॥ २३ ॥**
**यतः कल्प्येत सर्वासां संसर्गस्तदपेक्षया ।**

क्षणिकत्वादेवायौगपद्यादित्यर्थः ।

ननु निर्भासिते गोशुक्लादिबुद्धीनां मिथः ससर्गव्यवच्छेदौ, कथमपलपितु शक्येते ? अत आह—

**न च संसर्गविच्छेदनिर्भासोऽन्तः प्रकल्पितः ॥ २४ ॥**
**बाह्याभासोऽर्थरूपेण प्रमाणं स्वप्नवद् भवेत् ।**

यद्यप्यस्त्ययं निर्भासः, स तु स्वप्नादिपदप्रमाणम्, अन्तःकल्पितत्वात् स्वांशा-

---

१. हयेति पाठान्तरम् । २. अपेक्षताम्—३ पु० ।

३. नैवोपजन्यते—३ पु० ।

लम्बनत्वादित्यर्थः। यद्यपि संसर्गविच्छेदात्मको निर्भासोऽर्थरूपेण बाह्यवद् व्यतिरिक्तालम्बन इवावभासते, तथापि बुद्धीना ससर्गविच्छेदयोरसम्भवात् स्वात्मालम्बनोऽयं न संसर्गविच्छेदयोः प्रमाणमिति।

यद्वा नास्त्येवाय निर्भास इत्याह--

**न च कालत्रयोपेतबाह्यार्थासम्भवे सति॥ २५॥**

**प्रवर्ततापि[1] विज्ञानं न चास्मिन् बाह्यसम्भवः।**

स्वांशालम्बनत्व हि निराकृत **विज्ञानवादे**, सर्वत्र देशकालान्तरस्थितबाह्यालम्बनत्वप्रतिपादनात्। न च बुद्धीना ससर्गः कालत्रयेऽपि सम्भवतीति नास्त्येव तज्ज्ञानमिति।

तेनानुत्पन्नेऽपि बुद्धिससर्गज्ञाने भ्रान्त्यैव तदुत्पत्तिकल्पनेत्याह—

**अनुत्पन्नेऽपि तेनास्मिन्नुत्पन्नपरिकल्पना॥ २६॥**

अथोत्पत्तिर्न शक्यतेऽपह्नोतुम्, तत एवं वक्तव्यमित्याह—

**अर्थसंसर्गदृष्ट्या वा संसर्गोऽत्र प्रकल्प्यते।**

अर्थाना हि गोशुक्लादीना दृष्ट एव ससर्गः, तमेतद्विषयासु बुद्धिष्वपि कल्पयित्वाय बुद्धिसंसर्गाविभास• प्रवर्त्तत इति।

उपसहरति—

**बुद्धयोर्न तावदेवं स्याद् विशेषणविशेष्यता॥ २७॥**

इदमेव शब्दतद्बुद्धयोरपि वाक्यत्वनिराकरणायातिदिशति—

**तथैव शब्दतद्बुद्धयोर्विशेषोत्पत्त्यसम्भवात्।**

विशेषाधायक विशेषणम्, न चेह ससर्गेण व्यवच्छेदेन वा विशेषाधानं सम्भवतीति।

असम्भवमेव दर्शयति--

**तावानेव हि गोशब्दः शुक्लशब्देऽपि कीर्तिते॥ २८॥**

**पूर्वसत्त्वेऽपि[2] तावत्ता तस्यैवं तद्धियोरपि।**

पूर्वं सम्बन्धासम्भवात् पदाना वाक्यत्व निराकृतम्, इदानी तु विशेषानाधायकत्वादिति विशेष इति।

एव तावदर्थबुद्धीना ससर्गव्यवच्छेदनिराकरणेन मिथो विशेषणविशेष्यत्वं निराकृतम्, पदार्थानामिदानी निराकरोति—

**विशेषणविशेष्यत्वं न स्याच्छुक्लत्वगोत्वयोः॥ २९॥**

कारणमाह—

**न तयोरनुरागो हि नावच्छेदः परस्परम्।**

जातिपदार्थपक्षे गोशब्देन गोत्वमात्रमभिहितम्, शुक्लपदं तु तदेकवाक्यभूतं

---

१. प्रवर्तते च—३ पु०।    २. पूर्वशब्देऽपि—क०।

तस्यैव शुक्लगुणानुरागं प्रतिपादयतीति संसर्गो वाक्यार्थः, तदेकत्वाच्च पदानामेकवाक्यता। व्यक्तिपदार्थपक्षे तु गोशब्देनैव शुक्लकृष्णादिव्यक्तिषु सर्वास्वभिहितासु शुक्लपदं शुक्लसंसर्गं प्रतिपादयदपि तत्परत्वे सत्यानर्थक्यात् कृष्णादिव्यवच्छेदेनैव विशेषण भवतीति। भेदो वा वाक्यार्थः। प्रथमपक्षे त्वार्थिकः कृष्णादिव्यवच्छेदः। तदिद द्विविधमपि विशेषणविशेष्यत्वपदाभिधेययोर्जातिगुणयोर्मिथोऽनुरागव्यवच्छेदाभावादनुपपन्नमिति।

एतदेवोपपादयति—

**गोत्वेन न हि शुक्लत्वं गोत्वं वा तेन रज्यते॥ ३०॥**
**अन्योन्यात्मन्यसद्भावाद् व्यक्त्यङ्गत्वाद्[1] द्वयोरपि।**

अनुरागासम्भवे च तन्निबन्धनो व्यवच्छेदोऽपि न सम्भवत्येवेति।

असत्यपि तयो. परस्परानुरागे व्यक्तिरेका ताभ्यामनुरज्यमाना वाक्यार्थो भविष्यतीति चेत्? न, तस्या· शब्देनाप्रतिपाद्यमानाया वाक्यार्थत्वासम्भवात् तदसम्भवादेव च शब्दयोरपि नैकवाक्यता सिध्यतीत्याह—

**व्यक्तिश्चेदनुरज्येत ताभ्यां तत्रापि शब्दयोः॥ ३१॥**
**न परस्परसम्बन्धः[2] स्यादतद्गोचरौ हि तौ।**

नन्वप्रतिपाद्यमानाप्यस्ति तावदेका जातिगुणयोराश्रयभूता व्यक्तिः, अतः सिद्धयति वाक्यवाक्यार्थयोरैक्यम्? अत आह—

**शब्दैरनुच्यमाने हि सत्यप्येकाश्रयेऽर्थतः॥ ३२॥**
**शब्दानां नैव सम्बन्धः पृथिवीस्थगवाश्ववत्[3]।**

ननु नाश्रयमात्र वाक्यार्थं ब्रूमः, किन्तु यत्र शब्दाभिधेययोः समवायः स वाक्यार्थ·, तदेकत्वाच्च वाक्यैकत्वम्, अत आह—

**एकार्थसमवायेऽपि रूपादेर्नैव सङ्गतिः॥ ३३॥**

अस्ति हि रूपरसयोरेकार्थसमवायः, तथापि रूपं रस इत्यनयोर्नैकार्थ्यम्, एकवाक्यता वा न दृष्टेति॥ ३३॥

दूषणान्तरमाह—

**न चैकव्यक्तिवृत्तित्वे प्रमाणं गोत्वशुक्लयोः।**

भिन्नाश्रयत्वमपि सम्भवतीति कुतस्तदेकत्वनिबन्ध. पदसम्बन्ध इति। पदसम्बन्धादेव तु व्यक्त्येकत्वकल्पनायामितरेतराश्रयमित्याह—

**सम्बन्धादेतयोस्तत्र स्यादेकव्यक्तिकल्पना॥ ३४॥**
**तदेकत्वाच्च सम्बन्ध एवमन्योन्यसंश्रयम्।**

---

१. व्यक्तिगत्वादिति पाठान्तरम्। २. ०संसर्गः—३ पु०।
३. ०गजाश्ववत्—२ पु०।

न च शाबलेयादिपदं व्यक्तिवचनमिह श्रूयते, यदेकां व्यक्ति प्रतिपादयेदित्याह—

**न चात्र पदमस्त्यन्यद् येनैकव्यक्तिधीर्भवेत् ॥ ३५ ॥**

श्रूयमाणमपि शाबलेयत्वाद्याकारवचनत्वान्न व्यक्ति वदतीत्याह—

**न चास्याः पदवाच्यत्वम्**[1],

यद्यपि कथञ्चिच्छबलाया अपत्ययोः सम्भवादित्याह—

**वाच्यत्वेऽपि न चैकता ।**

तदेवमेकाश्रयत्वमप्रमाणकम्, सत्यपि तस्मिन्नेकवाक्यता सिध्यतीत्युक्तम् । मा भूदेकाश्रयत्वेनैकवाक्यता, गम्यमानैकतया तु भविष्यति, गम्यते हि गोशुक्लपदाभ्यामभिधेयद्वारेणैका व्यक्तिरिति चेत्? न, अनेकत्वस्यापि व्यक्तीना सम्भवात् ।

उपेत्याप्याह—

**गम्यमानस्य चैकत्वात् सम्बन्धो यदि कल्प्यते ॥ ३६ ॥**
**पार्थिवत्वाद्यभेदेन किं न स्याद् घटवृक्षयोः ।**

गम्यते हि घटवृक्षशब्दाभ्यामेक पार्थिवत्व द्रव्यत्व चेति ।

एव तावदनुराग', तन्निबन्धनश्च व्यवच्छेदो निराकृत । सम्प्रत्युपेत्यापि ससर्ग व्यवच्छेद निराकरोति—

**शुक्लश्रुत्या न गोत्वादिः कृष्णादिभ्यो निवर्त्यते ॥ ३७ ॥**

श्रुतेऽपि शुक्लपदे दृश्यत एव कृष्णादिपु गोत्वमिति ॥ ३७ ॥

ननु नार्थस्य निवृत्ति ब्रूम, किं तु बुद्धे'? अत आह—

**स्वभावतोऽवबोधश्च तद्वशान्नापसर्पति ।**

बुद्धिरप्यर्थस्वभावानुसारिणी नानिवृत्तेऽर्थे निवर्त्तते, श्रुतेऽपि हि शुक्लपदे भवत्येव कृष्णादिपु गोबुद्धिरिति ।

यद्वा एव व्याख्या- श्रुतिरवभावाद् भवन्ती बुद्धिर्न शुक्लपदेनैकवाक्यतावशेन कुतश्चिदपवर्त्तते, श्रुतिर्हि वाक्याद् बलीयसी । कृष्णाद्यपोहवचनत्वे हि शुक्लपदस्य व्यवच्छेदोऽपि श्रौत. स्यात्, न तु तदस्ति । तदिदम् "नन्वेवम्" इत्यादिचोद्यपूर्वकम् "कथमिव गौरिति वाश्व इति वा" इत्यादिना "कृष्णादिनिवृत्ति. शब्दार्थ." ( शा० भा० पृ. ११४ ) इत्येवमन्तेन भाष्येणोक्तम् । एवं हि शुक्लश्रुतिजनितापि गुणबुद्धिर्न गोपदैकवाक्यतयाश्वादिभ्यो व्यावर्त्तते, व्यावृत्त्यभावे च नियतवाक्यार्थप्रतीतिर्न वाक्यार्थे शब्दस्य प्रामाण्यमिति ।

उपेत्याह—

---

१. न चास्यापदवाचित्वम्—३ पु० ।

**गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम् ॥ ४३ ॥**
**शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीतिवत् ।**

न हि धूम इत्येकत्वं ज्वलनक्रिया वा अग्नेर्विशेषणमिति ।

दोषान्तरमपि ससर्गभेदयोर्वाक्यार्थत्वे दर्शयति—

**संसर्गे चापि भेदे वा वाक्यार्थे परिकल्पिते ॥ ४४ ॥**
**तस्य यावत् पदार्थत्वान्नैकवाक्यत्वसम्भवः[१] ।**

व्यतिरेकाव्यतिरेकविकल्पाक्षमौ चेमावित्याह—

**पदार्थव्यतिरेकश्च नास्ति संसर्गभेदयोः ॥ ४५ ॥**

यद्युच्येत—पदार्थैरेव ससर्गभेदानुगृहीतैर्वाक्यार्थो नाम वस्त्वन्तर तन्तुभिरिव पट इति, तदपि ससर्गभेदनिराकरणेनैव निराकृतमित्याह—

**न च वस्त्वन्तरारम्भः पदार्थैस्तदनुग्रहात् ।**

न च तादृशं वस्तु बहिर्वाक्यार्थज्ञान पृथक्कृत्य प्रमाणान्तरेणोपलभ्यत इत्याह—

**न हि जातिगुणैः किञ्चित् कार्यमारभ्यते बहिः ॥ ४६ ॥**

मा भूत्, प्रमाणान्तरवाक्यात् तावदवबोधो जायते ? अत आह—

**तदभावेऽवबोधश्च जातोऽपि स्वप्नवन्मृषा ।**

प्रमाणान्तराभावादेवाभावे निश्चिते जातोऽपि बोधा मृषेति ।

यस्तु वदति—पदाभिधेयाना जातिगुणानामेव मिथः ससर्गा. साक्षात् सम्भवन्ति न व्यक्तिद्वारा, तेऽपि ससर्गविशेषा. प्रागपि सन्त एव प्रमाणान्तरेणाप्रतिपन्नाः पदसन्निधिरूपाद् वाक्यादभिव्यक्ता वाक्यार्थतयोच्यन्त इति, तन्मतेऽपि बहुपदेषु वाक्येपु वाक्यार्थानेकत्वं स्यादेव, प्रत्येक पदार्थाना पदार्थान्तरससर्गादित्याह—

**सतामेव विशेषाणां सन्निधेर्योऽपि मन्यते ॥ ४७ ॥**
**वाक्यार्थत्वमभिव्यक्तौ तस्यापि तदनेकता ।**

निष्प्रमाणक च प्राक् सत्त्वमित्याह—

**प्राक्सत्त्वे च कुतस्तेषां प्रमाणं प्रत्ययैर्विना ॥ ४८ ॥**

ननु वाक्यमेव प्रमाणम्, न ह्यसता वाक्यात् प्रतीति. सम्भवति, न हि वाक्य तेषां जनकम्, अस्तु तर्हि सत्त्वमप्रतीतेषु तेषु न वस्तुसत्तामात्रेण पदाना प्रयोगः सम्भवति ? इत्याह—

**न चैषां वस्तुसत्त्वं च तत्पदेऽस्तित्वकारणम् ।**

---

२. नैकवाक्यार्थ०—का० ।

येऽपि **वैयाकरणै**रुक्ता वाक्यविकल्पा —

आख्यात शब्दसङ्घातो जातिः सङ्घातवर्तिनी ।
एकोऽनवयव शब्दः क्रमो बुद्ध्यनुसहृतिः ।
पदमाद्य पृथक् सर्व पदं सापेक्षमित्यपि ।
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायदर्शिनाम् ॥ इति,

तान्निराकरोति—

**एवमाद्यान्त्यसर्वेषां पृथक्सङ्घातकल्पने ॥ ४९ ॥**
**अन्योन्यानुग्रहाभावात् पदानां नास्ति वाक्यता ।**

अन्त्यपदवाक्यत्व परैरनुपन्यस्तमपि सम्भवादुपन्यस्यते, तदनन्तर हि वाक्यार्थ प्रतीयते, यत्तावदाद्यस्यान्त्यस्य सर्वेषा वा प्रत्येक मिथोऽनुग्रहापेक्षया सङ्घातस्य वा वाक्यत्वकल्पनम्, तदयुक्तम्, इतरेतरानुग्रहासम्भवादिति ।

अनुग्रहासम्भवमेव दर्शयति—

**आद्यं यदि पदं सर्वैः संस्क्रियेत विशेषतः ॥ ५० ॥**
**ततस्तदेव वाक्यं स्यादन्यश्च द्योतको गणः[1] ।**

न चाद्यस्येतरैरनुग्रहः कश्चिद् दृश्यते, न स सम्भवति; अयौगपद्यादिति ।

तथान्त्यस्य सर्वेषा वा सहृताना पृथग्भूताना वा नास्त्यनुग्रह इत्याह—

**एवमन्त्येषु[2] सर्वेषु पृथग्भूतेष्ववस्थितम् ॥ ५१ ॥**

मा भूत् तदनुग्रह , तथापि किमिति वाक्यत्व न भवति ? अत आह—

**स्वतन्त्रेषु हि वाक्यत्वं कथञ्चिन्नोपलक्षितम् ।**

एवं च व्यस्तोच्चारितानाम् 'गौरश्व.' इत्यादीना च वाक्यत्व स्यादिति ।

'एकोऽनवयवः शब्द.' इति च 'जाति सङ्घातवर्त्तिनी' इति च निराकरोति—

**स्फोटजातिनिषेधश्च स्यात् पदस्फोटजातिवत् ॥ ५२ ॥**

'क्रमो बुद्ध्यनुसहृति.' इत्येतन्निराकरोति—

**वार्यः पदक्रमो वाक्यं यथा वर्णक्रमः पदम् ।**

बुद्ध्यनुसंहृतिश्च क्रमरयासिद्धेत्याह—

**बुद्ध्या न चोपसंहर्तुः क्रमो निष्कृष्य शक्यते ॥ ५३ ॥**

कथम् ? इत्याह—

**पदान्येव हि तद्वन्ति वर्तन्ते श्रोत्रबुद्धिवत् ।**

किञ्च, वर्णक्रमस्य पदत्व युज्येतापि, स ह्यर्थप्रतीत्यौपयिकः क्रमान्तरेऽर्थ-प्रतीत्यभावात्, पदक्रमस्य तु वाक्यार्थप्रत्ययानौपयिकस्य कथं वाक्यत्वम् ? औपयिकत्वे वा क्रमभेदे वाक्यार्थभेदः स्यात् ? इत्याह—

१. गुणः—२ पु० । २. अन्येषु—३ पु० ।

**तावत्स्वेव पदेष्वन्यः क्रमोऽन्यश्च प्रतीयते ॥ ५४ ॥**

**तत्र यावत् क्रमं भेदो वाक्यार्थस्य प्रसज्यते ।**

सम्प्रत्याख्यातवाक्यपक्षमनुभाषते—

**पदान्तरस्य पारार्थ्यादाख्यातं योऽपि मन्यते ॥ ५५ ॥**

**वाक्यं प्राधान्ययोगेन वाक्यार्थं चापि भावनाम्[1] ।**

प्राधान्ययौगश्चाख्यातस्य प्रधानार्थप्रतिपादनात् । **भावनामिति** । पदार्थान्तरानुरक्तामिति द्रष्टव्यमिति ।

तदिद निराकरोति—

**तत्रापि न बहिर्वस्तु क्रियाकारकसङ्गतिः ॥ ५६ ॥**

**न कारकाणामन्योन्यं न क्रियाणां प्रतीयते ।**

तदाकारज्ञानोत्पत्तौ सत्यामपि न बहिर्वस्तुरूपा सङ्गतिरस्ति, तदभावे च न वाक्यवाक्यार्थत्वमिति ।

असङ्गतिमेव दर्शयितुमुदाहरणमाह—

**उखायामोदनं[2] काष्ठैर्देवदत्तः पचेदिति ॥ ५७ ॥**

तदिह द्रव्याणा तावदसम्बन्ध दर्शयति—

**द्रव्याणां तावदेतस्मिन्न सम्बन्धः परस्परम् ।**

कारणमाह—

**अत्यन्तभेदनिष्पन्नषष्ठ्यभावानपेक्षणैः ॥ ५८ ॥**

वस्तुतस्तावदेषा सम्बन्धो नास्ति, भिन्नत्वेन तादात्म्याभावान्निष्पन्नत्वेन च कार्यकारणभावाभावाद् । यद्यपि वस्तुत. कश्चित् सम्बन्ध स्यात्, तथापि न तस्य वाक्येन प्रतिपादन सम्भवति, षष्ठ्यभावात् । निष्पन्नत्वादेव च न तेषा परस्पराकाङ्क्षास्ति, तदभावादेव वचनशब्दानामर्थनिबन्धनत्वात् शब्दाकाङ्क्षायाः, निराकाङ्क्षाणा च कथं सम्बन्ध एकवाक्यतेति ॥ ५८ ॥

षष्ठ्यभावेऽपि सन्निधानात् सम्बध्यते इति चेत् ? न, सन्निधिबाधेन कारकविभक्तिभिः क्रियासम्बन्धावगमादित्याह—

**तृतीयाद्यपहारेण सन्निधेरपि बाधनात् ।**

भवतु तर्हि क्रिययैव सम्बन्ध· ? अत आह—

**काष्ठादीनां च सम्बन्धः क्रियया न स्वरूपतः ॥ ५९ ॥**

कथम् ? इत्याह—

**आर्द्रादिधर्मकैः पाकस्तैः कृतो न हि दृश्यते ।**

---

१ भावनामिति । प्रयत्नमित्यर्थ. ।

२. उषायाम्—३ पु० ।

सम्बन्धाभावे च तृतीयादिभिस्तद्बुद्धिरुपजातापि न प्रमाणमिति शङ्कते—

**शक्तिः कारणमिष्टा चेद्,**

न चार्द्राणां शक्तिरस्तीति व्यभिचार इति ।

दूषयति—

**अमूर्ता सापि निष्क्रिया ॥ ६० ॥**

द्रव्यमेव शक्तिविशिष्टं कारकमिति चेत् ? तदपि व्यभिचार्येवेत्याह—

**शक्तैरपि च तैः पाकस्तिष्ठद्भिर्नैव साध्यते[1] ।**

शङ्कते—

**ज्वलनादिमुखेनाथ तेषां पाकेन सङ्गतिः ॥ ६१ ॥**

निराकरोति—

**तथापि कर्मणा कर्म न साध्यमिति दुर्लभम् ।**

यदि हि ज्वलनकर्म पाकस्य साधनं स्यात्, ततस्तद्द्वारेण काष्ठान्यपि साधनानि स्युः, न तु तदस्ति, न तावत् ज्वलने पाकः समवेतो यतः पाकस्य ज्वलनं समवायिकारणं स्यादिति ।

नाप्यसमवायिकारणम्, कार्यभूतेन पाकेन कारणभूतेन वा देवदत्तेन वा ज्वलनस्याग्निसमवेतस्यैकार्थसमवायाभावादित्याह—

**भिन्नार्थसमवेतत्वान्न च सम्बन्धसम्भवः ॥ ६२ ॥**

तर्हि निमित्तकारणं स्यात्, अस्त्वेवम्, न ह्येतावता काष्ठानां पाके कारकत्वं सेत्स्यतीत्याह—

**न चान्यकारकोत्पाद्ये कारकं कारकान्तरम् ।**
**ज्वलनादीनि कुर्वन्ति न च स्युः पाकसाधनम् ॥ ६३ ॥**

कथं हि ज्वलनसाध्यः पाकः काष्ठसाध्यः स्यात्, काष्ठादीनि ज्वलन-भरण-विक्लेदनादीनि कुर्वन्ति कथं पाकसाधनं स्युरिति ॥ ६३ ॥

मा भूवन्निति चेत् ? तत्राह—

**अपाकसाधनानां च कुतस्तेनैकवाच्यता ।**

शङ्कते—

**ज्वलनादिगता पाके शक्तिश्चेदुपचर्यते ॥ ६४ ॥**

दूषयति—

**कर्तृत्वात् तत्र काष्ठादेः करणत्वादि[2] च दुर्लभम् ।**

एतदेव विवृणोति—

---

१. साधकः—का० ।

२. कारणादि—मु० पा० ।

**मुख्यं कारकवैचित्र्यमलब्धं ज्वलनादिषु ॥ ६५ ॥**
**कथं नु पाकवेलायामुपचारेण लभ्यते ।**

मुख्यपूर्वो ह्युपचारः । न च ज्वलनभरणादिषु स्वव्यापारेषु काष्ठादीना करणाधिकरणादिरूपं कारकवैचित्र्यमस्ति, तत्कथ पाके उपचर्येतेति ।

वैचित्र्याभावमेव ज्वलनादिषु दर्शयति—

**स्वव्यापारे च काष्ठादेः करणत्वाद्यसम्भवः ॥ ६६ ॥**
**विक्लिद्यन्ति ज्वलन्तीति बिभ्रतीति च दर्शनात् ।**

मा भूत् ज्वलनादिषु वैचित्र्यम्, व्यापारान्तर चैषा पाकवेलायामिति, तत्र मुख्यमेव कारकत्वे वैचित्र्यमस्तीति तदुपचारः पाके सिद्ध्यतीति चेत् ? तत्राह वदन्तेन—

**न चैषां पाकवेलायां व्यापारान्तरमिष्यते ॥ ६७ ॥**
**एकप्रयोगवत्,**

प्रयोग.=व्यापारः । यथा ह्येकैकशो ज्वलनादिव्यापारं कुर्वतां काष्ठादीना न व्यापारान्तरमस्ति, तथा सहतानामपि पाकवेलाया नास्त्येवेति ।

तेन ज्वलनादिपु कर्तृत्वादुपचारेऽपि कर्तृतैव पाके स्यादित्याह—

**तेन कर्तृतैव प्रसज्यते ।**

भवतु ज्वलनद्वार. पाकसम्बन्ध काष्ठादेः, स तु शब्देन प्रत्याययितुं न शक्यते, ज्वलनस्याशाब्दत्वादित्याह—

**पचिना चानुपात्तेषु ज्वलनादिष्वसङ्गतिः ॥ ६८ ॥**

न ह्यप्रतीते ज्वलने तद्द्वार. सम्बन्ध. शक्य. प्रत्याययितुमित्याह—

**न हि सद्भावमात्रेण तानि सम्बन्धकारणम् ।**

न च काष्ठादिशब्दैरपि ज्वलनादेरुपादानमस्ति, तेन देवदत्तव्यापारवचनस्य पचेः काष्ठादिशब्दाना चार्थसम्बन्धमप्रतिपादयता नैकवाक्यता स्यादित्याह—

**न च शब्दान्तरैरेषामुपादानमतः पचिः ॥ ६९ ॥**
**देवदत्तक्रियावाची न स्यात् काष्ठादिसङ्गतः ।**

अथ ज्वलनादिकमपि पचिरेवाभिदधीत, ततः काष्ठादीनामपि कर्तृत्वमेव स्यात्, न करणादित्वमित्याह—

**सर्वव्यापारवाची चेत् पचिरिष्टस्तथा सति ॥ ७० ॥**
**कर्तृत्वमेव काष्ठादेरापन्नं देवदत्तवत् ।**

कारणमाह—

**धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ॥ ७१ ॥**

न धातूक्तव्यापारत्वं कर्तृत्वं यत काष्ठादीनामपि स्यात्, किन्त्वन्यदेव प्रत्ययोपात्तभावनासम्बन्धित्वमिति चेन्न; तत्सम्बन्धस्य सर्वेषामविशेषादित्याह—

**सर्वेषां भावनासाम्ये न ह्यन्यत् कर्तृलक्षणम् ।**

ननु न तत्सम्बन्धमात्रं कर्तृत्वम्, किं तर्हि ? अन्यदेव तत्समवायित्वम्, तच्च देवदत्तस्यैवेत्युच्यते, ततः काष्ठादीनि पचन्तीति सर्वेषां कर्तृत्वनिर्देशः कदाचिदपि न स्यात् ? इत्याह--

**काष्ठादीनि पचन्तीति विवक्षा या च दृश्यते ॥ ७२ ॥**
**सापि नैवोपपद्येत यद्यन्यत् कर्तृलक्षणम् ।**

नन्वस्तु धातूक्तव्यापारत्वं कर्तृत्वम्, तत्तु सविशेषणम्, यस्य व्यापार प्राधान्येन धातुराह स कर्त्ता, प्राधान्य च देवदत्तव्यापारस्य, अतो देवदत्तस्यैव कर्तृत्वमत आह—

**एकधातुगृहीतानां न चास्त्यङ्गप्रधानता ॥ ७३ ॥**
**न कारकं ततः कर्त्ता प्राधान्याभिहितक्रियम्[1] ।**

न ह्येक. शब्दो युगदेव कस्यचिद् गुणत्वम्, कस्यचिच्च प्राधान्य वक्तुमर्हति, वैरूप्यात्, अतो नेद लक्षणमिति ।

तदेवं समप्राधान्ये स्थिते यदि सर्वेपा पचिनाभिधानमस्ति ततः 'काष्ठै' 'स्थाल्याम्' 'देवदत्त' इति कारकवैचित्र्य न स्यात् । अथ नास्ति, तत काष्ठादीनि पचन्तीति कारकैक्य काष्ठादेश्च पचिना वाक्यैक्यं न स्यात्, रोयमुभयतस्पाशा रज्जु ? इत्याह—

**अतः समप्रधानानामभिधा सदसत्त्वयोः ॥ ७४ ॥**
**क्वचित् कारकवैचित्र्यं क्वचिदैक्यं न युज्यते ।**

अथ धातुर्देवदत्तव्यापार कदाचिदुपादत्ते, कदाचित्तु सर्वव्यापार विवक्षावशात् तेनोपपन्न वैचित्र्यमैक्य च, यदा देवदत्तव्यापारवचन तदा ज्वलनादेः प्रत्ययेनो-पादानात् न काष्ठादेरसङ्गतिरित्युच्यते, तत्राह—

**प्रत्ययेनापि नैवात्र ज्वलनादिपरिग्रहः ॥ ७५ ॥**
**कर्तृमात्रं त्वसौ ब्रूयादथ वा तद्गता क्रियाम् ।**

वैयाकरणाना कर्तृवचनो मीमांसकाना भाक्तवचन इति ।

तस्मात् ज्वलनादेरनुपादानात् न तद्द्वारा काष्ठादिशब्दानां पचतिनैकवाक्यता स्यादित्याह—

**तस्मान्न पचतीत्यत्र काष्ठादेरस्ति सङ्गतिः ॥ ७६ ॥**

एवं क्रियाकारकयो कारकाणां च मिथः सङ्गतिर्निरस्ता । क्रिययोरिदानीं धातुप्रत्ययवाच्ययोर्निरस्यति—

**सर्वत्र न च धात्वर्थः प्रत्ययार्थेन युज्यते ।**

---

१. प्राधान्याहितसत्क्रियम्—का० ।

कथम् ? इत्याह द्वयेन—

**भावना प्रत्ययार्थो हि धात्वर्थानां च तां[1] प्रति[1] ॥ ७७ ॥**
**साध्यसाधनयोग्यानाम्[2] उपादानं च धातुभिः ।**
**साध्यत्वं पाकमित्येवं पाकेनैव च साधनम् ॥ ७८ ॥**
**पचित्येतेन[3] रूपेण नैकोऽप्यंशः प्रतीयते ।**

भावनासम्बन्धो हि साध्यतया साधनतया वा स्यात्, न च द्वेधापि सम्भवति, साध्यसाधनवाचिन्योर्द्वितीयातृतीययोः पचतीत्यत्राश्रवणादिति ।

निरस्तो धात्वर्थस्य भावनान्वयः कारकान्वयश्च, । विध्यन्वयमिदानी निराकुर्वन् धात्वर्थस्य तावन्निराकरोति द्वयेन—

**विधिभावनयोश्चैकप्रत्ययग्राह्यताकृतः[4] ॥ ७९ ॥**
**धात्वर्थात् प्रथमं तावत् सम्बन्धोऽध्यवसीयते ।**
**विधाववसिते तत्र केवले भावनात्मनि ॥ ८० ॥**
**पश्चात् सम्बध्यमानोऽपि न धात्वर्थो विधीयते ।**

न हि सकृदुच्चरितस्य विधिप्रत्ययस्य श्रौतानेकव्यापारसम्भव.। तद्यदि धात्वर्थान्वियाद् भावना विदध्यात्[5], प्रागेव तु धात्वर्थान्वियाद् भावना केवलां विदधदनुपपत्त्यभावान्नालं पश्चाद्भावनया सम्बन्ध्यमानमपि धात्वर्थं प्रत्ययो विधातुमिति । मा विधायि, तथाप्यभिहितत्वात् पदश्रुत्या च भावनाया विनियुक्तत्वात् तस्याप्यनुष्ठान सिध्यत्येव ? अत आह—

**विध्यधीनप्रवृत्तेश्च न स कार्य. श्रुतोऽपि सन्[6] ॥ ८१ ॥**

विध्यधीना हि प्रवृत्ति., नाभिधानविनियोगमात्राधीनेति ॥ ८१ ॥

यदा चैवं समानपादोपात्तस्यापि धात्वर्थस्याविधान तदा पदान्तरगतस्य सोमादे· कारकस्य वाक्यान्तरगतस्य च प्रयाजादिविध्यन्तस्य दूरापास्त विधानमित्याह—

**एवं कारकविध्यन्तविधानस्याप्यसम्भवः[7] ।**

विधानत्वसङ्गतस्य प्रयाजादेर्विध्यन्तसमाख्यापि निर्निमित्तेत्याह—

**विध्यन्तत्वं प्रयाजादेर्निषेद्धव्यमसङ्गतम् ॥ ८२ ॥**

एवं भावनासम्बन्धाभ्युपगमेनाशाना विधिसम्बन्धो निराकृतः ॥८२॥

भावनासम्बन्धोऽपि तेषां शुक्लगवादिवन्निराकर्त्तव्य इत्याह—

---

१–१. संप्रति—३ पु० ।　२. ०योगानाम्—का० ।
३. पचित्यनेन—३ पु० ।　४. कृता—३ पु० ।
५. एतदग्रे 'अर्थाद् धात्वर्थमपि विदध्यात्' इत्यधिक ३ पु० ।　६. सः—३ पु० ।
७. असङ्गतेः—३ पु० ।

**असम्बद्धत्वमेतेषां वाच्यं शुक्लगवादिवत् ।**

'सोमेन यजेत' इति सोमस्य करणत्वमात्रं श्रुतम्, तत्तु यागगतमिति नास्ति प्रमाणम् । सन्निधेरपि श्रुतिजनिताविशेषप्रत्ययविरुद्धस्याप्रामाण्यात् प्रयाजादि-सम्बन्धस्तु दूरभ्रष्ट इति ।

किञ्च, 'शुक्लो गौः' इत्यादिषु लोके कर्मार्थलक्षणमिति विशिष्टार्थपरत्वं वाक्यो-च्चारणस्यावगम्य वक्त्रभिप्रायागममुखेन स्यादपि कथञ्चिदशाब्दस्याप्यर्थस्य वाक्यात् सिद्धिः, वेदे तु प्रयाजाग्नेयादिसम्बन्धो वाक्यैकप्रमाणकः, वाक्यानि चासम्बद्धानि कथं समर्थाना सम्बन्धं प्रतिपादयेयुः, अतिप्रसङ्गादित्याह—

**तत्रार्थलक्षणा काचित् सम्भवेदपि सङ्गतिः ॥ ८३ ॥**
**वाक्यैरेव त्वसम्बद्धैः[1] सम्बन्धो न प्रकल्प्यते[1] ।**

अथ सम्बद्धानि वाक्यानीति चेत् ? न, अर्थानपेक्षाणां शब्दानां स्वरूपेण सम्बन्धाभावात् । ततश्चार्थसम्बन्धनिबन्धनः शब्दसम्बन्धस्तदधीनश्चार्थसम्बन्ध इति इतरेतराश्रयं स्यात्, एकस्याप्यन्यतः सिद्धयभावादित्याह—

**अतोऽन्योन्याश्रयत्वं स्यादेकमूलाप्रसिद्धितः ॥ ८४ ॥**

यदांशत्रयस्यासम्बन्धेऽप्यविधानाद् भावनैव विधातव्या तदा तस्या केवलाया पुरुषस्य प्रवर्तयितुमशक्यत्वात् तयाप्यन्वयासम्भवान्निर्विषयत्वं विधेरित्याह—

**एवमंशत्रयासत्त्वाज्जातो निर्विषयो विधिः ।**

मा भूद्भावनाद्वारोऽशानां विधिः, साक्षादेव तु भविष्यति ? अत आह—

**धात्वर्थकारकाणां तु साक्षान्नैवैष सिध्यति ॥ ८५ ॥**
**विधेर्भावनया रोधात् कर्तुस्तेष्वप्रवर्तनात् ।**

समानप्रत्ययोपात्तभावनावरुद्धो विधिर्न तावदन्यत्र गच्छति, गतोऽपि न शक्नोति तानि विधातुम्, पुरुषव्यापारविषयत्वात्, तेषां चातद्रूपत्वादिति ।

एवं क्रियाकारकसम्बन्धनिराकरणात् तन्मूलत्वाच्च सम्बन्धान्तराणाम् 'देव-दत्तस्य गौः' इत्यादीन्यपि वाक्यानि नालं वाक्यार्थं प्रतिपादयितुमित्याह—

**क्रियाकारकसम्बन्धमूलत्वात् सर्वसङ्गतिः ॥ ८६ ॥**
**निषेध्या तन्निषेधेन स्वस्वामिपितृबन्धुषु ।**

एवं नामाख्यातयोः सङ्गतिर्निरस्ता । सम्प्रत्युपसर्गनिपातानां निराकरोति—

**उपसर्गनिपातानां केनचिन्न च सङ्गतिः ॥ ८७ ॥**

न तावन्नामभिर्मिथो वा सङ्गतिरित्याह—

**परस्परं त्वसिद्धैव स्वातन्त्र्येण च नामभिः ।**

कथम् ? इत्याह—

---

१–१ असम्बन्धः शब्दाना न प्रकल्पते—का० ।

**क्रियाविशेषणत्वाच्च विना नैवोपसर्गता ॥ ८८ ॥**

मिथो नामभिर्वा सम्बध्यमानानामुपसर्गत्वमेव न स्यात्, "उपसर्गाः क्रियायोगे" ( पा० सू० १. ४. ५९ ) इति स्मरणादिति।

न वाक्यार्थस्यायमेवविध इत्येवं केनचिद्रूपेणानिरूप्यमाणस्य सम्भवत्युपसर्गैर्विशेषणमित्याह—

**वाक्यार्थोऽसत्त्वभूतत्वादेतैर्न च विशिष्यते।**

न च धात्वर्थेन क्रियया सङ्गतिः, अकारकत्वादित्याह —

**क्रियाद्वाराऽथ कल्प्येत सापि[1] नाकारकात्मनः ॥ ८९ ॥**

कथमकारकत्वम् ? इत्यत आह—

**असत्त्वभूतमर्थं च नाध्यवस्यति कारकम्।**

नन्वकारकस्यापि विशेषणतया क्रियान्वयो भविष्यति ? अत आह—

**विशेषणत्वमप्येषा नैवार्थाननुरञ्जनात् ॥ ९० ॥**

अननुरञ्जनमेव दर्शयति—

**आनर्थक्यान्यवाचित्वविपरीतप्रसाधनात्।**

अत्रैवोदाहरणानि दर्शयति—

**प्रलम्बतेऽयमित्यादौ तेषां कश्चिदनर्थकः ॥ ९१ ॥**

**प्रासादादिषु चान्योऽर्थो विपरीतः प्रतिष्ठते[2]।**

अथैवमपि कि न विशेषणम् ? अत आह—

**येन स्वार्थाविरोधेन विशेष उपजन्यते ॥ ९२ ॥**

**विशेषणं तदेवेष्टं न तु यत् स्वार्थनाशकम्।**

यत्र तर्हि नीलोत्पलादिवत् स्वार्थाङ्गीकरणेनैवाभिमुख्यादिविशेषो जन्यते तत्र विशेषण स्याद्—गच्छति, उद्गच्छत्यादौ ? नेत्याह—

**आभिमुख्योर्ध्वगत्यादिविशेषो योऽवगम्यते ॥ ९३ ॥**

**तस्यापि कर्तृधर्मत्वान्न धात्वर्थाङ्गतेष्यते।**

भवतु तर्हि तत्रैव सम्बन्ध इति चेत् ? न, उपसर्गविरोधादित्याह—

**कर्त्रा च सह सम्बन्धो नोपसर्गस्य विद्यते ॥ ९४ ॥**

न च भावनयापि सङ्गतिः, असत्त्वादर्थानाम् अंशत्रयानन्तर्भावादित्याह—

**अंशत्रयातिरिक्तत्वान्नापि भावनया सह।**

नञादयस्तु निपातविशेषा येनैव सम्बन्धमिष्यते तस्यैवार्थं विरुन्धन्तो न केनचित् सम्बन्धुमर्हन्तीत्याह—

**प्रतिषेधविकल्पादेः सम्बन्धश्च विरुध्यते ॥ ९५ ॥**

---

१. सोऽपि—३ पु०।

२. प्रतिष्ठित.—का० पु०।

कारणमाह—

**अन्यरूपपरिच्छेदाद् वाह्यवस्त्वर्थवादिनाम् ।**

ये हि बाह्यमेव वस्तु शब्दार्थं वदन्ति, तेषां य एवार्थो घटशब्देन सदात्मनावगतः स एव नञासदात्मना परिच्छिन्नः, अतो नञादयस्तेन विरुध्यन्ते । ज्ञानमात्रशब्दार्थवादिना तु नाय विरोध., अर्थनिबन्धनत्वाद्विरोधस्येति ।

एतदेव विवृणोति—

**स्वश्रुतेः प्रथमं वस्तु सद्भावेन निरूपितम् ॥ ९६ ॥**
**कथं नञादिभिः पश्चादभावमुपनीयते ।**

अर्थविरोधे च शब्दयोरपि विरोधादसम्बन्धः स्यादित्याह—

**विरोधश्च तयोः श्रुत्योरस्ति नास्तीति शब्दवत् ॥ ९७ ॥**

वाशब्दस्तु नञादिभ्योऽपि पापीयानित्याह—

**विकल्पे पुनरेकस्य शब्दस्यैषा विरोधिता ।**

किञ्च, पदार्थपूर्वको वाक्यार्थ , न चोपर्सनिपाताना गवादीनामिव 'अयमसौ' इति स्वातन्त्र्येण कश्चिदर्थोऽवगम्यते यद्द्वारेणैते वाक्यार्थान्वयं गच्छेयुरिति ।

सर्वोपसर्गनिपातसाधारणदूषणमाह—

**गवादिवच्च नैतेषां स्वतन्त्रार्थावधारणम् ॥ ९८ ॥**
**येन तत्पूर्वकं सन्तं वाक्यार्थं यायुरात्मना ।**

अत पर भाष्यार्थ । तत्र "गम्यते च पदत्रये उच्चरिते" (शा० भा० पृ॰ १११) इति भाष्यमयुक्तम्, एव हि समुदायस्यैव मूलत्वान्न निर्मूलता सिद्ध्येदत आह—

**समुदायेऽप्यसिद्धत्वात् येन वक्ष्यत्यहेतुताम् ॥ ९९ ॥**
**गम्यते चेत् यतोऽवोचत् प्रत्येकाशक्तिसिद्धये ।**

प्रत्येकमूलत्वनिराकरणपरमिदम्, न स्वार्थपरम् । समुदायस्यापि मूलत्वं निराकरिष्यते चेति ।

"न चाय समुदायोऽस्ति लोके" (शा० भा० पृ॰ १११) इति भाष्यं न तावद् वैदिकसमुदायाभिप्रायम्, सर्ववाक्याना वाक्यार्थमूलत्वनिराकरणपरत्वात् । तेनायमर्थः—नैवञ्जातीयः समुदायो लोकेऽस्तीति, तच्चेदमयुक्तम्, अस्ति हि लोके 'गामानय' इत्यादिसमुदायः, अत आह—

**असम्बन्धात् पदार्थानामिति पूर्वोक्तया दिशा ॥ १०० ॥**
**सन्नप्यज्ञायमानत्वाद् असन्नित्यभिधीयते ।**

अर्थसम्बन्धाधीना हि पदाना समुदायापत्तिः, अन्यथा 'गौरश्वः' इत्यादिष्वपि

प्रसङ्गात्। सम्बन्धश्च यदा सर्वप्रकारो निराकृतः तदा सत्त्वेनापाततः प्रतिभासमानोऽपि परमार्थतः सत्त्वेनाज्ञायमानत्वादसन्नित्युच्यत इति।

ननु[1] "न[1] च पदार्थाद् वाक्यार्थावगतिरसम्बन्धात्" (शा० भा० पृ. ११२) इति भाष्यम्, तत्रासम्बन्धमेव विकल्प्य दर्शयति—

**ऐकैकश्ये[2] पदार्थानां वाक्यार्थे व्यभिचारिता ॥ १०१ ॥**
**प्रागसिद्धेः समस्तानामसाधारणदुष्टता।**

एकैकशो हि पदार्था बहुवाक्यार्थसाधारणत्वान्न नियमेनैकं विशिष्टमर्थं गमयन्ति, सङ्गतानां तु तद्वाक्यार्थव्यतिरेकेणान्यत्र क्वचिदपि प्रागनवगताना गन्धवदसाधारणानैकान्तिकतेति।

"न च पदार्था एव वाक्यार्थः" (शा० भा० पृ. १११) इति भाष्यम्, तस्यार्थमाह—

**पदार्थानेव वाक्यार्थं यः सामस्त्येन[3] मन्यते ॥ १०२ ॥**
**गौरश्वः पुरुषो हस्तीत्यत्राप्यस्य[4] प्रसज्यते।**

तेनार्थान्तरान्वितरूपो विशेषो वाक्यार्थो न पदार्था एवेति।

भवत्वेवम्, सोऽपि तु पदार्थ एव, पदं हि केवलोच्चरितं पदार्थस्वरूपमभिधत्ते, पदान्तरसमभिव्याहृत तु तदर्थान्तरान्वितम्? अत आह—

**व्यस्तस्य योऽर्थः शब्दस्य न सामस्त्ये जहाति तम् ॥ १०३ ॥**
**तं चोज्झति न विश्रम्भः पदार्थं प्रति लभ्यते।**

यदि हि क्वचिदर्थस्वरूपमभिदध्यात्, क्वचिच्च तदुज्झित्वाऽऽनयनान्वितम्, तदप्युज्झित्वा बन्धनान्वितम्, न पदार्थे [5]क्वचिदाश्वासः स्यात्, अन्वितमेवाभिधेयमिति चेत्? न, केवलोच्चारणे पदार्थस्वरूपावगमात्। स्मरण तदिति चेत्? न; अनुभूतापरामर्शात्। स्मृतिप्रमोषश्चेत्? न, पदरूपप्रत्युत्पन्नकारणसद्भावात्। अतः स्वरूप तावदभिधेयमिति नान्विताभिधानम्। निरस्त चेदमन्विताभिधानं **न्यायरत्नमालायाम्, शास्त्रदीपिकायां** चेति।

तदेव सामान्यमात्रे पदार्थे स्थिते अनेकपदोच्चारणे द्वित्रादिसामान्यज्ञानमेव केवल स्यात्, न वाक्यार्थावधारणमित्याह—

**तत्र द्वित्रादिसामान्यविज्ञानं केवलं भवेत् ॥ १०४ ॥**
**अनेकशब्दविज्ञानान्न विशेषावधारणम्।**

---

१-१. नन्वप—मु० पा०।
२. एकैकं चेत्–३ पु०। एकैकश्चेत्—का०।
३. समर्थो न—३ पु०।
४. अन्यत्रापि—३ पु०।
५. कदाचि०—१-२ पु०।

"स्यादतेत्, अप्रयुक्तादपि" इत्यादि "तस्मान्नैतदेवम्" (शा० भा० पृ. ११३) इत्यन्त भाष्य सुगमम् ।

पुनश्चोद्यम् "ननु पदार्थविद्भि." इत्यादि, तत्रोत्तर "यदि वाक्ये ऽन्त्यवर्ण" (शा० भा० पृ. ११३) इत्यादि, तस्यार्थमाह सार्धेन--

**पदार्थसङ्गतेऽर्थे[1] चेद् वाक्यं साक्षात् प्रवर्त्तते ॥ १०५ ॥**
**पदार्थसंविदस्तत्र न स्याद् दृष्टोपकारिता ।**
**तेनाज्ञातपदार्थोऽपि बुध्येतैव स्वभावतः ॥ १०६ ॥**

पदार्थानुरोधेन वा तेषामेव मूलत्व स्यात्, तच्च निरस्तमित्याह उक्तमन्तेन--

**तान् वानुरुध्यमानस्य कारणं स्युस्त एव ते ।**
**तत्र चोक्तम्,**

उपसहरति--

**अतो नास्ति वाक्यधीमूलसम्भवः ॥ १०७ ॥**

कथं तर्हि लोके 'गामानय' इत्यादिवाक्येभ्यो वाक्यार्थावगतिः, व्यवहारश्च ? अत आह—

**ततश्चार्थाद् भवेल्लोके,**

लोके कर्मार्थिलक्षणमिति ।

वेदार्थस्त्वनन्यप्रमाणकत्वाच्छब्दाशक्तौ निष्प्रमाणक एवापन्न इत्याह—

**वेदार्थस्त्वप्रमाणकः ।**

केनचिद् वेदान् कृत्वास्य वाक्यस्यायमर्थ इति एव समयः कृतो वृद्धयादिवत्, ततश्च वाक्यार्थावगति पुरुषाणाम् ? इत्याह--

**समयात् पुरुषाणां वा गुणवृद्धयादिवन्मतः ॥ १०८ ॥**

तदिदम् "तस्मात् कृत्रिमो वाक्यार्थप्रत्यय." (शा० भा० पृ. ११३) इत्यनेन भाष्येणोक्तमिति ॥ १०८ ॥

"व्यामोहो वा" (शा० भा० पृ. ११३) इति भाष्यार्थमाह—

**निष्कारणोऽपि सन्नर्थो याज्ञिकै. परिभाषितः[1] ।**

"नन्वेवम्" (शा० भा० पृ. ११४) इत्यादि भाष्य प्रागेव व्याख्यातम् । पूर्वोक्तेऽपि पौरुषेयत्वेऽनुमानमपि पदसङ्घातहेतुक भाष्यकारेणोक्तमित्याह—

**तत्र[2] चोक्तं[2] कथावत् तु सङ्घातात् पौरुषेयता ॥ १०९ ॥**

---

१-१. पदार्थेत्यारभ्य एतत्पर्यन्तमर्धसप्तकं का० पु० त्रुटितम् । परिपालितः--२ पु० ।
२-२. अपि चास्य इति तत्त्वसंग्रहे पाठः ।

नीलोत्पलादिकथनवद् भारतादिवद् वेति ॥ १०९ ॥

भवतु तर्हि पौरुषेयत्वेनैव प्रमाण्यम् ? अत आह—

**न चाप्तः पुरुषोऽत्रास्ति,**

न ह्यतीन्द्रियेऽर्थे पुरुषस्याप्तिः सम्भवतीति ।

पूर्वपक्षमुपसहरति—

**तेन वेदाप्रमाणता ।**

सिद्धान्तमाह—

**अत्राभिधीयते, यद्यप्यस्ति मूलान्तरं न नः ॥ ११० ॥**

**पदार्थाना तु मूलत्वं दृष्टं तद्भावभावतः ।**

यद्यपि प्रत्येकं पदानि सहतानि वा साक्षान्न मूलं तथा जातिः सम्बन्धज्ञानं सावयवनिरवयववाक्यानि, तथापि पदार्थाः प्रत्यायिता. प्रत्यासत्त्यपेक्षायोग्यत्वसनाथा मूल भविष्यन्ति, तद्भावे वाक्यार्थप्रत्ययस्य भावादिति ।

यत्तावत् सावयवस्य वाक्यस्य पदस्येव साक्षाद्वाच्यार्थवाचित्व नास्तीत्युक्तम्, तमनुमन्यामह इत्याह—

**सत्यं न वाचकं वाक्यं वाक्यार्थस्योपपद्यते ॥ १११ ॥**

कारणमाह—

**अन्यथाप्युपपन्नत्वाच्छक्तिस्तत्राप्रमाणिका ।**

वाक्यस्य हि वाचकत्वमिच्छतावश्य वाक्यान्त्यवर्णस्य पूर्ववर्णजनितसंस्कारसहितस्य स्मृतिविपरिवर्तिना वर्णाना प्रत्यक्षस्मृतिरूपाया वा चित्रबुद्धौ भासमानाना वाक्यार्थे शक्ति कल्पनीया। सा च वाक्यार्थप्रतीतेर्वक्ष्यमाणन्यायेन पदार्थेभ्योऽप्युपपत्तौ निष्प्रमाणिकेति ।

तत्र स्मृतिविपरिवर्तिना तावद्वाचकत्व नावकल्पते, पदेऽपि वर्णाना तिरोहिताना क्लेशेन युगपत्स्मरणमाश्रित्य शक्ति कल्पिता, वाक्ये तु बहूना वर्णानामनुसन्धान क्लेशतरेण स्यादित्याह सार्धेन—

**पद एव हि वर्णानां शक्तिः क्लेशेन कल्पिता ॥ ११२ ॥**

**तिरोभावादिह त्वेषां भवेत् क्लेशतरेण[1] सा ।**

**बहवश्चानुसन्धेया वर्णाश्चिरतिरोहिताः ॥ ११३ ॥**

पदार्थप्रतिपादने व्यापृताना वर्णाना पुनर्वाक्यार्थेऽपि व्यापाराद् गौरवमित्याह—

**पदार्थेषूपयुक्तानां[2] पुनर्व्यापारकल्पना ।**

न केवलमदृष्टकल्पना, दृष्टहानिश्चेत्याह—

---

१. क्लेशान्तरेण—का० । २. ०प्रयुक्तानाम्—३ पु० ।

**पदार्थानां च सामर्थ्यं गम्यमानमपह्नुतम् ॥ ११४ ॥**

कुतः पुनः सामर्थ्यं गम्यते ? अत आह—

**आनन्तर्याद्धि वाक्यार्थस्तद्धेतुत्वं न मुञ्चति ।**

वर्णेभ्यो हि पदार्थेषु प्रतीतेषु तदनन्तर वाक्यार्थः प्रतीयत इति ।

योऽपि पूर्ववर्णजनितसस्कारसहितोऽन्त्यो वर्णो वाचक इत्येवम्प्रकारः पदेषु, सोऽपि वाक्येषु न सम्भवतीत्याह—

**एकयैव हि संस्कृत्या कथं कार्यद्वयं भवेत् ॥ ११५ ॥**

ननु कार्यदर्शनादेकस्यापि शक्त्यन्तर सस्कारान्तरं वा किं न कल्प्यते ? अत आह—

**न चैषां पूर्वसंस्कारादन्योऽस्तीति प्रतीयते ।**

वाक्यार्थप्रतीतेरप्यन्यथाप्युपपत्तेर्न तत्र प्रमाणमिति ।

न च चित्रबुद्धिरपि वाक्येषु सम्भवतीत्याह सार्धेन—

**न चान्त्यवर्णवेलायां तेष्वालोचनसम्भवः ॥ ११६ ॥**

**पदतद्वाच्य[1]सम्बन्धबुद्धिव्यवधिबाधनात् ।**

**प्रत्यक्षस्मृतिरूपातो न तेष्वेकास्ति वाक्यधीः ॥ ११७ ॥**

पदे हि वर्णाना विजातीयाऽव्यवधानाद् युज्यतेऽतीतानामन्त्यवर्णप्रत्यक्षवेलाया सर्वेषा स्मरणम् । वाक्ये त्वान्तरालिकपदतदर्थसम्बन्धबुद्धिव्यवधानान्न सम्भवति । सर्वेषा स्मृतिविपरिवर्त्तिनां वाचकत्वेऽपि तुल्योऽय दोष. । अशक्य च दीर्घतमेषु वाक्येषु सर्वेषा वर्णाना पदाना वा स्मरणम् । असत्यपि च तस्मिन् पदार्थानुसन्धानमात्रेण वाक्यार्थप्रतीतिरुत्पद्यत इति सर्वजनीनम् । अतो न वाक्य साक्षाद् वाक्यार्थस्य वाचकम् । नापि पदानि, यथैकदेशिनो मन्यन्ते, पदार्था वाक्यार्थस्य प्रतिपादकाः, तद्द्वारेण पदानामपि सहताना लब्धवाक्यव्यपदेशाना तन्मूलत्वमनुमन्यामह इति ॥ ११७ ॥

केचिद् वर्णपदातिरिक्तबहिर्भूतवाक्याभावाद् वाक्याकारा बुद्धिरेव वाक्यम्, तदनन्तरं चानेकजातिगुणद्रव्यक्रियाससर्गाभासाज्जायमाना बुद्धिरेव वाक्यार्थो न बाह्यः; पदार्थातिरेकेणानतिरेकेण वा निरूपणासम्भवात्, तदपि तस्मादेव वाक्याकारबुद्ध्यभावादनुपपन्नमित्याह—

**तस्माच्च वाक्यनिर्भासा वाक्यं सा धीर्न कल्पते ।**

निरस्तं च शून्यवादे अर्थानालम्बनत्व बुद्धीनामित्याह—

**वाक्यमित्यनया बुद्ध्या न चात्मांशः प्रतीयते ॥ ११८ ॥**

**न च वाक्यार्थबुद्ध्येदं शून्यवादे निरूपितम् ।**

---

१. ०वाक्य०—का० ।

येऽपि **वैयाकरणा** बाह्यमेव निर्भाग वाक्य वाक्यार्थं च मन्यन्ते, येऽपि पूर्वोक्त-बुद्ध्याकारवादिनः, तेषामपि विभिन्नबुद्धिर्भागबुद्धिश्च वर्णपदतदर्थाभासा विनैव प्रमाणेन मृषा कल्पिता स्यादित्याह—

**वाक्यवाक्यार्थयोरैक्ये बाह्याभ्यन्तरवादिनाम् ॥ ११९ ॥**
**विच्छिन्नभागबुद्धीनां मृषात्वं निष्प्रमाणकम् ।**

निष्प्रमाणकत्वमेव दर्शयति—

**कल्प्यमानेऽपि नैवं च वस्तुबुद्धिर्निवर्त्तते ॥ १२० ॥**

कल्प्यमानेऽपि हि भवता मृषात्वे वस्तुबुद्धि. भागेषु कस्यचित् कदाचिन्न निवर्त्तत इति ॥ १२० ॥

कल्पनागौरवं निर्भागस्य वाक्यस्य वाचकत्वे स्यादित्याह सार्धेन—

**तेष्वेव[1] च पदार्थेषु[1] प्रक्लृप्तस्तोकशक्तिषु ।**
**आवापोद्वापरचनाभेदाद् वाक्येष्वनन्ता ॥ १२१ ॥**
**स्तोकशक्त्युपपन्नेऽर्थे बहुशक्त्यप्रमाणता ।**

स्तोकैरेव पदैस्तदर्थैश्चानन्तानि वाक्यानि तदर्थाश्चारभ्यन्ते, तत्र निर्भाग-वाक्यवादिना यावदर्थमनन्तानि वाक्यान्यनुपलभ्यमानानि तच्छक्तयश्चानन्ता. कल्प्या, सभागवादिनोऽपि[2] शक्त्यानन्त्यमदृष्टमेव कल्प्यम्, तच्चानुपपन्नम्, स्तोकै रेव पदै क्लृप्तस्तोकार्थशक्तिभिरनन्तानामपि वाक्यार्थाना प्रतीत्युत्पत्तेरिति ।

उपसहरति—

**वाक्यतच्छक्त्यनन्तत्वे नार्थापत्तिस्ततो भवेत् ॥ १२२ ॥**

**वैयाकरणै**र्निरवयवत्वेऽपि वाक्यानामवयवप्रतिभासेऽवयवप्रत्यभिज्ञाया च सादृश्य कारणमुक्तम्—'ध्वनयः सदृशात्मानो विपर्यासस्य कारणम्' इति, नानाजातीयानेकध्वनिव्यङ्ग्य हि वाक्यम्, ते च ध्वनय प्रत्येक वाक्या-न्तरव्यञ्जकध्वनिसदृशा., निर्भागस्यापि वाक्यस्य तत्तद्वाक्यसादृश्यम्, नरसिहस्येव केनचिद् भागेन नरसादृश्यम्, केनचिच्च सिहसादृश्यं भागशः सम्पादयन्तः सादृश्योपाधिभेदादवयवभेदमिव वाक्ये दर्शयन्ति, ध्वनि-सादृश्यादेवावयवानामपि सादृश्यात् प्रत्यभिज्ञा अपि भवतीति, तद् दूषयति—

**न चावयवबुद्धीनां सादृश्याद् भ्रान्तिकल्पना ।**

कारणमाह सार्द्धेन—

**न प्रसिद्धाः पृथग्भूता मुख्या ह्यवयवाः क्वचित् ॥ १२३ ॥**
**नावयव्यन्तरे यस्मात् सर्ववाक्येष्वभागता ।**
**सतामवयवानां हि स्याद्वा सदृशता न वा ॥ १२४ ॥**

---

१–१. तेष्वेपु पदेष्वत्र—३ पु० । २. स्वभाववादिनो०—मु० पा० ।

यदा हि सर्वेषां वाक्याना निर्भागत्वम्, पदवर्णात्मकास्तु भागा न पृथग्भूता वाक्यानुस्यूता वा सन्ति, तदा न कस्यचिद्भागश. सादृश्यम्, यतो बहुभिः सादृश्याद् बह्ववयवमिव वाक्य प्रतीयेत, अवयवा. प्रत्यभिज्ञायेरन्, सता हि सद्भिः सादृश्यमसादृश्य वेति ॥ १२४ ॥

यत्तु नरसिंहवदित्युक्तम्, तत्राह—

**सादृश्यं नरसिंहादौ युक्तं जात्यन्तरे सति ।**

अस्ति हि तत्र नरजातिः सिंहजातिश्चेति ।

ततः किम् ? इत्यत आह—

**तत्र ह्यवयवाः सिद्धाः प्राक्संयोगविभागिनः ॥ १२५ ॥**

प्रसिद्धाश्च तयोर्जात्योः पाण्यादयोऽवयवा. सयुक्ता वियुक्ताश्चेति ॥ १२५ ॥

तदेव विवृणोति—

**पाण्यादयो हि विच्छिन्ना दृश्यन्ते नृशरीरतः ।**
**देहेषु च पृथग्बुद्धिस्तेषु सर्वेषु जायते ॥ १२६ ॥**

सत्सु च तेषु सता नरसिंहाख्यजात्यन्तरावयाना तत्सादृश्याद् वा भ्रमात् तत्सजातीयत्वाद्वा परमार्थत एव युक्त प्रत्यभिज्ञानमित्याह—

**तत्र तत्सदृशत्वाद् वा तत्साभान्येन वैकता ।**
**हस्तादिषूपपन्नेति प्रत्यभिज्ञानसम्भवः ॥ १२७ ॥**

तद्वदिहापि यदि वाक्यावयवाना सादृश्य स्यात्, ततश्च तेषा सत्यतानन्निर्भागत्वानुपपत्तिरित्याह—

**तद्वदत्रापि सादृश्यं यदि नामावधार्यते ।**
**सिद्धेऽवयवसत्यत्वे मृषा निर्भागकल्पना ॥ १२८ ॥**

कथं सादृश्यात् सत्यतापत्तिरिति चेत् ? अत आह—

**असता यत्तु सादृश्यमसतः परिकल्प्यते ।**
**ध्रुवं शशविषाणेन खरशृङ्गस्य तद् भवेत् ॥ १२९ ॥**

शङ्कते—

**अथासत्त्वेन सादृश्यमत्राप्यस्तीति मन्यते ।**

दूषयति—

**सर्वत्रैवं समानत्वात् कश्चिन्नासदृशो भवेत् ॥ १३० ॥**

सर्ववाक्यानामसदवयवत्वात् सर्वं सर्वेण सदृशावयवं स्यादिति ॥ १३० ॥

ननु चित्रावयवाना पाण्यादीनामसतामेव मिथः सादृश्यम्, न हि तत्र पाण्याद्यवयवाः सन्ति, पारिणामिकत्वात् तेषाम् ? अत आह—

**भागश्चित्रेऽपि कृष्णादिर्दृष्ट एव सदृक्तया[1] ।**

---

१. पृथक्तया—३ पु० ।

यद्यपि न मुख्याः पाण्यादयश्चित्रे सन्ति, तथापि पाण्यादिसन्निवेशाः सन्त्येव चित्रस्य भागाः प्रत्यक्षदृष्टा , तेष्वपि युक्त यत्कृष्णादिवर्णसामान्यं मिथः सदृशतया भवतीति ।

मदिराया तर्हि मधुरैकरसायामविद्यमानस्यैव तिक्तरसस्य कथं द्रव्यान्तरगतेन तिक्तरसेन सादृश्यम्, द्रव्यान्तरस्य तिक्तरसस्य वा कथमसता तेन सादृश्यम् ? अत आह—

**एकदेशश्च मद्येऽपि सम्यक्तिक्तरसेषु च ॥ १३१ ॥**

उभयरसा हि मदिरा न केवल मधुररसा, तेन तस्य रसद्वयस्यैकदेशस्तिक्तरसो मद्यद्रव्ये तिक्तैकरसेषु द्रव्यान्तरेषु सम्यगेवेति युक्तमेव सादृश्यमिति ॥ १३१ ॥

यदपि दर्शितम्—चित्रबुद्धिनिर्भागापि सभागा प्रतीयते यथा, तथा वाक्येऽपि च युक्त भागाना सादृश्यमिति, तदसिद्धमित्याह तोऽन्तेन—

**चित्रबुद्धेस्तु नैवास्ति प्रतीतिर्भागशो मम ।**

**आकाराभावतः,**

कथ पुनरसत्या भागप्रतीतौ बुद्धेश्चित्रत्वम् ? को वा आह तस्याश्चित्रत्वम्, अर्थो हि मधुरादिश्चित्रो न बुद्धिः, अर्थस्य च सभागत्वाद् युक्त चित्रत्वम्, तदेव चाह—

**अर्थोऽत्र चित्रः सावयवः स च ॥ १३२ ॥**

तस्माद् वाक्यावयवाना पदवर्णानामविद्यमानत्वान्न मिथः सादृश्यम्, अत एव वाक्यानामपि नावयवशः सादृश्यमित्याह—

**तस्मान्न पदवर्णानामसत्त्वात् सदृशी गतिः ।**

अवयवाभावादेव च वाक्याना स्वरूपतोऽवयवसामान्ययोगात्मक सादृश्यं न सिद्ध्यतीत्याह—

**वाक्यस्यापि न सादृश्यं तत्रावयववर्जनात् ॥ १३३ ॥**

यद्यपि कथञ्चिन्निर्भागस्यापि सादृश्यं स्यात्, तथापि वर्णपदनिष्कर्षस्तावन्न युज्यते, दृश्यते च निष्कर्षः—'अस्मिन् वाक्ये पदमिदमाद्यम्, इद मध्यम्, इद-मन्त्यम्, इदं द्विपदं सूत्रम्, अमुष्मात् सूत्रादिदं पदमत्रानुवर्तते' इत्यादिः, इत्याह—

**स्याद् वर्णपदनिष्कृष्टिर्न च वाक्यसदृक्तया ।**

यदपि च वाचकानां वाक्यानामनन्तानामनित्यानां च स्वरूपेणान्वाख्याना-सम्भवादवयवभूतपदावापोद्धारेण व्याकरणप्रक्रियेत्युक्तम्; तदप्यवयवाभावादेवा-युक्तम्, न ह्यावाप्योद्धार्यमालम्बनमन्तरेणावापोद्धारः सम्भवतीत्याह—

**तेन न स्यादपोद्धारस्तेषामालम्बनाद् ऋते ॥ १३४ ॥**

यदपि व्यञ्जका ध्वनयो भिन्नाः क्रमवन्तश्चाक्रमे निर्भागेऽपि वाक्ये पदवर्णा-

कारां क्रमवती च मतिमुपजनयन्तीत्युक्तम्; तदप्ययुक्तम्, व्यञ्जकभेदस्यैवाप्रमाणत्वादित्याह—

**न च व्यञ्जकभेदोऽपि पदवर्णादृतेऽस्ति ते।**

कथम्? इत्याह—

**सूक्ष्मत्वाद्,**

अतीन्द्रिया हि ध्वनयः, न तद्भेद. प्रत्यक्षेण गृह्यते इति।

अप्रत्यक्षोऽपि ध्वनिभेदः कल्प्यत इति चेत्? तत्राह—

**अणुकल्पानां ध्वनीनां परिकल्पनात्॥ १३५॥**

व्यङ्ग्याधीना हि व्यञ्जककल्पना, व्यङ्ग्य च निर्भागं सूक्ष्मं वाक्यमिति ध्वनिरप्यणुकल्प एव कल्प्य., न बहवः क्रमवन्त इति॥ १३५॥

यदा चाणुकल्पा ध्वनयस्तदा न तैस्तादृक्कार्यनिर्माणं सम्भवति, यन्नानापदवर्णरूपेण क्रमशोऽभिव्यक्तिः, तेनाणुमात्रस्य शब्दस्य ग्रहणं स्यादित्याह—

**न च कार्यान्तरारम्भस्तैस्तादृगुपपद्यते।**
**तेनाणुमात्रशब्दांशगृहीतिः[1] केवला भवेत्॥ १३६॥**

अणुत्व च सौक्ष्म्यादौपचारिकमिति॥ १३६॥

ननु प्रेरकाणां प्रयत्नाना भेदाद् क्रमवत्त्वाच्चाप्रत्यक्षाणामपि ध्वनीनां भेदः, क्रमश्चावश्यम्भावी, तत्कथ ध्वनिभेदस्य निष्प्रमाणकत्वम्? अत आह—

**सतोरपि च नादानां पृथक्त्वक्रमवत्त्वयोः।**
**व्यङ्ग्याभावेन नैवैषामभिव्यक्तिः प्रसिध्यति॥ १३७॥**

स्यातां नाम ध्वनीना क्रमभेदौ, तथापि व्यङ्ग्यस्याक्रमत्वादभागत्वाच्च नेदृश्यभिव्यक्तिः सिद्ध्यतीति॥ १३७॥

कीदृशी तर्हि स्याद्? अत आह—

**कृत्स्नस्य यौगपद्येन भवेद् वावगतिर्न वा।**

कारणमाह—

**नैव प्राक्सकलाद् वाक्याद् ग्राह्यं किञ्चित् तवास्ति हि॥ १३८॥**

ततश्च यथैकस्मिन् गकारे पुन. पुनरुच्चार्यमाणे पुन. पुनरुपजायमानाप्यवगतिरेकरूपैव भवति न नानारूपा, तथा वाक्येऽपि स्यादिति॥ १३८॥

इदमपरं निर्भागत्वे वाक्यस्यानुपपन्नमित्याह विरुद्धमन्तेन—

**तवैवं सकलं वाक्यं न्यूनमन्यदपेक्ष्य च।**
**तद्विरुद्धम्,**

---

१. ०शब्दानां गृहीतिः—२ पु०। २. शब्दानाम्—का०।

'पटो भवति' इति सम्पूर्णं वाक्यम्, रक्तपदापेक्षया तु तदेव न्यूनमित्यनुपपन्नमिति।

कथम्? इत्याह—

**न चाभिन्ने न्यूनसाकल्यकल्पना ॥ १३९ ॥**

च-शब्दो हेतौ। भागभेदापेक्ष हि न्यूनसाकल्यकल्पनमिति ॥ १३९ ॥

किञ्च, पदवर्णाना वाक्येष्वभावमिच्छता वाक्यस्यापि 'गामानय शुक्लाम्' इत्यादेः पृथक्प्रयोगावगतसद्भावस्य 'देवदत्त गामानय शुक्लाम्' इत्यस्मिन्नभावोऽभ्युपगन्तव्य. । तथा चेद् वृक्षस्यापि वनेऽभाव· स्यादित्याह—

**पृथक्प्रसिद्धसद्भावं त्रिपदं च चतुष्पदे।**
**नास्तीति यदि कल्प्येत वृक्षो न स्यात् तदा वने ॥ १४० ॥**

चोदयति—

**पृथक्प्रसिद्धचमिथ्यात्वात् स्याद् वाक्यान्तरता यदि।**

चतुष्पदेऽपि त्रिपद वाक्यान्तरमस्त्येव, सिद्ध हि तस्य पृथक्प्रयोगवेलायामस्तित्वमिति।

दूषयति—

**वाक्याच्छब्दान्तरत्वं स्यात् तथैव पदवर्णयोः ॥ १४१ ॥**

उपसहरति—

**तस्माद् यथा महावाक्ये लघूनामनिराक्रिया।**
**तथैव पदवर्णानां नासत्त्वं वाक्यबुद्धिषु[1] ॥ १४२ ॥**

शङ्कते—

**केवलस्याप्रयोगाच्चेत्,**

न पदस्य वर्णस्य वा केवलस्य प्रयोगोऽस्ति, यतो वाक्येऽवान्तरवाक्यवत्सद्भावः स्यात्। तदेव प्रयोग.—पदवर्णविभागा मृषा, केवलाप्रयोगात्, प्रकृतिप्रत्ययविभागवदिति। तद्विकल्प्य दूषयति—

**महदर्थे लघोरपि।**

योऽयमवयवस्य केवलस्याप्रयोग. स यदि समुदायापेक्षया ततोऽनैकान्तिक इति।

स्वार्थापेक्षया तु तत्प्रयोगे पदवर्णयोरपि तत्सद्भावादसिद्धो हेतुरित्याह—

**अल्पार्थे तत्प्रयुक्तं चेत् स्वार्थे तद्वत् पदानि नः ॥ १४३ ॥**

एतच्चापाद्य महावाक्येऽवान्तरवाक्यसद्भावमुच्यते, न तु निर्भागवाक्यवादिना महावाक्येऽवान्तरवाक्यमस्ति। यदि हि स्याद्, वाक्यद्वयाद् वाक्यार्थद्वयं

१. ०द्दिषु—३ पु०।
श्लो० वा : ४०

स्वतन्त्र गम्यते। न हि महावाक्यतदर्थयोरवयवत्वेनावान्तरवाक्यं तदर्थो वा वर्त्तते, निर्भागत्वहानिप्रसङ्गादिति ।। १४३ ॥

ननु व्यवहारानौपयिकस्य वर्णस्य पदमात्रस्य कथं केवलस्य स्वार्थे प्रयोगः ? अत आह—

**यद्यपि व्यवहाराङ्गं न पूर्णं पदवर्णयोः।**
**तथाप्यस्त्येव सद्भावस्तन्मात्रे प्रयुयुक्षिते ॥ १४४ ॥**

यद्यपि व्यवहाराङ्ग त्र्यशभावनाज्ञान न पदवर्णयोः पूर्णं लभ्यते, तथाप्यस्त्येव कदाचित् प्रयोगो यदा तन्मात्रमेव प्रयुयुक्षितमिति ॥ १४४ ॥

कदा पुनरेव भवति ? अत आह—

**पदार्थमात्रमेवेष्टं[2] विशेषेऽवगते क्वचित्।**
**पदं प्रयुञ्जते केचिद् वर्णं वार्थसमन्वितम् ॥ १४५ ॥**

यथा 'कोऽत्र स्थित' इति पृष्टे 'गौः' इत्येतावत् प्रयुज्यते तथा 'का परा देवता' इति पृष्टे वर्णमेव केवलमकार विष्ण्वर्थसमन्वित प्रयुज्यत इति ॥ १४५ ॥

किञ्च, प्रयोगमात्रमेव सद्भावेऽपेक्षितम्, अपि च पदवर्णानामध्ययनवेलायां वाक्याद्विच्छिद्य स्वरूपगतमेव समुच्चारणमित्याह—

**ग्रन्थाध्ययनवेलाया स्वरूपेणा[3]वधारणम्।**
**प्रधानं पदवर्णानां विच्छिन्नानामुपाश्रितम् ॥ १४६ ॥**

यद्यपि तदा सद्भावोऽवगत, स तु वाक्यार्थप्रतीतिवेलाया तदनौपयिकतया अवबुध्यत इति चेत् ? तत्राह—

**तदा प्रसिद्धसत्त्वानां चोत्तरत्रास्ति साधनम्।**

कारणमाह—

**न हि वाक्यार्थबुद्ध्यैषां रूपं किञ्चिद्विरुद्ध्यते ॥ १४७ ॥**

कथं पुनः केवलाना कार्यमकुर्वता सत्त्वम् ? अत आह—

**यद्यप्येषां न सामर्थ्यं केवलानां तदुद्गमे।**
**अविरुद्धस्तु सद्भावः कार्याशक्तरथाङ्गवत् ॥ १४८ ॥**

तेन केवलाना कार्यं प्रत्ययोगो रथाङ्गेनेवानैकान्तिक इत्याह—

**केवलस्याप्रयोगित्वं तेनानैकान्तिकीकृतम्।**

शङ्कते—

**कार्याद् ऋतेऽपि दृष्टिर्या[4],**

---

१. पूर्वं०—मु० पा०।
२. पदार्थमात्रमेवेष्ट्वा—का०।
३. स्वरूपस्य—का०।
४. अपि तद्दृष्टि—का०।

परिहरति—

**सा शब्देऽप्युपपादिता ॥ १४९ ॥**

यत्पुन परैरुक्तम्—यदि वाक्ये पदे च पदात्मको वर्णात्मकश्च भेद स्यात् ततो वर्णानामप्यवयवशो भेद स्यात्, न हि निरवयवस्यान्यावयवत्वं सम्भवति तन्त्वादिवत्, ततश्चैतद्भागानामपि भागान्तरापत्त्यानवस्थानात् सर्वाभावः स्यादिति; तदुपन्यस्य दूषयति—

**सद्भावे पदवर्णानां भेदो यः परमाणुवत् ।**
**सर्वाभावस्ततश्चेति सेयं बालबिभीषिका ॥ १५० ॥**

**परमाणुवदिति** । यथा **शाक्यैः** सर्वाभावप्रतिपादनाय परमाणूनामपि षट्केन युगपत्सम्बन्धात् परमाणो षडशतेत्येव भेदप्रसञ्जन कृत तथैवेत्यर्थः ।। १५० ॥

कथं बालविभीषिका ? अत आह—

**यथा तन्त्वादयः सिद्धाः परमाणुषु सत्स्वपि ।**
**तथा सत्स्वपि भागेषु न वर्णादि विरोत्स्यते ॥ १५१ ॥**

यदेव हि परमाणुभेदापादनेन सर्वाभाव प्रसञ्जयता **शून्यवादिनामुत्तर** तदेव भवतामपि, यथा च परमाणुषु सत्स्वपि तेषा परैरापादितमशभेदं परिहृत्य तन्त्वादीनि कार्यद्रव्याणि स्थापितानि तथा सत्स्वपि वर्णेषु तेषा भागभेदं परिहृत्य वर्णादिस्थापनान्न सर्वाभाव इति ॥ १५१ ॥

कथम् ? इत्याह—

**किञ्चित् सावयवं दृष्ट्वा न च सर्वं प्रसज्यते ।**

कः पुनर्भागभेदस्य परिहारः ? तद्दर्शयति—

**घटसावयवत्वेऽपि न भागः परमाणुषु ॥ १५२ ॥**

अतो नावश्य भागान्तरैर्भवितव्यम् । पदवद् वर्णानामपि भागो निष्प्रमाणक एव, निर्भागैरपि तैः पदारम्भसद्भावात् । परमाणुभागाभ्युपगमे वा को दोषः ? दृष्टविरोध । अनन्तावयवे हि कार्यद्रव्यस्य परिमाण प्रत्यक्षदृष्ट विरुध्येतेत्युक्तम्, विरुध्यताम्, अत एव शून्यता प्रमाणार्थ इति चेत् ? तन्निरस्त **शून्यवादे** । कथं पुनर्निर्भागस्य परमाणो. प्रतिदिशमवस्थितैश्चतुर्भि परमाणुभिरुपर्यधोऽवस्थिताभ्या च परमाणुभ्या सयोग., असयुक्तस्य वा कथ कार्यद्रव्यारम्भकत्वम्, को वा दोषः सयोगे, शक्यते हि निर्भागस्यापि परमाणोः नैरन्तर्येण प्राच्यादिषु दिक्षु परमाण्वन्तरैरवस्थातुमित्यलमतिविस्तरेण ।

तस्मात् तन्त्वादिवत् प्रत्यक्षसिद्धो वर्णपदभेदो न वर्णाशानुपपत्त्या शक्यते बाधितुमित्याह—

**तदत्र पदवर्णानां भेदं प्रत्यक्षसाधितम् ।**
**वर्णाशानुपपत्त्या कः शक्नुयादपबाधितुम् ॥ १५३ ॥**

अत्र बहुभिः संहत्यैककार्यकरणादवयवावयविव्यवहारो घटादिवत्त्ववय-व्यारम्भः **स्फोटे** निराकृत इति ॥ १५३ ॥

दृष्टान्तोऽपि साध्यविकल इत्याह—

**असत्त्वे ये च दृष्टान्ताः प्रकृतिप्रत्ययादयः ।**
**असिद्धास्ते, यतो लोके तत्सद्भावः प्रतीयते ॥ १५४ ॥**

ननु समुग्धमेव पदं पदार्थस्य वाचक न तु तत्र प्रकृतिप्रत्ययरूपोऽवान्तर-भेदोऽस्ति, स तु प्रक्रियामात्रतया **वैयाकरणैः** कल्पितो न तु तात्त्विक. ? अत आह—

**नैव हि प्रक्रियामात्रं शास्त्रतः परिकल्प्यते ।**

कारणमाह—

**प्रत्यक्षं ह्येव तद्रूपं वाच्यमप्यन्यवाच्यवत् ॥ १५५ ॥**

एतदेव विवृणोति—

**क्रमेण हि प्रतीयेते प्रकृतिप्रत्ययौ पदे[1] ।**
**तदागमे तदर्थोऽपि स्वसंवेद्यः क्रमेण नः ॥ १५६ ॥**

क्रमवतोः प्रकृतिप्रत्ययाशयोः प्रकृत्यागमे शाखादिमन्‌ प्रत्ययागमे च संख्या-कारकयो. प्रत्ययादस्ति वाचकविभाग इति ॥ १५६ ॥

तथा अन्वयव्यतिरेकाभ्यामपि तयोर्र्थविभागो गम्यत इत्याह—

**अन्वयव्यतिरेकाभ्यामप्यर्थो गम्यते तयोः ।**

तावेव दर्शयति सार्द्धद्वयेन—

**अमाद्युपजनापाये वृक्षार्थो ह्यनुगम्यते ॥ १५७ ॥**
**वृक्षं वृक्षेण चेत्यत्र वृक्षत्वं तावदेव हि ।**
**कर्मत्वं हीयते पूर्वं करणत्वं च जायते ॥ १५८ ॥**
**तथा वृक्षं घटं चेति कर्मत्वमनुगम्यते ।**
**वृक्षत्वं हीयतेऽन्या च घटधीरुपजायते ॥ १५९ ॥**

ततः किम् ? इत्यत आह—

**तत्र योऽन्वेति यं शब्दमर्थस्तस्य भवेदसौ ।**

कथम् ? इत्याह—

**अन्यथानुपपत्त्या हि शक्तिस्तत्रावतिष्ठते ॥ १६० ॥**

यदि वृक्षं वृक्षेणेत्यादिषु वृक्षांशोऽनुवर्त्तमानः पृथगर्थः स्याद् वृक्षं घटमित्यादिषु चामंशस्ततः कूपादिष्वप्यूपाशः पृथगर्थः स्यात्, न चैवमिष्टम् । अतो वृक्षमित्या-

१. यदा—३ पु० ।

दिष्वपि प्रत्यस्तमितविभागमेव पदमर्थस्याभिधायकमिति यत्परैरुक्तं तदनुभाष्य परिहरति—

**यत् कूपयूपसूपादौ समानेऽप्युपबन्धने ।**
**नास्त्यर्थानुगमः कश्चित् तन्न शब्दोऽपराध्यति ॥ १६१ ॥**

कथमनपराधः ? अत आह—

**नान्वयव्यतिरेकाभ्याम् अपूर्वार्थावधारणम् ।**
**संसृष्टेऽवगतेऽर्थे हि ताभ्यां शक्तिर्नियम्यते ॥ १६२ ॥**

यदि शब्दान्वयव्यतिरेकावपूर्वार्थस्यान्वयं व्यतिरेकं च कुर्यातां ततः कूपादावूपशब्दोऽनुवर्त्तमानोऽर्थान्वयमकुर्वन्नपराध्येत, न तु शब्दान्वव्यतिरेकावपूर्वस्यार्थस्य कल्पकौ, किन्तु अनेकस्मिन्नर्थे ससृष्टेऽवगते शक्तिनिष्कर्षमात्रमेव ताभ्यां गम्यत इति ॥ १६२ ॥

एतदेव दर्शयति—

**तेनानेकात्मकाच्छब्दाद् अनेकार्थावबोधने ।**
**सिद्धे यदागमे योऽर्थः स तस्यैवावधार्यते ॥ १६३ ॥**

वृक्षमित्यत्र शाखादिमान्कर्मत्व च गम्यते, वृक्षेणेत्यत्र वृक्षांशान्वये शाखादिमानन्वेति, द्वितीयापाये च कर्मत्वापाय, तृतीयोपजने च करणमुपजन्यते, तेन मन्यामहे—यदन्वये यस्यान्वयः यस्यापाये यस्यापायो यदुपजने यस्योपजनः तस्य तत्र शक्तिरिति । न तु शब्दान्वयेनावश्यमर्थान्वयेन भवितव्यमित्यस्माभिरुच्यते, येन कूपादिषु तदभावादुपालभ्यमर्हीति ॥ १६३ ॥

ननु अन्वयव्यतिरेकाभ्या कारणत्वं भवति, यद्येव[1] स्याद् गवाश्वसमागमादुद्गच्छतो रेणुचक्रस्य तत्पूर्वक्षणवर्त्तिनी पिपीलिकापङ्क्ति. कारण स्यात् ? अत आह—

**एवं पिपीलिकापङ्क्ते रेणुचक्रान्वये सति ।**
**गजाश्वोपजनापायेऽप्यतादर्थ्यमशक्तितः ॥ १६४ ॥**

गवाश्वोपजनापायवेलायां तद्वशादेवोपजनापायौ भजमानेन रेणुचक्रेण सत्यपि यादृच्छिके पिपीलिकापङ्क्तेरन्वये तादर्थ्यं रेणुचक्रकारणत्वं तस्या नास्ति, असामर्थ्याद्, अन्वयव्यतिरेकयोश्चान्यथासिद्धत्वाद्, असामर्थ्यं चासत्यामपि तस्यां रेणुचक्रस्य गवाश्वसमागमे दर्शनात् । **अपिशब्दश्च** 'सति' इत्येतेन योजनीय इति ॥ १६४ ॥

नन्वेव गवाश्वयोरप्यकारणत्वं स्यात्, अभावेऽपि तयोर्गजाद्युपजने रेणुचक्रदर्शनात् ? अत आह—

---

[1] यदि न—मु० पा० ।

**अस्त्येव च गजाश्वेषु सामान्यं रेणुकारणम् ।**
**दृढप्राणिविशेषत्वं समस्तव्यस्त[1]लक्षितम् ॥ १६५ ॥**

न केवलमसत्यामपि पिपीलिकापङ्क्तौ दृष्ट, सत्यामपि न दृश्यते, अतो हस्त्याद्यन्वयेऽपि न तस्याः कारणत्वमित्याह—

**दृष्टा पिपीलिकापङ्क्तिः केवला रेणुवर्जिता ।**
**हस्त्याद्यन्वयिनी तेन न हेतुत्वं प्रपद्यते ॥ १६६ ॥**

ननु पिपीलिकापङ्क्तिवदेव न केवलयो. प्रकृतिप्रत्यययो. अर्थप्रत्यायनं दृष्टमिति, अत. कथ तयो सामर्थ्यम् ? अत आह –

**प्रकृतिप्रत्ययादीनां केवलाविनियोगतः ।**
**यथैवार्था न दृश्यन्ते तथा चानर्थमप्यदः ॥ १६७ ॥**

न हि तयो पिपीलिकापङ्क्तिवत् केवलयोर्दर्शनमस्ति, यतोऽसामर्थ्यं गम्यते, सामर्थ्यं तु सहप्रयुक्तयोरप्यन्वयव्यतिरेकाभ्या विविच्यत इति ॥ १६७ ॥

सम्प्रति **स्फोटवादी** पदतद्भागानाम[2]न्वयव्यतिरेकाभावादेवानर्थक्यमापादयति—

**नामाख्यातादिसाकल्य[3]वैकल्यानुगमे सति ।**
**तदर्थासम्भवो दृष्टः पदवाक्यान्तराश्रयः ॥ १६८ ॥**

नामपदमाख्यातपदमित्यादिरूपेण पदान्तरत्वम्, पदभेदादेव च वाक्यान्तरत्वम् । **असम्भव**ग्रहणमुपलक्षणम् । साकल्यानुगमे तदर्थानुगमाभावादन्वयो नास्ति, वैकल्यानुगमे तु सकलस्य पूर्वरूपस्य व्यतिरेकेऽपि तदर्थसम्भवाद् व्यतिरेकोऽपि नास्तीति ॥१६८ ॥

अन्वयाभावोदाहरणानि सक्षिपति—

**विप्राश्वः पचते यातं राजहस्तिन्यगादिति ।**

पचते यातमित्यत्र यातमयातमिति द्वेधावच्छेदं दर्शयिष्यतीति ।

व्यतिरेकाभावोदाहरणानि सक्षिपति—

**तथान्यरूपमन्यादृक् राज्ञा दध्यत्र गामिति ॥ १६९ ॥**

पूर्वाणि विवृणोति षड्भिः—

**विप्रशब्दौ क्वचिद् दृष्टावुपसर्गार्थवाचिनौ ।**
**समुदायस्तथान्यत्र ब्राह्मणत्वावबोधकः ॥ १७० ॥**
**अश्व इत्यपि नामेदमाख्यातं लुङि चेदृशम् ।**
**आख्यातं पचतेशब्दः पच ते इति वा द्वयम् ॥ १७१ ॥**

---

१. समस्तव्यक्ति०—का० ।
२. ०तद्भावाना०—मु० पा० ।
३. ०साकल्यं०—मु० पा० ।

**स्त्रीद्वित्वं पुंबहुत्वं वा ते षष्ठ्यथ चतुर्थ्यथ ।**
**पचते इति सर्वं वा चतुर्थ्यन्तं शतुः पदम् ॥ १७२ ॥**
**यातं लोण्मध्यमद्वित्वमयातं लङि वा भवेत् ।**
**कर्तृनिष्ठाद्वितीयान्तं प्रथमान्तं नपुंसकम् ॥ १७३ ॥**
**राजहस्ती समासो वा राजलोण्मध्यमोऽपि वा ।**
**हस्तिनीत्यथ सप्तम्यामथ स्त्रीप्रत्ययान्तरम् ॥ १७४ ॥**
**अगादिति लुङन्तं स्यादगो वा पञ्चमीपरः ।**
**तानस्तीत्यथ वाप्येवं क्विबन्तोऽयं समासभाक् ॥ १७५ ॥**

अयातमित्यत्र यातशब्दस्य साकल्यानुगमे स्वार्थासम्भवः, तथा द्वयोरपि यातमयातमिति पदयोः प्रत्येकमाख्यातनिष्ठाप्रथमाद्वितीयान्तत्वेन त्रेधा विभागे तत्तदर्थव्यभिचार, राजहस्तीत्यत्र हस्तीत्येतदेव प्रतीकेनोपात्त स्त्रीप्रत्ययान्तरमिति सम्बुध्यन्तमित्यर्थः ॥ १७०-१७५ ॥

तदेवमेकरूपेऽपि पदे नानार्थविकल्पेन तत्तदर्थानुगमाभाव, शब्दभेदानामपि पदानां न कश्चिदर्थो व्यवस्थित शक्यो निश्चेतुम्, तदनिश्चये च तद ीनस्य वाक्यार्थस्याप्यनिश्चय· स्यादित्याह —

**एवमर्थविकल्पेन भेदेऽर्थो[1] नावतिष्ठते ।**

निर्भागवाक्यवादिना तु प्रत्यर्थं वाक्यभेदान्नास्ति व्यभिचार इत्याह—

**निर्भागे वाचके वाक्ये समस्तादस्ति निर्णयः ॥ १७६ ॥**

तदुपसहरति—

**तस्मान्न यो यमन्वेति सर्वदा तेन सोऽर्थवान् ।**
**अनर्थकत्वविज्ञानात् तद्रूपेऽपि पदान्तरे ॥ १७७ ॥**

व्यतिरेकव्यभिचार विवृणोति—

**तथा राजार्थवान् दृष्टो राज्ञेत्यत्र च नास्त्यसौ ।**
**दधि गौरिति नापीमौ[2] विद्यो दध्यत्र गामिति ॥ १७८ ॥**

अन्वयव्यभिचारेऽस्तु नामावाचकत्वमपि, सकले कारणे सति कार्यानुत्पत्त्ययोगात्, व्यतिरेकव्यभिचारे तु को दोष·, सम्भवति च पूर्वपदव्यतिरेके पदान्तरादेवार्थावगति· ? अत आह—

**अन्यस्मिञ्ज्ञातसम्बन्धे निषिद्धोऽन्यश्च वाचकः ।**

सत्यमन्यत्र तरुवृक्षादिवत् पदान्तरत्व यत्पूर्वपदव्यतिरेकेऽपि पदान्तरादेव तदर्थप्रतीतिः स्यात्; तथा हि सति दधिशब्दे ज्ञातसम्बन्धे दध्यत्रेत्यत्रार्थप्रतीतिर्न स्यादिति ।

---

१. भेदार्थो—मु० पा० ।     २. नापीष्टे—३ पु० ।

गृह्यतां तर्हि तस्यापि सम्बन्ध इति चेत् ? असत्यपि तस्मिन्नर्थप्रतीतिदर्शनात् । न च सम्भवत्यानन्त्यादित्याह—

**न च सर्वविकाराणामानन्त्यात् सङ्गतीक्षणम् ॥ १७९ ॥**

तदेवं पदत्वस्य तदेकत्वस्य च पारमार्थिकस्याभावात् कल्पनीयमेकत्वमङ्गीकर्त्तव्यम् ॥ १७९ ॥

एवं च सर्वोऽयं पदपदार्थविभागः काल्पनिको न वास्तव इत्युपसंहरति द्वयेन—

**तस्मादनर्थकैरेव विना जातिगुणान्वयात् ।**
**प्रकृतिप्रत्ययाद्यन्तपदभागविवर्जितैः ॥ १८० ॥**
**वाक्यैरेव विशिष्टोऽर्थः स्वतन्त्रैः प्रतिपाद्यते ।**
**भागशः कथितोपायैरश्वकर्णाजकर्णवत् ॥ १८१ ॥**

स्वतन्त्रैः पदतद्भागानपेक्षैर्निर्भागैरेव वाक्यैर्जातिगुणक्रियात्मकान्वयाप्रतिपादनादनर्थकैर्निर्भाग एव वाक्यार्थः प्रतिपाद्यते, अश्वकर्णपदेनेव वृक्षः, कथं पुनस्तेषामनन्तानां सम्बन्धग्रहणं भागशः कथितोपायैः पदात्मकानां भागानामसतामेव सत्त्वमेकत्वशून्यानां च दधिशब्दप्रभृतीनामेकत्वं कल्पयित्वा यः पदार्थैः सम्बन्धः कथितः तेनोपायभूतेन गृहीतसम्बन्धान्येव वाक्यानि वाक्यार्थं प्रतिपादयन्तीति ? ॥ १८१ ॥

एवमाक्षिप्ते सत्यन्वयाभावं तावत् परिहरति—

**अत्र ब्रूमः पदात्मा न सर्वेष्वेतेषु भिद्यते ।**

नहि विप्राश्वादिषु तत्पदाऽन्वये सत्येव पदार्थानन्वयः पदान्तरत्वान्नामाख्यातानामिति ।

कथं पुनर्वर्णात्मकं पदं तदभेदे भिद्यते ? अत आह—

**केनचिद् धर्मभेदेन जरा राजेतिवत् क्रमात् ॥ १८२ ॥**

नामत्वाख्यातत्वादिधर्मभेदेनेति ॥ १८२ ॥

केन पुनरुपायेनायं धर्मभेदोऽवगम्यते येन पदभेदावधारणम् ? तद् दर्शयति—

**पदावधारणोपायान् बहूनिच्छन्ति सूरयः ।**
**क्रमन्यूनातिरिक्तत्वस्वरवाक्यस्मृतिश्रुतीः ॥ १८३ ॥**

क्रमान्यत्वे न्यूनत्वे वा विकलस्य [2]वाचकत्वाभावानर्थावगतेरनुपपत्तिः परस्यापि सम्मतैव, दृष्टान्तार्थं तु तयोर्ग्रहणम् । अतिरेके च पदान्तरत्वम् 'अवध्यन्तरतस्तत्र' (श्लो० वा० वा० २२२) इष्यते । स्वरस्तु बहुव्रीह्यादिनिर्णयोपायतया व्याकरणसिद्ध एव, केवलास्तु वाक्यश्रुतिस्मृतयः परिशिष्यन्ते ॥ १८३ ॥

---

१. कल्पितो०—२ पु० । २. वाचकत्वादर्था०—२ पु० ।

तत्र वाक्यमुदाहरति द्वयेन—

**शेषानर्थान् परिच्छिद्य स्वरूपैर्वाक्यगोचरान् ।**
**तत्सम्बन्धानुरूपार्थवाचित्वेनान्यनिर्णयः ॥ १८४ ॥**
**तत्रावधृतनामार्थैराख्यातापेक्षणेन तत् ।**
**आख्याते सति नामत्वं भवेदुभयसम्भवे ॥ १८५ ॥**

पदं हि द्वेधा सम्भवद्वोक्तुकामः पचत इत्याख्यात निर्णीयते, पचते दक्षिणां देहीत्यत्र नाम, सोऽयं पदान्तरैक[1]वाक्यवशेन निर्णय इति ॥ १८५ ॥

स्मरणस्येदानी निर्णयहेतुत्वं दर्शयति द्वयेन—

**यथा च पुरुषाकारे समानेऽप्यवगम्यते ।**
**स्मरणाद् ब्राह्मणत्वादि प्रकृतिप्रत्ययान्वयात् ॥ १८६ ॥**
**तथान्वाख्यानभेदेन प्रकृतिप्रत्ययादिभिः ।**
**नामाख्यातव्यवस्थानं स्मरणेनोपलक्ष्यते ॥ १८७ ॥**

**प्रकृतिप्रत्ययाऽन्वयात् ।** मातापितृसम्बन्धादित्यर्थः । प्रकृतिशब्दो हि कारण-वचन , प्रत्ययशब्दो ऽपि । तत्र प्रकृतिशब्द· स्त्रीलिङ्गो मातरि वर्त्तते, प्रत्यय-शब्द. पितरि । यथा मातापितृसम्बन्धानुभवनिमित्तात् तत्स्मरणात् समानेऽपि मनुष्यत्वे ब्राह्मणत्वादिक विविच्यते तथा वैयाकरणप्रवरेण 'अश्वस्त्व देवदत्त' इत्युक्ते अश्व इति पद सकीर्णलोकप्रयोगमात्रदृष्टाश्ववचनतया नामत्वेनापि सभाव्य-मानं भूते लुङ् 'च्लि लुङि' (पा० सू० ३. १ ४३) 'जॄस्तम्भु' (पा० सू० ३. १. ५८) इत्यादिना च्लेरडादेशः 'श्वयतेर.' ( पा० सू० ७. ४ १८ ) इत्यादिव्याकरण स्मृत्यन्वाख्यानवशेन लुङि मध्यमैकवचनं निर्णीतमाख्यात निर्णीयते ॥ १८७ ॥

चोदयति—

**अप्राप्तस्मृत्युपायानां[2] विवेकोऽयं न जायते ।**

परिहरति—

**अज्ञाते पितृसम्बन्धे तुल्योऽसौ ब्राह्मणादिषु ॥ १८८ ॥**

निरुपायानामवगतिर्न वस्त्वभावं साधयतीति ॥ १८८ ॥

सम्प्रति श्रुति विवृणोति—

**तथा श्रुत्यैव सन्दिग्धं किञ्चिन्निर्णीयते पदम् ।**

किमिदं श्रुतिरिति ? सामानाधिकरण्यमित्यर्थः । तदाह—

**सामानाधिकरण्येन प्रसिद्धाख्यातनामभिः ॥ १८९ ॥**

यातः पुनरायातीत्यत्राख्यातसामानाधिकरण्याद् यात इति कर्तृनिष्ठाप्रथ-

---

१. नामधात्वन्तरैक०—२ पु० । २. ०श्रुत्युपायाना—का० ।

मान्तं नामपदं भवति, यातौ देवदत्तयज्ञदत्तावित्यत्र द्विवचनान्तनामपदसामानाधिकरण्यादाख्यातमिति ॥ १८९ ॥

चोदयति—

**नन्वयं न विभागः स्यात् पदजातिमनिच्छतः।**
**नामाख्यातमतिग्राह्याः[1] कथं वर्णास्त एव ते ॥ १९० ॥**

यथा हि गवादिपदेषु गोशब्दत्वादिजातिरेकैकस्मिन् वर्णेऽनुपलम्भादसमवायात् क्रमवर्तिना च साहित्यासभवाद् गोशब्दावयव्यभावाच्च निराश्रयत्वान्नास्तीत्युक्तम्, तथा नामत्वाद्यपि सामान्य भवन्मते नास्ति यद्वाक्यादिभिर्निर्णीयते, वर्णविलक्षणाः कथं नामाख्यातादिविचित्रबुद्धिविषया स्युरिति ॥ १९० ॥

परिहरति—

**केन वा नेष्यते जातिः पदजातचतुष्टये।**
**सुप्तिङ्कृत्तद्धिताः सन्ति तथा धात्वादिजातयः ॥ १९१ ॥**

सन्त्येव नामाख्यातोपसर्गनिपातेषु नामत्वादीनि, तथा पदभागेऽपि प्रकृत्यंशे धातुत्वप्रातिपदिकत्वे, प्रत्ययांशेऽपि सुप्तिङ्कृत्तद्धितत्वादीनि सन्त्येवेति ॥ १९१ ॥

नन्वक्षराण्येव पदमिति वर्णैः सह पदस्यैक्य प्रतिपादयता **भाष्यकारेण** वर्णादन्यत् सर्व निराकृतम्, कथ नामत्वाद्यवगम्यते ? अत आह—

**पदैक्येऽप्यविरुद्धेयमत्यन्तानतिरेकिणी।**
**वर्णा एवेति च ग्रन्थे निषिद्धात्यन्तभिन्नता ॥ १९२ ॥**

अत्यन्तभिन्नस्फोटादिनिराकरण तत्र कृतम्, नामत्वादिजातिस्तु शब्दवदनतिरेकिणी न तत्र निराकृतेति ॥ १९२ ॥

आश्रयानुपपत्ति समाधत्ते—

**भ्रमणत्वादिवच्चासौ व्यज्यते क्रमवर्त्तिभिः।**

अथाप्यवश्यमेकेनैव[2] वक्तव्यम्, तदपि सम्भवत्येवेत्याह—

**अन्त्यवर्णेऽथ वा व्यक्तिः पूर्वसंस्कृत्यपेक्षिणि ॥ १९३ ॥**

गोशब्दत्वं तु सम्भवत्यप्याश्रये प्रमाणाभावादनङ्गीकृतम्। उक्तं हि—

वर्णसामान्यवच्चापि न तत्कल्पनमर्हति।
वर्णात्मनामभेदाच्च सिद्धा सामान्यधीरपि ॥ (श्लो० वा० स्फो० ६६-६७) इति।

मा वा भूवन् नामत्वादिजातयः, तथापि न तद्बुद्धीना निरालम्बनत्वमित्याह—

**यद्वा येनैव धर्मेण[3] व्यङ्क्तुं जात्यन्तरं क्षमाः।**
**वर्णाः स्वरूपसाम्येऽपि तेनाख्यातादिबुद्धिषु ॥ १९४ ॥**

---

१. नाना०—का०। २. एकत्रैव—२ पु०। ३. रूपेण—का०।

कः पुनरसौ धर्मः ? अर्थविशेषाभिधानमेव । 'पचते' पदस्य हि पदान्तरैकवाक्यतया तत्सम्बन्धानुरूपार्थवाचित्वमेव निर्णीयते, तदधीना चाख्यातत्वादिबुद्धिः। एवं चेत्तद्वाचित्वमेवाख्यातत्वादिबुद्धेरालम्बनमस्तु, किं जात्यन्तराभ्युपगमेन, कुतश्चानेकशक्तियुक्तस्य पदस्य तत्तच्छक्तिविशिष्टरूपेण तत्तदर्थाभिधायित्वम् । शक्तिविशेषस्तु स्वस्ववाक्यश्रुतिस्मृतिभिरभिव्यज्यतेऽक्षादिशब्दानामिवार्थप्रकरणादिभि । स्फोटवादिना चावश्यम् 'अक्षमानय' इत्यादिषु वाक्यविशेषाभिव्यञ्जनमर्थप्रकरणादिभिराश्रयणीयम्, शक्तिविशेषाभिव्यक्तिरेव तथास्तु, न च व्यभिचारः, तच्छक्तिविशिष्टात्मनाभिव्यक्तस्य सर्वदैव तदर्थान्वयादिति ॥ १९४ ॥

अतश्च यद्यपि पचते यातमित्यादिष्वविलक्षण एव वर्णसमुदायः, न तु वनपङ्क्त्यादिवज्जङ्गमस्थावरसमुदायभेद , तथाप्यार्थोपाधिवशादाख्यातादिव्यहार. सिध्यतीत्याह—

**वनपङ्क्त्यादिवच्चैषु समुदायेष्वसत्स्वपि ।**
**भिन्नाख्यातादिसामान्यव्यवहारो भविष्यति ॥ १९५ ॥**

एव धात्वादिबुद्धीनामपि क्रियावाचित्वाद्युपाधिरेवालम्बनमित्याह—

**धातुप्रत्ययतद्वाच्यसामान्यानामियं गतिः ।**
**तद्धिताख्यातकृद्रूपं नित्यं हि स्मर्यते जनैः ॥ १९६ ॥**

तद्वाच्यत्वग्रहण दृष्टान्तार्थम् । यागादिषु हि क्रियाशब्दो जातिवचनः, धात्वर्थादिशब्दास्तु धात्वभिधेयतोपाधिका एवेति ॥ १९६ ॥

ननु कृत्रिमसञ्ज्ञामात्रनिबन्धनोऽयं विभाग ? न कृत्रिम., तथा हि, नामकरणे कृदन्तपरिग्रह तद्धितवर्जनं च स्मर्यते, तच्च स्मरणं मूलान्तराभावाद्वेदमूलम्, अतो वेदेऽप्यस्ति कृदादिव्यवहार. । तथा विभक्तिमुक्त्वा प्रयाजेन वषट्करोतीति विभक्तिव्यवहारोऽपि वेदे दृश्यते, तथा च नाय विभाग कृत्रिम इति । नापि प्रक्रियामात्रार्थः शकारपकाराद्यनुबन्धनवत् कल्पित इत्याह—

**न चान्वाख्यानमात्रेण कल्पितं तच्छबादिवत् ।**

कारणमाह—

**प्रयुज्यते हि यद्रूपं तदुपाये[1] न[1] तिष्ठति ॥ १९७ ॥**

यदि परमार्थिक. प्रकृत्यादिविभाग', कथ तर्हि प्रकृतिप्रत्यययोरवधि प्रति विवाद , केचिद् यत्तदेतेभ्यो डाबत स्मरन्ति, केचित्तु वतुपमाकारादेशं च अधुना दानी च, न चेद पारमार्थिकत्वे घटते, तथा शबादिकं विकरण प्रकृत्यङ्गं केचित् प्रत्ययाङ्गम्, अत आह—

---

१–१. तद्रूपा येनेति पाठान्तरम् ।

**अवध्यग्रहणं यत् तु प्रकृतिप्रत्ययौ प्रति।**
**अन्वाख्यानविसंवादादित्येतच्च न दुष्यति ॥ १९८ ॥**

कथं न दुष्यति ? इत्यत्राह—

**तत्र ह्याप्तनरोक्तीनां प्रामाण्यमुपपद्यते।**

ननु सम्भावितमूल वाक्यमाप्तविशेषात् प्रमाणं भवति, न चेहान्तराङ्गत्वावधारणे किञ्चिन्मूल सम्भवति ? अत आह—

**यद्वा तुल्यबलत्वेन विकल्पेन मतान्तरम् ॥ १९९ ॥**

विकल्पोऽपि सिद्धे वस्तुनि न सम्भवत्येव ? अतः परिहारान्तरमाह—

**प्रकृतिः प्रत्ययांशो[1] वा कश्चित् तावन्न भिद्यते।**
**शिष्टे विकरणादौ तु यथेष्टाङ्गाङ्गिकल्पना ॥ २०० ॥**

पूर्वापरभागयोस्तावत् तदागमन्यायादन्वयव्यतिरेकाभ्या च भेदेनैवार्थाभिधायित्वं निश्चितम्। मध्यवर्त्तिनस्तु विकरणादेरन्यतराङ्गत्वानिर्धारणेऽपि न किञ्चिद् दुष्यतीति ॥ २०० ॥

मा भूदन्यतरस्याप्यङ्गम्, यथा धूमादौ धूमवत्त्वमेव गमकं न पाण्डुरत्वम्, अग्न्यनग्निसाधारणत्वात्, तथा विकरणानामप्यवगत्यनौपयिकमेवास्त्वित्याह—

**धूमादावपि वह्न्यंशे कश्चिदंशोऽनुमापकः।**
**अन्यः साधारणो यद्वत् तद्वदत्र भविष्यति ॥ २०१ ॥**

यद्येवम्, विकरणादिकमुद्धृत्य किमिति प्रयोगो न भवति ? आह—

**यथा च नित्यरूपत्वान्न तत्रांशान्तरोद्धृति.।**
**तथात्रागमकोऽप्यंशो नित्यत्वे न व्यवस्थितः ॥ २०२ ॥**

यदि विभागेनैव प्रकृतिप्रत्ययाभ्यामर्थद्वयाभिधानम्, यत्र तर्हि प्रकृतिमात्रं प्रयुज्यते अग्निचिदित्यादौ, यत्र वा प्रत्ययमात्रमधुनेति, तत्र कथमर्थद्वयाभिधानम्? अत आह द्वयेन—

**यत्र प्रत्ययलोपेन प्रकृतिः स्यात् क्विबन्तवत्।**
**शुद्धः प्रकृतिलोपेन प्रत्ययो वाधुनादिवत् ॥ २०३ ॥**
**तन्मात्रस्य द्विशक्तित्वं[2] तत्र शब्दस्वभावतः।**
**वाक्यार्थे तद्धितान्तादिपदसामर्थ्यभेदवत् ॥ २०४ ॥**

मतान्तरद्वयमुपन्यस्यति—

**एकदेशानुमानेन केचिदाहुर्द्वयार्थताम्।**
**अपरेऽर्थैकदेशेन ब्रुवतेऽन्यार्थलक्षणाम् ॥ २०५ ॥**

---

१. प्रकृतिप्रत्ययांश—का०। २. शक्तत्वम्—३ पु०।

प्रकृत्या प्रत्ययस्तेन वा प्रकृतिरनुमीयते, प्रकृत्यर्थेन चाभिहितेन प्रत्ययार्थो लक्ष्यते, तेन च प्रकृत्यर्थ इति ॥ २०५ ॥

लक्षणा तावद् दूषयति—

**तत्त्वयुक्तं यतो नास्ति लक्षणारूपता मतेः।**
**मुख्यत्वेनैव बुद्धिर्नः क्विबन्तादिषु जायते ॥ २०६ ॥**

इतश्च न[1] लक्षणेत्याह—

**लक्षणादिप्रवृत्तिश्च न शास्त्रेणानुगम्यते[2]।**

न हि लाक्षणिकी गौणी वा वृत्ति शास्त्रेणानुगम्यते, अग्निर्माणवक इत्यादावदर्शनादिति।

किञ्च, मुख्यलाक्षणिकादिवृत्तिसङ्करे वाचनिकनियमार्थमेव व्याकरणम्, कथं तेन लक्षणादिकमनुगम्येत ? इत्याह—

**तत्सङ्करे च तेनैव वाच्यवाचकनिर्णयः ॥ २०७ ॥**

भवतु वा अनादिप्रवृत्ताया लक्षणावृत्तेरेव षष्ठीसमासादावनुगम, तथापि नेह लक्षणा सम्भवति, सविद्विरोधादित्युक्तम्, इद तु स्वारस्यमात्रमिति ॥ २०७ ॥

"एकदेशानुमानेन" इत्येतद् दूषयति—

**न च तेन सहैतस्य विज्ञाता सहवाचिता।**

न हि केवलप्रत्ययस्य कदाचिदपि प्रयोगोऽस्ति, यतस्तेन ज्ञातसाहचर्याच्चिनोतिस्तमनुमापयेत्, 'अधुना' इति वेदशब्देन विनैव सर्वदा प्रयुज्यमानः कथमिदंशब्दमनुमापयेदिति।

अथ लोकप्रयोगाभावेऽपि क्विप्प्रत्ययो[3]न्वाख्याने दृष्टत्वाच्चिनोतिनानुमितोऽर्थं प्रतिपादयतीति उच्यते ? तत्राह—

**लोकप्रयुक्तशब्दार्थो नोपायत्वाच्च मुच्यते ॥ २०८ ॥**

लोकप्रयुक्तस्यैव हि शब्दस्यार्थो वाक्यार्थोपायतामनुभवति, न त्वन्वाख्यानगतस्य[4] कदाचिदप्यर्थमप्रतिपादयतो[5]ऽर्थवत्त्वाभावादिति ॥ २०८ ॥

किञ्च, चिन्वन्त्वित्यादौ प्रयोगे चिनोतिराख्यातेन सह दृष्ट इति आख्यातमपि तेनानुमीयेत, तेन तदर्थोऽपि विध्यादिरग्निचिदित्यत्र प्रयोगे प्रतीयेतेत्याह—

**आख्यातप्रत्ययेनापि सहासावुपलक्षितः।**
**कामं तदीयमप्यर्थं गमयेदनुमानतः[6] ॥ २०९ ॥**

केचित्तु तावत्येव प्रकृतिप्रत्ययविभागं कल्पयन्ति, तदप्ययुक्तमित्याह—

---

१. मु० पुस्तके नास्ति। २. प्रवृत्तिश्च लक्षणार्थेनानुगम्यते—३ पु०।
३. किं प्रत्ययो०—मु० पा०। ४. त्वाख्यान०—मु० पा०।
५. कदाचिदप्यर्थं—मु० पा०। ६. गमयति०—३ पु०।

**तावत्यंशे न कल्प्यौ च प्रकृतिप्रत्ययौ पुन.।**
**स एवार्थद्विशक्तित्वे वरं क्लेश समाश्रितः॥ २१०॥**

शब्दविभागकल्पनाया य क्लेश. स वरं श्रुतस्यैकस्यैव शब्दस्यार्थद्वयशक्तावाश्रित इति॥ २१०॥

कथम्? इत्याह—

**निर्ज्ञातपरिमाणस्य स्मरणानुगमाद् विना।**
**नानात्वं कल्पयित्वास्य कः शक्तिं कल्पयिष्यति॥ २११॥**

शक्तिनानात्वं ह्यवश्यम्भावि, तन्मात्रेणोपपत्तौ शब्दनानात्वमप्रमाणकमिति॥ २११॥

व्यतिरेकव्यभिचारमनुभाष्य परमतेन परिहरति—

**दध्यत्रेति यदन्यादृक्पदं पूर्वावधारितात्।**
**केचिदाहुस्तदेवेदम्[1] अजानन्तर्यदूषितम्[1]॥ २१२॥**

नात्र तत्पदस्य तादृग्रूपव्यतिरेकः, तादृगेव तु पदमिति॥ २१२॥

तत्त्वे प्रमाणमाह—

**प्रत्यभिज्ञायते तद्धि स चार्थः सम्प्रतीयते।**

कः पुनर्दोषो येनैदृक्त्वावगति.? अत आह—

**इकारे तु यविज्ञानमकारपरसंहिते॥ २१३॥**

इकारान्तमप्यकारेण परेण संहितादोषाद् यकारान्तमिव भ्रान्त्या अवगम्यत इति॥ २१३॥

स्वमतेन परिहरति—

**अथ वात्मीयसिद्धान्ताद् यकारत्वेऽस्य सत्यपि।**
**दधिवाच्यार्थ सामर्थ्यं लक्षणादवगम्यते॥ २१४॥**

परमार्थत एवाय यकारः पदान्तरमेवेद न तु तदेवान्यादृशं गम्यते, पदान्तरस्यैव तु पदान्तरसमानार्थत्वमिति "इको यणचि" (पा० सू० ६. १. ७७) इति लक्षणादवगम्यते, अनेन ह्रीकारस्थाने यकारोच्चारण संहिताया भवतीत्युच्यते, तेनेकारान्तपदसमानार्थत्वमस्य कथित भवतीति॥ २१४॥

ननु प्रत्यभिज्ञायते तदेवेदमिति, अत कथं पदान्तरत्वे प्रमाणम्? अत आह—

**तथा ह्यश्रुतदध्यत्रो लक्षणानुगमाद् विना।**
**व्युत्पन्नदधिशब्दोऽपि दध्यत्रेति न बुद्ध्यते॥ २१५॥**

तत्पदत्वे हि लक्षणानुगममनादृत्यैव दधि इत्यत्र व्युत्पन्नो दध्यत्रेत्यत्रार्थं बुध्येत, न त्वेवम्, अतो नास्त्येव प्रत्यभिज्ञानम्। अर्थप्रतीतिरपि लक्षणतः सम्बन्धग्रहणादेव, न तु काल्पनिकैकत्ववशादिति॥ २१५॥

---

१–१. इदमानन्तर्येण०—३ पु०। २. वाक्यार्थ०—का०।

यच्च आनन्त्यात् सबन्धग्रहण न सम्भवतीत्युक्तम्, तदनुभाष्य परिहरति—

**विकारानन्त्यतो यस्तु सम्बन्धज्ञप्त्य[1]सम्भवः ।**
**लक्षणात् तद्विदुक्तेर्वा नातिक्लेशो भविष्यति ॥ २१६ ॥**

यदि पदान्तरमिद ततः कियदिद पदमिति विभिद्य कथ्यते, न चाज्ञातपरिमाणादर्थावगति. सम्भवति, अतो दध्यत्रेति सर्वमिदमेक पदं न भेद इति ॥२१६॥

तत्तावदनुभाषते—

**कियत् पदमिति ज्ञानं यत्तु तत्र न [2]जायते ।**
**स्वरान्तं व्यञ्जनान्तं वा न चाज्ञातेऽर्थनिर्णयः ॥ २१७ ॥**

परिहरति—

**तदुच्यते पदच्छेदे तदपभ्रंशता व्रजेत् ।**

किमित्यत्रापभ्रशता ? अत आह—

**संहिताविषये चास्य स्मर्यते साधुशब्दता ॥ २१८ ॥**

च शब्दो हेताविति ॥ २१८ ॥

कथं तर्ह्यविभक्तस्याज्ञातावधेरर्थवत्त्वम् ? अत आह—

**एतस्मिंस्तु प्रतीमोऽर्थमगृहीतावधावपि ।**

यद्यप्यवधिर्न गृह्यते तथाप्येतस्मादेव पदान्तरादवध्यर्थावगमादर्थवत्त्वमिति ।

तेनासत्यपि विच्छेदेऽर्थभेदात् पदसिद्धिरित्याह—

**तेन[3] सत्यपि विच्छेदे[3] पदे भेदोऽर्थभेदतः ॥ २१९ ॥**

इद प्रौढिमात्रम्, ज्ञायत एवावधिर्न तु विभिद्योच्चार्यते, सहितायामेव साधुत्वाद् विभिद्यमानस्यासाधुत्वप्रसङ्गात् । यथा कुम्भकारादिसमासे न कदाचिदुत्तरपदं विभिद्योच्चार्यते, विग्रहवेलाया कुम्भ करोतीति पदान्तरेणैवार्थकथनम्, एवमिहाप्यसहिताया दधिपदमेव नित्य प्रयोक्तव्यमित्याह—

**ज्ञायते चावधिस्तत्र व्यञ्जनान्तो न तूच्यते[4] ।**
**दधिशब्दावबोध्यत्वान्नित्यं नित्यसमासवत्[5] ॥ २२० ॥**

न च पदान्तरेण तदर्थप्रतीतौ पूर्वस्याप्यवाचकत्वम्, अनेकस्याप्येकत्र कारणत्वं तरुवृक्षादिशब्दवद् व्रीहियवादिवच्चेति ॥ २२० ॥

राजा-राज्ञादिपदेष्वेवमेव गतिरित्याह—

**एतेन राजराज्ञादिशब्दानां[6] दत्तमुत्तरम् ।**

---

१, क्लृप्तीति पाठान्तरम् ।          २. किं यदिदं—मु० पा० ।
३–३ तेनापि च्छिद्यमाने—३ पु० । तेनावच्छिद्यमाने पि—मु० पा० ।
४. ननूच्यते—३ पु० ।          ५. सत्यसमासवत्—२ पु० ।
६. राजराजादि०—३ पु० ।

तदेव दर्शयति—

**किञ्चिदंशसमानं हि तदर्थं तत्पदान्तरम् ॥ २२१ ॥**

यत्तु ब्राह्मणकम्बलपदे ब्राह्मणशब्दस्य सकलस्यान्वयेऽपि तदर्थो नावगम्यत इति परैरुक्तम्, तदनुभाष्य परिहरति—

**यत्तु ब्राह्मणवस्त्रादौ ब्राह्मणार्थो न गम्यते ।**
**अवध्यन्तरतस्तत्र[1] तत्पदान्तरजृम्भितम् ॥ २२२ ॥**

अवध्यन्तरेऽपि तत्पदमविकलमस्तीति ॥ २२२ ॥

कथं तदर्थो नावगम्यते ? अत आह—

**उत्सर्गस्यापवादेन बाधः कस्य न सम्मतः ।**
**तद् ब्राह्मपदमुत्सृष्टं बाध्यतेऽन्यावधौ पदे ॥ २२३ ॥**

प्राच्यस्य पदरूपस्यावध्यन्तरमपवादकमिति ॥ २२३ ॥

यदा त्ववध्यन्तरमपास्य तत्त्वेन प्राच्यरूपेण पदान्तरमुच्चार्यते तदा स्वार्थमभिधत्त एवेत्याह—

**तत्त्वेनावधिमुत्कृष्य यद्युच्येत पदान्तरम् ।**
**केन स्वार्थोऽस्य वार्येत देवदत्तादिशब्दवत् ॥ २२४ ॥**

यत्र तर्ह्यश्वकर्णादावन्यूनानधिकमेव पदद्वय तत्र कि वाजिकर्णयोरनभिधानम् ? अत आह—

**एवमेवाश्वकर्णादौ समुदायप्रसिद्धितः ।**
**वार्यतेऽवयवस्यार्थो वृक्षाद्यर्थावधारणात् ॥ २२५ ॥**

समुदायप्रसिद्धिरपि ह्यवयवप्रसिद्धेरुत्सर्गस्यैवापवादो बाधिकेति ॥ २२५ ॥

यद्येवम्, न कदाचिदवयवेन पृथगर्थता स्यात्, सर्वदैव समुदायार्थेन बलीयसा बाधात् ? अत आह—

**अर्थप्रकरणाधीनबाधितस्वार्थयोरपि ।**
**समस्तव्यस्तयोर्भूयः स एवार्थः प्रतीयते ॥ २२६ ॥**

अर्थप्रकरणग्रहणं समुदायप्रसिद्धेरप्युपलक्षणार्थम्, समुदायार्थो वा अर्थशब्देनोच्यते, अर्थप्रकरणाधीनेन श्रोत्रा बाधितस्वार्थयोरपि न सर्वदा तद्बाधः, तथा हि—अश्वमानय कर्णं विध्यतीत्यादौ व्यस्तप्रयोगे तावन्नावयवार्थयो. किञ्चिद् बाधकमस्ति, समस्तप्रयोगेऽपि 'अश्वकर्णं परिमार्ष्टि' इत्यादौ प्रमाणान्तरवशेन समुदायार्थ बाधादवयवार्थनिर्णय. सिद्ध्यतीति ॥ २२६ ॥

तदेव व्यभिचारिणामपि नानर्थक्यम्, अव्यभिचारिणां तु भूयसां गवादीनां दूरापास्तमित्याह—

---

१. तत्रेति पाठान्तरम् ।

**गोशुक्लादिपदानां तु समस्तव्यस्तभाविनाम् ।**
**स्वार्थहानिर्न दृष्टेति क्वानर्थक्यं भविष्यति ॥ २२७ ॥**

भवन्त्वर्थवन्ति पदानि, तानि तु पदार्थमात्रप्रतिपादकानि न विशिष्टरूपमल वाक्यार्थमवबोधयितुमिति तत्प्रतिपादनाय स्वतन्त्र पदानपेक्षं निर्भाग वाक्यं वाचक कल्प्यत इति चेत् ? तत्राह—

**पदार्थानुगतश्चैष वाक्यार्थो[1] गम्यते सदा ।**
**न विशिष्टार्थता तस्माद् वाक्यस्वातन्त्र्यसाधिनी ॥ २२८ ॥**

पदार्थान्वियरूपेणैव हि वाक्यार्थोऽवगम्यते, अतो न तेनापि स्वतन्त्रवाक्यसिद्धिरिति ॥ २२८ ॥

मा भून्निर्भाग वाक्यम्, सभागमेव तु भागप्रतिपादितपदार्थसवित्सहायं तदन्वयरूपस्य वाक्यार्थस्य वाचकमस्त्विति चेत् ? तत्राह—

**न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेषु पदानि नः ।**

पदानामेव वाक्यार्थे सामर्थ्यान्न वाक्यस्य सामर्थ्य कल्प्यमिति ।

कथम् ? इत्याह—

**तन्मात्रावसितेष्वेषु पदार्थेभ्यः स गम्यते ॥ २२९ ॥**

नास्ति पदानामेव सामर्थ्यमिति ॥ २२९ ॥

नन्वेवमवसितव्यापारेषु पदेषु पश्चात्पदार्थेभ्यो गम्यमानो वाक्यार्थोऽशाब्दः स्यात् ? अत आह—

**अशाब्दे चापि वाक्यार्थे न पदार्थेष्वशाब्दता ।**

कथम् ? इत्याह—

**वाक्यार्थस्येव नैतेषां निमित्तान्तरसम्भवः ॥ २३० ॥**

सति तेषा शाब्दत्वेन द्वारेणास्ति वाक्यार्थस्यापि शब्दप्रतिपाद्यत्वम् । तथा च तत्परत्वाच्च शब्दाना शाब्दत्वं सिध्यति । वाक्यार्थे हि शब्दानां तात्पर्यम्, न पदार्थेषु, तेषा प्रमाणान्तरसिद्धत्वात् । अतो यद्यप्यभिधाव्यापारः पदार्थेष्वेव पर्यवसित., तथापि तात्पर्यव्यापृतेरपर्यवसिताया वाक्यार्थपर्यन्तत्वात् तात्पर्ये शब्दस्य प्रामाण्यात् सिध्यति शब्दे प्रमेयतया वाक्यार्थस्य शाब्दत्वमिति ॥ २३० ॥

यत्तूक्तम्—"अन्यः प्रतीतो न ह्यन्य गमयिष्यत्यसगतम्" इति, तत्राह—

**सम्बद्धमेव चैतेऽर्थं गमयन्त्यविनाभुवम् ।**

अविनाभावमेव दर्शयति—

**सामान्यं स्वविशेषेण[2] विना न ह्युपपद्यते ॥ २३१ ॥**

---

१. शब्दार्थो—का० ।                    २. ०विवेकेन—का० ।

तदिदं "पदानि ह्यमूनि" इत्यादिना "विशिष्टार्थसम्प्रत्ययश्च वाक्यार्थ.' ( शा० भा० पृ ११६ ) इत्येवमन्तेन भाष्येणोक्तमिति ॥ २३१ ॥

यद्येवमनुमानमेवेद स्यात् ? अत आह—

**न चानुमानमेषा धीस्तन्मात्रेण प्रसज्यते ।**

कथम् ? इत्याह—

**प्रतिज्ञार्थैकदेशत्वात् पदार्थानां ह्यलिङ्गता ॥ २३२ ॥**

यदि तावत्पदार्था एव वाक्यविशिष्टनया पक्षीक्रियन्ते त एव हेतवः, ततश्च प्रतिज्ञार्थैकदेशतेति ॥ २३२ ॥

न च यथा धूमविशेषे पक्षे धूमसामान्यस्य हेतुत्व तथेह सम्भवतीति । तत्र धूमसामान्यमात्मन. पृथग्भूतेनैव विशेषेणान्वितमग्नि गमयति, पदार्थेषु सामान्यरूपाः स्वात्मानमेव विशेषरूपवाक्यार्थान्वित गमयन्तीत्यस्त्येव प्रतिज्ञार्थैकदेशतेत्याह—

**पदार्थैरनुरक्तोऽसौ वाक्यार्थः सम्प्रतीयते ।**
**नात्मना गमयन्त्येनं विना, धूमोऽग्निमत्त्ववत् ॥ २३३ ॥**

अथ वाक्यार्थमेव पक्षीकृत्य पदार्थाना हेतुत्वमुच्येत ? अत आह—

**पक्षधर्मत्वमेतेषां वाक्यार्थे न च गम्यते ।**

कारणमाह—

**न हि देशादिवत् पूर्वं निष्पन्नः स प्रतीयते ॥ २३४ ॥**
**असत्त्वभूतमेनं हि प्रतिपद्यामहे ततः ।**
**क्रियाकारकसंसर्गविशिष्टः प्रागसौ कुतः ॥ २३५ ॥**

पदार्थेभ्य एव हि तत्संसर्गार्थात्मा वाक्यार्थो गम्यते न ततः प्रागिति ॥२३५॥

ततः किम् ? इत्याह—

**धर्मिण्यनवबुद्धे च न तद्धर्मावधारणम् ।**

अथान्यत एव वाक्यार्थमवगम्य तद्धर्मत्व पदार्थाना गम्येत ? तन्न, अन्यस्य बोधकस्याभावादित्याह—

**न च प्राग्बोधकं किञ्चिद् वाक्यार्थस्योपपद्यते ॥ २३६ ॥**

किञ्च, अवगते वाक्यार्थे पश्चात् पक्षधर्मता न तज्ज्ञानाङ्ग स्यादित्याह—

**अवबुद्धे तु वाक्यार्थे यदि तद्धर्मता भवेत् ।**
**विज्ञातेऽर्थे ततः किं नु प्रमेयमवशिष्यते ॥ २३७ ॥**

सम्प्रत्यन्वय निराकरोति—

**अन्वयश्च पदार्थानां न वाक्यार्थैरपेक्ष्यते ।**

अगृहीतान्वयोऽपि ह्यत्यन्तापूर्वमेव वाक्यार्थं पदार्थेभ्योऽवगच्छत्येवेति ।

न च शक्यं सर्वैर्वाक्यार्थैः सम्बन्धग्रहणमित्याह—

**सर्वस्मिन्नेव सुज्ञानो भूतभावितिरोहिते ॥ २३८ ॥**

न च वाक्यार्थान्तरेण सम्बन्धं गृहीत्वा वाक्यार्थान्तरमनुमातुं शक्यम्, अतिप्रसङ्गादित्याह—

**अन्यवाक्यार्थसम्बन्धज्ञानाच्चान्यो न गम्यते ।**

किञ्च, अन्येषामपि पदार्थानां वाक्यार्थान्तरेण प्राक् सम्बन्धोऽवगतः, नामीषाम् ये सम्प्रत्यपूर्वं वाक्यार्थं बोधयन्ति, अतो नानुमानं सम्भवतीत्याह—

**अन्यत्वाच्च पदार्थानाम्,**

यदि तु त एव वा पदार्था नान्ये, ततो न वाक्यार्थोऽप्यन्यो गम्येतेत्याह—

**ते[1] चेन्नान्यार्थधीर्भवेत् ॥ २३९ ॥**

ननु सामान्येन पदार्थानां पदार्थत्वसामान्याद्वाक्यार्थेनान्वयोऽनुमीयेत, तथा चान्वयः पक्षधर्मता च सिध्यति, न च प्रतिज्ञार्थैकदेशेनापि भविष्यति, पदार्थविशेषाणां पक्षत्वात्, तद्धर्मस्य पदार्थत्वसामान्यस्य हेतुत्वात् ? अत आह—

**सामान्यदृष्टक्लृप्तौ वा लभ्यते न विशेषधीः ।**

न हि वाक्यार्थविशेषेण पदार्थत्वसामान्यस्यान्वयोऽस्तीति ।

मा भूदिति चेत् ? तत्राह—

**वाक्यार्थावगतिः सर्वा त्वसाधारणगोचरा ॥ २४० ॥**

यत्तु 'सम्बद्धमेव चैतेऽर्थं गमयन्त्यविनाभुवम्' ( श्लो० वा० वा० २३१ ) इत्युक्तम्, तद्वाक्यार्थमात्राभिप्रायम्, न तद्विशेषाभिप्रायमित्यविरोध इति ॥२४०॥

नन्वेवमसम्बद्धेभ्यः पदार्थेभ्यः तदवगतिरप्रमाणं स्यात् ? अत आह—

**असम्बन्धप्रतीतेश्च प्रामाण्यमुपपादितम् ।**

सम्बन्धस्य प्रमाणत्वं स्थितम्, किं वेश्वराज्ञयेत्युक्तमिति ।

नन्वस्तु जाताया प्रतीतेरप्रामाण्यम्, तज्जननमेव त्वसति सम्बन्धेऽनुपपन्नम् ? अत आह—

**सर्वलोकप्रसिद्धा च प्रतिपत्तिरिह स्फुटा ॥ २४१ ॥**

सर्वजनीना प्रतिपत्तिः सम्बन्धाभावान्नापह्नवमर्हतीति ॥ २४१ ॥

प्रसिद्धमेव च बुद्धिजन्मनः प्रामाण्यं दर्शयति—

**यत्र क्वचन विज्ञातान् पदार्थान् प्रतिपद्य हि ।**
**दूरदेशादिवार्तासु नाप्तोक्ते धीर्विहन्यते ॥ २४२ ॥**

शङ्कते—

**आप्तवादाविसंवादाद् अत्र चेदनुमानता ।**

---

१. न—३ पु० ।

परिहरति—

**निर्णयस्तावता सिध्येद् बुद्ध्युत्पत्तिर्न तत्कृता ॥ २४३ ॥**

आप्तावादत्वानादरेणैव पदार्थेभ्यो वाक्यार्थबुद्धौ जातायामप्रामाण्याशङ्का निवर्त्तये। न प्रामाण्यस्थापनमात्रमाप्तवादत्वेन क्रियते, किन्तु तत्कृता बुद्ध्युत्पत्तिरिति[1] ॥ २४३ ॥

न चैवं बुद्ध्युत्पत्तिः, सैव तस्याः सत्यत्वमित्याह—

**अन्यदेव हि सत्यत्वमाप्तवादत्वहेतुकम्।**
**वाक्यार्थश्चान्य एवेति ज्ञातः पूर्वतरं तत ॥ २४४ ॥**

सति वाक्यत्वे सत्यत्वस्यानुमानिकत्वेऽपि न बुद्ध्युत्पत्तेरानुमानिकत्वमित्याह—

**तत्र चेदाप्तवादेन सत्यत्वमनुमीयते।**
**वाक्यार्थप्रत्ययस्यात्र कथं स्यादनुमानता ॥ २४५ ॥**

ननु बुद्ध्युत्पत्तिरप्याप्तवादत्वलिङ्गादेव सम्भवति, तथा हि—आप्तस्य गोपदरचनमर्थान्तरसास्नादिमद्बुद्धिपूर्वकं दृष्टम्[2], तामनुमापयति, सा चार्थव्याप्ता तज्ज्ञान जनयति? यद्वा, विनैव बुद्ध्यनुमानेनाकाङ्क्षासन्निधियोग्यत्वे सति पदार्थत्वात् मिथोऽन्वयोऽनुमीयेत? इत्यत आह—

**जन्म तुल्यं हि बुद्धीनामाप्तानाप्तगिरां[3] श्रुतौ।**

स्यादेव यदाप्तस्यैवावगताप्तभावस्य च वाक्यादर्थप्रतीतिः स्यात्, सा त्वनाप्तस्यानवगताप्तभावस्य च वाक्यादुदीयते। न च वाक्यमात्रस्य बुद्धिपूर्वतया व्याप्तिरस्ति यतो बुद्ध्यनुमानद्वारार्थप्रतीति स्यात्, अनाप्तस्यान्यथासविदानस्याप्यन्यथा वाक्यरचनादर्शनात्। यदप्याकाङ्क्षासन्निधियोग्यत्वे सति पदार्थत्वादिति, तदनाप्तवाक्येनैवेय वाक्यार्थधीरिति।

ननु सत्यत्वं तावल्लौकिकम्, तावता च किमित्यनुमानं न भवति, अत आह—

**जन्माधिकोपयोगी च नानुमायास्त्रिलक्षणः ॥ २४६ ॥**

त्रिलक्षणलिङ्गजन्यादिधीरनुमानम्, न चेयं तज्जन्या, पदार्थैरेवागृहीतसम्बन्धैरियं जन्यते, अतः प्रमाणान्तरमेव शाब्दमिति ॥ २४६ ॥

सम्प्रति यथा शब्दाभिहिता पदार्थाः सम्बन्धमनपेक्ष्यैव वाक्यार्थं प्रतिपादयन्तो लोकवेदसाधारण्येनैव शब्दस्य प्रमाणान्तरत्वमापादयन्ति, तथा दर्शयितुमारभते—

**शब्दप्रामाण्यनिर्णीत्यै पदार्थेभ्यो यथेष्यते।**
**अत्यन्तादृष्टवाक्यार्थप्रतिपत्तिस्तथोच्यते ॥ २४७ ॥**

---

१. ०रितिचेन्न—इत्युचितः पाठः। २. दृष्टता०—मु० पा०। ३. ०गिरा—३ पु०।

तत्र एतत् तावदविवादमित्याह—

**भावनावचनस्तावत् तां स्मारयति लोकवत् ।**

क. पुनरसौ ? अत आह चिदन्तेन—

**अन्वयव्यतिरेकाभ्यां प्रत्ययार्थस्तु सेष्यते ॥ २४८ ॥**

**कैश्चित्,**

यजते, पचतीत्यादावाख्यातप्रत्ययान्वये भावनान्वयाद् यागपाकशब्दान्वये चाख्यातप्रत्यय एव भावनावचन इति ।

मतान्तरमुपन्यस्यति—

**अन्यैस्तु धात्वर्थस्तत्सामीप्योपकारतः ।**

धातुरेवाख्यातप्रत्ययसन्निध्यनुगृहीतशक्तिर्भावना वक्तीति ।

अपरे त्वन्यतराभावेऽप्यभावात् समुदायार्थतामाहुरित्याह—

**अपरैः समुदायार्थस्तत एव हि गम्यते ॥ २४९ ॥**

अन्वयव्यतिरेकाभ्या प्रत्ययार्थत्वमुक्तम्, तत्राह—

**पाकादौ यन्न दृष्टासौ भवत्यादौ[1] तथैव च ।**

यथा हि पाकादिषु सत्यपि धातौ प्रत्ययव्यतिरेके भावनाव्यतिरेकः, तथास्तिभवतिविद्यतिषु सत्यप्याख्यातप्रत्यये पचादिधातुव्यतिरेके भावना न प्रतीयते, अत. समुदायार्थतेति ।

कः पुनरत्र निर्णय ? अत आह—

**विवेकफलमन्दत्वात् पचत्यादौ यथेष्टता ॥ २५० ॥**

न चात्र विवेकेन प्रयोजनमिति ॥ २५० ॥

सा चेयं भावना 'स्वर्गकामो यजेत' इत्याख्याताभिहिता साध्यं साधनमितिकर्त्तव्यतापर्यायं चोपाय सामान्येनाक्षिप्य तद्विशेषमन्यतोऽपेक्षत इत्याह—

**सा साध्यसाधनोपायसामान्यार्थावधारणात् ।**

**अन्यलभ्यं विशेषांशं यं कञ्चिदभिकाङ्क्षति ॥ २५१ ॥**

तथा स्वर्गोऽपि किमितिकर्मतयावगतः सिद्धे कामनाभावात् साध्यतयावगतो भावनामपेक्षत इत्याह—

**कामावगतसाध्यत्वः स्वर्गः काङ्क्षति भावनाम् ।**

तयोरेवमाकाङ्क्षायां सन्निधियोग्यत्ववशेन मिथोऽन्वयोऽवगम्यत इत्याह—

**तत्र सन्निधियोग्यत्वात् सम्बन्धः कल्प्यते तयोः ॥ २५२ ॥**

तदेवं क्लृप्तसाध्यसम्बन्धा साधनमपेक्षत इत्याह—

**ततः सा क्लृप्तसम्बन्धा साधनांशमपेक्षते ।**

---

१. भवत्यादेः—३ पु० ।

कारणमाह—

**धात्वर्थासाधनं किञ्चिन्नानुष्ठानं हि सिद्ध्यति ॥ २५३ ॥**

**अनुष्ठानं** भावना। गोदोहनादीनामप्यप्प्रणयनाद्याश्रयभूतधात्वर्थानुरागापेक्षमेव साधनत्वम्, न स्वरूपेणेति ॥ २५३ ॥

यागश्चासत्यामपि तृतीयाया स्वभावादेव भावनया करणत्वेन सम्बद्धो भावनाद्वारेण साध्य फलमपेक्षते, भावनया हि धात्वर्थसम्बन्धः स्वभावत शब्दतश्चाप्यवगतः, तस्य चापुरुषार्थस्य साध्यत्वेनासम्भवात् साधनरूपेणावतिष्ठते यागेन कुर्यादिति, तेन कि कुर्यादित्यस्ति साध्यापेक्षेत्याह—

**धातुवाच्यश्च यागादिरतृतीयापरोऽपि सन् ।**
**स्वभावाद् भावनासक्तः साध्यं किञ्चिदपेक्षते ॥ २५४ ॥**

सत्यां चापेक्षायाम्, आसत्तियोग्यत्वाभ्या स्वर्गयागयोः सम्बन्ध. कल्प्यत इत्याह—

**प्रत्यासत्तिनिमित्तोऽयं सम्बन्धः कल्प्यतेऽनयोः ।**

स्वभावसिद्धमेव तत्करणत्वसम्बन्ध स्पष्टीकर्तुं व्याख्यातॄणा तृतीयाप्रयोग इत्याह—

**तं च विस्पष्टमाख्यातुं यागेनेति प्रयुज्यते ॥ २५५ ॥**

अत्रैव दृष्टान्तमाह—

**यथौपगवशब्दार्थं तस्यापत्यमितीदृशात् ।**
**कथयन्ति न चैतस्मिन् षष्ठ्यन्तोपगुसम्भवः ॥ २५६ ॥**

यत्तु 'तृतीयाभावान्न करणत्वम्' इत्युक्तम्, तत्राह—

**न केवलं तृतीयैव करणत्वं नियच्छति ।**
**प्रमाणान्तरगम्येऽपि न किञ्चिद् विरुणद्धि सा ॥ २५७ ॥**

न हि करणत्वं तृतीयया नियत यतस्तन्निवृत्त्या निवर्त्तते, ततः प्रमाणान्तरेणापि करणत्वेऽवगम्यमाने तृतीया न कश्चिद् विरोधमाचरतीति ॥ २५७ ॥

मा विरौत्सीत्, करणवाचिनस्तु यजे. किमिति तृतीया न भवति ? अत आह—

**प्रज्ञातकरणत्वे वा धातौ सत्यपि नेष्यते ।**
**अप्रातिपदिकत्वेन तृतीया यागशब्दवत् ॥ २५८ ॥**

यथा यागशब्दात् तृतीया भवति नैवमिहेति ॥ २५८ ॥

तत. सूक्तं विधिशब्दसामर्थ्यसिद्धमेव करणत्व व्याकर्तुं केवलेन यजिना धातुत्वेन तृतीयामभजमानेन तद्व्याकरणासम्भवात् कृत्प्रत्ययस्य तृतीयान्तस्य प्रयोग इत्याह—

**अतो या शब्दसामर्थ्यलभ्या करणता यजेः ।**
**केवलस्याप्रयोगित्वात् सा यागेनेति कथ्यते ॥ २५९ ॥**

तदेव लब्धसाधनसम्बन्धा भावना करणोपकारसाधनमुपायमात्रमपेक्षमाणा, प्रयाजाद्युपायश्च भाव्यमात्रापेक्षी योग्यत्वसन्निध्यपेक्षाभिर्मिथ सम्बध्येते-त्याह सार्धेन—

**तथोत्पन्नकथंभावा भावनोपायमात्रके ।**
**उपायोऽपि च कर्तव्य मात्राकाङ्क्षी नियम्यते ॥ २६० ॥**
**योग्यत्वसन्निधानाभ्याम् अन्यथानुपपत्तितः ।**

द्वेधा चासावुपाय इत्याह—

**स च स्ववाक्यलभ्यो वा वाक्यान्तरगतोऽपि वा ॥ २६१ ॥**

ननु स्ववाक्यस्थित 'रेवतीषु वारवन्तीय कृत्वा यजेत' इत्यादिरस्तु वाक्यवशाद् यागाङ्गम्, वाक्यान्तरगतस्तु कथम् ? अत आह—

**प्रकृतिप्रत्ययौ यद्वदपेक्षेते परस्परम् ।**
**पदं पदान्तरं यद्वद् वाक्यं वाक्यान्तरं तथा ॥ २६२ ॥**

अपेक्षाया कारणमाह—

**करणैः साध्यते किञ्चिन्नोपायरहितैः फलम् ।**
**प्रयाजादिविधानं च न च स्यान्निष्प्रयोजनम् ॥ २६३ ॥**

ननु विश्वजिद्वद् स्वर्गप्रयोजनवत्त्वात् कथ प्रयाजादेर्निष्प्रयोजनता ? अत आह—

**प्रयोजनान्तरात् तत्र प्रत्यासत्तेरपेक्षितः ।**
**फलवद्भावनांशस्थकरणानुग्रहो वरम् ॥ २६४ ॥**

क्रतूपकारो ह्यपेक्षित, सन्निहितश्च स्वर्गतोऽत्र[2] फलवद्भावनाशत्वेना-वस्थितस्य करणस्यानुग्रह एव तेषा फलम् । एतच्च **प्रकरणाधिकरणे** वक्ष्यत इति ॥ २६४ ॥

ननु भावनासम्बन्धिनामंशाना कथ परस्परसम्बन्ध, परस्परसम्बन्धे वा न भावनासम्बन्ध , स्यात् उभयसम्बन्धे वा वाक्यभेदः ? अत आह—

**एकभावनयोपात्तास्त्रयोऽप्यंशाः परस्परम् ।**
**उपकार्योपकारित्वं पश्चादनुभवन्ति ते ॥ २६५ ॥**

करणं साध्यस्योत्पत्त्युपकारं करोति, इतिकर्त्तव्यता तु करणस्य फलजनन-सामर्थ्यमिति ॥ २६५ ॥

कारणमाह—

१. वक्तव्या—का० । २. स्वर्गोऽतोऽत्र—मु० पा० ।

**भावनापेक्षमाणा हि साधनं किं फलस्य मे ।**
**साधनानुग्रहः को वेत्यनुस्यूतमपेक्षते ॥ २६६ ॥**

साध्यान्विता हि भावना साध्यानुस्यूतेनैव रूपेण साधनमपेक्षते केनेद फल कर्त्तव्यमिति, न तु तदाकारप्रहाणेन; तथेत्थभावमपि साधनानुस्यूतेन कीदृशेन व्यापारेणेद साधनफलजननसामर्थ्यं स्यादिति । न च वाक्यभेद:, अंशद्वयविशिष्टाया भावनाया: फलं प्रति विधानादिति ॥ २६६ ॥

भावानावच्च 'गामानय शुक्लाम्' इत्यादावानयनस्य जातिसम्बन्धाविच्छेदेनैव गुणाऽऽकाङ्क्षा, तत्सम्बन्धाविच्छेदेनैव जात्याकाङ्क्षा दर्शयितव्येत्याह—

**आकाङ्क्षैवमविच्छेदसिद्धा शुक्लगवादिषु[1] ।**

एवं चाशानामिव जातिगुणयोरेकक्रियान्वितयोर्मिथ.सम्बन्धसिद्धिरित्याह—

**एकक्रियागृहीतेषु सम्बन्धश्च परस्परम् ॥ २६७ ॥**

यत्तु 'गोत्वशुक्लत्वयोर्न परस्परानुराग' इत्युक्तम्, तत्राह—

**द्रव्यद्वारेण चैतेषा विशेषणविशेष्यता ।**

एतदेवोपपादयति—

**इतरोपकृतद्रव्यवर्त्तित्वात् तत्र कर्मणि ॥ २६८ ॥**

यद् द्रव्यमवच्छिन्दन्ती जातिरानयनाङ्गम्, गुणोऽपि तदेवावच्छिन्दंस्तस्मिन् कर्मणि वर्त्तत इत्येव गुणस्य जातिविशेषणत्वमिति ॥ २६८ ॥

नन्वेकद्रव्यत्वे सिद्धे स्यात् तद्द्वार. परस्परान्वय:, तदेव तु कथम् ? सम्बन्धा दिति चेत्, उक्तमितरेतराश्रयम् ? अत आह—

**द्रव्यान्तरमनिच्छन्त्या क्रियया च परिग्रहात् ।**
**एकद्रव्याश्रयप्राप्तिरिति नान्योन्यसंश्रयम् ॥ २६९ ॥**

क्रिया हि प्रधानभूता गोत्वशुक्लत्वाभ्यामवरुद्धत्वादन्यजातीयमन्यगुणक च द्रव्यमनिच्छन्ती श्रुतावेव जातिगुणावेकस्मिन् द्रव्ये नियच्छतीति अरुणाधिकरणे वक्ष्यते । किञ्च, एकद्रव्यपरिच्छेदेनैवोभयो: क्रियान्वयोपपत्तावप्रमाणकोऽनेकद्रव्याक्षेप इति ॥ २६९ ॥

इतश्चास्ति नियम इत्याह—

**परस्परानुरागश्च सुतरामुपकारकः ।**

जातौ विनियुक्तायामस्त्यपेक्षा—किंगुणक द्रव्यमनया परिच्छेत्तव्यमिति ? तथा गुणेऽपि, तदस्यामपेक्षायां परस्परनियमादस्ति महानुपकार इति । सिद्धे च परस्पराऽनुरागे गुणान्तरजात्यन्तरव्यवच्छेदोऽश्रुतोऽप्यर्थादेव सिद्ध:, नहि शुक्ल: गुणद्वारेण क्रियान्वयमनुभवतो गोत्वस्य कृष्णादिसंसर्ग सम्भवतीत्याह—

---

१. ०गवादिवत्—का० ।

**अर्थाच्चान्यव्यवच्छेदः,**

यद्यपि च गोत्वस्वरूपं न कृष्णादिभ्यो व्यावर्त्तते, तथापि येयं तद्वाक्यगता गुणान्तरासम्पृक्तस्यैव गोत्वस्य वृत्तिरयमेवास्य कृष्णादिभ्यो व्यवच्छेद इति।

क्रियार्थसम्बन्धादेव च पदानामपि सम्बन्धात् सिद्धमेकवाक्यत्वमित्याह—

**सम्बन्धोऽतो न दुष्यति ॥ २७० ॥**

सिद्धे च व्यवच्छेदे यद्यपि प्रत्येक परस्परव्यवच्छेदादेव सिध्यति नियतैकवाक्यार्थावगतिरित्याह—

**तत्रानैकान्तिकानेकवाक्यार्थोपप्लवे सति।**
**अन्योन्यात्मव्यवच्छेदादेकत्र स्थाप्यते मतिः ॥ २७१ ॥**

तथा हि, 'गामानय शुक्लाम्' इत्यानयतिरानयनजातिमभिधाय तद्व्यक्ति गवाश्वशुल्ककृष्णसाधारण्येन लक्षयति, गामित्यपि गो' कर्मत्वमभिधाय तत्कर्मिका या काञ्चित् क्रियाम्, तथा शुक्लामिति। परस्परसमभिव्याहारात्तु तेषा यैवानयनजातीया क्रिया धातुना लक्ष्यते तामेव गोपदं गोकर्मरूपेण प्रतिपादयति, शुक्लपदमपि तमेव[1] शुक्लकर्मरूपेणेति। एव सर्वैरेकस्मिन् विशिष्टे प्रतिपादिते क्रियापि जात्यन्तराद् गुणान्तराच्च व्यवच्छिन्ना, जातिरपि क्रियान्तराद् गुणान्तराच्च, गुणान्तराच्च गुणोऽपि जात्यन्तरात्क्रियान्तराच्च—इति सिध्यति नियतैकवाक्यार्थावगतिरिति।

एव च यदुक्तम्, 'ऐकैकश्ये पदार्थाना वाक्यार्थे व्यभिचारिता' ( श्लो० वा० वा० १०१ ) इति, तदपि न दूषणम्, अनुमाने ह्यव्यभिचारापेक्षा, अत्र तु सत्यपि व्यभिचारे पदसन्निधिलक्षणाद् वाक्यादेव प्रमाणान्तरभूतात् कल्पितेन्द्रियलिङ्गादिविलक्षणशक्तिकादव्यभिचारफलनियतैकार्थप्रतीति· सिध्यतीति ॥ २७१ ॥

तत्सिद्धौ किमव्यभिचारेण ? इत्याह—

**अतोऽन्वयातिरेकाभ्यामनुमा[2] नेयमिष्यते[2]।**
**एकार्थैकान्तिकत्वं तदन्यथैवात्र लभ्यते ॥ २७२ ॥**

धात्वर्थकारकाणा न साक्षाद्विधि· सम्भवतीत्युक्तम्, तदनुमन्यामह एवेत्याह—

**एवं पदार्थवाक्यार्थैङ्गितैरुपकल्पिताम्।**
**विशिष्टा भावना प्राप्य वृत्तिर्विधिनिषेधयोः ॥ २७३ ॥**

भावनामेव विशिष्टा विदधत् प्रत्यययोऽर्थाद् यागादीन् विदधाति, न साक्षादिति ॥ २७३ ॥

यत्तु 'प्रत्यासत्तिविशेषात् केवले भावनात्मनि पर्यवसितो विधिर्नालं पश्चात् सम्बध्यमानान् यागादीन्विधातुम्' इत्युक्तम्, तत्राह—

**यद्यप्यन्यैरसंस्पृष्टा विधिः स्पृशति भावनाम्।**
**तथाप्यशक्तितो नासौ तन्मात्रे पर्यवस्यति ॥ २७४ ॥**

---

१. तमिव—मु० पा०।    २-२. अनुमाने यदिष्यते—३ पु०।

अशक्तिमेव दर्शयति—

**अनुष्ठेये हि विषये विधिः पुसा प्रवर्तकः ।**
**अंशत्रयेण चापूर्णां नानुतिष्ठति भावनाम् ॥ २७५ ॥**

योग्यतापि सबन्धकारणम्, न वाशत्रयापरिपूर्णा भावना चेतनप्रवर्त्तनात्मकविध्यन्वययोग्येति ॥ २७५ ॥

सम्बन्धमुपसहरति—

**तस्मात् प्रक्रान्तरूपोऽपि विधिस्तावत् प्रतीक्षते ।**
**यावद् योग्यत्वमापन्ना भावनान्यानपेक्षिणी ॥ २७६ ॥**

'प्रत्यासत्तिविशेषाद्धि विधिभावनयोरन्वयेन भवितव्यम्' इत्येतावत् प्रथममवगम्यते, तादृशी चावस्था विधिसस्पर्श इति विधिप्रक्रम इति चोच्यते । तथा अवगतभावनान्वयोऽपि विधिरयोग्यत्वादविदधद् यावदशत्रयपरिपूर्णा भवति तावत् प्रतीक्ष्य पश्चात् सर्वाशसम्पूर्णामशान्तरानपेक्षिणी विदधातीति ॥ २७६ ॥

एव नामाख्यातसम्बन्ध दर्शयित्वेदानीमुपसर्गनिपाताना दर्शयति—

**उपसर्गनिपाताना प्रयोगनियमे सति ।**
**अर्थस्तदागमन्यायात् स्यात् समासपदेष्विव ॥ २७७ ॥**

यत्तावदुक्तम्—'गवादिवच्च नैतेषा स्वतन्त्रार्थावधारणे' ( श्लो० वा० वा० ) इति, नाय दोष., यद्यपि केवलाप्रयोगादेषामापिङ्ग. प्रवया वृक्ष. प्लक्षश्चेत्येवमन्यसहितानामेव प्रयोगनियमान्न केवलानामर्थाभिधानम्, तथापि सुबादिप्रत्ययवत् कुम्भकारादिनित्यसमासोत्तरपदवच्च तदागमन्यायादेवार्थवत्त्व सिध्यति, चकारागमे हि समुच्चयो गम्यते, न तत प्रागिति ॥ २७७ ॥

यस्त्वेषा वाचकत्वद्योतकत्वविवादः, नासाविहोपयुज्यते, द्वेधापि वाक्यार्थोपयोगित्वसिद्धे., इत्याह—

**वाचकद्योतकत्वं तु नातीवात्रोपयुज्यते ।**

तेन यथेष्ट कल्प्यतामित्याह—

**तद्भावाद् वाचकत्वं वा परस्यानुग्रहोऽस्तु वा ॥ २७८ ॥**

यत्तु 'नैषा क्रियया नाम्ना वा सम्बन्ध. सम्भवति' इत्युक्तम्, तत्र निपातास्तावत् केचित् साक्षात्, केचिच्च प्रयुक्तक्रियाद्वारेण नाम्नो विशेषण सम्भवन्तीत्याह—

**ईषदर्थादयस्तावत् साक्षान्नाम्नैव सङ्गता. ।**
**अप्रयुक्तक्रियाद्वारा विशेषाधानतोऽपरे ॥ २७९ ॥**

उभयत्रोदाहरणमाह—

**आपिङ्गः प्रवयाश्चेति द्वयस्यैतन्निदर्शनम् ।**

ईषत्पिङ्गो हि **आपिङ्ग.**, प्रगतवया॰ **प्रवया** इति ।

क्वचिच्च 'प्रवयसे दक्षिणा दद्यादभिक्रामं जुहोति' इति प्रकृष्टत्वाभिमुखत्वादीना भावनेतिकर्त्तव्यतात्वेनैव विधानमनुष्ठान चेत्याह—

**क्वचित् प्रकृष्टतादीना भावनोपनिपातिनाम् ॥ २८० ॥**
**इतिकर्तव्यतात्वेन प्रतिपत्तिपरिग्रहौ ।**

यत्तु 'आभिमुख्यं कर्तृधर्मो न क्रियया सम्बध्यते' इत्युक्तम्, तत्राह—

**एकार्थसमवायित्वात् कर्तृधर्मोऽपि भावनाम् ॥ २८१ ॥**
**गमिष्यति, न कर्तृणा स्वरूपे स हि कीर्त्यते ।**

न हि कर्तृरूपाङ्गम्, अभिक्रमणमानर्थक्याद्धातुसम्बन्धे च णमुलो विधानात्, अत: क्रियाङ्गमेवैतदेकाथसमवायसम्बन्धेनेति ।

यत्तु प्रासाद. प्रतिष्ठत इत्यादावन्यार्था विरुद्धार्थाश्चोपसर्गा धातो: स्वार्थशक्ति लोपयन्त: कथ धातुना सम्बध्यन्त इत्युक्तम्, तदनुभाष्य परिहरति—

**ये त्वन्यार्थविरुद्धार्थधातुशक्त्यवलोपिन: ॥ २८२ ॥**
**तेषा तदङ्गतैवेष्टा धातुभागसमा हि ते ।**

नैते विशेषणम्, किन्तु धातुभागसमा एते शब्दान्तर तिष्ठते. प्रतिष्ठतिरश्वकर्णशब्दवत्समुदायशक्त्यैव गमने वर्त्तते, तथापि यद् भेदेनान्वाख्यान तत्प्रातिष्ठत प्रातिष्ठिपत् इत्यादावडागम कथ नाम प्रशब्दात्परत. स्यादित्येवमर्थम् । एवमभिदधातीत्यादावपि समुदायशक्ति । तथा प्रलम्बतिरपि लम्बते. शब्दान्तर समानार्थ न तु लम्बते. प्रशब्दो विशेषणमिति ।

द्योतकवादिनस्तु विशेषणत्वमेव मन्यन्ते, तदुपन्यस्यति—

**प्रशब्देनोपसृष्टस्य तिष्ठतेर्गतिशक्तता[१] ॥ २८३ ॥**

तिष्ठतेरेव गतिरर्थ., स तु प्रोपसर्गेणैव द्योत्यत इति ॥ २८३ ॥

कथं तिष्ठतेर्गत्यर्थता गम्यते ? अत आह—

**न हि प्रशब्दवेलायां गमने जायते मति: ।**

ननु तिष्ठतिमात्रादपि न गमने मतिर्जायते, तत कुत एतत्—तिष्ठतिवाचक: प्रशब्दो द्योतको न विपरीतम् ? अत आह—

**सामान्यत: क्रियाशक्ति: क्लृप्ता धातो: पुरैव तु ॥ २८४ ॥**
**विशेष एव तत्र स्यादितरस्य द्वये पुन: ।**

धातूना सामान्येन क्रियामात्रे शक्ति. क्लृप्तैव, तेन तिष्ठतेर्गमनाख्ये विशेष एव शक्तिकल्पनम्, प्रशब्दस्य सामान्ये विशेषे चोभयत्राक्लृप्तैव शक्ति: कल्पनीयेति ।

भवतु दद्योतक , तथापि कथं विशेषणत्वम् ? अत आह—

**या च शक्त्यन्तरोद्भूतिरियमेव विशेष्यता ॥ २८५ ॥**

---

१. ०र्गमि०—२ पु० ।

नन्वियं विशेषणविधा नीलोत्पलादिष्वदृष्टा, तत्र हि सामान्यवचनस्योत्पल-शब्दस्य तदत्यागेनैव नीलशब्देन विशेषावस्थामात्रं क्रियते ? अत आह—

**न सामान्यापरित्यागी केवलोऽन्यैर्विशेष्यते ।**

कथम् ? इत्याह—

**उक्तैर्विशेषणं किञ्चिदुच्यमानविशेषणम्[1] ॥ २८६ ॥**

नीलोत्पलादिवच्चानयोर्नाङ्गाङ्गित्वम्, उभयोः क्रियाङ्गत्वात्[2], किन्तु विशेषणविशष्यभावमात्रम्, तत्र ह्युच्यमानस्योत्पलसामान्यस्य नीलशब्देन विशेषेऽवस्थान विशेषणम्, वैश्वदेव्यामिक्षेत्यत्र तु तद्धितान्तपदाभिधानमेवा-मिक्षापदेनामिक्षायामवस्थाप्यते, अतो नैकविध्यमेव विशेषणस्येति ।। २८६ ॥

भवतु द्वैविध्यम्, न त्विह विधाद्वयमपि सम्भवति, तत्र हि तद्धितान्तपदेना-भिधान प्रगतिरसन्निधानादनिष्पन्न यदेव किञ्चित्सन्निधिमुपनेष्यते तद्विशेष्यत्वेना-वगतमामिक्षासन्निधानात्तद्विषय सम्भवति । न त्विह तिष्ठतेर्दधातेश्च प्रशब्दाभि-शब्दाभ्या प्रागभिधानमनिष्पन्न विषयापेक्षमास्ते, यस्य प्रशब्देनाभिशब्देन च विषयोपस्थान क्रियेत, अर्थान्तरस्यैव गतिनिवृत्तेर्धारणस्य चाभिधानादत आह—

**तेन शक्त्यपवादोऽयं भवेदर्थापवादवत् ।**

यथा ह्येकविध्यमनाश्रित्य दृष्टत्वाद् द्वैविध्यमपि समाश्रितम्, तेनैव प्रकारेण तृतीयमपि प्रकारान्तर शक्त्यपवादरूपमाश्रीयताम् । तिष्ठतेर्हि गतिनिवृत्ति, गतेश्च द्वावर्थौ, दधातेरपि धारणमभिधान च, तत्रानुपसृष्टयोर्गतिनिवृत्तौ धारणे च शक्तिरभिव्यज्यते, प्राभ्युपसर्गौ तु ता शक्तिमपोह्य गतावभिधाने च शक्तिमाविर्भावयत. । सोऽयं द्योतकवादिनामभिप्राय. । वाचकपक्षे तु समुदायशक्तिरेवेति ।

यत्तु 'कर्मण. कर्मसाध्यत्वाभावान्न ज्वलनादिद्वारेण काष्ठादे. पाकान्वयः' इत्युक्तम्, तत्राह—

**तथैव ज्वलनादीनां पाकसम्बन्धितेष्यते ॥ २८७ ॥**
**इतिकर्तव्यतांशत्वात् पाके वा तत्फलेऽपि वा ।**

अनियमे कारणमाह—

**ओदने साध्यमाने हि पाकः करणमिष्यते ॥ २८८ ॥**
**अकृतः सोऽपि नास्तीति पुनः करणवाञ्छनम् ।**

द्वे ह्यत्र भावने, तत्र पाककरणिकौदनभावना तस्या करणभूतस्य पाकस्य स्वयमनिष्पन्नस्य निष्पत्त्युपकारं कुर्वंत् ज्वलनमितिकर्त्तव्यतेति ।

ननु पाके ज्वलनस्यैवानन्तर्यात् करणत्वं युक्तम्, तत्कथमितिकर्त्तव्यतेत्युच्यते ? अत आह—

**करणं ज्वलनादीनि तस्य काष्ठादि वा तथा ॥ २८९ ॥**

---

१. उच्यमानं०—३ पु० । २. क्रियाङ्गत्वादिति । क्रियावाचकत्वादिति भावः ।

सत्यमेवं विवक्षावशात् काष्ठानामपि सम्भवत्येव, तथा च युक्तं यज्ज्वलन-मितिकर्त्तव्यतेति ॥ २८९ ॥

नन्वलब्धात्मन. पाकस्यात्मलाभाय युक्ता इतिकर्त्तव्यतापेक्षा, काष्ठाना तु लब्धात्मना कथम् ? अत आह—

**इतिकर्त्तव्यताकाङ्क्षा यावत्करणसंश्रया ।**

लब्धात्मनामपि स्वकार्यजननायास्त्येवानुग्रहापेक्षेति ।

ननु चौदनभावनायां पाककरणिकाया काष्ठानामितिकर्त्तव्यतात्वम्, तत्कथ-मेतेषा करणत्वम् ? अत आह—

**इतिकर्त्तव्यताप्यन्यदपेक्ष्य करणं भवेत् ॥ २९० ॥**

एकस्यापेक्षाभेदेन द्वैरूप्यमविरुद्धमिति ॥ २९० ॥

ननु ज्वलनं कुर्वता कथं पाके साधनत्वम् ? अत आह—

**ज्वलनादिनिमित्ताऽतः काष्ठादेः पाकसङ्गतिः ।**

साधनसाधनमपि साधनमेव, तथा लोके दर्शनादिति भाव· । ननु करणस्य पाकस्य कथं करणैरेव काष्ठै. सम्बन्ध., तैर्हि सम्बध्यमान. कर्म स्यात्, ततो द्वैरूप्याद् वाक्यभेद स्यात् ? नैष दोष , दशापवित्रेण ग्रह समार्ष्टीतिवन्मत्वर्थलक्ष-णाश्रयणादिति ।

यत्तु 'न कर्मण. कर्मसाध्यत्वम्' इत्युक्तम्, तत्राह—

**कर्मणः कर्मसाध्यत्वं नास्मत्पक्षे विरुद्धयते ॥ २९१ ॥**

यदेतदस्मत्पक्षे कर्मण पाकादेर्ज्वलनादिकर्मसाध्यत्वमुच्यते, नैतत् कैश्चिद् विरुध्यत इति ॥ २९१ ॥

कथम् ? इत्याह—

**अनात्मसमवेतस्य निमित्तं कर्म ह्रीष्यते ।**

न ह्यस्माभि· कर्मण. कर्मसमवायित्व प्रोच्यते, यत. पदार्थचिन्तकैर्विरोधः स्यात्, निमित्तमात्रत्व तु तेषामप्यभिमतमेवेति ।

नन्वस्तु ज्वलनद्वारेण पाकस्य काष्ठसाध्यत्वम्, ज्वलनमपि तु साक्षात्साध्य किमिति तत्साध्यतया न व्यपदिश्यते ? अत आह—

**ज्वलनादिस्वरूपं च न काष्ठादिभिरीप्सितम् ॥ २९२ ॥**

**पाकप्रयोजितानां हि तद्वृत्तिर्नान्तरीयको[1] ।**

**ईप्सितं** साध्यमिति ।

यदि ज्वलनद्वार काष्ठाना पाकसाधनत्वं तत्रैषां कर्तृत्वात् पाकेऽपि कर्तृत्व-मेव स्यात्, न करणत्वम् ? अत आह—

**कर्तृत्वेऽपि च[2] काष्ठादेः[2] पाके स्यात् करणादिता ॥२९३॥**

१. निर्वृत्तिः—२ पु० । २-२. तत्रैषाम्०—का० ।

कथं कर्तुः सतः करणशक्त्याविर्भाव इति चेत् ? अपेक्षाभेदादित्याह—

**आविर्भूतान्यशक्तित्वादेकत्वे चाप्यपेक्षया ।**

शक्तिद्वयमेवापेक्षिक दर्शयति—

**ज्वलनादिषु सर्वेषां स्वातन्त्र्यात् कर्तृतेष्यते ॥ २९४ ॥**

स्वातन्त्र्य कर्तृत्वम्, व्यापारसमवायित्व च स्वातन्त्र्यं ज्वलन च काष्ठेषु समवेतमिति तत्र तेषां कर्तृत्वम्, स्थाल्यादीना सम्भरणादिष्विति ॥ २९४ ॥

तेषा च स्वव्यापरेषु स्वातन्त्र्य ज्ञात्वा प्रयोजको देवदत्तस्तानि स्वव्यापारेषु नियुङ्क्ते, नियुक्ताना च करणादिरूपकारकवैचित्र्य भवतीत्याह—

**तत्स्वातन्त्र्यावगत्यैव प्रयुङ्क्ते हि प्रयोजकः ।**
**नियुक्तानां तु तेनैषा करणत्वादिवाच्यता ॥ २९५ ॥**

कथम् ? इत्याह –

**उद्भूतदेवदत्तादिव्यापाराभिभवाद् भवेत् ।**

देवदत्तव्यापारमेव ह्याख्यातमुद्भूतरूपमुपादत्ते, न व्यापारान्तराणि; तेन देवदत्तस्यैवाख्यातोपात्तव्यापारसमवायात् कर्तृत्वम्, इतरेषा त्वनुपात्ताभिभूतव्यापाराणां कर्तृस्थव्यापारगोचराणा यथायथं करणत्वादि । यद्यनुपात्त ज्वलनादि कथ तद्द्वारः काष्ठाना पाके सम्बन्धः शब्देनोच्यते ? को दोष. ? न हि यद्यदस्ति तत्सर्व शब्देनाभिधातव्यम्, अतो ज्वलननिमित्तो य काष्ठाना पाकसम्बन्धस्तस्मिन् शब्देनानभिधीयमानेऽपि न किञ्चिदनुपपन्नम् । न ह्यनाहृतानि पाक न साधयन्तीत्याहरणमपि तेषा शब्देनाभिधातव्यमिति ।

कथं तर्हि 'काष्ठानि पचन्ति' इति प्रयोग' ? अत आह—

**यत्र त्वभिभवस्तेषा नैकेनापि विवक्ष्यते ॥ २९६ ॥**
**काष्ठादीनि पचन्तीति प्रयोगस्तत्र जायते ।**

आख्यातोपात्तभावनासमवायित्वं कर्तृत्वम्, आख्यातं च क्वचिद्धात्वर्थसमानाश्रयं व्यापारमुपादत्ते, क्वचिदनियतम्, पचेस्तु विक्लित्त्यादिपर्यायादुत्पन्नः प्रत्यय. प्रायेण देवदत्तव्यापार विक्लित्त्यादिविषयमुपादत्ते, तदा च स एव कर्ता, काष्ठादीना तु करणादित्वम् । कदाचित्तु समस्तमेव काष्ठादिव्यापारम्, तदा च सर्वेषामाख्याताभिहितोद्भूतव्यापाराणा केनचिदप्यनभिभवात् कर्तृत्वं भवतीति ।

तदेवमाख्यातोपादानाऽनुपादानाभ्या कारकैक्य कारकवैचित्र्यं च समर्थितम्, इदानीं तु सर्वव्यापाराणामुपादनमभ्युपगम्याह—

**एकशब्दगृहीतेऽपि गुणप्राधान्यमिष्यते ॥ २९७ ॥**
**आख्यातप्रत्ययोपात्तभावनाकर्तृसंख्यवत् ।**

यदा हि यस्य व्यापारः प्राधान्येनोपादीयते स कर्तेति कर्तृलक्षणं न व्यापा-

रोपादानमात्रम्। सम्भवति चैकशब्दोपात्तस्यापि गुणप्राधान्यं भावनाकर्तृसख्यवदिति।

एतदेवोपसहरति—

**तस्माद् यस्य विवक्ष्येत प्रधानं धातुभिः क्रिया ॥ २९८ ॥**
**स कर्ता गुणभूतान्यव्यापारे करणादिता।**

धातुग्रहण **वैयाकरणा**भिप्रायम्। स्वमते त्वाख्यातेनेति वक्तव्यम्, सर्वेषां तु समप्राधान्ये काष्ठादीनि पचन्तीति प्रयोग इति।

प्रकरणार्थमुपसहरति—

**इतिकर्तव्यतांशेन सर्वेषां तेन सङ्गतिः ॥ २९९ ॥**
**अवान्तरक्रियायोगात् प्रधानक्रियया सह।**

यत्तु 'प्रतिषेधविकल्पयोर्विरोधादसम्बन्ध' इत्युक्तम्, तत्राह—

**विकल्पप्रतिषेधादेर्विरोधो न च वस्तुना ॥ ३०० ॥**

कथम्? इत्याह—

**अभावमेव नञ् प्राह वर्तमानादिकालिकम्।**

यदेतदुक्तम् 'स्वश्रुतेः प्रथम वस्तु सद्भावेन निरूपितम्।
कथ नञादिभिः पश्चादभावमुपनीयते' (श्लो० वा० वा० ९६) इति।'

तद् यदि कारक[1]हेत्वभिप्राय ततो न युक्तम्। न हि नञा वस्त्वभावः क्रियते यतस्तस्य वस्तुना विरोध' स्यात्, किन्तु विद्यमानमेवाभावं वर्त्तमानमतीतमनागतं वा नञ् ब्रवीतीति।

विरोधाभावमेव विवृणोति—

**नामधात्वर्थयोगी च निषेधोऽन्यार्थभाग् भवेत् ॥ ३०१ ॥**
**तत्र वस्त्वन्तरोन्मुक्तं वस्त्वेवानुगुणं च तत्।**

त्रेधा हि नञो वृत्ति—पर्युदास-अभाव-प्रतिषेधैः। तद्यत्राब्राह्मणाऽनीक्षणादौ नामधात्वर्थाभ्यां युज्यते तत्र ब्राह्मणेक्षणवस्त्वन्तरपर्युदस्तं क्षत्रियानीक्षणसङ्कल्पाख्य वस्त्वेव नञा प्रतिपाद्यते। तच्च वस्त्वन्तरपर्युदसनं वस्त्वन्तरस्यानुगुणम्, सर्ववस्तूनामितरेतराभावात्मकत्वादिति।

यत्राख्यातसयोगे नास्ति घटः, नाऽऽसीन्न भविष्यतीति वा निवृत्ति प्रतीयते, तत्रापि न वस्त्वभावो नञा क्रियते, किन्त्वज्ञानसशयविपर्ययमात्रनिवारणमित्याह—

**आख्यातप्रत्ययैर्योगे निवृत्त्यर्थः प्रतीयते ॥ ३०२ ॥**
**तत्र चाज्ञातसन्दिग्ध[2]विपरीतार्थवारणम्।**

---

१. हेतुर्द्विविधः—कारकः, ज्ञापकश्च। २. ०संबन्ध०—का०।

सन्देहनिवारणं विवृणोति—

**अस्ति नास्तीति सन्देहे पाक्षिकास्तित्वबोधनम् ॥ ३०३ ॥**
**निवर्त्यते नञा,**

यद्वा, तन्निवृत्तिरपि न साक्षात्क्रियते, किन्तु नास्तित्वे कथिते तज्ज्ञान-विरोधादस्तिताज्ञानं स्वयमेव निवर्तत इत्याह—

**यद्वा नास्तितैवोच्यते सती ।**

अज्ञानविपर्ययनिवारणं विवृणोति—

**अव्युत्पन्नस्य तत्रैव जायते नास्तितामतिः ॥ ३०४ ॥**
**अस्तित्वमानिनः सैव वार्यते विपरीतधीः ।**

तत्रेति । नास्तितायामुक्तायामित्यर्थः ।

कथं नास्तितायामुक्ताया विपर्ययस्य निवृत्तिः ? अत आह—

**अपूर्वाभावविज्ञानविरोधात् स्वयमेव तु ॥ ३०५ ॥**
**निवर्ततेऽस्तिताबुद्धिर्मृगतृष्णादिबुद्धिवत् ।**

तच्चैतदज्ञानादिनिवारणं प्रमाणान्तरेऽपि दृष्टमेव, अतो न कश्चिन्नञो दोष इत्याह—

**तच्चैतदनिषेधेऽपि स्थाण्वादावीदृगेव नः ॥ ३०६ ॥**
**तत्राप्यज्ञातसन्दिग्धविपरीतार्थबाधनात् ।**

स्थाणुप्रत्यक्षेण पि तद्विषयमज्ञानं पुरुषसन्देहविपर्ययौ च निवार्येते इति ।

यदि त्वसत्यपि वस्तुविरोधेऽनर्थकत्वान्नञो न शब्दान्तरसमभिव्याहारोऽवकल्पत इत्युच्यते ? अत आह पादत्रयेण—

**अभावस्य च वस्तुत्वे पुरस्तात् प्रतिपादिते ॥ ३०७ ॥**
**घटादितुल्यता[1] तस्य[1],**

वस्तुत्वे वा अभावस्य तदभिधायिनो नञो घटादिशब्दवन्नानर्थक्यमिति ।

स्यान्मतम्—प्राप्तिपूर्वकः प्रतिषेधः, तद्यदि घटस्य सत्ता प्राप्ता कथं प्रतिषिध्यते, न हि विद्यमानस्याप्यविद्यमानता सम्भवतीति ? अत आह—

**प्रतिषेधो न चाप्ययम् ।**

कथम् ? इत्याह—

**विधायकैरसंयुक्तो न हि नञ् प्रतिषेधकः ॥ ३०८ ॥**

ननु समानं प्राप्तिपूर्वकत्वमभावे ? अत आह—

**अभावकथनं ह्येतन्नावश्यं प्राप्तिपूर्वकम् ।**

तेनाप्राप्तस्यैव घटस्य यथावस्थिताभावकथनं नानुपपन्नमिति ।

---

१–१. ०तुल्यतैव स्यात्—का० ।

ननु सद्भाववाचिना घटशब्देनाभाववाचिनो नञः कथं समभिव्याहारः, न हि विरुद्धार्थयो समभिव्याहार. सम्भवति, अस्ति नास्तिशब्दयोरिव ? अत आह—

**न च शब्देन सद्भावस्तस्य चार्थस्य बोधितः ॥ ३०९ ॥**

**अस्तित्वाद्यनपेक्षं हि सामान्यं तेन गम्यते ।**

स्यादेवं यदि घटशब्देन घटस्य सत्त्व बोधित स्यात्, स तु सदसत्त्वसाधारणं घटस्वरूपमात्रमभिधत्ते । तत्स्वरूप हि प्रादेशिकत्वादनित्यत्वाच्च क्वचित् कदाचिच्च सत्, क्वचित् कदाचिच्चासदिति साधारण **सामान्यमि**ति । सदसत्त्वसाधारण-मित्यर्थः ।

अत एव घटोऽस्तीत्यस्तिशब्दप्रयोगोपपत्ति , अन्यथा पौनरुक्त्यादित्याह—

**अस्तिशब्दप्रयोगोऽपि तेनैवात्रोपपद्यते ॥ ३१० ॥**

ननु जाति. शब्दार्थ , सा च सर्वदास्त्येवेति कथ सदसत्त्वसाधारण्यम् ? अत आह—

**जातेरस्तित्वनास्तित्वे न च कश्चिद् विवक्षति ।**

**नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे ॥ ३११ ॥**

यतश्चाश्रुताया व्यक्तेर्विशेषण नास्तीति न श्रुताया जातेः, अतोऽपि नञो न घटश्रुत्या विरोध इत्याह—

**तेनात्र न विरोधित्वं श्रुत्या पूर्वोक्तया नञः ।**

यत्र तर्हि सत्तामपि शब्देनैवोपादाय पश्चान्नञ् प्रयुज्यते—अस्ति घटः, नास्तीति, तत्र विरोध स्यात् ? इत्यत आह द्वयेन—

**यत्राप्यस्तीत्युपादाय प्रयुज्येरन्नञादयः ॥ ३१२ ॥**

**तत्र तस्यापवादत्वात् पूर्वज्ञानोपमर्दनम् ।**

**अस्तित्वं वा सदेवात्र स्मर्यते पूर्वलक्षितम् ॥ ३१३ ॥**

**अभावोत्तरकालं स्याद् विशेषे तद्विवक्षिते ।**

एवंविधेऽपि हि प्रयोगे विवक्षात्रय सम्भवति—घटोऽस्तीति[1] घटसत्ता प्रति पाद्यते, नास्तीति च नास्तित्वम्, तत्र च नास्त्येवैकवाक्यत्वम्, वाक्यद्वयमेवैत-देकेन बोधित सत्त्वमितरेणोपमृद्यते । सम्भवति चैकस्य ज्ञानस्यापवादकेन ज्ञानान्तरेणोपमर्दः, रजतमिद न रजतमितिवत्, तस्मादविरोधः ।

अथ वा, भ्रान्तिप्रतिपन्नसत्त्वानुवादेन तदुपमर्दनासत्त्वकथनमस्तीत्यवगतो यो घट स नास्तीति । तथा च नास्ति विरोधः । न हि भ्रान्तिप्रतिपन्नेन सत्त्वेन पारमार्थिकमसत्त्वं विरुध्यते । तदिहार्थद्वयेऽपि **तत्र तस्यापवादत्वा**दित्येतद् व्याख्येयम् ॥ ३१३ ॥

१. नास्तीति—मु० पा० ।

यद्वा कालभेदविवक्षा– अस्तित्वेन प्रागवस्थितो यो घट सोऽधुना नास्तीति। एव पूर्वकाललक्षितमस्तित्वम् अस्तिशब्देन स्मार्यते, तच्च स्मारितं नास्तीत्यनेना-भावोत्तरकाल भवति, भाव इति कर्त्तरि रूपम्, उत्तरकाल. सम्बन्धितया यस्या-स्तित्वस्य न विद्यते तदविद्यमानोत्तरकालमित्युच्यते। **विशेषे तद्विवक्षित** इति। तत्खलु स्मारितमस्तित्वं कालविशेषे विवक्षिते सत्यभावोत्तरकाल भवतीत्य-न्वय.। कालभेदाच्च सदसत्त्वयोरविरोध इति।

विधियोगिनस्तर्हि प्रतिषेधवृत्तेरस्ति विरोध। प्राप्तिपूर्वको हि प्रतिषेधः, तद्यदि प्रतिषिद्धकारिणि प्राणहनन वा रागादिना प्राप्त कथं तस्याभाव कथ्यते, तस्यानुष्ठितस्यावश्यम्भावी भाव कथ तस्याप्यभाव: शक्यते वक्तुम्, यदि तु नानुष्ठास्यते तत. प्राप्त्यभावात् प्रतिषेधानुपपत्तिरिति सेयमुभयतस्पाशा रज्जुरत आह—

**विधिना युज्यते यत्र न हन्यान्न पिबेदिति ॥ ३१४ ॥**
**तत्राभावार्थता नैव स्वयं सोऽवरुणद्धि हि।**

किमिदमभावार्थता नेति? यथावस्थिताऽभावकथनमात्रेण चरितार्थो न नञ्[1] भवतीत्यर्थ। किमपरमभ्यधिक करोति स्वयमेव पुमास केशेषु गृहीत्वा चिकीर्षिताद् व्यापारान्निरुन्धन्नभावं व्यवस्थापयति। यदि हि न पास्यते न हनि-ष्यत इतिवदभावकथनमात्र कुर्यात्, ततो रागादिना पास्यमानस्याप्यपास्यमानत्व वदन्नयथार्थवादी नञ् स्यात्, स तु पुमास निरुन्धन् पानाद्यभावमेवाऽऽयुष्मन्त व्यवस्थापयति। सम्भवति च पानादौ पुंसो वैराग्यजननेन तदभावावस्थापन-मित्यविरोधः।

एतदेव सिद्धार्थविषयबुद्ध्यन्तरवैधर्म्येण विधिदृष्टान्तेन चोपपादयति द्वयेन—

**अन्यथैव प्रवर्त्तन्ते भावाभावधियोऽपराः ॥ ३१५ ॥**
**व्यवस्थितबहिर्वस्तुपरिच्छेदफलात्मिकाः ।**
**अन्यथानागतोत्पाद्यभावप्रेरणवारिका ॥ ३१६ ॥**
**अन्तःसङ्कल्पमूलात्मा वृत्तिर्विधिनिषेधयोः।**

याः खलु विधिनिषेधाभ्यामन्या शब्दोत्थाः प्रमाणान्तरोत्था वा अभाव-बुद्धय, यथा—अपाक्षीत् नापाक्षीत् पचति न पचति पक्ष्यति न पक्ष्यति अस्ति नास्तीत्यादयः, ता यथावस्थितभावाभावात्मकार्थपरिच्छेदमात्रं[2] कुर्वन्तीत्यतः तत्सदसत्त्ववशेन सत्यमिथ्यात्व भजन्ते। विधिनिषेधयोस्त्वन्यादृशी वृत्तिः **अना-गतेऽ**नुत्पन्ने **उत्पाद्ये** उत्पादनयोग्ये **भावे** व्यापारे **प्रेरिका वारिका** च, कि वायू-दकादिवत्। यद्येव कारकहेतुत्वादनयोः प्रामाण्य न स्यात् सत्त्वे न वायूदकादिवद्

---

१. मु० पु० नास्ति। २. ०भावात् स्वार्थं०—मु० पा०।

**वृत्तिः**, **किन्त्वन्तःसंकल्पमूलात्मा** यथा **विधिर्विधेयस्य** समीहितसाधनतायां प्रमाणीभवन् पुरुषस्य तद्विषस्यानुष्ठानसङ्कल्प जनयित्वा पुरुषेण व्यापार कारयन् व्यापारस्य कारकहेतुर्भवति, तथा **निषेधोऽपि** निषिद्धस्यानिष्टसाधनत्वां प्रमापयस्तद्विषयाननुष्ठानसङ्कल्पजननेन तदभाव व्यवस्थापयति। निषेधेषु यदि रागादिप्राप्त विध्यर्थं कर्त्तव्यताख्य लिङाऽनूद्य नञा तन्निषेधनम्, यदि वा नञर्थस्य निषेधस्य वर्जनस्य लिङा विधि—द्वेधाऽपि व्यापारस्यानिष्टसाधनत्वकल्पनात् सम्भवत्यननुष्ठानसङ्कल्पजननेन निवारणमित्यविरोधः।

विकल्पस्येदानीमविरोधं दर्शयति—

**विकल्पोऽप्यनयोरेव विषयेषु प्रवर्त्तते ॥ ३१७ ॥**

विधिनिषेधयोर्विषयेऽनागतोत्पाद्ये तावद् विकल्पो भवन् प्रेरणेन वारणेन वा वर्तते, अतस्तद्वदेवाविरोध इति ॥ ३१७ ॥

ननु विधे. प्रेरणमात्रे निषेधस्य निवारणमात्रे वृत्तिरिति स्यादविरोधः, विकल्पस्त्वेक एव प्रेरण निवारणं च कुर्वन् आत्मनैवाऽऽत्मान विरुध्यात्, अर्थद्वयकरणाच्च वाक्यभेदप्रसङ्ग; कथ चानुष्टामननुष्टान च शक्य प्रतिपत्तुमत आह—

**प्राप्तेषु प्रतिषेधार्थमप्राप्तेषु विधित्सया[1]।**

"दीर्घात्" (पा० सू० ६. १. ७५) इति नित्यतुकि प्राप्ते "पदान्ताद्वा" (पा० सू० ६ १ ७६) इति विकल्पः पाक्षिकनिषेधार्थः। अप्राप्तविषयस्तु "इरितो वा" (पा० सू० ३ १. ५७) इत्यादिविकल्प. पाक्षिकविध्यर्थं इति।

तथापि किम्? इत्याह—

**युगपच्च विरुद्धार्थप्रतिपत्तेरसम्भवः ॥ ३१८ ॥**
**पर्यायेण कदाचित्तु काचिद् वृत्तिर्भविष्यति।**

सकृदुभयकरणे विरोधो वाक्यभेदश्च स्यात्। विषयभेदेन तु कदाचित् प्रेरणे कदाचिच्च निवारणे, को विरोध को वा वाक्यभेद.। तथानुष्ठानमननुष्ठान च युगपदशक्यम्, पर्यायेण शक्यमेवेति।

प्राप्तविषयस्तु विकल्पो न क्वचिदस्तीत्याह—

**प्राप्ताप्राप्तविकल्पस्तु नैवेष्टो लोकवेदयोः ॥ ३१९ ॥**

भवत्वेवमनुष्ठेयविषये विकल्पस्याविरोध., सिद्धे तु स्थाण्वादौ व्यवस्थितैकस्वरूपे कथमविरोध.? अत आह सार्द्धेन —

**न विकल्पार्थवाची तु वाशब्दो विषयान्तरे।**
**स्थाणुर्वा पुरुषो वेति याति तिष्ठति वेत्ययम् ॥ ३२० ॥**
**सन्देहकथनार्थः[2] स्यान्न हि वस्तु विकल्पते[3]।**

---

१. तया सह—३ पु०। २. कथनार्थम्—३ पु०।
३. विकल्प्यते—३ पु०।

यत्तु **बाह्यार्थवादिनामय** विरोधो न **विज्ञानवादिनामि**त्युक्तम्, तदपि विपरीतमित्याह—

**विषये बाह्य एवैवं प्रतिषेधादिसम्भवः ॥ ३२१ ॥**
**न हि तत्सम्भवः कश्चिद् ज्ञाने स्वरसभङ्गिनि ।**

यदिदमाख्यातयोगिना नञा भ्रान्तिनिमित्तकास्तिताज्ञानस्य कर्त्तव्याज्ञानस्य च बाधनमुक्तं तदुभयमपि बाह्यार्थवादिनामिति ।

कथम् ? इत्याह—

**ज्ञानं यत् तावदुत्पन्नं नानुत्पन्नं तदिष्यते ॥ ३२२ ॥**

न ह्युत्पन्नस्यास्तिताज्ञानस्य कर्त्तव्यताज्ञानस्य च तत्रानुत्पत्तिः शक्यते वक्तुमिति ॥ ३२२ ॥

विनाशः क्रियत इति चेत् ? अत्राह—

**विनाशेऽपि समानत्वं सत्यमिथ्यावबोधयोः ।**

विनाशे हि बाध्ये सत्यज्ञानस्यापि बाध्यता स्यादिति ।

मत्पक्षे तु सम्भवति बाधनमित्याह—

**बाह्यार्थवादिनस्त्वर्थे यज्ज्ञानं[1] जायतेऽन्यथा ॥ ३२३ ॥**
**तन्मिथ्यात्वोपसंख्यानात् पूर्वबाधादिसम्भवः ।**

**मिथ्यात्वम्**, अयथार्थत्वमिति ।

नन्वेवमपि कथं बाधवाचोयुक्तिः, न ह्यत्र किञ्चिद् बाध्यं पश्यामः ? अत आह—

**तत्रापि तु न तद्रूपं बाध्यते न च बोध्यते ॥ ३२४ ॥**
**अर्थज्ञानादि[2]रूपात्तु[3] फलतो विप्रयुज्यते ।**

अत्र तावदिदमेव वक्तव्यम्—अयथार्थत्वस्थापनमेव बाधः, न हि निवर्त्तनमेव बाध इति नियम इति ।

अथाप्यवश्यं निवर्त्तनेन भवितव्यम्, तथापि न विज्ञानरूपस्य पूर्वस्योत्तरेण बाधनं बोधनं वा क्रियते, बोधनग्रहणं दृष्टान्तार्थं किन्त्वर्थहानादिस्वरूपफलहेतुत्वं पूर्वस्योत्तरेण बाध्यत इति ।

ननु बाह्यस्य वाक्यार्थत्वे तस्यैकत्वादनेकधा प्रतिभानं नोपपद्यते, कस्यचिद्धि स्वर्गकामो यागं कुर्यादिति प्रतिभानं जायते, कस्यचिद् यागेनेति; प्रतिभा त्वेकस्मादपि वाक्याद् वासनासहायतया तथा जायत इति युक्तम् ? अत आह—

**प्रतिभानेकधा पुंसां यद्यप्यर्थेषु जायते ॥ ३२५ ॥**
**तथापि बाह्य एवार्थस्तस्य वाक्यस्य चेष्यते ।**

---

१. तज्ज्ञानम्—३ पु० ।　　२. ०हानादि०—का०, २ पु० ।
३. रूपात्ति—३ पु० ।

तस्याः प्रतिभाया न्यायापरिज्ञानेन बहुधापि जायमानाया बाह्यविषयत्वं **शून्यवादे** साधितमेवेति।

एतदेव दर्शयति—

**वाक्यप्रयोजनत्वेन जन्यत्वेनाथ वा यदि ॥ ३२६ ॥**
**उच्यते प्रतिभाप्यर्थो न नः किञ्चिद् विरुध्यते ।**

शब्देनाक्षादिभिर्वोत्थापित ज्ञानमात्मांशग्रहणाक्षमं बाह्यस्यैव तु प्रापकमित्याह—

**शब्दाद्युत्थापितैर्ज्ञानैरात्मांशग्रहणाक्षमैः ॥ ३२७ ॥**
**यद् बाह्यमाप्यते वस्तु स त्वर्थः पारमार्थिकः ।**

यदि बाह्यो वाक्यार्थः, कथमसन्निहितेष्वतीतेष्वनागतेषु वाक्येषु वाक्याद् ज्ञानं जायते ? अत आह—

**प्रत्यक्षव्यतिरिक्तं तु विज्ञानमुपवर्णितम् ॥ ३२८ ॥**
**त्रिकालविषयं यस्मादसन्निधिरदूषणम् ।**

**निरालम्बनवादे** वर्णितमिदम् "एष प्रत्यक्षधर्मश्च" ( श्लो० वा० नि० ११४ ) इत्यत्रेति।

बाह्यस्य प्रमेयत्वे तस्य नियतस्वभावत्वाद् यदिदम् अर्जुनादिचरित्रश्रवणं शूराणां हर्षजनन भीरूणा च भयजननम्, तन्नोपपद्यते, अत आह—

**अनेकाकारता यापि शूरभीरुधियं प्रति ॥ ३२९ ॥**
**वासनानुग्रहात् सोक्ता कुणपादिमतेरिव ।**

तस्मान्न प्रतिभा वाक्यार्थ इति ।

कस्तर्हि वाक्यार्थः, न हि बाह्यो वाक्यार्थः, पदार्थेभ्योऽन्यस्य तस्यानिरूपणात् ? अत आह—

**भावनैव च वाक्यार्थः,**

'शुक्लो गौः' इत्यादिषु आख्याताभावात् कथ भावनाया वाक्यार्थत्वम् ? अत आह—

**सर्वत्राख्यातवत्तया ॥ ३३० ॥**

तत्राख्यातमध्याह्रियते, अन्यथा वाक्यस्यापरिपूर्णत्वादिति ॥ ३३० ॥

ननु प्रत्ययमात्रस्यार्थो भावना, सा कथमनेकपदार्थाङ्कितो वाक्यार्थः स्यात् ? अत आह—

**अनेकगुणजात्यादिकारकार्थानुरञ्जिता ।**

पदार्थान्तरानुरक्तरूपेणासौ वाक्यार्थः, न स्वरूपमात्रेण, अत पदार्था एव पदार्थान्तरान्वयावस्थाभेदभिन्ना वाक्यार्थः, न त्वतोऽन्योऽनन्यो वा, तादृशी च वाक्येनैव प्रतिपाद्यत इति युक्तं वाक्यार्थत्वमिति ।

कया पुनर्बुद्धया भावना तादृशी गृह्यते, नागृह्यमाणाया वाक्यार्थत्वं सम्भवति ? अत आह—

**एकयैव तु बुद्धयासौ गृह्यते चित्ररूपया ॥ ३३१ ॥**

ननु तादृशी बुद्धिर्वाक्येन न जन्यते, वाक्यस्यावाचकत्वात्, पदार्थतद्बुद्धिभिश्चैकैकपदार्थविशिष्टभावनाबुद्धिरेव प्रत्येक जन्यते, न च क्रमवर्त्तिना साहित्यं सम्भव तीत्युक्तम्—'अत एव विशिष्टा धीस्ताभिर्नैकोपजन्यते' (श्लो० वा०वा० २३) इत्यत्र ? अत आह—

**पदार्थाऽऽहितसंस्कारचित्रपिण्डप्रसूतया ।**

प्रत्येक पदजनितपदार्थबुद्धिजन्यविचित्रसस्कारसमूहजन्याया स्मृतावेकस्या युगपत्सन्निहिता सर्वे पदार्था सर्वविशेषणविशिष्टभावनाबुद्धि जनयन्ति । सम्भवति च क्रमेणाप्यवगताना युगपत्स्मरणमिति **स्फोटे** वर्णितमिति ।

एव चैककार्यनिबन्धन ससर्ग. पदार्थानामुपपन्न इत्याह—

**पदार्थपदबुद्धीनां संसर्गस्तदपेक्षया ॥ ३३२ ॥**

ननु च न पदव्यवहिताना पदार्थाना मिथ संसर्ग, तदभावे च तन्निबन्धः पदससर्गोऽपि नावकल्पेतैव ? अत आह—

**पदव्यवधिना चैषां नासंसर्गो भविष्यति ।**

कथम् ? इत्याह—

**तुल्यकक्षो ह्यसम्बन्धी व्यवधातेति[1] कीर्त्यते ॥ ३३३ ॥**

पदानि न पदार्थैस्तुल्यकक्षाणि, यतस्तैरसम्बन्धिभि पदार्था व्यवधीयेरन्, पदार्थानामङ्गत्वात्तेषाम्, तदाह—

**अङ्गत्वात् तु पदैर्न स्यादङ्गिव्यवधिकल्पना ।**

सत्यप्यङ्गत्वे कथ न व्यवधानम् ? अत आह—

**एकस्मिंश्च गृहीतेऽर्थे सोपायोऽन्योऽप्यपेक्ष्यते ॥ ३३४ ॥**

एकस्मिन् खलु पदार्थे स्वोपायभूतपदसहिते गृहीते परोऽपि सोपाय एवापेक्ष्यत इति ॥ ३३४ ॥

तथापि किम् ? इत्याह—

**अपेक्षया च सर्वोऽसौ सम्बन्धं[2] प्रतिपद्यते[2] ।**

तेनापेक्षितपदार्थान्तर्गतस्य पदस्य नासम्बन्धत्व व्यवधातृत्व चेति । सति च पदार्थाना सम्बन्धे पदानामपि तन्निबन्धनः सम्बन्धः सिध्यतीत्याह—

**पदानामपि सम्बन्ध एवं वाक्येषु सिध्यति ॥ ३३५ ॥**

---

१. व्यवधा नेति—का० । २-२. सम्बन्धः प्रतिपाद्यते—३ पु० ।

उपसंहरति—

**पदार्थपूर्वकस्तस्माद्   वाक्यार्थोऽयमवस्थितः ।**

एवं प्रतिभाया वाक्यार्थत्व निवारितम्, भावनायाश्च समर्थितम् ।

अधुना यच्छब्दविवर्तवादिभिर्निर्भागमेव वाक्य वाक्यार्थात्मना विवर्त्तमान वाक्यार्थो नार्थान्तरमित्युक्तम्, तन्निराकरोति—

**अर्थरूपमिवापन्नं वाक्यं[1] वाक्यस्य गोचरः ॥ ३३६ ॥**

**नेष्यते न ह्यभेदेन वृत्तिरस्तीति साधितम् ।**

न हि शब्देन सहाभेदरूपेणार्थे वृत्तिर्बुद्धिरस्तीति **प्रत्यक्षसूत्रे** वर्णितमिति ।

किञ्च, निर्भागमेव वाक्यम्, तद्विवर्त्तात्मा अर्थोऽपि निर्भागः स्यात्, तत्र वाक्यार्थावयवपदार्थविषय. प्रासङ्गिकादिव्यवहारो न स्यादित्याह तदन्तेन—

**प्रासङ्गिकादि यत् कार्यं पदार्थोपनिबन्धनम् ॥ ३३७ ॥**

**आकाङ्क्षाविदितप्रश्नौ यौ च दृष्टौ पिकादिषु ।**

**असत्यं तद्,**

पाशुकाना प्रयाजादीना पुरोडाशेषु प्रसङ्गस्त्रिषु तन्त्रमङ्गानि कृष्णलादिषु चावघातादीना बाध इत्यादिर्योऽय वेदव्यवहारः, या च लोके द्वार द्वारमित्युक्ते अर्थान्तराकाङ्क्षा, 'पिकमानय' इत्यादौ 'क पिक' इत्यविदितादिप्रश्नस्तत्सर्वमसति पदार्थविभागे अनुपपन्न स्यादिति ।

अथासतो भागानपोद्धृत्य सर्वोऽयं व्यवहार. सिध्यतीत्युच्यते, तत्राह—

**अपोद्धृत्य न चैवं कल्पयिष्यति ॥ ३३८ ॥**

कारणमाह—

**शशशृङ्गाद्यपोद्धृत्य वाक्यार्थो न हि दृश्यते ।**

किञ्च, असदपोद्धारेण गम्यमान प्रसङ्गादिक कार्यमप्यसदेव भवेदित्याह—

**असत्यैर्गम्यमानेऽर्थे   सत्यता   नेत्युदाहृतम् ॥ ३३९ ॥**

ननु वर्णरूपेणासत्यैरपि रेखादिभि परमार्थवर्णावगतिर्दृष्टा ? अत आह—

**स्वरूपेणासतो दृष्टं नोपायत्वं हि कस्यचित् ।**

स्वरूपेणैव तेषामुपायत्वम्, तथा च सत्यतैवेति ।

सूत्रम् ( जै० सू० १.१.२५ ) इदानी व्याचष्टे—

**अवाचकत्वं वाक्यस्य 'तद्भूतानाम्' इतीरितम् ॥ ३४० ॥**

ये हि वाक्यमेव सभागं निर्भाग वा वाक्यार्थस्य वाचकमिति मन्यन्ते, ये च निर्मूलमेव वाक्यार्थज्ञानम्, तेषामुभयेषामपीदं सूत्रेण निराकरणम् । तत्र प्रथमं

---

१. ज्ञानम्—का० ।

तावद् वाक्यस्य वाचकत्वनिराकरणं व्याचष्टे, लोकसिद्धेषु पदार्थेषु वर्त्तमानानां पदानामेव वाक्यार्थज्ञानोपायत्वान्न वाक्यस्य वाचकत्वमिति ॥ ३४० ॥

"**अर्थस्य तन्निमित्तत्वात्**" इति च तत्रैव हेतुरित्याह—

**हेतुः स्यात् तन्निमित्तत्म्**

पदार्थानामेव निमित्तत्वोपपत्तेर्निष्प्रमाणक वाक्यस्य वाचकत्वमिति[1] ।

व्याख्यानान्तरमाह—

**मूलं वार्थस्य कथ्यते ।**

एतदेव विवृणोति—

**पदार्थमूलको ह्येष न भ्रान्तिरिति गम्यताम् ॥ ३४१ ॥**

ननु यदि पदार्थेषु पदानि वर्तन्ते पदार्थाश्च वाक्यार्थस्य क्रियाया विशिष्टभावनाया निमित्तम्, तत' कथं पदाना क्रियार्थेन समाम्नाय. ? अत आह द्वयेन—

**साक्षाद् यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।**
**वर्णास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले ॥ ३४२ ॥**
**वाक्यार्थमितये तेषा प्रवृत्तौ नान्तरीयकम् ।**
**पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥ ३४३ ॥**

पदार्थरूपस्य प्रमाणान्तरसिद्धत्वात् तन्मात्रप्रतिपादन निष्फलम्, अतः पदार्थावसिताभिधाव्यापाराणामपि पदाना तत्रानवसिततात्पर्याणा वाक्यार्थावगतावेव तात्पर्यमिति युक्त तेषा क्रियार्थेन समाम्नाय[3] इति ॥ ३४३ ॥

नन्वेवमप्यनभिधेया भावना कथमर्थ इत्युच्यते ? अत आह—

**प्रयोजनतया चैषामर्थमिच्छन्ति भावनाम् ।**
**क्रियार्थेनेति तेनाह समाम्नायप्रयोजनम् ॥ ३४४ ॥**

यदि सर्वत्र पदाना क्रियार्थेन समाम्नायः, कथ तर्हि भाष्ये 'शुक्लो गौ.' इति निष्क्रियमेव वाक्यवाक्यार्थोदाहरणं दर्शितम् ? अत आह—

**शुक्लो गौरिति वाक्यार्थवाक्ययोर्यदुदाहृतम् ।**
**सम्बन्धकथनार्थं तन्न ज्ञेयं पारमार्थिकम् ॥ ३४५ ॥**

नोदाहरणमादरणीयम्, यतः पदार्थानामस्ति सम्बन्ध इत्येतावन्मात्रपरमिद न तु पारमार्थिकमिति ॥ ३४५ ॥

कथम् ? इत्याह—

**न हि प्रयोजनापेतं वाक्यमुच्चार्यते क्वचित् ।**

तथापि किम् ? त्याह—

---

१. वाक्यवाच०—मु० पा० । २ पदार्थपूर्वक —का० ।
३. समाम्नाय इति । समुच्चारणम् ।

**प्रयोजनक्षमं नापि पदमाख्यातवर्जितम् ॥ ३४६ ॥**

तेनात्रापि 'आनीयताम्' इत्यध्याहर्तव्यमिति ॥ ३४६ ॥

**भाष्यकारेण** "यत्तु श्रौतः पदार्थो न वाक्यार्थानुरोधेन कुतश्चिद् विशेषादपवर्त्तितुमर्हति" ( शा० भा० पृ ११७ ) इत्यनुभाष्य "यत्र केवल पदार्थः प्रयोजनाभावादनर्थक सञ्जायत इत्यवगतं भवति तत्र वाक्यार्थोऽपि तावत्" ( शा० भा० पृ ११७ ) इति विशिष्टार्थता अवगम्यत इति विरोधाङ्गीकारेणैव परिहृतम् ।

**वार्तिककारस्तु** विरोधाभावमेव दर्शयति द्वयेन—

**गौरश्च इति वा श्रत्या यद् गोत्वाद्यवबोधितम् ।**
**विशेषे यदि तन्न स्यात् तत्र स्याच्छ्रुतिबाधनम् ॥ ३४७ ॥**
**जातिव्यक्ती गृहीत्वैव वयं तु श्रुतिलक्षिते ।**
**कृष्णादि यदि मुञ्चामः का श्रुतिस्तत्र बाध्यते ॥ ३४८ ॥**

लक्षणापि नेह बाध्यते नतरा श्रुतिरिति ॥ ३४८ ॥

कस्य तर्ह्यत्र बाध. ? अत आह—

**लक्षणातोऽपि परतो यः सन्देहः प्रवर्त्तते ।**
**का नाम पीड्यते तत्र शुक्लश्रुत्या निवर्तते ॥ ३४९ ॥**

"कीदृग्गौरानेतव्य." इति योऽय सन्देहस्तन्मात्रमेव शुक्लश्रुत्यापनीयते, न श्रुता जातिर्लक्षिता व्यक्तिर्वा। सन्देहापनयन च गोश्रुतेरत्रापेक्षितमिति कुत. श्रुतिविरोध इति ॥ ३४९ ॥

प्रत्युत तवैव श्रुतिविरोध इत्याह—

**अगृह्णतस्तु शुक्लत्वं श्रुतिस्ते बाध्यतेतराम् ।**
**अस्य वाक्यमसम्बद्धं सर्वमेवाप्रयोजनम् ॥ ३५० ॥**

असम्बन्धे हि पदार्थाना तत्स्वरूपस्य प्रमाणान्तरसिद्धत्वात् सर्वमेव वाक्यं श्रुतिश्चानर्थक्याद् बाधिता स्यादिति ॥ ३५० ॥

यदि श्रुतिविरोधो नास्ति, कथ तर्हि भाष्ये तदङ्गीकरणम् ? अत आह—

**वाक्यार्थोऽपीति भाष्येण सोल्लुण्ठमभिधीयते ।**

अतिशयोक्तिरियं **भाष्यकारस्येति** ।

"न सर्वत्र" ( शा. भा पृ. ११९ ) इति भाष्यार्थमाह—

**न सर्वत्रेत्यनेनापि क्वचित् सा नेत्यवोचत ॥ ३५१ ॥**

यदिद सामान्यतः प्रसरन्त्याः श्रुतेर्विशेषेऽवस्थापनं तदपि न सर्वत्र, क्वचिद्धि श्रुत्यवस्थायामेव विशेषावगमात् सामान्यश्रुतिरलब्धात्मिकैवेति ॥ ३५१ ॥

क्व पुनरेवं भवति ? दर्शित **भाष्यकारेण** "प्रातिपादिकादुच्चरन्ती द्वितीयादिश्रुतिविभक्तिः प्रातिपदिकार्थो विशेषक इत्याह" ( शा० भा० पृ. ११९ ) इति, तद् व्याचष्टे—

**प्रकृत्यर्थानुरक्तायां बुद्धौ निपतता ध्रुवम् ।**
**कर्मादीना विशेष्यत्वमिति[1] का वा श्रुतिर्भवेत् ॥ ३५२ ॥**

यदि हि गवादिवत् केवल. प्रत्यय. प्रयुज्येत, तत. प्रातिपदिकार्थाविशेषित कर्मत्वं सामान्यरूपेण लभ्यत इति ॥ ३५२ ॥

लभ्येतापि कदाचिद्भवदभिमता सामान्यबुद्धि., न तु तदस्तीत्याह—

**प्रकृतिप्रत्ययौ नापि प्रयुज्येते च केवलौ ।**
**येन युष्मदभिप्रेता श्रुतिर्लभ्येत कर्हिचित् ॥ ३५३ ॥**

यत्रापि क्विबन्ताधुनादौ केवलयो. प्रकृतिप्रत्यययोः प्रयोग., तत्रैकस्यैवार्थद्वयवाचित्वान्नितरामन्वितार्थस्वरूपसिद्धिरित्याह—

**यत्रापि नाम दृश्येते केवलावधुनादिवत् ।**
**तत्राप्यन्यार्थसयुक्ताविति पूर्वं निरूपितम् ॥ ३५४ ॥**

कि पुन. पदभागयो. प्रकृतिप्रत्यययोरान्विताभिधानमिष्टम् ? नैवम्, तावप्यन्वयव्यतिरेकनिष्कृष्टस्वार्थवाचिनौ पृथगेवार्थवन्तौ । कस्तर्हि वाक्यतदर्थाभ्या पदपदार्थयोर्विशेष: ? अत आह—

**अयमेव विशेषश्च कथ्यते पदवाक्ययोः ।**
**अर्थवद्भागतुल्यत्वे प्रकृतिप्रत्ययार्थतः[2] ॥ ३५५ ॥**

तमेव विशेष दर्शयति द्वयेन—

**दृष्टा यथा हि साकाङ्क्षाः पदार्थाः केवलाः क्वचित् ।**
**स्वातन्त्र्येण गृहीताश्च विशिष्टार्थावबोधकाः ॥ ३५६ ॥**
**प्रकृतिप्रत्ययौ नैवं कदाचिदपि लक्षितौ ।**
**प्रकृत्यर्थानुरक्तो हि प्रत्ययार्थः सदेष्यते[3] ॥ ३५७ ॥**

केवलोऽप्यभिधीयमानः प्रत्ययार्थ. प्रकृत्यर्थानुरक्तायामेव बुद्धौ सर्वदा पतस्तदनुरञ्जकसन्निधिवशात्तदनुरक्त एव गम्यते, न त्वभिधानमेवान्वितविषयमिति ।

**भाष्यकारेण** वाक्यस्यावाचकत्व पदार्थाना च निमित्तत्व दर्शयतोक्तम्—"अन्वयव्यतिरेकाभ्यामेतदवगम्यते, मानसादपचारादुच्चरितेभ्योऽपि पदेभ्यो यदा पदार्था नावसीयन्ते, न तदा वाक्यार्थो गम्यते । तेन वाक्यान्वयेऽपि पदार्थाद् व्यतिरिच्यमानो वाक्यार्थ. पदार्थनिमित्त इति निश्चीयते" (शा० भा० पृ. ११७) इति ॥ ३५७ ॥

यस्तु वदति—वाक्यमप्यत्र न गृहीतमिति, तन्निराकरणार्थं भाष्यम्—"अन्तरेणापि पदोच्चारण य· शौक्ल्यमवगच्छति अवगच्छत्येवासौ शुक्लगुणक द्रव्यम्,

१. विशेषत्व०—२ पु० । २. ०प्रत्यययोऽर्थत —३ पु० ।
३. सदेक्ष्यते—२ पु० ।

( शा० भा० पृ ११७ )। तस्माद् वाक्यव्यतिरेकेऽपि पदार्थान्वयेऽन्वीयमान पदार्थनिमित्त एव वाक्यार्थप्रत्यय । तेन सिद्धे पदार्थनिमित्तत्वे यत्रापि मानसापचारादग्रहणम्, तत्रापि पदार्थाग्रहणादेव वाक्यार्थाग्रहणम्, न तु सविद्विरुद्ध वाक्याग्रहणमुत्तर वैयात्यमात्रेण वक्तव्यमिति ।

तदिदमाह द्वयेन—

**पश्यतः श्वेतिमारूपं ह्लेषाशब्दं च शृण्वतः ।**
**खुरनिक्षेप[1]शब्दं च श्वेतोऽश्वो धावतीति धीः ॥ ३५८ ॥**
**दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित् ।**
**मानसादित्यतो नास्य वाक्याग्रहणमुत्तरम् ॥ ३५९ ॥**

श्वेतं कञ्चित् पदार्थमव्यक्त गवाश्वादिरूप दूरादुपलभमानस्तस्मिन्नेव प्रदेशे ह्लेषया खुरशब्देन चाश्वजाति चानुमिमानोऽनुपलब्ध्या च तस्मिन् प्रदेशे वस्त्वन्तराणामभावमवगच्छन् गुणजातिक्रियाणामर्थान्तरान्वयमपेक्षमाणाना योग्यानामर्थापत्त्या परस्पर ससर्ग बुध्यते—श्वेतो धावतीति । तदिह क्लृप्त तावत्पदार्थानामाकाङ्क्षासन्निधियोग्यतावशेन सामान्यतोऽन्वयबोधनम् । तद्विशेषनियमस्त्वर्थापत्त्या । गामानयेत्यादौ त्वेकवाक्यतयैव तन्नियम इत्येतावत् कल्प्यम् । वाक्य त्वत्यन्ताक्लृप्तमेव सर्व कल्प्यमिति वाक्याग्रहण नोत्तरमिति ॥ ३५८-३५९ ॥

इतश्च नोत्तरमित्याह—

**मानसेनापराधेन पदार्थान् ये न गृह्णते ।**
**ते तद्वाक्यं गृहीत्वापि नार्थं गृह्णन्ति कर्हिचित् ॥ ३६० ॥**

गृह्यते हि वाक्यम्, तस्याग्रहण[2] सविद्विरुद्धमिति ॥ ३६० ॥

अत्रैव प्रयोगावाह—

**वाक्येन तेन[3] नोच्येत[3] वाक्यार्थोऽन्यैर्निरूपणात् ।**
**तच्छ्रुतावप्यबोधाद् वा पलाशेनेव वृक्षता ॥ ३६१ ॥**

येऽपि सभागमेव वाक्यमाश्रित्य पदन्यायेन वाक्यान्त्यवर्णस्य पूर्वसस्कारयुक्तस्य वाचकत्व मन्यन्ते, तान् प्रति प्रयोगद्वयमाह—

**वर्णा वा न ब्रुवन्त्येनं तत्सम्बन्ध्यर्थबोधनात् ।**
**सत्त्वेऽप्यगमकत्वाद् वा वृक्षत्वमिव शिंशपा ॥ ३६२ ॥**

पदार्थानामपि निमित्तत्वे प्रयोगद्वयमाह द्वयेन—

**पदार्था गमयन्त्येतं प्रत्येकं संशये सति ।**
**सामस्त्ये निर्णयोत्पादात् स्थाणुमूर्द्धस्थकाकवत् ॥ ३६३ ॥**

---

१. ०निष्पेष०—३ पु० । २. तद्ग्रहण—मु० पा० ।
३–३. नोच्यते तस्मात्—३ पु० ।

**तदभावाप्रतीतेर्वा तद्गम्योऽयं भविष्यति ।**
**श्रोत्राभावाप्रतीतेर्हि[1] श्रौत्रं शब्दं प्रचक्षते ॥ ३६४ ॥**

'यच्चोक्तमेते पदसङ्घाताः खल्वमी पुरुषकृता दृश्यन्त इति, परिहृत तत् कर्त्तुर-स्मरणादिभि." ( शा० भा० पृ. ११९ ) इति भाष्यमयुक्तम्, सम्बन्धस्य हि कृत-कत्व कर्तुरस्मरणादिभिः परिहृतम्, न वेदानामत आह—

**सम्बन्धाकरणन्यायाद्[2] वक्तव्या वाक्यनित्यता ।**

तुल्यन्यायत्वाद् वेदानामपि परिहृतमेवेति ।

सप्रतिसाधनं च सङ्घातत्वम् ? इत्याह सार्द्धेन—

**सङ्घातत्वस्य वक्तव्यमीदृशं प्रतिसाधनम् ॥ ३६५ ॥**
**वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।**
**वेदाध्ययनवाच्यत्वाद् अधुनाध्ययनं यथा ॥ ३६६ ॥**

नन्वेव भारतादिष्वपि शक्य वक्तुम् ? सत्यम्, तत्तु दृढेन कर्तु. स्मरणेन बाध्यते, तदाह—

**भारतेऽपि भवेदेवं कर्तृस्मृत्या तु बाध्यते ।**

ननु वेदेऽपि केचित्तु स्मरन्त्येव कर्त्तारम् ? अत आह—

**वेदेऽपि तत्स्मृतिर्या तु सार्थवादनिबन्धना ॥ ३६७ ॥**

'प्रजापतिर्वेदानसृजत' इत्यर्थवादमूलेय स्मृति , नानुभवमूलेति ॥ ३६७ ॥

कथम् ? इत्याह—

**पारम्पर्येण कर्तारं नाध्येतारः[3] स्मरन्ति हि ।**

वेदाना हि कर्त्तावश्यं तत्कालभवै· पुरुषै. प्रत्यक्षेणानुभूयेत, तैश्चान्येभ्य. कथ्येत, तैश्चान्येभ्य –इत्येव परम्परया नियतरूपमेव कर्तुर्मन्वादीनामिवाध्येतृभिः स्मरण स्यान्न तु तदस्ति, तेनार्थवादात् सामान्यतो दृष्ट्वा आह–इय स्मृतिरिति ।

भवत्वेवम्, तथाप्यर्थवादप्रामाण्यात् कर्तृमत्व सिद्धमत आह—

**तेषामनेवमात्मत्वाद् भ्रान्तिः सेति च वक्ष्यते[4] ॥ ३६८ ॥**

स्तुतिपरा ह्यर्थवादा न स्वार्थपरा इत्यर्थवादाधिकरणे वक्ष्यते, तेन तन्मूला स्मृतिर्भ्रान्तिरेवेति ॥ ३६८ ॥

अथ मूलान्तर स्मृते. कि न कल्प्यते, एव हि सम्यगेव स्मरण स्यात् ? अत आह—

**तेषु च ध्रियमाणेषु न मूलान्तरकल्पना ।**

---

१. अप्रतीतु हि—३ पु० ।
२. सम्बन्धकरण०—३ पु० ।
३. नाध्येतार—मु० पा० ।
४. सा हि निवर्त्यते—का० ।

परम्परया हि स्मरणाभावेऽनुभवमूलता न शक्या कल्पयितुम्, सम्भवति चार्थवादानामेव मूलत्वमिति न तेषु सत्सु मूलान्तर कल्प्यमिति ।

नन्वन्यपरत्वात्, तेषां न मूलत्व सम्भवति ? अत आह—

**तथा ह्यद्यतनस्यापि ते कुर्वन्तीदृशी मतिम् ।। ३६९ ।।**

इति वाक्याधिकरणम्

सम्भवति ह्यन्यपरेभ्योऽपि भ्रान्ति, अद्यत्वेऽपि दर्शनादिति ।। ३६९ ।।

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे वाक्याधिकरणं सम्पूर्णम्

## अथ वेदनित्यताधिकरणम्

**वेदांश्चैके सन्निकर्षं पुरुषाख्याः ।। २७ ।।**

एव पदपदार्थसम्बन्धनित्यतया वाक्यार्थमूलतया च चोदनाना प्रामाण्याक्षेपे परिहृते, अधुना वेदशाखाना काठकादिसमाख्यया पौरुषेयत्वावगमात्तदवयवाना चोदनाना पुन. प्रामाण्यमाक्षिप्यते, तदिदमयुक्तम् । समाख्या हि सामान्यप्राप्तौ सत्या विशेषनियमे व्याप्रियते । यथा परिक्रयोपात्तानामृत्विजा पदार्थेष्वनियमेन कर्तृत्वप्राप्तौ आध्वर्यवादिसमाख्यया नियम क्रियते । न चेह वेदाना कर्तृमात्रं प्राप्त यतः काठकादिसमाख्याभिः कठादयो नियम्येरन् । किञ्च, प्रवचनेनाप्युपपन्ना समाख्या नैकान्तेन कर्तृत्व कठादीनां गमयते, अत आह—

**वचनान्तरसाधर्म्यात् कर्तुः सामान्यसम्प्लवे ।**
**समाख्यया विशेषोऽयं कठादिरवधार्यते ।। १ ।।**

तेनेहाप्यस्त्येव सामान्यप्राप्तिरिति युक्त. समाख्यया नियम इति । अत एवापेक्षितविशेषसमर्पकतया कर्तृत्वनिमित्तत्वमेव समाख्यायुक्तं[1] न प्रवचननिमित्तत्वम्[2] । नन्विद वचनान्तरसाधर्म्य पूर्वमेवोपन्यस्य कर्तुरस्मरणादिति परिहृतम् ? सत्यम्, इहैव तु वेदाना पौरुषेयत्व निराक्रियते, तेनेहैवेदमुपन्यसनीय निरसनीय च, पूर्व त्वनागतावेक्षणेनोक्तमित्यनवद्यम् । किञ्च, रचनाधीना पदाना वाक्यतापत्तिः, न च रचयितुरभावे रचना सम्भवति, अतोऽवश्यमाश्रयणीयो वेदानां कर्त्तेति ।। १ ।।

किञ्च, बर्बरः प्रावाहणिरित्याद्यनित्याभिधायिवेदरूपं दृष्ट्वा "अनपेक्षत्वात्" (जै० सू० १.१. २१) इति सूत्रोक्तन्यायेन पदानामिव शक्या कृतकताध्यवसातुम् ? इत्याह—

---

१. समाख्यया०—मु० पा० ।

२. निमित्तम्—मु० पा० ।

**अनपेक्षत्वसूत्रे या रूपात् कृतकतोदिता ।**
**वेदे सा दृश्यते स्पष्टा कृतकार्थाभिधायिनि'[1] ॥ २ ॥**

सिद्धान्तमाह—

**स्मृतिप्रयोजनाभावात् कर्तृमात्रेऽनपेक्षिते ।**
**सामान्यसिद्धयपेक्षत्वान्न समाख्या नियामिका ॥ ३ ॥**

स्मृत्यभावस्तावद् वर्णित एव । प्रयोजनमपि न किञ्चित् कर्त्राऽस्ति रचने, इति चेदसत्येव स्वतन्त्रे कर्त्तरि सर्वदैवाद्यत्ववत् परतन्त्रैरेवाध्येतृभिर्वाक्यरचनसम्भवात्, अतोऽसत्या सामान्यप्राप्तौ न समाख्यया नियम इति ॥ ३ ॥

अथाप्राप्तस्यापि कर्त्तुः समाख्यैव मूल कस्मान्न भवति ? अत आह—

**अन्यथाप्युपपन्नत्वादियं प्रवचनादिना ।**
**न शक्ता कर्तृमूलाय, प्रोक्ते च स्मरणं स्थितम् ॥ ४ ॥**

न हि "कृते ग्रन्थे" इत्येतदेव स्मरणम्, "तेन प्रोक्तम्" इत्येतदपि स्मरणमस्तीति ॥ ४ ॥

न्यायत्रयबाधश्च समाख्यया वेदाप्रामाण्यमापादयतामित्याह—

**श्रुत्यादेर्दुर्बला चासौ न शक्ता तानि बाधितुम् ।**
**अङ्गभूयांसमेकेयं[2] शब्दराशिं न बाधते ॥ ५ ॥**

दुर्बला हि समाख्या वेदाङ्गवत् तदभिधानार्थत्वादेका च, नानया श्रुत्याद्यात्मकस्य[3] प्रधानस्य भूयस शब्दराशेरप्रामाण्य युक्तम्, अतोपि प्रवचननिमित्तेयमिति । प्रवचनस्य साधारणत्वान्न कठेनैकेन विशेषणं सम्भवतीति चेत् ? न; प्रकर्षवशादसाधारण्योपपत्तेरिति दर्शित भाष्ये ॥ ५ ॥

यद्वा, रूढिरेवेयमश्वकर्णादिवन्निर्निमित्ता अस्त्वित्याह—

**कामं वा निर्निमित्तेयं शाखामेकां वदिष्यति ।**

यत्खलु सूत्रकारेणानित्यसयोगपरिहारार्थमुक्तम्—"पर तु श्रुतिसामान्यम्" (जै. सू.१ १.३१) इति तत्समाख्यायामपि शक्यं वक्तुम्, अतो रूढिरेवेयमित्याह—

**श्रुतिसामान्यमात्रं हि नात्र दण्डेन वायते ॥ ६ ॥**

यद्वा, सत्यपि साधारण्ये सत्तामात्रेणैव कठेन विशेषणं सम्भवति वैरूपसामवदित्याह—

**सति साधारणत्वे वा सम्भवेन विशेषणम् ।**
**यथा वैरूपसामेति सत्तयैव प्रतीयते ॥ ७ ॥**

'उक्थ्यो विरूपसामा एकविंश षोडशी वैराजसामा' इत्यत्र सर्वप्राकृतसाम्ना निवृत्तिमाशङ्क्य पृष्ठ्यस्तुतावेव रथन्तरादिमात्र निवर्त्यते न सर्वाणि सामानि,

१. कार्या—का० । २ ०मेवेमं—का० ।
३. श्रुत्याद्यात्म०—मु० पा०

सत्तामात्रेणैव वैरूपादे क्रतुविशेषणत्वोपपत्तेरिति **दशमे** वक्ष्यते—'वैरूपसामा क्रतुसयोगात् त्रिवृद्वदेकसामा स्यात्" (जै० सू० १०.६.१५) इत्यत्रेति ॥ ७ ॥

यदि च बहुपुरुषव्यासङ्गि प्रवक्तृत्वमग्नीषोमयोरिव देवतात्वं स्यात्, ततः सापेक्षत्वेनासामर्थ्यात् अग्नीषोमीय हविरिवाऽऽग्नेयशब्देन काठकब्देन शाखा न व्यपदिश्येत, तत्तु मातृवत् प्रत्येक समाप्तम्। अतो यथा डित्थडपित्थयोरपि माता डित्थमातेत्युच्यते, तथा बहुभिरपि प्रोच्यमाना शाखा शक्यत एव काठकशब्देन व्यपदेष्टुमित्याह—

**अव्यासङ्गि च सर्वेषु प्रवक्तृत्वं कठादिषु।**
**तेनैक[1]व्यपदेश्यत्वं लक्ष्यते डित्थमातृवत् ॥ ८ ॥**

भवत्वेव कठेन व्यपदेश , तद्वदेव पुरुषान्तराणामपि प्रवक्तृवत्तुल्यत्वात् तैरपि कि न व्यपदिश्यते ? अत आह—

**अन्यैस्तुल्येऽपि सम्बन्धे यत् तैर्न व्यपदिश्यते।**
**न ह्येष कर्तृसंस्कारः पारार्थ्ये चैक इष्यते ॥ ९ ॥**

प्रवक्तृसस्कारार्था हि प्रतिसंस्कार्यमावर्तेत, शाखाविशेषणार्थत्वात् कर्तृणामेकेनापि तद्विशेषणसिद्धेर्न पुरुषान्तरादर. सत्रवदेकेनैव यजमानेन यूपसमानमिति ॥ ९ ॥

नन्वेकेनापि व्यपदेशे किमिति नियमेन कठेनैव व्यपदिश्यते, न कदाचिदपि पुरुषान्तरै. ? अत आह—

**विद्यमाननिमित्तं च कथ्यते, नासतः[2] क्रिया।**

यदि समाख्यास्मदायत्ता स्यात् तत्र स्यादय पर्यनुयोग , तस्यास्तु विद्यमानाया निमित्तमात्रनिरूपणेऽस्माकमधिकार इति।

दृष्टश्च साधारणस्याप्येकेन व्यपदेश—अगस्त्यतीर्थम्, कुमारिलतीर्थमित्याह—

**साधारणं च[3] तीर्थादि[3] केनचिद् व्यपदिश्यते ॥ १० ॥**

किञ्च, इयमपि समाख्या नित्या वा पौरुषेयी वा ? नित्या न तावत् पुरुषनिमित्ता भवितुमर्हति, पौरुषेयी तु तत्प्रणेतुराप्तत्वे प्रमाणाभावादसत्या कथं वेदस्य पौरुषेयता साधयति ? इत्याह—

**यदि चापौरुषेय्येषा नानित्यप्रतिपादिनी।**
**पौरुषेय्यास्तु सत्यत्वं कथमध्यवसीयते ॥ ११ ॥**

यद्वा, नेयमादिमत्पुरुषनिमित्ता कठादिसमाख्या, किन्तु नित्यैव ब्राह्मणावान्तरजातिः कठत्व नामातज्जातीयै. प्रोच्यमानेय शाखा तन्निमित्तया नित्ययैव समाख्ययाभिधीयते, अतो नानया शाखानामनित्यत्वापत्तिरित्याह—

---

१. एव—१ पु० । २. नास्य या—१ पु० । ३-३. सुतार्थादि—२ पु० ।

**नित्यमेव निमित्तं वा कठत्वं जातिरस्ति नः।**
**काठकादिप्रवृत्त्यर्थं व्यावृत्तं चरणान्तरात् ॥ १२ ॥**
**अनित्यार्थाभिधायित्वं स्वयमेवैष मुञ्चति।**

यत्तु 'अनित्यदर्शनात्' इत्युक्तम्, तत्राह—

**नित्यानित्यविकल्पेन वेदस्तादर्थ्यवर्जनात्[1] ॥ १३ ॥**

कथं नित्यानित्यविकल्पेनानित्यार्थत्ववर्जनम् ? अत आह—

**नित्यस्य नित्य एवार्थः कृतकस्याप्रमाणता।**

नित्यो ह्यनित्यर्थमसम्भवादेव वर्जयति, अनित्यस्त्वप्रमाणत्वात् सुतरा वर्जयतीति दर्शिता चैषा नित्यानुकृत्यर्थता भाष्ये इति।

यदपि 'वनस्पतय सत्रमासत' इत्यादीनामुन्मत्तवचनत्वं भाष्येणाशङ्कितम्, तदपि कर्तुरस्मरणात् स्तुतिमात्रपरत्वाच्च प्रागेव निराकृतमित्याह—

**उन्मत्तवचनत्वं तु पूर्वमेव निराकृतम् ॥ १४ ॥**

तदेवमुपपादितं चोदनाया. प्रामाण्यम् ॥ १४ ॥

उपसंहरति—

**इति प्रमाणत्वमिदं प्रसिद्धं युक्त्येह धर्मं प्रति चोदनायाः।**

नन्वेवमत्रैव प्रमाणलक्षणस्य समाप्तत्वादनन्तर भेदलक्षणमारब्धव्यम्, उपरितने पादत्रये किं करिष्यते ? अत आह—

**अतः परं तु प्रविभज्य वेदं त्रेधा ततो वक्ष्यति यस्य[2] योऽर्थः ॥ १५ ॥**

इति वेदनित्यताधिकरणम्

इति श्रीभट्टाचार्यकुमारिलस्वामिविरचिते तन्त्रवार्तिके
प्रथमस्याध्यायस्य प्रथमश्चरण समाप्त

**सम्पूर्णं श्लोकवार्त्तिकम्**

नेह प्रमाणलक्षण समाप्तम्, अर्थवादमन्त्रस्मृत्याचाराणामद्यापि प्रामाण्याप्रतिपादनात्। तेन सिद्धेऽपि चोदनाप्रामाण्ये तत. पर विध्यर्थवादमन्त्रात्मना वेद त्रेधा विभज्य तत्स्तुत्यादिप्रयोजनप्रतिवादनेन कृत्स्नस्य वेदस्य तन्मूलयोश्च स्मृत्याचारयोर्धर्मं प्रति प्रामाण्यमुपरितने पादत्रये प्रतिपादयिष्यत इति समस्तोऽध्याय , प्रमाणलक्षण नैवेह समाप्तमिति ॥ १५ ॥

इति श्रीमद्यज्ञात्मसूरिसूनुमहामहोपाध्यायश्रीपार्थसारथिमिश्रविरचिते
न्यायरत्नाकरे वेदनित्यताधिकरणं सम्पूर्णम्

**सम्पूर्णश्च न्यायरत्नाकरः**

❀ शुभम् ❀

---

१. ०वेदनात्—का०। २. तस्य—१ पु०।

# श्लोकवार्त्तिकस्थश्लोकार्धसूची

**श्रीकुमारिलभट्टोक्ते ग्रन्थेऽस्मिन् श्लोकवार्त्तिके ।**
**श्लोकाद्योपान्त्यपादानां सूचीयं क्रमशालिनी ॥**

श्रीशान्तरक्षितकृततत्त्वसंग्रहान्तःपाति-

# श्लोकवार्त्तिककारिकाणां सूची

शान्तरक्षितविद्वद्भिः स्वकीये तत्त्वसंग्रहे ।
स्मृतानां वार्त्तिकोक्तानां श्लोकानामेष संग्रहः[1] ॥

| त० सं० क्रमः | कारिका | श्लो० वा० प्रकरणम् | क्रमः |
|---|---|---|---|
| २३३३ | अशो ह्येतस्य जात्याख्यो | श० नि० | ३५२ |
| २८०३ (प०) | अकर्तृकत्वसिद्धया च | चो० सू० | १८६ |
| ९१४ | अगोनिवृत्तिः सामान्यं | अपोह० | १ |
| ९४० | अगोशब्दाभिधेयत्वं | अपोह० | ८१ |
| १३१० | अग्निधूमान्तरत्वे तु | अनुमान० | १४५ |
| २६२ (प०) | अग्निर्दहति नाकाशं | आकृति० | २९ |
| २२३८ | अज्ञात्वा कमसौ शब्दं | श० नि० | ३४६ |
| २१७२ | अतोऽतीन्द्रिययैवेते | श० नि० | ४५ |
| २९१५ | अतो यत्रापि मिथ्यात्वं | चो० सू० | ८८ |
| २२१५ | अत्र ब्रूमो यदा तावद् | श० नि० | १८० |
| २०६३ | अथ यद्ग्राहक रूपे | शून्य० | १७२ |
| ९४९ | अथान्यथा विशेष्येऽपि | अपोह० | ९० |
| ९७१ | अथान्यापोहवद् वस्तु | अपोह० | १२० |
| २२३६ | अथान्योऽपि स्वभावेन | श० नि० | २४४ |
| २१८५ | अथापीन्द्रियसंस्कारः | श० नि० | ६९ |
| २१५८ | अथाप्याकाशमाधारः | श० नि० | ५४ |
| ९३६ | अथासत्यपि सारूप्ये | अपोह० | ७६ |
| २२१२ | अथास्मदिष्टः पक्षः स्यात् | श० नि० | ३२१ |
| २३२१ | अधिष्ठानानृजुस्थत्वात् | श० नि० | १८७ |
| ९७८ | अनन्यापोहशब्दादौ | अपोह० | १४४ |
| २३१३ | अनित्यं तच्च सर्वेषां | श० नि० | ३२२ |
| २३३४ | अनित्यता विकल्प्यैवं | श० नि० | ३५६ |

१. अत्र, तत्त्वसंग्रहकारिकाक्रमाङ्काः वाराणसेयबौद्धभारतीसंस्करणस्य, श्लोकवार्त्तिककारिकाक्रमाङ्काश्च अस्यैव संस्करणस्य ज्ञेयाः ।—सं० ।

| म० सं० क्रमः | कारिका | श्लो० वा० प्रकरणम् | क्रमः |
|---|---|---|---|
| १५४० | प्रतिज्ञार्थैकदेशत्वात् | उपमान० | ४४ |
| २३२२ | प्रतिसङ्ख्याप्रतिसङ्ख्या० | श० नि० | २२ |
| १४४२ | प्रत्यक्षदृष्टसम्बन्धं | अनुमान० | १४१ |
| १६३६ | प्रत्यक्षद्रव्यवर्तिन्यो | श० नि० | ३९५ |
| १६४८ | प्रत्यक्षादेरनुत्पत्तिः | अभाव० | ११ |
| ७९५ (प०) | पिण्डभेदेषु गोबुद्धिः | वन० | ४४ |
| १६७२ | प्रत्यक्षाद्यवतारश्च | अभाव० | १७ |
| १५३५ | प्रत्यक्षेणावबुद्धे च | उपमान० | ३८ |
| १५३६ | प्रत्यक्षेऽपि यथा देशे | उपमान० | ३९ |
| २२७३ | प्रत्युच्चारणनिर्वृत्तिः | सम्ब० प० | ४२ |
| २२५४ | प्रत्येकं वापि सम्बन्धो | सम्ब० प० | १४ |
| २१६७ | प्रत्येकाभिहिता दोषाः | श० नि० | ६४ |
| २७५३ | प्रभूत वर्तिदेशे हि | श० नि० | ४३५ |
| २९०९ | प्रमाणग्रहणात् पूर्वं | चो० सू० | ८३ |
| १५९५ | प्रमाण तस्य वक्तव्यं | अर्थापत्ति० | ५९ |
| १६३७ | प्रमाणपञ्चकं यत्र | अभाव० | १ |
| १५८६ | प्रमाणषट्कविज्ञातो | अर्थापत्ति० | १ |
| १६०१ | प्रमाणाभावनिर्णीत० | अर्थापत्ति० | ८ |
| २७४६ | प्रयत्नानन्तरज्ञान० | श० नि० | ३१ |
| १५३९ | प्राक्प्रमेयस्य सादृश्यं | उपमान० | ४३ |
| ५२६ (प०) | तस्मात् प्राक्कार्यनिष्पत्ते | श० नि० | ४३३ |
| १६०३ | बहिर्देशविशिष्टेऽर्थे | अर्थापत्ति० | ११ |
| २१३६ | बहुभि. श्रवणैरेष | श० नि० | ३६४ |
| २१९० | बाधिर्यादिव्यवस्थान० | श० नि० | ७६ |
| २२३१ | बुद्धितीव्रत्वमन्दत्वे | श० नि० | २१९ |
| २४२ | बुद्धीनामपि चैतन्य० | श० नि० | ४०४ |
| ५२७ (प०) | बुद्धिजन्मेति च प्राह | चो० सू० | ५३-५४ |
| १२९५ (प०) | बुद्धिभेदान्न चैकत्व | प्र० सू० | १५८ |
| ९६० | भवद्भिः शब्दभेदोऽपि | अपोह० | १०२ |
| २३४२ | भारतेऽपि भवेदेव | वाक्या० | ३६७ |
| ९१५ | भावान्तरात्मकोऽभावो | अपोह० | १ |
| ९२४ | भिन्नसामान्यवचनाः | अपोह० | ४२ |

| त० सं० क्रमः | कारिका | श्लो० वा० प्रकरणम् | क्रमः |
|---|---|---|---|
| १२९५ (प०) | स्थित नैव हि जात्यादेः | प्र० सू० | १४१ |
| २१६५ | स्थिरवाख्यपनीत्या च | श० नि० - | ६२ |
| २२६ | स्यातामत्यन्तनाशे हि | आत्म० | २३ |
| २८१० | स्वतः प्रामाण्यमप्येषा | चो० सू० | ४७ |
| २८११ | स्वत. सर्वप्रमाणानां | चो० सू० | ४७ |
| २२५२ | स्वतो नैवास्ति शक्तत्व | सम्ब० प० | १२ |
| २१५३ | स्वतो ह्रस्वादिभेदस्तु | स्फो० | ५० |
| २२१६ | स्वदेशमेव गृह्णाति | श० नि० | १८१ |
| १६७१ | स्वरूपपररूपाभ्यां | अभाव० | १२ |
| ९४६ | स्वरूपसत्त्वमात्रेण | अपोह० | ८७ |
| २४३ | स्वरूपेण यथा वह्निः | श० नि० | . ४०५ |
| २६७ | स्वरूपेण ह्यवस्थानाम् | आत्म० | ३१ |
| २३०३ | स्ववाक्यादिविरोधश्च | श० नि० | ३१३ |
| १३५० | स्वसवित्तिफलत्व चेत् | प्र० सू० | ७९ |
| २३२५ | स्वाभाविको विनाशस्तु | श० नि० | २६ |
| २१२१ | ह्रस्वतनोच्चारणो वापि | श० नि० | ४१६ |

## सव्याख्यश्लोकवार्त्तिकस्थ-

# ग्रन्थ-ग्रन्थकारसूची

**ग्रन्थकर्त्रा च व्याख्यात्रा ये ये ग्रन्था इहोद्धृताः ।**
**ग्रन्थकाराश्च ये, तेषां स्फुटं सूची विधीयते ॥**